# "અહો શ્રુતજ્ઞાનમ્" ગ્રંથ જીર્ણોધ્ધાર ૩૪

## શ્રીસિદ્ધહેમચન્દ્રશબ્દાનુશાસનમ્

### સ્વોપજ્ઞશબ્દમહાર્ણવન્યાસ બૃહન્ન્યાસ અધ્યાય-૩-(૧)

**: દ્રવ્ય સહાયક :**

**પૂજ્ય સાધ્વિજી શ્રી જયવંતાશ્રીજી મ.સા. તથા**

**અન્ય ઠાણાની પ્રેરણાથી**

**શ્રી સાબરમતી જૈન આરાધના ભવન ટ્રસ્ટ સંચાલિત**

**શ્રી અભયસાગરજી આરાધના ભવનના જ્ઞાનખાતાના ઉપજમાંથી**

**: સંયોજક :**


**શાહ બાબુલાલ સરેમલ બેડાવાળા**

**શ્રી આશાપૂરણપાર્શ્વનાથ જૈન જ્ઞાનભંડાર**

**શા. વીમળાબેન સરેમલ જવેરચંદજી બેડાવાળા ભવન**

હીરાજૈન સોસાયટી, સાબરમતી, અમદાવાદ-૩૮૦૦૦૫

(મો.) ૯૪૨૬૫૮૫૯૦૪ (ઓ.) ૨૨૧૩૨૫૪૩ (રહે.) ૨૭૫૦૫૭૨૦



**સંવત ૨૦૬૫ ઈ.સ. ૨૦૦૯**

卐 श्रीविजयनेमिसूरीश्वरग्रन्थमालारत्नम्–५५ 卐

॥ आशैशवशीलशालिने श्रीनेमीश्वराय नमः ॥

कुमारपालभूपालप्रतिबोधक–सुगृहीतनामधेयकलिकालसर्वज्ञ–श्रीहेमचन्द्रसूरिभगवत्प्रणीतं

# श्रीसिद्धहेमचन्द्रशब्दानुशासनम् ॥

[ स्वोपज्ञतत्त्वप्रकाशिकाभिधबृहद्वृत्ति–शब्दमहार्णवन्यास–तदनुसन्धानसंवलितम् ]

तत्रानुसन्धानसहितः––

## तृतीयाध्यायस्य प्रथमपादः ॥

 卐  卐 

बृहन्न्यासानुसन्धानकारः सम्पादकश्च

जगद्गुरु–शासनसम्राट्–सूरिचक्रचक्रवर्त्ति–तपोगच्छाधिपति-

श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कार–व्याकरण-

वाचस्पति–कविरत्न–शास्त्रविशारदः

श्रीमद्विजयलावण्यसूरिः

卐 卐 卐 卐 卐

प्रकाशिका

卐 श्रीसिद्धहेम–प्रकाशन–समितिः 卐

# तृतीयाध्यायप्रथमपादस्य संक्षेपतो विषयानुक्रमः ।

॥ अर्हँ ॥

आशैशवशीलशालिने श्रीनेमीश्वराय नमो नमः ।

कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिभगवत्प्रणीतं

# श्रीसिद्धहेमचन्द्रशब्दानुशासनम् ।

स्वोपज्ञतत्त्वप्रकाशिकाभिधबृहद्वृत्ति–स्वोपज्ञतत्त्वप्रकाशिकाप्रकाश-

शब्दमहार्णवन्यासाभिधबृहन्न्याससंवलितम् ।

॥ अर्हँ ॥

## ॥ तृतीयोऽध्यायः ॥

### धातोः पूजार्थस्वति-गतार्थाधिपर्यति-क्रमार्थातिवर्जः प्रादिरुपसर्गः प्राक् च । ३ । १ । १ ॥

त० प्र०—धातोः संबन्धी-तदर्थद्योती चाद्यन्तर्गतः प्रादिः शब्दगण उपसर्गसंज्ञो भवति, तस्माच्च धातोः प्राक् प्रयुज्यते, न परो न व्यवहितः; पूजार्थौ स्वती गतार्थावधिपरी अतिक्रमार्थमतिं च वर्जयित्वा । प्रणयति, परिणयति; अभिषिञ्चति, निषिञ्चति; प्रलम्भः, उपलम्भः; एषूपसर्गसंज्ञायां णत्व-षत्व-नागमाः सिद्धाः । धातोरिति किम् ? वृक्षं वृक्षमभि सिञ्चति । प्रगता नायका यस्मात् स प्रनायको देश इत्यत्र तु सत्यपि धातुसंबन्धे *येनैव धातुना संबद्धाः प्रादयस्तं प्रत्येवोपसर्गसंज्ञा* इति गमिसंबन्धेऽपि नयतिं प्रत्यनुपसर्गत्वाण्णत्वं न भवति, एवं–प्रर्छको देश इत्यत्रारादेशो न भवति । पूजार्थस्वत्यादिवर्जनं किम् ? पूजार्थौ स्वती–सुसिक्तं भवता, सुस्तुतं भवता; अतिसिक्तं भवता, अतिस्तुतं भवता; धात्वर्थः प्रशस्यते; अत्रोपसर्गसंज्ञाया अभावात् षत्वं न भवति । पूजाग्रहणं किम् ? सुषिक्तं नाम किं तवात्र ?, धात्वर्थोऽत्र कुत्स्यते । गताऽर्थावधि-परी–अध्यागच्छति, आगच्छत्यधि; पर्यागच्छति, आगच्छति परि; उपरिभावः सर्वतोभावश्चान्यतः प्रकरणादेः प्रतीयत इति गतार्थत्वम्, अत्र प्राक्त्वनियमाभावः; अध्यागमनं प्रयोजनमस्याऽध्यागमनिकः, पर्यागमनिकः, अत्र "प्रयोजनम्" [ ६. ४. ११७. ] इतीकणि अधि-परिशब्दयोरादेरकारस्य वृद्धिर्न भवति, उपसर्गत्वाभावेन गतिसंज्ञाया अभावे समासाभावेन पृथक्पदत्वात्; पर्यानीतम्, अत्रानुपसर्गत्वाण्णो न भवति । गतार्थग्रहणं किम् ? अध्यागच्छति, पर्यागच्छति; अत्रोपरिभावस्य सर्वतोभावस्य च प्रकरणादेरप्रतीतस्य द्योतने उपसर्गसंज्ञाऽस्त्येवेति प्राक्त्वनियमः । अतिक्रमार्थोऽतिः–यदर्थं क्रिया तस्मिन् निष्पन्ने क्रियाप्रवृत्तिरतिक्रमः, अतिसिक्तं भवता, अतिस्तुतं भवता; अतिक्रमेण सेकः स्तुतिश्च कृतेत्यर्थः, अत्र षत्वं न भवति; अति सिक्त्वा, अति स्तुत्वा; अत्र समासाभावाद् यबादेशो न भवति । अतिक्रमग्रहणं किम् ? अतिशय्य । प्रादिग्रहणं किम् ? पुनर्नमति, साधु सिञ्चति ।

"धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते ।
तमेव विशिनष्टयन्योऽनर्थकोऽन्यः प्रयुज्यते" ॥ १ ॥

बाधते यथा–प्रतिष्ठते, प्रस्मरति, प्रवसति, प्रलीयते, प्रतीक्षते, प्रतिपालयति; तमनुवर्तते यथा–अधीते, अध्येति, आचामति, आचष्टे, अनुरुध्यते, प्रलोकयति; तमेव विशिनष्टि यथा–प्रपचति, प्रकरोति, प्राणिति, प्राश्नाति, निरीक्षते, निष्पतति; अनर्थको यथा–प्रलम्बते, प्रार्थयते, विजयते, विजानाति, निमीलति, निखञ्जति, निरजति । एषां चा पञ्चभ्यः प्रायेण प्रयोगो भवति–आहरति, व्याहरति, अभिव्याहरति, समभिव्याहरति, प्रसमभिव्याहरतीति ।

अथ किं धातुः पूर्वं क्रियाविशेषकेणोपसर्गेण युज्यते ? उत साधनाभिधायिना प्रत्ययेनेति ?, साधनेनेति केचित्, साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टि, अभिनिर्वृत्तस्य चोपसर्गेण विशेषः शक्यो वक्तुं नानभिनिर्वृत्तस्य; तदयुक्तम्–यो हि धातूपसर्गयोरभिसंबन्धस्तमभ्यन्तरीकृत्य धातुः साधनेन प्रयुज्यते, यस्माद् विशिष्टैव क्रिया साधनेन साध्यते, न तु साधनाल्लब्धस्वरूपाऽन्यतो विशेषं लभते, तस्मात् पूर्वमुप-

सर्गेणेति युक्तम्। तथा च समस्करोत् संचस्कारेत्यत्रान्तरङ्गत्वात् स्सटि कृते प्रत्ययनिमित्ते अडागम-द्विर्वचने भवतः। अतश्चैवम्, पूर्वं हि धातोः साधनेन संबन्धे 'आस्यते गुरुणा' इत्यकर्मकः 'उपास्यते गुरुः' इति सकर्मको धातुः केन स्यात्?। न चैतद् वाच्यम्-प्रत्ययसंबन्धमन्तरेण क्रियाविशेषस्यानभिव्यक्तेर्न धातोः पूर्वमुपसर्गेण संबन्धो युज्यते, यतः–

"बीजकालेषु संबद्धा, यथा लाक्षारसादयः।
वर्णादिपरिणामेन, फलानामुपकुर्वते ॥ १ ॥
बुद्धिस्थादभिसंबन्धात्, तथा धातूपसर्गयोः।
अभ्यन्तरीकृतो भेदः, पदकाले प्रकाश्यते" ॥ २ ॥

यद्येवमुपेत्याधीत्येत्यादावन्तरङ्गत्वादेत्व-दीर्घत्वयोः कृतयोर्ह्रस्वाभावात् तोऽन्तो न प्राप्नोति, सत्यम्-*असिद्धं बहिरङ्गमन्तरङ्गे* इति भविष्यति। 'प्रेजुः, प्रोपुः' इत्यत्र तु यज्-वपोर्वृत्ति द्वित्वे च सति अन्तरङ्गत्वात् समानदीर्घत्वे पश्चादेदोतौ, यद्वा पूर्वमेदोतौ ततोऽयवादेशे "व्यञ्जनस्यानादेर्लुक्" [ ४. १. ४४. ] इति लुकि पुनरेदोतौ। ननु 'कर्तुं प्रकर्षेणेच्छति-प्रचिकीर्षति' इत्यादौ धात्वन्तरसंबद्धस्योपसर्गस्य तदर्थप्रतिपादकप्रत्ययादेव प्राक् प्रयोगः प्राप्नोति; नैवम्-तस्याधातुत्वात्, समुदायस्यैव धातुत्वात्। एवं मनःशब्दात् सुभवतौ दुर्भवतौ अभिभवतौ क्यङ्प्रत्यये-सुमनायते, दुर्मनायते, अभिमनायते; हस्तिनातिकामति-अतिहस्तयति, सेनया अभियाति-अभिषेणयतीत्यादावपि द्रष्टव्यम्।

धातोरिति प्राक् चेति चाधिकारो गतिसंज्ञां यावत्। प्र, परा, अप, सम्, अनु ५, अव, निस्, दुस्, निर्, दुर् १०, वि, आङ्, नि, अधि, प्रति १५, परि, उप, अति, अपि, सु २०, उत्, अभि २२ इति प्रादिः॥ १ ॥

॥ अर्हं ॥

स्वोपज्ञतत्त्वप्रकाशिकाप्रकाश-
शब्दमहार्णवन्यासः–

## [ तत्रानुसन्धानम् ]

**धातोः०**। "डुधाञ्क् धारणे च" दधाति क्रियार्थत्वमिति "कृ-सि-कम्यमि०" [ उणा० ७७३ ] इति तुनि-धातुः, **धातोरिति** प्राक्शब्दयोगे पञ्चमी? आहोस्वित् प्रादिशब्दनिरूपितसम्बन्धार्थिका षष्ठी? इति सन्देहमपनेतुमाह-**धातोः सम्बन्धीति**। सन्देहाभावे तु [ षष्ठीनिर्णये तु ] धातोरित्यस्य स्वामिनः सापेक्षत्वादाह-**सम्बन्धीति**, सम्बन्धनं-सम्बन्धः, सम्बन्धश्च यत् सम्बध्नाति प्रतिपत्ता तत्क्रियावचनः, कर्मकर्तृक्रियावचनो वा, सोऽस्यास्तीति सम्बन्धी, षष्ठ्यर्थेनापेक्ष्यमाणो यस्तेन सम्बध्यते-धातोः प्रादिरिति। सम्बन्धश्च सर्वः क्रियानिमित्तकः, यथा देवदत्तस्य गौरित्यत्र याच्ञाक्रयणाऽऽहरणादिक्रियानिमित्तकः स्वस्वामिभावसम्बन्धः, 'वृक्षस्य शाखा' इत्यत्राधाराधेयभावनिमित्तकोऽवयवावयविभावसम्बन्धः, तत्र कुतोऽयं धातोः सम्बन्धीति व्यपदिश्यत इत्यत आह-**तदर्थद्योतीति**। यद्वा, यद्यपि षष्ठ्याः सम्बन्धसामान्यमर्थः, तथापि "निर्विशेषं न सामान्यम्" इति सकलसम्मतमतेनावश्यमिह विशेषसम्बन्धे पर्यवसानं स्वीकार्यमिति तं सम्बन्धमाह-**तदर्थद्योतीति**-तस्य-धातोः, अर्थम्-अभिधेयं, द्योतयति-धातुः क्रियाभिधायित्वेनान्वयव्यतिरेकाभ्यामवधारितः, तस्य तद्वृत्तेः 'इहायमस्मिन् वर्तते' इति विशेषे वृत्तिं नियमेन प्रकाशयतीति। द्विविधं हि पदं भवति-वाचकं द्योतकं चेति, तत्र यद् नियमेन पदान्तरोपहितमेव पठ्यते, यथा-'प्लक्षश्च न्यग्रोधश्च' इत्यादि तद् द्योतकमुच्यते, पदान्तरगतविशेषद्योतनात्, चादयो हि पदान्तरोपात्तमेवार्थभेदं स्वार्थेन च्छिन्दन्ति, न प्रकरणादिगम्यम्, तेषां स्वार्थप्रकाशने तस्य सहकारिभावात्। यत् तु पदान्तरोपधानेन विनापि प्रयुज्यते, यथा-को गच्छति? देवदत्तः, किं करोति? गच्छतीति देवदत्तादि, तद् वाचकं, निरपेक्षस्वार्थाभिधानात्। तत्र **तदर्थद्योतीति** चादिवदस्य वृत्तिं दर्शयति, न देवदत्तादिवत्, तत् नियमेन किञ्चित् प्रादिपूर्वं सत्त्वादि परं सत् स्वेन सम्बन्धिना सम्बध्यते, सम्बध्यमानमपि न सोऽयमित्यभिसम्बन्धेन, नापि तस्येदमिति वाचकत्वेन, यथा-'गच्छति अश्वेन, श्वेतेन पटेन प्रावृतः' इति, अत्र हि 'श्वेतेन' इति यथाविवक्षं पूर्वेण परेण वाऽभिसम्बध्यते, सम्बध्यमानं च सोऽयमित्यभिसम्बन्धेन, तस्येदमिति च, यथा-श्वेतोऽश्वः श्वेतः पटः, देवदत्तस्य पटः, पटस्य श्वेतरूपमिति, तत् तदर्थद्योतनक्रियानिमित्तकः सम्बन्ध इत्यर्थः। धात्वर्थस्य द्योतकत्वं प्रादीनामिति स्वार्थद्वारा द्योत्यद्योतकभावः सम्बन्धोऽत्राभिमतः, तथा च 'धातुवाच्यार्थनिष्ठद्योत्यतानिरूपितद्योतकतावान् प्रादिरुपसर्गसंज्ञः' इत्येकं वाक्यम्, 'स च धातोः प्राक् प्रयुज्यते' इति द्वितीयम्। न च "अन्यायोऽनेकवाक्यत्वम्" इति मीमांसकनीत्या वाक्यभेदो दोषायेति वाच्यम्, 'प्रादिरुपसर्गसंज्ञः सन् धातोः प्राक् प्रयुज्यत' इत्येकवाक्यत्वस्यापि सम्भवात्।

नैयायिकास्तु-द्योत्यत्वं द्योतकत्वं वा प्रातिस्विकरूपेण सम्बन्धमाहुः, तदनङ्गीकारायैव पूर्वं द्योत्य-द्योतकभावस्य सम्बन्धत्वमुक्तम्, सम्बन्धस्य द्विष्ठत्वेन 'अर्थस्य द्योत्यत्वं, प्रादीनां च द्योतकत्वम्' इत्युभयोः प्रातिस्विकरूपेण सम्बन्धत्वे द्विष्ठत्वं न स्यात्, मिलितरूपेण च तत्त्वे तत् सिध्यति। एतेन केवलं जन्यत्वस्य जनकत्वस्य वा सम्बन्धत्वं वदन्तः परास्ताः, तथाहि-जनकत्वस्य सम्बन्धत्वे 'पारिमाण्डल्याद् घटो न' इत्यत्र का गतिः स्यात्? "पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्"

[ कारिकावली श्लो०     ] इति सिद्धान्तेन पारिमाण्डल्ये जनकत्वस्यासत्त्वेन तत्र नञा तदभावस्य बोधयितुमशक्यत्वात्, अप्रसक्तप्रतिषेधस्यायुक्तत्वात्, पारिमाण्डल्यम्-अणुपरिमाणम्, तत् कस्यापि न कारणमित्युक्तसिद्धान्तार्थः । न चेदृशस्थले आकाङ्क्षाविशेषमहिम्ना घटनिष्ठजन्यतानिरूपितजनकताभाववत् पारिमाण्डल्यमिति बोधान्न दोष इति वाच्यम्, 'दण्डेन न गगनम्' इत्यादौ गतिविरहस्य तथापि जागरूकत्वात्, यतो गगनस्य नित्यत्वेन तन्निष्ठजन्यताया अप्रसिद्धेः । यदि च प्रतीत्यनुरोधेन तत्रापि दण्डनिष्ठजनकतानिरूपितजन्यत्वाभावो गगने बोध्यत इति स्वीक्रियते, द्विविधस्यापि बोधस्य व्युत्पत्तिबललभ्यत्वाङ्गीकारात्; तथापि 'गगनं न पारिमाण्डल्यात्' इत्यत्र दोषस्यानुद्धारात्, गगने जन्यत्वस्य पारिमाण्डल्ये जनकत्वस्य चाप्रसिद्धत्वात् प्रातिस्विकरूपेण तयोः [ जन्यत्व-जनकत्वयोः ] सम्बन्धत्वासम्भवात् । विशिष्टस्य [ मिलितस्य ] जन्यजनकभावस्य संसर्गत्वे तु व्यधिकरणेन विशिष्टेन जन्यजनकभावसम्बन्धेन पारिमाण्डल्याभावो गगने गगनाभावश्च पारिमाण्डल्ये बोधयितुं शक्य इति न काचिदनुपपत्तिरिति शाब्दिकसरणिः ।

द्योतकत्वं तु स्वसमभिव्याहृत[ समीपोच्चारित ]शब्दगतशक्त्युद्बोधकत्वम्, तदर्थश्च-नियतपूर्वापरीभावेन स्थिते धात्वादौ याऽभिधाशक्तिस्तज्जन्यबोधविषयकं यत् तात्पर्यं तदुद्बोधकत्वमिति । सर्वमेतन्मनसि कृत्वोक्तम्-**तदर्थद्योती**ति ।

प्रशब्दमादिं कृत्वा गणपाठे पृथक् पठितो गणो नास्ति, अतः कः प्रादिरिति मुह्येतेत्याह-**चाद्यन्तर्गतः प्रादिः शब्दगण** इति-"चादयोऽसत्त्वे" [ १. १. ३१. ] इति सूत्रगृहीतचादिगणान्तर्गतः प्रादिशब्दगण एवेहाग्रे आनुपूर्व्या प्रदर्श्यमानः प्रादिशब्देन बोध्य इति भावः, एतच्च परिचायकमात्रं, न तु सूत्रजवाक्यार्थबोधविषयं सूत्रोक्तपदादनुपस्थितेः । **उपसर्गसंज्ञः** इति विधेयनिर्देशः । **भवती**ति क्रियाध्याहारः, क्रियां विना वाक्यत्वस्यानुपपत्तेः ।

अग्रे वक्ष्यमाणस्य धातोः पूर्वप्रयोगस्य बीजप्रदर्शनाय प्राह-**तस्माच्चे**ति-यस्मादुपसर्गसंज्ञस्तस्मादिति भावः । अयमाशयः-'धातोः प्राक् प्रयुज्यते' इति नापूर्वविधिः, अपि तु 'उपसर्ग' इति महासंज्ञाबललब्धार्थानुवाद एव, लाघवार्थं हि संज्ञा विधीयते 'लाघवार्थं हि संज्ञाकरणम्', इत्यभियुक्तोक्तेः, तथा च लाघवमनादृत्य 'उपसर्ग' इति या महती संज्ञा समादृता तस्या अयमाशयः, यदुत-अन्वर्था संज्ञेयमिति, तदर्थश्च-उप-पूर्वं समीपे, सृज्यते-सम्बध्यत इत्युपसर्ग इति, तथा च धातोः पूर्वं प्रयोग एव संज्ञाशब्दशक्तिलभ्य इति, तदाह-**धातोः प्राक् प्रयुज्यत** इति, तथा च धातोरिति पदमवधिलाभार्थमिहापि वाक्येऽनुवर्तनीयम्, शब्दाधिकाराश्रयणाच्च तत्र षष्ठ्यन्तस्यापि तस्येह प्रागिति दिग्वाचकपदसान्निध्यात् पञ्चम्यन्तत्वं सम्पद्यते, तथा सतीदं पृथग् वाक्यमेव, चकारेण वाक्यभेदस्य सूचनात्, सति चैकवाक्यत्वाग्रहे पूर्वप्रदर्शितरीत्या तस्यापि लाभ इति बोध्यम् । *सर्वं वाक्यं सावधारणम्* इति सिद्धान्तेन 'प्रागेव' इत्यर्थो लभ्यते, तदाह-**न पर** इति ।

**न पर** इति मूलप्रतीकमवतारयन् लघुन्यासकारस्त्वाह-"प्राक्शब्दस्याव्यवहिते वर्तनादाह-**न पर** इति" इति, वस्तुतस्तु प्राक्शब्दस्य पूर्वदेशकालमात्रवाचित्वेन व्यवहिताव्यवहितसाधारण्यम्, तथा च तदाशङ्कापनोदनायैवाग्रे **'न व्यवहित'** इति कथ्यते, प्राक्शब्दस्याव्यवहिते वृत्तौ तु तदुक्तेरसङ्गतिः स्यात्, तथा चास्मदुक्तमेवावतरणं युक्तमिति प्रतीमः । उपसर्गशब्दबललभ्यमर्थमाह-**न व्यवहित** इति-प्रदर्शितं ह्युपसर्गशब्दस्य समीपोच्चारितार्थत्वम्, व्यवहितस्य समीपोच्चारितत्वं न स्यादित्यर्थत एवाव्यवहितप्रयोगलाभः ।

अथ प्रकारान्तरेण व्याख्यायते-मूले 'प्राक्' इति सामान्येनोक्तेऽपि प्राक्त्वस्य सापेक्षत्वाद् धातोरेव च सन्निहितत्वात् तत एव प्राग् विज्ञायत इत्याह-**तस्माच्च धातोः प्राक् प्रयुज्यते** इति-**च** पुनः, **तस्मात्** यदर्थद्योतकः प्रादिस्तस्माद्, धातोः, **प्राक्** पूर्वं, प्रादिः प्रयुज्यत इत्यर्थः, न केवलमुपसर्गसंज्ञ एव, किन्तु पूर्वं च धातोः प्रयुज्यत इति भावः । अनेन संज्ञा प्रयोगनियमश्च क्रियते, तदभिव्यक्त्यर्थश्चकारः, अन्यथा 'प्राग्' इत्यनेन संज्ञानियमो विज्ञायेत-'धातोः प्रादिस्तस्मात् प्राक् प्रयुज्यमान उपसर्गसंज्ञो भवति, नान्यः' इति । इच्छया हि वचनप्रयोग, इच्छायाश्च निरङ्कुशत्वात् प्राग् अप्राक् च भवेत्, तत्राप्राक् प्रयोगोऽनिष्टो न निवर्तितो भवति, न चाप्राक् प्रयुज्यमान उपसर्ग इत्युच्यते, अतः संज्ञानियमोऽयुक्तः । प्रयोगनियमस्त्वन्यार्थप्रयोगनिवृत्त्यर्थत्वाद् युक्तः । ननु चानिष्टादर्शनात् प्रयोगनियमो न युक्तः, नहि प्रपचतीति प्रयोक्तव्ये कश्चित् 'पचतिप्र' इति प्रयुङ्क्ते, उपसर्गसंज्ञा च धातोरिति धातुयोगे विधीयते, धातुयोगश्च न देवदत्तादिपदेन व्यवधाने परत्वेनोपपद्यते । प्रादयो ह्यर्थाभिधाने यथा सम्बन्धिपदमपेक्षन्ते तथा पूर्वत्वमानन्तर्यं च । तथा चानेकोपसर्गसन्निपाते यथासम्बन्धं प्राक् प्रयोगः-अभिसम्पर्याहरतीति, अत्र हि आङा हरतिर्विशिष्यत इति ततः प्राग् आङ्, आङोपसृष्टः परिणेति ततः परिः, पर्याहरतिः समेति ततः सम्, सम्पर्याहरतिरभिनेति ततोऽभिः, एवमर्थक्रमकृत एषां प्रयोगक्रमः, अन्यथाऽत्रापि यतितव्यम्; उच्यते-प्रादयो यद्यपि तथा प्रयोगे न दृश्यन्ते, द्विर्वचनाडागमादेः शास्त्रे कार्यस्य व्यवस्थार्थं पृथक्पदेनाक्षिप्यन्ते, न नियतधात्ववयवत्वेनोपदिश्यन्ते, अत्र शास्त्रानु-

सारिणो नियामकस्याभावात् पदान्तरवदनियमेन प्रयोगः प्रसज्येत, शास्त्रानुसरणे एव च प्रत्ययपरत्वमागमादेशविधिः "प्रथमोक्तं प्राक्" [ ३. १. १४८. ] इत्यादि चोच्यते, निष्कोशाम्बिः, निर्वाराणसिः, अक्षपरि, शलाकपरि, एकपरि, द्विपरि, निभृते- नोर्जितेनाति, ( सु सु ) स्वाढ्यम्भवं देवदत्तेन, दुराढ्यम्भवं देवदत्तेन, सुकटङ्कराणि वीरणानि, दुष्कटङ्कराणि वीरणानि । छन्दसि च-'याति निर्हस्तिना, आ मन्द्रैरिन्द्र ! हरिभिर्याहि' इति चान्यथापि प्रयोगो दृश्यते । तत्र प्रयोगानुसरणेऽपि दुर्विभावेयं प्रयोगव्यवस्था, प्रयोगव्यवस्थानिर्णये च तदभिधान- सामर्थ्यमपि दुर्विभावमित्यन्यत्रापि तथा प्रयुज्येत, अतो युक्तः प्रयोगनियमः ।

अनेकोपसर्गसन्निपाते तु ह्युपसर्गाणां सिद्धे धातोः प्राक्त्वे या तत्र प्रयोगव्यवस्था सा त्वार्थक्रमापेक्षया प्रयोगाभ्यासात् सुविभा- वेत्युपेक्षिता सूत्रयितुम् । अथास्मिन् नियमे सति कथमधातोः प्राक् प्रयोगः-स्वाढ्यम्भवमित्यादिः, अथ व्यवहितेऽपि प्राक्शब्द- प्रयोगोऽस्ति, यथा-मथुरायाः प्राक् पाटलीपुत्रमिति, अतो यद्यप्यधातोः प्राक् प्रयोगो धातोरप्ययं प्राक् प्रयोगो भवत्येव, अनेन परप्रयोगनिवृत्तिः क्रियते, न व्यवहितप्रयोगनिवृत्तिरिति, तथा सत्यतिप्रसज्यते, अन्यत्रापि देवदत्तः प्रपचतीत्यादौ प्रदेव- दत्तः पचतीत्याद्यनिष्टं प्राप्नोति, न चाव्यवधाने सम्भवति व्यवहिते दिक्शब्दप्रवृत्तिः, नहि 'देवदत्तात् पूर्वमाह्वय' इत्युक्तेऽव्यवहिते सम्भवति व्यवहितमाह्वयति, तत्र प्रतिपत्त्यभावादासन्न एव हि प्रतिपत्तिर्भवति । अथ ज्ञापकाद् व्यवहितप्रयोगः, "दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात् खल्" [ ५. ३. १३९. ] इत्यत्र खलि खकारोऽनुबध्यते, तस्यैतत् प्रयोजनम्-"च्व्यर्थे कर्त्राप्याद् भू-कृगः" [ ५. ३. १४०. ] इति खलि स्वाढ्यम्भवमित्यादौ कृदन्ते "खित्यनव्ययारुषो मोऽन्तो ह्रस्वश्च" [ ३. २. १११. ] इति मोऽन्तो यथा स्यादिति, तत्र यदि धातोः प्राग् दुःस्वीषतः स्युर्न कर्त्राप्यवाचि तदा खिदन्तेऽनव्ययस्योच्यमानो मोऽन्तो न स्यात् दुःस्वीषतामव्ययत्वात् कर्त्राप्यवाचिनश्च व्यवधानात्, कर्त्राप्यवाचि तु यदि धातोः प्राक् स्यात् तदा तस्यानव्ययत्वात् मोऽन्त उपपद्यते, अतो विज्ञायते दुःस्वीषतो धातोः कर्त्राप्यवा- चिना प्राक्प्रयोगे व्यवधीयन्त इति; तदप्यसत्-दुःस्वीषतां धातोरान्तर्येऽपि मोपपत्तेः "कृत् सगतिकारकस्यापि" [ ७. ४ ११७. ] इति **कृद्ग्रहणे** गतिकारकपूर्वस्यापि ग्रहणं भवतीति गतिसंज्ञकव्यवधानेऽपि **कर्त्राप्यवाचिना** मोऽन्त उप- पद्यते, अतो न खित्त्वं सुदुरोस्तत्र प्रयोगे ज्ञापकं भवति, अन्यथा- नुपपद्यमानो हि भावो भावान्तरस्य ज्ञापको भवति; उच्यते- दुःस्वीषतः परो यः कर्ता आप्यं च, ततः पराद् भू-कृगः खल्, इति श्रुतिक्रमाश्रयेणाभिसम्बन्धाद् व्यवहितः प्रयोगो भवति।

किञ्च स्वाढ्यम्भवमित्यादौ स्वादीनां नोपसर्गत्वमपि तु चादित्वमात्र- त्वम् [ परमतेन निपातत्वम् ], 'अनाढ्येनाढ्येन दुःखेन भूयते, अनाढ्येनाढ्येन सुखेन भूयते, अनाढ्येन ईषदाढ्येन भूयते' इत्यादिविग्रहे तेषां क्रियया सह विशेष्य-विशेषणभावानवगमात् । अत्र हि दुःखादीनां चाद्यर्थानां क्रियायां हेतुत्वावगतिर्न विशेषणत्वमिति न प्राक्नियमोच्छेद इति केचिदाहुः, तन्न- चाद्यर्थस्येह क्रियाविशेषणत्वस्यैवौचित्यात् ।

प्रादेस्त्वनेकस्यापि जात्यपेक्षायां जातेर्व्यवधानाभावादुपपद्यते प्रयोगः, तुल्यजातीयस्याव्यवधायकत्वात्, नहि तदेव तस्य व्यवधायकं भवति, व्यक्तिभेदस्य चानाश्रयणमित्यलं पल्लवितेन ।

अथ प्रकृतमनुसरामः—अविशेषेण सर्वेषामेव प्रादीनामुप- सर्गसंज्ञा प्राप्ता, सा च नेष्टेत्यनिष्टेषु तां वर्जयति मूले-**पूजार्थे**त्या- दिना, पूजा अर्थो-द्योत्यार्थो ययोस्तौ पूजार्थौ, सुश्च अतिश्च- स्वती, पूजार्थौ च तौ स्वती च-पूजार्थस्वती, गतः-उपायान्तरेण निश्चितः, अर्थः - द्योत्यार्थो ययोस्तौ-गतार्थौ, अधिश्च परिश्च अधिपरी, गतार्थौ च तौ अधिपरी च-गतार्थाधिपरी, अति- क्रमः-वक्ष्यमाणः, अर्थः-द्योत्यार्थो यस्य सोऽतिक्रमार्थः, स चासौ अतिश्च-अतिक्रमार्थातिः, पूजार्थस्वती च गतार्थाधिपरी च अतिक्रमार्थातिश्चैषां समाहारः-पूजार्थस्वतिगतार्थाधिपर्यति- क्रमार्थाति, अत्र समाहारेऽपि समाहारिणो लक्ष्यन्ते, तद् वर्जयति-प्रस्तुते स्वसमुदायात् बहिष्करोतीति तथा, एतदेव व्याचष्टे—**पूजार्थौ स्वती गतार्थावधिपरी अति- क्रमार्थमतिं च वर्जयित्वे**ति—

"निपाताश्चोपसर्गाश्च धातवश्चेत्यमी त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥"

इति वचनादुपसर्गा बह्वर्थाः, तत्र यत्र पूजार्थे 'सु अति' इत्येतौ प्रयुज्येते तत्र तयोरुपसर्गसंज्ञा नेत्यर्थः, एवमन्यत्रापि योजनीयम्, **वर्जयित्वे**ति कथनेन तेषामुद्देश्यकोटिबहिर्भावः सूचितः, एतेषामुपसर्गसंज्ञा नेति तु फलितार्थकथनं सूत्राक्षरैस्त- थार्थस्यालाभात् ।

उदाहरति-**प्रणयती**त्यादिना । **प्रणयती**ति-यद्यपि "णींग् प्रापणे" इति वचनाद् 'नी'धातुः प्रापणार्थकस्तथापि धातूना- मनेकार्थत्वेन स्नेहार्थकः, तमेवार्थं प्रशब्दो द्योतयतीति भवति तस्य धात्वर्थद्योतकत्वम्; एवं-**परिणयती**त्यत्रापि 'नी'धातोः प्रापणार्थत्वेन प्रसिद्धस्य पाणिग्रहणपूर्वकस्वीकरणमर्थः, तमेवार्थं परिशब्दो द्योतयति । **अभिषिञ्चती**ति-"षिचींत् क्षरणे" इति वचनात् सामान्येन सेकार्थस्य 'सिच्'धातोरिह विधिविशेषसम्बद्ध- सेकार्थत्वम्, तमर्थमभिशब्दो द्योतयति, 'राज्ये अभिषिञ्चति' इत्यादौ तथा प्रतीतेः; एवं—**निषिञ्चती**ति—अत्र तस्यैव 'सिच्'धातोर्गर्भाशयाधिकरणकधातुत्यागोऽर्थः, निशब्दश्च तदर्थ-

द्योतकः । **प्रलम्भ** इति–"डुलभिष् प्राप्तौ" इति वचनात् सामान्यतः प्राप्त्यर्थकस्य 'लभ्'धातोर्वञ्चने वृत्तिः, प्रशब्दश्च तद्द्योतकः; **उपलम्भ** इति–अत्र च साक्षात्प्राप्तिरर्थः, उपशब्दश्च तद्द्योतकः । यद्यपि—

"उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराऽऽहार-संहार-विहार-प्रतिहारवत् ॥"

इत्युक्तदिशा उपसर्गस्यार्थान्तरप्रापकत्वं प्रतीयते तथापि तस्य तदर्थद्योतकतानिबन्धनमेवार्थान्तरप्रापकत्वज्ञानमिति न तस्यार्थान्तरवाचकत्वमिति विशदव्यान्यत्र निरूपितम् ।

उपसर्गसंज्ञायाः फलमाह—**एषूपसर्गसंज्ञायामि**त्यादि–प्रादीनामुपसर्गसंज्ञायां कृतायाम्, एषु–प्रयोगेषु यथायथं णत्वादयः सिद्धा इति भावः । यद्यपि 'नी'धातुर्धातुपाठे "णींग् प्रापणे" इति णघटित एव पठितस्तथापि "पाठे धात्वादेर्णो नः" [२. ३. ९७.] इति णस्य नो भवति, प्रविशिष्टन्यर्थविवक्षायां प्रश्चेच्छया प्रयुज्यते, धातोर्यथास्वं लक्षणवाक्यैर्वर्तमानातिव्, शव्, प्रस्यानेनोपसर्गत्वे "अदुरुपसर्गान्तरो ण०"[२. ३. ७७.] इति नस्य णत्वे—**प्रणयति, परिणयति,** इति भवति । एवं 'सिच्'धातुर्धातुपाठे "षिचींत् क्षरणे" इति षघटित एव पठितस्तथापि "षः सः०" [२. ३. ९८.] इति षस्य सो भवति, अभिश्चेच्छया, वक्तुर्विवक्षापूर्वको हि शब्दप्रयोगः, तदनु त्यादौ शे विकरणे परे "मुचादि०" [४. ४. ९९.] इति ने तस्य "म्नां०" [१. ३. ३९.] इति ञकारे, सकारस्य च "स्था-सेनि-सेध-सिच०" [२. ३. ४१.] इति षत्वे—**अभिषिञ्चति, निषिञ्चति,** इति भवति । 'लभ'धातोः "भावाकर्त्रोः" [५. ३. १८.] इति घञि "उपसर्गात् खल्घञोश्च" [४. ४. १०७.] इति ने तस्य "म्नां०" [१. ३. ३९.] मकारे–**प्रलम्भः, उपलम्भः,** इति भवति, उभयत्र "गति०" [३. १. ४२.] इति समासः । एते च विधय उपसर्गनिमित्ता इति स्पष्टमेव । पदकृत्यं दर्शयति—**धातोरिति किमि**ति–धात्वर्थद्योतक एव प्रादिरुपसर्गसंज्ञक इत्यर्थाश्रयणप्रयोजनं किमिति पृच्छार्थः । प्रत्युदाहरणेनोत्तरयति—**वृक्षं वृक्षमभि सिञ्चती**ति–अत्राभिना वृक्षस्य योगो न तु 'सिच्'धातोरिति तस्य धात्वर्थद्योतकत्वाभावः, तेन चोपसर्गत्वाभावान्न सस्य षत्वम्, अत्र 'अभि' इत्यनेन वृक्षाणां सिचिनाऽभिसम्बन्धो द्योत्यते, न सिचिः, यदि धातोरिति नोच्येत तदा प्रादिमात्रस्य संज्ञा स्यात्, ततश्चात्रापि स्यादिति षत्वं प्रसज्येत, तद्वारणाय धातोरित्युच्यत इति भावः । अत्र "लक्षणवीप्स्येत्थम्भूतेष्वभिना" [२. २. ३६.] इति द्वितीया, "वीप्सायाम्" [७. ४. ८०.] इति च द्विर्भावः । अन्ये तु द्विर्वचनस्यैव द्योतकत्वमाहुः, तदर्थकसमभिव्याहारे चाभेः कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया बाधमाद्रियन्ते । लघुन्यासकारस्तु–"वीप्सार्थेनाभिना योगात् "लक्षणवीप्स्य०" [२. २. ३६.] इति द्वितीया" इत्याह, तन्न मनोरमम्–तत्र सूत्रे "एष्वर्थेषु वर्तमानादभिना युक्तात्०" इति वृत्तिग्रन्थविरोधात्, "वीप्सा तु द्विर्वचनद्योत्यैव" इति स्वग्रन्थविरोधात्, प्रादीनां द्योतकत्वमिति प्रकृतसूत्राभिप्रायविरोधाच्च, अभेर्वीप्सार्थत्वे द्योतकत्वं न स्यात्, तथा च वीप्सा द्विर्वचनवाच्यैव तद्द्योतकोऽभिरिति स्वीकरणीयम् । तथाहि–"वीप्सायाम्" [७. ४. ८०.] इति सूत्रे वृक्षं वृक्षं सिञ्चतीत्येव प्रयोगः प्रदर्शितः, न त्वभेः प्रयोगः कृतः । तथा च वृक्षेण योगो न धातुनेति धात्वर्थद्योतकत्वाभावेन तस्योपसर्गसंज्ञा न भवतीति तन्निमित्तं षत्वं न भवति, धातोरित्यस्याभावे तु यथाकथञ्चित् समभिव्याहृतस्योपसर्गत्वे षत्वं स्यादिति भावः । अव्याप्त्याशङ्कां परिहरति–**प्रगता नायका यस्मादि**त्यादिना–"गम्लृं गतौ" इति 'गम्' धातुः, ततो भूते कर्तरि क्ते–गतशब्दः, तेन प्रशब्दस्य "गतिक्वन्यः०" [३. १. ४२.] इति समासे–प्रगतशब्दः, 'नी'धातोः कर्तरि णके वृद्धावायादेशे च–नायकशब्दः, तेन प्रगतशब्दस्य "उष्ट्रमुखादयः" [३. १. २३.] इति बहुव्रीहिसमासे गतशब्दलोपे च प्रनायकशब्दः । अत्रायमाशयः–धातोरिति पदोपादानेन पूर्वत्रातिव्याप्तिवारणेऽपि 'प्रनायको देशः' इत्यादौ धातुसम्बन्धसत्त्वेऽप्युपसर्गत्वप्रयुक्तणत्वरूपकार्यादर्शनेन तत्राव्याप्तिरिति शङ्का न कार्या, यतोऽत्र प्रगता नायका यस्मादित्यर्थस्य प्रतीयमानत्वेन 'गम्'धातुनैव सम्बन्धस्य लाभात् तन्निरूपितमेवोपसर्गत्वं प्रशब्दस्य, न तु समभिव्याहृतनीधातुनिरूपितम्, इति न नीधातोरुपसर्गनिमित्तककार्यभाक्त्वमिति, तत्र हेतुमाह–**येनैव धातुने**ति । **येनैव धातुना सम्बद्धा** इति 'येनैव सम्बद्धाः' इत्येतावति कथितेऽपि प्रकृतार्थलाभसम्भावनायामपि धातुपदमत्र धातूपसर्गभावसम्बन्धविषयतायां तात्पर्यग्राहकम्, प्रकृतार्थश्च यद्यपि सामीप्यमूलक एव तथापि सूरिभिरिष्टवचनत्वेनोपन्यस्त इति प्रतीयते ।

ईदृशं स्थलान्तरमप्याह—**प्रच्छको देश** इति–"ऋच्छत् इन्द्रियप्रलय-मूर्तिभावयोः" इति 'ऋच्छ्' धातुः, इन्द्रियाणां प्रलये मोहे, मूर्तिभावे च वर्तते, अतः कर्तरि णकप्रत्यये–'ऋच्छक'शब्दो भवति, अत्रापि प्रगता ऋच्छका यस्मादिति विग्रहे प्रशब्दस्य 'गम्'धातुं प्रत्येवोपसर्गत्वं, न तु ऋकारादिधातुं प्रतीति "ऋत्यारुपसर्गस्य" [१. २. ९.] इत्यारादेशो न भवति, किन्तु "अवर्णस्येवर्णा०" [१. २. ६.] इत्यादेश एव भवति ।

अयं भावः - अन्तर्भूतगतार्थेन प्रशब्देन प्रत्ययार्थः कर्ता विशेष्यते, न ऋच्छतिः, [ ऋच्छदर्थः ] यदि धातोरिति नोच्येत तदा प्रादिमात्रस्य संज्ञा स्यात्, ततश्चात्रापि स्यादिति आरादेशः प्रसज्येत तद्वारणाय धातोरित्युच्यते ।

वृक्षं वृक्षमभि सिञ्चतीत्यत्र धातूपादानाभावे सत्यप्युपसर्गत्वे सामर्थ्याभावात् षत्वाभावो वक्तुं शक्यः, धातोरित्युपन्यासस्तु-सम्बन्धद्योतित्वादभेः सम्बन्धस्य च द्वितीयमन्तरेणायोगाद् धातुसम्बन्धित्वं मन्येत, नैवं मन्तव्यम्, अयं वृक्षसम्बन्धी न 5 सिचेस्तदर्थानवद्योतनात्, अन्तरङ्गो हि यो धात्वर्थद्योती, येनावयवेन युक्तो धातुर्विशिष्टमर्थमाह स धातोरित्युच्यते, नेदृश इत्यतदीयत्वख्यापनार्थः । 'प्रर्च्छक' इत्यत्रारादेशे हि न सामर्थ्यमपेक्ष्यते, अपदविधित्वात्, "समर्थः पदविधिः" [७. ४. ११.] इत्यस्य पदविधावेवोपस्थानादित्यपि विचारो भवति ।

10 अयमर्थश्च पाणिनीयतन्त्रेऽपीत्थमेव समर्थितः, तथाहि-"गतिश्च" [पा० सू० १. ४. ४९.] इति सूत्रे भाष्ये क्रियाविशेषाधिकरणे विचार्यते-"गत्युपसर्गसंज्ञाः क्रियायोगे, यत्क्रियायुक्तास्तं प्रतीति वचनम्" [ वार्तिकम् ], गत्युपसर्गसंज्ञाः क्रियायोगे, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञा भवन्तीति 15 वक्तव्यम् । किं प्रयोजनम्? "प्रयोजनं घञ्-षत्व-णत्वे" [ वार्तिकम् ], प्रवृद्धो भावः-प्रभावः, अनुपसर्गे इति प्रतिषेधो मा भूत् । षत्वम्-प्रगता नायका यस्मात्-प्रनायको ग्रामः, उपसर्गादिति णत्वं मा भूत् । "वृद्धिविधौ च धातुग्रहणानर्थक्यम्" [ वार्तिकम् ], वृद्धिविधौ च धातुग्रहणमनर्थकम् 20 "उपसर्गादृति धातौ" [ पा० सू० ६. २. २१. ] इति । तत्र धातुग्रहणस्यैतत् प्रयोजनमिह मा भूत्-प्रर्षभं वनमिति । क्रियमाणे चापि धातुग्रहणे प्रर्च्छक इत्यत्र प्राप्नोति, यत्क्रियायुक्तास्तं प्रतीति वचनान्न भवति" इति, स्पष्टम् ।

उक्तश्चायमर्थः "ऋत्यारुपसर्गस्य" [ १. २. ९. ] इति 25 सूत्रबृहद्वृत्तावपि वचनरूपेणैव । वस्तुतस्तु-नेदमपूर्वं वचनम्, अपि तु "प्रत्यासन्नेव क्रियोपसर्गेण द्योत्यते" इति न्यायव्युत्पादनमात्रम्, प्रत्यासत्तिश्चार्थतः शब्दतश्च ग्राह्येति सर्वेष्टसिद्धिः ।

**पूजार्थस्वत्यादिवर्जनं किमिति**—अयमाशयः-यत्र स्वार्थमेव प्रादयोऽभिदधीरंस्तत्र तेषां धातुसम्बन्धाभाव इति 30 गतिसंज्ञाप्राप्तिरेव नास्तीति तद्वर्जनं व्यर्थमेवेति । तत्र पूर्वं पूजार्थकस्वतिवर्जनफलमुपदर्शयितुमना मनागवतारयति—**पूजार्थौ स्वती** इति। अत्र फलमुखेनोत्तरयति—**सुसिक्तमि**-त्यारभ्य **षत्वं न भवती**त्यन्तेन-'सिच्'धातोः "ष्टुंगक् स्तुतौ" इति 'स्तु'धातोश्च भावे क्तप्रत्यये-सिक्त-स्तुतशब्दौ भवतः, 35 अत्र द्योत्यमर्थमादायार्थवत्त्वं गृह्यते, तथा चात्र धात्वर्थप्रशंसाया द्योत्यायामुपसर्गत्वं नेष्टं, तस्मिन् सति तन्निमित्तकं "स्था-सेनि-सेध-सिच०" [ २. ३. ४०. ] इति "उपसर्गात् सुग्-सुव-सो-स्तु०" [ २. ३. ३९. ] इति च षत्वं स्यात्, सति चैषां वर्जने उपसर्गसंज्ञा न भवतीति षत्वं न भवति, "सुः पूजायाम्" 40 [ ३. १. ४४. ] इति "अतिरतिक्रमे च" [ ३. १. ४५. ] इति च समासे प्राप्तत्वं तु भवत्येव । अत्र '**धात्वर्थः प्रशस्यते**' इति 'सेकादिरूपधात्वर्थे प्राशस्त्यं द्योत्यते' इति तात्पर्यकम्, अत्र लघुन्यासकृतः-"शोभनत्वोद्भावनेन सिचि-स्तौत्योरर्थस्य कर्तुः पूजा प्रतीयते" इत्याहुः, तस्य पूजितक्रियाकर्तृत्वेन कर्तरि पूज्यत्वबोधः पार्ष्णिक इति तात्पर्यम्, श्रूयमाणशब्दार्थस्तु 45 नोचितः, यतो धात्वर्थप्रशंसयैव द्योतकत्वशक्तेरुपक्षीणतया कर्तृपूजाप्रत्यायकत्वं तयोरसम्भवि शब्द-बुद्धि-कर्मणां विरम्य व्यापाराभावात्, वक्तृबोद्धव्यवैशिष्ट्यादिज्ञानसहकृतव्यञ्जनावृत्त्योपस्थितार्थेन कस्यापि शब्दस्य तदर्थवत्त्वव्यवहारो न युक्तः, न च तथाभूतार्थेन पूजार्थत्वं तयोः स्यादिति न तौ व्यावर्त्यौ 50 स्यातामिति ।

स्वती पूजार्थद्योतकावेवेति तयोस्तत्त्वाव्यभिचारात् 'स्वती वर्जयित्वा' इत्येव वक्तव्यं, न तु तत्र पूजार्थत्वविशेषणमुचितं "सम्भव-व्यभिचाराभ्यां स्याद् विशेषणमर्थवत्" इति न्यायात्, इत्याशयवानाशङ्कते—**पूजाग्रहणं किमि**ति । 55 उत्तरयति – **सुषिक्तं नाम किं तवात्रे**ति—अत्र कस्यचित् सेकः काका कुत्स्यते, सुषिक्तं-त्वया सम्यक् सिक्तं, किन्तु अत्र-अस्मिन् सुसेके कृते सति, तव-सेक्तुर्भवतः, किं-न किञ्चिदपीत्यर्थः, नाम-वाक्यालङ्कारे, अत्र निन्दा गम्यते, तथा च स्वभावतः पूजार्थकत्वेऽपि पूजायामत्राप्रयुक्तत्वेनोपसर्गत्वात् 60 "गति०" [ ३. १. ४२. ] इति समासे षत्वं भवत्येवेत्याशयः । तदाह—**धात्वर्थोऽत्र कुत्स्यत** इति ।

गतार्थकाधिपरिवर्जनफलं दर्शयितुमवतारयति— **गतार्थाधिपरी** इति —अथेमौ यदि गतः-अपेतः, अर्थः-अभिधेयमाभ्यामित्यनभिधेयौ गतार्थौ, यथा-पदावयवा वर्णाः, ते हि 65 समुदायसम्पादनायोपादीयन्ते, स समुदायो वाचको न तु ते, तेषामेव वाचकत्वेऽपि युग्यवाहकवत् परस्परसापेक्षा वाचकाः, न प्रत्येकमित्यनर्थकाः, तत्र धातोः सम्बन्धाभावादप्रसङ्गः प्राप्त्वोपसर्गत्वयोरित्यनर्थकः प्रतिषेधः । यदि गतः-प्रतिपन्नोऽन्यतः प्रमाणान्तरादिति गतार्थत्वम्, स चान्यो यदि धातुर्न धातुना 70 तदर्थः प्रतिपत्तुं शक्यते, तथा हि-अधि-पर्योरुपरिभावः सर्वतो भावश्चार्थः, न तावागमिना शक्यौ गन्तुम्, आगच्छतीति ह्यागमनं विशिष्टं प्रतीयते, अधि-परियोगे तु 'अध्यागच्छति, पर्यागच्छति' इत्युपरिभावः सर्वतोभावश्चागमनस्य प्रतीयते, तत् कथमनयोर्गतार्थत्वमित्यत आह— **उपरिभाव** इत्यादि । **अन्यत** 75 इति सामान्येनोपक्षिप्तं विशेषेणाह—**प्रकरणादेरि**ति-आदिशब्दाद् अर्थ-शब्दान्तरसन्निधिपरिग्रहः, सामान्यशब्दप्रयोगेऽपि-अर्थात् प्रकरणात् शब्दान्तरसन्निधेश्च विशेषे प्रतिपत्तिर्भवति, यथा-अर्थात्-'गोपालकमाहूय माणवकमध्यापयिष्यति' इति भट्टपुत्रे; प्रकरणात्-'सैन्धवमानय' इति भोजने लवणे, मृगया- 80

यामश्व; शब्दान्तरसन्निधेः—'राम-लक्ष्मणौ' इति दाशरथौ; तद्वद् अध्यर्थ उपरिभावः पर्यर्थश्च सर्वतोभाव आगमनस्य प्रतिपन्नो भवति. यदाह –"अधेरुपरिभावोऽर्थः प्रस्तावादेः प्रतीयते । परेश्च सर्वतोभावो गतार्थत्वं द्वयोस्ततः ॥" तथा 5 चेदमुदाहरणम्—**अध्यागच्छती**त्यादि-आङ्पूर्वकस्य "गम्लं गतौ" इति 'गम्'धातोर्वर्तमानातिवि शवि "गमि०" [ ४. २. १०६ ] इति मस्य छादेशे-आगच्छति, अधिश्चेच्छया, वक्तुर्विवक्षापूर्विका हि शब्दप्रतिपत्तिः ।

अत्रायं संक्षिप्तार्थः-**गतार्थावधि-परी** इति–गतः धातुत एव प्रकरणादिवैशिष्ट्यादवगतः, अर्थः–योत्यो ययोस्तादृशौ 10 यावधिपरी, तौ वर्जयित्वेति प्रादिविशेषणतयोक्तत्वादग्रिमप्रयोगयोस्तयोरुपसर्गसंज्ञाभावात् प्राक्प्रयोगनियमाभावः, तदाह–**अध्यागच्छती**त्यादिना । गतार्थत्वं तयोः स्पष्टयति-**उपरिभावः** इत्यादिना-**अध्यागच्छती**त्यत्रोपरिभावेऽधिः प्रयु- 15 ज्यते, **पर्यागच्छती**त्यत्र च सर्वतोभावे परिः, तौ चार्थौ प्रकरणादित एव प्रतीताविति तयोरन्यतः प्रतीयमानत्वेन गतार्थत्वमेतयोरिति भावः ।

अथ गतार्थत्वे कथं प्रयोगः ? उक्तार्थानां ह्यप्रयोगो भवति, अन्यथातिप्रसङ्गात्, 'अध्यागच्छति, आगच्छत्यधि' इति हि 20 प्रयोगानुपरतिः, एकपर्यायप्रयोगे सर्वपर्यायप्रयोगश्च प्रसज्येत, उच्यते-उक्तार्थानामपि लोके प्रयोगो दृश्यते, यथा–'अपूपौ द्वावानय, अतिथी द्वौ भोजय' इति, नहि लोकस्य प्रयोगं प्रति गुरुलाघवसमीक्षास्ति, यदि स्यादन्यथाशब्दस्यैव प्रयोगः स्यान्नान्यथाकारंशब्दस्य, ऋषभशब्दस्यैव स्यान्न वृषभशब्दस्य, 25 तरुशब्दस्यैव स्यान्न भूरुहाऽनोकहादीनाम्; न चातिप्रसङ्गः, यथादर्शनं प्रयोगात्, न च लोकेऽतिप्रसङ्गेन प्रयोगो दृश्यते ।

तदुक्तम्–"अधि-परी अनर्थकौ" [ पा० सू० १. ४. ९४. ] इति पाणिनीयसूत्रे महाभाष्ये–"अथवा नेमावनर्थकौ। किं तर्हि–अनर्थकावित्युच्यते ? अनर्थान्तरवाचिनावनर्थकौ, धातुनोक्तां 30 क्रियामाहतुः, तदविशिष्टं भवति, यथा शङ्खे पयः ।" इति । इमौ धातुवाच्यां प्रकरणादिसमधिगतविशेषां क्रियामाहतुः, तच्च क्रियारूपमधि-परिसन्निधानेऽप्यनाहितविशेषं भवति, यथा शङ्खे स्थितं पयो न पृथक् प्रतिभाति, इति तदाशयः । ततः शङ्कितम्–"यद्येवं धातुनोक्तत्वात् तस्यार्थस्योपसर्गप्रयोगो न प्राप्नोति 35 "उक्तार्थानामप्रयोगः" इति, समाधत्ते–"उक्तार्थानामपि प्रयोगो दृश्यते, तद्यथा–अपूपौ द्वावानय, ब्राह्मणौ द्वावानय, इति" इति । आशयश्चास्य पूर्वमेव प्रकटितः ।

फलान्तरमप्याह—**'अध्यागमनं प्रयोजनमस्य'** इत्यादिना **'पृथक्पदत्वाद्'** इत्यन्तेन–आङ्पूर्वस्य 'गम्'धातोः 40 क्लीबे भावेऽनटि "गति०" [ ३. १. ४२. ] इति समासे–आगमनमिति, अधिना परिणा च योगे-अध्यागमनम्, पर्यागमनमिति, अत्र ह्यधि-परिशब्दयोरुपसर्गत्वाभावेन "ऊर्यादि०" [ ३. १. २. ] इति गतिसंज्ञाविरहादागमनशब्देन "गति०" [ ३. १. ४२. ] इति समासो न भवति, अतश्च नैकार्थ्यम्, एकार्थीभावापादनं समासः, समसनं संक्षेपणं समास 45 इति हि महती संज्ञेयमन्वर्था, ततश्च "नाम्नः प्रथमैकद्विबहौ" [ २. २. ३१. ] इत्येकार्थवृत्तेः सिः 'एकार्थवृत्तिरागमनशब्द एव' इति तत एव भवति, न समुदायात्, ततश्च स्यन्तः [ प्रथमान्तः ] स एवोच्यते "प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इति वचनात्, ततश्चाध्यागमनं प्रयोजनमस्य पर्यागमनं प्रयोजन- 50 मस्येति "प्रयोजनम्" [ ६. ४. ११७. ] इति प्रथमान्तादुच्यमानस्य इकणः सैव प्रकृतिरिति तस्मिन् इकणि "वृद्धिः स्वरेष्वादेः०" [ ७. ४. १. ] इति प्रत्यासत्तेः प्रकृतेरेव स्वरेष्वादेः स्वरस्योच्यमाना वृद्धिः [ आकारः ] आगमनशब्दस्यैव भवति, नाध्यागमनशब्दस्य न वा पर्यागमनशब्दस्य । 55

अन्यदपि फलमाह–**पर्यानीत**मित्यादिना, आङ्पूर्वस्य 'नी'धातोः कर्मणि भावे वा क्ते "गति०" [ ३. १. ४२. ] इति समासे च–आनीतमिति, ततः परिणा योगे–पर्यानीतमिति, अत्र परेरुपसर्गत्वाभावाद् "अदुरुपसर्ग०" [ २. ३. ७७. ] इति णत्वं न भवति । 60

'गतार्थाधि-परि०वर्ज०' इत्यस्मिन्नसति अत्रापि प्राप्नोतीति व्यवच्छेद्ये दर्शिते, तद् 'अधि-परि' इत्येतावतैव वर्जोपहितेन शक्यं व्यवच्छेत्तुम्, तस्मिन् गतार्थग्रहणमतिरिच्यत इत्यस्यान्यं व्यवच्छेद्यं बुभुत्समानः पृच्छति–**गतार्थग्रहणं किमिति**–'गतार्थ' इत्यस्यावयवस्य, ग्रहणम्–उपादानमुच्चारणम्, किम्– 65 किमर्थमित्यर्थः । एवं पृष्टो व्यवच्छेद्यं दर्शयति–**अध्यागच्छति, पर्यागच्छती**ति–अत्र यदि 'गतार्थ' इत्यधि-परिविशेषणे नोपादीयेत तदाऽधि-परिमात्रस्य प्रतिषेधः स्यात्, तत्र यथा प्रकरणादिभ्योऽध्यर्थस्योपरिभावस्य पर्यर्थस्य च सर्वतोभावस्य द्योत्यस्य प्रतिपत्तौ तयोरधि-पर्योः प्रतिषेधो भवति तथाऽप्रति- 70 पत्तावपि स्यात्, सति तु 'गतार्थ' इत्यस्मिन् प्रकरणादेस्तदर्थप्रतिपत्तावेव निषेधः, न त्वप्रतीताविति प्रकरणादेरन्यतस्तदर्थद्योतने उपसर्गसंज्ञास्त्येव प्रतिषेधाभावात्, ततश्चात्र तत्सन्नियोगशिष्टः 'प्राक् च' इति नियमो भवति ।

सूत्रस्थम् **'अतिक्रमार्थाति'** इति पदं व्याख्यातुमवतार- 75 यति—**अतिक्रमार्थोऽतिरि**ति । अयमतिक्रम इति ज्ञाते ह्यतिक्रमभावाभावाभ्यां निषेधस्य प्रवृत्तिनिवृत्ती ज्ञेये भवत इति तत्स्वरूपमाह—**यदर्थं क्रिये**त्यादि-क्रिया नाम काचित् किञ्चित् फलमुद्दिश्य प्रारभ्यते, सा यदर्थं-यस्मै फलायानुष्ठीयते तस्मिन् निष्पन्ने तस्या उपरमणं न्याय्यम्, तस्मिन् निष्पन्नेऽपि 80

या क्रियायाः प्रवृत्तिः सोऽत्रातिक्रमो विवक्षितः । **अतिसिक्तं भवता, अतिस्तुतं भवता,** अतिक्रमार्थे "अतिरतिक्रमे च" [ ३. १. ४५. ] इति समासः, शेषं प्राग्वत् । **अतिक्रमेण सेकः स्तुतिश्च कृतेत्यर्थ** इति–अनेनातिक्रमार्थतां दर्शयति, अनेन च 'अतिसिक्तम्, अतिस्तुतम्' इत्यनयोरर्थ आख्यातः, अपरमपि यद् दर्शितं तदाह—**अत्र षत्वं न भवतीति**–अतेरुपसर्गत्वाभावात् "स्था-सेनि-सेध-सिच०" [ २. ३. ४०. ] इति "उपसर्गात् सुग्-सुव-सोस्तु०" [ २. ३. ३९. ] इति षत्वं न भवतीत्यर्थः । **अति सिक्त्वा, अति स्तुत्वेति**–"प्राक्काले" [ ५. ४. ४७. ] इति क्त्वाप्रत्ययेऽतेरुपसर्गत्वाभावाद् "ऊर्या०" [ ३. १. २. ] गतिसंज्ञाविरहाद् "गति०" [ ३. १. ४२. ] इति समासो न भवति, समासाभावात् समासे सति भवत उत्तरपदस्यावयवस्य क्त्वाप्रत्ययस्य "अनञः क्त्वो यप्" [ ३. २. १५४. ] इत्युच्यमानो यबादेशो न भवति, एतदेवाह—**अत्र समासाभावाद् यबादेशो न भवतीति**–ननु "गति०" [ ३. १. ४२. ] इति समासो मा भूत्, किन्तु 'अतिरतिक्रमे च" [ ३. १. ४५. ] इति समासो भविष्यति, सत्यम्–अस्ति तेन प्राप्तिः, किन्तु तत्र केषाञ्चित् "स्वती पूजायाम्" इतीष्टिः, तन्मतेनेदमुदाहरणं वेदितव्यमिति । यद्वा स्वमतेऽपि बहुलाधिकारात् "अतिरतिक्रमे च" [ ३. १. ४५. ] इति समासो न भवति, तदुक्तं तद्वृत्तौ—"बहुलाधिकारादतिक्रमे क्वचिन्न भवति–अति स्तुत्वा, अति सिक्त्वा" इति ।

**अतिक्रमग्रहणं किमिति**—अतिरेव वर्जनीयो नार्थविशेषणमुचितमिति प्रष्टुराशयः । प्रत्युदाहरति—**अतिशय्येति**–"शीङ्क् स्वप्ने" इति शीधातुः, अतिपूर्वात् तस्मात् "प्राक्काले" [ ५. ४. ४७. ] इति क्त्वाप्रत्ययः, अत्रातिः शीधातुं जये [ उत्कर्षे ] व्यवस्थापयति, यथा प्रः–तिष्ठतिं गमने, स च जयो नातिक्रमो न वा पूजा, अतः पूजातिक्रमभिन्नार्थत्वेनातेरुपसर्गत्वं, ततो गतिसंज्ञया समासे क्त्वाया यबादेशे "क्ङिति यि शय्" [ ४. ३. १०५. ] इति धातोः 'शय्' इत्यादेशे च–'अतिशय्य' इति, जित्वा [ उत्कर्षेण वर्तित्वा ] इति तदर्थः, सामान्येनातेर्वर्जने त्वत्रातिवर्जने सति न स्यादुपसर्गत्वमिति तत्कृतगतिसंज्ञा-समास-यबादेशादिकमपि न स्यादिति नोक्तरूपं सिध्येदिति भावः । अथ 'पूजार्थसु-गतार्थाधिपरि-पूजातिक्रमार्थाति' इति किं नोच्यते ? अशोकवनिकाचोद्यमेतत्, तथा वा इत्थं वा वचने को विशेषः ? सर्वथैकधा तावद् वक्तव्यमिति । किञ्चैवं निर्देशे मात्रागौरवमपि भवति ।

**प्रादिग्रहणं किमिति**–अयमाशयः–'धात्वर्थविशेषकत्वेन प्रयुक्तस्योपसर्गसंज्ञा' इत्यर्थस्य 'पूजार्थस्वति०' इत्यादिना वर्जनात् "पर्युदासः सदृग्ग्राही०" इति न्यायेन तत्सदृशस्य ग्रहणलाभेनैव सिद्ध्या विनापि प्रादिग्रहणं प्रादीनामेव तथाभूतत्वेन ग्रहणं स्यादिति प्रादिग्रहणं व्यर्थमेव । प्रत्युदाहरणेनोत्तरयति–**पुनर्नमतीत्यादिना**–'पुनर्' इत्यव्ययं, तत उत्पन्नविभक्तेरव्ययत्वाल्लुप्, "णमं प्रह्वत्वे" "पाठे धात्वादेर्णो नः" [ २. ३. ९७. ] इति णस्य नत्वे 'नम्'धातोर्वर्तमानाप्रथमत्रिकैकवचने 'नमति' इति, साधुशब्दोऽत्र क्रियाविशेषणं, तस्य नपुंसकत्वाद् द्वितीयाया लोपे 'साधु' इति, सिञ्चतीति तु प्राग्वत् । अत्रायं भावः–पर्युदासस्य सदृशग्राहकत्वेऽपि केन रूपेण सादृश्यं ग्राह्यमित्यत्र नियामकाभावादव्ययत्वेन सादृश्यग्रहणे 'पुनर्नमति' इत्यत्र धातुसम्बन्धवतः 'पुनर्' शब्दस्याप्युपसर्गत्वे ततः परस्य नकारस्य "अदुरुपसर्गा०" [ २. ३. ७७. ] इति णत्वं स्यात्; धात्वर्थविशेषणत्वेन सादृश्यग्रहणे च 'साधु सिञ्चति' इत्यत्र धात्वर्थविशेषणस्य साधुशब्दस्योपसर्गसंज्ञायां ततः परस्य सिञ्चतेः सस्य "स्था-सेनि-सेध-सिच०" [ २. ३. ४०. ] इति षत्वं स्यात्, अतः स्पष्टतयोपसर्गसंज्ञोद्देश्यत्वप्रतिपत्तये प्रादिग्रहणं विधेयमिति ।

अथोपसर्गाणां स्वभावविशेषान् दर्शयितुमाह–**धात्वर्थं बाधते** इत्यादि । **कश्चित्** प्रादीनामन्यतमः, **धात्वर्थं बाधते** धातुपाठनिर्दिष्टमर्थं शाब्दबोधाविषयं करोति, तद्विपरीतं वार्थं बोधयतीत्यर्थः, **कश्चित्** प्रादीनामन्यतमः, **तं** तच्छब्दस्य प्रधानपूर्वपरामर्शित्वाद् धात्वर्थम्, **अनुवर्तते** अनु–आनुकूल्येन तत्प्रतीतिसम्पादनप्रावण्येन, वर्तते–धातुना सह प्रयुज्यत एवेत्यर्थः, तं विना धातुः स्वार्थं प्रकाशयितुं न शक्नोतीति धात्वर्थसम्पादकतयाऽवश्यमपेक्षितत्वाद् धातुना सह नित्ययोगभाग् भवतीति फलितार्थः सम्पद्यते, तथा चानुवर्तनमिह स्वं विना धात्वर्थप्रतीतिविरहे सति स्वसत्त्वे धात्वर्थप्रतीतिरूपं ग्राह्यम्, सामान्यतोऽनुवर्तनग्रहणे तु 'अनर्थकोऽन्यः प्रयुज्यते' इति वक्ष्यमाणेन विभागवचनेन सह भेदो न स्यात् । एतादृशव्याख्याने च वक्ष्यमाणम् 'आचामति' इत्युदाहरणं न संगच्छते, अतो लघुन्यासकृता मतान्तरेण व्यवस्थापितं, यदाह–"इदं मतान्तरेणोक्तं, स्वमते तु बाधा स्यात्" इति । "चमू अदने" इति पठ्यते, आचमनमप्यदनविशेष एवेति न स्वमते बाधेति कैश्चित् समाधीयते । अपरे तु–ऋजुमार्गेणानुवर्तनस्योक्तार्थालाभात्, आचामतीत्युदाहरणविडम्बनाच्चैवमाहुः–"दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः" इत्यत्र "पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहा" इत्यादौ चाप्रधानस्यापि पूर्वस्य तच्छब्देन परामर्शदर्शनात् प्रस्तुते तदा धातुः परामृश्यते, अर्थविशेषो भवतु वा मा, अथापि **तं** धातुम्, **अनुवर्तते** सर्वं वाक्यं सावधारणं भवतीति न्यायादवश्यमनुसरति, तथा चाचामतीत्यत्रार्थभेदेऽपि न कापि बाधा । उभयमतेऽपि नित्ययोगो दर्शितो भवतीति । **अन्यः** तद्भिन्नः कश्चित् प्रादिः, **तमेव** धातुपाठपठितमेवार्थं, **विशिनष्टि**

विशेषेण बोधयति । **अन्यः** तद्भिन्नः कश्चित् प्रादिः, **अनर्थकः** निष्प्रयोजनकः, **प्रयुज्यते** स्पष्टप्रतिपत्त्यादिकृते धातुना सह प्रयुक्तो भवति । अत्रायं भावः-यस्य शब्दस्य वाच्यं द्योत्यं वा वस्तु न सम्भवति तस्य वाक्यार्थेऽनुपयोगात् प्रयोगानुपपत्तिः स्यादतोऽस्त्यमीषां द्योत्योऽर्थः, केवलं यो द्योत्योऽर्थस्तस्य प्रकरणादिवशात् संप्रत्ययाद् निष्प्रयोजनतोच्यते, धातूपसर्गयोश्च साधारणार्थतयाऽधिकद्योत्यार्थाभावादानर्थक्यमत्रोच्यते पूर्वाचार्यैः, न तु सर्वात्मनार्थाभावात् । 'निखञ्जति, प्रलम्बते' इत्यत्र हि प्रकरणादिसामर्थ्यावगतविशेषां धातुनोक्तां क्रियां द्योतयतो नि-प्रशब्दौ, तद्धि क्रियालक्षणं वस्तु विशिष्टं नि-प्रशब्दासन्निधानेऽप्यनाहितविशेषं भवति, यथा शङ्खे न्यस्तं क्षीरं शौक्ल्येनाविशिष्टं शङ्खात् । तदत्र विषये धातोर्नि-प्रशब्दयोश्च साहायकमङ्गीकर्तव्यमिति ।

एवं प्रादीन् चतुर्धा विभज्य प्रथमप्रकारमुदाहर्तुमाह-**बाधते यथा-प्रतिष्ठते** इत्यादि । "ष्ठां गतिनिवृत्तौ" "षः सो०" [ २. ३. ९८. ] इति षस्य सत्वे *निमित्तापाये नैमित्तकस्याप्यपायः* इति न्यायात् ठस्य थत्वेऽनुस्वारस्येत्त्वात् 'स्था' इत्यस्य प्रतिना योगे "सं-वि-प्रावात्" [ ३. ३. ६३. ] इत्यात्मनेपदे वर्तमानाप्रथमत्रिकैकवचने तेप्रत्यये "श्रौति०" [ ४. २. १०८. ] इति तिष्ठादेशे शवि च-**प्रतिष्ठते,** अत्र प्रतिशब्दो गतिनिवृत्तिरूपमर्थं प्रबाध्य प्रस्थानरूपमर्थं द्योतयति, "प्रतिष्ठतेऽघलयते व्रजलयति गच्छति" इत्याख्यातचन्द्रिका । "स्मृं चिन्तायाम्" अस्य प्रशब्दयोगे तिवि शवि गुणे च-**प्रसरति,** अत्र प्रशब्दश्चिन्तारूपमर्थं प्रबाध्य विस्मरणरूपमर्थं द्योतयति, "विस्मृत्यां विस्मरति च, स्मूर्छति प्रस्मरत्यपि" इत्याख्यातचन्द्रिका । "वसं निवासे" अस्य प्रशब्दयोगे तिवि शवि च-**प्रवसति,** अत्र प्रशब्दो निवासार्थं प्रबाध्य प्रवासार्थं द्योतयति । "लींङ्च् श्लेषणे" अस्य प्रशब्दयोगे तेप्रत्यये श्ये च-**प्रलीयते,** अत्र प्रशब्दः श्लेषणार्थं प्रबाध्य विनाशार्थं द्योतयति, "विनश्यति विलीयते, प्रलीयते विनाशेऽमी" इत्याख्यातचन्द्रिका, एषु चतुर्षु दृष्टान्तेषूपसर्गमहिम्ना धातुर्विपरीतमर्थं बोधयति । "ईक्षि दर्शने" अस्य प्रतिना योगे तेप्रत्यये शवि च-**प्रतीक्षते,** "पलण् रक्षणे" अस्य प्रतिना योगे णिचि तिवि शवि वृद्ध्यादौ च-**प्रतिपालयति,** इह प्रतिशब्दो दर्शनार्थं रक्षणार्थं च प्रबाध्य प्रतीक्षार्थं द्योतयति, ईक्षति-पालयती धातू प्रतिशब्दमहिम्ना प्रतीक्षारूपमर्थान्तरं बोधयतः । "प्रतीक्षते प्रतीक्षायां स्युरागमयते तथा । अनुपालयतीत्येते प्रतिपालयतीति च ॥" इत्याख्यातचन्द्रिका । एषु षट्स्वप्युदाहरणेषूपसर्गेण धात्वर्थबाधः ॥ १ ॥

अथ द्वितीयं प्रकारमुदाहर्तुमाह-**तमनुवर्तते, यथा-अधीते** इत्यादि । "इङ्क् अध्ययने" अस्याधिना योगे तेप्रत्यये च-**अधीते,** "इंक् स्मरणे" अस्याप्यधिना योगे तिवि गुणे च-**अध्येति,** इमावधिनैव सह प्रयुज्येत इति नित्ययोगः, यदुक्तं हैमधातुपारायणे-"इङिकोरधिनावश्यंभावी योगः, यदाह-कश्चित् तमनुवर्तते" इति, "इङिकावधिनैव प्रयुज्येते" इति च । "चमू छमू जमू जिमू अदने" इति दण्डकः, आङ्पूर्वस्य चमेः "ष्ठिवूक्लम्वाचमः" [ ४. २. ११० ] इति दीर्घत्वादौ—**आचामति,** पिबति उपस्पृशतीति वा तदर्थः, "पिबत्याचामति धयत्यपि चूषति पीयते । पाने०" "उपस्पृशति चाचामत्यम् । आचमनार्थके" इति चाख्यातचन्द्रिका, आङ्पूर्वस्यैव चमेर्दीर्घविधानाद् दीर्घविधावाङा सह नित्ययोगः । "चक्षिक् व्यक्तायां वाचि" आङा योगे तेप्रत्यये "संयोगस्यादौ०" [ २. १. ८८. ] इति कलोपे "तवर्गस्य०" [ १. ३. ६०. ] इति तस्य टकारे—**आचष्टे,** त्यादिप्रत्ययेषु आङ्सहितस्य पारायणादावुदाहरणात् चक्षेराङा नित्यं योगः । "अनो रुधिंच् कामे" काम इच्छा, अनुपूर्वो रुधिः कामे दिवादिः, तेप्रत्यये श्ये च – **अनुरुध्यते,** अत्र कामार्थे नित्यमनुना योगः । "लोकृङ् दर्शने" अस्यैव भासार्थत्वे चुरादित्वे प्रयोगे णिजादौ—**प्रलोकयति,** अत्र नित्ययोगः सुधीभिरन्वेष्यः, यतः पारायणे लोकयतीत्युदाहृतमस्ति । 'प्रलोकयति' इत्यस्य स्थाने **'प्रश्लोकयति'** इति पाठकल्पनं यदा तदा भवति नित्ययोगः, यथा श्लोकैरुपस्तौतीत्युपश्लोकयति, तथा श्लोकैः प्रस्तौतीति प्रश्लोकयति, अत्र प्रशब्दस्यावश्यं प्रयोगः, यदाहाचार्यः-"यत्रानेकविशेषणविशिष्टा क्रिया प्रत्ययार्थस्तत्र क्रियाविशेषाभिव्यक्तये युक्त उपसर्गप्रयोगः" इति, प्रशब्दस्य स्तौतिं प्रति, तत्स्थानापन्नप्रत्ययं प्रति वोपसर्गत्वं न तु श्लोकं प्रतीति चर्चा तु यथा नोचिता तथाग्रे वक्ष्यते ॥ २ ॥

तृतीयप्रकारमुदाहर्तुमाह—**तमेव विशिनष्टि, यथा-प्रपचती**त्यादि । "डुपचींष् पाके" इति 'पच्'धातोः प्रशब्दयोगे तिवि शवि च—**प्रपचति,** "डुकृंग् करणे" इति 'कृ'धातोः प्रशब्दयोगे तिवि उः, तस्मिन् सति ऋकारस्योकारस्य च गुणे—**प्रकरोति,** "अन श्वसक् प्राणने" इति 'अन्' धातोः प्रशब्दयोगे तिवि तस्यादाविटि सन्धौ नस्य णत्वे च—**प्राणिति,** "अशश् भोजने" अस्य प्रशब्दयोगे तिवि श्नायां सन्धौ च—**प्राश्नाति,** "ईक्षि दर्शने" इति 'ईक्ष्'धातोर्निरा निसा वा योगे तेप्रत्यये शवि रुत्वे च—**निरीक्षते,** "तपं धूप संतापे" इति 'तप्'-धातोर्निसा योगे तिवि शवि "निसस्तपेऽनासेवायाम्" [ २. ३. ३५. ] इति सस्य षत्वे तस्य टत्वे च—**निष्टपति** सुवर्णं, सकृदग्निं स्पर्शयतीत्यर्थः । एषु प्रपचत्यादिषु पाकादयोऽर्थाः प्रादिना प्रकर्षादिरूपेण विशेष्यन्ते ॥ ३ ॥

अथ चतुर्थं प्रकारमुदाहर्तुमाह-**अनर्थको यथा-प्रलम्बते** इत्यादि-"लबुङ् अवस्रंसने च" चकाराच्छब्दे, उदित्त्वान्नागमे

नस्य मत्वे 'लम्ब्' धातोः प्रेण योगे तेप्रत्यये शवि च-**प्रलम्बते,** "अर्थणि उपयाचने" इति 'अर्थ्'धातोः प्रेण योगे णिचि तेप्रत्यये शवि गुणेऽयादेशे सन्धौ च-**प्रार्थयते,** "जि ज्रि अभिभवे" इति 'जि'धातोर्विना योगे "परा-वेर्जेः" [ ३. ३. २८. ] इत्यात्मनेपदे तेप्रत्यये शवि गुणेऽयादेशे च-**विजयते,** "ज्ञांश् अवबोधने" इति 'ज्ञा'धातोर्विना योगे तिवि श्नायां "जा ज्ञा-जनो०" [ ४. २. १०४. ] इति जादेशे च-**विजानाति,** "मील० निमेषणे" निमेषणं संकोचः, इति 'मील्'धातोर्निना योगे तिवि शवि च-**निमीलति,** "खजु गतिवैकल्ये" उदित्त्वान्नागमे नस्य च ञत्वे 'खञ्'धातोर्निना योगे तिवि शवि च-**निखञ्जति,** "रञ्जीं रागे" अस्य निना योगे तिवि शवि "अकट्घिनोश्च०" [ ४. २. ५०. ] इति नकारलोपे च-**निरजति,** अत्र नकारदर्शनेऽपि "नकारजावनुस्वार-पञ्चमौ धुटि धातुषु" इति नकारस्य नत्वमिति तस्य लोपः । एषु सप्तस्वप्युदाहरणेषु धातुपाठपठितार्थमात्रबोधात् प्रादीनामनधिकार्थबोधकत्वरूपमनर्थकत्वमवसेयमिति ॥ ४ ॥

नन्वेवं प्रादीनां चतुर्धा विभजनं यदुपवर्णितं तन्न चारु साङ्कर्यात्, तथाहि-द्वितीयप्रकारे प्रदर्शितस्य 'अधीते' इत्यादेश्चतुर्थप्रकारे समवतारात्, यतस्तत्रोपवर्णितस्याधिकार्थानवबोधकत्वरूपानर्थक्यस्यात्रापि सद्भावः, एवं द्वितीयप्रकारे दर्शितस्य 'आचामति' इत्यस्यादनभिन्नत्वे प्रथमप्रकारेऽदनविशेषत्वे चाचमनस्य तृतीयप्रकारे समवतारादिति चेत्? उच्यते-स्वविरहे यमर्थं धातुरभिदधाति तमर्थं प्रबाध्य विपरीतमर्थमर्थान्तरं वा यो द्योतयेत् तत्र प्रथमप्रकारः, स्वसन्निधानेऽर्थकृतवैलक्षण्यं भवतु वा न वा, किन्तु येन सह धातोर्नित्यं योगस्तत्र द्वितीयप्रकारः, स्वविरहे योऽर्थस्तमेव यो विशेषयति तत्र तृतीयप्रकारः, स्वविरहे स्वसन्निधाने च यत्रैक एवार्थस्तत्र चतुर्थः प्रकारः, इत्येवं विभागतात्पर्यान्न कश्चिद् दोषः, 'अधीते' इत्यादौ 'आचामति' इत्यादौ चाधिना आङा रहितस्य प्रयोग एव नास्तीति का तत्रार्थचर्चा ? । 'प्रादिः' इत्येकवचनेन प्रत्येकमेव प्रादयो धातोः प्राक् प्रयुज्यमाना उपसर्गसंज्ञा भवन्तीत्यर्थस्यावगतौ प्रतिप्रयोगमेक एव प्रादिः प्रयुज्येतेत्याशङ्कापनोदाय स्पष्टयति-**एषां चा पञ्चभ्यः प्रायेण प्रयोगो भवतीति**-एकमारभ्य पञ्चसंख्यापर्यन्तं यथायथमर्थावबोधाय प्रयोगो भवतीत्यर्थः । तत्र निमित्तं किमित्याह-**प्रायेणे**ति-बाहुल्येन तथाप्रयोगाणामुपलभ्यमानत्वमेव तत्र हेतुः, नान्यत् किञ्चिदिह विनिगमकमिति भावः । प्रयुज्यमानशब्दानामेव व्याकरणेनान्वाख्यानं विधीयते, दृश्यते च तत्र तत्रोपसर्गाणां तथाप्रयोगो बाहुल्येनेति तदेव स्वीक्रियत इति तत्त्वम् । तदेवोदाहरति-**आहरतीत्यादिना** । "हृंग् हरणे" अस्य तिवि शवि गुणे च-हरति, आङा योगे **त्वाहरति,** अत्रैकः प्रादिः, **व्याहरती**त्यत्र द्वौ, **अभिव्याहरतीत्यत्र** त्रयः, **समभिव्याहरतीत्यत्र** चत्वारः, **प्रसमभिव्याहरतीत्यत्र** च पञ्चेति । भवति चोपसर्गसंख्यावृद्धावर्थावगतावपि भेद इति नानर्थक्यमुपसर्गान्तराणाम् । तथा 'न व्यवहितः' इत्यत्र व्यवहितपदं प्राधन्यव्यवधानपरं, विजातीयस्यैव व्यवधायकत्वदर्शनादिति ह्यादिषु धात्वव्यवहितप्रथमादिना द्वितीयादीनां व्यवधानेऽपि 'न व्यवहितः' इति नियमश्चारितार्थ्यं भजते ।

अथ धातूपसर्गसम्बन्धस्य प्रकरणात् तत्र धातोः पूर्वमुपसर्गयोग उत क्रियानिर्वर्तककारकवाचिप्रत्ययेन तन्निमित्तेन च कार्येण योग इति सन्देहे निश्चेतुं प्रक्रमते-**अथ किं धातुरि**त्यादिना । **क्रियाविशेषकेण** धातुना सामान्येनाभिहितायाः क्रियाया विशिष्टरूपस्याधायकेन, उपसर्गेण, **उत** अथवा, **साधनाभिधायिना** साधनं-कर्त्रादिकारकं, तदभिधायिना-तद्वाचकेन, प्रत्ययेन । अत्र मतान्तरमाह-**साधनेनेति केचिदि**ति-पूर्वं धातुः साधनेन युज्यते इति केचिदाहुरिति शेषः । तत्र हेतुमाह-**साधनं हि क्रियां निर्वर्तयती**त्यादि । अयमाशयः-उपसर्गो हि धात्वर्थरूपक्रियाया विशेषकः, क्रिया च साध्यस्वरूपा साधनेन निर्वर्त्यते, अनिर्वृत्तस्वरूपायाश्च तस्याः पदार्थान्तरेणान्वयेऽयोग्यत्वात् । तदाह-**अभिनिर्वृत्तस्य चे**ति । च पुनः, **अभिनिर्वृत्तस्य** साधनसम्बन्धेन लब्धस्वरूपस्य क्रियारूपस्यार्थस्य, **विशेषः** प्रकर्षादिरूपः, **उपसर्गेण** प्रादिना, **वक्तुं** बोधयितुम्, शक्यः, असतो विशेषयितुमशक्यत्वादिति भावः । एतन्मतं प्रतिवक्तुमाह-**तदयुक्तमि**ति । कुत इत्याह-**यो ही**त्यादि । **हि** यतः, यो धातूपसर्गयोः, **अभिसम्बन्धः** विशेष्यविशेषणभावविशेषरूपः, तम्, **अभ्यन्तरीकृत्य** [ पूर्वं ] स्वबोध्यं कृत्वा, धातुः, **साधनेन युज्यते** साधनेन-कर्त्रादिना तद्बोधकप्रत्ययेन तन्निमित्तकेन कार्येण च सम्बध्यते, कुत इत्याह-**यस्माद् विशिष्टैवे**ति-उपसर्गद्योत्यार्थविशेषितैव क्रिया साधनेन साध्यते, हि यतः, **साधनाल्लब्धस्वरूपा** साधनसम्बन्धप्रयोज्यस्वरूपलाभवती सती, **अन्यतः** उपसर्गात्, **विशेषम्** उपसर्गसम्बन्धप्रयोज्यं विशेषं, न लभते इत्यन्वयः । निगमयति-**तस्मादि**ति ।

एतादृशसिद्धान्तफलमाह—**समस्करोदि**त्यादिना, अयं भावः-सम्पूर्वस्य कृधातोः स्सटि ह्यस्तन्या दिवि उ-गुणा-ऽडागमादौ कृते -**समस्करोदि**ति रूपं भवति, अत्र पूर्वं धातोरुपसर्गसम्बन्धेन पूर्वोपस्थिततयाऽन्तरङ्गत्वात् "सम्परेः कृगः स्सट्" [ ४. ४. ९१. ] इति प्रथमं स्सटि पश्चात् 'स्कृ' इत्यस्यादावटि समस्करोदिति भवति, पूर्वं साधनसम्बन्धे तु तत्कार्यस्याटोऽन्तरङ्गत्वेन पूर्वमटि ततः 'अकृ' इत्यस्य स्सटि संसकरोदित्यनिष्टं

रूपं स्यात्। एवं स्सटि परोक्षाणव्प्रत्ययादौ च कृते—**संचस्कार** इति रूपं भवति, अत्र पूर्वं स्सटि 'स्कृ' इत्यस्य द्विर्वचने 'स्कृस्कृ' इत्यवस्थायां पूर्वस्य सकारस्य लुकि ऋकारस्याकारे ककारस्य चकारे, द्वितीयस्य ऋकारस्यारादेशे—'संचस्कार' इति रूपं भवति, अत्रापि पूर्वं साधनसम्बन्धे प्रागेव द्वित्वे 'कृकृ' इति जाते पश्चात् स्सटि 'संश्चकार' इत्याद्यनिष्टं रूपमापद्येतेति।

न केवलं स्सटि 'समस्करोत्, संचस्कार' इति प्रयोगसिद्ध्यर्थमेव धातूपसर्गयोः पूर्वं सम्बन्धः स्वीक्रियते, किन्तु तत्र कारणान्तरमप्यस्तीत्याह—**अतश्चैवमि**ति। **च** अयं चशब्दो हेत्वन्तरं समुच्चिनोति, तदेवाह—**अतः** अनन्तरं वक्ष्यमाणतया हृदि वर्तमानाद् 'उपास्यते गुरुः' इत्यस्यान्यथानुपपद्यमानत्वरूपहेतोः, **एवं** पूर्वं धातुरुपसर्गेण युज्यते इति स्वीकारः, क्व कथं चान्यथानुपपद्यमानत्वमित्याह—**पूर्वं हि धातोरि**त्यादि। अयमाशयः–धातवो द्विविधाः–सकर्मका अकर्मकाश्च, अकर्मका उपसर्गवशात् सकर्मका अपि भवन्ति, यथा–भवति, अनुभवतीति, सकर्मकाद्धातोः कर्मणि प्रयोगो भवति [ कृत्य-क्त-खलर्था आत्मनेपदं च कर्मणि भवतीत्यर्थः ], यथा–पच्यते ओदनः, अकर्मकाद्धातोस्तु भावे प्रयोगो भवति [ कृत्य-क्त-खलर्था आत्मनेपदं च भावे भवतीत्यर्थः ], यथा–चैत्रेण स्थीयते, प्रस्तुते–"आसिक् उपवेशने" इत्यकर्मक 'आस्' धातुः, अकर्मकत्वाच्च भावे प्रयोगो भवति, यथा–'आस्यते गुरुणा' इति, अयमुपसर्गवशात् सकर्मकोऽपि भवति, यथा–'गुरुमुपास्ते' इति, उपसर्गमन्तरा–उपसर्गसम्बन्धं विना तु अकर्मक एव, अथोपसर्गात् प्रागेव धातोः साधनेन सम्बन्धेऽकर्मकत्वाद् भावे एव प्रयोगः स्यात्, न तु कर्मणि, तथा च 'उपास्यते गुरुः' इति कर्मणि प्रयोगोऽनुपपन्नः स्यात्, तदुपपत्तये पूर्वमुपसर्गेण सह सम्बन्धः स्वीकार्यः, तथा च पूर्वमुपेन सम्बन्धात् सेवार्थत्वेन 'आस्' धातुः सकर्मको भवति, भवति च ततः कर्मणि प्रयोगः।

पुनराशङ्क्य समाधत्ते—**न चैतद् वाच्यमि**त्यादिना, अयमाशयः–क्रिया हि न स्वतः स्वरूपं लभते, अपि तु साधनसम्बन्धेनैव, साधनविशेषसम्बन्धकृत एव कर्तृकालसंज्ञादिविशेषः क्रियास्वरूपं प्रकाशयति, ततश्च शब्दान्तरसम्बन्धयोग्यतां लभत इति पूर्वमुपसर्गसम्बन्धस्वीकारोऽनुचित इति शङ्काशयः, न च वाच्यमिति समाधानांशः, तत्र हेतूपदर्शनाय हरिकारिकाद्वयमाह—**बीजकालेषु सम्बद्धा** इत्यादि—

**बीजकालेषु** धरणीबीजसंयोगदशायाम्, **सम्बद्धाः** बीजसम्बन्धमुपगताः, **लाक्षारसादयः** जतुरसप्रभृतयो बीजसेकविशेषाः, **फलानां** वृक्षपूर्णतानन्तरमुत्पत्स्यमानानां तत्तद्वृक्षफलानां, **वर्णादिपरिणामेन** तत्तद्वर्ण[रूप]रसविशेषपरिणमनद्वारा, यथा, **उपकुर्वते** उपकारं जनयन्ति, तथा, **बुद्धिस्थादपि** बुद्धिविषयीकृतादपि, **सम्बन्धाद्** धात्वर्थोपसर्गार्थसम्बन्धात्, **अभिसम्बन्धात्** इति प्रस्तुतपाठादरे तु बुद्धिविषयीकृताद् धातूपसर्गार्थयोर्विशेष्यविशेषणभावविशेषरूपात् सम्बन्धादित्यर्थः, **अभ्यन्तरीकृतः** धातुना स्वजन्यबोधविषयतयान्तःकृतः, **भेदः** उपसर्गयोत्यार्थकृतो विशेषः, **पदकाले** उपसर्गसम्बद्धधातुप्रत्ययसमभिव्याहाररूपप्रयोगकाले, **प्रकाश्यते** तेन पदेन श्रोतुर्बुद्धिविषयतां नीयते। बीजकाले फलानां स्वाभाविकरूपरसादिषु विशेषं प्रादुर्भावयितुं लाक्षारसादिना सेकद्रव्येण रूपादिपरिवृत्तिप्रयोजकेन बीजानां सेकेनाग्रे तत्र भाविफलेषु रूपरसादिविशेषो जायते इति लोकप्रसिद्धिः। तत्र यथा बीजकालकृतेन लाक्षारसादिसेकेन फलकालेऽनुपस्थितेनापि पूर्वकालिकसम्बन्धेन जायमाना वर्णरसादिवत्ता फलकाले प्रकटीभवति, तथा बुद्धावेव कृतेनोपसर्गार्थसम्बन्धेन जायमान उपसर्गार्थसम्बन्धकृतो विशेषः सोपसर्गप्रयोगकाले प्रकटीभवति। तथा च पूर्वमुपसर्गयोग इत्यस्य धातोः पूर्वमुपसर्गयोगस्तत उपसर्गसंज्ञकप्रादियोगात् पूर्वं साधनयोगः, तत उपसर्गप्रयोग इत्यडागमादीनामुपसर्गात् परत्वं, स्सडागमादीनां चोपसर्गसम्बन्धेन जायमानानामडागमादितः पूर्वप्रवृत्तिकत्वं सिद्धयतीति न काचिदनुपपत्तिः। अयमाशयः—उपसर्गा वस्तुतो धात्ववयवभूता एव, केवलमडागमादिव्यवस्थार्थं तेषां पार्थक्यं कल्प्यते, ततश्च धातूपसर्गयोः कार्यस्यान्तरङ्गत्वं सिध्यतीति तादृशं कार्यं सर्वकार्येभ्यः पूर्वमेव क्रियते।

इत्थं पूर्वमुपसर्गसम्बन्धकृतस्य कार्यस्य प्रवृत्तौ साधितायां शङ्कते—**यद्येवमि**त्यादिना–"इण्क् गतौ" अस्योपेन योगे "इङ्क् अध्ययने" अस्याधिना योगे "प्राक्काले" [ ५. ४. ४७. ] इति क्त्वा, "धातोः पूजा०" [ ३. १. १. ] इत्युपसर्गसंज्ञा, "ऊर्याद्य०" [ ३. १. २. ] इति गतिसंज्ञा, "गति-कन्य०" [ ३. १. ४२. ] इति समासः, "अनञः क्त्वो यप्" [ ३. २. १५४. ] इति यबादेशः, "ह्रस्वस्य तः०" [ ४. ४. ११३. ] इति तकारेऽन्तागमे, प्रथमे "अवर्णस्ये०" [ २. १. ६. ] इत्येकारे, द्वितीये "समानानां तेन दीर्घः" [ २. १. १. ] इतीकारे च–**उपेत्य, अधीत्य** इति भवति। अत्र पूर्वोक्तरीत्योपसर्गसम्बन्धस्यार्थद्वारा पूर्वमेव बुद्धिस्थीकृतत्वेन तन्निमित्तककार्यस्यान्तरङ्गत्वेन 'उप इ य, अधि इ य' इत्यवस्थायां प्रथमे एकारस्य द्वितीये ईकारस्य चान्तरङ्गत्वात् पूर्वं प्रवृत्तौ ह्रस्वाभावात् तोऽन्तो न स्यादिति शङ्काशयः। शङ्कामङ्गीकृत्योत्तरयति–**सत्यम्–*असिद्धं बहिरङ्गमन्तरङ्गे*इती**ति–पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन एकारस्य ईकारस्य च बहिरङ्गत्वम्, तागमस्य त्वेकपदसम्बन्धिवर्णद्वयापेक्षत्वेनान्तरङ्गत्वमिति तागमे विधित्सिते एकारेकारयोरसिद्धत्वादिकारधिया ह्रस्वत्वात् तागमो भविष्यतीत्यर्थः।

धातूपसर्गकार्यप्रसङ्गादन्यत्रापि व्यवस्थामाह–**प्रेजुरि**त्यादिना, "यजीं देवपूजासङ्गतिकरणदानेषु" इति 'यज्'धातोः परोक्षायाः प्रथमत्रिकबहुवचने उसि प्रेण योगे "यजादिवचेः किति" [४. १. ७९.] इति य्वृति–यकारस्येकारे 'इज्' इति जाते "द्विर्धातुः०" [४. १. १.] इति द्विर्भावे 'इज् इज्' इति जाते "व्यञ्जनस्यानादेर्लुक्" [४. १. ४४.] इति प्रथमजकारलोपे 'प्र इइज् उस्' इति स्थितौ "समानानां तेन दीर्घः" [१. २. १.] इति इकारद्वयस्य दीर्घः प्राप्नोति, अकारेकारयोः "अवर्णस्येवर्णा०" [१. २. ६.] इति एकारश्च प्राप्नोति, तत्र प्रथममेकपदसम्बन्धिवर्णद्वयाश्रितत्वेन दीर्घैकारस्यान्तरङ्गत्वात् पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन कृताकृतप्रसङ्गितया नित्यस्याप्येकारस्य बहिरङ्गत्वाद् *नित्यादन्तरङ्गं बलीयः* इति नित्य ईकारो भवति, पश्चात् त्वकारेकारयोरेकारे–**प्रेजुः**, एवं "टुवपीं बीजसन्ताने" इति 'वप्'धातोः प्रेण योगे उसि य्वृति–वकारस्य उकारे द्विर्भावेऽनादिव्यञ्जनस्यादेर्वकारलोपे उकारद्वयस्य ऊकारे अकारौकारयोरोकारे च–**प्रोपुः** इति भवति, शेषं प्राग्वद् वेदितव्यमिति । धातूपसर्गयोः कार्यमन्तरङ्गमिति मते समाधानान्तरमाह–**यद्वे**त्यादिना । अयमाशयः— 'प्र इइज् उस्' इत्यवस्थायामेकारस्य 'प्र उउप् उस्' इत्यवस्थायामोकारस्य, समानदीर्घस्य [ईकारस्य ऊकारस्य च] चोभयत्र प्राप्तौ सत्यां 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति मतमाश्रित्य एकारे ओकारे तयोश्च क्रमेण अयादेशे अवादेशे च कृते "व्यञ्जनस्यानादे०" [४. १. ४४.] इति द्वित्वे पूर्वस्य सम्बन्धिनो व्यञ्जनस्य [यकारस्य वकारस्य च] लुकि सति पुनरपि प्रशब्दाकारस्य धातोरिकारस्य उकारस्य चाव्यवधानसिद्धौ एकारे ओकारे च कृते–'प्रेजुः प्रोपुः' इति रूपसिद्धिः सम्भवतीति न समानदीर्घत्वस्यान्तरङ्गत्वे आग्रहो विधेयः कथञ्चिदिष्टसिद्धेरेवोद्देश्यत्वात् । न चैकारस्य ओकारस्य च धातूपसर्गस्थाननिष्पन्नत्वेन धातुत्वाभावात् तत्स्थानीयस्यायादेशस्यावादेशस्य चावयवो यो यकारो यश्च वकारस्तयोर्धातुत्वाभावेन "व्यञ्जनस्यानादेर्लुक्" [४. १. ४४.] इत्यस्य प्राप्त्यभावात् कथं लुगिति वाच्यम्, *उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभाक्* इति न्यायेन एकारे ओकारे च धातुव्यपदेशस्य कर्तुं शक्यत्वात् ।

पूर्वं *यद्धातुसम्बद्धाः प्रादयस्तं प्रत्येवोपसर्गसंज्ञाः* इत्यर्थस्योक्तत्वेन सम्बद्धस्य धातोः स्थाने प्रत्ययस्य प्रयोगे तस्यैव धातुस्थानीयत्वात् तेनैव सहोपसर्गसम्बन्धः, ततः प्रागेव च तस्य प्रयोग उचित इत्याशयवान् शङ्कते–**ननु कर्तुं प्रकर्षेणेच्छती**त्यादिना । प्रपूर्वात् "डुकृंग् करणे" इति 'कृ'धातोः 'प्रकर्षेण कर्तुमिच्छति' इत्यर्थे "तुमर्हादिच्छायां०" [३. ४. २१.] इति सनि 'प्र+कृ+सन्' इति स्थिते "स्वर-हन्-गमोः०" [४. १. १०४.] इति ऋकारस्य दीर्घे "नामिनोऽनिट्" [४. ३. ३३.] इति सनः कित्त्वे "ऋतां क्ङितीर्" [४. ४. ११६.] इति ऋकारस्य इरादेशे "सन्यङश्च" [४. १. ३.] इति 'किर्' इत्यस्य द्विर्भावे आदेरकारस्य "व्यञ्जनस्याना०" [४. १. ४४.] इति लोपे "कङश्च्" [४. १. ४६.] इति पूर्वकस्य चादेशे "नाम्यन्तस्था०" [२. ३. १५.] इति सस्य षत्वे "भ्वादेर्नामिनो०" [२. १. ६३.] इति दीर्घत्वे च–**प्रचिकीर्षतीति** । अत्र प्रस्योपसर्गार्थस्य प्रकर्षस्येच्छया [इषिना] सम्बन्ध इति तत्स्थानीयात् सन्प्रत्ययात् प्रागेव प्रस्य प्रयोग उचित इति शङ्कितुराशयः । उत्तरयति–**नैवमि**ति । तत्र हेतुमाह–**तस्याधातुत्वादि**ति–सनो धातुत्वाभावाच्च तत्प्राक्त्वनियमः । एतदपि कुत इत्याह–**समुदायस्यैव धातुत्वादि**ति–'कृ+सन्' इति समुदायस्यैव पूर्वाचार्यैर्धातुत्वमाम्नातं न तु केवलस्य सनः इत्यर्थः, तत्रेदं बीजमाभाति–न हीच्छामात्रे सनो विधानं, किन्त्विच्छाविशेषे, विशेषता च प्रकृत्यर्थघटितत्वं, तदभिव्यक्तिश्च प्रकृतिघटितसमुदायाच्च तु केवलात् सन इति, धातुपाठपठितत्वमपि धातुसंज्ञाप्रयोजकमित्यस्य बीजतयोपन्यासेन प्रकृते समाधानेऽप्यनन्तरमुपदर्शयिष्यमाणेषु 'अतिहस्तयति' इत्यादिषु निर्वाहाभावादवश्यं गत्यन्तरस्यान्वेषणीयत्वात् । यद्वा विवेचनीयं बीजान्तरं सुधीभिरिति ।

प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वेन समुदायस्यैव धातुत्वमिति रीतेरनुसरणाद् वक्ष्यमाणप्रयोगेष्वपि समुदायादेव प्रागुपसर्गप्रयोगो न तु प्रत्ययात् प्रागित्याह–**एवं मनःशब्दादि**त्यादि–'मनस्'शब्दोऽत्र मनस्विनि वर्तते, यथा–भृशादिषु पठित ओजस् शब्दस्तद्वति तथा चामनस्वी, मनस्वी सुभवति दुर्भवति अभिभवतीति "च्व्यर्थे भृशादेः स्तोः" [३. ४. २९.] इति क्यङि सकारलोपे "दीर्घश्च्वियङ्यक्येषु" [४. ३. १०८.] इति दीर्घत्वे च–**सुमनायते, दुर्मनायते, अभिमनायते,** भृशादिषु न केवलः मनःशब्दः पठ्यते, किन्तु 'उन्मनस् सुमनस् दुर्मनस् अभिमनस्' इति सोपसर्गाः प्रकृतयः पठ्यन्ते, तेषामुपसर्गः प्रत्ययार्थविशेषणतयोपादीयते, प्रत्ययार्थविशेषणत्वेऽपि प्रकृतेरुपसर्गाणां प्राक् पाठस्ततो विधीयमाने प्रत्यये भवत्यर्थविशेषणमुपसर्गो यथा ज्ञायेत, प्रत्ययार्थेन तु सह निर्देशे सर्वप्रकृतिसाधारण्याच्चुद्दे भवत्यर्थे प्रत्ययो न स्यात्, अनेकोपसर्गावस्थितस्य च भवत्यर्थस्य सामान्यशब्दत्वात् क्यङन्ताद् विशेषात् प्रतीतिरित्युक्तार्थत्वेऽपि विशेषाभिव्यक्तयर्था उपसर्गाः प्रयुज्यन्ते, यथा–उत्पुच्छायते, परिपुच्छायते, विपुच्छायते, इति । प्रकृत्यर्थविशेषणत्वे तु–असुमनाः सुमना भवतीति सुमनायते, किन्तु तन्नात्रोपयोगि, मूले 'मनःशब्दात्' इति 'मनस्'-

शब्दस्य प्रकृतित्वेनोपादानादिति । हस्तिनाऽतिक्रामतीत्यतिक्रमार्थे सेनयाऽभियातीत्यभियानार्थे च "णिज् बहुलं नाम्नः कृगादिषु" [ ३. ४. ४२. ] इति णिचि "त्र्यन्त्यस्वरादेः" [ ७. ४. ४३. ] इत्यन्त्यस्वरादिभागलोपे 'अति हस्ति, अभि सेनि' इति धातुभ्यां तिवि शवि गुणेऽयादेशे, "स्था-सेनि०" [ २. ३. ४०. ] इति षत्वे च-**अतिहस्तयति, अभिषेणयति**, आदिशब्दात्-'उपश्लोकयति'प्रभृतीनां संग्रहः ।

इत्थं च धातुप्रकृतिकधातुस्थानीयप्रत्ययस्थले नामप्रकृतिकधातुस्थानीयप्रत्ययस्थले च समुदायस्यैव धातुत्वं न केवलस्य प्रत्ययस्येति समुदायादेवोपसर्गस्य प्राक् प्रयोग उपपद्यतेतरामिति ज्ञापितमित्यर्थः ।

प्रकृतसूत्रस्थानां 'धातोः प्राक् च' इति पदानामधिकारावधिं निरूपयति-**धातोरि**त्यादिना, "जीविको०" [ ३. १. १७. ] इति सूत्रं यावदधिकारः, नोत्तरत्र प्रयोजनाभावात् संज्ञान्तरविन्यासाच्च । प्रादिगणशब्दान् प्रत्येकं नामग्राहमाह-**प्र, परे**त्यादि, एषां व्युत्पत्तिरर्थाश्च "चादयोऽसत्त्वे" [ १. १. ३१. ] इति सूत्रस्य बृहन्न्यासे सम्यग् निरूपिताः सन्ति, प्रादीनां संग्राहकं पद्यम् —

> "प्र-परा-ऽप-समन्वव-निर्दुरभि-
> व्यधि-सूदति-नि-प्रति-पर्यपयः ।
> उप आङिति विंशतिरेष सखे !
> उपसर्गगणः कथितः कविभिः ॥ १ ॥

'प्रादिः' इत्येकवचननिर्देशेन नास्याकृतिगणतेति सूच्यते, किन्तु निरुक्तपद्ये 'निर्दुरभि' इति श्लिष्टनिर्देशेन 'निस् दुस्' इत्यनयोरपि संग्रहाद् द्वाविंशतिः प्रादीनां विज्ञेयेति ॥ १ ॥

## ऊर्याद्यनुकरण-च्वि-डाचश्च गतिः । ३ । १ । २ ॥

**त० प्र०**—ऊर्यादयः, अनुकरणानि, च्व्यन्ता डाजन्ताश्च शब्दा, उपसर्गाश्च धातोः संबन्धिनो गतिसंज्ञा भवन्ति, तस्माच्च धातोः प्रागेव प्रयुज्यन्ते । ऊर्यादि-ऊरीकृत्य, उररीकृत्य, ऊरीकृतम्, उररीकृतम् । अनुकरण-खाट्कृत्य, फूत्कृत्य; कथं खाडिति कृत्वा निरष्ठीवदिति? इतिशब्देन व्यवधानान्न भवति । च्व्यन्त-शुक्लीकृत्य, घटीकृत्य । डाजन्त-पटपटाकृत्य, सपत्राकृत्य । उपसर्ग-प्रकृत्य, पराकृत्य, प्रकृतम्, पराकृतम् । ऊरी उररी अङ्गीकरणे विस्तारे च, उररी अङ्गीकारे, एते त्रयो भृशार्थ-प्रशंसयोरपि । पाम्पी विध्वंस-माधुर्य-करुणविलापेषु । ताली ५ आताली वर्णोत्तमार्थयोः, धूसी कान्ति-काङ्क्षयोः, पाम्प्यादयो विस्तारेऽपि । शकला, संशकला, ध्वंसकला, १०, भ्रंशकला, आलम्बी, केवाशी, शैवाली, पार्दाली १५, मस्मसा, मसमसा; एते हिंसायाम्, आद्याश्चत्वारः परिभवेऽपि, ततः परे चत्वारश्चाविष्कारेऽपि, अन्त्यौ च द्वौ चूर्ण-संवरणयोरपि, पार्दाली शब्दार्थेऽपि, मस्मसा मसमसाऽनुकरणेऽपि, केचित्तु मस्मसेत्यत्र ऋकारौ निपात्य मृस्मृसेति पठन्ति; केचिदालम्बीस्थाने आलोष्ठीति पठन्ति । गुलुगुधा क्रीडापीडयोः, गुलूगुधेत्यन्ये मन्यन्ते । सजूः सहार्थे । फलू २०, फली, विक्ली, आक्ली; एते विकारे, आद्यौ क्रियासंपत्ति-कर्मसिद्ध्य-कण्टकेष्वपि, अन्त्यौ तु विचार-विभागयोरपि । श्रौषट् वषट् वौषट् स्वाहा २५ स्वधा देवतासंप्रदान-दानमात्रयोः, वषट् पूजायामपि, स्वधा तृप्ति-प्रीति-प्रत्यभिवादनेष्वपि । श्रत् श्रद्धाने शीघ्रे च । प्रादुस् आविस् प्राकाश्ये ३० । पशू केवाली हिंसायाम् । वेताली विस्तारे ३३ । केचित्तु धूली-वर्षाली-पाम्पाली-विचालीशब्दानप्यधीयते; इत्यूर्यादयः । एषां च्वि-डाच्साहचर्यात् कृ-भ्वस्तिभिरेव योगे गतिसंज्ञा, अतश्च दधाति-करोतिभ्याम् । प्रादुराविःशब्दौ कृयोगे विकल्पार्थं साक्षादादावपि पठ्येते । गतिप्रदेशाः-"गतिः" [ १. १. ३६. ] इत्यादयः ॥ २ ॥

**श० म० न्यासानु०-ऊर्याद्यनुकरण०** । 'ऊरी' इत्ययमादिर्येषां ते ऊर्यादयः, 'ऊरी'शब्दमादिं कृत्वा पठितो यो गणस्तद्गताः शब्दा इति भावः, ऊर्यादयश्च अनुकरणानि च ऊर्याद्यनुकरणानि, अल्पस्वरत्वाद् ऊर्यादिशब्दस्य प्राग् निपातः, च्विश्च डाच् च च्वि-डाचौ, इदन्तत्वात् 'च्वि'-शब्दस्य प्राग् निपातः, ऊर्याद्यनुकरणानि च च्वि-डाचौ च-**ऊर्याद्यनुकरण-च्वि-डाचः**, इति द्वन्द्वगर्भो द्वन्द्वः, आद्यं प्रकृतियुगलम्, अन्त्यं च प्रत्यययुगलम्, तत्र प्रकृतेः प्राधान्यविवक्षयार्च्यत्वात् "लघ्व-क्षरा-ऽसखीदुत्-स्वराद्यल्पस्वरा-र्च्यमेकम्" [ ३. १. १६०. ] इति प्रकृतियुगलस्य प्राग् निपातः; ऊर्यादयश्च अनुकरणानि च च्विश्च डाच् चेत्येकस्यैव द्वन्द्वस्याश्रयणे चाल्पस्वरत्वाच्चेः प्राग् निपातः स्यात्, प्रकृतेः प्राधान्यविवक्षयार्च्यत्वादेकस्याः प्राप्तिप्राप्तेऽप्यन्येषां विपर्ययेण निपातः प्रसज्येत । बहुवचनं प्राच्यलक्ष्यानुसारेणान्येषामूर्यादिगणप्रवेशार्थम् ।

सूत्रार्थं व्याचष्टे—**ऊर्यादय** इत्यादिना । **ऊर्यादयः** 'ऊरी' इत्ययं शब्द आदिर्येषां ते ऊर्यादयः, 'ऊरी'शब्दमादिं कृत्वा पठितो यो गणस्तद्गताः शब्दा इत्यर्थः । **अनुकरणानि** कृतानुकृतानि, येन पूर्वाभिव्यक्तः शब्दो व्यक्तोऽव्यक्तो वा 'सोऽयम्' इत्यभेदोपचारेण कुतश्चित् सादृश्यादनुक्रियते तदनुकरणं, तानि तथा । च्वि-डाचौ प्रत्ययौ, तौ चाविनाभावित्वात् प्रकृतिमाक्षिपतः, तत्र "प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इति तदन्तता विज्ञायते, प्रत्ययमात्रस्य च न धातुयोगः सम्भ-

वतीत्याह—**ऊर्यन्ता डाजन्ताश्च शब्दाः** इति–यद्यपि *संज्ञाविधौ प्रत्ययग्रहणे न तदन्तग्रहणम्* इति न्यायेनेह तदन्तविधिर्न भवितुमर्हति, तथापि केवलयोस्तयोर्धातुसम्बन्धासम्भवात् सामर्थ्यात् तदन्तविधिः । 'डाच्' इति चकारानुबन्धनिर्देशात् *तदनुबन्धग्रहणे नातदनुबन्धस्य* इति न्यायेन "ऋदुशनस्पुरु०" [ १. ८. ८४. ] इति विहितडान्तस्य न ग्रहणमिति 'पिता कृत्वा' इत्यादौ गतिसंज्ञाविरहेण समासाभावात् क्त्वो यबादेशो न भवति । 'डाचश्च' इति द्वितीयचकारात् पूजार्थस्वति-गतार्थाधिपर्यतिक्रमार्थातिवर्जः प्रादिरनुकृष्यते, स चोपसर्गसंज्ञार्ह इत्याह—**उपसर्गाश्चे**ति । 'धातोः' इति 'प्राक् च' इति चाधिकारो गतिसंज्ञा यावदिति पूर्वसूत्रेऽभिहितमिति 'धातोः प्राक् च' इति पदत्रयमनुवर्तते, **गतिरि**ति सूत्रस्थं विधेयपदम्, एतन्निष्पन्नमर्थमाह—**धातोः सम्बन्धिनो गतिसंज्ञा भवन्ति, तस्माच्च धातोः प्रागेव प्रयुज्यन्ते** इति । **धातोः सम्बन्धिनः** इति सर्वेषां विशेषणं, सर्वेष्वेतेषु धातुसम्बन्धित्वस्य सम्भवेन क्वचिद् व्यभिचारेण वा "सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवद्" इति लौकिकन्यायेन सर्वत्र तदन्वये बाधकाभावात् । **च** अयं चशब्दोऽर्थान्तरं समुच्चिनोति, तथा च न केवलं गतिसंज्ञका एव, अपि तु—**तस्मात्** यस्मादेते धातुसम्बन्धिनः प्राक् प्रयुक्तत्वेन ज्ञाताश्च तस्मात् कारणात्, यद्वा यस्य धातोः सम्बन्धिनस्ते तस्मादेव **धातोः, प्रागेव** प्रयुज्यन्ते च, एवकारेण च परतो व्यवहितस्य च प्रयोगस्य व्यवच्छेदः ।

निष्पन्ने सूत्रार्थे उदाहरणावसर इत्युदाहर्तुमवतारयति–**ऊर्यादी**ति–ऊर्यादय उदाहरणीया इत्यर्थः । उदाहरति–**ऊरीकृत्य, उररीकृत्य, ऊरीकृतम्, उररीकृतमिति**–"डुकृंग् करणे" अतः पूर्वमूरीकरणं पूर्वमुररीकरणमिति "प्राक्काले" [ ५. ४. ४७. ] इति क्त्वा, अनेन 'ऊरी उररी' इत्येतयोर्गतिसंज्ञा "गति०" [ ३. १. ४२ ] इति समासः "अनञः क्त्वो यप्" [ ३. २. १५४. ] इति क्त्वाया 'यप्' इत्यादेशः, पकारश्चेत्, पित्त्वाच्च "ह्रस्वस्य तः०" [ ४. ४. ११३. ] इति तागमः, एवं सति चाद्यं रूपद्वयं भवति; ऊरीक्रियते स्म उररीक्रियते स्मेति कर्मणि क्तेऽनेन गतिसंज्ञायां समासे चान्त्यरूपद्वयं, स्वीकृत्य स्वीकृतमिति च तयोरर्थः ।

अनुकरणमुदाहर्तुमवतारयति–**अनुकरणे**ति–उदाहरणप्रसङ्गादनुकरणमुदाहरणीयमित्यर्थः । उदाहरति–**खाट्कृत्य, पूत्कृत्य,** इति–'खाट्' इति मूर्धन्यान्तोऽनुकरणशब्दोऽव्युत्पन्नः, एवं 'पूत्' शब्दोऽप्यव्युत्पन्नः, अत्र गतिसंज्ञया समासे क्त्वाया यबादेशे तागमः, अर्थश्च–'खाट्' इत्यनुकरणं कृत्वा, 'पूत्' इत्यनुकरणं कृत्वेति । यद्वा कथञ्चिदित्थं व्युत्पत्तिः–"खट काङ्क्षे" अस्य ण्यन्तस्य क्विपि 'खाट्' इति, डान्तत्वे तु–"खैं खदने" अतो बाहुलकादौणादिकेऽड्प्रत्यये 'खाड्' इति, "पां पाने" अतो बाहुलकादौणादिके डिति उत्प्रत्यये पृषोदरादित्वाद् दीर्घत्वे च 'पूत्' इति, क्वचित् 'पूत्' स्थाने 'फूत्' इत्यपि पाठः, स च "फक्क नीचैर्गतौ" इत्यनेन समर्थनीयः । एतत्स्थाने शाकटायनवृत्तौ "खात्कृत्य, फट्कृत्य" इति पाठः, व्युत्पादयति च प्रभाचन्द्रः–'खाद्' इति–"खै खदने" "पटत्खडदादयोऽनुकरणाः" [ उणादि. ] इत्यत्, "फक्क नीचैर्गतौ" अतः "उणादयो बहुलम्" इति डिदट् प्रत्यय इति । **कथं खाडिति कृत्वा निरष्ठीवदि**ति–शङ्कितुरयमाशयः–अत्र कृञो योगात् 'खाड्' इत्यनुकरणस्य गतिसंज्ञया भवितव्यम्, सत्यां च गतिसंज्ञायां प्राक्त्वनियमो नित्यसमासो यबादेशश्च प्राप्नोतीति 'खाट्कृत्य' इत्येव भवितव्यमिति 'खाडिति कृत्वा निरष्ठीवत्' इति प्रयोगोऽसाधुः प्रसज्येत, अतोऽत्रानुकरणस्यानितिपरस्यगतिसंज्ञार्थम् 'अनुकरणमनितिपरं गतिसंज्ञम्' इति वक्तव्यम्, तेन प्रस्तुतप्रयोगो गतिसंज्ञाऽभावात् सिध्येत् । नन्वेवमुच्यमाने 'श्रौषड् वौषडिति कृत्वा निरष्ठीवत्' इति प्रयोगो न सिध्यति, यतोऽत्र 'वौषड्' इति इतिपरं, न 'श्रौषड्' इति, पृथक् चेमे द्वे अनुकरणे, न संघातः, अतः 'श्रौषड्' इत्यस्य निषेधो नेति गतिसंज्ञायां 'वौषडिति श्रौषट्कृत्येति प्राप्नोति, न च सत्यव्यवहितसम्भवे व्यवहिते परशब्दो वर्तते; उच्यते–आकृत्याश्रयणात् सिद्धयति, यथा सम्पर्याहरतीत्याकृत्याश्रयणाद् बहूनामपि प्रादीनां प्राक्त्वम्, एवं बहूनामप्यनुकरणानामितिपरत्वमित्यनितिपरत्वमिति प्रवर्तते एवेति । समाधत्ते–**इतिशब्देन व्यवधानान्न भवती**ति–यत्राव्यवधानेनानुकरणस्य धातुयोगस्तत्रैव गतिसंज्ञा भवति, अत्र तु इतिशब्देन व्यवधानमिति गतिसंज्ञा न भवति, अतस्तद्वारणार्थं न 'अनितिपरमनुकरणम्' इति वक्तव्यम् । अयमाशयः–इहोपसर्गसंज्ञकगतिसंज्ञकशब्दयोर्विषये 'प्राक् च' इत्युक्तेः किं प्रयोगनियमार्थत्वमुत संज्ञानियमार्थत्वमिति पक्षद्वयं पतञ्जलिप्रभृतिभिश्चर्चितम्, तत्र पतञ्जलिना संज्ञानियमार्थत्वमेव सिद्धान्तितम्, संज्ञानियमश्चेत्थम्–एते धातोः प्राक् प्रयुज्यमाना एव गतिसंज्ञा उपसर्गसंज्ञा वा भवन्तीति । सर्वमेतत् "ते प्राग् धातोः" [ पा० १. १. ८१. ] इति सूत्रे भाष्यकैयटादिषु विशदीकृतम् । स्वमते च प्रस्तुते संज्ञानियमपक्षादरेणोक्तिः, न प्रयोगनियमपक्षेण, तथा च व्यवहितप्रयोगस्यापि क्वचित् साधुत्वं भवति, परं तत्र संज्ञा न स्यात्, अत एव–"वारुणीमदविशेषमथाविश्चक्षुषोऽभवदसाविव रागः ।" इति ( १० सर्गे १९ श्लोके ) शिशुपालवधे माघकविप्रयोगः संगच्छते ।

केचित् तु–'खाडिति कृत्वा निरष्ठीवत्' इत्यत्र धातुयोग एव नास्ति, अतो न गतिसंज्ञेति समादधते–'खाडिति कृत्वा

निरष्ठीवत्' इत्यत्र धातुना खाडित्यस्य न योगः, कस्य तर्हि? इतेरिति न भवति' इति, अस्यायं भावः—धातोरित्यधिकारादनुकरणस्य धातुना योगेऽयं विधिः, योगे हि तत् तस्येति भवति, योगश्च शब्दानामर्थद्वारकः, यदर्थो यदर्थेन युज्यते स तेन युक्त इत्युच्यते, न चेह 'खाड्' इत्यस्य धातुना योगोऽस्ति, अत्र हि 'खाड्' इत्यर्थाद् व्यावृत्तस्वरूपे तिष्ठन्ननर्थक एवेतिना परामृश्यते, यथा–'गवित्ययमाह' इति, अनुकार्याऽनुकरणयोर्भेदाश्रयणेन यत्रानुकार्येणार्थेनार्थवत्ता स्यात् तदा स्याद्युत्पत्तौ 'गौरित्ययमाह' इति स्यात्, अतोऽयमनर्थकः, तद्वदयमपि 'खाट्' शब्दः, इतेस्तु तत्परामर्शिनो धातुना योगो न तस्येति न भवति गतिसंज्ञाप्रसङ्गः, अर्थवत्तायामपि न सोऽर्थः 'खाट्'शब्देन धातुयोगेनोच्यते, केन तर्हि? इतिना, अतस्तदर्थमनितिपरमिति न वक्तव्यम् । यत् त्वेके प्राहुः–'इति खाट् कृत्वा निरष्ठीवत्' इत्येषोऽपि प्रयोगो दृश्यते, तत्र इतेः परस्यानुकरणस्य नेष्यते गतिसंज्ञा, तदर्थं यतितव्यमिति, तत्रान्ये प्राहुः–अनुकरणसम्बन्धेषु पुरस्तादुपचारत्वमितिकरणस्य नातिप्रसिद्धम्, यथाऽन्यत्र–इत्युपाध्यायः कथयति, इति वेदान्तिनो वदतीति । अन्येषां पुनरिष्टेरिष्यत एवात्र गतिसंज्ञेति खाट्कृत्येत्येव भवितव्यमिति ।

क्रमप्राप्तं च्विप्रत्ययान्तमुदाहर्तुमवतारयति–**च्व्यन्ते**ति–अथ च्व्यन्तमुदाहरणीयमित्यर्थः । उदाहरति–**शुक्लीकृत्य, घटीकृत्य,** इति–"शुच शोके" अतः शोचति मनोऽत्रेति "ऋज्यजि०" [उणा० ३८८.] इति किति रप्रत्यये लत्वे न्यङ्क्वादित्वात् कत्वे च–'शुक्ल' इति, यद्वा "शुक गतौ" अतः "शुक्र-शी०" [उणा० ४६३.] इति लप्रत्यये–'शुक्ल' इति, "घटिष् चेष्टायाम्" अतः "अच्" [५. १. ४९.] इत्यचि, "घटाघाट०" [उणा० १४१.] इति टप्रत्ययान्तनिपातने वा–'घट' इति, अशुक्लं शुक्लं करोति, अघटं घटं करोतीति "कृ-भ्वस्तिभ्यां कर्म-कर्तृभ्यां प्रागतत्तत्त्वे च्विः" [७. २. १२६.] इति च्विप्रत्यये "ईश्चाववर्णस्य" [४. ३. १११.] इत्यवर्णस्येकारे च्वेरप्रयोगित्वात् "अप्रयोगीत्" [१. १. ३७.] इति सर्वापहारे, गतिसमासे क्त्वायाः 'यप्' इत्यादेशेऽस्य पित्त्वाद् "ह्रस्वस्य तः पित्कृति" [४. ४. ११३.] इति तागमे च–शुक्लीकृत्य घटीकृत्येति ।

डाच्प्रत्ययान्तमुदाहर्तुमवतारयति–**डाजन्ते**ति । उदाहरति–**पटपटाकृत्य** इति–"अट पट० गतौ" अस्य "पटच्छपदादयोऽनुकरणाः" [उणा० ८८३.] इति कत्प्रत्ययान्तनिपातनात् 'पटत्' इति, अयं कस्यचिद् विशेषस्य श्रुतिप्रत्यासत्त्याऽनुकरणशब्दः, अनुकरणमपि हि साध्वेव कर्तव्यं, न यत्किञ्चित्, यथानक्षरमिति शिष्टाः स्मरन्ति । 'पटत्' इत्यनुकरणं कृत्वा इति "अव्यक्तानुकरण०" [७. २. १४५.] इति डाच्प्रत्यये प्रकृतेर्द्विर्भावे च 'पटत् पटत् डाच्' इति स्थितौ "डाच्यादौ" [७. २. १४९.] इति पूर्वतकारलोपे "डित्यन्त्यस्वरादेः" [२. १. ११४.] इत्यतो लोपे, डाचि डकारचकारयोरित्त्वात् 'आ' इति शेषे, अनेन गतिसंज्ञया गतिसमासे क्त्वो यबादेशे तागमे च–पटपटाकृत्य । ननु 'पटत्' इति व्यक्तवर्णमव्यक्तवर्णस्य कथमनुकरणम्? अनुकरणस्यानुकार्यसदृशत्वात्, अन्यथातिप्रसङ्गः स्यादिति चेत्? उच्यते–अव्यक्तवर्णस्यापि कथञ्चिद् ध्वनिमात्रसादृश्याद् व्यक्तवर्णमनुकरणं भवति । उक्तं डाजन्तस्यानुकरणप्रकृतिकमुदाहरणमथानुकरणप्रकृतिकमुदाहरणमाह–**सपत्राकृत्य** इति–"षहिं मर्षणे" अतः "अः" [उणा० २.] इत्यप्रत्यये–सह तुल्ययोग-विद्यमानयोः, "पत्लृ गतौ" अतः "हु-या-मा०" [उणादि० ४५१.] इति त्रप्रत्यये–पत्त्रं शरः, लक्ष्ये शराः पतन्त्यनेनेति व्युत्पत्त्या 'पत्रं शरपुङ्खगतो बर्हे' इति तत्त्वबोधनीकृत्, सह पत्त्रमनेनेति "एकार्थं चानेकं च" [३. १. २२.] इति बहुव्रीहिसमासे "सहस्य सोऽन्यार्थे" [३. २. १४३.] इति सहस्य सादेशे–सपत्रः, तं कृत्वेति "सपत्र-निष्पत्रा०" [७. २. १३८.] इति डाच्प्रत्ययेऽन्त्यस्वरादिलोपे प्रागवद् गतिसंज्ञा-समास-यबादेश-तागमेषु—सपत्राकृत्य, शरमस्य शरीरे प्रवेशयित्वेत्यर्थः ।

अथोपसर्गमुदाहर्तुमवतारयति–**उपसर्गे**ति–अथोपसर्गोदाहरणं दातव्यमित्यर्थः । उदाहरति–**प्रकृत्य, पराकृत्य, प्रकृतं पराकृतम्,** इति–"प्रांक् पूरणे" अतः "क्वचित्" [५. १. १७१.] इति डेऽन्त्यस्वरादिलोपे–'प्र' इति, "पॄश् पालनपूरणयोः" अतः "समिण्-निकषिभ्यामाः" [उणा० ५९८.] इति बहुलवचनादाप्रत्यये गुणे च–'परा' इति, प्रकृत्य–प्रस्तुत्य, पराकृत्य–निरस्य, अत्र प्रागवत् गतिसंज्ञा-समास-यबादेश-तादेशाः, प्रकृतं–प्रस्तुतम्, पराकृतं–निरस्तम्, अत्र क्ते परे गतिसंज्ञा समासश्च ।

अथोर्यादयश्च्व्यन्ता एव किं न विज्ञायन्ते, तथा सति सूत्रे ऊर्यादिग्रहणं गणपाठश्च न कर्तव्यो भवति, नैवं शक्यं, च्व्यर्थाभावादवर्णान्तानां चेत्वप्रसङ्गात् । तेभ्यश्च्व्यर्थप्रतीतिरेव, अयमत्रार्थो नात्र च्व्यर्थ इति प्रदर्शयितुं गणं सार्थं पठति–**ऊरी उररी अङ्गीकरणे विस्तारे चे**ति–अङ्गीकरणम्–अभ्युपगमः, एकत्रावस्थितस्य स्वावयवैरनियतदिग्देशव्याप्तिः–विस्तारः, ऊरीकृत्य उररीकृत्य–अङ्गीकृत्य विस्तारं कृत्वा वेत्यर्थः, **उरुरी अङ्गीकारे** उरुरीकृत्य–अङ्गीकृत्येत्यर्थः । **एते त्रयो भृशार्थप्रशंसयोरपि** 'ऊरी उररी उरुरी' इति त्रयः शब्दाः, अपिशब्दात् स्वोक्तार्थसमुच्चयः, ऊरीकृत्य–भृशं सुष्ठु वा कृत्वेत्यर्थः । एषामूर्यादीनां पाठादेव साधुत्वं, यतो गणशब्दानां गणपाठात् साधुत्वं विज्ञेयम् । यद्वा कथञ्चिदित्थं साधनीयाः–"अव रक्ष०

णादौ'' अतः क्विपि ''मव्यवि०'' [ ४. १. १०९. ] इत्यूटि-ऊः, ''रीङ्च् स्रवणे'' ऊवं रीयते इति **ऊरी,** ''ऋक् गतौ'' अतः ''अर्तेरुरादेशौ च'' [ उणा० ९६७. ] इत्यसि उरादेशे च-उरस्, उरो रातीति ''नृति-शृधि०'' [ उणा० ८४४. ] 5 इति किद्प्रत्ययो बाहुलकादतोऽपि, पूर्ववत् सकारलोपश्च-**उररी,** ''ऋक् गतौ'' अतः ''महत्युर्च'' [ उणा० ७३७. ] इति उप्रत्यये उरादेशे च-उरु, उरु रीयते इति-**उरुरी । पाम्पी विध्वंस-माधुर्य-करुणविलापेषु** इति-विध्वंसः-जन्याभावः, माधुर्य-मनस आह्लादजनको गुणविशेषः, स च यथायथं द्रव्यगतो 10 रसनेन्द्रियग्राह्यः, शब्दगतः श्रवणेन्द्रियग्राह्यः, गन्धगतो घ्राणेन्द्रियग्राह्य इत्यादिरीत्योन्नेयम्, इष्टवियोगजनितो रोदनशब्दः-करुणविलापः, पाम्पीकृत्य-विध्वंसं माधुर्यं करुणविलापं वा कृत्वेत्यर्थः, ''पा पाने'' अतः ''अर्ति-रि०'' [ उणा० ३३८. ] इति मप्रत्यये-'पाम' इति, ''पीङ्च् पाने'' पामं पीयते इति 15 क्विपि निपातनात् पूर्वपदान्तलोपे, यद्वा पामं पिबतीति क्विपि पाधातोराकारस्य ईकारे पूर्वपदान्तलोपे च-पाम्पी । **ताली आताली वर्णोत्तमार्थयोः** इति-वर्णे उत्तमार्थे च, तालीकृत्य आतालीकृत्य-वर्णमुत्तमं वा कृत्वेत्यर्थः, ''तॄ प्लवन-तरणयोः'' ''तलण् प्रतिष्ठायाम्'' अतः ''तॄ-स्तॄ०'' [ उणा० 20 ७११. ] इति बाहुलकाद् ईप्रत्यये लत्वे च-ताली, आङ्-पूर्वकस्य तु-आताली । **धूशी कान्ति-काङ्क्षयोः** इति कान्तिः-उज्ज्वलता, काङ्क्षा-अभिलाषः, धूशीकृत्य-कान्तिं काङ्क्षां वा कृत्वेत्यर्थः, ''धूग्ट् कम्पने'' अतः क्विपि धूः, तत्र शेते इति क्विपि-धूशी इति । **पाम्प्यादयो विस्तारे चेति-** 25 'पाम्पी, ताली, आताली, धूशी' इति चत्वारो विस्तारार्थेऽपि वर्तन्ते चात् पूर्वोक्तार्थेऽपि । **शकलेत्यादि**-शकलाकृत्य-हिंसित्वेत्यर्थः, ''शश प्लुतिगतौ'' प्लुतिभिर्गमने, उत्प्लुत्य गमने इत्यर्थः, ''खल संचये च'' चाच्चलने, आभ्यामचि-'शश, खल' इति, शशाः खला अस्यामिति-शकला, पृषोदरादिदर्शनादत एव 30 निपातनादेकस्य शस्य लोपे खस्य च कत्वे आपि च-**शकला,** हत्वा हत्वा शशा अस्यां संचीयन्ते इति शकला हिंसोच्यते । संगता शकला-**संशकला,** ध्वस्ता शकला-**ध्वंशकला,** पृषोदरादित्वादत एव पाठाद् वा पूर्वपदस्य ध्वंभावः । भ्रष्टा शकला-**भ्रंशकला,** अत्रापि पूर्ववत् पूर्वपदस्य भ्रंभावः । **आल-** 35 **म्बीति**-''लबुङ् अवस्रंसने च'' चकाराच्छब्दे, आङ्पूर्वादतः ''तॄ-स्तॄ०'' [ उणा० ७११. ] इति बहुवचनादीकारः । **केवा-शीति**-''चायृग् पूजा-निशामनयोः'' अस्य ''लटि-खटि०'' [ उणा० ५०५. ] इत्यादिना बाहुलकाद् वे किभावे च-केवः, ''शोंच् तक्षणे'' केवं श्यतीति ''तॄ-स्तॄ०'' [ उणा० ७११. ] 40 इत्यादिना बाहुलकात् क्विदीकारे पूर्वपदान्तस्य पृषोदरादित्वादा-

कारे-केवाशी, लघुन्यासकारस्तु ''केवृङ् सेवने'' इत्यस्याचि 'केव' इति प्राह । **शेवालीति**-''शीङ्क् स्वप्ने'' अतः ''शीङापो ह्रस्वश्च वा'' [ उणा० ५०६. ] इति वे ह्रस्वे च-शेवं धनम्, ''लींङ्च् श्लेषणे'' आङ्पूर्वादस्मात् शेवमालीयते इति क्विपि-शेवाली । **पार्दाली**ति-''पृंक् पालन-पूरणयोः'' अतो ण्यन्तात् क्विपि- 45 'पार' इति, ''डुदांग्क् दाने'' पारं ददातीति-पार्दाः, तं लीयते इति-पार्दाली । **मसमसा, मसमसा** इति-''मसैच् परिणामे'' अतः क्विपि 'मस्' इति, अचि च 'मस' इति, मसो मसा-मसमसा, मसस्य मसा-मसमसा इति । **एते** शकलादयो दश । **आद्याश्चत्वारः परिभवेऽपीति**-'शकला संशकला ध्वंसकला 50 भ्रंशकला' इति चत्वारः परिभवार्थे वर्तन्ते, अपिना हिंसार्थ-समुच्चयः, शकलाकृत्य-पराभूय हिंसित्वा वेत्यर्थः । **अन्त्यौ च द्वौ चूर्ण-संवरणयोरपीति**-चूर्णम्-अवयविनः सूक्ष्मावयवविभागः, संवरणम्-आच्छादनम्, 'मसमसा मसमसा' इति द्वयं चूर्णे संवरणेऽपिना हिंसायां च वर्तते, मसमसाकृत्य-चूर्णं 55 कृत्वा आच्छाद्य हिंसित्वा वेत्यर्थः । **पार्दाली शब्दार्थेऽपि** पूर्वं हिंसायामुक्तः पार्दालीशब्दः शब्दरूपेऽर्थेऽपि वर्तते, पार्दालीकृत्य-शब्दं कृत्वा हिंसित्वा वेत्यर्थः । **मसमसा मस-मसाऽनुकरणेऽपि** मसमसाकृत्य-मसमसा इत्यनुकरणं कृत्वा हिंसित्वा वेत्यर्थः । मतान्तरमाह—**केचित्त्वित्यादि** । 60 **गुलुगुधा क्रीडा-पीडयोरिति**-गुलुगुधाकृत्य-क्रीडां पीडां वा कृत्वेत्यर्थः, ''गुंत् पुरीषोत्सर्गे'' अतो विच्चि कुटादित्वाद् गुणाभावे च-गुः, ''लूग्श् छेदने'' गुवं लुनातीति क्विपि निपातनाद् ह्रस्वत्वे च-गुलुः, ''गुधश् रोषे'' गुलुं गुध्नातीति मूलविभुजादित्वात् के आपि च-गुलुगुधा । अत्र मतान्तरमाह—**गुलू-** 65 **गुधेत्यादि । सजूः सहार्थे** इति-सजूःकृत्य-सह कृत्वेत्यर्थः, ''जुषैति प्रीति-सेवनयोः'' सह जुषते इति क्विपि ''सजुषः'' [ २. १. ७३. ] इति निपातनात् सहस्य सादेशे दीर्घे च-सजूः, यद्वा ''जुर्वै हिंसायाम्'' अतः क्विपि-जूः, सह जुरा इति-सजूः, अर्थविशेषेऽव्ययं नान्यत्रवृत्ति । **फलू फली** इति-''फल 70 निष्पत्तौ'' इत्यतः ''कृषि०'' [ उणा० ८२९. ] इति बहुवचनादूप्रत्यये, यद्वा ''फलेः फेल् च'' [ उणा० ८३० ] इत्यूप्रत्यये बाहुलकात् फेलादेशाभावे च-'फलू' इति, एवं ''तॄ-स्तॄ०'' [ उणा० ७११. ] इति बहुवचनाद् बाहुलकाद् वा ईप्रत्यये-'फली' इति । **विक्ली आक्ली** इति-विपूर्वाद् आङ्पूर्वाच्च 75 ''डुक्रींग्श् द्रव्यविनिमये'' इत्यतः क्विपि निपातनात्कपिलकादिपाठाद् वा लत्वे-'विक्ली आक्ली' इति । **एते विकारे** इति-'फलू, फली, विक्ली, आक्ली' एते चत्वारो विकारार्थे वर्तन्ते, फलूकृत्य-विकारं कृत्वेत्यर्थः । **आद्यौ क्रियासम्पत्ति-कर्म-सिद्ध्यकण्टकेष्वपि** इति-'फलू फली' इति द्वयं क्रिया- 80

सम्पत्तौ–क्रियासम्पादने, कर्मसिद्धौ–पाठादिक्रियायाः फलप्राप्तौ, अकण्टके–कण्टकरहितदेशादौ, अपिना विकारे च वर्तते, फल्ल-कृत्य–क्रियां सम्पाद्य, कर्मसिद्धिं कृत्वा, कण्टकरहितदेशादिकं कृत्वा, विकारं कृत्वा वेत्यर्थः । **अन्त्यौ तु विचार-विभाग-**
5 **योरपि** इति–'विक्की आक्की' इति द्वयं विचारे विभागेऽपिना विकारे च वर्तते, विक्कीकृत्य आक्कीकृत्य–विचारं विभागं विकारं वा कृत्वेत्यर्थः, **श्रौषट् वषट् वौषट् स्वाहा स्वधा देवता-सम्प्रदानदानमात्रयोरि**ति–"देवतासम्प्रदानं–देवताभ्यः सम्प्रदीयमानं हविर्द्रव्यं, दानमात्रं–दानसामान्यम्, 'स्वधा
10 पितृभ्यः' इति श्रुतेः कथं स्वधा देवतासम्प्रदाने वर्तते ? उच्यते–पितॄणामपि देवतारूपत्वाददोषः" इति लघुन्यासः, श्रौषट्कृत्य–देवतासम्प्रदानं दानं वा कृत्वेत्यर्थः । "त्यज्यमानद्रव्योद्देश्यविशेषो देवता" इति मीमांसकपरिभाषायां विशेषपदप्रयोगात् 'दीनाय दीनारान् ददाति' इत्यादौ न दोष इति केचित्, तन्न–विशेष-
15 स्याननुगतत्वात्, तथा च दिवेरैश्वर्यकर्मणो देवशब्दं व्युत्पाद्य तस्मात् स्वार्थे तलि देवताशब्दव्युत्पत्तिरिति पितॄणामपि देवतात्वम्, 'पितरो देवताः' इत्यादिभाष्याच्च । तथा च देवताभ्यः पूर्वोक्तप्रकारेण पितृभ्योऽपि यत् सम्प्रदीयते तस्मिन्, दानमात्रे चार्थे श्रौषडादीनां प्रयोगः । लोके तु देवतोद्देश्यकहविस्त्यागादौ
20 स्वाहाशब्दः प्रयुज्यते, स्वधाशब्दश्च पित्र्युद्देश्यके दाने प्रयुज्यते, कोशेऽपि स्वधा-स्वाहाशब्दयोरुभयोरेव देवहविर्दाने प्रयोगः कथितः, तथा च पितॄणामपि देवतात्वेन तदुद्देश्यकदानेऽपि स्वधाशब्दवत् स्वाहाशब्दस्यापि प्रयोगः समुचित एव, दृश्यते च क्वचित् तथापि । लोकव्यवहारश्च पूर्वमुक्त एव । तदुक्तं
25 "चादयोऽसत्त्वे" [ १. १. ३१. ] इति सूत्रे बृहन्न्यासे–'स्वधा पितृबलौ' 'स्वाहा हविर्दाने' इति । श्रूयते **श्रौषट्**, उह्यते **वषट्**, वाति **वौषट्**, एते क्विबन्ता निपात्यन्ते, केचित्तु–बाहुलकात् प्रथमे श्रुधातुः, डौषट् प्रत्ययः, द्वितीये वहधातुः, डौषट् प्रत्ययः, तृतीये वहधातुः, डषट् प्रत्यय इत्याहुः । सुष्ठु
30 ब्रूते **स्वाहा** "सो ब्रूग आह च" [ उणा० ६०३. ] इत्याप्रत्यय आहादेशश्च । स्वदते **स्वधा** "क्षुधि-स्वदे०" [ उणा० ६०२. ] इत्याप्रत्ययो धश्चान्तस्य । श्रौषट्प्रभृतीनां स्वरादिषु पाठोऽधातुयोगार्थः, धातुयोगे हि गतिसंज्ञत्वादेवाव्ययसंज्ञा सिध्यति ।

"गृह्णातेश्च गृणातेश्च श्रायतेः श्रन्थतेरपि ।
35 चतुर्णामपि धातूनां नैरुक्ताः **श्रौषडं** विदुः ॥
चष्टेश्च वनतेश्चैव वसतेर्वसतेरपि ।
चतुर्णामपि धातूनां **वौषडं** प्राह शौनकः ॥" इति,

एवं वपतेर्बाहुलकात् डिलट्प्रत्यये **वषट्**, स्वर्दधातीति **स्वधा**, इत्यादयोऽपि व्युत्पत्तिप्रकाराः सन्ति । **वषट् पूजायामपी**ति–
40 अपिना देवतासम्प्रदान-दानमात्रार्थाम्रेडनम्, वषट्कृत्य–पूजां देवतासम्प्रदानं दानसामान्यं वा कृत्वेत्यर्थः । **स्वधा तृप्ति-प्रीति-प्रत्यभिवादनेष्वपी**ति–तृप्तिः–श्रद्धोच्छेदः, प्रीतिः–आनन्दः, प्रत्यभिवादनं–प्रतिनमस्क्रिया, अपिना देवतासम्प्रदान-दानमात्रार्थाम्रेडनम्, स्वधाकृत्य–तृप्तिं प्रीतिं प्रत्यभिवादनं देवतासम्प्रदानं दानसामान्यं वा कृत्वेत्यर्थः । **श्रत्** 45
**श्रद्धाने शीघ्रे चे**ति–श्रद्धाय–श्रद्धां कृत्वा, श्रत्कृत्य–शीघ्रं कृत्वेत्यर्थः, "श्रांक् पाके" अस्य "संश्चद्-वेहद्०" [ उणा० ८८२. ] इति आदिशब्दाद् बहुवचनाद् बाहुलकाद् वा क्विदत्प्रत्ययान्तनिपातनात्–'श्रत्' इति । **प्रादुस् आविस् प्राकाश्ये** इति–प्रादुर्भूय आविर्भूय–प्रकाशो भूत्वेत्यर्थः, प्रपूर्वाद् 50
"अदं प्सांक् भक्षणे" अतः "रुयर्ति०" [ उणा० ९९७. ] इत्युसि–'प्रादुस्' इति "अव रक्षणादिषु" अतः "अवेर्णित्" [ उणा० ९९५. ] इति इसि "ञ्णिति" [ ४. ३. ५०. ] इति वृद्धौ च–आविस् । **पशु केवाली हिंसायामि**ति–पशुकृत्य–हिंसित्वेत्यर्थः, स्पशेः सौत्रात् "स्पशि०" [ उणा० ७३१. ] 55
इत्युप्रत्यये सकारलोपे च–'पशु' इति, "केवृङ् सेवने" अतोऽचि केवः, केवमालीयत इति क्विपि 'केवाली' इति । **वेताली विस्तारे** इति–वेतालीकृत्य–विस्तारं कृत्वेत्यर्थः, "वींक् प्रजनादौ" अतः "दम्यमि०" [ उणा० २००. ] इति बाहुलकात् तप्रत्यये–'वेत' इति, वेतमालीयत इति क्विपि 'वेताली' इति । 60
गणपाठे मतभेदमाह–**केचित् त्वि**त्यादिना । गणपाठमुपसंहरति–**इत्यूर्यादयः** ऊर्यादयः समाप्ता इत्यर्थः । इह गतिसंज्ञायां सामान्यतो धातोरुपादानात् सर्वैरपि धातुभिर्योगे गतिसंज्ञा सर्वेषां प्राप्ता, तत्रोपसर्गानुकरणानां सर्वैरपि धातुभिर्योगे गतिसंज्ञा इष्टा, च्वि-डाचोः कृभ्वस्तियोग एव विधानात् च्वि-डाच्प्रत्ययान्ता- 65
नामपि कृभ्वस्तियोग एव भविष्यति, अवशिष्टानामूर्यादीनामपि कृभ्वस्तियोग एव गतिसंज्ञा इष्टा, न सर्वत्र, इतीहोर्यादीनां कृभ्वस्तियोगे वक्तव्या, न सामान्येन, तेनैव यथा स्यात्–ऊरीकृत्य, उररीभूयेति, इह च मा भूत्–ऊरी पक्त्वेति, न वक्तव्येत्याह–
**च्वि-डाच्साहचर्यादि**त्यादि–यथा च्वि-डाचोः कृ-भ्वस्ति- 70
भिरेव योगः, तयोस्तत्रैव विधानात्, अतस्तौ कृ-भ्वस्तियोगे एव गतिसंज्ञौ भवतः, तथा ऊर्यादीनामपि कृ-भ्वस्तिभिरेव योगः, अन्यत्र प्रयोगाभावात्, अतोऽन्येन धातुना योगाभावाद-यत्नादेवोर्यादीनां कृ-भ्वस्तियोगे एव गतिसंज्ञा, भवतीति वाक्य-शेषः । यद्यन्येनापि योगः स्यात् तदैषां तद्व्यवच्छेदाय कृ-भ्वस्ति- 75
योगे गतिसंज्ञा वक्तव्या स्यात् । ऊरी पक्त्वेति त्वनिष्टमेवेत्येके, अन्ये त्वाहुः–करोतिनैवास्याप्रयुज्यमानेन योगः–ऊरीकृत्य पक्त्वा व्रजतीति । **श्रतश्च दधाति-करोतिभ्यामि**ति–"मृगयेच्छा०" [ ५. ३. १०१. ] इत्यत्र "शीङ्-श्रद्धा०" [ ५. २. ३७. ] इत्यत्र च श्रद्धेति दधातिना श्रतो योगदर्श- 80

नात्, एवं शिष्टप्रयोगे करोतिना योगदर्शनात्, अन्यत्र चादर्शनात् तयोरेव योगे गतिसंज्ञा, यतोऽनुवादकता शास्त्रस्य नापूर्वविधायकतेति। प्रादुराविःशब्दौ गणद्वये पठ्येते–इर्ह्योर्यादौ साक्षादादौ च, तत्रोभयपाठस्य उत्सर्गापवादभावेन प्रयोजनं विभ-5जते–**प्रादुराविःशब्दौ कृग्योगे विकल्पार्थं साक्षादावपि पठ्येते** इति–अपिना इर्ह्योर्यादौ पठ्येते च, विकल्पविधिश्च परत्वाद् विशेषविहितत्वाच्च नित्यविधिमिमं बाधते। अयं भावः–साक्षादादिपाठेनानयोः प्रादुराविःशब्दयोः विकल्पेन गतिसंज्ञा भवति, साक्षादादेर्हि "साक्षादादिश्च्व्यर्थे" [ ३. १. 10 १४. ] इति कृगा योगे गतिसंज्ञा विकल्पेन विधीयते, तत्र हि 'कृगो वा' इत्यनुवर्तते, गतिसंज्ञायां विकल्पितायां गतिसंज्ञापक्षे "गति०" [ ३. १. ४२. ] इति समासो भवति, गतिसंज्ञाविरहपक्षे समासो न भवतीति समासविकल्पः, समासविकल्पे च समासपक्षे "अनञः क्त्वो यप्" [ ३. २. १५४. ] इति क्त्वाया 15 यबादेशो भवति–प्रादुष्कृत्य, समासाभावपक्षे च न भवति–प्रादुष्कृत्वेति। इदं गतिसंज्ञाविकल्पस्य प्रयोजनं कृगा योगात्, अन्यत्र नित्यो विधिरपवादाभावात्, उत्सर्गस्य हि अपवादविनिर्मुक्तो विधिर्भवति। एवं च प्रादुराविःशब्दयोः साक्षादादिपाठः कृगा योगे विकल्पार्थः, ऊर्यादिपाठस्ततोऽन्यत्र नित्यार्थ इति। 20 संज्ञायाः स्वतः साधुत्वप्रयोजकत्वाभावात् विधिसूत्रसहकारेणैव साधुत्वार्थत्वमिति विधिप्रदेशं निर्दिशति–**गतिप्रदेशा** इति–गतिसंज्ञाप्रयोजनकविधिशास्त्राणीत्यर्थः ॥ ३. १. २. ॥

## कारिका स्थित्यादौ। ३। १। ३॥

**त० प्र०—कारिकाशब्दः स्थित्यादावर्थे धातोः संबन्धी 25 गतिसंज्ञो भवति, तस्माच्च धातोः प्रागेव प्रयुज्यते। स्थितिर्मर्यादा वृत्तिर्वा, आदिशब्दाद् यत्न-धात्वर्थनिर्देशौ गृह्येते। कारिकाकृत्य–स्थितिं यत्नं क्रियां वा कृत्वेत्यर्थः। स्थित्यादाविति किम्? कारिकां कृत्वा, कर्त्रीं कृत्वेत्यर्थः ॥ ३ ॥**

**श० म० अनुसन्धानम्—कारिका०।** 'धातोः, प्राक् 30 च' इति पदत्रयं 'गतिः' इति पदं चानुवर्तते। *स्वं रूपं शब्दस्याशब्दसंज्ञा* इति न्यायेन 'कारिका'शब्देन कारिकाशब्दो ग्राह्यो न तु तदर्थः, तथा च सम्पन्नं सूत्रार्थमाह—**कारिकाशब्द** इत्यादिना। "डुकृंग् करणे" इत्यतः "भावे" [ ५. ३. १२२. ] इति भावे-धात्वर्थनिर्देशे स्त्रियां णके वृद्धावारादेशे अपि 35 "अस्या०" [ २. ४. १११. ] इतीकारे च–कारिका, इति कारिकाशब्दो भावप्रत्ययान्तः क्रियामात्रवाची यद्यपि भवति तथापि स्थित्यादीनामपि क्रियाविशेषत्वेन तेष्वर्थेषु वर्तमानत्वं न दुर्घटम्, अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यद्धि प्रवृत्तिनिमित्तमिति प्रसिद्धेः। यद्वा "नाम्नि पुंसि च" [ ५. ३. १२१. ] इति नाम्नि स्त्रियां णकः। **स्थित्यादावि**ति–स्थितिरादिर्यस्य स 40 स्थित्यादिः, आदिशब्दः प्रकारार्थः, यत्रार्थे कारिकाशब्दस्य गतिसंज्ञाप्रयोगो दृश्यते स स्थित्यादिस्तस्मिन्। तत्र स्थितिं व्याचष्टे–**स्थितिर्मर्यादे**ति–मर्यादाशब्दः स्थित्यनतिक्रमबोधक इति स्थितिर्मर्यादारूपैवेह गृह्यते। केचित् तु मर्यादाशब्दस्य सीमामात्रबोधकत्वमित्याहुः, तन्न–'लोकमर्यादा' इत्यादौ स्थित्यनति- 45 क्रमे तस्य प्रयोगबाहुल्यात्। मर्यादाशब्दे केषाञ्चिद् भ्रान्तिमालोक्यार्थान्तरमपि दर्शयति–**वृत्तिर्वे**ति–वृत्तिरपि स्थित्यनुकूलाचरणमेवेति नार्थभेदः। आदिशब्देन किं ग्राह्यमित्याकाङ्क्षायामाह–**आदिशब्दाद् यत्न-धात्वनिर्देशौ गृह्येते** इति–यत्नः साक्षात् कृगोऽर्थत्वेन पठ्यते, क्रियापदत्वाच्च यत्र 50 धात्वर्थरूपक्रियानिर्देश एव कारिकाशब्दस्य प्रयोगस्तत्रापि गतिसंज्ञेत्यर्थः। ननु चायमादिशब्दः स्थितिसमानाधिकरणो न सामान्यरूपेण न वा विशेषरूपेण यत्नादौ वर्तते, तत् कथमादिशब्दाद् यत्नादिर्गृह्यत इति, समासात् तु तत्परिग्रहः, सत्यम्–समासात् तत्परिग्रहः, किन्तु समासार्थत्वेन स्थितिर्यत्नादिश्च 55 व्यवतिष्ठते, तत्र स्थितिप्रतिपत्तौ स्थितिशब्दप्रयोगः सफलः, आदिशब्दो न तत्प्रतिपत्तौ सफलः, तत्प्रतिपत्तेः स्थितिशब्देनैव कृतत्वात्, अतोऽनेनान्यप्रयोजनेन भवितव्यमिति तात्पर्येणेदमुच्यते, सोऽपि तदर्थः सन् समासद्वारेणैवेति तत्र कारिकाशब्दो गतिसंज्ञो भवति, उदाहरति–**कारिकाकृत्ये**ति–अत्र 60 गतिसंज्ञया समास-यबादेश-तागमाः पूर्ववद् बोद्धव्याः। उदाहरणार्थमाह–**स्थितिं यत्नं क्रियां वा कृत्वेत्यर्थ** इति। कारिकाशब्दस्य तेष्वर्थेष्वेव प्रयोगादन्यत्राप्रसक्तौ 'स्थित्यादौ' इत्यर्थनिर्देशो व्यर्थ इति शङ्कते–**स्थित्यादाविति किमि**ति। प्रत्युदाहरणमुखेन समाधत्ते–**कारिकां कृत्वे**ति–करोतीति 65 "णक-तृचौ" [ ५. १. ४८. ] इति कर्तरि णके प्राग्वदारादौ–कारिका, अयं कारिकाशब्दः कर्तृप्रत्ययान्तदशायां कार्यकर्त्रीमपि बोधयति, एतदाह–**कर्त्रीं कृत्वेत्यर्थ** इति। किञ्च श्लोकवाच्यपि कारिकाशब्दो दृश्यते, यथा–हरिकारिकेत्यादि, तथा च तदादिष्वर्थेषु प्रयुज्यमानस्य कारिकाशब्दस्य गतिसंज्ञा नेष्टेति तद्व्या- 70 वृत्त्यर्थमर्थनिर्देशस्यावश्यकत्वमिति भावः, तथा च श्लोके दास्यादौ चार्थे वर्तमानस्य गतिसंज्ञाभावान्न समासादिः ॥ ३. १. ३ ॥

## भूषा-ऽऽदर-क्षेपेऽलं-सदसत्। ३। १। ४॥

**त० प्र०—'अलम्, सत्, असत्' इत्येते शब्दा यथासंख्यं भूषा-ऽऽदर-क्षेपेष्वर्थेषु वर्तमाना धातोः संबन्धिनो गतिसंज्ञा 75 भवन्ति, तस्माच्च धातोः प्रागेव प्रयुज्यन्ते। भूषा–मण्डनम्, अलंकृत्य, अलंकृतम्; प्रीत्या संभ्रम–आदरः, सत्कृत्य, सत्कृतम्; क्षेपोऽनादरः, असत्कृत्य, असत्कृतम्। भूषादिष्विति**

**किम्?** अलं कृत्वा, मा कारीत्यर्थः; सत् कृत्वा, विद्यमानं कृत्वेत्यर्थः; असत् कृत्वा, अविद्यमानं कृत्वेत्यर्थः ॥ ४ ॥

**श० म० अनुसन्धानम्—भूषादर०** इति–भूषा च आदरश्च क्षेपश्चेति भूषा-ऽऽदर-क्षेपं, तस्मिंस्तथा; अलं च सच्चा-सच्चेत्यलं-सदसत्, अत्रापि पूर्ववद् 'धातोः प्राक् च' इति पदत्रयमधिकृतमस्ति, 'गतिः' इति चानुवर्तते, *यथासङ्ख्यमनुदेशः समानाम्* इति न्यायस्य चावकाशः, तथा च योऽर्थः सम्पन्नस्तमाह–**अलमित्यादि** । भूषापदार्थमाह–**मण्डनमिति**–मण्ड्यतेऽनेनेति करणार्थो नात्र विवक्षितः, तदर्थस्यालमाऽबोधनात्, किन्तु भावार्थेऽनः, तथा च मण्डनक्रिया भूषापदवाच्येत्यर्थः । **अलंकृत्येति**–"अली भूषण-पर्याप्ति-वारणेषु" अतः "सोरेतेरम्" [ उणा० ९३४. ] इति बाहुलकादमि, यद्वा "अच्" [ ५. १. ४९. ] इत्यचि, स्वरादिपाठादतो निर्देशाद् वा मान्तत्वे–**अलम्**, कृधातोः क्त्वा–कृत्वा, ततो गतिसंज्ञा-समास-यबादेश-तागमा-ऽनुस्वारेषु–अलंकृत्येति, भूषयित्वेति तदर्थः । **अलंकृतमिति**–अलंक्रियते स्मेति कर्मणि क्ते-अलंकृतमिति, भूषामापादितमिति तदर्थः, अत्र गतिसंज्ञया समासः । अथादरपदं व्याचष्टे–**प्रीत्या सम्भ्रम** इति–आदरणीयजनदर्शनसमनन्तरं तं प्रति प्रीतिपूर्विका प्रत्युत्थानासनदानादिविषया त्वरेत्यर्थः । **सत्कृत्येति**–अत्र गतिसंज्ञया प्राग्वत् समासादयः, आदरं कृत्वेति तदर्थः, **सत्कृतमिति**–सत्क्रियते स्मेति प्राग्वत् कर्मणि क्ते–सत्कृतमिति, अत्र गतिसंज्ञया समासः, आदृतमिति तदर्थः । क्षेपशब्दार्थमाह–**क्षेपोऽनादर** इति–क्षिप्यते–[ औदासीन्येन ] परिभवास्पदत्वेन गण्यत इति क्षेपोऽनादरक्रिया, [ तद्दर्शनादौ जातेऽपि आवश्यकोत्थानादिविषयोपेक्षेति यावत् ], **असत्कृत्येति**–अनादृत्येत्यर्थः, प्राग्वद् गतिसंज्ञया समासादिः **असत्कृतमिति**–अनादृतमित्यर्थः, अयमपि विधिः प्रायः कृगा योगे एव प्रवर्तते, तथैव स्वभावादिति सर्वे प्रयोगास्तद्योगविषया एवोदाहृताः । अत्रानादर इति पदेन न तत्पुरुषसमासः, किन्तु बहुव्रीहिः, अन्यथा 'पाखण्डिनमसत्कृत्य' इत्यादिप्रयोगे गतिसंज्ञा न स्यात्, तत्रादराभावस्यासत्त्वेन क्षेपार्थत्वाभावात्, संयोग-पृथक्त्वन्यायाद् यत्रादरप्रसङ्गस्तत्रैव तदभावस्य विवक्षा भवति, पाखण्डिनि चादरप्रसक्तेरभावात् तस्य प्रतिषेधोऽनुचितः स्यात्, अविद्यमान आदरो यत्रेति बहुव्रीह्याश्रयणे तु आदरस्य स्वभावत एवात्राभावाद् भवति गतिसंज्ञा । भूषादिष्वेवार्थेषु प्राय एतेषां प्रयोगदर्शनाद् भूषादिग्रहणं व्यर्थमित्याशङ्कते–**भूषादिष्विति किमिति** । प्रत्युदाहरति–**अलं कृत्वेति** । अत्र निषेधार्थोऽलंशब्द इत्याह–**मा कारीत्यर्थ** इति–भावे माङा योगेऽद्यतन्यां 'कारि' इति प्रयोगः । पर्याप्त्यर्थोऽप्यलंशब्दो दृश्यते–अलं कृत्वौदनं गत इति, पर्याप्तमित्यर्थः । **सत् कृत्वेति**–अविद्यमानं विद्यमानं कृत्वेत्यर्थः, तथा चात्र सत्तार्थकः सच्छब्दो नादरार्थकः । **असत् कृत्वेति**–पूर्वं सदपि वस्तु यथाकथञ्चिदविद्यमानं कृत्वेत्यर्थः । "असक् भुवि" इत्यस्य "द्रुहि-वृहि-महि-पृषिभ्यः कतृः" [ उणा० ८८४. ] इति बाहुलकात् 'सदसद्'शब्दौ द्रष्टव्यौ, अत एवोपादानाद् वा सिद्धिः ।

अथेह 'असत्'शब्दस्य 'क्षेप' इत्यर्थस्य च ग्रहणं किमर्थम्? यावता 'असत्कृत्य' इति 'सत्कृत्य' इत्यस्य नञ्समासे भविष्यति–न सत्कृत्य–असत्कृत्येति, यथा–न ऊरीकृत्य–अनूरीकृत्येति, नैतदस्ति–एवं हि समासे विज्ञायमाने सत्कारनिवृत्तिमात्रं गम्यते, यथा–अकृत्वा गतः, अहृत्वा गतः, इति सत्क्रियानिवृत्तिमात्रं न क्षेपः, क्षेपो हि परिभवोऽवज्ञा तिरस्कारो घर्षणमित्यादिविविधरूपः । एवं तर्हि सच्छब्देन न सद् असदिति नञ्समासे सतो गतित्वान्नित्यसमासे च 'नाम' इत्यधिकृतस्य गतिना विशेषणे विशेषणमन्तो भवतीति तदन्तविज्ञाने सति समासः सत इवासतोऽपि भवतीति भविष्यति, अत्र हि सदर्थस्यापरस्य प्रतिषेधेन ततोऽन्यस्य करणं विधिरूपं विज्ञायत इति क्षेपो विज्ञास्यते; ननु द्योतकोऽयं सच्छब्दः, द्योतकश्च द्योत्यविशेषार्थपदान्तरसन्निधावेव तत्सहकारितया स्वमर्थं द्योतयति न केवलः, न तत्रानर्थकेन न सदसदिति वृत्तिरुपपद्यते, नहि भवति–'न च–अच, न तु–अतु, न परि–अपरि' इति, अनर्थकस्य सामर्थ्याभावात्, सामर्थ्ये सति पदविधिर्भवति । न च स सन्निहितद्योत्यविशेषार्थपदान्तर एव वर्तते, तत्रापि परतन्त्रस्यान्तर्भूतोत्तरपदार्थाश्रयक्रियाविशेषणतया सम्बन्धानुपपत्तेः, अयं त्वसच्छब्दः सूत्रे उपादीयमानो रूढ एव, रूढिशब्दः क्षेपे वर्तते, न नञ्समासः । अथापि कथञ्चित् समासः स्यात्, एवमपि क्षेपवदौदासीन्येऽपि 'असत्कृत्य' इति प्रसज्येत, क्षेपवदौदासीन्यस्यापि सदर्थादादरादन्यत्वात्, न च तत्र गतिसंज्ञेति 'असत् क्षेपे' इति 'असत्कृत्य' इति क्षेपे एव यथा स्यान्नौदासीन्ये इत्येवमर्थं कर्तव्यम्; अथेष्यत एव तत्रापि 'असत्कृत्य' इति, एवमपि नञ्समासस्योत्तरपदार्थप्रसङ्गवत्येव वृत्तिः, यथा–अब्राह्मणमानयेति, नहि यत्र ब्राह्मणबुद्धेः प्रसङ्ग एव नास्ति काष्ठलोष्टादौ तत्राब्राह्मणशब्दस्य प्रयोगोऽस्तीति यत्रादरप्रसङ्गस्तत्रैव स्यात्–गुरुमसत्कृत्य गत इति, यत्र त्वादरस्य प्रसङ्ग एव न दासचण्डालादौ तत्र न स्यात्; क्षेपे सति तु यत्रादरस्य प्रसङ्गः, यत्र चाप्रसङ्गस्तत्र सर्वत्र यथा स्यादित्येवमर्थम् 'असत् क्षेपे' इत्युच्यते ।

नन्वेवमप्यन्यतरत् कर्तव्यं, तद्धि प्रसक्ताभावस्योक्तेन प्रकारेण सिद्धेरितराभावार्थं भविष्यति, मैवम्–यदि 'असत्' इत्येतदुच्येत तदार्थानुपादानेन शब्दत्रयमर्थद्वयमिति समत्वाभावाद् यथासंख्याभावेन प्रत्येकस्याप्यर्थद्वये गतिसंज्ञा प्रसज्येत, तद्वारणाय

'अलंसद् भूषादरेऽसत्' इति कथने तु तत्र यथा क्षेपे भविष्यति तथा तत्रान्यत्रापि स्यात्, यथात्र प्रत्युदाह्रियते–असत् कृत्वा, अविद्यमानमित्यर्थ इति; अथ 'क्षेपे' इत्युच्येत तदा 'असत्' इत्यनुपादानेन, तत्र यदि सदादरग्रहणमिह योगे कृत्वा 'क्षेपे' इति पृथग्योगे क्षेपवृत्तेः सर्वस्यापि प्रसज्येत, अथालमादिरनुवर्तेत तदाऽलंसदोरेव स्यान्नासतः, उभयं चानिष्टम्, अलंसतोः क्षेपे वृत्त्यसम्भवात् तदन्तविज्ञानेनासच्छब्दपरिग्रहेऽतिप्रसङ्गः; अथालमादेस्तदन्तविज्ञानेऽप्यसदन्तस्य सदन्तस्याप्यनञ्पूर्वस्य नास्त्यभिधानमिति विज्ञायेत, एवं च प्रतिपत्तिगौरवम्, अनभिधानाश्रयणे च न क्वचित् किञ्चिद् विशेषणमुपादेयं स्यात्, अनभिधानादेव व्यवच्छेद्यनिवृत्तिसिद्धेः, तस्मादनभिधानं नामागतिका गतिः । अथ 'सत्क्षेपादरे' इति पृथगुच्येत, तत्राप्ययमेव दोषः, सच्छब्दस्यैवोभयत्र वृत्तिं कल्पयेत्, यं वा तं वा क्षेपार्थमुपपादयेत्, सदन्तविज्ञानेऽपि न नञ्पूर्वमेव विजानीयात्, अनभिधानं वा श्रयेत्, इत्यसत्क्षेपग्रहणं क्रियते । इहेदानीमसत्क्षेप इत्युच्यमाने यत्र न क्षेपो नाप्यादरस्तत्रौदासीन्यविषये कथमसत्कृत्येति गतिसंज्ञा ? तत्रैकेषामयमभिप्रायः–न तत्र गतिसंज्ञेष्यते, न ह्यसत्कृत्येत्यौदासीन्यप्रतिपत्तिरस्ति, पराभूयेत्येव हि प्रतीयत इति । अथेष्यत एव तत्राप्यसत्कृत्येति, सत्कृत्येत्यस्य नञ्समासे भविष्यति ॥ ३. १. ४. ॥

## अग्रहा-ऽनुपदेशेऽन्तरदः । ३ । १ । ५ ॥

**त० प्र०**—'अन्तर्, अदस्' इत्येतौ शब्दौ यथासंख्यमग्रहेऽनुपदेशे चार्थे गम्यमाने धातोः संबन्धिनौ गतिसंज्ञौ भवतः, तस्माच्च धातोः प्रागेव प्रयुज्येते । अग्रहोऽस्वीकारः, अन्तर्हत्य, मध्ये हिंसित्वा शत्रून् गत इत्यर्थः । स्वयं परामर्शोऽनुपदेशः, विशेषानाख्यानं वा, अदःकृत्यैतत् करिष्यतीति चिन्तयति । अग्रहानुपदेश इति किम् ? अन्तर्हत्वा मूषिकां श्येनो गतः, परिगृह्य गत इत्यर्थः । अदः कृत्वा गत इति परस्य कथयति । 'अदस्' शब्दस्त्यदादौ, अव्ययमिति केचित् ॥ ५ ॥

**श० म० अनुसन्धानम्—अग्रहा०** इति । प्राग्वत् पदचतुष्टयानुवृत्तिर्यथासंख्यन्यायावतारश्च, तन्निष्पन्नं सूत्रार्थमाह–**अन्तरित्यादि** । अग्रहश्चानुपदेशश्चानयोः समाहारोऽग्रहानुपदेशं, तस्मिंस्तथा, अन्तश्चादश्चानयोः समाहारोऽन्तरदः । यथासंख्यमित्युक्त्या 'अग्रहे अन्तर्, अनुपदेशे असद्' इति लभ्यते । यद्यपीदृशस्थले साहित्यावच्छिन्नद्वन्द्वनिर्दिष्टस्य समुदायस्यैकधर्मावलीढैकविधसंबन्धेनैवान्वयविवक्षायां द्वन्द्वविधानात् प्रत्येकस्य पृथग्धर्मावच्छिन्नान्वयविवक्षायां द्वन्द्वो दुर्लभस्तथापि प्रथमं द्वन्द्वसाधुत्वाय साहित्यावच्छिन्नस्य साहित्यावच्छिन्न एवान्वयो विवक्षित इति द्वन्द्वो भवति, तादृशस्य च समुदायविषयस्य वाक्यार्थबोधस्य लक्ष्यसंस्कारोपयोगित्वाभावात् प्रत्येकं यथासंख्यन्यायेन सम्बन्ध इति बोध्यम्, एवमन्यत्रापि । एकधर्मावच्छिन्नान्वयस्यावश्यकत्वस्वीकारादेव 'पयः पयो जरयति' इत्यादौ नैकशेषो न वा द्वन्द्वः, अत्रैकस्य पदस्य कर्तृपरत्वमपरस्य च कर्मपरत्वमिति क्रियाकर्तृभावेन क्रियाकर्मभावेन च पृथक्सम्बन्धेन तयोः क्रियायामन्वयेनैकसम्बन्धेनान्वयाभावात् । तथा चेदृशस्थले यद्यपि पृथगेव निर्देश उचितस्तथापि ग्रन्थकर्तृणां कल्पनागौरवापेक्षया शब्दलाघवस्यादरणीयत्वेन द्वन्द्वेन व्यवहारो दृश्यत इति बोध्यम् ।

अग्रहानुपदेशयोः क्रमशोऽर्थविशेषपरत्वमित्याह—**अग्रहोऽस्वीकार** इति– "ग्रहीश् उपादाने" इति 'ग्रह्'धातोः "युवर्ण०" [ ५. ३. २८. ] इति भावेऽलि–ग्रहः, ततो नञ्समासः, यद्यपि 'ग्रह्'धातोः प्राप्तिमात्रमर्थस्तथापि प्रयोगवशात् स्वत्वोत्पत्तिप्रयोजको व्यापारोऽपि तदर्थ इति नञा तदभावबोधनात् स्वत्वप्रयोजकव्यापाराभाव इह लभ्यते । 'अन्तर्'शब्दो मध्यमधिकरणरूपं ब्रवीति, धातोरिति चाधिकारात् साधिकरणता धात्वर्थे प्रत्याश्रीयमाणे परिग्रहविषये प्रतिषिध्यते, एके प्राहुः– 'अन्तर्'शब्दोऽयं मध्येऽधिकरणभूते वर्तते परिग्रहे च, तत्र पूर्वत्र परिग्रहे वाक्यगम्ये प्रतिषेधः, परत्र पदार्थे । उदाहरति– **अन्तर्हत्येति**–"हनंक् हिंसा-गत्योः" इति 'हन्' धातोः क्त्वा, "यमि-रमि-नमि-गमि-हनि०" [ ४. २. ५५. ] इति नस्य लोपः, गतिसंज्ञया समास-यबादेश-तागमाः प्राग्वद् वेदितव्याः । अत्रान्तःशब्दोऽधिकरणरूपे मध्ये वर्तते, अस्वीकारश्चास्तीति दर्शनायार्थमाह–**मध्ये हिंसित्वा शत्रून् गत इत्यर्थ** इति– अपरिग्रहविषयेऽयं प्रयोग इत्यर्थः । 'अन्तर्'शब्दः "स्वरादयोऽव्ययम्" [ १. १. ३०. ] इति सूत्रन्यासे साधितः । उपदेशः– परस्मै कस्यचिदर्थस्याख्यानम्, यदाह भाष्यकृत्–"प्रत्यक्षमाख्यानमुपदेशः" इति, यदा तु स्वयमेव बुद्ध्या परामृशति तदा नास्त्युपदेशः, सोऽनुपदेश इत्याह–**स्वयं परामर्श** इति–स्वयम्–आत्मना योऽर्थस्य परामर्शः सोऽनुपदेशः । अपर आह–विशेषाख्यानमुपदेशः, तत्र यदि विशेषे बुभुत्सिते तं विशेषमनभिसन्धाय सामान्येनाद इति ब्रूयात् तदा स उपदेशोऽपि सन् उपदेशकार्यं करोतीत्युपदेश इति नोच्यते, प्रत्युदाहरणे च विशेषः प्रत्युदाह्रियते–अदः कृत्वेत्यादि । एतदेवाह–**विशेषानाख्यानं** वेति । उदाहरति–**अदःकृत्ये**त्यादि–"अदंक् भक्षणे" अद्यते दृशा मनसा च तदिति "अदेरन्ध्०" [ उणा० ९६३. ] इत्यसि 'अदस्' इति, अनेन प्रत्यक्षं विप्रकृष्टमपदिश्यते, त्यदादिषु पाठाद् वा तत्सिद्धिः, इह प्रागिव गतिसंज्ञया समास-यबादेश-तागमाः, "गतिः" [ १. १. ३६. ] इति गतिसंज्ञकस्याव्ययत्वात् "अतः कृ-कमि०" [ २. ३. ५. ] इति [ सस्य रत्वे ]रस्य सत्वं न भवति,

**'चिन्तयति'** इति कथनेन स्वयं परामर्शरूपोऽनुपदेश इति सूच्यते। कश्चिदाह-उपदेश इति लक्षणवाक्यान्युच्यन्ते, "उपदेशेऽजनुनासिकः" इत्यत्रोपदेशः, तस्मिन् प्रतिषिद्धे यस्यानुमानिकमेतद्रूपं तस्य गतिसंज्ञा, "दसूच् उपक्षये" इति नञ्पूर्वस्य 5 'दस्'धातोर्न दस्यतीति क्विपि-'अदस्' इति, अव्ययरूपोऽयं शब्दः, प्रत्युदाहरणं च त्यदादिना ज्ञेयमिति। **अग्रहानुपदेश इति किमिति**-अयमाशयः-नैतावर्थावन्तःशब्दादःशब्दयोर्वाच्याविति किमर्थमिह तद्व्यावर्तकत्वेनोपादीयतेऽग्रहानुपदेशपदम्। प्रत्युदाहरणेनोत्तरयति-**अन्तर्हत्वे**त्यादिना-अयमा10 शयः-यद्यप्यग्रहानुपदेशौ नैतयोरर्थौ तथापि प्रयोगोपाधिरूपेणेहावश्यं तौ पठनीयौ, अन्यथा यत्र प्रयोगवशात् परिग्रहोपदेशौ प्रतीयेते तत्रापि गतिसंज्ञा स्यात्, सा च नेष्टेति। अदःशब्दे मतभेदमाह-**अदःशब्दस्त्यदादावि**ति-तथा च नापूर्व इति भावः। पक्षान्तरमाह-**अव्ययमि**ति-विभक्तिप्रतिरूपकत्वेन 15 हि तत्सम्भवः॥ ३. १. ५.॥

## कणे-मनस्तृप्तौ। ३। १। ६॥

**त० प्र०—'कणे, मनस्' इत्येते अव्यये तृप्तौ गम्यमानायां धातोः संबन्धिनी गतिसंज्ञे भवतः, तस्माच्च धातोः प्रागेव प्रयुज्येते; तृप्तिः-श्रद्धोच्छेदः। कणेहत्य पयः पिबति, मनोहत्य 20 पयः पिबति; तावत् पिबति यावत् तृप्त इत्यर्थः। तृप्ताविति किम्? तण्डुलावयवे कणे हत्वा गतः, मनो हत्वा गतः, चेतो हत्वेत्यर्थः॥ ६॥**

**श० म० अनुसन्धानम्—कणे०** इति। 'कणे' इति सप्तमीप्रतिरूपकमव्ययं श्रद्धायां [अभिलाषातिशये] वर्तमानं 25 परिगृह्यते, तस्य हि श्रद्धोच्छेदः [तृप्तिः] इत्युपाधिः सम्भवति, तत्साहचर्यान्मनःशब्दोऽपि तद्वृत्तिरेव विज्ञेयः। हन्धात्वर्थयोगाच्चाभिलाषनिवृत्तिरूपा तृप्तिरवगम्यते, तदाह-**तृप्तौ गम्यमानायामि**ति-इयं तृप्तिर्न कणे-मनःशब्दयोरर्थतयोपाधिः किन्तु समुदायार्थो, विषयतया तृप्तौ प्रयोगोपाधिभूतायामिति तदर्थः। 30 अत्र 'अव्यये' इति प्रतीकमुपादाय-'अव्ययः सन् तृप्तिं वक्ति' इति केषाञ्चिद् व्याख्यानं नोचितम्, तयोः श्रद्धा[अभिलाषातिशय]परत्वस्यैव प्रतीतेर्हन्धातुसमभिव्याहरकृतैव तृप्तिः प्रतीयत इति स्वीकरणीयं स्यादिति प्रयोगोपाधिरेव तृप्तिः, अत एवाचार्येण वाच्यायामिति नोक्तं वाक्यार्थस्य वाच्यत्वाभावात्। तृप्ति35 पदस्य व्याख्यानं-**श्रद्धोच्छेद** इति, तदपि श्रद्धापरत्वमेव कणे-मनःशब्दयोः प्रकटयति, उच्छेदश्च हन्धात्वर्थ एव, स च प्रयोगत एव प्रतीयते। उदाहरति-**कणेहत्य पयः पिबती**त्यादि-प्राग्वद् गतिसंज्ञया समासादिः। उदाहरणे श्रद्धोच्छेदं दर्शयति-**तावत् पयः पिबति यावत् तृप्त इत्यर्थ** इति-तावदिति न पयोविशेषणं किन्तु पानक्रियाविशेषणभूतकाला- 40 वधिपरम्, अग्रे यावत् तृप्त इति द्वितीयान्तयावच्छब्दप्रयोगात्, तथा च तृप्तिपर्यन्तत्वं पानक्रियाया बोध्यते। एतयोः श्रद्धातिशयवाचित्वाद्धन्धात्वर्थसम्बन्धाच्च तृप्तिरवश्यं प्रतीता स्यादिति व्यभिचाराभावात् 'तृप्तौ' इति विशेषणं व्यर्थमित्याशङ्कते-**तृप्ताविति किमि**ति-यत्र निमित्तभूतस्य सप्तम्यन्तस्य कणेशब्दस्य 45 तण्डुलावयवार्थस्य प्रयोगः, यत्र च मनःशब्दस्य चेतःपरत्वेन प्रयोगः, तत्र तृप्तिविषयाभावाद् गतिसंज्ञा नेष्टेति तद्व्यावृत्त्यर्थं तृप्ताविति सार्थकमित्याह-**तण्डुलावयव** इत्यादिना तण्डुलस्यावयवस्तण्डुलावयवस्तस्मिंस्तथा, अनेन तण्डुलसम्बन्धिताप्रतिपादनेनायं कणेशब्दः सूक्ष्मेऽवयवे सप्तम्यन्तो वर्तते इति दर्शयं- 50 स्तदर्थनिवृत्तिं दर्शयति, तण्डुलस्य सूक्ष्मांशं विनाश्य गत इति तदर्थः। "कण गतौ" घटादिः, णावचि कणयतीति कणः, सूत्रनिर्देशादेव एत्वे-**'कणे'** इति, "मनिंच् ज्ञाने" "अस्" [उणा० ९५२.] इत्यसि-**'मनस्'** इति, नन्वनयोः कथमव्ययत्वं? नहि स्वरादिषु वा चादिषु वाऽन्यत्र वाऽव्ययमध्ये दृश्येते 55 इति चेत्? उच्यते-विभक्तिप्रतिरूपकत्वादाकृतिगणत्वाद् वा तत्र तत्राव्यये समावेशः। यदुक्तम्-

"इयन्त इति संख्यानं निपातानां न विद्यते।
प्रयोजनवशादेते निपात्यन्ते पदे पदे॥" इति॥ ३. १. ६.॥

## पुरोऽस्तमव्ययम्। ३। १। ७॥ 60

**त० प्र०—'पुरस्, अस्तम्' इत्येते अव्यये धातोः संबन्धिनी गतिसंज्ञे भवतः, तस्माच्च धातोः प्रागेव प्रयुज्येते; पूर्वपर्यायः-पुरःशब्दः, अनुपलब्ध्यर्थोऽस्तंशब्दः। पुरस्कृत्य गतः, पुरस्कृतम्; अस्तंगत्य पुनरुदेति सविता, अस्तंगतानि दुःखानि। अव्ययमिति किम्? पुरः कृत्वा, नगरीरित्यर्थः; 65 अस्तं कृत्वा काण्डं गतः, क्षिप्तमित्यर्थः। सकारोऽप्यत्र न भवति॥ ७॥**

**श० म० अनुसन्धानम्—पुरो०** इति। पूर्वशब्दात् "पूर्वापराधरेभ्योऽस्०" [७. २. ११५.] इति स्वार्थेऽसि पुरादेशे च-'पुरस्' इति, तस्य पूर्वशब्दार्थत्वमित्याह-**पूर्व-** 70 **पर्यायः पुरःशब्दः**, "अधण्तस्वाद्या०" [१. १. ३२.] इत्यव्ययत्वम्। "असूच् क्षेपणे" अतो बाहुलकात् "दम्यमि०" [उणा० २००.] इति मन्ते ते-'अस्तम्' इति स्वरादित्वादनुपलब्ध्यर्थकमव्ययमित्याह-**अनुपलब्ध्यर्थोऽस्तंशब्द** इति। उदाहरति-**पुरस्कृत्य गत** इति-'पुरस् कृत्वा' इति स्थिते 75 सस्य रुत्वे [रत्वे] गतिसंज्ञया समासयबादेश-तागमाः प्राग्वत्, "नमस्पुरसो गतेः" [२. ३. १.] इति रस्य सत्वे च-पुरस्कृ-

त्येति। एवम्-**पुरस्कृतमि**ति-पुरस्क्रियते स्मेति कर्मणि क्ते गतिसंज्ञया च समासो रकारस्य सश्च। गतिसंज्ञावशाच्चास्य प्रयोगे पूर्वार्थः क्वचिन्न प्रतिभासते, पुरस्कृत्य छात्रमुत्साहयतीत्यादौ पारितोषिकप्रदानेन सत्कृत्येत्यर्थावगतेरिति नव्याः। **अस्तंगत्य पुनरुदेति सविते**ति-"गम्लं गतौ" इति 'गम्'धातुतः क्त्वा, "यमि-रमि०" [४. २. ५५.] इति मलोपः, प्राग्वद् गतिसंज्ञया समासादिना-अस्तंगत्येति, उत्पूर्वस्य "इंण्क् गतौ" इत्यस्य तिवि-उदेतीति, सवितृशब्दस्य सौ-सवितेति, लोकदृष्टिविषयातिक्रमं प्राप्य पुनस्तद्विषयतां गच्छतीत्यर्थः, दृष्टिविषयातिक्रमणेनात्रानुपलब्धिः। **अस्तंगतानि दुःखानी**ति-अत्र गतिसंज्ञया गतशब्देन समासः, विनाशं गतानि दुःखानीत्यर्थः, अत्र विनाशादनुपलब्धिः।

"अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः॥"
[र० वं० स० २]

इति कालिदासप्रयोगे च 'पुरस्'शब्दस्य न 'पश्यसि' इति क्रियया सम्बन्धः, अपि तु 'स्थितम्' इत्यध्याहृतपदेन, इति 'यद्धातुना सम्बद्धाः' इति पूर्वोक्तनियमवशाद् 'दृश्'धातुनिरूपिता गतिसंज्ञा न भवतीति सत्वं न भवति। न च कृग्रा योग एव गतिसंज्ञेति नात्र तत्प्राप्तिरिति भ्रमितव्यम्, तादृशनियमे मानाभावात्, तथा सति 'अस्तम्' इत्यंशेऽपि नियमप्रवृत्तौ 'अस्तंगत्य' इति प्रयोगोऽपि न स्यात्।

धातुसम्बन्धेनाव्ययस्यैव ग्रहणं भविष्यतीत्यभिमानेन शङ्कते-**अव्ययमिति किमि**ति-नाव्ययस्यैव धातुसम्बन्धित्वम्, अपि तु कारकस्यापि, तथा च कारकयोरेतयोर्गतिसंज्ञा मा भूदित्यव्ययमिति विशेषणं सार्थकमित्याह-**पुरः कृत्वे**ति-"पृश् पालनपूरणयोः" अतः "गॄ-पॄ०" [उणा० ९४३.] इति क्विपि "ओष्ठ्यादुर्" [४. ४. ११७.] इत्युरादेशे "पुर्" इति नगरीवाचकः, ततः शसि-'पुरस्' इति, नेदमव्ययम्, अथाव्ययग्रहणाभावेऽस्यापि ग्रहणे कृत्वा इत्यस्य योगे गतिसंज्ञया समासयबादेश-तागमेषु, सस्य रत्वे च "नमस्पुरसो गतेः०" [२. ३. १.] इति रस्य सकारापत्तिश्च स्यात्, नगरीः सम्पाद्येति वाक्यार्थः। एवम्-**अस्तं कृत्वा काण्डं गत** इति। अस्तमित्यस्यार्थमाह-**क्षिप्तमित्यर्थ** इति- "असूच् क्षेपणे" अतः कर्मणि क्ते ऊदित्त्वेन क्त्वि वेट्त्वात् "वेटोऽपतः" [४. ४. ६२.] इतीडभावे च 'अस्त' इति, ततः सेरमादेशे-अस्तमिति, अव्ययग्रहणाभावेऽत्रापि गतिसंज्ञया समास-यबादेश-तागमाः प्रसज्येरन्, अव्ययग्रहणे तु नातिप्रसङ्ग इत्याह-**सकारोऽप्यत्र न भवती**ति-अपिना समास-यबादेश-तागमानां संग्रहः।

नतु मास्त्वव्ययग्रहणं तथापि न क्षतिः, तथाहि-पुरः [नगरीः] कृत्वेत्यादौ गतिसंज्ञया समासे "ऐकार्थ्ये" [३. २. ८.] इति स्यादिनिवृत्त्या भवितव्यम्, तथा च यदनूद्य संज्ञा विधीयते तदेव संज्ञिरूपं नास्तीति *निमित्तापाये०* इति न्यायेन संज्ञयापि निवर्तितव्यं, तन्निवृत्तौ च समासादिकार्येणापि निवर्तितव्यमिति, नैवम्-*एकदेशविकृतमनन्यवत्* इति न्यायेन स एवायं संज्ञीति संज्ञा न निवर्तते। यस्मिन् वा तद्रूपं न निवर्तते तत् प्रत्युदाहरणं भविष्यति, यथा-पुरः करोतीति, नात्र समास उत्तरस्यानामत्वात्, अतो न विभक्तिनिवृत्तिरिति गतिसंज्ञायां सकारः स्यात्। वस्तुतस्तु-कार्यार्थं संज्ञा, कार्ये च समासादौ सम्पन्ने पुनः संज्ञाप्रयोजनाभावात् संज्ञिरूपसत्ताया अनपेक्षणादुक्तशङ्कासमाधाने निरालम्बने, तथा च वृत्त्युक्तं प्रत्युदाहरणयुगलं साध्वेव। किञ्चोत्तरार्थमप्यव्ययग्रहणमिति॥ ३. १. ७.॥

## गत्यर्थ-वदोऽच्छः। ३। १। ८॥

**त० प्र०**—'अच्छ'इत्यव्ययमभिशब्दार्थे दृढार्थे च वर्तते, तद् गत्यर्थानां वदश्च धातोः संबन्धि गतिसंज्ञं भवति, तेभ्यश्च धातुभ्यः प्रागेव प्रयुज्यते। अच्छगत्य, अच्छव्रज्य, अच्छोद्य। गत्यर्थवद इति किम्? अच्छ कृत्वा गतः। अव्ययमित्येव-उदकमच्छं गत्वा॥ ८॥

**श० म० अनुसन्धानम्—गत्यर्थ०**। गतिरर्थो यस्य धातोः स गत्यर्थः, गत्यर्थश्च वद् चानयोः समाहार इति गत्यर्थवद्, तस्य **गत्यर्थवदः**, प्रस्तुतस्य धातोर्विशेषणम्, "चवर्गदषहः०" [७. ३. ९८.] इति सौत्रत्वान्निर्देशस्य समासान्तविधेरनित्यत्वज्ञापनार्थत्वाद् वा समासान्तो न कृतः, केचित्त्विमं समासान्तं पाक्षिकं मन्यन्ते। "अदंक् भक्षणे" इत्यतः "तुमि-मदि०" [उणा० १२४.] इति किति छे-'अच्छ' इति, यद्वा "अव रक्षणादौ" अतोऽचि प्रत्यये पृषोदरादित्वाद् वस्य छत्वे तस्य च "स्वरेभ्यः" [१. ३. ३०.] इति द्वित्वे च-'अच्छ' इति, **'अच्छ'** इत्यव्ययमनव्ययं च, तत्रोभयोस्तुल्यरूपयोरर्थो भेदक इत्याह-**अभिशब्दार्थे दृढार्थे चे**ति, अभिशब्दस्यार्थ आभिमुख्यम्, यदत्रार्थद्वये वर्तते तदव्ययमन्यदनव्ययम्, अत्र प्रयोगः प्रमाणम्, इहाव्ययमित्यनेनैतदर्थद्वयवृत्ति गृह्यते, तदाह-**तद् गत्यर्थानामि**त्यादि। यद्वाऽस्याव्ययत्वमित्थम्-यदव्ययमित्यस्य प्रत्युदाहरणं तत्सम्बोधनस्यन्तप्रतिरूपकत्वाद् "विभक्तिथमन्त०" [१. १. ३३] इति सूत्रेण, अत एव वा विशेषणादव्ययत्वमिति। उदाहरति-**अच्छगत्ये**ति-अभिमुखं गत्वेत्यर्थः, "गम्लं गतौ" इति 'गम्' धातोर्मकारस्य लोपः, **अच्छव्रज्ये**ति-अभिमुखं गत्वेत्यर्थः, **अच्छोद्ये**ति-अभिमुखं दृढं वा उक्त्वेत्यर्थः, "वद व्यक्तायां वाचि" इति 'वद्' धातोर्वकारस्य क्त्वि उकारः, अकारोकार-

योरोकारश्च, एषु त्रिष्वप्युदाहरणेषु गतिसंज्ञया प्राग्वत् समास-यबादेशादि । 'गत्यर्थवदः' इत्यस्य धात्वन्तरसम्बन्धव्यावृत्त्यर्थत्वं प्रदर्शयति-**अच्छ कृत्वा गत** इति-दृढं कृत्वा गत इत्यर्थः, अत्र गतिसंज्ञाविरहेण समासाभावात् क्त्वो यबादेशो न भवति । अव्ययग्रहणानुवृत्तिव्यावर्त्यमाह-**उदकमच्छं गत्वेति**-अत्राच्छशब्दो निर्मलेऽर्थेऽनव्ययम्, इति गतिसंज्ञाविरहेण न समासादिः, निर्मलं जलं गत्वेत्यर्थः ॥ ३. १. ८. ॥

## तिरोऽन्तर्धौ । ३ । १ । ९ ॥

त० प्र०—तिरःशब्दोऽन्तर्धौ-व्यवधाने वर्तमानो धातोः संबन्धी गतिसंज्ञो भवति, तस्माच्च धातोः प्रागेव प्रयुज्यते । तिरोभूय, तिरोधाय । अन्तर्धाविति किम्? तिरो भूत्वा स्थितः, तिर्यग् भूत्वेत्यर्थः ॥ ९ ॥

श० म० अनुसन्धानम्—तिरो० इति । 'धातोः प्राक् च, गतिः, अव्ययम्' इति पदपञ्चकमनुवर्तते, तत्रान्तर्धौ व्यभिचाराभावाद् सूत्रार्थेऽव्ययस्यानुपादानम् । "तॄ प्लवन-तरणयोः" अतः "मिथि-रञ्ज्युषि-तॄ०" [ उणा० ९७१. ] इति किदसि प्रत्यये "ऋतां क्ङितीर्" [ ४. ४. ११६. ] इतीरादेशे च-तिरस् अन्तर्द्ध्यवज्ञातिर्यग्भावेषु, अवज्ञायामन्तर्ध्युपचारात् साप्यन्तर्धिः, अतोऽर्थद्वयमस्यात्र विज्ञेयम् । तत्रान्तर्द्धावनेन गतिसंज्ञा विधीयते। कोऽयमन्तर्धिरित्याह-**व्यवधाने** इति । अन्तः-पूर्वाद् दधातेः कौ "अन्तर्धिः" [५. ३. ८९. ] इति निपात्यते। कृगि विभाषा वक्ष्यतेऽतोऽन्यदुदाहरति-**तिरोभूय, तिरोधाय,** इति-"भू सत्तायाम्" "डुधाग्क् धारणे च" व्यवहितो भूत्वा, तिरोधानं-व्यवधानं कृत्वेति तदर्थः, उभयत्र धात्वर्थ-भेदेऽपि प्रयोगार्थे न भेदः, उभयत्र क्रियासामान्यपरस्य धातोस्तिरस्शब्दसमभिव्याहारे तिरोधानरूपक्रियाविशेषबोधात् । अन्तर्धिव्यावर्त्यं पृच्छति-**अन्तर्धावित्येवेति** । अर्थद्वयं तिरसोऽभिहितं, तत्रान्तर्धावनेन गतिसंज्ञेष्टा, अवशिष्टे तिर्यग्भावरूपार्थेऽनेन गतिसंज्ञा मा भूदिति 'अन्तर्धौ' इत्युच्यत इत्युत्तरयति-**तिरः कृत्वा काष्ठं गत** इति । अत्र तिर्यग्भावं-तिर्यग्वलनार्थं दर्शयति-**तिर्यग् भूत्वेत्यर्थ** इति-ऊर्ध्वस्थितस्तिर्यग् वलित्वेत्यर्थः ॥ ३. १. ९. ॥

## कृगो नवा । ३ । १ । १० ॥

त० प्र०—'तिरस्' इत्यव्ययमन्तर्धौ वर्तमानं कृगो धातोः संबन्धि गतिसंज्ञं वा भवति, तस्माच्च धातोः प्रागेव प्रयुज्यते । तिरस्कृत्य, तिरःकृत्य; तिरस्करोति, तिरः करोति; पक्षे-तिरः कृत्वा । अन्तर्धावित्येव-तिरः कृत्वा काष्ठं गतः, तिर्यगित्यर्थः ॥ १० ॥

श० म० अनुसन्धानम्—कृगो० इति । प्राग्वत् पदपञ्चकमन्तर्धिश्चानुवर्तते, अव्ययस्यानुवर्तनं व्यभिचाराभावादुत्तरत्र धाराप्रवाहेणानुवृत्तिज्ञापनार्थमित्यवगम्यते, अत एवात्राव्ययस्य प्रत्युदाहरणं न दास्यति । **'तिरस्कृत्य तिरःकृत्य'** इत्यत्र गतिसंज्ञापक्षे समासादिकार्याणां नित्यत्वेऽपि "तिरसो वा" [ २. ३. २. ] इति सत्वविकल्पेन रूपद्वयम् । **'तिरस्करोति तिरः करोति'** इत्यत्र गतिसंज्ञापक्षेऽपि सत्वविकल्पेन रूपद्वयम् । गतिसंज्ञाऽभावपक्षे-**'तिरः कृत्वा** इति-अत्र गतिसंज्ञाविरहान्न समासादिः, नवा सत्वम् । 'अन्तर्धौ' इत्यनुवर्तनस्य व्यावर्त्यं दर्शयति-**तिरः कृत्वा काष्ठं गत** इति । 'तिरः' इत्यस्यार्थमाह-**तिर्यगित्यर्थ** इति-ऊर्ध्वं स्थितं काष्ठं तिर्यक् कृत्वेत्यर्थः । वाग्रहणेनापि विकल्पे सिद्धे नवाग्रहणमुत्तरत्र विकल्पानुवर्तनार्थमिति पूर्वमभिहितमेव ॥ ३. १. १० ॥

## मध्ये-पदे-निवचने-मनस्युरस्यनत्याधाने । ३ । १ । ११ ॥

त० प्र०—एतानि सप्तम्येकवचनान्तप्रतिरूपकाण्यव्ययानि, अनत्याधानेऽर्थे वर्तमानानि, कृगो धातोः संबन्धीनि गतिसंज्ञानि भवन्ति वा, तस्माच्च धातोः प्रागेव प्रयुज्यन्ते; अत्याधानम्-उपश्लेष आश्रयं च, ततोऽन्यदनत्याधानम् । मध्येकृत्य, मध्ये कृत्वा; पदेकृत्य, पदे कृत्वा; निवचनेकृत्य, निवचने कृत्वा, निवचने-वचनाभावः, वाचं नियम्येत्यर्थः; मनसिकृत्य, मनसि कृत्वा; उरसिकृत्य, उरसि कृत्वा; उभयत्र निश्चित्येत्यर्थः । अनत्याधान इति किम्? मध्ये कृत्वा धान्यराशौ स्थिता हस्तिनः, पदे कृत्वा शिरः शेते, मनसि कृत्वा सुखं गतः, उरसि कृत्वा पाणिं शेते । अव्ययमित्येव-मध्ये कृत्वा वाचं तिष्ठतीत्यादि ॥ ११ ॥

श० म० अनुसन्धानम्—मध्ये० इति । मध्ये च पदे च निवचने च मनसि च उरसि चेति समाहारो द्वन्द्वः, "द्वन्द्वैकत्वाव्ययीभावौ क्रियाव्ययविशेषणे ।" इति लिङ्गानुशासनवचनादस्य नपुंसकत्वम्, तत्र "क्लीबे" [ २. ४. ९७. ] इति प्राप्तोऽपि ह्रस्वो न विहितः संज्ञिस्वरूपभ्रंशभयात् । आचार्याश्च व्याकरणसूत्रेषु किञ्चित् प्रयोजनमपेक्ष्य लक्षणं व्यभिचारयन्ति, अवयवार्थे च द्वन्द्वे लक्षणव्यभिचारादेवाविभक्तिको निर्देशः, यद्वा पृथगेवैतानि पञ्च पदानि, अव्ययत्वाच्चोत्पन्नाया विभक्तेर्लोपो द्रष्टव्यः । नन्विमानि 'मध्ये' इत्यादीनि शब्दरूपाणि किं मध्यादिशब्दानां सप्तम्येकवचननिष्पन्नानि? उत अनुवृत्ताव्ययसान्निध्यादव्ययरूपाणि? कथं च तत्राव्ययत्वमित्याह-**एतानि सप्तम्येकवचनान्तप्रतिरूपकाण्यव्ययानीति**-प्रतिगतं-सादृश्येनानुगतं प्रतिपन्नं वा, रूपं-शब्दतत्त्वं

श्रुतिर्येषां तानि प्रतिरूपकाणि, सप्तम्याः–स्यादिगतायाः सप्तमीविभक्त्याः, एकवचनं–ङिरूपैकवचनप्रत्ययः, अन्ते येषां ते सप्तम्येकवचनान्ताः, तेषां प्रतिरूपकाणि, तानि प्रतिरूपाणि येषामिति वा–सप्तम्येकवचनान्तप्रतिरूपकाणि, "मव बन्धने" इत्यस्य "शिक्यास्याढ्यमध्य०" [ उणा० ३६४. ] इति निपातनात्–'मध्य' इति, "पदिंच् गतौ" अस्य "वर्षादयः क्लीबे" [ ५. ३. २९. ] इत्यलि–'पद' इति, "ब्रूग्क् व्यक्तायां वाचि" इत्यस्य करणाधारयोरनटि "अस्तिब्रुवो०" [ ४. ४. १. ] इति वचादेशे–'वचन' इति, वचनस्याभावो निवचनमिति "विभक्तिसमीप०" [ ३.१.३९. ] इत्यव्ययीभावसमासः, "मनिंच् ज्ञाने" अतः "अस्" [ उणा० ९५२. ] इत्यसि–'मनस्' इति, "ऋक् गतौ" अतः "अर्तेरुराशौ च" [ उणा०९६७. ] इत्यसि–'उरस्' इति, तथा च 'मध्य पद निवचन मनस् उरस्' इत्येतैर्ङिप्रत्ययान्तैस्तुल्यश्रुतीनीत्यर्थः, न तु तान्येव तदर्थाभावात्, "विभक्तिथमन्त०" [ १. १. ३३. ] इत्यव्ययत्वम् । किं सर्वेष्वर्थेषु गतिसंज्ञा ? न, किन्त्वर्थविशेष इत्याह–**अनत्याधानेऽर्थे वर्तमानानी**ति । 'धातोः प्राक् च, गतिः, अव्ययम्, कृगो नवा' इत्येतेषामनुवृत्त्या सूत्रार्थो दर्शितः । अथाभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादत्याधानज्ञानमन्तराऽनत्याधानज्ञानमशक्यमित्यत्याधानस्वरूपं बोधयितुमाह–**अत्याधानम्–उपश्लेष आश्चर्यं च, ततोऽन्यद्–अनत्याधानमि**ति–उपश्लेषणमुपश्लेषः, सन्निपत्य योगः [ अत्याधानं ] सर्वप्रकारं धारणमुच्यते, न तु संयोगमात्रम्, तथा च 'मनसि कृत्वा सुखं गतः' इत्यपि प्रत्युदाहरणं संगच्छते, संयोगमात्रे ह्युपश्लेषे 'उरसि पाणिं कृत्वा शेते' इत्येव प्रत्युदाहरणं स्यात्, 'अत्याहितमित्यद्भुते प्रयुञ्जते' इत्याश्चर्येऽपि वर्तते, आश्चर्ये यथा–'उरसि कृत्वा ब्राह्मणो नाम ब्रह्महत्यां ब्राह्मणं हतवान्' इति । एवं प्रतियोगिनि ज्ञाते सति तदभावज्ञानं सुकरमित्युक्तम्–ततोऽन्यदित्यादि ।

उदाहरति–**मध्येकृत्ये**ति–किञ्चिद् वस्तु मध्यभागगतं कृत्वेत्यर्थः, 'मध्ये'शब्दः प्रथमान्तः, अर्थश्च सप्तम्यर्थघटितः, अत्र गतिसंज्ञया समास-यबादेश-तागमाः, गतिसंज्ञाया वैकल्पिकत्वात् पक्षे न समासादय इति दर्शनायाह–**मध्ये कृत्वे**ति । एवं–**पदेकृत्य पदे कृत्वे**ति–पदगतं किञ्चिद् वस्तु कृत्वेत्यर्थः, शेषं प्राग्वत् । **निवचनेकृत्य निवचने कृत्वे**ति–नात्र सप्तम्यर्थघटना, किन्तु प्रथमार्थस्य, एतदेवाह–**निवचने वचनाभाव** इति । लुप्तद्वितीयया कर्मत्वप्रतीतिः, एवं सति निष्पन्नमर्थमाह–**वाचं नियम्येत्यर्थ** इति । **मनसिकृत्य मनसि कृत्वा, उरसिकृत्य उरसि कृत्वे**ति–अत्र सप्तम्यर्थघटितत्वम्, तद्भावार्थमाह–**उभयत्र निश्चित्येत्यर्थ** इति । अत्र केचिदेवमाहुः–मनसिकृत्य पुत्रदारं सुखमुपभुङ्क्ते, उरसिकृत्य पुत्रदारं सुखमुपभुङ्क्ते, अग्रतः कृत्वेत्यर्थ इति, अपरे तु–मनसिकृत्य परलोकं धर्ममासेवते, उरसिकृत्य पुत्रदारं धर्ममर्जयति, चित्ते निधायेत्यर्थ इति । नन्वनत्याधानविषय एवेमान्यव्ययानीत्यव्ययानुवर्तनेनैवात्याधानव्यावृत्तिसिद्धावनत्याधानग्रहणमतिरिच्यते, न ह्यत्याधानविषयेऽव्ययसंज्ञायाः किमपि प्रयोजनमस्ति, अत एव चन्द्रादयः सामान्येनैव गतिसंज्ञामाहुरिति चेत् ? न–अत्याधानेऽप्यव्ययत्वमनुमतं प्राचां, तत्रागादीनां सिद्धिरपि प्रयोजनम्, एतदेव शङ्कासमाधानाभ्यामाह–**अनत्याधान इति किमि**त्यादिना, अत्याधानेऽव्ययत्वाभावादेव न गतिसंज्ञेति शङ्काशयः, अत्याधानेऽप्यव्ययत्वमिति समाधानाशयः, **मध्ये कृत्वा धान्यराशिं** धान्यराशिमुपश्लिष्येत्यर्थः, **पदे कृत्वा** पदमुपश्लिष्येत्यर्थः, **मनसि कृत्वा सुखं** मनसि सुखं धृत्वेत्यर्थः, **उरसि कृत्वा पाणिं** उरोदेशं पाणिना उपस्पृश्येत्यर्थः । अव्ययग्रहणव्यावर्त्यं दर्शयति–**मध्ये कृत्वा वाच**मित्यादि–अन्तराले कथयित्वेत्यर्थः, अत्र मध्यशब्दस्य सप्तम्येकवचने 'मध्ये' इति रूपं, न त्वव्ययमिति ॥ ३. १. ११. ॥

## उपाजे-ऽन्वाजे । ३ । १ । १२ ॥

**त० प्र०—एते अव्यये सप्तम्येकवचनान्तप्रतिरूपके स्वभावाद् दुर्बलस्य भग्नस्य वा बलाधाने वर्तमाने कृगो धातोः संबन्धिनी गतिसंज्ञे वा भवतः, तस्माच्च धातोः प्रागेव प्रयुज्येते । उपाजेकृत्य, उपाजे कृत्वा; अन्वाजेकृत्य, अन्वाजे कृत्वा; दुर्बलस्य भग्नस्य वा बलाधानं कृत्वेत्यर्थः ॥ १२ ॥**

**श० म० अनुसन्धानम्—उपाजे०** इति । उपपूर्वादनुपूर्वाच्च "अज क्षेपणे च" इत्यस्माद् घञि, सूत्रे निपातनाच्च 'उपाजे अन्वाजे' इति सप्तम्यन्तप्रतिरूपकेऽव्यये एते, एतदाह–**एते अव्यये सप्तम्येकवचनान्तप्रतिरूपके** इति । निपातनसामर्थ्यादेव तत्र प्रकृति-प्रत्ययार्थावगतिनियमाभावात् प्रयोगस्वाभाव्यादेवार्थावगतिरित्याह–**स्वभावाद् दुर्बलस्ये**त्यादि–दुर्बलस्य बलाधानं च वचनादिना प्रोत्साहनादि, भग्नस्य–परेण पराजितस्य च बलाधानमपि तदुत्साहसम्पादनादिक्रिया, भग्नस्य रथाद्यङ्गस्याक्षादेः स्थायित्वसम्पादनाय यत् काष्ठं तेन सह योज्यते तदपि 'उपाजे अन्वाजे' इत्युच्यत इति व्याख्यातारः, तथा च तत्र बलाधानपदं करणार्थानप्रत्ययान्तं न भावप्रत्ययान्तमिति भग्नस्य बलाधायकं काष्ठं निक्षिप्येत्यर्थस्तत्र बोध्यः । शेषं सुगमम् ॥ ३. १. १२. ॥

## स्वाम्येऽधिः । ३ । १ । १३ ॥

**त० प्र०** – 'अधि' इत्येतदव्ययं स्वामित्वे गम्यमाने कृगो धातोः संबन्धि गतिसंज्ञं वा भवति, तस्माच्च धातोः प्रागेव प्रयुज्यते । चैत्रं ग्रामेऽधिकृत्याधि कृत्वा वा गतः, स्वामिनं कृत्वेत्यर्थः । स्वाम्य इति किम्? चिन्तया ग्राममधिकृत्य, उद्दिश्येत्यर्थः । सार्थकत्वे उपसर्गसंज्ञकत्वात् नित्यं प्राप्ते पक्षे प्रतिषेधार्थं वचनम्, अनर्थकत्वे तु विधानार्थम् । प्रादिरुपसर्गं इति वर्तते, तेनोपसर्गसंज्ञापि विकल्प्यत इति कृत्वाऽधीति प्राक्त्वेऽप्यनियमः ॥ १३ ॥

10 **श० म० अनुसन्धानम्**—**स्वाम्ये०** इति । संज्ञिनमाह-**अधीत्येतदव्ययमिति**-'अधि' इति चादिषु पठितत्वादव्ययम्, संज्ञिनिर्देशोऽयम् । **स्वाम्ये** इत्यस्यार्थमाह-**स्वामिभावे** इति-स्वामी-ईश्वरः, तस्य भावः--स्वाम्यं तस्मिंस्तथा, ऐश्वर्ये इत्यर्थः, अधिपूर्वः करोतिर्विनियोगे वर्तते, नाधिः 15 स्वाम्यमर्थः, विनियुक्तस्य यदा प्रकरणादिना स्वाम्यं गम्यते तदा 'अधिः' गतिसंज्ञको भवतीत्याह-**गम्यमाने** इति-केचित् तु-"स्वाम्ये-स्वामिभावविषये, विषये इति अर्थे द्योत्ये इत्यर्थः, शब्दो ह्यर्थेऽवसीयते" इत्याहुः । **चैत्रं ग्रामेऽधिकृत्य** अत्र गतिसंज्ञया समास-यबादेश-तागमाः, गतिसंज्ञाया वैकल्पिकत्वात् 20 तदभावे न समासादय इति दर्शयति-**अधि कृत्वेति** । लक्षणसमन्वयार्थमाह-**स्वामिनं कृत्वेत्यर्थ** इति । स्वामिभावानवगतौ सार्थकत्वे चास्य "धातोः पूजा०" [ ३. १. १. ] इत्युपसर्गत्वे "ऊर्याद्य०" [ ३. १. २. ] इति नित्यमेव गतिसंज्ञा भवतीत्याह-**चिन्तया ग्राममधिकृत्येति**-'स्वाम्ये' 25 इत्यस्यानुक्तौ तु प्रकृतेऽपि विकल्पेन गतिसंज्ञायां पक्षे 'अधि कृत्वा' इत्यपि प्रयोगः स्यात्, प्रकृते स्वामिभावाभावोऽर्थान्तरं चास्तीति दर्शयति-**उद्दिश्येत्यर्थ** इति । 'नवा' इति विभाषायामिति वचनाद् विभाषावगतिः, त्रिविधा विभाषा भवन्ति-प्राप्ते, अप्राप्ते, प्राप्तेऽप्राप्ते च विषये, तत्रेयं प्राप्ताप्राप्तविषय-30 विभाषा, 'प्राप्ते' इत्यत्र भावेऽधिकरणे वा क्तः-नित्यं प्राप्तौ सत्यां, प्राप्तेश्च गतिसंज्ञाया विषये, कर्तरि वा क्तः-नित्यं गतिभावे गतिसंज्ञकेऽधौ वा, एतदेव स्पष्टयति-**सार्थकत्वे** इत्यादिना । अधिशब्दो द्विविधः—सार्थको निरर्थकश्च, तत्र निरर्थकत्वं न सर्वथाऽर्थानवबोधकत्वम्, अपि तु धात्वर्थातिरिक्तार्थानवबोधक-35 त्वमिति "धातोः पूजा०" [ ३. १. १. ] इति सूत्रव्याख्यायां विवेचितम्, तत्रानर्थकस्य-गतार्थस्याधेः "धातोः पूजा०" [ ३. १. १. ] इत्युपसर्गसंज्ञा पर्युदस्ता, ततश्च सार्थकस्याधेरुपसर्गसंज्ञा सिद्धा, उपसर्गसंज्ञकानां च "ऊर्याद्यनु०" [ ३. १. २. ] इति नित्यं गतिसंज्ञा विहिता, एतदेवाह-**सार्थकत्वे उपसर्गसंज्ञ**-



**कत्वान्नित्यं प्राप्ते** इति, **पक्षे** पाक्षिकप्रवृत्तिपक्षे, **प्रति-** 40 **षेधार्थं वचनम्** अभावार्थं वचनं, न तु प्रापणार्थं, प्राप्तत्वाद् वाक्यान्तरेण, प्राप्तिश्चेन्न क्रियते किमन्यदतोऽवशिष्यते निषेधात्, नहि विधि-निषेधौ मुक्त्वाऽन्यः शाब्दो व्यापारोऽस्ति, इति निषेधपर्यवसितं प्राप्तविकल्पनम् । यदा त्वर्थप्रकरणादिना गतार्थोऽधिर्भवति तदा 'गतार्थाधिपरि' इति नोपसर्गसंज्ञेति 45 "ऊर्याद्य०" [ ३. १. २. ] इति न गतिसंज्ञाप्राप्तिरित्यप्राप्तौ विधानार्थमिदम्, एतदेवाह-**अनर्थकत्वे तु विधानार्थमिति**-अनर्थकत्वं चात्र गतार्थत्वमिति प्रागुक्तमेव, एवं चाप्राप्तविकल्पनं, तथा च प्राप्ताप्राप्तविभाषा चारुतरा ।

अथात्र 'गतिः' इत्यधिकाराद् गतिसंज्ञाविकल्पनात् 50 तत्समासविकल्पे यबादेशभावाभावौ सिद्धौ, इदं तु कथम्?-पक्षे प्राक्त्वनियमः, गतिसंज्ञासन्नियोगे 'प्राक् च' इति प्राक्त्वस्य विधानाद् गतिसंज्ञाविरहे विध्यभावादेव न नियम इति चेत्? मा भूद् गतिसंज्ञासन्नियोगशिष्टं प्राक्त्वं, गतिसंज्ञाविरहेऽप्यस्योपसर्गसंज्ञाभावात् प्राक्त्वमस्त्येवेति तेन नियमः स्यात्, अस्तु, को 55 दोष इति चेत्? अतश्च 'कृत्वाधि' इत्यादिर्न स्यात्, क्व प्रयुक्तमेतत्? न ह्येवंविधः प्रयोगो दृश्यते इति चेत्? महत्त्वात् प्रयोगविषयस्य नात्रादर्शनमभावनिश्चयायालम् । पूर्वे चाचार्या नात्र नियममाहुः, ते ह्यत्र गतिसंज्ञावदुपसर्गसंज्ञायाश्च पाक्षिकीं निवृत्तिमिच्छन्ति, उपसर्गाणां च प्राक्प्रयोगनियम इत्याह-**प्रादिरुप-** 60 **सर्ग इति वर्तत** इति, अनुवर्तनप्रयोजनमाह-**तेनोपसर्गसंज्ञापी**त्यादिना, अयमाशयः-स्वाम्येऽधिः कृगो गतिर्भवति वा, उपसर्गसंज्ञश्च भवति वा, इति न केवलं गतिसंज्ञैव विकल्प्यते किन्तूपसर्गसंज्ञापि, तस्मादुपसर्गसंज्ञासन्नियोगशिष्टमपि प्राक्त्वं पक्षे नेति कृत्वा कृत्वाधीति प्राक्त्वेऽप्यनियमः, न केवलं समास 65 एवेति । अथ प्रादिरित्यस्यानुवृत्तिः किमर्था? येन तदुपन्यासः क्रियते, उच्यते-यद्युपसर्ग इत्यनुवर्तते तदा "ऊर्याद्य०" [ ३. १. २. ] इत्यादावप्युपसर्गसंज्ञा स्यात्, ततश्च 'ऊरी स्यात्' इत्यादौ "प्रादुरुपसर्गा०" [ २. ३. ५८. ] इति षत्वं प्रसज्येत, तन्निवृत्त्यर्थमुच्यते प्रादिरिति । एतत् स्वाम्यावगतावेव भवेन्ना- 70 न्यत्र सार्थकनिरर्थकयोरिति तस्यावश्यकत्वमिति ॥ ३. १. १३. ॥

## साक्षादादिश्च्व्यर्थे । ३ । १ । १४ ॥

**त० प्र०** – साक्षादादयः शब्दाश्च्व्यर्थे वर्तमानाः कृगो धातोः सम्बन्धिनो गतिसंज्ञा वा भवन्ति, तस्माच्च धातोः प्रागेव प्रयुज्यन्ते । साक्षात्कृत्य, साक्षात् कृत्वा, असाक्षाद्भूतं 75 साक्षाद्भूतं कृत्वेत्यर्थः; एवं-मिथ्याकृत्य, मिथ्या कृत्वा । च्व्यर्थ इति किम्? यदा साक्षाद्भूतमेव किंचित् करोति तदा साक्षात् कृत्वेत्येव भवति । च्व्यन्तानां तु-"ऊर्या०" [ ३. १. २. ]-

दिसूत्रेण नित्यमेव गतिसंज्ञा,-लवणीकृत्य, उष्णीकृत्य। साक्षात्, मिथ्या, चित्ता, भद्रा, रोचना ५, लोचना, अमा, आस्था, अग्धा, प्राजर्या १०, प्राजुरा, प्राजरुहा, बीजर्या, बीजरुहा, संसर्पा १५, अर्थे, अग्नौ, वशे, विकपने, प्रकपने 5 २०, विसहने, प्रसहने; अर्थेप्रभृतयः सप्तम्येकवचनान्तप्रतिरूपकाः स्वभावात् निपातनाद् वा; लवणम्, उष्णम्, शीतम् २५, उदकम्, आर्द्रम्; लवणादीनामेतत्सूत्रविहितगतिसंज्ञासंनियोग एव मान्तत्वं निपात्यते; प्रादुस्, आविस्, नमस् ३० इति साक्षादादिः ॥ १४ ॥

10 श० म० **अनुसन्धानम्—साक्षा०** इति। 'साक्षात्' शब्द आदिर्यस्य स साक्षादादिः, तदाह-**साक्षादयः शब्दा** इत्यादि-आदिशब्दो व्यवस्थावाची, तथा गणपाठात्। **च्व्यर्थे वर्तमाना** इति-च्विप्रत्ययो हि "कृ-भ्वस्तिभ्यां०" [७. २. १२६.] इति सूत्रेण प्रागतत्तत्त्वे 15 विधीयते, प्राग्-पूर्वम्, अतस्य, तत्त्वे-अभूततद्भावे गम्यमाने इति तदर्थः, द्रव्यस्य गुण-क्रिया-द्रव्य-सम्बन्ध-समूह-विकारयोगे सति प्रागतत्तत्त्वं भवतीति भावः, तत्रार्थे वर्तमानानामेषां गतिसंज्ञा विधीयते। उदाहरति-**साक्षात्कृत्य** अत्र गतिसंज्ञया समास-यबादेश-तागमाः, वैकल्पिकत्वात् पक्षे गतिसंज्ञाया अभावे 20 न समासादिरित्याह-**साक्षात् कृत्वा,** लक्षणसमन्वयायार्थमाह-**असाक्षाद्भूतं साक्षाद्भूतं कृत्वेत्यर्थ** इति। अतिदिशति-**एवं मिथ्याकृत्य मिथ्या कृत्वेति**-अमिथ्याभूतं मिथ्याभूतं कृत्वेत्यर्थः, शेषं प्राग्वदवसेयमिति। ननु साक्षादादयश्च्व्यर्थे वर्तन्त एवेति तदर्थं 'च्व्यर्थे' इत्यतिरिच्यत 25 इत्याशङ्कते-**च्व्यर्थ इति किमिति**। समाधत्ते-**यदा साक्षाद्भूतमि**त्यादिना, अभूततद्भावाभावान्नात्र च्व्यर्थः, 'च्व्यर्थे' इत्यनुक्तौ त्वत्रापि गतिसंज्ञया समासादिः प्रसज्येतेत्यर्थः।

साक्षादादि द्विविधं-च्व्यर्थमच्व्यर्थं च, च्व्यर्थमपि द्विविधं-च्व्यन्तमच्व्यन्तं च, च्विविधेः पाक्षिकत्वाच्चित्रत्वात् तद्धितवृत्तेः, 30 अच्व्यर्थमपि द्विविधं-भाव्यसाक्षादादित्ववृत्ति उपलक्षणसाक्षादादित्ववृत्ति च, तत्र यद्यपि धातोः कृग इति च षष्ठ्यधिकारादन्तरङ्गत्वाच्च साक्षादाद्यर्थभावनायां करोतिसम्बन्धस्योपलक्षणसाक्षादादित्ववृत्तिनिवृत्तिः शक्यते प्रतिपत्तुं, नहि साक्षात् सन्तं किञ्चित् करोतीत्युपलक्षणे साक्षादादित्वे कृगः साक्षाद्यर्थेन न 35 योगोऽस्ति, भवंश्च धर्मोऽन्तरङ्गो द्व्यव्यवहितोऽपि बहिरङ्गः, न चान्तरङ्गे सति बहिरङ्गे प्रतिपत्तिर्भवतीति; तथापि भाव्यसाक्षादादित्ववृत्तिनि तु प्राप्नोति, तस्य कृसम्बन्धित्वादन्तरङ्गत्वाच्च तत्सम्बन्धस्य, न च तदर्थभावनायां च्व्यर्थतैव, उपात्तप्रकृतिर्हि यदोत्तरावस्थाभावना विवक्ष्यते तदा च्व्यर्थता भवति, तथा च 40 च्विविधानं प्रागतत्तत्त्वे च्विरिति, अतस्तन्निवृत्त्यर्थमर्थग्रहणं कर्तव्यमिति भावः। ननु यत्र साक्षादादेश्च्विप्रत्ययो विधीयते तत्र लवणीकृत्येत्यादावपि च्व्यर्थोऽस्तीति परत्वादनेन विकल्पेनैव गतिसंज्ञया भवितव्यम्, तथाहि-'शुक्लीकृत्य विमलीकृत्य' इत्यादौ "ऊर्याद्यनुकरणच्वि०" [३. १. २.] इत्यस्यावकाशः, अच्व्यन्ते च्व्यर्थे 'साक्षात्कृत्य' इत्यादौ चास्य "साक्षादादि- 45 श्च्व्यर्थे" [३. १. १४.] इत्यस्यावकाशः, च्व्यन्तेऽपि च्व्यर्थस्य विद्यमानत्वाद् 'लवणीकृत्य' इत्यादौ च्व्यन्ते "स्पर्धे" [७. ४. ११९.] इत्यनेन परत्वादनेन सूत्रेण विकल्पेन गतिसंज्ञया भवितव्यमिति, तन्नेत्याह-**च्व्यन्तानां तु ऊर्यादिसूत्रेणे**त्यादि-अलवणं लवणम्, अनुष्णमुष्णं च कृत्वेति "कृभ्व- 50 स्तिभ्यां०" [७. २. १२६.] इति च्विः, चकारवकारेकारा अप्रयोगित्वादपगच्छन्ति, "ऊर्याद्य०" [३. १. २.] इति नित्यं गतिसंज्ञया समास-यबादेश-तागमाः, "ईश्च्वावर्णस्य" [४. ३. १११.] इत्यकारस्येकारे-**लवणीकृत्य, उष्णीकृत्येति,** अत्रापि विकल्पे प्रकृतसूत्रेऽर्थग्रहणस्य वैयर्थ्यमापद्येत, 55 एतादृशप्रयोगे प्रायः सर्वत्र च्विप्रत्ययप्रवृत्तेः, ननु च्विमन्तरा यत्र साक्षादादिश्च्व्यर्थे वर्तते तत्र केन गतिसंज्ञा स्यात्? तदर्थं 'च्व्यर्थे' इत्यस्यावश्यकत्वान्न वैयर्थ्यमर्थग्रहणस्येति चेत्? इदं गृहाण-'च्व्यर्थे' इत्यस्य *सर्वं वाक्यं सावधारणम्* इति न्यायबलेन 'च्वेः-च्विप्रत्ययस्य अर्थे एव, न तु च्विप्रत्ययान्तत्वे' 60 इत्यर्थस्याश्रयणान्न कश्चिद् दोष इति। ननु "साक्षादाद्यच्वि" इत्येव सूत्र्यताम्, 'अच्वि' इत्यत्र पर्युदासाश्रयणाच्च च्व्यन्तभिन्नं च्व्यन्तसदृशं गृहीष्यते, सादृश्यं च प्रागतत्तत्त्वरूपेणेति सर्वं समञ्जसमिति चेत्? सादृश्यं केन रूपेण ग्राह्यमित्यत्र किं नियामकम्?, एवं च प्रतिपत्तिगौरवं स्यात्, तदपेक्षया 'च्व्यर्थे' 65 इत्येव चारु। किञ्च यत्र च्व्यर्थप्रतीतिस्तत्र च्वौ सति परत्वादनेन विकल्पे प्राप्तेऽपि *पुनः प्रसङ्गविज्ञान*न्यायेन नित्यविधिर्भवति, स्पष्टं चेदं "साक्षात्प्रभृतीनि च" [पा० १. ४. ७३.] इति सूत्रे कैयटे।

अथ साक्षादादिगणमाह—**साक्षादि**त्यादि। सम्पूर्वादी- 70 क्षतेः "संश्चद्-वेहत्-साक्षादादयः" [उणा० ८८२.] इति निपातनात् कप्रत्यये साक्षाभावे च-**साक्षात्** सादृश्यप्रत्यक्षयोः, सादृश्ये यथा-साक्षान्मघवतः पुत्रमिति, प्रत्यक्षे यथा-साक्षाद् द्रष्टेति। "मिथृग् मेधा-हिंसयोः" इत्यतः "वृ-मिथि०" [उणा० ६०१.] इत्यादिना किप्रत्यये यागमे च-**मिथ्या** 75 अनृते। "चितै संज्ञाने" अतः "शी-री०" [उणा० २०१.] इति किति ते, अत एव गणपाठान्निपातनादात्वे-**चित्ता** मानसे व्यापारे, अचित्ता चित्ता कृत्वा-चित्ताकृत्य, चित्ता कृत्वा, अव्ययत्वादसमासेऽपि विभक्त्यश्रवणम्, अव्ययत्वं च स्वरादेराकृतिगणत्वात्, एवमुत्तरत्रापि। "भदुङ् सुखकल्या- 80

णयोः" इत्यतः "भन्देर्वा" [ उणा० ३९१. ] इति रे नलुकि, अत एव निपातनादाकारे च-**भद्रा** आलोचना-प्रशंसयोः, अभद्रा भद्रा कृत्वा-भद्राकृत्य भद्रा कृत्वा, केचिद्-अभद्रां भद्रां कृत्वेति विग्रहे विभक्तिमुच्चरन्ते, केषाञ्चिदभद्रं भद्रं कृत्वेत्यनाकारान्तेन विग्रहः, आलोच्य प्रशस्तं वा सुष्ठु कृत्वेत्यर्थः । "रुचि अभिप्रीत्यां च" अतः करणाधारेऽनटि ण्यन्तान्नन्त्यादित्वादने "ध्वसि-रसि-रुचि०" [ उणा० २६९. ] इत्यने वा, अत एव पाठादात्वे च-**रोचना** प्रशंसायाम्, रोचनाकृत्य रोचना कृत्वा, 'लोचना' इति केषांचित् पाठः । नञ्पूर्वान्मातेः "डित्" [ उणा० ६०५. ] इत्याकारे-**अमा** सहार्थे समीपे च, अमाकृत्य, अमा कृत्वा । आङ्पूर्वात् तिष्ठतेः "उपसर्गादातः" [ ५. ३. ११०. ] इत्यङि-**आस्था** आदरे प्रतिज्ञायां च, अनास्थां आस्थां कृत्वेति विग्रहः केषाञ्चित्, अनास्थामास्थां कृत्वेति परेषाम्, आस्थाकृत्य, आस्था कृत्वा । "घस्लृं अदने" इत्यस्य के नञ्समासे-**'अग्धा'** इति छान्दसं रूपम्, तथा च शालातुरीयः-"तनिपत्योश्छन्दसि घसिभसोर्हलि च" इति हलि छन्दस्युपधालोपमाह, भाषायां च केचिदुदाहरन्तीत्याचार्येणेह पठितः, अत एव पाठात् साधुः, अग्धाकृत्य, अग्धा कृत्वा । "जॄष् वयोहानौ" अतः "संगतेऽजर्यम्" [ ५. १. ५. ] इति निपातनाद् यप्रत्ययः, तस्य प्रादिसमासः, अत एव पाठादाकारे-**प्राजर्या,** प्राजर्याकृत्य प्राजर्या कृत्वा । प्रपूर्वाद् "अक्षौप् व्यक्ति-म्रक्षण-गतिषु" इत्यस्य "श्वशुर०" [ उणा० ४२६. ] इत्यत्रादिग्रहणात् किदुरप्रत्यये नलोपे, अत एव पाठादाकारे च-**प्राजुरा,** प्राजुराकृत्य प्राजुरा कृत्वा । "अज क्षेपणे च" प्रपूर्वादतो घञि अचि वा 'प्राज' इति, "रुहं जन्मनि" स्यादित्वाद् भात्राकर्त्रोर्मूलविभुजादित्वाद् वा कर्तरि के, अत एव पाठादाकारे च-**प्राजरुहा,** प्राजरुहाकृत्य प्राजरुहा कृत्वा । "वींक् प्रजन-कान्त्यसन-खादनेषु च" अतः "वियो जक्" [ उणा० १२७. ] इति जकि बवयोरैक्याद् 'बीज' इति, "ऋक् प्रापणे च" अतः "ऋवर्ण०" [ ५. १. १७. ] इति घ्यणि-'आर्य' इति, "स्वामि-वैश्येऽर्यः" [ ५. १. ३३. ] इति वा ये-'अर्य' इति, बीजेन आर्यः, बीजस्य वा अर्य इति समासेऽत एव पाठाद् ह्रस्वे आकारे च-**बीजर्या,** बीजर्याकृत्य बीजर्या कृत्वा । बीजाद् रोहतीति बीजपूर्वाद् रुहेर्मूलविभुजादित्वात् कप्रत्ययेऽत एव पाठादाकारे च-**बीजरुहा,** बीजरुहाकृत्य बीजरुहा कृत्वा । सम्पूर्वात् "सृप्लृं गतौ" इत्यतो भावे घञि, अत एव पाठादाकारे-**संसर्पा** [ विपादिका ], संचरणे हि दृश्यते, संसर्पाकृत्य संसर्पा कृत्वा । केचित् तु 'संसर्पा अर्थे' इत्याहुः, अर्थे-प्रयोजने, 'संसर्पा' इत्यस्य 'अर्थे' इत्यर्थनिर्देशोऽत्रै-वार्थेऽयं गतिसंज्ञो नान्यत्रेति नियमार्थः, अनिर्दिष्टार्थस्त्वनियमेन यथासम्भवमर्थे भवतीति तदाशयः, अपरे तु 'अर्थे' इति न 'संसर्पा' इत्यस्यार्थनिर्देशः, पृथगेवेदमव्ययं गतिसंज्ञम्, 'संसर्पा' इति हि संचरणे दृश्यते, इति द्वितीयमेव दर्शनं व्याप्तिकामेन वृत्तावुपन्यस्तम्, 'अर्थेप्रभृतयः सप्तम्येकवचनान्तप्रतिरूपकाः' इति, व्याप्तौ ह्यतिप्रसङ्गेऽभिधानतो व्यवस्था भविष्यति, विषय-सङ्कोचे तु सम्भविन्यतिरेके तत्राप्यशब्दता प्रसज्येतेति । संसर्पाकृत्य संसर्पा कृत्वा, प्रयोजनीकृत्य संवृत्य वेत्यर्थ इति प्रभाचन्द्रः । "ऋक् गतौ" अतः "कमि० [ उणा० २२५. ] इति थे 'अर्थ' इति जीवाजीवादिपदार्थे प्रयोजनेऽभिधेयो धने याच्ञायां निवृत्तौ च वर्तते, यद्वा "अर्थणि उपयाचने" अतोऽलि-'अर्थ' इति स्वभावान्निपातनाद् वा एत्वं, विभक्त्यन्तप्रतिरूपकत्वाच्चाव्ययत्वम्-**अर्थे,** एवमुत्तरत्रापि द्रष्टव्यम्, अर्थेकृत्य अर्थे कृत्वा । "अग कुटिलायां गतौ" इत्यतः "वी-पु०" [ उणा० ६७७. ] इति निप्रत्ययेऽत एव निपातनाद् औत्वे-**'अग्नौ'** इति तैक्ष्ण्ये, अग्नौकृत्य अग्नौ कृत्वा । "वन भक्तौ" अतः "कृ-त्रु०" [ उणा० ५८२. ] इति किति शे न लोपे प्राग्वदेकारे च-**'वशे'** इत्यस्वातन्त्र्ये, वशेकृत्य वशे कृत्वा । "कपुङ् चलने" अतो विपूर्वात् प्रपूर्वाच्च करणाधारेऽनटि, अतो निपातनान्नलोपे एत्वे च-**विकपने प्रकपने** वैरूप्ये, 'विकपने हिंसायां, प्रकपने संतापे' इत्येके, विकपनेकृत्य विकपने कृत्वा, प्रकपनेकृत्य प्रकपने कृत्वा । "षहिं मर्षणे" अतो विपूर्वात् प्रपूर्वाच्चानटि, अतो निपातनादेकारे "असोङ०" [ २. ३. ४८. ] इति षत्वाभावे च-**विसहने प्रसहने** उत्साहे सामर्थ्ये च, विसहनेकृत्य विसहने कृत्वा, प्रसहनेकृत्य प्रसहने कृत्वा । अर्थेप्रभृतयः सप्तम्येकवचनान्ता इति कश्चित् प्रतिपद्येत, रूपसादृश्यात्, तत्प्रतिपत्तौ च समासे स्यादेर्लुपि 'अर्थेकृत्य' इत्याद्येकारान्तं रूपं न सिध्येत्, अतस्तन्निराकरणायाह-**अर्थेप्रभृतय** इत्यादि । ननु सप्तम्येकवचनमन्तरा कथं तदन्तप्रतिरूपकत्वमित्याह-**स्वभावान्निपातनाद्** वेति-स्वभावात्-एतादृशाखण्डशब्द-स्वीकारात्, निपातनाद् वा-साक्षादादिगणे तादृशानुपूर्व्या विन्यासाद् वेत्यर्थः । लीयतेः क्रियतेः लूयतेर्वा "चिक्कण०" [ उणा० १९०. ] इति निपातनात् किदणप्रत्यये लवादेशेऽत एव पाठान्मान्तत्वे च-**'लवणम्'** इति रुच्यर्थे, लवणकृत्य लवणं कृत्वा । "उषू दाहे" अतः "घृ-वी०" [ उणा० १८३. ] इति किति णेऽत एव निपातनान्मान्तत्वे-**'उष्णम्'** इति अभिनवे, उष्णकृत्य उष्णं कृत्वा । "शीङ्क् स्वप्ने" अतः "शी-री०" [ उणा० २०१. ] इति किति तेऽत एव निपातनान्मान्तत्वे-**'शीतम्'** इत्यनादरे, शीतकृत्य शीतं कृत्वा । "उन्दैप् क्लेदने" अतः "मु-धू०" [ उणा० २९. ] इति किति अके नलोपेऽतो निपातनान्मान्तत्वे च-**'उदकम्'** इति क्लेदे

प्रस्रवे च, उदकक्रूत्य उदकं कृत्वा । "अर्द गतियाचनयोः" अतः "चि-जि०" [ उणा० ३९२. ] इति रे दीर्घेऽत एव निपातनान्मान्तत्वे च-**'आर्द्रम्'** इति सरसेऽभिनवे च, आर्द्रक्रूत्य आर्द्रं कृत्वा । लवणादीनां मान्तत्वे निपातितेऽमान्तप्रयोगस्य का गतिरित्याह-**लवणादीनामि**त्यादि, ऊर्यादिसूत्रेण च्व्यन्तस्य गतिसंज्ञायां न मान्तत्वं, तेन लवणीकृत्येत्येव भवति । **'प्रादुस् आविस्'** इति तु प्राक् साधितौ, प्राकाश्ये वर्तेते, प्रादुष्कृत्य प्रादुष्कृत्वा, आविष्कृत्य, आविष्कृत्वा, अत्र "निर्दुर्बहिराविष्०" [ २. ३. ९. ] इति षत्वं भवति । 'प्रादुस्-आविस्' शब्दयोरूर्यादिषु पाठः कृगोऽन्यत्र नित्यार्थः, साक्षादादिषु कृगि विकल्पार्थ इति । "णमं प्रह्वत्वे" अतः "अस्" [ उणा० ९५२. ] इत्यसि-**'नमस्'** इति प्रणामे, नमस्कृत्य नमस्कृत्वा, अत्र सस्य रत्वेऽपि "नमस्-पुरसो गतेः०" [ २. ३. १. ] रस्य सत्वम्, गतेरन्यत्र 'नमः कृत्वा, नमःकृत्वा' इति विसर्गो जिह्वामूलीयश्च । **इति साक्षादादिः** इतिशब्दः समाप्तिद्योतकः, तथा च साक्षादादिगणः समाप्त इत्यर्थः ॥ ३. १. १४. ॥

## नित्यं हस्ते-पाणावुद्वाहे । ३ । १ । १५ ॥

**त० प्र०**—'हस्ते, पाणौ' इत्येतौ सप्तम्येकवचनान्तप्रतिरूपकावव्ययौ, सप्तम्यन्तावनव्ययावित्येके; तावुद्वाहे-दारकर्मण्यर्थे गम्यमाने कृगो धातोः संबन्धिनौ गतिसंज्ञौ नित्यं भवतः, तस्माच्च धातोः प्राक् प्रयुज्येते । हस्तेकृत्य, पाणौकृत्य, भार्यां कृत्वेत्यर्थः । उद्वाह इति किम् ? हस्ते कृत्वा कार्षापणं गतः । नित्यग्रहणाद् वानिवृत्तिः ॥ १५ ॥

**श० म० अनुसन्धानम्**—नित्यं० इति । "हसे हसने" अतः "दम्यमि०" [ उणा० २००. ] इति ते-'हस्त' इति करे नक्षत्रे च वर्तते, "पणि व्यवहार-स्तुत्योः" अतः "कमि-वमि०" [ उणा० ६१८. ] इति णिति इप्रत्यये-'पाणि' इति करे वर्तते, नन्वेतयोः सप्तम्येकवचने 'हस्ते, पाणौ' इति यद्रूपं भवति तदेव सूत्रे उपात्तमन्यद् वेत्याह-**'हस्ते पाणौ' इत्येतौ सप्तम्यन्तैकवचनान्तप्रतिरूपकाव्ययाविति**-नेमौ सप्तम्यन्तैकवचनान्तौ, अपि तु तत्सदृशावव्ययौ, "विभक्तिथ०" [ १. १. ३३. ] इत्यव्ययत्वं च, "पुरोऽस्तमव्ययम्" [ ३. १. ७. ] इत्यतोऽनुवर्तमानमव्ययमित्यनुषज्यते । अत्र मतान्तरमाह-**सप्तम्यन्तावनव्ययावित्येके** इति-ननु यदि सप्तम्यन्तावेव स्यातां को दोषः ? तत्र हि नामार्थः सप्तम्यर्थश्चोद्वाहोपलक्षणं भविष्यतीति चेत् ?, उच्यते-सप्तम्यन्तत्वे समासे स्यादेर्लुक् प्रसज्येत, न चोच्चारणसामर्थ्यान्न भविष्यतीति वाच्यम्, सप्तम्यर्थे गतिसंज्ञा यथा स्यादिति विषयप्रदर्शनार्थत्वात् त्यायन्तेऽसमासे श्रवणार्थत्वाच्च, "अव्ययस्य" [ ३. २. ७. ] इति च स्यादेर्लुक् अव्ययादुत्पन्नस्य, न चात्र पूर्वमव्ययम्, किं तर्हि ? समुदायः, तस्य गतित्वात्, अथापि लुक् स्यात्, विषयार्थमेवास्तु, न च तद्रूपनिवृत्तेः संज्ञानिवृत्तिः, एकदेशविकृतस्यानन्यत्वादिति । उद्वाहस्य लोके भार्यात्वेन स्वीकारे प्रयोगादाह-**उद्वाहे-दारकर्मणी**ति । उदाहरति-**हस्तेकृत्य, पाणौकृत्ये**ति-अत्र गतिसंज्ञया प्राग्वत् समास-यबादेश-तागमाः । लक्षणसमन्वयायार्थमाह-**भार्यां कृत्वेत्यर्थ** इति । उद्वाहग्रहणव्यावृत्तिं दर्शयति-**हस्ते कृत्वा कार्षापणं गत** इति-अत्रोद्वाहाभावेन गतिसंज्ञाविरहान्न तत्प्रयुक्तसमासादिः, स्वीकारमात्रे गतिसंज्ञामिच्छतां मते तु स्वकीयं परकीयं वा कार्षापणमिति नियमाभावान्न गतिसंज्ञा, स्वकीयनिर्णये तु स्यादिति विशेषः । नित्यमिति कथनाभावेऽपि 'सर्वं वाक्यं सावधारणम्' इति नियमान्नित्यत्वे लब्धे नित्यग्रहणस्य वैयर्थ्यमाशङ्क्याह-**नित्यग्रहणाद् वानिवृत्तिरि**ति-तथा च विकल्पप्रकरणनिवृत्त्यर्थत्वमेव नित्यग्रहणस्येति भावः ॥ ३. १. १५. ॥

## प्राध्वं बन्धे । ३ । १ । १६ ॥

**त० प्र०**—'प्राध्वम्' इत्येतन्मकारान्तमव्ययमानुकूल्ये वर्तते, तच्चानुकूल्यं यदा बन्धहेतुकं भवति तदा बन्ध इत्युच्यते, अनेकार्थत्वाद् वा निपातानां मुख्य एवास्य बन्धोऽर्थः, तत्र वर्तमानः 'प्राध्वं'शब्दः कृगो धातोः संबन्धी गतिसंज्ञो भवति, तस्माच्च धातोः प्रागेव प्रयुज्यते । प्राध्वंकृत्य, बन्धनेनानुकूल्यं कृत्वेत्यर्थः । बन्ध इति किम् ? प्राध्वं कृत्वा शकटं गतः ॥ १६ ॥

**श० म० अनुसंधानम्**—प्राध्वं० इति । "अत सातत्यगमने" अतः "अतेर्ध च" [ उणा० ९०९. ] इति क्वनिपि धान्तादेशे च-'अध्वन्' इति, अध्वानं प्रगत इति प्रादिसमासे "उपसर्गादध्वनः" [ ७. ३. ७९. ] इत्यत्समासान्ते यौगिकः 'प्राध्व' इति शब्दो भवति, तस्यैव स्वातन्त्र्येणाखण्डस्यैव वानेन मान्तनिपातने-**'प्राध्वम्'** इति, विभक्त्यन्तप्रतिरूपकत्वाच्चाव्ययत्वम्, एतदेवाह-**प्राध्वमित्येतन्मकारान्तमव्ययमि**ति । निपातनस्येष्टविषयत्वादाह-**आनुकूल्ये वर्तत** इति । आनुकूल्यवृत्तेः कथं 'बन्धे' इति विशेषणमित्याह-**तच्चानुकूल्यमि**त्यादि-बन्धो बन्धनं हेतुर्निमित्तमस्य तद् बन्धहेतुकम्, यदा बन्धनेनानुकूल्यं क्रियते तदा कार्यकारणयोरभेदोपचारात् तद् बन्ध इत्युच्यते, यद्धि यद्धेतुकं तत् तद्व्यपदेशं लभते, यथा-पुरातनं कर्मानुभुज्यत इति । अयमाशयः-आनुकूल्यं हि स्वेष्टप्रकारेण प्रवृत्तिः, सा च प्रार्थना-दान-मान-सामाद्युपायैरपि कर्तुं शक्यत एवेति यत्र बन्धनिमित्तकमानुकूल्यं विवक्षितं स्यात् तत्रैवानेन गतिसंज्ञा विधेया, तत्र प्राध्वमित्यस्यानुकूल्यार्थे

वृत्तावपि बन्धनिमित्तस्यानुकूल्यस्य बन्धत्वोपचाराद् 'बन्धे' इति प्राध्वंशब्दस्यार्थतया निर्देष्टुं शक्यत इति । एवमुपचारकल्पनाया जघन्यवृत्तित्वमाशङ्क्याह-**अनेकार्थत्वाद् वा निपातानामि**त्यादि-यदुक्तम्--

"निपाताश्चोपसर्गाश्च धातवश्चेत्यमी त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥" इति,

वक्ष्यमाणप्रयोगार्थे चानुकूल्योक्तिस्त्वस्मिन् पक्षे प्रयोगस्वभावलब्धार्थकथनं, न शब्दवाच्यार्थकथनम् । उदाहरति-**प्राध्वङ्कृत्य** अत्र गतिसंज्ञया समास-यबादेश-तागमाः, एतदर्थमाह-**बन्धनेनानुकूल्यं कृत्वेत्यर्थ** इति । **प्राध्वं कृत्वा शकटं गत** इति-प्रगतमध्वानं प्राध्वम्, अध्वगमने समर्थमध्वाभिमुखं वा कृत्वेत्यर्थः, नात्र बन्धो बन्धस्य हेतुता वास्ति, प्राध्वशब्दत्वेन विभक्त्यन्तप्रतिरूपकाभावान्न वाऽव्ययत्वम्, यद्यप्यत्राऽव्ययमित्यनुवृत्त्या लक्षणप्रतिपदोक्तन्यायेन वा निवृत्तिः शक्यते कर्तुम्, अव्ययं हि निपातनादेव सिद्धिमश्नुवानं प्रतिपदोक्तं भवति, नेतरत्, तथाप्यवश्यं यदानुकूल्यमात्रे वर्तते, न बन्धहेतुमुपादत्ते तदा तन्निवृत्त्यर्थं बन्धग्रहणं कर्तव्यम्, तत्राप्यधिकारन्यायानपेक्षं व्यावृत्तिः सिद्धेत्यस्योपन्यासः । केचिदाहुः-अनेनैतज्ज्ञापयति-लाक्षणिकस्यापि सति बन्धने गतिसंज्ञेयं भवतीति, तन्नेदमपि सिद्धं भवति-प्राध्वङ्कृत्य शकटं गत इति, यथा बन्धनेन शकटस्याध्वनि सामर्थ्यमध्वाभिमुखता वा विवक्ष्यत इति, तत्र मकारश्चिन्त्यः, समासे हि स्यादेर्लुग् भवति, यथा जीविकाकृत्येति, बन्धनेनानुकूल्यमात्रवृत्तिनिवृत्तिलक्षणे फलान्तरे संभविनि कथं ज्ञापकं भविष्यतीति ॥ ३. १. १६. ॥

## जीविकोपनिषदौपम्ये । ३ । १ । १७ ॥

**त० प्र०**—जीविकोपनिषच्छब्दौ औपम्ये गम्यमाने कृगो धातोः संबन्धिनौ गतिसंज्ञौ भवतः, तस्माच्च धातोः प्रागेव प्रयुज्येते । जीविकाकृत्य, उपनिषत्कृत्य, जीविकामिवोपनिषदमिव कृत्वेत्यर्थः । औपम्य इति किम्? जीविकां कृत्वा, उपनिषदं कृत्वा गतः ॥ १७ ॥

**श० म० अनुसन्धानम्—जीवि०** इति । "जीव प्राणधारणे" अतो "नाम्नि पुंसि च" [५. ३. १२१.] इति नाम्नि स्त्रियां णके "अस्या०" [२. ४. १११.] इत्यस्येकारे च-जीविका, "षद्लृं विशरणगत्यवसादनेषु" अतः सम्पदादित्वात् क्विपि "सदोऽप्रतेः०" [२. ३. ४४.] इति षत्वे च-उपनिषद्, जीविका च उपनिषच्चानयोः समाहार इति **जीविकोपनिषद्**, सौत्रत्वात् समासान्तविधेरनित्यत्वाद् वा "चवर्गद०" [७. ३. ९८.] इत्यत् समासान्तो न विहितः । उपमानमुपमा भिदादित्वादङ्, उपमैव औपम्यं भेषजादित्वाट्ट्यण्, तस्मिंस्तथा, उपमाया भाव इति केचिद् विगृह्णन्ति, तन्न चारु-उपमाशब्दस्य भावार्थाभिधायित्वेन ततः पुनर्भावार्थे प्रत्ययविधानस्यायुक्तत्वात्, उपमानोपमेयभावसम्बन्धपरत्वमपि प्रत्ययान्तस्य न युक्तम्, प्रयोगे तदप्रतीतेः । तत्र जीविका जीवनार्थावश्यकाशनाच्छादनाद्युपायः, "उपनिषत् तु वेदान्ते, रहस्यधर्मयोरपि" इति, अयं च शब्द आत्मज्ञानोपायवर्णनपरवेदान्तभागे सुप्रसिद्धः, उप-समीपे आत्मज्ञानस्य, निषीदति-स्थितिमाप्नोत्यनयेति तत्र विग्रहः । अत्रौपम्येन जीविकावदवश्यकर्तव्यत्वम्, उपनिषत्समं रहस्यभूतत्वं च विवक्षितम् । उदाहरति-**जीविकाकृत्य, उपनिषत्कृत्य,** इति, एतयोरर्थमाह-**जीविकामिवोपनिषदमिव कृत्वेत्यर्थ** इति-यद्यपि उपनिषदां नित्यत्वमामनन्त्यौपनिषदाः केचित्, इति तासां कृतिविषयत्वं नोचितं तथापि तन्मते ब्रह्मातिरिक्तस्य सर्वस्य जगतो मिथ्यात्वेन जन्यत्वमेवेति सिद्धान्तमनुसृत्य तासां कृतिविषयत्वं वक्तुं शक्यते, यदा तु रहस्यमात्रपरत्वमुपनिषच्छब्दस्य, तदा तु समुचित एवायं प्रयोग इति विज्ञेयम् । **जीविकां कृत्वा उपनिषदं कृत्वा गत** इति-अत्र वस्तुत एव जीविकायाः करणम्, उपनिषदश्च विधानं बोध्यत इत्यौपम्याभावः, तेन च गतिसंज्ञाविरहान्न समास-यबादेश-तागमाः, समाप्तं गतिसंज्ञाप्रकरणमिति ॥ ३. १. १७. ॥

## नाम नाम्नैकार्थ्ये समासो बहुलम् । ३ । १ । १८ ॥

**त० प्र०**—नाम नाम्ना सहैकार्थ्ये-एकार्थीभावे सति समाससंज्ञं भवति बहुलम् । ऐकार्थ्यं च सामर्थ्यविशेषः, स च पृथगर्थानां पदानां क्वचित् परस्परव्यपेक्षालक्षणं सामर्थ्यमनुभूय भवति, यथा-राज्ञः पुरुषो राजपुरुषः, नीलं च तदुत्पलं च नीलोत्पलम् । क्वचिदननुभूयैव भवति, यथा-उपकुम्भम्, कुम्भकारः; वाक्यान्तरेण त्वर्थः प्रदर्श्यते-कुम्भस्य समीपं, कुम्भं करोतीति । क्वचिन्न भवत्येव, यथा-छात्राणां पञ्चमः, रामो जामदग्न्य इति । लक्षणं चेदमधिकारश्च, तेन बहुव्रीह्यादिविशेषसंज्ञाऽभावे यत्रैकार्थता दृश्यते तत्रानेनैव समाससंज्ञा भवति-विस्पष्टं पटुः-विस्पष्टपटुः; विचित्रं कटुकः-विचित्रकटुकः; एवं-विविक्तकषायः, व्यक्तलवणः, संपन्नमधुरः, पटुम्लः, निपुणपण्डितः, कुशलदक्षः, चपलवत्सल इत्यादिषु गुणविशेषणस्य गुणवचनेन समासः । काष्ठा-परं प्रकर्षमध्यायकः-काष्ठाध्यायकः, दारुणमध्यायकः-दारुणाध्यायकः, अमातापुत्रमध्यायकः-अमातापुत्राध्यायकः, निष्ठुरमध्यायक इत्यर्थः; वेशं-सुभगमध्यायकः-वेशाध्यायकः, एवमनाज्ञाताध्यायकः; अयुताध्यायकः, अद्भुताध्यायकः, भृशाध्यायकः, घोराध्यायकः, परमाध्यायकः, स्वध्यायकः, अत्यध्यायक

इत्यादिषु क्रियाविशेषणस्य क्रियावता समासः। तथा-सर्वश्रमीणा कृतः-सर्वचर्मीणो रथः, अद्य श्वो वा विजायते-अद्यश्वीना गौः, दशभिरेकादश गृह्णाति-दशैकादशिकः, ऊर्ध्वं मुहूर्ताद् भवम्-ऊर्ध्वमौहूर्तिकम्, एवम्-और्ध्वदेहिकम्; 5 और्ध्वदमिकम्; कृतः पूर्वं कटोऽनेन-कृतपूर्वी कटम्, भुक्तपूर्वी ओदनम्, गतपूर्वी ग्राममित्यादिषु तद्धितार्थे समासः। तथा कन्येइव, दंपतीइव, वाससीइव, रोदसीइवेत्यादिष्विवेनालुप्समासः, ऐकपद्यं च समासफलम्। तथा-भूतः पूर्वं-भूतपूर्वः, एवं-दृष्टपूर्वः, श्रुतपूर्वः। सर्वेषु चैषु विशेषसंज्ञाऽप्राप्तौ 10 अनेनैव समासः। बहुलमिति शिष्टप्रयोगानुसरणार्थम्। नामेति किम्? चरन्ति गावो धनमस्य। नाम्नेति किम्? चैत्रः पचति। बहुलवचनादेव क्वचिदनाम्नापि समस्यते-भात्यर्कोऽत्रेति-भात्यर्कं नभः, नभसा सामानाधिकरण्यं समासफलम्। क्वचिदनाम्नापि-अलुन्यचलत्, अनुप्रावर्षत्, यद् व्यकरोत्, यत् 15 परियन्ति; अत्र नित्यसंध्यादिः समासफलम्, समासस्य च नामत्वेऽपि संख्यायास्त्यादिभिरेवोक्तत्वात् स्यादयो न भवन्ति; पदत्वार्थमुत्पन्नस्य वा प्रथमैकवचनस्य त्याद्यन्तार्थप्राधान्यात् नपुंसकत्वे लोपो भवति। समासप्रदेशाः-"वौष्ठौतौ समासे" [१. २. १७.] इत्यादयः॥ १८॥

20 श० म० न्यासानु०—नाम० इति। **नाम** धातुविभक्त्यन्त-वाक्यभिन्नमर्थवच्छब्दस्वरूपम्, **नाम्ना** तादृशेनैवार्थवता शब्दस्वरूपेण, सह, **ऐकार्थ्ये** सामर्थ्यविशेषे सति, **समासः** समाससंज्ञं भवति, **बहुलं**

"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः
25 क्वचिद् विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य,
चतुर्विधं बाहुलकं वदन्ति॥"

इत्युक्तलक्षणं काचित्कप्रवृत्त्यादिलक्षणं यथा स्यात् तथा समासो भवतीति क्रियाविशेषणमवगन्तव्यमिति। अत्र '**नाम्ना**' इत्यत्र 30 सहार्थे तृतीया, यद्यपि सूत्रे सहशब्दो न श्रूयते तथापि तृतीयाश्रुतिसामर्थ्यादाक्षिप्यते, अत एव "सहार्थे" [२. २. ४५.] इति सूत्रेऽर्थग्रहणं क्रियते, तत्फलं च सहशब्दं विनाप्याकाङ्क्षावशात् सहार्थावगतौ तृतीया भवति, यथा-"वृद्धो यूना तन्मात्रभेदे" [३. १. १२४.] इति सूत्रे, एवं च—

35 "एकेनापि सुपुत्रेण, सिंही स्वपिति निर्भरम्।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी॥"

इति पद्ये पूर्ववाक्ये सहशब्दाभावेऽपि पुत्रशब्दात् तृतीयोत्पन्ना। तथापि प्रत्येकस्य समाससंज्ञा मा भूदिति सहग्रहणं कर्तव्यम्, अन्यथा 'पुत्रेण सहागतः पिता' इत्यत्रोभयोरपि 40 क्रियायामागमनरूपायां प्रत्येकं सम्बन्धवदिहापि 'नाम नाम्ना समासः' इति वाक्ये सहार्थशब्दग्रहणाभावे नाम्ना सहोच्चारितं नाम प्रत्येकं समाससंज्ञं भवतीति स्यात्, तद्वारणाय सहग्रहणमावश्यकं येन समुदायस्य संज्ञा भवेदिति चेत्? न-अन्वर्थसंज्ञाबलेनेह समुदाये वाक्यपरिसमाप्तेराश्रयात्। अयमाशयः-क्वचित् वाक्यस्य समुदाये परिसमाप्तिर्भवति, क्वचिच्च प्रत्येकम्, 45 यथा-'देवदत्त-यज्ञदत्त-देवमित्रा भोज्यन्ताम्' इति वाक्योक्ता भुजिक्रिया प्रत्येकं परिसमाप्यते, सर्वेषामेव भुजिक्रियाकर्मत्वस्य प्रातिस्विकरूपेणावगतेः; 'गर्गाः शतं दण्ड्यन्ताम्' इति वाक्यार्थस्य गर्गसमुदाये एव परिसमाप्तिः, राज्ञां हिरण्यार्थित्वेऽपि प्रत्येकं दण्डो न विधीयते, अपि तु समुदाये एव। एवमिहापि 50 'समसनम्-अवयवार्थस्य विशेष्यविशेषणभावेन समुदायार्थे निक्षेपः' इति समासशब्दव्युत्पत्त्या समुदाय एव प्रकृतसूत्रवाक्यार्थपरिसमाप्तावाश्रीयमाणायां प्रत्येकं समाससंज्ञा न भविष्यति, ततश्च "ऋक्साम०" [७. ३. ९७.] इत्यादौ 'ऋच्' रूपावयवात् "चवर्गदषहः०" [७. ३. ९८.] इत्यादिना न समासान्त- 55 प्रत्ययः। अयमाशयः—"अङ्गस्य प्रधानावृत्त्यप्रयोजकत्वम्" इति मीमांसकरीत्या प्रधानस्यावृत्तिर्न भवति, प्रकृते 'गर्गाः शतं दण्ड्यन्ताम्' इत्यादौ राज्ञो धनार्थित्वेन धनस्य [हिरण्यस्य] प्राधान्यम्, गर्गाणां भूयस्त्वेऽप्यनुद्देश्यत्वादप्रधानत्वम्, अप्रधानगर्गानुरोधेन प्रधानधनगतसंख्याया आवृत्तिर्न भवति। 60 प्रकृतेऽपि समाससंज्ञायाः प्राधान्येन विधीयमानत्वात् समस्यमानपदापेक्षया प्राधान्यम्, तत्र चैकत्वसंख्या श्रूयते इति साप्रधानसमस्यमानपदानुरोधेन नावर्तिष्यते, एवं च 'गर्गाः शतं दण्ड्यन्ताम्' इत्यत्र समुदाये एकशतदण्डवदत्रापि नामसमुदाये एकैव समाससंज्ञा भविष्यतीति न प्रत्येकं संज्ञेति तद्वारणार्थं सह- 65 ग्रहणमनावश्यकमिति। ऐकार्थ्यं किमित्याह-**सामर्थ्यविशेष** इति-सामर्थ्यं-शक्तिः, तद्विशेषः-बोध्यबोधकभावापरपर्याया 'अभिधा' नाम, तद्ग्राहकं चेतरेतराध्यासमूलकं तादात्म्यम्, योऽर्थः कम्बुग्रीवादिमान् स शब्दः, यो घटशब्दः स कम्बुग्रीवादिमानर्थ इति शब्दार्थयोरितरेतराध्यासः, तदुक्तं हरिणापि— 70

"इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता मता॥" इति।

चक्षुरादीन्द्रियाणां स्वविषयेषु—घटादिचाक्षुषादिषु, अनादिः, योग्यता-स्वविषयप्रत्यक्षकारणता, यथा स्वीकृता तथा शब्दानां-घटादीनामपि, अर्थैः-स्ववाच्यैः कम्बुग्रीवादिमत्पदार्थैः सह, 75 योग्यता-तत्तत्पदार्थकारणताऽस्ति, स एव च सम्बन्ध इति तदर्थः। चक्षुरादीन्द्रियाणां घटादिरूपस्वस्वविषयप्रत्यक्षकारणत्वे सत्यपि सन्निकर्षजन्यविषयविषयिभावरूपसम्बन्धमन्तरा प्रत्यक्षकारणत्वं न सम्भवति तथा शब्दार्थयोरपि परस्परं सम्बन्धमन्तरा शब्दार्थोपस्थितिकारणत्वं न सम्भवतीति कश्चित् सम्बन्धः 80

कल्पनीय इति पूर्वोक्तपरस्पराध्यासमूलकस्तादात्म्यसम्बन्धोऽवश्य-मूरीकरणीयः, स एव च सम्बन्धः शक्तिः। यत् तु तार्किकाः—"घटशब्दः कम्बुग्रीवादिमदर्थं बोधयतु" इति 'घटशब्दात् कम्बुग्रीवादिमानर्थो बोध्यः' इति वा, प्रत्येकं विनिगमकाभावादु-5 भयविधा वा ईश्वरेच्छा शक्तिः" इत्याहुः, तन्मन्दम्—सम्बन्धस्य द्विष्ठत्वेन व्याप्तत्वनियमेन च प्रकृतेच्छायास्तथात्वाभावेन सम्बन्धत्वायोगात्, ज्ञानेन सत्प्रतिपक्षत्वाच्च, अन्नत्यविचारोऽन्यत्र निरूपितः। सेयं शक्तिर्घटादिपदेष्विव 'राजपुरुषः, उपकुम्भम्, प्राप्तोदकः, धवखदिरौ' इत्यादिषु समुदायपर्याप्ता विशेषण-10 विशेष्यभावावयवगाहियोधजनिका शक्तिः, सा चैकार्थीभावरूपा। सोऽयमेकार्थीभाव एवैकपदप्रयोजकः। व्यपेक्षालक्षणं सामर्थ्यं तु वाक्यनिष्ठतात्पर्याख्यवृत्तिरूपं नैतच्छक्तिपदेन व्यवह्रियते पदार्थोपस्थापकत्वाभावात्।

इदमिह तत्त्वम्—सम्बद्धार्थः समर्थ इति व्युत्पत्तेः स्वीकारे 15 तु व्यपेक्षाऽपि सामर्थ्यमेव, अत्र हि अवयवशक्त्या स्वार्थमात्र-पर्यवसितानां पदानामन्वयः, सा विशिष्टा अपेक्षा-व्यपेक्षा, तद्रूपमपि सामर्थ्यम्, राज्ञः पुरुषोऽश्वश्चेत्यादिसाकाङ्क्षार्थकव्यस्त-वाक्ये एव च सा, इह हि एकैकस्य पदार्थस्य यो यः सन्निहितो योग्यः साकाङ्क्षश्चार्थो भवति तेन तेनैवान्वयो भवति, राज्ञो 20 देवदत्तस्य च पुरुषः, ऋद्धस्य राज्ञः पुरुष इति च यथा। एकार्थीभावलक्षणसामर्थ्यं तु समासादिवृत्त्यर्थायां प्रक्रियादशायां प्रत्येकमर्थबोधकत्वेन पृथक् पृथग् गृहीतानां प्रत्येकं पदानां समुदाये पर्याप्तां समुदायविशिष्टशक्तिमास्थाय विशिष्टैकार्थप्रति-पादकतारूपम्, तत्र च समर्थशब्दस्य संसृष्टार्थं सङ्गतार्थं वा 25 समर्थमिति व्युत्पत्तेः, संसर्गः सङ्गतिश्चैकीभाव एव, यथा तैलेन संसृष्टं सङ्गतं वा जलमिति प्रयोगे एकीभूतमित्यर्थो विज्ञायते, यथा वा संसृष्टोऽग्निरिति च।

अत्रेदं विचार्यते—वृत्तितात्पर्यमनुसृत्य राज्ञःपुरुषः—'राजपुरुषः' इत्यादिसमस्तपदेषु एकार्थीभावो नाङ्गीकरणीयः, विशिष्टशक्ति-30 कल्पकप्रमाणाभावाद् गौरवाच्च। न च राजपुरुषेति समुदाय-पर्याप्तैकार्थीभावरूपविशिष्टशक्त्यनङ्गीकारे 'नामार्थयोरभेदाति-रिक्तः सम्बन्धो न भवति' इति व्युत्पत्ते राजपुरुषशब्दे राजरूप-नामार्थस्य पुरुषरूपनामार्थेऽभेदसम्बन्धेनैवान्वयो वक्तव्यः स्यान्न तु स्वस्वामिभावरूपसम्बन्धेन, स च बाधितः, वृत्तिविग्रहवाक्ययोः 35 समानार्थकत्वमिति नियमविरुद्धश्चेति फलमुखत्वाद् गौरवं न दोषायेति वाच्यम्, निरुक्तव्युत्पत्तेः समासातिरिक्तविषयकत्वकल्प-नात्। तथा च 'राज्ञः पुरुषः' इत्यत्रेव 'राजपुरुषः' इत्यादि-समस्तपदेऽपि राजपदनिष्ठशक्त्या राजत्वधर्मावच्छिन्नराजपदार्थो-पस्थितौ पुरुषपदेन च पुरुषत्वावच्छिन्नपुरुषपदार्थोपस्थितौ तात्पर्य-40 सहकृतसमभिव्याहाररूपाकाङ्क्षावशाद् राजनिष्ठस्वामित्वनिरूपित-स्वत्ववान् पुरुषः—राजसम्बन्धी पुरुष इति बोधोपपत्तेः; न च विशिष्टे शक्तिः कल्प्या गौरवपराहतत्वादिति व्यपेक्षावादिनो मतम्, एतच्च 'परस्परव्यपेक्षां सामर्थ्यमेके' इति "समर्थः पद-विधिः" [ पा० २. १. १ ] इति सूत्रे महाभाष्योक्त्या प्रतीयते।

ननु विशिष्टशक्त्यस्वीकारे 'ऋद्धस्य राज्ञः पुरुषः' इति वाक्यवद् 45 'ऋद्धस्य राजपुरुषः' इति वृत्तिरपि स्यात्, राजशब्दार्थेऽभेद-सम्बन्धेन ऋद्धपदार्थस्यान्वयबोधे सति तात्पर्ये बाधकाभावात्, विशिष्टशक्त्यङ्गीकारे तु 'राजपुरुष'पदघटकयोर्द्वयोरपि राज-पुरुष-शब्दयोरनर्थकत्वेन राजपुरुषसमुदायस्यैवार्थवत्त्वमिति समुदाय एव राजनिरूपितस्वस्वामिभावसम्बन्धेन राजविशिष्टपुरुषरूपार्थ-50 निरूपितशक्तिस्वीकारेणार्थबोधकत्वात् तदेकदेशस्य राजपदार्थस्य पदार्थैकदेशत्वात् 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तेस्तत्र ऋद्धपदार्थस्यान्वयबोधो न भवतीति न तादृश-प्रयोग इति चेत्? न—"सविशेषणानां वृत्तिर्न, वृत्तस्य च विशे-षणयोगो न" इति वार्तिकेन वृत्तिसामर्थ्यकल्पितेन वचनेन वा 55 पूर्वमेव 'राज्ञः पुरुषः' इति लौकिकविग्रहदशायाम् 'ऋद्धस्य' इति विशेषणान्वयतात्पर्ये सति सविशेषणत्वात् समासो न स्यात्, समासोत्तरमन्वयविवक्षायां प्रकृतवचनानुरोधात् कार्यकारणभाव-सामग्रीविघटनान्न भवति; इयांस्तु विशेषः—व्यपेक्षावादे सविशे-षणानामिति वचनं वाचनिकमेव, एकार्थीभावे च न्यायसिद्ध-60 मिति। न चोक्तवार्तिकाङ्गीकारे 'देवदत्तस्य गुरुकुलम्' इति वाक्यस्य 'जिनस्य भगवतो भक्तः' इति विग्रहे 'जिनभागवतः' इति प्रयोगस्य चासाधुत्वं स्यादिति वाच्यम्, 'गुरोः कुलम्' इति समासे 'किन्निरूपितगुरुत्ववतः कुलम्' इत्याकाङ्क्षायां देवदत्तादि-पदार्थानां सन्निधानस्यावश्यकत्वेन नित्यसाकाङ्क्षतयोत्थिताकाङ्क्ष-65 स्योपसर्जनभूते गुरुपदार्थे साकाङ्क्षेऽपि गमकत्वात् समास इष्यते इत्यङ्गीकारात्, यदुक्तं वाक्यपदीये—

"सम्बन्धिशब्दः सापेक्षो, नित्यं सर्वः समस्यते।
वाक्यवत् सा व्यपेक्षा हि, वृत्तावपि न हीयते॥
समुदायेन सम्बन्धो, येषां गुरुकुलादिना। 70
संस्पृश्यावयवांस्ते तु, युज्यन्ते तद्वता सह॥" इति

न चैवं राज्ञोऽपि नित्यसाकाङ्क्षत्वात् पदार्थैकदेशत्वेऽपि 'ऋद्धस्य' इत्यादिविशेषणान्वयः स्यादिति वाच्यम्, राज्ञ ईशितुरी-शितव्यं प्रति सापेक्षत्वेऽपि स्वविशेषणीभूतऋद्धादिपदार्थं प्रति सापेक्षत्वे मानाभावात् 'सापेक्षमसमर्थं भवति' इति नियमात् 75 तत्रासामर्थ्यात्, अत्र च नियमे सापेक्षपदं नित्यसापेक्षेतरपरमिति 'देवदत्तस्य गुरुकुलम्' इत्यत्र न दोषः। एवं 'जिनस्य भगवतो भक्तः' इति विग्रहे भगवच्छब्दस्य नित्यसाकाङ्क्षत्वं बोध्यम्, यद्वा "समुदायेन सम्बन्धः" इति द्वितीयहरिकारिकानुसारं गुरुवद् देवदत्तोऽपि विशेष्ये प्रधाने कुले एवान्वेति, तत्र गुरुणा कुलस्यो- 80

स्पाद्योत्पादकभावसम्बन्धेनान्वयः, देवदत्तस्य तु स्वनिरूपितगुरुत्ववदुत्पाद्योत्पादकसम्बन्धेनेति 'एकत्र द्वयम्' इति रीत्योभयोः कुले एवान्वय इति निरवद्यः पन्थाः ।

इत्थं चेह व्यपेक्षापक्षे यावन्तो दोषा आपतेयुस्तान् परिहर्तुं कल्पनानगरं निर्मातव्यम् । तथाहि–तत्र पक्षे 'घन इव श्यामो घनश्यामः, कौशाम्ब्या निष्क्रान्तो निष्कौशाम्बिः, गोभिर्युक्तो रथो गोरथः, घृतेन पूर्णो घटो घृतघटः, गुडेन मिश्रा धाना गुडधानाः, सप्त सप्त पर्णान्यस्य स सप्तपर्णः' इत्यादिसमासेषु इव-क्रान्त-युक्त-पूर्ण-मिश्र-वीप्साद्यर्थबोधनाय यत्नान्तरमाश्रयणीयं भवेत्; एकार्थीभावे तु विशिष्टशक्त्या विशेष्यविशेषणभावापन्नसमुदितार्थोपस्थितौ इवाद्यर्थानां तदन्तर्भूततयैव भानसम्भवान्न तदर्थं यत्नान्तरमाश्रयणीयं भवति । अत एव तार्किकादीनां व्यपेक्षापक्षमुत्थाप्य "अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः" इति "समर्थः पदविधिः" [पा० २. १. १.] इति सूत्रे महाभाष्ये पतञ्जलिना दूषणमप्युक्तम् । व्यपेक्षापक्षाभिप्रायेणैव 'पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः' इति प्राचामाचार्याणां प्रवादः, स च न समुचितः–'शाकप्रति, सूपप्रति' इत्याद्यव्ययीभावे तत्पुरुषलक्षणस्यातिव्याप्तेः, 'उन्मत्तगङ्गम्' इत्याद्यव्ययीभावे च बहुव्रीहिलक्षणस्यातिव्याप्तेः, 'अतिमालः, निष्कौशाम्बिः' इत्यादितत्पुरुषे बहुव्रीहिलक्षणस्यातिव्याप्तेः, 'द्वित्राः' इत्यादिबहुव्रीहौ द्वन्द्वलक्षणस्यातिव्याप्तेः, 'धवखदिरं, पाणिपादम्' इत्यादिसमाहारे बहुव्रीहिलक्षणस्यातिव्याप्तेश्च; एवं व्यभिचारात् तस्य प्रवादस्य प्रायोवादत्वमेवेति ज्ञायते, सोऽपि सिद्धान्तभूते एकार्थीभावपक्षेऽव्याप्त एव, पूर्वोत्तरादिपदानां तत्र पक्षेऽर्थाभावात्, युक्तं चैतत्, तथाहि–चित्रगुप्रभृतिबहुव्रीहौ चित्राभिन्नगोस्वामिप्रतीतिरनुभवसिद्धा समासशक्तिमन्तरा कथं प्रतीयेत । न च मीमांसकमते स्वबोध्यसम्बन्धस्य लक्षणात्वाद् बोध्यगोनिष्ठस्वत्वनिरूपितस्वामित्वसम्बन्धेन लक्षणया निरुक्तसम्बन्धानुयोगी धर्मी चैत्रादिः प्रत्येतुं शक्य इति वाच्यम्, 'प्राप्तोदको ग्रामः' इत्यादौ तदनुपपत्तेर्लक्षणया प्राप्तिकर्त्रभिन्नोदकसम्बन्धिनो लाभेऽप्युदककर्तृकप्राप्तिकर्म ग्राम इत्यर्थालाभात् । प्राप्तेति कर्तृबोधकप्रत्ययस्यैव कर्मणि लक्षणेति चेत् ?, तदपि न साम्प्रतम्–'समानाधिकरणनाम्नोरभेदः' इति व्युत्पत्तेः 'उदकभिन्नं प्राप्तिकर्म, प्राप्तिकर्माभिन्नमुदकम्' इति वा बोधापत्तेः, अन्यथा 'समानाधिकरणनाम्नोरभेदान्वयः' इति व्युत्पत्तिविरोधापत्तेः, प्राप्तेर्धात्वर्थत्वेन कर्तृतासम्बन्धेन तत्रोदकस्यान्वयासम्भवात्, नामार्थ-धात्वर्थयोर्भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वात्, नामजन्योपस्थितिविशेष्यस्यैव नामार्थत्वात् । अथोदकाभिन्नकर्तृका प्राप्तिरिति बोधोत्तरं तत्सम्बन्धिग्रामो लक्षणाविषय इत्यपि न सम्यक्, प्राप्तेर्धात्वर्थत्वेन कार्थकर्तारं प्रति विशेष्यत्वबाधात् 'प्रकृति-प्रत्ययौ सहार्थं ब्रूतः, तत्र प्रत्ययार्थः प्रधानम्' इति व्युत्पत्तेः । प्राप्तपदे प्राप्तेर्विशेष्यत्वे तस्या एव नामार्थत्वेनोदकेन सममभेदान्वयापत्तेश्च । एवम्–'ऊढरथः, उपहृतपशुः, उद्धृतोदना स्थाली, बहुपाचिका शाला' इत्यादिषु 'रथकर्मकवहनकर्ता, पशुकर्मकोपहारोद्देश्यः, ओदनकर्मकोद्धरणावधिः, बहुपाककर्त्रधिकरणम्' इति प्रतीतेः, एकार्थीभावपक्षे घटत्वविशिष्टे घटपदस्येवोदककर्तृकप्राप्तिकर्मत्वविशिष्टे प्राप्तोदकादिपदानां शक्त्यैव निर्वाहात् । परे तु–'चित्रगुः' इत्यादौ चित्रगवीनां स्वाम्यादिरेकार्थीभावं विना न प्रत्येतुं शक्यः, नहि तार्किकैर्लक्षणा वक्तुं शक्यते, तथाहि–कुत्र लक्षणा ? नहि चित्रपदे चित्रस्वामी गौरिति स्यात्, नापि गोपदे गोस्वामी चित्र इत्यन्वयप्रसङ्गात्, गवादेः पदार्थैकदेशतया तत्रान्वयासम्भवाच्च । न च चित्राभिन्ना गौरिति शक्तिज्ञानस्वरूपकारणोपस्थाप्ययोरन्वयबोधोत्तरं देवदत्तादिना सामानाधिकरण्येनान्वयबाधप्रतिसन्धात् तत्स्वामी गोपदेन लक्ष्यतामिति वाच्यम्, गोपदेन लक्ष्यताम् ? चित्रपदेन वा ? इति विनिगमकाभावप्रसङ्गात् । न च गोपदेन साक्षात्सम्बन्ध एव विनिगमकः, तथाहि-लक्षणा शक्यसम्बन्धः, तत्र देवदत्तेन सह गोः स्वत्वनिरूपितस्वामित्वरूपः साक्षात्सम्बन्धः, चित्रपदस्य तु गुणवाचकतया स्वशक्यसमानाधिकरणस्वत्वनिरूपितस्वामित्वसम्बन्धः, स चाश्रयद्रव्यघटित इति परम्परासम्बन्धो लक्षणारूपो वाच्य इति गौरवमित्येव तत्र विनिगमकमिति वाच्यम्, एवमपि 'प्राप्तोदकः, कृतविश्वः' इत्याद्यषष्ठ्यर्थबहुव्रीहौ विनिगमकाप्राप्तेः, यौगिकानां कर्त्राद्यर्थबोधकत्वेन साक्षात्सम्बन्धस्योभयत्र तुल्यत्वेनाविशेषात् । न च पदद्वये लक्षणेति तार्किकसरणिः श्रेयसी, बोधावृत्तिप्रसक्तेः । न चैकस्य लक्षकत्वेऽपरस्य तात्पर्यग्राहकत्वं कल्प्यतामित्येकस्यैवैकदा लक्षणेति नार्थबोधावृत्तिरिति वाच्यम्, एवं सति कदा कस्य लक्षकत्वं कस्य च तात्पर्यग्राहकत्वमिति विनिगमकाभावस्य पूर्ववज्जागरूकत्वेन लक्षणाया अप्रवृत्तेः । न च प्रत्ययावधिकपूर्वा प्रकृतिः, प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति प्रत्ययानां स्वसन्निहितप्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः प्रत्ययार्थान्वयानुरोधाच्चरमपदे एव लक्षणाकल्पना स्यादिति वाच्यम्, बहुव्रीह्यसम्भवापत्तेः, "एकार्थं चानेकं च" [३. १. २२.] इति सूत्रेणानेकस्याद्यन्तानामन्यपदार्थप्रतिपादकत्व एव बहुव्रीहिसमासविधानात् । किञ्च घट-पटादिपदेष्वपि चरमवर्णे एव वाचकताकल्पनैवं स्यात्, शक्तेर्व्यासज्यवृत्तितायां विसंवादाच्चरमवर्णस्यैव प्रत्ययनिरूपितसन्निधानसत्त्वाल्लाघवाच्च पूर्वपूर्ववर्णानां पूर्वोक्तरीत्या तात्पर्यग्राहकत्वेनोपयोगसम्भवात् । न चैवं चरमवर्णमात्रश्रवणेऽर्थप्रतीत्यापत्तिरिति शङ्कनीयम्, प्राप्तोदकादिपदेऽप्यन्त्यपदश्रवणमात्रेणार्थ-

बोधापत्तेस्तुल्यत्वात्, आपाद्यव्यतिरेककालिकापाद्यव्यापकापादकताज्ञानस्वीकारात्; तथा चाह कौण्डभट्टः—

"समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ॥
बहूनां वृत्तिधर्माणां वचनैरेव साधने ।
5 स्यान्महद् गौरवं, तस्मादेकार्थीभाव आश्रितः ॥
चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्तव्यं ते, न्यायसिद्धं त्वस्माकं तदिति स्थितिः ॥
अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पनं ।
क्लृप्तत्यागश्चास्ति तव, तत् किं शक्तिं न कल्पयेः ? ॥"

10 [ वैयाकरणभूषणसारे समासशक्तिनिरूपणे ] इति ।

अत्र 'समासे' इत्येकदेशकीर्तनं वृत्तिमात्रोपलक्षण 'पङ्कजवत्' इति दृष्टान्तात्, दृष्टान्त-दार्ष्टान्तिकयोः साजात्यौचित्यात्, पङ्कजादिषु "समर्थः पदविधिः" [ ७. ४. ११२. ] इति परिभाषाशास्त्रेण कृत्-तद्धित-समासादिषु पञ्चसु वृत्तिषु विशिष्टशक्ति-15 बोधनात् । तथा च विधिरिति भावे प्रत्ययः, विधानं-विधिरिति व्युत्पत्तेराचार्येण प्रतिपादनात् । पदस्य विधिरिति सम्बन्धसामान्ये षष्ठ्या तत्पुरुषः, पदसंज्ञाप्रयोजकस्यादित्यादिप्रत्ययोत्पादकतावच्छेदककृत्त्वादिपञ्चधर्मावच्छिन्ना विधेयता समर्थाश्रिता बोध्येति परिभाषार्थः ।

20 [ कृत्-तद्धित-समासैकशेष-सनाद्यन्तधातुरूपाः पञ्च वृत्तय इति मतमाश्रित्येत्थमुक्तिः, यतः "वृत्त्यन्तोऽसषे" [ १. १. २५. ] इति सूत्रन्यासे स्वयमाचार्येण समास-नामधातु-तद्धितान्तानां त्रयाणामेव वृत्तित्वकथनात् । परार्थाभिधानं वृत्तिः, समासादिः, समासे उपसर्जनपदं प्रधानमनुधावति, द्वन्द्वे वर्तिपदानां परस्प-25 रार्थसंक्रमः, प्रकृति-प्रत्ययौ सहार्थं ब्रूत इति परस्य-स्वार्थातिरिक्तस्यार्थस्याभिधानं वृत्तिः, यत्र यत्र प्रयोगपरिज्ञानाय प्रयोगः क्रियते स सर्वोऽपि वृत्तेर्विषय इत्यनुसन्धाय 'कृत्-तद्धित-समासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः' इति परेषां परिगणनम्, तथाहि-करोतीति कारकः, उपगोरपत्यमौपगवः, राज्ञः पुरुषो 30 राजपुरुषः, रामश्च रामश्च रामश्च रामाः, कर्तुमिच्छति चिकीर्षति, पुत्रमिच्छति पुत्रकाम्यति, इत्यादि । स्वमते तु त्रेधा वृत्तिः-समास-नामधातु-तद्धितभेदात्, कृद्वृत्तेः 'कुम्भकारः' इत्यादेः "ङस्युक्तं कृता" [ ३. १. ४९. ] इति समासविधानात् समासरूपवृत्तावेवान्तर्भावः, शेषस्योपपदरहितस्य कृतो 35 न वृत्तित्वम्, एकशेषस्य द्वन्द्वसमासविषये विधानात् समासवृत्तावेवान्तर्भावः, यद्वा-एकशेषस्थलेऽपि शिष्यमाणः शब्दो न लुप्तानामर्थमभिदधाति किन्तु स्वार्थस्यैव बहुत्वं प्रत्ययसाचिव्येनेति न तत्र परार्थाभिधानमिति न वृत्तिः, सनाद्यन्तस्य चिकीर्षतीत्यादेर्न वृत्तित्वं प्रकृतिप्रत्यययोस्तदर्थबोधकत्वानुशि-40 ष्टत्वात्, अत्रायमाशयः-यत्र स्याद्यन्तर्भावेणालौकिकं विग्रहवाक्यं भवति तत्र समासादौ लुप्तविभक्तेरर्थलाभाय परार्थाभिधानमाश्रीयते, न सर्वत्र, यथा-'राजन् ङस् पुरुष सि-राजपुरुष इति, पुत्र अम् [ काम्य ]-पुत्रकाम्यतीति, उपगु ङस् [ अण् ]-औपगव इति, स्याद्यन्तेष्विव कृदन्तेषु विग्रहप्रदर्शनं नावश्यकमिति । ] 45

सामर्थ्यं शक्तिरेकार्थीभावः, तद्वान् समर्थ इति तदाश्रितेत्यर्थः । तत्र दृष्टान्तः 'पङ्कजशब्दवत्' इति, अयं शब्दश्च योगरूढः, प्रकृति-प्रत्यययोर्योगः, पङ्कात् पङ्के वा जायत इति व्युत्पत्तेः, तत्कृता यौगिकी शक्तिः, पङ्कजनिकर्तृत्वविशिष्टधर्मिनिरुपितैका शक्तिः, द्वितीया तु पद्मत्वजात्यवच्छिन्नधर्मिनिरूपिता, 50 तेन पङ्कजनिकर्तृत्वविशिष्टत्वेन पद्मत्वेन च द्वाभ्यां धर्माभ्यां तत्र धर्मिणो बोधः, तदर्थं च तत्र विशिष्टशक्तिरङ्गीकार्येति न कुमुदस्य पङ्कजातस्य चन्द्रविकासिनो नवा पद्मत्वविशिष्टस्य स्थलपद्मस्य ततो बोधः, प्रथमे पद्मत्वजातिविरहाद् द्वितीये पङ्कजनिकर्तृत्वविरहात् । 55

यत् तु "कल्हार-कैरवमुखेषु च पङ्कजेषु" इत्यादिषु क्वाचित्ककविप्रौढोक्तिसिद्धा कैरवादौ पङ्कजपदप्रवृत्तिः सा प्रौढ्यैवेति न प्रमाणपदवीमधिरोढुमीष्टे ।

यत् तु-'योगरूढिस्वीकारेऽपि 'उद्भिद्' पदेन [ यागविशेषरूढेन ] वृक्षादेरिव योगशक्त्या पङ्कजपदेन कल्हारादयो बोध्यन्ते' 60 इति व्यपेक्षावादिन आहुः, तन्न-योगरूढिभ्यामेकार्थबोधे सम्भवति केवलयौगिकार्थबोधस्य रूढिज्ञानप्रतिबध्यत्वात्, रूढ्या नियमेनोपस्थितपद्ममेव कर्तृव्यक्तिबोधककृत्प्रत्ययेन पङ्कजनिकर्तृत्वेन बोधयितुं शक्यते 'बाधकं विना व्यक्तिवाचिनां सन्निहितविशेषव्यक्तिपरत्वम्' इति नियमात् 'यत्किञ्चिद्व्यक्तितात्पर्यकाणां 65 सन्निहितो यो व्यक्तिविशेषस्तन्मात्रपरत्वम्' इत्यर्थकात्, 'घटेन जलमाहर' इत्यत्र सन्निहितसच्छिद्रव्यक्तिबोधवारणाय 'बाधकं विना' इति ।

प्रकृते पद्मे तात्पर्यगोचरे योगेनापि तदेव प्रतीयेत, नान्यत् कुमुदादि । प्रथमकल्पस्तु रूढिज्ञानस्य ग्राह्याभावानवगाहित्वा-70 ज्जनकज्ञानाविघटकत्वाच्चाप्रतिबन्धकत्वान्न क्षोदक्षमः, सिद्धेरगत्या मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वस्वीकारेऽप्यन्यत्र तथात्वे मानाभावात् । एवं च पद्मानुभवसामग्रीसत्त्वे फलानुत्पत्तौ प्रतिबन्धकापेक्षेति दृष्टान्तेन वृत्तिसामान्ये समुदाये शक्तिकल्पनेऽप्यजहत्स्वार्थायां वृत्तौ विशिष्टशक्तेः सम्बन्धांशे विरामस्योक्तत्वात्, 75 वाक्येऽपि सम्बन्धांशे एव तैः स्वीकारात् ।

वृत्ति-विग्रहयोर्वैयाकरणमते को विशेष इति चेत् ?, अत्रोच्यते-वाक्ये पदार्थोपस्थितिकाले नियमतः सम्बन्धांशे उद्बोधकासमवधानेन पृथगुपस्थितपदार्थयोराकाङ्क्षावशात् संसर्गबोधः; वृत्तौ तु पदार्थोपस्थितिसमकालमेव नियमतः सम्बन्धांशे उद्बोधक-80

विशिष्टशक्तिसमवधानवशाद् विशिष्टार्थोपस्थितिरिति वैलक्षण्यम् । प्राप्तोदकादावप्रयुज्यमानद्वितीयार्थः संसर्गश्चोभयं समुदायशक्तिसाध्यमनन्यलभ्यत्वात् । राजपुरुषादौ तु क्लृप्तशक्त्यैव राजादेरुपस्थितिसम्भवेन तत्र समुदायशक्तिकल्पने गौरवम् । 'नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्नः' इत्यादयश्च वाक्यजन्योपस्थितिविषया व्युत्पत्तयः ।

यच्च तार्किक-मीमांसकैरुच्यते–"संसृष्टार्थः समर्थः" इति भाष्योक्तेः संसर्गस्य पृथगुपस्थितिनिबन्धनत्वात् परस्परव्यपेक्षाऽपि सामर्थ्यम्, अतो राजपुरुषादौ न समुदाये शक्तिः, राजपदादेः सम्बन्धिनि लक्षणयैव 'राजसम्बन्ध्यभिन्नः पुरुषः' इति बोधसम्भवात्, राज्ञः पदार्थैकदेशतया न 'ऋद्धस्य' इत्यादिविशेषणान्वयः । "समर्थः पदविधिः" [ ७. ४. १२२. ] इति सूत्रार्थोऽपि–पदसम्बन्धी विधिः समासादिविधिः, साक्षात् परम्परया वा स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वरूपव्यपेक्षापरनामकसामर्थ्यवत्पदाश्रितो भवतीति, बहुव्रीहौ चित्रादिविषयतायाः स्वामिनि साक्षात्प्रयोजकताया अभावात् 'परम्परया वा' इत्युक्तम् । वृत्तित्वसामान्यधर्मेणैकार्थीभाववादिनोऽपि स्वावयवार्थातिरिक्तार्थाभिधायकत्वरूपवृत्तित्वलक्षणस्य कर्मधारयादावव्याप्तेर्व्यपेक्षयैव निर्वोढव्यत्वादवयवार्थातिरिक्तस्य कस्यचिदर्थस्य तत्राभावात्; वृत्तित्वसामानाधिकरण्येनैकार्थीभावस्य त्वस्माभिरपि रथन्तरादौ पङ्कजादौ च कोशादिप्रामाण्यात् स्वीकारेण सिद्धसाधनात्, शुद्धयौगिके चित्रग्वादिसमुदाये विशिष्टशक्त्यभ्युपगमस्तु कोशाद्यनुक्तेः समासघटकप्रत्येकपदवृत्त्यैवोपपत्तेरनुपादेय इति तेषामभिसन्धिः ।

न च सम्बन्धे एव लक्षणाऽस्तु, तथा सति समास-विग्रहवाक्ययोः समानाकारबोधजनकत्वप्रवादोऽप्युपपत्स्यते, राजादिसम्बन्धरूपलक्ष्यार्थस्याश्रयतासंसर्गेणोत्तरपदार्थेऽन्वयेनोपपत्तौ सम्बन्धिनि लक्षणाभ्युपगमे प्रयोजनाभावश्चेति वाच्यम्, 'राजा पुरुषः' इत्यादौ राजादिपदार्थस्य स्वस्वामिभावसम्बन्धेन पुरुषादावन्वयं निराकर्तुं निपातातिरिक्तार्थनिष्ठभेदसंसर्गकप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन प्रत्यय-निपातान्यतरजन्योपस्थितेर्हेतुतेति कार्यकारणभावाङ्गीकारेण प्रकृते राजसम्बन्धरूपनामार्थस्य निपातप्रत्ययान्यतराजन्योपस्थितिविषये पुरुषपदार्थेऽन्वयाऽसम्भवात्; निपातातिरिक्तत्वविशेषणाच्च 'चन्द्र इव मुखं, घटो नास्ति' इत्यादाविवार्थ-नञर्थयोः सादृश्या-ऽभावयोः प्रतियोगित्वात्मकभेदसंसर्गेण चन्द्रपदार्थस्य घटपदार्थस्य च क्रमेण सादृश्येऽभावे चान्वयबोध उपपद्यते । प्रतियोगितासंसर्गेण चन्द्रनिष्ठप्रकारतानिरूपितविशेष्यतावत् सादृश्यम्, प्रतियोगितासंसर्गेण घटनिष्ठप्रकारतानिरूपितविशेष्यतावानभाव इति बोधे न कापि क्षतिः, प्रकृतकार्यकारणभावानाक्रान्तत्वेनान्यादृशकार्यकारणभावरूपसामग्रीसत्त्वात्, प्रकारतायां 'भेदसंसर्गेण' इति विशेषणात् 'अभेदातिरिक्तसंसर्गेण' इति विशेषणाद् वा 'राजा पुरुषः' इत्यादावभेदेन संसर्गेण शाब्दबोधो भवत्येव, कार्यताव्यावर्त्तकधर्मानाक्रान्तत्वात् । न च समस्यमानातिरिक्तत्वेनापि नाम्नः संकोचादस्तु प्रकृतेऽप्यनुपपत्त्यभावः, गौरवात्, क्वचिद्गत्या सङ्कोचेऽपि सर्वत्र सङ्कोचे मानाभावात् । निपातानां द्योतकतापक्षे चन्द्रघटादिपदानां चन्द्रप्रतियोगिकसादृश्याश्रये घटप्रतियोगिकाभावे च लक्षणामाश्रित्योपपत्तौ निपातातिरिक्तत्वस्य कार्यकारणभावेऽप्रवेशाच्च । अत एव 'चन्द्र इव मुखम्' 'हंसीव धवला कीर्तिः' इत्यादौ 'नीलो घटः' इत्यादाविव समानविभक्त्युपपत्तिः; नवा 'घनश्यामो, निष्कौशाम्बिः, गोरथः' इत्यादाविवादिप्रयोगप्रसक्तिः, उक्तार्थतयैव तेषामप्रयोगात् कान्तादिपदप्रयोगाप्रसक्तेः; नवा समासप्रकरणे बहुलग्रहणस्य प्रयोजनम् 'राजसम्बन्ध्यभिन्नः पुरुषः' इति बुबोधिषायां समासस्य, राजसम्बन्धवानिति बोधेच्छायां च 'राज्ञः पुरुषः' इति व्यस्तवाक्यस्य च न्यायादेवोपपत्तेः; नापि पङ्कजपदप्रतिबन्दी विशिष्टशक्तिसाधिका, तत्रावयवशक्तिमजानतोऽपि बोधोदयात् । न च शक्त्यग्रहे लक्षणया तेभ्यो विशिष्टार्थप्रत्ययः सम्भवति, अत एव लक्षणायाः शक्यसम्बन्धरूपत्वात् तत्पदनिष्ठलक्षणाज्ञानस्य तत्पदनिष्ठशक्तिज्ञानं विनाऽसम्भवाद् विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वाच्च राजादिपदशक्त्यग्रहे 'राजपुरुषः, चित्रगुः' इत्यादितो बोधाऽसम्भवः । न च चित्रग्वादौ लक्षणया निर्वाहेऽप्यषष्ठ्यर्थ्यबहुव्रीहौ प्राप्तोदकादौ तदसम्भवो बहुव्युत्पत्तिभङ्गश्चेति वाच्यम्, प्राप्तपदस्य यौगिकत्वेन तत्र लक्षणाया धातु-प्रत्ययतदर्थज्ञानसापेक्षत्वेन विलम्बात् प्रत्ययानां सन्निहितपदार्थान्वितस्वार्थबोधकत्वनियमाच्चोदकपदे एव लक्षणाङ्गीकारात् । 'दण्डिनमानय' इत्यादिषु व्यवहितदण्डादौ कर्मत्वाद्यन्वयवारणाय नियमे स्वसन्निहितेति निवेश्यम्, 'अणुरपि विशेषोऽध्यवसायकरः' इति न्यायेनोत्तरपदलक्षणायां बोधावृत्तिरूपदोषाभावः, घटादिपदे च कल्प्यमानाऽप्यतिरिक्ता शक्तिर्विशिष्टे एव, तस्यैव सङ्केतितत्वात्, बोधकतापर्याप्तेः प्रत्येकवर्णेष्वसत्त्वात्, समासे चात्यन्तसान्निध्यात् प्रत्ययार्थान्वयसौलभ्यमुत्तरपदलक्षणायामेवेति विशेषः । तथा चोपकुम्भाद्यव्ययीभावे समीपाद्यर्थे उत्तरपदमेव लाक्षणिकम्, उपादि पूर्वपदं तात्पर्यग्राहकतया सप्रयोजनम्, अर्धपिप्पल्याद्येकदेशितत्पुरुषेऽप्येवम्, 'नीलोत्पलम्' इत्यादिकर्मधारये न कुत्रापि लक्षणा, प्रत्येकपदनिष्ठशक्तिप्रयोज्योपस्थितयोरभेदेनान्वये बाधाभावात्, पाणिपादादिद्वन्द्वेऽप्युत्तरपदस्य पाणिपादसमाहारे लक्षणा, पदान्तरं द्योतकं, तत्रैव परम्परया कर्मतान्वयः, एवमितरेतरयोगेऽपि साहित्यापन्नप्रत्येकपदार्थयोरुत्तरपदस्यैव लक्षणा,

तस्मादेव द्विवचनाद्यर्थस्य द्वित्वादेस्तत्रान्वयः, समाहारद्वन्द्वे साहित्यं विशेष्यम्, अत्र तु विशेषणमिति भेदः ।

परे तु-"समाहारद्वन्द्वेऽपि साहित्याप्रतीतेर्न तत्र लक्षणा, किन्तु प्रत्येकपदनिष्ठशक्त्युपस्थाप्ययोरेव साक्षात्कर्मतयाऽन्वयः,
5 "प्राणितूर्याङ्गाणाम्" [ ३. १. १३७. ] इति प्रकरणादिगतैकत्व-समासस्य समाहारपदव्यपदेश्यत्वम्, इतरत्र तद्व्यवहार औपचारिकः, नापीतरेतरयोगे तत्प्रसङ्गः; एवमितरेतरयोगद्वन्द्वेऽपि न लक्षणा, एकस्मृत्यारूढपदद्वयात् प्रत्येकशक्त्युपस्थापितयोरर्थयोरन्वयसम्भवात्, एकक्रियान्वयित्वरूपस्य एकबुद्ध्यारूढत्वरूपस्य
10 वा साहित्यस्य पश्चादेवावगमेन पूर्वं तत्र लक्षणाग्रहाऽसम्भवाच्च । "चार्थे द्वन्द्वः०" [ ३. १. ११७. ] इत्यस्य 'चार्थान्वययोग्यायां सहोक्तौ' इत्यर्थान्न तद्विरोधोऽपि" इति कथयन्ति । युक्तं चैतत्, द्वन्द्वत्वावच्छिन्नस्य प्रधानीभूतार्थद्वयप्रतिपादकत्वे "द्वन्द्वः सामासिकस्य च" इति गीतावचनेन श्रीकृष्णेन कृतस्य समाससमूहे
15 द्वन्द्वस्य स्वविभूतितया परिगणनस्य सङ्गतेः, विशिष्टशक्त्या लक्षणया वा तस्य प्रधानीभूतसमाहारप्रतिपादकत्वे तु समासान्तराद् द्वन्द्वस्याविशेषात् तदसङ्गतिः स्पष्टैव ।

यत् तु-'भारतभावदीपे [ महाभारतव्याख्यायां, गीतायाश्च तदन्तर्गतत्वात् तद्व्याख्यानसमये ] सममेकत्रासनं-समासः,
20 विदुषां गुरु-शिष्याणां वा कथार्थमेकत्रावस्थानम्, तत्र विदितमर्थजातं सामासिकम्, तस्य मध्ये द्वन्द्वोऽहं रहस्योऽहमिति, "द्वन्द्वं वा" [ ७. ४. ८२. ] "रहस्यमर्यादोक्ति०" [ ७. ४. ८३. ] इति सूत्रे द्वन्द्वशब्दस्य रहस्यवाचकत्वं वैयाकरणसमयप्रसिद्धमिति व्याख्यातम्; तत् तु विदितार्थस्य सामासिकपदवाच्यत्वादर्शनात्,
25 रथन्तराधिकरणोक्तात् 'योगाद्रूढिर्बलीयसी' इति न्यायात् पारिभाषिकसमासरूपार्थस्यैवोपस्थितेरुचितत्वेन समासशब्देनोक्तार्थस्याप्रसिद्धेः, "रहस्यमर्यादोक्ति०" [ ७. ४. ८३. ] इति सूत्रव्युत्पादितरहस्याभिधायिद्वन्द्वशब्दस्य नपुंसकत्वदर्शनात्, पुल्लिङ्गस्य तद्वाचित्वासम्भवात् समासवाचिनस्तस्य तु "चार्थे द्वन्द्वः०"
30 [ ३. १. ११७. ] इति सूत्रे पुल्लिंगतादर्शनात् परिभाषितत्वाच्च तेन समासार्थस्यैव ग्राह्यत्वाच्च चिन्त्यम् ।

न च साहित्यार्थाभानेऽप्येकैकस्य क्रियान्वयविवक्षायां 'पश्य धवं खदिरं छिन्धि' इति वाक्यवत् 'पश्य धवखदिरौ छिन्धि' इति प्रयोगापत्तिरिति वाच्यम्, प्रत्ययार्थद्वित्वविशिष्टधर्मिकस्यैव
35 पदार्थान्तरान्वयबोधस्यान्यत्र दर्शनेनात्रापि तथैवान्वयस्यौचित्यात् । न च द्वित्वान्वययोग्यताव्यावर्त्तकसाहित्यभानमन्तरेण द्वित्वान्वय एव दुर्लभ इति वाच्यम्, योग्यताव्यावर्तकसाहित्योपस्थितेरनपेक्षणात्, उपस्थितार्थ एव तदन्वयस्य योग्यत्वात् । अत एव 'घटेन जलमाहर' इत्यत्र सच्छिद्रेतरस्यैव योग्यतावले-
40 नान्वयः, न तु सच्छिद्रेतरत्वप्रकारकशाब्दधीः, तयेतरेतरयोगेऽप्यप्रकृत्यर्थताव्यावर्त्तकस्यैव द्वित्वान्वययोग्यताव्यावर्त्तकत्वे क्षत्यभावाच्च । न च 'क्षौमे वसानावग्निमादधीयाताम्' इत्यत्र समुच्चयलाभो न स्यादिति वाच्यम्, इतरेतरयोगे सहान्वयवद् यत् कर्तव्यं तदनया सहेति दम्पत्योः सहाधिकारबोधकवचना-
न्तरात् तत्सिद्धेः । यद्यपि द्वन्द्वे परस्परान्वयित्वरूपव्यपेक्षा 45
दुर्घटा, तथापि "चार्थे द्वन्द्वः०" [ ३. १. ११७. ] इति विधिसामर्थ्यादेव तत्र समासः, तत्सूत्रार्थस्तूक्त एव । समुच्चया-ऽन्वाचययोर्द्वन्द्वाभावस्त्वनभिधानादिति पाणिनीयमहाभाष्ये पतञ्जलिः ।

यदपि-एकस्मिन्नर्थे एकधर्मेणैकसंसर्गेणान्वयित्वमेव द्वन्द्वे
सामर्थ्यमिति, तदपि न विचारसहम्-द्वन्द्वेऽस्येतरत्र समासे 50
चान्यविधस्य सामर्थ्यस्याश्रयणे समर्थसूत्रे वाक्यभेदापत्तेरिति चेत्?, अत्रोच्यते-समासे विशिष्टशक्तिरवश्यमङ्गीकर्तुमर्हा, अन्यथा समस्तस्यार्थवत्त्वाभावेन नामसंज्ञा न स्यात् "अधातु-विभक्ति-वाक्यमर्थवन्नाम" [ १. १. २७. ] इति सूत्रे शक्तिलक्षणान्य-
तरवृत्तिमदर्थकार्थवत्पदोपादानात् समस्तस्य नामसंज्ञार्थं यत्नान्त- 55
रस्यानुपलम्भात्, वृत्तिकृतः सूत्रकारस्य घट-पटादिशब्दैः सहैषां समस्त-कृत्-तद्धितान्तानां तदर्थमेकरूपेणोपन्यासात् । तथा च नामसंज्ञारूपकार्यमेव समस्तवृत्तिषु शक्तिमत्त्वमनुमापयति धूम इव वह्निम् । किञ्चैवं 'चित्रगुमानय' इत्यादौ कर्मत्वाद्यनन्वयापत्तिः,
प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः, प्रत्ययविधानु- 60
द्देश्यतापर्याप्त्यधिकरणस्यैव प्रकृतिपदार्थत्वात्, न तु प्रत्ययाव्यवहितपूर्वत्वं प्रकृतित्वम् 'ईषदूनः पटुः-बहुपटुः' इत्यादावव्याप्तेः ।

यत् तु-सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरेव कल्पनीयेति, तन्न-उपकुम्भमर्धपिप्पलीत्यादौ पूर्वपदार्थे विभक्त्यर्था-
न्वयेन व्यभिचारात् । 65

यत् तु-"प्रत्ययविधानुद्देश्यताप्रतियोगिकपर्याप्त्याख्यसम्बन्धाधिकरणत्वं न प्रकृतित्वम्, अपि तूद्देश्यताया आश्रयता-संसर्गेणाधिकरणत्वम्, इत्युपकुम्भनिष्ठोद्देश्यतायाः प्रत्यवयव-शब्देऽसत्त्वे समुदाये सत्त्वाभावः, शिबिकावाहनसामर्थ्यस्य प्रति-
व्यक्त्यसत्त्वे द्वि-चतुरादिजनसमुदायेऽसत्त्वदृष्टान्तसिद्धाद् 'अवय- 70
वावृत्तेः समुदायावृत्तित्वम्' इति नियमात्, तथा चोपादिपूर्वपदोत्तरपदयोर्विशिष्टस्याश्रयतासंसर्गेणोद्देश्यताधिकरणत्वात् प्रकृतित्वमिति सामीप्याद्यर्थानामपि प्रकृत्यर्थत्वम्; तथा च प्रकृतित्वाश्रये विभक्त्यर्थान्वयोऽर्थद्वारेणैव व्युत्पत्तिः कल्प्यते"
इति, तदपि न-'पङ्कजमानय, शूलिनमर्चय' इत्यादौ पङ्कादीनां 75
प्रकृतित्वापत्तौ तदर्थे द्वितीयार्थकर्मत्वान्वयापत्तेः, 'अघटमानय' इत्यादौ घटाद्यानयनापत्तेश्च । न चैकत्र विशेषणतयाऽवरुद्धस्यापरत्र विशेषणतयान्वयोऽव्युत्पन्न इति प्रत्ययार्थे पङ्कादीनां विशेषणतया नानयनादावन्वय इति वाच्यम्, 'पाकान्नीलः, धर्मात् सुखी'
इत्यादौ नीलत्व-सुखयोः पाकधर्मादिहेतुताया अनन्वयप्रसङ्गात् । 80

प्रकृतिजन्यज्ञानविषयत्वं प्रकृत्यर्थत्वं, न तु प्रकृतिनिष्ठशक्तिलक्षणान्यतरप्रतिपाद्यत्वम्, इत्यपि न–'घटं पश्य' इत्यादौ समवायेनैकसम्बन्धिज्ञानमपरसम्बन्ध्युपस्थापकमिति विषयोपस्थिताकाशस्यान्वयवारणाय वृत्त्या प्रकृत्यर्थत्वस्यावश्याभ्युपेयत्वात् ।

व्यवहिताऽव्यवहितसाधारणप्रत्ययप्राग्वृत्तिपदजन्योपस्थितिविशेष्यत्वं प्रकृत्यर्थत्वमित्यपि रिक्तं वचः–'ग्रामानयति गोपालो दण्डेन' इति वाक्ये सति तात्पर्यादौ गोपाले तृतीयार्थान्वयापत्तेः।

अथ समस्यमानपदार्थगतस्वार्थबोधकत्वं समासोत्तरविभक्तेरिति व्युत्पत्त्यन्तरं समासे कल्पनीयमित्यपि न–अक्लृप्तकल्पनां क्लृप्तव्युत्पत्तित्यागं चापेक्ष्य समासशक्तिकल्पनस्यैव युक्तत्वादित्यास्तां विस्तरः ॥

किञ्च, समासे विशिष्टशक्त्यस्वीकारे 'राजपुरुषः, चित्रगुः, नीलोत्पलम्' इत्यादौ सर्वत्रानन्वयप्रसङ्गः, राजादिपदस्य सम्बन्धिनि लक्षणायामपि 'तण्डुलं पचति' इत्यादौ तण्डुलादेः कर्मतासंसर्गेण पाकादावन्वयबोधवारणाय नामार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्विशेष्यतया हेतुताया आवश्यकत्वात् पुरुषादेस्तथात्वाभावात् । 'तण्डुलः शुक्ल' इत्यादौ च महाभाष्ये 'येन रूपेण नाम्नोपस्थितः सोऽर्थो नामार्थः' इत्युक्तेर्नामार्थरूपप्रथमार्थे नामार्थस्य शुक्लरूपस्याभेदसम्बन्धेन तण्डुलेऽन्वयः, 'शुक्लेन तण्डुलेन' इत्यत्र च विशेषणविभक्तिरभेदार्था, तत्राभेदो यदि भेदसामान्याभावस्तर्हि न्यायमतेऽप्रसिद्धिः, प्रमेयत्ववद् भेदस्य तन्मते केवलान्वयित्वात्, यदि यत्किञ्चिद्भेदप्रतियोगिकोऽभावस्तर्हि 'नीलः शङ्खः' इत्यस्यापि प्रामाण्यमापतेत्, नीलभेदघटोभयाभावस्य शङ्खादौ सत्त्वात्, विशेषणविभक्त्यर्थैकदेशे भेदे प्रकृत्यर्थस्यानन्वयापत्तिश्च दोषः । यदि भेदेऽभावे च विशेषणविभक्तेः खण्डशः शक्तिः, भेदे प्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वसंसर्गेणान्वयः, उक्तसंसर्गेण प्रकृत्यर्थविशिष्टस्य भेदस्य तु भेदत्वमात्रसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वसंसर्गेण, तादृशप्रतियोगिताकत्वेन संसर्गेणाभावेऽन्वयोपगमान्नोक्तापत्त्यादिरिति वाच्यम्, 'प्रमेयो घटः' इत्यादौ प्रमेयत्वावच्छिन्नभेदाप्रसिद्धेरुक्तप्रकारासम्भवात् ।

नीलपटादिपरकनीलादिपदघटितस्य 'नीलो घट' इत्यादिवाक्यस्य नीलत्वादिना नीलभेदाभावस्य घटेऽबाधेन प्रामाण्यापत्तेः । न च तद्व्यक्तित्वावच्छिन्नाभेद एव विशेषणविभक्तेरर्थः, तथा सत्यपूर्वव्यक्तिनिष्ठतद्व्यक्तित्वस्य भानाऽसम्भवे तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदग्रहासम्भवेनापूर्वव्यक्त्यभेदान्वयानुपपत्तेः । अभावधियो विशिष्टवैशिष्ट्यावगाहित्वानुपपत्त्या, एकधर्मावच्छिन्नप्रतियोगिताकाभावेऽपरधर्मावच्छिन्नप्रतियोगितायाः सम्बन्धत्वेन मानासम्भवाच्चेत्यत्र गदाधरः–'अभेदस्तादात्म्यम्, तच्च स्ववृत्त्यसाधारणो धर्मः, तत्त्वं च स्वप्रतियोगिवृत्तित्व-स्वानुयोगिवृत्तित्वरूपस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टं यत् तदन्यत्वम्, इत्येकमात्रवृत्तिधर्म एव सः, तस्मिन्नाधेयतासम्बन्धेन प्रकृत्यर्थान्वयः, अपूर्वव्यक्तिनिष्ठतद्व्यक्तित्वस्य विशिष्य ज्ञातुमशक्यत्वेऽप्येकमात्रवृत्तिधर्मत्वेन सामान्यप्रत्यासत्त्या सुग्रह इति सर्वसुस्थितिरिति तत्त्वम् ।

अरुणाधिकरणरीत्या वा शाब्दबोधोत्तरकालिको बोधान्वयः पार्ष्णिकः, यथा–'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति' इत्यत्रारुण्यादीनां गुणत्वेनाद्रव्यत्वाद् गुणिनि गोपदार्थे "गुण-गुणिनोः क्रिया-क्रियावतोरवयवा-ऽवयविनोर्जाति-व्यक्त्योस्तादात्म्यम्" इति स्व[मीमांसक]सिद्धान्तादभेदेनान्वयात् क्रयणक्रियायामन्वयाभावात् कथं करणत्वमिति जैमिनीये पूर्वपक्षीकृत्य "गुणिलिङ्गाश्च तद्वति" इत्यमराभिहितशाब्दन्यायादारुण्यादिविशिष्टेऽरुणादिपदानां शक्तिसमकक्षनिरूढलक्षणया द्रव्यबोधकत्वाद् 'अरुणया क्रीणाति, पिङ्गाक्ष्या क्रीणाति' इत्यादिरीत्या क्रयणक्रियायां सर्वेषां शाब्दमन्वयमाश्रित्य कारणत्वमुपपाद्य 'अरुणाऽभिन्ना गौः, पिङ्गाक्ष्यभिन्ना गौः' इति शाब्दबोधोत्तरकालिकः पार्ष्णिको बोधः स्वीकृतः, एवमिहापि सर्वेषां विभक्त्यर्थानां क्रियाकरणभावादिसंसर्गेण प्रथमं क्रियायामेवान्वयेन तत्र च शुक्लादिपदार्थे विभक्तिजन्योपस्थितिसत्त्वात्, अत्र पक्षे नोक्तव्युत्पत्तेर्व्यभिचार इति भावः ।

ननु नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्न इति व्युत्पत्तेः 'राजा पुरुषः, तण्डुलः पचति' इत्यादौ राज्ञः स्वस्वामिभावसम्बन्धेन पुरुषे तण्डुलादेः कर्मतासम्बन्धेन धात्वर्थपाकादावन्वयवारणायावश्यकत्वेऽपि तत्र 'राजा पुरुषः, स्तोकं पचति' इत्यत्राभेदसम्बन्धेसान्वयाद् व्यभिचारवारणायाभेदातिरिक्तसम्बन्धावलीढत्वं नामार्थनिष्ठप्रकारतायां निवेशनीयम् ।

न च विशेषणविभक्तेरभेदार्थकतया निर्वाहः "कटं भीष्मं कुरु" इत्यत्र कट एव कर्म इति पातञ्जलभाष्यवचोव्याख्यावसरे–'भीष्मादीनां स्वयमकर्मत्वेऽपि विशेष्यसम्बन्धिविभक्त्यैव भीष्मादिपदोत्तरं भवितव्यम्, तदेकयोगक्षेमत्वात्, केवलाना च नाम्नां प्रत्ययः परो भवत्येवेति सिद्धान्तात् प्रयोगानर्हत्वात्, यथा–भूपालसुहृदो निर्धना अपि स्वयं तदीयेनैव धनेन तत्फलभाजः, एवं गुणा अपि' इति "अनभिहिते" [पा० सू० २. ३. १.] इति सूत्रे वदता कैयटेन विशेषणविभक्तेः साधुत्वमात्रार्थकत्वं स्पष्टमुक्तम् । विभक्त्यर्थनामार्थविशेष्यकपुरुषादिप्रकारकबोधस्याननुभवाच्च । अत एव व्युत्पत्तौ भेदेनेति निवेश्यते, तथा च तत्पक्षे लक्ष्यार्थराजसम्बन्धिनः पुरुषादावन्वयो नानुपपन्नः, इति चेत् ?

अत्र केचित् "राजपुरुष इत्यादौ सम्बन्धिनि सम्बन्धे वा लक्षणा ?, नाद्यः–राज्ञः पुरुष इति विवरणविरोधात्, समास-

समानार्थकवाक्यस्यैव विवरणत्वात्, विवरणस्य शक्तिग्राहकत्वेन तस्य भिन्नार्थत्वे शक्तिनिर्णयो न स्यात्; नान्त्यः–'राजसम्बन्धः पुरुषः' इत्यनिष्टान्वयधीप्रसङ्गात्, विरुद्धविभक्तिरहितनामार्थयोरभेदसम्बन्धेन शाब्दबोधव्युत्पत्तेः" इत्याहुः ।

अत्रेदं वक्तव्यम्–विग्रहस्य विक्रियमाणसमानार्थकत्वं न विक्रियमाणजन्यबोधे यद्यद्विशेष्यकत्वसमानाधिकरणयत्तत्प्रकारकत्वं तत्तद्विशेष्यकतत्तत्प्रकारकबोधजनकत्वं, प्राप्तोदकमित्यादिसमासविग्रहस्य विग्रहत्वानुपपत्तेः, 'पचति, व्याकरणमधीते' इत्यादिवाक्यानां 'पाचकः, वैयाकरणः' इत्यादिकृत्तद्धितवृत्तिविग्रहत्वानापत्तेश्च, तत्र विग्रहे विगृह्यमाणजन्यबोधविषयपदार्थानां विशेषणविशेष्यभाववैपरीत्यात्; नापि तज्जन्यबोधीययावत्पदार्थविषयकबोधजनकत्वं विक्रियमाणसमानार्थत्वम्, पुरुषस्य राजेत्यस्यापि राजपुरुषादिपदविग्रहत्वापत्तेः, किन्तु विक्रियमाणजन्यबोधजनकत्वं तद् वाच्यम्, प्राप्तमुदकं यमित्यादेः प्राप्तोदकादिसमासजन्यबोधविषयाः परस्परसम्बन्धतात्पर्यविषयीभूताश्च यावन्तः पदार्था उदकादयस्तद्विषयकबोधजनकत्वमस्त्येव, घटीया कर्मतेत्येतावन्मात्रस्य 'घटकर्मकमानयनं कृतिः' इति वाक्यस्य विग्रहत्ववारणाय यावदिति निवेशः, 'राज्ञः पुरुषः सुन्दरः' इति वाक्यस्य राजपुरुषेति समासविग्रहत्वमिष्टमेव । वस्तुतस्तु शक्तिग्रहार्थं प्रयुज्यमाने तस्मिन्नतात्पर्यविषयार्थकपदप्रयोगदौर्लभ्यमेव, पुरुषस्य राजेत्यादेर्विग्रहत्ववारणाय तात्पर्यविषयत्वं विशेषणम्, तत्र घटः कर्मत्वमित्यादिसमुदायस्य 'घटं नय' इत्यादिविग्रहत्वमिष्टमेव । तत्राकाङ्क्षाविरहादनभिधानाद् वा शाब्दबोधो नेत्यन्यदेतत् । प्रकृते च 'राजपुरुष' इत्यादिसमासस्य 'राज्ञः पुरुष' इति वाक्ये विग्रहत्वमक्षतमेव ।

इहेदमप्यनुसन्धातव्यम्–विरुद्धविभक्तिकनामार्थ-धात्वर्थयोः स्तोकं पचतीत्यादिक्रियाविशेषणघटितवाक्येऽभेदसम्बन्धेनान्वयादभेदसम्बन्धावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितनामार्थनिष्ठविशेष्यताकशाब्दबोधावलीढबुद्धिं प्रति विरुद्धविभक्तिरहितपदजन्योपस्थितेरात्मनिष्ठप्रत्यासत्त्या विषयनिष्ठप्रत्यासत्त्या वा यथायथं हेतुत्वमिति निरुक्तकार्यकारणभावाभिप्रायेण 'राजपुरुषः' इत्यादिसमासोत्तरपदार्थे पुरुषादौ तस्य सत्त्वादभेदान्वयो दुर्वारः स्यादिति । विशेषणविभक्तेः साधुत्वमात्रमर्थ इति मते तु विभक्तौ विरुद्धत्वं स्वार्थभिन्नार्थत्वम्, 'नीलो घटः' इत्यादौ विशेषणविभक्तेरर्थाभावेन विशेष्यपदोत्तरविभक्तिविरुद्धार्थकविभक्तिर्द्वितीयादिरेव, तदप्रकृतिकत्वरूपतद्रहितत्वस्य विशेषणवाचिनीलादिपदेऽसत्त्वान्न तदसंग्रह इति ॥

मीमांसकैरपि विशिष्टशक्तिरभ्युपगम्यत एव, अत एव "वषट्कर्तुः प्रथमभक्षः" इति तृतीयेऽध्याये "त्र्यङ्गैः स्विष्टकृतं यजति" इति दशमेऽध्याये जैमिनीयन्यायमालायाम्–"एकप्रसरताभङ्गापत्तेः" इत्युक्तं सङ्गच्छते । तथाहि–प्रथमे 'होतृचमस' इति वाक्ये श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्येति षड्विधप्रमाणान्तर्गतसमाख्याप्रमाणेन प्राप्तं वषट्कर्तृसम्बन्धिभक्षमुद्दिश्य प्राथम्यं विधेयमिति पूर्वपक्षे एकप्रसरताभङ्गापत्तिरुक्ता, तस्याऽयमाशयः–यत्र यत्रोद्देश्य-विधेयभावसम्बन्धेन पदार्थयोरन्वयो भवति तत्र तत्रोद्देश्यपदार्थ-विधेयपदार्थयोः पार्थक्येनोपस्थितिरपेक्ष्यते, तथाबोधे पृथगुपस्थितेः कारणत्वात्, अत एव हनुमन्नाटके रावणपश्चात्तापावसरे–

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः,
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो ! रावणः ।
धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा ?,
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ? ॥"

इति पद्ये स्वर्गविलुण्ठनजन्योच्छूनत्वमनूद्य वृथात्वं विधेयं कविसंरम्भविषयीभूतं विधेयाविमर्शदोषोपहतं, समासान्तःपातित्वेन पृथगुपस्थितेरभावेन विधेयत्वाऽसम्भवात्, इति सकलालङ्कारिकसरणिः । प्रकृतेऽपि प्रथमभक्ष इति समस्तमुद्देश्यविधेयभावेनान्वयानर्हम्, तदनुरोधेन पृथगुपस्थित्यभ्युपगमे विशिष्टार्थोपस्थितिजनकत्वरूपैकप्रसरता भज्येत, प्राथम्यविशिष्टभक्षनिरूपिते लक्षणाभ्युपगमेनैकप्रसरतायास्त्वन्मतसिद्धत्वात्, बोधकत्वाविशेषेण शक्ति-लक्षणयोरैक्यात् । न च 'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्' इत्यभिधानात् प्रथमभक्ष इत्यत्र कथं विधेयसमर्पकतोपादानम्? विधेयतयान्वये तच्छब्दयोगादीनां तन्त्रतया प्रकृते तदभावादिति वाच्यम्, निरुक्तोद्देश्यलक्षणस्य प्रायिकत्वात्, सति तात्पर्ये 'प्रथमो भक्षः, पण्डितः साधुः' इत्यादिषु प्राथम्यादिविधेयकबोधस्यानुभविकत्वाच्च, इत्थं च प्राथम्यविशिष्टभक्षणं शब्दशक्त्या विशिष्टमेव विधेयं, पश्चात् प्राप्ताप्राप्तविवेकन्यायेन प्राथम्ये विधेयत्वं पर्यवस्यतीति सिद्धान्तितम् ।

'त्र्यङ्गैः' इत्यत्र हीज्याशेषभूतत्रित्वविशिष्टयत्किञ्चिदङ्गविधानमुत त्रित्वविशिष्टाङ्गविधानमिति सन्देहे प्रकृताविज्याविशेषणपुरोडाशेन स्विष्टकृते हुतत्वादत्राप्युपस्थितत्यागे मानाभावाच्छेषभूतत्रित्वविशिष्टाङ्गैरेव स्विष्टकृद्यजनं युक्तमिति पूर्वपक्षे शेषभूतानि कानिचिदङ्गान्यनूद्य त्रित्वविधाने समासावयवत्रित्वपदार्थोऽङ्गपदार्थयोरुद्देश्य-विधेयभावेनान्वये एकप्रसरताभङ्ग आपद्येत, तस्मात् कल्पसूत्रोक्तत्रित्वविशिष्टाङ्गान्तरं विधेयमिति जैमिनीयाधिकरणमालायां दशमाध्यायस्य तृतीयपादे निर्णीतम् । कल्पसूत्रोक्तैकादश हृदयाद्यङ्गानि यथा–हृदयं, जिह्वा, वक्षो, यकृत्, वृक्कौ, सव्यं दोः, उभे पार्श्वे, दक्षिणश्रोणी, गुदम्, इति । तत्र दक्षपार्श्वं दक्षिणश्रोणी गुदमिति त्रित्वविशिष्टं विधेयमिति तत्रत्यो ग्रन्थः ।

परे तु–'एकप्रसरत्वं न विशिष्टार्थोपस्थितिजनकत्वं, किन्तु

समासावयवपदयोरुद्देश्यविधेयभावेनान्वयबोधाक्षमत्वम्' इति
नियमभङ्गापत्तिरिति तदर्थः, न तु विशिष्टार्थोपस्थितिभङ्गापत्ति-
रिति । तद्बीजं तु समासघटकपदार्थनिष्ठविधेयतानिरूपितोद्देश्य-
तासंसर्गेण शाब्दबोधं प्रति समासघटकपदजन्योपस्थितिः प्रतिब-
न्धिकेति व्युत्पत्तिः । न चोक्तप्रतिबध्य-प्रतिबन्धकभावकल्पना-
गौरवं, सर्वत्र विशिष्टशक्तिकल्पनापेक्षया क्वचित् प्रतिबध्य-प्रति-
बन्धकभावकल्पनस्य लघुत्वात्' इत्याहुः ।

अर्धजरतीयस्यानौचित्यमिति वयम् । वस्तुतस्तु-यत्रोद्देश्य-
विधेयभावेनान्वयधीस्तत्र तत्पदार्थोपस्थिति-समवहिततदानुपूर्वी-
रूपाकाङ्क्षाविरहादेव तथान्वयबोधासम्भवान्नोक्तप्रतिबध्य-प्रति-
बन्धकभावकल्पनाप्यावश्यकी, एकप्रसारता तु प्रथमपदार्थान्वित-
मक्ष्यविशेष्यकान्वयबोधानुभवः सार्वजनीन इति समासे विशिष्ट-
शक्त्यभ्युपगमे मीमांसकानां नोक्तयुक्त्यपेक्षा, विविधोक्तकल्पना
त्वध्ययना-ऽध्यापनाभ्यां तदाविष्टानां सूक्ष्मतत्त्वग्राहिमतिवैश-
द्यार्थेति तात्पर्यम् ।

यत्तु-'राजपुरुषः' इत्यत्र राजा चासौ पुरुषश्चेत्येव 'चित्रगुः'
इत्यादौ च चित्राणां गवामित्येव विग्रहः, समास-व्यासयोः समा-
नार्थत्वानुरोधात्, यद्यपि प्रथमान्तानामेव बहुव्रीहिरिति 'द्विती-
याद्यन्यार्थे' इति विशेषणाद् "एकार्थं चानेकञ्च" [३. १.
२२.] इति सूत्राल्लभ्यते, इति प्रथमापक्षे चित्रा गावो यस्येति
वाक्यं सम्भवत्येव, "षष्ठ्ययत्नाच्छेषे" [३. १. ७६.] इति
समासविधानाद् 'राज्ञः पुरुषः' इति पक्षे वाक्यम्, तथापि तस्य
न विग्रहत्वं भिन्नार्थत्वात्, किन्तूक्तस्यैवेति केचिन्मीमांसकैक-
देशिनः, तन्मन्दम्-विवरण-विवियमाणयोर्गुण-प्रधानभावस्या-
किंचित्करत्वेन शक्तिग्राहकतायां पूर्वाचार्यैः परिकल्पनात् ।
तथाहि-'आक्षिकः' 'कुम्भकारः' इत्यादिविव्रियमाणस्य
'अक्षकरणकव्यापाराश्रयः, कुम्भोत्पत्त्यनुकूलव्यापाराश्रयः' इति
शाब्दप्रतीतिः, विवरणमस्य 'अक्षैर्दीव्यति, कुम्भं करोति' इति,
अत्राक्षकरणिका देवनानुकूला भावना, कुम्भोत्पत्त्यनुकूला च
भावनेति शाब्दधीः, कृत्प्रत्यये कारकाणामाख्याते च भावनायाः
प्राधान्यं वदतां मीमांसकानामपि गुण-प्रधानभावांशव्यत्यासो
नो चेद् विवरणत्वबाधकस्तर्हि किमपराद्धं वैयाकरणैर्यत् 'चित्रा
गावो यस्य, राज्ञः पुरुषः' इत्यादेर्विग्रहत्वे निरुक्तविपर्ययो बाधकः
स्यादिति तूष्णीकामास्यतां तैरिति ॥

अनयोरेव समासशक्ति-व्यपेक्षाशक्त्योर्जहत्स्वार्था-ऽजहत्स्वा-
र्थापदाभ्यां "समर्थः पदविधिः" [पा० सू० २. १. १.] इति
सूत्रे प्राचामाचार्याणामुक्तान् नानापक्षभेदान् तिरस्कृत्य भाष्य-
कृता व्यवहारः कृतः । जहति स्वानि यं स जहत्स्वः, तथा-
भूतोऽर्थो यस्यां सा जहत्स्वार्था, न जहति स्वानि यं सोऽजहत्स्वः,
तथाभूतोऽर्थो यस्यामित्यजहत्स्वार्थेति बहुव्रीहिगर्भबहुव्रीहिणोक्त-
पदयोः साधनप्रकारः । यत्र तत्र जहति स्वार्थं पदानि यस्यां, न
जहति स्वार्थं पदानि यस्यामिति ग्रन्थकृतां लेखस्त्वर्थकथनमात्र-
परो न तु समासोपयुक्तविग्रहप्रदर्शनार्थः । इत्थं विरुद्धविभक्तिक-
पदानां समासस्यान्यत्रादर्शनात् समासशास्त्रप्रवृत्तिदौर्लभ्याच्च
तत्र समासशक्त्यैव विशिष्टार्थभानान्न पुना राजन्शब्द-पुरुष-
शब्दयोरर्थबोधजनकशक्तिमत्त्वं कल्पनीयम्, यथा-वृषभ-याव-
कादिपदेषु वृष-यावादिपदानां शक्तिमत्त्वं न कल्प्यते तथा ।
तद्बीजं स्वानुपूर्वीबोधिताखण्डधर्मस्यैव शक्तिपरिच्छेदकत्वकल्पनेन
तत्रानुपूर्व्यन्तरस्य प्रयोगाभावः, आनुपूर्व्यन्तरघटकत्वाभावविशि-
ष्टाखण्डधर्मस्यैव शक्तिपरिच्छेदकत्वमित्यखण्डस्फोटवादिनां शाब्दि-
कानां सिद्धान्तः । वृषभादिशब्दान्तर्गतवृषाद्यानुपूर्व्याश्च शक्ति-
परिच्छेदकाखण्डधर्मद्योतकत्वं नास्ति, तादृशधर्माभावाच्च पदार्थो-
पस्थितिजनिका शक्तिस्तत्र न कल्पयितुं योग्या, वृष-राजशब्द-
घटितानुपूर्व्या वृषभत्व-राजपुरुषत्वरूपानुपूर्व्यन्तरघटकत्वेन तद-
भाववैशिष्ट्यविरहान्न वृष-राजशब्दयोः पृथक्प्रयोगाभावापत्तिः,
अतो रेफस्य वह्निवाचकत्वे सत्यपि रामादिपदान्तर्गतस्य तस्य न
तद्वाचकत्वम्, अत एव 'धनं वनम्' इत्यादौ धकारादीनामर्थवत्त्व-
विरहान्नामत्वाभावेन तत्प्रयुक्तविभक्त्यन्तत्वाभावाच्च पदत्वप्रयुक्त-
कार्यप्रसक्तिः, व्यपेक्षात्मकाऽजहत्स्वार्थायां तु समासाभावाद्
वाक्यघटकपदान्यर्थवन्त्येव, 'राजसम्बन्धी पुरुष' इत्याद्यर्थे 'राज्ञः
पुरुषः, पुरुषो राज्ञः' इति द्विविधस्यापि प्रयोगस्य सामर्थ्यात्
तादृशविशिष्टानुपूर्वीद्वयस्य शक्तिपरिच्छेदकतायां विशिष्टवैशिष्ट्या-
वगाहिन्यामधिकधर्मप्रवेशेन तदपेक्षया पदशक्तिकल्पनाया एव
लघीयस्त्वादिति तात्पर्यम् ।

न चैकार्थीभावकल्पे* अर्थवद्ग्रहणे नानर्थकस्य* इति न्यायेन
प्रत्येकं पदानां वृत्तिघटकानामानर्थक्यात् 'महाबाहुः, सुपन्थाः'
इत्यादावात्त्वानापत्तिः, यथाश्रुतग्राहि-विशेषदर्शिशिष्यप्रभेदा-
च्छास्त्रे मतद्वयं विदितम्-यथोद्देशमथ कार्यकालम्, अर्थादेव
तथैव व्यवतिष्ठत इत्याचार्योक्तकार्यकालपक्षे समासोत्तरं नलोप-
वेलायां 'राजन्' इति समुदायस्यार्थवत्त्वाभावेन नामसंज्ञावि-
रहाद् 'राजपुरुषः' इत्यादौ नलोपाद्यनापत्तिश्चेति शङ्कनीयम्,
कतिपयसूत्रसामर्थ्येन भूतपूर्वमर्थवत्त्वमादायात्त्व-नामसंज्ञाविधा-
यकशास्त्रप्रवृत्त्युपपत्तेः, एकस्यैव पदस्य वृत्ति-तत्प्राक्कालयोरर्थ-
वत्त्वानर्थकत्वे चानादिसिद्धप्रयोगानुरोध एव शरणम् । योग-
रूढिस्थले तु योगान्तर्भावेण शक्त्यभ्युपगमान्न तत्र दोष इति
प्रसङ्गागतः समासशक्तिविचारः संक्षेपेण परिपूर्णः ॥

अथ प्रकृतमनुसरामः-**स च पृथगर्थानां पदानां
क्वचित् परस्परव्यपेक्षालक्षणं सामर्थ्यमनुभूय भव-
तीति** वृत्तिः, **स च** ऐकार्थ्यरूपसामर्थ्यविशेषश्च, **पृथगर्थानां**

राजत्वविशिष्ट-पुरुषत्वविशिष्टादिविभिन्नार्थानां, **पदानां** राजपद-पुरुषपदादीनां, **क्वचित्** तत्पुरुषादौ, **परस्परव्यपेक्षालक्षणं** मिथोव्यपेक्षारूपं, **सामर्थ्यमनुभूय भवति** षष्ठीतत्पुरुष-कर्मधारययोरन्तरेणापि विशिष्टशक्तिं निर्वाहस्य पूर्वं समासशक्ति-विचारावसरे प्रतिपादितत्वात् तत्र व्यपेक्षालक्षणसामर्थ्यानुभव इत्याशयः । वस्तुतस्तु–'राजन्+ङस्, पुरुष+सि' इत्यलौकिक-विग्रहवाक्ये जहत्स्वार्थपक्षमाश्रित्य समासः, अजहत्स्वार्थपक्ष-माश्रित्य 'राज्ञः पुरुषः' इति विग्रहवाक्यमिति विवेकः । **राज्ञः पुरुषः** इति–"राजृग् दीप्तौ" अतः "उक्षि-तक्षि०" [उणा० ९००.] इति अनि–'राजन्' इति, ततः षष्ठ्या ङसि–राज्ञः, "पॄश् पालनपूरणयोः" अतः "विदि-पृभ्यां कित्" [उणा० ५५८.] इति किति उषे सौ च–पुरुषः, इदं लौकिकं विग्रह-वाक्यम् । **राजपुरुषः** इति–"षष्ठ्यन्ताच्छेषे" [३. १. ७६.] इति तत्पुरुषसमासः "नाम्नो नोऽ०" [२. १. ९१.] इति नलोपश्च, अयमुक्तवाक्यस्य समासः । **नीलं च तदुत्पलं** चेति–विग्रहवाक्यमिदम्, "णील वर्णे" अतोऽचि सेरमादेशे–नीलम्, उत्पूर्वस्य "पां पाने" इत्यस्य "मुरलोरल०" [उणा० ४७४.] इत्यलन्तनिपातनात्–'उत्पल' इति, ततः सेरमादेशे–उत्पलमिति । **नीलोत्पलमि**ति–"विशेषणं०" [३. १. ९६.] इति कर्मधारयः ।

**क्वचिद्** नित्यसमासे, **अननुभूयैवे**ति–मिथोव्यपेक्षालक्षण-सामर्थ्यानुभवमकृत्वैव, ऐकार्थ्यरूपसामर्थ्यविशेषो भवतीति सम्बन्धः, **यथा-उपकुम्भम्, कुम्भकारः**, इति–"कैं शब्दे" अतः "का-कुसिभ्यां कुम्भः" [उणा० ३३७.] इति किदुम्भे–'कुम्भ' इति, प्रथमे "विभक्ति-समीप०" [३.१.३९] इति समासः, द्वितीये च "ङस्युक्तं कृता" [३. १. ४९.] इति समासः, उपकुम्भादौ समासस्य नित्यत्वेन, कुम्भकारादौ चोपपदसमासे विभक्त्युत्पत्तेः प्रागेव समासविधानात् तत्र पदानां पृथगर्थोपस्थापकत्वाभावादजहत्स्वार्थाया अभावाज्जहत्स्वार्था वृत्तिरेव भवतीति न तत्र व्यपेक्षानुभव इति भावः । अत एव 'अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा [स्वघटकयावत्पदा-घटितविग्रहो वा]' इति प्राचां प्रसिद्धिः । अत एव च तत्र समासार्थाभिधायि विग्रहवाक्यं समस्यमानपदभिन्नपदैरेव कल्प-नीयमिति दर्शयति—**वाक्यान्तरेण त्वर्थः प्रदर्श्यत** इति । वाक्यान्तरमेव क्रमेणाह–**कुम्भस्य समीपम्** अत्र समीपशब्दघटितत्वाद् वाक्यान्तरत्वम्, **कुम्भं करोतीति**–अत्र करोतिना घटितत्वाद् वाक्यान्तरत्वम् ।

**क्वचित्** पूरणप्रत्ययान्त-विधेयभावापन्नगोत्रार्थकयान्तादि-स्थले, **न भवत्येव** ऐकार्थ्यरूपसामर्थ्यविशेषो न भवत्येव, शब्दशक्तिस्वाभाव्येन तत्र विशिष्टे शक्तिर्न कल्प्यत इत्यैकयार्था-भाव इति भावः । तदेवोदाहरति–**छात्राणां पञ्चमः, रामो जामदग्न्यः**, इति–ऐकार्थ्याभावात् प्रथमे "षष्ठ्ययत्नाच्छेषे" [३. १. ७६.] इति, द्वितीये 'विशेषणं विशे०" [३. १. ९६.] इति च समासो न भवति, समासे सति तु 'छात्रपञ्चमः, रामजामदग्न्यः' इति स्यात्, तच्चानभिधानान्नेष्टमिति । "छदण् संवरणे" छादयतीति "हु-या-मा०" [उणा० ४५१.] इति त्रे–'छात्र' इति, पञ्चन्शब्दात् पञ्चानां संख्यानां पूरण इत्यर्थे "नो मट्" [७. १. १५९.] इति मटि–'पञ्चम' इति, "रमिं क्रीडायाम्" रमते इति ज्वलादित्वाण्णे–'राम' इति, जमदग्नेर-पत्यमित्यर्थे गर्गादित्वाद् यञि–'जामदग्न्य' इति ।

अयमाशयः—बहुलग्रहणेनात्र स्वाभाविकीशब्दशक्तिरनुरुध्यते इति विज्ञायते, बाहुलकस्य हि—

क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः, क्वचिद् विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥"

इति दिशा क्वचिदप्रवृत्तिरूपत्वं प्रसिद्धम्, तदेवाग्रे वक्ष्यति–**बहुलमिति शिष्टप्रयोगानुसरणार्थमिति** । यद्यपि 'छात्राणां पञ्चमः' इत्यत्र "तृप्तार्थपूरण०" [३. १. ८५.] इति समासो निषिध्यते, 'रामो जामदग्न्यः' इत्यत्र चोद्देश्यविधेय-भावावगाहिप्रतीतये जमदग्निवृद्धापत्यार्थस्य जामदग्न्यपदस्य पृथगर्थोपस्थापकत्वमित्यैकार्थ्याभाव एव तत्र न कल्प्यत इति स्वत एव समासाभावः सिद्धः, तथापि लक्षणैकचक्षुष्काणाम-स्मदादीनां 'क्वैकार्थ्याभावो नित्यः, क्व वैकल्पिकः, क्व च नास्त्येव' इति विषयस्य दुर्ज्ञेयत्वेन तत्र तत्र निषेधविकल्पसूत्रादीन्यारभ्यन्ते इति बोध्यम् ।

**लक्षणमिदमधिकारश्चे**ति–लक्षणत्वेन यत्र विशिष्य समाससंज्ञा न विहिता तत्रेदं सूत्रं समासविधायकम्, तेन विस्प-ष्टादीनि गुणविशेषणानि पदानि गुणवचनेन पट्वादिपदेन सह समस्यन्ते–विस्पष्टं पटुः–विस्पष्टपटुः; अधिकारोऽपि सूत्रमिदम्, अधिकारस्तावद् 'देवदत्तः पचति' इत्यादौ विशेषणसमासनिवृ-त्त्यर्थः, अन्यथा हि 'पचति' इत्यनेन कर्तृसामान्यं यदुपात्तं तद् 'देवदत्तः' इत्यनेन कर्तृविशेषणेन विशेष्यत इति सामानाधिकर-ण्येन विशेषणविशेष्यभावोऽस्ति, "नञ्" [३. १. ५१.] इत्या-दावुत्तरपदानुपादाने उत्तरपदोपस्थापनार्थश्च । अथ सर्व एवायं योगोऽधिक्रियते, तत्रानाम्नः प्रसङ्गे तन्निरासाय 'नाम नाम्ना' इति, तथैवेह प्रत्युदाहरिष्यते, बहुलमिति च तत्र तत्रातिप्रसङ्ग-निरासार्थम्, तदपि च वक्ष्यमाणप्रयोगानुसरणार्थमिति, समास इति किमर्थमधिक्रियते ? वक्ष्यमाणे सर्वत्राप्यस्त्येवेदं लक्षणम्, तत्रा-नेनैव समाससंज्ञा सिद्धा, उच्यते–समाससंज्ञाधिकारे तत्र लक्ष्या-नुसरणक्लेशः परिहृतो भवति, किञ्च यद्यपि लोके शास्त्रे च बहूनामपि संज्ञानामविरोधात् फलभेदाच्चैकत्र समावेशो भवति, यथा–

'वनस्पतिर्वृक्षः शिंशपाः, प्रत्ययस्तद्धितो द्विः' इति च, येन
नाप्राप्तिन्यायेन विध्यन्तरेषु बहुव्रीह्यादिसंज्ञासु पश्चादिहापि कश्चित्
तदा मन्येत–बहुव्रीह्यादिसंज्ञाभिः समाससंज्ञा बाध्येतेति, समास-
संज्ञः सन् बहुव्रीह्यादिसंज्ञो भवतीत्यतः समास इत्यधिक्रियते,
5 अथवा 'नाम नाम्नैकार्थ्ये बहुलम्' इति शेषापेक्षमेवेदमुच्यते–
अधिकारश्चेति, न 'समास' इत्येतदपेक्षमिति । तथा च–

"संज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥"

इत्युक्तदिशा षड्विधसूत्रेषु मध्ये सूत्रमिदं द्वैविध्यमाश्रयतीति भावः ।

10 ननु नैतद् युक्तम्–षड्विधमिति विधापदस्य मिथोविरुद्धनाना-
धर्मवृत्तिसंख्याप्रकारकधर्मिविशेष्यकबोधप्रयोजकवाक्ये क्रियायोग
एव प्रयोगो दृश्यते, यत्र विभाजकधर्माणां वैयधिकरण्यमिति
सकलतान्त्रिकसम्मतः पन्थाः, यथा–स्यादिविभक्तिः सप्तविधेति
प्रथमादयः पृथगेव विभक्तित्वेन विज्ञायन्ते, न तत्रैकत्र प्रथमा-
15 त्वादीनामेकाधिकस्य समावेशो भवति, यतः स्यादिविभक्तित्व-
समनियतं वस्तुविशिष्टान्यत् सप्तत्वं सप्तविधपदार्थः, एवमेव सूत्र-
त्वसमनियतवस्तुविशिष्टान्यषट्त्वं षड्विधशब्दार्थः, वस्तुवैशिष्ट्यं
च स्ववृत्तित्व-स्वेतरस्वसमानाधिकरणवस्तुवृत्तित्वोभयसम्बन्धेन,
वस्तुविशिष्टं यत् तदन्यत्वं वस्तुविशिष्टान्यशब्दार्थः । अत्र प्रथमा-
20 त्वाद्येकधर्मं परित्यज्य षट्त्वसंख्यया, एवं सित्वप्रथमात्वादिधर्मा-
नादायाष्टत्वसंख्यया स्यादिविभक्तिर्विभाजयितुं न शक्यते, षट्त्वे
स्यादिविभक्तिसमनियतत्वाभावः, त्यक्तविभक्तौ स्वाश्रयत्वसम्ब-
न्धेन षट्त्वस्यासत्त्वात्, स्यादिविभक्तित्वस्य सत्त्वेनासमनियत-
त्वात्; नाप्यष्टत्वसंख्यया, तत्र समनियतत्वे सत्यपि वस्तुवैशिष्ट्य-
25 स्यापि सत्त्वेन तदन्यत्वाभावात्, तथाहि–वस्तु सित्वधर्मः,
तदितरत्वमष्टत्वे, एवं वस्तु सित्वं, तदितरत् तत्समानाधिकरणं
प्रथमात्वं, तद्वृत्तित्वमपीति न दोषः । सप्तत्वं कथमपि वस्तुविशिष्टं
न स्यात् प्रथमात्वादिसप्तधर्माणां वैयधिकरण्यात्, इतरेषां
सित्वादीनां वस्तुपदेन ग्रहणे तद्वृत्तित्वमेव प्रथमात्वादिनिष्ठसप्त-
30 त्वस्य नेति तादृशसप्तत्वं संख्यादीनामिति सप्तत्वसंख्याविभाज-
कोपाधिः । सूत्रनिष्ठसंख्यात्वादिधर्मवृत्तिषट्त्वं तु सूत्रत्वसमनियत-
मपि वस्तुविशिष्टमेव, वस्तु अधिकारत्वं तद्वृत्तित्वम्, अधिकार-
त्वेतराऽधिकारत्वसमानाधिकरणं प्रकृतसूत्रगतत्वाद् विधित्वं,
तद्वृत्तित्वमेव षट्त्वस्य न तु तदन्यत्वमिति षट्त्वसंख्या 'षड्विधं
35 सूत्रलक्षणम्' इति रूपेण विभाजिका न स्यात्, एकस्यास्य
सूत्रस्योभयसूत्रत्वाङ्गीकारे, इति चेत् ?, न–*प्रत्युच्चारणं शब्दो
भिद्यते* इति पक्षमनुसृत्य "नाम नाम्नैकार्थ्ये समासो बहुलम्"
[ ३. १. १८. ] इति सूत्रमावर्त्यैकं विधिसूत्रमपरमधिकारसूत्रमिति
प्रकल्पनात्, भेदाङ्गीकारादेव सूत्रस्य षट्त्वसंख्या विभाजिकेति
40 सिद्धम् ।

यत्र बहुव्रीहि-तत्पुरुषाद्यधिकारान्तर्गतसमाससूत्राणां न
प्राप्तिः, यत्र चैकार्थतया विशेष्यविशेषणभावावगाहिनी बुद्धिर्न
दृश्यते तत्र प्रकृतसूत्रेण समास इति लक्षण[विधि]सूत्राङ्गीकार-
फलम्, अधिकारत्वफलमपि पूर्वमुक्तमेव । तानि फलानि दर्श-
यति–**विस्पष्टं पटुरित्यादिना** । **विस्पष्टं पटुरिति**–इत्थं- 45
रूपानुगते योगे '**विस्पष्टपटुः**' इति समास इति दर्शयति ।
विस्पष्टशब्दात् पटुशब्दाच्च सौ *अन्तरङ्गानपि विधीन् बहिरङ्गा
लुब् बाधते* इति "ऐकार्थ्ये" [ ३. २. २८. ] इति लुब्विषये
कार्यान्तरप्रतिबन्धात् 'विस्पष्ट सि पटु सि' इति स्थिते 'स्याद्यन्तं
स्याद्यन्तेन' इति मते समाससंज्ञा प्रवर्तते, 'नाम नाम्ना' इति 50
स्वमते तु "ऐकार्थ्ये" [ ३. २. २८. ] इति स्यादेर्लोपे समास-
संज्ञा प्रवर्तते, प्रवृत्ते वान्तरङ्गे विधौ परिनिष्पन्नयोरपि पदयोः
समाससंज्ञायां कृतायां तत एव *अन्तरङ्गान्०* इति कार्य-
निवृत्त्या 'विस्पष्ट सि पटु सि' इति निवेश्यैव बहिरङ्गापि स्यादेर्लुब्
भवति, अन्यथा 'राज्ञः पुरुषः–राजपुरुषः' इत्यादि न सिध्येत् । 55

ननु चेह 'विस्पष्टम्' इति 'पटुः' इत्यस्य विशेषणं, तत्र
"विशेषणं विशेष्येणैकार्थं०" [ ३. १. ९६. ] इति किं न
सिध्यति, यत इदमिहोदाहरणं स्यात् ? उच्यते–सामानाधि-
करण्याभावात्, तथाहि–पटुशब्द इह पटुत्वविशिष्टे द्रव्ये वर्तते,
विस्पष्टशब्दस्तु पटुशब्दप्रवृत्तिनिमित्ते पटुत्वे उपाधौ वर्तते, 60
अतो न सामानाधिकरण्यम्, तदभावात् सत्यपि विशेषणविशेष्य-
भावे न समासः, स हि विशेषणविशेष्यभावं सामानाधि-
करण्यं च समुदितमपेक्षत इति तेनासिद्धेरुदाहरणम् ।

विपूर्वात् "स्पशिण् ग्रहण-श्लेषणयोः" इत्यतः क्ते "णौ
शान्त-दान्त०" [ ४. ४. ७४. ] इति निपातनाद् 'विस्पष्ट' 65
इति, "पट गतौ" पटति दाक्ष्यमिति "भृ-मृ-तॄ०" [ उणा०
७१६. ] इत्युप्रत्यये–'पटु' इति, पटुशब्दः पटुत्वगुणविशिष्टं
गुणिनमाह, तदेकदेशे पटुत्वे प्रकटरूपस्य विस्पष्टशब्दार्थस्यान्वयः,
अत एव पटुत्वान्वयि क्लीबत्वं प्रथमान्तेन नपुंसकेन 'विस्पष्टम्'
इत्यनेन द्योतितम्, विस्पष्टं यत् पटुत्वं तद्वानिति विस्पष्टपटु- 70
शब्दस्यार्थो भवति ।

ननु पटुशब्दो यथा मुख्यतया गुणिनमाह तथा गौणतया
गुणमप्याह, विस्पष्टशब्दश्चाभेदेन गुणविशेषणमिति विशेषण-
विशेष्यभावात् सामानाधिकरण्याच्च कथं न कर्मधारय इति चेत् ?,
उच्यते–गौणे विशेषणस्यान्वयाद् विशेषणविशेष्यभावस्यापि 75
गौणतया मुख्यस्य सामानाधिकरण्यस्य विरहात् "विशेषणं
विशेष्येणै०" [ ३. १. ९६. ] इति कर्मधारयाप्राप्तिरिति प्रकृत-
सूत्रोदाहरणत्वमस्य, एवमग्रेऽपि, समासस्यापि "अधातुविभक्ति-
वाक्यमर्थवन्नाम" [ १. १. २७. ] इति नामत्वाद् यथायथं
स्यादयो ज्ञेयाः सर्वत्र, प्रकृते सौ विस्पष्टपटुरिति । 80

**विचित्रं कटुक** इति-विग्रहवाक्यमिदम्, विपूर्वात् "चिगट् व्ययने" इत्यतः "चि-मि०" [उणा० ४५४.] इति किति त्रप्रत्यये-'विचित्र' इति, सेरमादेशे-विचित्रमिति, "कटे वर्षा-ऽवरणयोः" अतः "मि-वमि०" [उणा० ५१.] इति 5 उके सौ च-'कटुक' इति, विचित्रम्-आश्चर्यजनकं यत् कटुकत्वं-रसविशेषः, तद्वानित्यर्थे प्राग्वत् समासे-**विचित्रकटुकः**, इति।

अतिदिशति-**एवमि**ति-उक्तशैल्याऽन्यान्यप्युदाहरणानि ज्ञेयानि, तानि कानि? इत्याह-**विविक्तकषाय** इति-विविक्त 10 कषाय इति विग्रहः, विविक्तं-पृथग्भूतं यत् कषायत्वं रसविशेषः, तद्वानित्यर्थः, "विचूंकी पृथग्भावे" विपूर्वादतः क्ते-'विविक्त' इति, "कष हिंसायाम्" अतः कषति श्लेष्माणमिति "कुलि-लुलि०" [उणा० ३७२.] इति किति आये-'कषाय' इति। **व्यक्तलवण** इति-व्यक्तं लवण इति विग्रहः, व्यक्तं यत् 15 लवणत्वं-रसविशेषः, तद्वानित्यर्थः, "अञ्जौप् व्यक्ति-म्रक्षण-गतिषु" व्यक्तिः-प्रकटता, म्रक्षणं-घृतादिसेकः, विपूर्वादतः कर्मणि क्ते वेट्त्वादिड्भावे नलोपे कत्वे च-'व्यक्त' इति, लीयतेः क्रियतेः स्वदतेर्वा "चिक्कण०" [उणा० १९०.] इति निपातनात् किति अणि लवादेशे च-'लवण' इति, लुनाति जाड्यमिति 20 वा नन्द्यादित्वान्ने नस्य णत्वे च-'लवण' इति। **सम्पन्नमधुर** इति-सम्पन्नं मधुर इति विग्रहः, सम्पन्नं-साधितं सम्पद्युक्तं वा यद् मधुरत्वं-रसविशेषः, तद्वानित्यर्थः, सम्पूर्वात् "पदिंच् गतौ" इत्यतः सम्पद्यते इति क्ते-'सम्पन्न' इति, मधु-माधुर्यमस्त्यस्येति 'मधुर' इति मध्वादित्वाद् रः, मायत्यनेन वा "श्वशुर०" 25 [उणा० ४२६.] इति निपात्यते। **पट्वम्ल** इति-पटु अम्ल इति विग्रहः, पटु यद् अम्लत्वं-रसविशेषः, तद्वानित्यर्थः, "अम गतौ" अतः "श्यामा०" [उणा० ४६२.] इति ले-'अम्ल' इति। **निपुणपण्डित** इति-निपुणं पण्डित इति विग्रहः, निपुणं यत् पण्डितत्वं तद्वानित्यर्थः, "पुणत् शुभे" शुभं-30 शुभविषया क्रिया, नियतं पुणति शोभनकर्मत्वाद् 'निपुण' इति "नाम्युपान्त्य०" [५. १. ५४.] इति कः, "पडुङ् गतौ" गत्यर्थानां ज्ञानार्थत्वात् पण्डते-जानातीति गत्यर्थत्वात् कर्तरि क्ते 'पण्डित' इति, यद्वा "पणि व्यवहार-स्तुत्योः" पण्यते-स्तूयत इति "पञ्चमाड्ः" [उणा० १६८.] इति डे आपि च-पण्डा-35 तत्त्वानुगा मतिः, सा संजाताऽस्येति तारकादित्वाद् इते-'पण्डित' इति। **कुशलदक्ष** इति-कुशलं दक्ष इति विग्रहः, कुशलं-मङ्गलमयं यद् दक्षत्वं तद्वानित्यर्थः, "लांक् आदाने" कुशान् लातीति 'कुशल' इति, ते हि व्युत्पन्नैरादातुं शक्याः, "कुशंच् श्लेषणे" अतः कुश्यतीति वा "तृपि०" [उणा० ४६८.] 40 इति अलकि-'कुशल' इति, "दक्षि शैघ्र्ये च" दक्षते इति 'दक्ष' इति। **चपलवत्सल** इति-चपलं वत्सल इति विग्रहः, चपलं यद् वत्सलत्वं तद्वानित्यर्थः, "चप सान्त्वने" अतः "मृदि-कन्दि०" [उणा० ४६५.] इत्यले-'चपल' इति, वत्सोऽस्त्यस्येति सिध्मादित्वाल्ले-'वत्सल' इति।

अथ विस्पष्टपटुप्रभृतिषु कस्य केन समास इत्याह—**इत्यादिषु** अनन्तराभिहितेषु विस्पष्टपटुप्रभृतिषु, **गुणविशेषणस्य** गुणः-पटुत्वादिलक्षणः, तस्य विशेषणं-विस्पष्टादिरूपं तस्य, **गुणवचनेन** गौणतया गुणं मुख्यतया च गुणिनं य आचष्टे स गुणवचनस्तेन, पटुप्रभृतिना, **समासः** "नाम नाम्नैकार्थ्ये" इत्यंशघटनात् प्रकृतसूत्रेण समासः, "ईषद् 50 गुणवचनैः" [३. १. ६४.] इति सूत्रे-"ये गुणे वर्तित्वा तद्योगे गुणिनि वर्तन्ते ते गुणमुक्तवन्तो गुणवचनाः" इति वृत्त्या 'पट्वादयः शब्दाः पाटवादिगुणयोगान्मुख्यतया गुणिनि वर्तमाना अपि गौणतया पाटवादावपि वर्तन्ते' इति ज्ञायते, यदा केवले गुणिनि गुणे वा वर्तन्ते तदा न गुणवचनत्वम्, यदुक्तं 55 "तृतीया तत्कृतैः" [३. १. ६५] इति सूत्रवृत्तौ-"गुणवचनैरित्येव-गोभिर्वपावान्, दध्ना पटुः-पाटवमित्यर्थः, न ह्येतौ पूर्वं गुणमुक्त्वा साम्प्रतं द्रव्ये वर्तेते इति गुणवचनौ न भवतः" इति। यदा च विस्पष्टश्चासौ पटुश्चेति विस्पष्टादि गुणिविशेषणं तदा तु "विशेषणं विशेष्येण०" [३. १. ९६.] इति भवत्येव 60 कर्मधारयः।

एकदेशान्वयिनः समासप्रसङ्गेन क्रियाकृतविशेषणमुदाहरणान्तराण्याह-**काष्ठा-परं प्रकर्षमध्यायक** इति-विग्रहवाक्यमिदम्, काष्ठा यथा स्यात् तथा अध्यायक इत्यर्थः, काष्ठा इत्यस्य कोऽर्थ इत्युक्तम्-परं प्रकर्षमिति, प्रकृष्टं यद् अध्ययनं 65 तत्कारक इत्यर्थः,

"काष्ठं दारुणि काष्ठा तु, प्रकर्षे स्थानमात्रके।
दिशि दारुहरिद्रायां कालमानप्रभिद्यपि ॥ १ ॥"
इत्यनेकार्थसंग्रहः।

'काष्ठा' इत्यत्र "क्रियाविशेषणात्" [२. २. ४१.] इति 70 द्वितीयाया अम्, क्रियाविशेषणानां नपुंसकत्वेन "क्लीबे" [२. ४. ९७.] इति प्राप्तमपि ह्रस्वत्वं बाहुलकान्न भवति, क्लीबत्वं तु न वार्यते, तेन "अनतो लुप्" [१. ४. ५९.] इत्यमो लुब् भवति, द्वितीयान्तत्वानुरोधेन तत्पर्यायकथनेऽपि 'परं प्रकर्षम्' इति द्वितीयान्तमुक्तम्। "काशृग् दीप्तौ" अतः 75 "वलि-कणि०" [उणा० १६२.] इति ठे शस्य "यज-सृज०" [२. १. ८७.] इति षत्वे आपि च-'काष्ठा' इति, "इंङ्क् अध्ययने" अधिपूर्वादतोऽधीते इति "णक-तृचौ" इति णके वृद्धावायादेशे च-'अध्यायक' इति, 'अध्यापक' इति पाठे तु अस्मादेवाध्यापयतीति णौ "णौ क्रीजीङः" [४. २. १०.] 80

इत्यात्वे "अर्ति-री०" [४. २. २१.] इति प्वागमे णके णेर्लोपे च-'अध्यापक' इति, अत्र काष्ठाया अध्यायकशब्दार्थाध्ययनकारकैकदेशेऽध्ययनेऽन्वयेन गौणविशेषणतया गौणं सामानाधिकरण्यमिति प्राग्वन्न कर्मधारयप्राप्तिरिति प्रकृतसूत्रेण समासे-
5 **काष्ठाध्यायक** इति, एवमुत्तरत्रापि । **दारुणमध्यायक** इति-विग्रहवाक्यमिदं, दारुणं यथा स्यात् तथा अध्यायकः, दारुणं यद् अध्ययनं तत्कारक इति तदर्थः, "दृश् विदारणे" अतो णौ दारयति चित्तमिति "ऋ-कृ०" [उणा० १९६.] इति उणे-'दारुण' इति, **दारुणाध्यायक** इति प्रकृतसूत्रेण
10 समासः । **अमातापुत्रमध्यायक** इति-इदं विग्रहवाक्यम्, अमातापुत्रं यथा स्यात् तथा अध्यायक इति तदर्थः, **अमातापुत्राध्यायक** इति प्रकृतसूत्रेण समासः, माता च पुत्रश्च मातापुत्रौ "पुत्रे" [३. २. ४०.] इति ऋकारस्याकारः, न विद्येते मातापुत्रौ यस्मिन्नध्ययनकर्मणि तद् अमातापुत्रम्,
15 अयं भावः-मातापुत्रशब्दस्य मातापुत्रव्यवहारे लाक्षणिकत्वम्, नञा समासेन च तद्विरुद्धो व्यवहारः प्रत्याय्यते, नञो विरोधार्थत्वात्, माता-पुत्रयोः परस्परं व्यवहारो मृदुलो भवति, तद्विरुद्धश्च निष्ठुरः, एतदेवाह-**निष्ठुरमध्यायक इत्यर्थः** इति, "मानि पूजायाम्" अतो मन्यत इति "मानि०" [उणा०
20 ८५९.] इति तृप्रत्यये न लुकि च-'मातृ' इति, जननीति तदर्थः, पुनाति पवते वा पितृपूतिमिति "पुत्रादयः" [उणा० ४५५.] इति निपातनात् 'पुत्र' इति, यदाहुः-"पूतीति नरकस्याख्या दुःखं च नरकं विदुः।" इति, पुन्नाम्नो नरकात् त्रायते इति वा, यन्मनुः [मनुस्मृ० ९.१३८]—

25 "पुन्नाम्नो नरकाद् यस्मात्, पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः, स्वयमेव स्वयम्भुवा ॥"

"स्था-पा०" [५. १. १४२.] इति त्रायतेः कः । **वेशं-सुभगमध्यायकः** इति-विग्रहवाक्यमिदम्, वेशं यथा स्यात् तथा अध्यायक इति तदर्थः, वेशमित्यस्य कोऽर्थ इत्युक्तम्-
30 सुभगमिति, शोभनो भगः-श्रीर्यस्य तादृशम्, शोभनलक्ष्मीयुक्तं यद् अध्ययनं तत्कारक इत्यर्थः, वेश्यानामाश्रयो वेशः, विशन्ति भुजगा अस्मिन्निति वा वेश इति, वेश्यालयस्य यथा सुभगत्वं तथा प्रकृताध्ययनस्यापीति सादृश्यात् तत्पर्यायरूपेण सुभगशब्दः प्रयुक्तः । अतिदिशति-**एवमि**ति-अमुना प्रकारेणान्यान्यप्यु-
35 दाहरणानि ज्ञेयानि, तानि कानि ? इत्याह-**अनाज्ञाताध्यायक** इति-अयं समासः, अनाज्ञातमध्यायक इति तस्य विग्रहः, इदं त्वयाऽध्येतव्यमित्याज्ञाविषयीकृतमाज्ञातं, न तथेत्यनाज्ञातं-निर्देशनिरपेक्षं यद् अध्ययनं तत्कारक इत्यर्थः, "ज्ञांश् अवबोधने" आङ्पूर्वादत आज्ञायते इति क्ते-आज्ञातं, न तथेत्यना-
40 ज्ञातम् । **अयुताध्यायक** इति-समासोऽयम्, तस्यायुतमध्यायक इति विग्रहः, अयुतं-मिलितममिलितं वा यद् अध्ययनं तत्कारक इति तदर्थः, "युक् मिश्रणे", 'अमिश्रणे' इति केचित्, "पुत-पित्त०" [उणा० २०४.] इति 'अयुत' इति कित्तान्तं निपात्यते । **अद्भुताध्यायक** इति-समासोऽयम्, अद्भुतमध्यायक इति विग्रहः, अद्भुतम्-आश्चर्यजनकं यद् अध्ययनं 45 तत्कारक इति तदर्थः, 'अद्' इत्याश्चर्यार्थमव्ययम्, अद्-विस्मितं भवत्यनेनास्मिन् वेति "अदो भुवो डुतः" [उणा० २१४.] इति डुते-'अद्भुत' इति । **भृशाध्यायक** इति-समासोऽयम्, भृशमध्यायक इति विग्रहः, भृशम्-अत्यर्थं यद् अध्ययनं तत्कारक इति तदर्थः, "डुभृंग् पोषणे च" अतो 50 बिभर्तीति "कृ-वृ-भृ०" [उणा० ५२८.] इति किति शे-'भृश' इति । **घोराध्यायक** इति-समासोऽयम्, घोरमध्यायक इति विग्रहः, घोरं-भीमं यद् अध्ययनं तत्कारक इत्यर्थः, "हनंक् हिंसा-गत्योः" इत्यस्य "कोर-चोर०" [उणा० ४३४.] इति निपातनाद्, "घुरत् भीमार्थशब्दयोः" इत्यस्य घञि वा- 55 'घोर' इति । **परमाध्यायक** इति-समासोऽयम्, परममध्यायक इति विग्रहः, परमं यद् अध्ययनं तत्कारक इत्यर्थः, "पृश् पालन-पूरणयोः" अतः "सृ-पृ०" [उणा० ३४७.] इत्यमे-'परम' इति । **स्वध्यायकः, अत्यध्यायक** इति-समासाविमौ, विग्रहस्तु-शोभनमतिशयितं वाऽध्यायक इति, 60 शोभनमतिशयितं वा यद् अध्ययनं तत्कारक इत्यर्थः ।

काष्ठाध्यायकादिषु कस्य केन समास इत्याह—**इत्यादिषु** अनन्तरमभिहितेषु काष्ठाध्यायकप्रभृतिषु, **क्रियाविशेषणस्य** अध्ययनक्रियाविशेषणस्य काष्ठादेः, **क्रियावता** अध्ययनक्रियावता अध्यायकेन, **समासः** 'नाम नाम्नैकार्थ्ये' इत्यंश- 65 घटनात् प्रकृतसूत्रेण समासः, न तु कर्मधारयविधायकेन मुख्यसामानाधिकरण्याभावात्, यदि च काष्ठा-परः प्रकर्षोऽध्यायक इति काष्ठादेः क्रियावतोऽध्यायकस्य विशेषणत्वं विवक्ष्यते तदा स्यादेव कर्मधारयः ।

एवमन्यानपि लक्षणान्तराविषयान् समासानुदाहर्तुमाह- 70 **तथे**ति-यथा पूर्वमनेन समासा अभिहितास्तथा वक्ष्यमाणा अपि समासा अनेन ज्ञातव्या इत्यर्थः, तानेवाह-**सर्वैश्चर्मणे**त्यादिना। **सर्वैश्चर्मणा कृतः** इति विग्रहवाक्यम्, **सर्वचर्मीणः** इति समासः, **रथः** इति तस्य विशेष्यम्, अत्र "सर्वचर्मण ईनेनञौ" [६. ३. १९५.] इति ईने "नोऽपदस्यातद्धिते" [७. ४. ६१.] 75 इत्यन्त्यस्वरादेरनो लोपे नस्य च णत्वे-'सर्वचर्मीण' इति, इह तद्धितार्थे समस्यमानयोर्नाम्नोः [पदयोः] परस्परं सामर्थ्याभावेऽपि समासः, तथाहि-सर्वैश्चर्मणा कृत इत्यत्र सर्व-शब्दस्य 'कृतः' इत्यनेन सम्बन्धो न तु चर्मणा, समासस्तु सर्व-चर्मणोरिति सामर्थ्याभावान्न केनापि समासप्राप्तिरिति प्रकृतसूत्रेण उभयो- 80

नामत्वादैकार्थ्यादप्राप्तिस्थले प्रापकत्वाच्च समासः, केचित् तु प्रकृतसूत्रगतबहुलवचनात् समास इति वदन्ति, तन्न चारु– 'नाम नाम्ना' इत्यत्र व्यभिचारदर्शनायेह बहुलग्रहणम्, तथैव चाग्रे वक्ष्यमाणत्वात्, न चैवं सति सर्वत्र सामर्थ्याभावेऽपि समासातिप्रसङ्गो विधिसूत्रत्वादस्येति वाच्यम्, नास्य विधिसूत्रत्वं व्याख्या किन्तु शिष्टप्रयोगानुसरणात्, एवमुत्तरत्रापि, "सृं गतौ" अतः "लटि-खटि०" [ उणा० ५०५. ] इति वे गुणे च–'सर्व' इति, "चर भक्षणे च" अतः "मन्" [ उणा० ९११. ] इति मनि गुणे च–'चर्मन्' इति, "रमिं क्रीडायाम्" अतो रमन्तेऽनेनेति "नी-नू-रमि०" [ उणा० २२७. ] इति किति थे मलोपे च–'रथ' इति। **अद्य श्वो वा विजायते** इति विग्रहः, **अद्यश्वीना** इति समासः, **'गौः'** इति तद्विशेष्यम्, "समांसमीना" [ ७. १. १०५. ] इति ईनान्तनिपातनात् 'अद्यश्वीना' इति, 'आसन्नप्रसवा गौः' इति तदर्थः, अत्र समस्यमानयोः 'अद्य-श्वस्' इत्येतयोः परस्परं न योगः, किन्तु 'विजायते' इत्यनेनेति सामर्थ्याभावेऽपि प्रकृतसूत्रेण समासः, अस्मिन्नहनीति "सद्योऽद्य०" [ ७. २. ९७. ] इति निपातनाद् 'अद्य' इति, "श्वसक् प्राणने" बाहुलकात् डिलसि 'श्वस्' इति, तच्चान्तरागामिनि दिने वर्तते। **दशभिरेकादश गृह्णातीति** विग्रहः, "दशैकादशादिकश्च" [ ६. ४. ३४. ] इति इके "नाम्नो नो०" [ २. १. ९१. ] इति पूर्वनकारस्य लोपेऽन्त्यस्वरादेरनः "नोऽपदस्य तद्धिते" [ ७. ४. ६१. ] इति लोपे च–**दशैकादशिक** इति समासः, अत्र समस्यमानयोः 'दशन्-एकादशन्' इत्येतयोर्न परस्परं योगः, किन्तु गृह्णातीत्यनेनेति सामर्थ्याभावान्न केनापि समासप्राप्तिरतः प्रकृतसूत्रेण समासः, "दंशं दशने" अतः "क्लृ-पू०" [उणा० ९०१.] इति किन्यनि नकारस्य [ अनुस्वारस्य ] लोपे च–'दशन्' इति, एकाधिका, एकं दश चेति वेति–'एकादशन्' इति "एकादश०" [ ३. २. ९१. ] इति साधु। **ऊर्ध्वं मुहूर्ताद् भवमिति** विग्रहः, "अध्यात्मादिभ्य इकण्" [ ६. ३. ७८. ] इति इकणि "सप्तमी चोर्ध्वमौहूर्तिके" [ ५. ३. १२. ] इति निर्देशाद् "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इत्यकारलोपे च–**ऊर्ध्वमौहूर्तिकमिति** समासः, अत्र 'ऊर्ध्वम्' इत्यस्य 'भवम्' इत्येतत्सापेक्षत्वेनासामर्थ्यात् केनापि सूत्रेण न प्राप्तिरिति प्रकृतसूत्रेण समासः, "उर्दि मान-क्रीडयोश्च" अतः "उदेर्ध च" [ उणा० ५०७. ] इति वे धकारान्तादेशे दीर्घे च–'ऊर्ध्व' इति, उपरि पुरस्ताच्चेति तदर्थः, "हुर्छा कौटिल्ये" इत्यस्य "पुत-पित्त०" [ उणा० २०४. ] इति निपातनात्, मुहुरियेतीति वा पृषोदरादित्वात्–'मुहूर्त' इति, घटिकाद्वयं तदर्थः। अतिदिशति–**एवमिति**–उक्तरीत्याऽन्यान्यप्युदाहरणानि ज्ञेयानि, तानि कानि? इत्याह–**और्ध्वदेहिकमिति**–समासोऽयम्, ऊर्ध्वं देहाद् भवमिति विग्रहः, अत्राप्यध्यात्मादित्वादिकणि वृद्ध्यादौ च–'और्ध्वदेहिकम्' इति, मृतस्य दिवसे तमुद्दिश्य दानं पिण्डोदकादि, उक्तरीत्यात्राप्यनेन समासः, "दिहींक् उपलेपे" अस्य दिह्यते धातुभिरिति 'देह' इति। **और्ध्वदमिकमिति**–समासोऽयम्, ऊर्ध्वं दमाद्–दण्डाद् भवमिति विग्रहः, अध्यात्मादित्वादिकणि वृद्ध्यादौ प्रागवदनेन समासः, "दमू उपशमे" अस्य घञि 'दम' इति। **कृतः पूर्वं कटोऽनेनेति**–विग्रहवाक्यमिदम्, "पूर्वमनेन सादेश्चेन्" [ ७. १. १६७. ] इति इनि–'कृतपूर्विन्' इति समासः, ततः सौ **'कृतपूर्वी'** इति रूपम्, **कटमिति**–अत्र कृतस्य यः कटेनाभिसम्बन्धः स प्रत्ययेऽर्थान्तराभिधायिनि समुत्पन्ने कृतस्योपसर्जनत्वान्निवर्तते, क्रियया सह तु सम्बन्धोऽस्तीति व्याप्यत्वात् "कर्मणि" [ २. २. ४०. ] इति द्वितीया, अत्र कृतस्य कटसापेक्षत्वेनासमर्थत्वान्न केनापि समासप्राप्तिरिति प्रकृतसूत्रेण समासः, एतत् सर्वमुत्तरत्रोदाहरणद्वयेऽपि ज्ञेयम्, करोतेः कर्मणि क्ते–'कृत' इति, "पृश् पालन-पूरणयोः" इत्यतः "निष्ठ०" [ उणा० ५११. ] इति किति वे "ओष्ठ्यादुर्" [ ४. ४. ११७. ] इत्युरादेशे "भ्वादेर्नामिनो०" [ २. १. ६३. ] इति दीर्घे च–'पूर्व' इति, "कटे वर्षावरणयोः" इत्यतः कटति–आवृणोतीति "अच्" [ ५. १. ४९. ] इत्यचि–'कट' इति वीरणादिनिर्मितः; एवम्–**भुक्तपूर्वी ओदनमिति**–समासोऽयं, भुक्तः पूर्वमोदनोऽनेनेति विग्रहः, शेषं प्राग्वत्, **गतपूर्वी ग्राममिति**–समासोऽयं, शेषं प्राग्वत्, "भुजंप् पालना-ऽभ्यवहारयोः" अतः कर्मणि क्ते–'भुक्त' इति, "उन्दैप् क्लेदने" अतः "उन्देर्नलुक् च" [ उणा० २७१. ] इत्यनेन लोपे च–'ओदन' इति, "गम्लृं गतौ" अतः कर्मणि क्ते "यमि-रमि०" [ ४. २. ५५. ] इति मलोपे च–'गत' इति, "ग्रसूङ् अदने" अतो ग्रस्यते कुण्ठैरिति "ग्रसि-ह्वाभ्याम्" [ उणा० ३९९. ] इति मे आदेशे च–'ग्राम' इति।

सर्वचर्मीणप्रभृतिषु कस्मिन्नर्थे समास इत्याह–**इत्यादिषु** अनन्तरं दर्शितेषु सर्वचर्मीणप्रभृतिषु, **तद्धितार्थे** भवादितद्धितप्रत्ययार्थे, **समासः** प्रकृतसूत्रेण समासः, समस्यमानस्यासमस्यमानकृतरथादिसापेक्षत्वेन 'सापेक्षमसमर्थवद् भवति' इति सापेक्षस्यासामर्थ्यात् न केनापि समासप्राप्तिरिति प्रकृतसूत्रेण समास इति भावः।

उदाहरणान्तराणि समुच्चेतुमाह–**तथेति**–न केवलमुक्तान्येवोदाहरानि, अपि त्वन्यान्यपीत्यर्थः, तानि कानीत्याह–**कन्येइवेत्यादि**–"कनै दीप्त्यादिषु" अतः "स्था-छा०" [ उणा० ३५७. ] इति ये आपि च–'कन्या' इति, तस्य प्रथमाद्विवचने 'कन्ये' इति रूपम्, "इंण्क् गतौ" अतः "तृ-स्तृ०" [ उणा० ५९८. ]

इति किति वे-'इव' इति, 'कन्ये इव' इति विग्रहः '**कन्येइव**' इति समासः; जाया च पतिश्चेति राजदन्तादित्वाज्जायाशब्दस्य 'दम्'भावे-'दम्पति' इति, तस्य प्रथमाद्विवचने 'दम्पती' इति, दम्पती इवेति विग्रहः, **दम्पतीइव** इति समासः; "वसिक् 5 आच्छादने" अतः "वस्यगिभ्यां णित्" [उणा० ९७०.] इति णिति असि-'वासस्' इति, ततः प्रथमाद्विवचने 'वाससी' इति, 'वाससी इव' इति विग्रहः, '**वाससीइव**' इति समासः; "रुदृक् अश्रुविमोचने" अतः "अस्" [उणा० ९५२.] इत्यसि-'रोदस्' इति, द्विवचने च-'रोदसी' इति, 'रोदसी इव' 10 इति विग्रहः, **रोदसीइव** इति समासः; वासः-वस्त्रम्, रोदसी-द्यावाभूमी, कन्याद्वयप्रतियोगिसादृश्यं वस्त्रद्वयप्रतियोगिसादृश्यं द्यावाभूमिप्रतियोगि सादृश्यमिति तेषामर्थः, 'कन्येइव'प्रभृतिषु, केन कीदृशः समास इत्याह-**इत्यादिषु** अनन्तरोक्तेषु कन्येइवप्रभृतिषु, **इवेन** इवशब्देन, **अलुप् समासः** केनापि 15 सूत्रान्तरेणाप्राप्तो प्रकृतसूत्रेण समासो विभक्तेर्लोपाभावश्च विहितः, अत एव परैस्तदर्थम् "इवेन समासो विभक्त्यलोपश्च" इति वार्तिकमारभ्यते; नन्वलुप्समासे विग्रहवाक्ये वा को विशेष इत्याह-**ऐकपद्यं च समासफलमिति**-आनुपूर्व्याः समानत्वेऽपि सत्यां समाससंज्ञायामेकपदत्वं भवति, एकपदत्वे च 20 "संहितैकपदे नित्या०" इत्यर्धमात्रातिरिक्तकालाव्यवायेन कथनरूपा संहिता नित्यं भवति, तथा-एकपदत्वाद् 'अथो कन्येइव वः, अथो कन्येइव अस्माकम्' इत्यादिषु "सपूर्वात् प्रथमान्ताद् वा" [२. १. २२.] इत्यनेन विकल्पेन वस् सिद्धः ।

लक्ष्यान्तराण्यवतारयति-**तथेति**-यथा पूर्वं लक्ष्याण्यु-25 क्तानि तथाऽन्यान्यपि सन्तीत्यर्थः, तानि कानि? इत्याह-**भूतः पूर्वमिति**-विग्रहवाक्यमिदम्, **भूतपूर्वमिति** समासः, **एवम्** अनेन प्रकारेण, **दृष्टपूर्व** इति-समासोऽयम्, दृष्टः पूर्वमिति विग्रहः, **श्रुतपूर्व** इति-समासोऽयम्, विग्रहस्तु-श्रुतः पूर्वमिति, एषु विशेष्यश्चैत्रादिः, अत्र भूतादेः समस्यमानस्य चैत्रादिसापेक्ष-30 त्वेन 'सापेक्षमसमर्थवद् भवति' इति सामर्थ्यविरहेऽपि प्रकृतसूत्रेण समासः, "भू सत्तायाम्" अतः कर्तरि क्ते-'भूत' इति, "दृशृं प्रेक्षणे" "श्रुंट् श्रवणे" आभ्यां कर्मणि क्ते-'दृष्ट, श्रुत' इति।

उक्तोदाहरणसारांशमाह—**सर्वेषु चैषु विशेषसंज्ञाप्राप्तावनेन समास** इति-चशब्दो वार्तान्तरसमुच्चयार्थः, 35 का सा वार्ता? इत्युक्तम्-एषु सर्वेषु-अनन्तरमभिहितेषु विस्पष्टपटुमादिं कृत्वा श्रुतपूर्वपर्यन्तेषु समासेषु, विशेषसंज्ञाप्राप्तौ-'अयं बहुव्रीहिः, अयमव्ययीभावः, अयं तत्पुरुषः, अयं कर्मधारयः, अयं द्वन्द्वः, अयं द्विगुः' इति विशेषसंज्ञायाः, अप्राप्तौ-तत्तत्सूत्राविषयत्वेन प्राप्त्यभावे, **अनेन** प्रकृतसूत्रेण, **समासः**। 40 अयमाशयः-विस्पष्टपटुप्रभृतिष्वष्टसु गुणविशेषणानां गुणिविशेषण-भूतैकदेशे गुणेऽन्वयात्, काष्ठाध्यापकप्रभृतिषु त्रयोदशसु क्रियाविशेषणानां क्रियावदेकदेशे क्रियायामन्वयाच्च सामानाधिकरण्यस्य गौणतया मुख्यसामानाधिकरण्यस्य विरहाञ्च कर्मधारयप्राप्तिः, सर्वचर्मीणप्रभृतिषु नवसु तद्धितार्थेऽसमस्यमानकृत-45 रथादिसापेक्षत्वेन, कन्येइव प्रभृतिषु त्रिष्वसमस्यमानानुयोगिसापेक्षत्वेन, भूतपूर्वप्रभृतिषु त्रिषु त्रिष्वसमस्यमानचैत्रादिसापेक्षत्वेन च "सापेक्षमसमर्थवद् भवति" इति सामर्थ्यविरहाञ्च केनापि समासप्राप्तिः, तत्र प्रकृतसूत्रेण सामान्यतः समाससंज्ञा भवति, समस्यमानयोर्नामत्वात् समासानुमितेकार्थ्याच्च, न चात्र 50 बहुलबलमपेक्षणीयम्; न चैवं सर्वत्र सामर्थ्याभावेऽपि समासातिप्रसङ्ग इति वाच्यम्, प्रकृतसूत्रस्य विधित्वं न व्याख्या किन्तु शिष्टप्रयोगानुसरत्वेत्युक्तमेव, एतच्च बहुलग्रहणाल्लभ्यमित्याह-**बहुलमिति शिष्टप्रयोगानुसरणार्थमिति**-यः शिष्टप्रयोगे दृश्यते न च लक्षणान्तरमस्ति, तस्येदं 'नाम नाम्ना' 55 इति लक्षणं, न व्याप्त्येत्यर्थमित्यर्थः, अत एवोक्तम्—

> "क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः,
> क्वचिद् विभाषा क्वचिदन्यदेव ।
> विधेर्विधानं बहुधा समीक्ष्य,
> चतुर्विधं बाहुलकं वदन्ति ॥" इति,

अस्यायमर्थः—कस्मिंश्चिल्लक्ष्ये प्रवृत्तिः, कस्मिंश्चिल्लक्षणविषये-60 ऽप्यप्रवृत्तिः, कस्मिंश्चिल्लक्ष्ये विकल्पेन प्रवृत्तिः, कस्मिंश्चित् स्थले च, अन्यदेव-प्रकृतसूत्रागोचरमेव कार्यं भवति, सूत्रप्रवर्तनं बहुधा समीक्ष्य बाहुलकं चतुर्विधमिति वैयाकरणविदो वदन्तीत्यर्थः । प्रकृतसूत्रोदाहरणेषु 'क्वचित् प्रवृत्तिः' इति प्रवर्तते, तत्रापि 'कन्येइव' इत्यत्र प्रकृतसूत्रानुद्देश्यविभक्तिलोपाभावात् 65 'क्वचिदन्यदेव' इत्यपि प्रवर्तते, "अतिरतिक्रमे च" [३. १. ४५.] इति सूत्रोद्देश्यत्वेऽपि बहुलाधिकारात् 'अति स्तुत्वा' इत्यत्र समासो न भवति, एवं यथायथमुत्तरत्रापि ज्ञातव्यम् ।

प्रथमनामग्रहणफलं पृच्छति-**नामेति किमिति**, प्रत्युदाहरणद्वारोत्तरयति-**चरन्ति गावो धनमस्येति**-अत्र 70 'चरन्ति' इति त्याद्यन्तं, न नामेति "एकार्थं चानेकं च" [३. १. २२.] इत्यत्र नामेत्यधिकारात् समासो न भवति, यदि 'नाम' इति नोच्येत तदा नाम्ना समासो भवतीति विज्ञायमाने त्याद्यन्तमपि नाम्ना समस्येत, तत्र 'चरन्तिगोधनः' इत्यनिष्टं श्रूयेत, बहुलग्रहणात् प्रतिपत्तौ तु 'नाम' इति तस्यैव प्रपञ्चो 75 भविष्यति, "चर भक्षणे च" इत्यतोऽन्तौ शवि च-'चरन्ति' इति, "गम्लृं गतौ" अतः "द्यु-गमिभ्यां डोः" [उणा० ८६७.] इति डोप्रत्यये-'गो' इति, जसि च-गावः, धनति-शब्दायते, धन्यते इति वा वर्षादित्वादलि-'धन' इति ।

द्वितीयनामग्रहणस्य फलं पृच्छति-**नाम्नेति किमिति**, 80

प्रत्युदाहरणमुखेनोत्तरयति-**देवदत्तः पचती**ति-अत्र "समर्थः पदविधिः" [ ७. ४. १२२. ] इति, समास इत्यन्वर्थविज्ञानाच्च यद्यपि द्वितीयं प्रतियोगिपदं, समुदिते च समस्यमानं लभ्यते, तथापि तत् त्याद्यन्तमपि स्यात्, ततश्चात्र देवदत्त इति पचतीत्यस्य 5 विशेषणं समानाधिकरणं समस्येत, नाम्नेति वचनान्न भवति, समासे तु 'देवदत्तः' इत्यत्र स्यादेर्लोपः स्यात्, देवा एनं देयासुरिति "तिक्कृतौ नाम्नि" [ ५. १. ७१. ] इति ददातेः क्ते-'देवदत्त' इति, "डुपचींष् पाके" अतस्तिवि शवि च-पचतीति।

"नाम नाम्ना" इत्यस्य व्यभिचारार्थं च बहुलग्रहणमित्याह-10 **बहुलवचनादेव क्वचिदनाम्नापि समस्यत** इति। **भात्यर्कोऽत्रे**ति विग्रहवाक्यमिदम्, **भात्यर्कमि**ति समासः, **नभः** इति तस्य विशेष्यम्, तत्फलमाह-**सामानाधिकरण्यमि**ति-ऐकपद्यं च पूर्वोक्तमनुवर्तत एव, तथा चेह समासकृतं फलद्वयमित्यर्थः, "भांक् दीप्तौ" अतस्तिवि-'भाति' इति, न चास्मिन् 15 बहुलग्रहणेऽसति भातीति त्याद्यन्तप्रतिरूपकमव्ययमभ्युपगन्तव्यमिति वाच्यम्, तथा सति ह्यस्तित्ववद् भातित्वाद्यपि प्रसज्येत, "अर्च पूजायाम्" अतः "भीण्-शलि०" [ उणा० २१. ] इति के-'अर्क' इति, "णभच् हिंसायाम्" अतः "अस्" [ उणा० ९५२. ] इत्यसि-'नभस्' इति।

20 आख्यातस्य नाम्ना समासं प्रदर्श्य नाम्न आख्यातेनापि समासः क्वचिद् भवतीति दर्शयितुमाह-**क्वचिदनाम्नापी**ति, तत्र नामाव्ययमुपसर्गसंज्ञकमेवाख्यातेन समस्यते, तस्यैव तेन सह सामर्थ्यात्, तदाह-**अनुव्यचलदि**त्यादि, अनु-विपूर्वस्य "चल कम्पने" इत्यस्य ह्यस्तन्या दिवि-**'अनुव्यचलत्'** इति, 25 "वृषू सेचने" इत्यस्य अनु-प्रपूर्वस्य ह्यस्तन्या दिवि-**'अनुप्रावर्षत्'** इति, विपूर्वस्य करोतेर्ह्यस्तन्या दिवि-**'व्यकरोत्' 'परियन्ति'** इति, परिपूर्वस्य "इंण्क् गतौ" इत्यस्य वर्तमानाया अन्तौ-'परियन्ति' इति च, एषु प्रकृतसूत्रेण समासः।

ननु भात्यर्कं नभ इत्यत्र समासे सुज्ञानो विशेषः, अन्य-30 पदार्थवृत्तिः, तदाश्रया स्याद्युत्पत्तिश्च, 'अनुव्यचलत्' इत्यादौ तु समासकृतः को विशेष इत्याह-**अत्र नित्यसन्ध्यादिः समासफलमि**ति-'अनुव्यचलत्' 'व्यकरोत्' इत्यत्र चैकपदत्वाद् "ह्रस्वोऽपदे वा" [ १. २. २२. ] इति सूत्रोक्तसन्धेरप्रवृत्तेः "इवर्णादेरस्वे०" [ १. २. २१. ] नित्यं सन्धिकार्यं यत्वं 35 जातम्, 'अनुप्रावर्षत्' इत्यत्र नित्यं संहिताश्रयणात् "समानानां तेन दीर्घः" [ १. २. १. ] इति नित्यं दीर्घः, 'परियन्ति' इत्यत्र च नित्यं संहिताश्रयणादर्धमात्रातिरिक्तकालाव्यवायेनोच्चारणम्।

ननु नामसंज्ञापि समासफलम्, ततश्च ततः स्याद्युत्पत्तिरपि स्यादित्याशङ्कामुत्थाप्य समाधत्ते-**समासस्य नामत्वेऽपी**ति, 40 अयमाशयः-स्यादयो हि संख्याकारकादिविवक्षायां भवन्ति, अत्र च त्यादिनैव संख्या-कर्त्रादीनामुक्तत्वान्न ततः स्याद्युत्पत्तिरिति, मतान्तरेणान्यथा समाधत्ते-**पदत्वार्थमुत्पन्नस्ये**ति, अयमाशयः-समासे कृते ह्यैकपद्यं भवति, ततश्च समुदायाद् विभक्त्यनुत्पत्तौ तस्य पदसंज्ञा न स्यात्, अपदस्य च प्रयोगो निषिद्ध इति पदत्वार्थं विभक्तिरवश्यमेष्टव्या, तत्रान्यासां संख्या-45 कारकादिनिमित्तानां विभक्तीनामभावेऽपि प्रथमाया एकवचनस्यौत्सर्गिकत्वस्य भाष्यकृदादिभिः स्वीकृतत्वात् तदुत्पत्तावपि तस्य नपुंसकत्वनिमित्तो लोपो भवति। कथमस्य समासस्य नपुंसकत्वमिति चेत्? अत्राह-**त्याद्यन्तार्थप्राधान्यादि**ति-त्याद्यन्तस्य साध्यार्थप्रधानत्वम्, साध्यश्चार्थोऽसत्त्वभूतः, असत्त्वं 50 च सामान्यमिति सामान्येन नपुंसकत्वमिति भावः। अथवा 'अनुव्यचलत्' इत्यादिकमखण्डमव्ययम्, विभक्त्यन्तत्वादेकपदत्वं च, अत एवैकपदत्वेऽव्ययत्वे वा सति 'अथो अनुव्यचलद् वो देवदत्तः, अथो अनुव्यचलद् युष्माकं देवदत्तः' इत्यादौ "सपूर्वात् प्रथमान्ताद् वा" [ २. १. ३२. ] इत्यनेन 55 विकल्पेन वस् नस् सिद्धः। अन्ये पुनराहुः-अनुव्यचलदिति त्याद्यन्तं स्वरादेराकृतिगणत्वादव्ययं विज्ञायते, तत्राव्ययत्वात् सौ ऐकपद्यम्, अत्र यदि "सपूर्वात् प्रथमान्ताद् वा" [ २. १. ३२. ] इत्यपीष्येत शक्यमेतदप्यभ्युपगन्तुम्, तथा सति नात्र समाससंज्ञयार्थस्तेनैव सिद्धत्वादिति। 60

**समासप्रदेशा** इति-प्रदेशः-प्रयोजनस्थानम्, संज्ञया हि संज्ञिनः प्रदिश्यन्ते-उच्चार्यन्तेऽत्रेति कृत्वा, 'समास' इति संज्ञा, संज्ञा च विधिशास्त्रोपकाराय कृता भवति, ततश्च समाससंज्ञानिमित्ता विधय एव संज्ञाप्रदेशत्वेन व्यवहार्याः, ते के? इत्याह-**"वोष्ठौतौ समासे" [ १. २. १७. ] इत्यादय** 65 इति ॥ ३. १. १८. ॥

## सुज्-वाऽर्थे संख्या संख्येये संख्यया बहुव्रीहिः । ३ । १ । १९ ॥

**त० प्र०**—सुचोऽर्थो वारः, वाऽर्थो विकल्पः संशयो वा, सुज्-वाऽर्थे वर्तमानं संख्यावाचि नाम संख्येये वर्तमानेन 70 संख्यावाचिना नाम्ना सहैकार्थ्ये समाससंज्ञं बहुव्रीहिसंज्ञं च भवति। द्विर्दश द्विदशाः, त्रिर्दश-त्रिदशाः, द्विर्विंशतिः-द्विविंशाः, एवं-त्रिविंशा वृक्षाः; सुजर्थस्य समासे नैवाभिहितत्वात् सुचोऽप्रयोगः। द्वौ वा त्रयो वा द्वित्राः, त्रिचतुराः, पञ्चषाः, ससाष्टाः। सुज्वार्थ इति किम्? द्वावेव न त्रयः। 75 संख्येति किम्? गावो वा दश वा। संख्ययेति किम्? दश वा गावो वा। संख्येये इति किम्?, द्विर्विंशतिर्गवाम्। बहुव्रीहिप्रदेशाः-"वा बहुव्रीहेः" [ २. ४. ५. ] इत्यादयः ॥१९॥

**श० म० अनुसन्धानम्-सुज्-वार्थे** इति-सुच् च वाश्च सुज्वौ, तयोरर्थः सुज्वार्थस्तस्मिंस्तथा, "द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इत्यर्थशब्दः प्रत्येकमभिसम्बध्यते। तत्र सुचोऽर्थमाह-**सुचोऽर्थो वारः** इति-"वारे कृत्वस्" [७. २. १०९.] इति सूत्रादनुवर्तमाने वारार्थे "द्वि-त्रि-चतुरः सुच्" [७. २. ११०.] इति सुचो विधानाद् वारार्थत्वम्, वारः-आवृत्तिः, अभ्यावर्तमानायाः क्रियायाः प्रवृत्तिः, धात्वर्थस्यायौगपद्येन वृत्तिः, तत्कालो वेति यावत्, अर्थः-अभिधेयम्। वाशब्दार्थमाह-**वार्थो विकल्पः संशयो वेति**-विकल्प-संशययोरुभयोरपि कोटिद्वयस्य साम्यात् कोऽनयोर्भेद इति चेत्? उच्यते-विकल्पे इयत्ताया निर्धारणं, संशये तु तदनिर्धारणमिति स्फुटं भेदः, 'द्वौ वा त्रयो वानीयताम्' इति हि वाशब्देन विकल्पोऽवयवाद्द्वियोस्त्रयाणां वा पाक्षिकाभिसम्बन्धः प्रतीयते, 'न जाने द्वौ वा त्रयो वा गताः' इति च संशयोऽनिर्णयरूपः प्रतिभास इति भावः। अत्र वार्थस्य विकल्पस्य प्रसिद्धत्वेन प्रकृतसूत्रे च संशयस्यैवोदाहरणेषु प्रतीयमानतया संशयार्थत्वमेव वाशब्दस्येति 'विकल्पः' इत्युक्तिः सम्पातायाता, संशय एव तात्पर्यमिति पूर्वोक्तार्थेऽस्मिसूचकः 'संशयो वा' इत्यत्र वाशब्द इति केचिद् व्याख्यातारः, तन्मते 'द्वित्राः' इत्यत्रानियतैव संख्या प्रतीयते। **सुज्-वार्थे वर्तमानमिति**-सुजर्थे वार्थे च वर्तमानमित्यर्थः, सुजर्थस्य वारस्य संख्यायमानत्वात् सुजर्थः संख्या भवति, संख्यार्थस्य चानयनादौ विकल्प्यमानत्वात् संशय्यमानत्वाच्च विकल्पविषयार्था संशयविषयार्था च संख्या विकल्पे संशये वार्थे भवति, विशेषणत्वात् प्रागुपन्यासः। **संख्येति** च संख्यावाचि नाम विज्ञायते इत्याह-**संख्यावाचीति**, इदं चानुवर्तमानस्य **'नाम'** इत्येतस्य विशेषणमित्याह-**नामेति**, **'संख्यया'** इत्यपि संख्यावाच्येव विज्ञायते इत्याह-**संख्यावाचिनेति**, एतच्चानुवर्तमानस्य **'नाम्ना'** इत्यस्य विशेषणमित्याह-**नाम्नेति**, अस्य **'संख्येये'** इति विशेषणमिति प्रागुपन्यस्तम्, 'द्विदशाः' इति हि द्विविशिष्टा दश संख्येयाः प्रतीयन्ते, तथा चाह-**संख्येये वर्तमानेनेति**, सहार्थे तृतीयेत्याह-**सहेति**, **समाससंज्ञमिति**-'समास' इत्यधिकारात्, अनधिकारेऽपि पूर्वेण लब्धसमाससंज्ञं संज्ञानामविरोधात् तदबाधयैव बहुव्रीहिसंज्ञं भवतीति प्रथयितुमेवमुच्यते-**बहुव्रीहिसंज्ञं च भवतीति**।

एवं निष्पन्ने सूत्रार्थे उदाहरणावसर इत्याह-**द्विर्दश-द्विदशाः** इति-द्विर्दशेति विग्रहवाक्यम्, अस्य चास्वपदघटितविग्रहत्वम्, तथा च लौकिकविग्रहवाक्ये एव सुजन्तस्य प्रयोगः, अलौकिकविग्रहवाक्ये तु द्विशब्द-दशन्शब्दयोरेव प्रवेशः, द्विर्दशेति विग्रहवाक्येन समासे संख्यायाः सुजर्थविषयता दर्श्यते, न तु सुजन्तेन समासः, सुजन्तस्यासंख्यात्वात्, सुजन्तस्य समासे तु तस्य सुचो निवृत्तिर्वक्तव्या, यथा स्यादेः, 'द्विदशाः' इति समासः, अत्र भवतिक्रियाभ्यावृत्तिः संख्यायते-द्विर्दश भवतीति द्विदशाः, विंशतिरित्यर्थः, तत्र हि दशभावो द्विरावर्तते, द्वाविति न संख्याविष्टाः सम्बन्द्धुं शक्यन्ते, नापि दशत्वं संख्या विशेषणभूता, नहि द्वादशेति न्यग्भूता संख्या सम्बन्द्धुं शक्यते इति सुजर्थो वारः संख्येयः कल्प्यते-द्वौ वारौ दशेति, तद्द्वारेण दशसंख्याभेदप्रतीतिपुरःसरा संख्येयभेदप्रतीतिः। एवं **त्रिर्दश-त्रिदशाः** इति-त्रीन् वारान् दशेति त्रिदशाः, त्रिंशदित्यर्थः, **द्विर्विंशतिः-द्विविंशाः** इति-द्वौ वारौ विंशतिरिति द्विविंशाः, चत्वारिंशदित्यर्थः, अतिदिशति-**एवमिति**-उक्तप्रकारेणेत्यर्थः, **त्रिर्विंशाः** इति-त्रिर्विंशतिः, त्रीन् वारान् विंशतिरिति त्रिविंशाः, षष्टिरित्यर्थः, विंशतिशब्दः संख्येयमाचक्षमाणोऽपि संख्येयमुपाधिरूपमापाद्य उपाधिसंख्ययैवाचष्टे, समासः पुनर्दशादिवद् वर्तते। द्विदशादिषु सर्वत्र बहुव्रीहिसंज्ञायां सत्यां "बहुव्रीहेः काष्ठे टः" [७. ३. १२५.] इति प्रकृत्य "प्रमाणी-संख्याड्डः" [७. ३. १२८.] इति डः समासान्तः, "डित्यन्त्यस्वरादेः" [२. १, ११४.] इत्यन्त्यस्वरादेर्लोपः, "विंशतेस्तेर्डिति" [७. ४. ६७.] इति विंशतिशब्दस्य तेर्लोपः।

पाणिनीयतन्त्रे "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये" [पा० सू० २. २. २५.] इति सूत्रे महाभाष्ये चर्चितोऽयं विषयः, तथाहि-"द्विदशाः, त्रिदशा इति कोऽयं समासः? बहुव्रीहिरित्याह। कोऽस्य विग्रहः? द्विर्दश द्विदशा इति" इति, अयमाशयः-द्वौ दशेति विग्रहो न सम्भवति, दशसंख्याया एकत्वात् तत्समानाधिकरणे द्विशब्दे द्वित्वानुपपत्तेः, संख्येयानां च दशत्वेन तत्र सुतरां द्वित्वस्यासम्भवः। तथा च द्विशब्देनावृत्तिगताया दशगणनायाः संख्योच्यते इति सुजन्तेनावृत्तिबोधकेन वाक्यं क्रियते। सुजन्तेन सह समासस्तु न संभवतीति शङ्कितम्-"संख्यासमासे सुजन्तत्वात् संख्याऽप्रसिद्धिः" [वा०], संख्यासमासे सुजन्तत्वात् संख्येत्यप्रसिद्धिः, नहि सुजन्ता संख्यास्ति, एवं तर्ह्येवं विग्रहः करिष्यते-द्वौ दशतौ द्विदशा इति। एवमप्यत्कारान्तत्वात् संख्येत्यप्रसिद्धिः, नह्यत्कारान्ता संख्याऽस्ति। "नवाऽसुजन्तत्वात्" [वा०], न वा एष दोषः, किं कारणम्? असुजन्तत्वात्, सुजन्तत्वादित्युच्यते, न चात्र सुजन्तं पश्यामः। किं पुनः कारणं वाक्ये सुच् दृश्यते, समासे न दृश्यते?" इति। अयमाशयः-द्विर्दशेति सुजन्तेन विग्रहः क्रियते, तत्र सुजन्तस्य शब्दान्तरत्वेन संख्यावाचित्वं नास्तीति कथं तस्यानेन सूत्रेण समासः?। अथैतद्दोषपरिजिहीर्षया "द्वौ दशतौ" इति दशसंख्याकवर्गवाचिना 'दशत्'शब्देन सह समास आश्रीयते, तदा पूर्वपदस्य संख्यात्वेऽप्युत्तरपदस्य संख्यात्वं

नास्तीति पुनरपि स एव दोषः, इत्याशङ्क्य सुजन्तेन विग्रहमात्रं न तु तस्य प्रक्रियावाक्ये समासे वा प्रवेश इति सिद्धान्तितम्। प्रक्रियावाक्ये समासे वा कुतो न सुचः श्रवणमिति चेत्? अत्राह–"सुजभावोऽभिहितार्थत्वात् समासे" [ वा० ], समासे सुजभावः, किं कारणम्? अभिहितार्थत्वात्, अभिहितः सुजर्थः समासेनेति कृत्वा समासे सुज् न भविष्यति" इति।

ननु विग्रहवाक्ये सुजस्ति, समासे कथं तदश्रवणमिति चेत्? अत्राह–**सुजर्थस्य समासेनैवाभिहितत्वात् सुचोऽप्रयोग** इति–सुजर्थे समासो विधीयते इति समासेनैव सुजर्थस्योक्तत्वादुक्तार्थानामप्रयोग इति सुचः समासे न प्रयोग इत्यर्थः, एतच्च यद्यपि शब्दशक्तिस्वाभाव्यानुशासनमेव, यतः शब्दैरर्थाभिधानं न वाचनिकं किन्तु स्वाभाविकम्, तदुक्तं हरिणा–

"शब्दान्तरत्वाद् वाक्येषु, विशेषा यद्यपि श्रुताः।
वृत्तिशब्दोऽन्य एवायमर्थान्तरनिबन्धनः॥" इति,

अयमर्थः–वाक्यानां समासापेक्षया शब्दान्तरत्वाद् वाक्येषु यद्यपि वृत्त्यर्थापेक्षया विशेष्यविशेषणभावो विपरीत इति विलक्षणा अर्थाः श्रुतास्तथाप्ययं वृत्तिशब्दोऽर्थान्तरनिबन्धनः–अर्थान्तरं निबन्धनमालम्बनमाश्रयो यस्य तथाभूतः, अन्य एव, एवं सति वृत्ति-विग्रहयोर्यत्किञ्चिदर्थसाम्येऽपि न सर्वथा साम्यं विवक्षितं सम्भवि वेति।

तथा च प्रकृते द्विदशशब्दे स्वभावत एव दशानामावृत्तिद्वयं वाच्यत्वेन प्रतीयते, स एवार्थो लौकिकवाक्येनानूद्यते इति तदर्थं सूत्रे सुजर्थग्रहणं विफलमिवाभाति, तथापि यथान्यत्र शब्दशक्तिस्वाभाव्यानुशासनार्थमर्थग्रहणं क्रियते तथात्रापि कर्तव्यमितरथा सर्वत्राप्यर्थग्रहणं विफलतां व्रजेत्, किञ्चानुशासनेन तादृशशब्दशक्तिस्वाभाव्यमवधार्यते। यैश्च सुजर्थे समासो न विधीयते तैरपि 'शब्दशक्तिस्वाभाव्यादेव समासेन सुजर्थोऽभिधीयते' इत्याश्रयणीयं भवति।

सुजर्थे समासमुदाहृत्य वार्थे समासमुदाहरति–**द्वौ वा त्रयो वा द्वित्राः** इति–द्वौ वा त्रयो वेति वृत्तिविषयताप्रदर्शनाय विग्रहवाक्यम्, 'द्वित्राः' इति वृत्तिः, **त्रिचतुराः** इति समासः, त्रयो वा चत्वारो वेति विग्रहवाक्यम्, **पञ्चषाः** इति समासः, पञ्च वा षड् वेति विग्रहवाक्यम्, **सप्ताष्टाः** इति समासः, सप्त वा अष्टौ वेति विग्रहवाक्यम्; एषु 'त्रिचतुराः' इत्यत्र "नञ्-सु व्युप-त्रेश्चतुरः" [ ७. ३. १२९. ] इति अप् समासान्तः, शेषेषु "प्रमाणीसंख्याड्डः" [ ७. ३. १२८. ] इति डः समासान्तः "डित्यन्त्य०" [ २. १. ११४. ] इत्यन्त्यस्वरादिलोपश्च।

अथेह विकल्पे 'द्वित्रा आनीयताम्' इति यदा त्रय आनीयन्ते तदा वृत्त्यर्थस्य बहुत्वाद् युक्तं बहुवचनम्, यदा तु द्वावानीयेते तदा कथं बहुवचनम्? तदा द्वावानीयेतामित्यर्थः स्यात्, अन्यथा द्वयोरानयनायोगात्, अतः संशय एव वार्थो युक्तः, तत्र संशयस्योभयावगाहित्वाद् बहुत्वोपपत्तेर्बहुवचनमुपपद्यते, तथा चाहुः–अनिर्ज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यम्, तद्यथा–कति भवतः पुत्रा इति, उच्यते–अस्ति विकल्पः, तथाहि–यद्यपि क्रियार्थक्रियायां द्वयोस्त्रयाणां च पृथग्विनियोगेनाभिधायां हि द्वित्रा इति न द्वावेवाभिधीयेते नापि त्रय एव, किन्तु द्वौ च त्रयश्च, न चैवमभिधानेऽपि सह तेषामर्थक्रियायां विनियोगः, तत्र विकल्प्यमानाभिधानात्, तथाहि–द्वौ वा त्रयो वेति वाक्यार्थे समास एषः, न च वाक्ये द्वावेव त्रय एव वाऽभिधीयन्ते, नाप्यर्थक्रियायां क्रियायां समुच्चीयमानाः, अपि तु द्वौ च त्रयश्चार्थक्रियायां विकल्प्यमाना इति सदा बहुवचनमर्थक्रियायां च पाक्षिकत्वमुपपद्यते, न च द्वित्रा आनीयतामिति विनियोगवाक्ये संशयप्रतिभासोऽस्ति, यथा द्वित्रा आगता इत्यन्यत्र, नहि संशय्यमानः किं त्विमौ द्वौ त्रय इति विमर्शमात्रोपक्षय्यार्थार्थक्रियायां विनियुज्यते, अत उभयमत्र वार्थः–विकल्पः संशयश्च।

अथ द्विदशा इति विप्रकृष्टसंख्याभिधायिवर्तिपदे वार्थे समासः, द्वित्रा इत्यादौ च सन्निकृष्टसंख्यावयवे सुजर्थे समासः कस्मान्न भवति? यदि न भवति, अनभिधानम्, अतो न भवति, तदर्थमेव बहुलमित्यधिक्रियते।

विचारितश्चायमर्थः पातञ्जले महाभाष्ये "संख्ययाव्यया०" [ २. २. २५. ] इति सूत्रेऽपि, तथाहि–"द्वित्राः, त्रिचतुराः", इति कोऽयं समासः? बहुव्रीहिरित्याह। कोऽस्य विग्रहः? द्वौ वा त्रयो वेति, भवेद् यदि बहूनामानयनं तदा बहुवचनमुपपन्नम्, यदा तु खलु द्वावानीयेते तदा न सिध्यति, कथम्? केचित् तावदाहुः–अनिर्ज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यमिति, तद्यथा–कति भवतः पुत्राः, कति भवतो भार्या इति। अपर आह–द्वौ वेत्युक्ते त्रयो वेति गम्यते, त्रयो वेत्युक्ते द्वौ वेति गम्यते। सैषा पद्माधिष्ठाना वाक् तत्र युक्तं बहुवचनम्" इति।

अयमाशयः—कोऽयं समास इति प्रश्नस्य विग्रहविषयत्वमेव, बहुव्रीहिनिमित्तकसमासान्तप्रत्ययदर्शनात् बहुव्रीहिसमासस्य नियतत्वात्, विग्रहप्रश्नस्यापि बहुवचननिर्धारणार्थत्वमेव, तच्चेदमित्थं निर्धारितम्–संशयोऽत्र वार्थो न विकल्पः, स चानियतसंख्याविमर्शीति विमर्शविषयबहुत्वसत्त्वाद् बहुवचनम्, तथा च "अनिर्ज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यम्" इति वचनमारभन्ते, अत्रार्थशब्दः संख्यापरः, संख्यायामज्ञातायामित्यर्थः, 'कति भवतः पुत्राः' इत्यादावन्तर्भावितपूर्वसंख्या बहुत्वसंख्या पृच्छ्यते इति बहुवचनम्।

केचित् तु–विरुद्धानेकविषयत्वाद् विमर्शस्य पर्यायस्थितद्वित्व-

बहुत्वरूपसंख्याधारवस्तुसंकलनया पद्माधिष्ठानत्वमुच्यते इति द्वित्रशब्दबोधो नियमेन बहुत्वविषय इति बहुवचनमुपपन्नमेवेति।

अयमाशयः—विकल्पार्थस्वीकारेऽपि द्वित्राश्छात्रा आनीयन्तामित्युक्ते आनयनक्रियान्वये विकल्पसत्त्वेऽपि शब्दान्नियमेन कोटिद्वयोपस्थितिरिति बहुत्वस्य प्राबल्येन तत्पक्षेऽपि बहुवचनमेव युक्तमिति ।

न चेह वार्थप्राधान्यादन्यपदार्थे तस्मिन् "एकार्थं चानेकं च" [ ३. १. २२. ] इति सामान्यसूत्रेणैव बहुव्रीहिसिद्धिरित्यलं वार्थे विशिष्यानेन सूत्रेण बहुव्रीहिविधानेनेति वाच्यम्, शेषबहुव्रीहिसमासमुद्दिश्य समासान्तकजभावार्थं विशिष्यानेन समासस्यावश्यकत्वात्, "शेषाद् वा" [ ७. ३. १७५. ] इति हि कच् "एकार्थं चानेकं च" [ ३. १. २२. ] इति विहितबहुव्रीहेरेव विधीयते, तस्यैव तत्र शेषग्रहणेन ग्रहणात् । किञ्च, द्वित्रा इत्यादौ संख्यावाचकशब्दस्य सर्वदा संख्येयमात्रपरत्वेन तस्य च समासान्तर्गतपदैरेवाभिधानान्नान्यपदार्थप्राधान्यनियम इति तदर्थं विशिष्य समासविधानमावश्यकमिति ।

पदकृत्यं पृच्छति—**सुज्वार्थ इति किमिति** । उत्तरयति—**द्वावेव न त्रयः** इति—सुज्वार्थग्रहणाभावेऽत्रापि समासः प्रसज्येत, सुज्वार्थग्रहणे त्विहावृत्तेर्विकल्पस्य संशयस्य चाभावान्न समासः, अत्र द्वावेवेत्यत्रैवकारोपहितं व्यावर्त्यमपेक्षत इत्यस्ति त्रय इत्यनेन व्यावर्त्येन द्वावित्यस्य योगः । ननु सुजर्थः सुज्, वार्थः—वा, इति प्रतिपत्तावर्थग्रहणमतिरिच्यत इति चेत्? उच्यते—सुज्वार्थे इति हि प्रतिपत्तिः स्पष्टा भवति ।

**संख्येति किमिति**—नामेति पूर्वानुवृत्तमेव पूर्वपदत्वेन ग्राह्यम्, किं संख्योपादानेनेति प्रष्टुराशयः । उत्तरयति—**गावो वा दश वेति**—अत्र गाव इति न संख्येति संख्येति वचनान्न भवति समासः, यद्यपि विकल्पे संशये वा कथञ्चित्समानधर्मविषयत्वमावश्यकमिति संख्यान्तरस्यैव प्रथमकोटावपि भानमुचितं तथापि संशयस्याप्रमाणज्ञानत्वेन तत्र कोटिविशेषनियमस्यानादर इति समाधातुराशयः, दश वेति गोभिर्विकल्प्यमाना दश गोभ्योऽन्ये केऽपि विज्ञायन्ते, एवं **संख्ययेति किमिति** प्रश्ने, **दश वा गावो** वेति तदुत्तरे च त्रिज्ञेयम् ।

**द्विविंशतिर्गवामिति**—अत्र यद्यपि एकादयः संख्याशब्दाः प्रायेण संख्येये एव वर्तन्ते, विंशत्यादयः पुनः संख्याने संख्येये च, तथाहि—संख्येये सामानाधिकरण्येन विंशतिर्गाव इति भवति, संख्याने वैयधिकरण्येन विंशतिर्गवामिति, अत्र यदि 'संख्येये' इति नोच्येत तदा संख्यानेऽपि वर्तमानया संख्यया संख्या समस्येत, यथा द्विविंशा गाव इति भवति तथा द्विविंशा गवामित्यपि स्यात्, अतः 'संख्येये' इत्युच्यते ।

नन्विह सुजर्थे समासः किमर्थमुच्यते, द्विविंशा इत्यादावुत्तरपदस्य संख्यानवृत्तितया संख्येयेऽन्यपदार्थे "एकार्थं चानेकं च" [ ३. १. २२. ] इति समस्येत—द्वे विंशती संख्ये येषां संख्येयानामिति, द्व्यादयोऽपि हि संख्याने सन्ति, यथा पञ्च परिमाणं येषां पञ्चकाः शकुनय इति, वार्थे उच्यतां समासः, तत्र प्रथमान्तान्यपदार्थाभावात्; उच्यते—विशेषेण तावदिह बहुव्रीहिर्वक्तव्यो डार्थम्, "प्रमाणीसंख्याड्डः" [ ७. ३. १२८. ] इति हि प्रतिपदविहिताद् बहुव्रीहेर्डविधाने प्रवर्तते, अन्यथातिप्रसङ्गात्, अत्र प्रायेणा दशभ्यः संख्या संख्येये इति संख्येयमन्यपदार्थमनाश्रित्य सुजर्थ इत्युच्यते ।

अनेन सूत्रेण समाससंज्ञया सह बहुव्रीहिसंज्ञापि विधीयते, तत्र बहुव्रीहिसंज्ञाविधानस्य प्रयोजनस्थलं दर्शयति—**बहुव्रीहिप्रदेशा** इत्यादिना, बहुव्रीहिशब्दमुच्चार्य विहिताः "वा बहुव्रीहेः" [ २. ४. ५. ] इत्यादिविधयोऽस्याः संज्ञायाः प्रयोजनस्थलानीति भावः । [ ३. १. १९. ] ॥

## आसन्ना-ऽदूरा-ऽधिका-ऽध्यर्धा-ऽर्धादिपूरणं द्वितीयाद्यन्यार्थे । ३ । १ । २० ॥

**त० प्र०**—'आसन्न, अदूर, अधिक, अध्यर्ध' इत्येतानि, अर्धशब्दपूर्वपदं च पूरणप्रत्ययान्तं नाम, संख्यावाचिना नाम्नैकार्थ्ये समस्यते, द्वितीयाद्यन्तस्यान्यस्य—पदस्यार्थे—संख्येयरूपेऽभिधेये, स च समासो बहुव्रीहिसंज्ञो भवति । आसन्ना दश दशत्वं येषां येभ्यो वा ते—आसन्नदशाः, नवैकादश वा; एवम्—आसन्नविंशाः—एकोनविंशतिरेकविंशतिर्वा, आसन्नत्रिंशाः—एकोनत्रिंशदेकत्रिंशद् वा; एवम्—अदूरदशाः, अदूरविंशाः, अदूरत्रिंशाः; अधिका दश येभ्यो येषु वा ते—अधिकदशाः—एकादशादयः, अधिकत्वं च दशानामेकाद्यपेक्षम्, अवयवेन विग्रहः समुदायः समासार्थः; एवम्—अधिकविंशाः—एकविंशत्यादयः, अधिकत्रिंशाः—एकत्रिंशदादयः, अध्यर्धा विंशतिर्येषां तेऽध्यर्धविंशाः—त्रिंशदित्यर्थः, एवम्—अध्यर्धत्रिंशाः, अध्यर्धचत्वारिंशाः; अर्धपञ्चमा विंशतयो येषां ते—अर्धपञ्चमविंशाः—नवतिरित्यर्थः; एवम्—अर्धचतुर्थविंशाः—सप्ततिरित्यर्थः, अर्धतृतीयविंशाः—पञ्चाशदित्यर्थः । आसन्नादिग्रहणं किम्? संनिकृष्टा दश येषां ते—संनिकृष्टदशानः । पूरणस्यार्धपूर्वत्वविशेषणं किम्? पञ्चमी विंशतिर्येषां ते—पञ्चमीविंशतयः । ऊनपञ्चमा विंशतयो येषां ते—ऊनपञ्चमविंशतयः । पूरणमिति किम्? अर्धद्वया विंशतयो येषां ते—अर्धद्वयविंशतयः । द्वितीयाद्यन्यार्थे इति किम्? आसन्ना दश, अधिका दशभिः । तथाऽधिका षष्टिर्वर्षाण्यस्येति वाक्येऽधिक-षष्टिशब्दयोरनेन द्विपदो बहुव्रीहिर्न भवति, यदि स्यात् समासान्तो डः प्रसज्येत, न चासाविष्यते, उत्तरेण तु त्रिपदो बहुव्रीहिर्भवत्येव—अधिक-

षष्टिवर्षः । अधिका षष्टिर्येषां वर्षाणामित्यत्र स्वन्यार्थत्वेऽप्यनभिधानान्न भवति । "एकार्थं चानेकं च" [ ३. १. २२. ] इत्यनेनैव सिद्धे प्रतिपदविधानं डप्रत्ययविधावेतत्संप्रत्ययार्थम्, एवमुत्तरसूत्रमपि ॥ २० ॥

5 **श० म० अनुसन्धानम्—आसन्ने**त्यादि–आसन्नश्चादूरश्चाधिकश्चाध्यर्धश्चार्धादिपूरणश्चेत्येषां समाहार इति–आसन्ना-ऽदूरा-ऽधिका-ऽध्यर्धादिपूरणम्, द्वितीयादिश्च तद् अन्यच्च–द्वितीयाद्यन्यत्, तस्यार्थः–द्वितीयाद्यन्यार्थः, तस्मिंस्तथा । मूलं व्याख्याति–**'आसन्न, अदूर, अधिक, अध्यर्ध' इत्ये-**
10 **तानी**ति–एते शब्दाः पूर्वनामत्वेनानुवृत्तप्रथमान्तनामपदविशेषणानीति 'एतानि' इति नपुंसकेन निर्देशः । यथा–आसन्नादयः स्वातन्त्र्येण विज्ञायन्ते तथा 'अर्धादि' इत्यपि विज्ञायेतेत्यतो विभज्य व्याख्याति–**अर्धशब्दपूर्वपदं च पूरणप्रत्ययान्तं नामे**ति–अर्धः–अर्धशब्दः, आदिः–पूर्वपदं यस्य तादृशम्,
15 पूरणः–"संख्यापूरणे०" [ ७. १. १५५. ] इत्यधिकृत्य विधीयमानः पूरणार्थकः प्रत्ययः, प्रत्यये च तदन्तविज्ञानादुक्तम्–पूरणप्रत्ययान्तमिति, नाम्नो विशेषणत्वाच्च नपुंसकत्वम्; केचित् तु–"पूरणं कोऽर्थः ? पूरणप्रत्ययान्तं पदमभिधेयत्वेनास्यास्तीति "अभ्रादिभ्यः" [ ७. २. ४६. ] इत्यप्रत्ययः" इत्याहुः; तथा
20 च 'अर्धादिपूरण' इति सूत्रस्थस्योक्तार्थलाभः । **द्वितीयाद्यन्यार्थे** इति–द्वितीयाशब्देन द्वितीयाविभक्तिरिह विवक्षिता, तथा च द्वितीयाविभक्तिरादिर्यासां ता द्वितीयादयो विभक्तयः, प्रथमाविभक्तिवर्जिताः षड् विभक्तय इति यावत्, एतेन 'अन्य' इति विशिष्यते इति तदन्तविज्ञानात्, यद्वा द्वितीयादीनां
25 प्रत्ययत्वेन "प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इति तदन्तविज्ञानाद् द्वितीयाद्यन्तं गृह्यते, तच्च पदमेव विज्ञायते, तदर्थस्य 'संख्येये' इत्यनुवर्तमानं विशेषणम्, तथा च योऽर्थो निष्पन्नस्तमाह–**द्वितीयाद्यन्तस्यान्यस्य पदस्यार्थे संख्येयेऽभिधेये** इति ।

30 सम्पन्ने सूत्रार्थे उदाहरणावसर इति विगृह्योदाहरति–**आसन्ना दश–दशत्वं येषां येभ्यो वा ते–आसन्नदशा** इति–"षद्लृ विशरण-गत्यवसादनेषु" विशरणं–शटनम्, अवसादः–अनुत्साहः, आङ्पूर्वादत आसीदति स्मेति क्ते–'आसन्न' इति; यद्यपि "आ दशभ्यः संख्याः संख्येये वर्तन्ते"
35 इति वचनमस्ति, तथापि तस्य प्रायिकत्वाद् वृत्तिस्वाभाव्याद् वा 'दशन्'शब्दोऽत्र संख्यायां–संख्याने वर्तते, न तु संख्येये–संख्याविशिष्टे, संख्या-संख्यावतोरभेदाश्रयणाच्च संख्येयानां बहुत्वात् संख्यानेऽर्थेऽपि बहुवचनम्, **दश–दशत्वमि**ति, अत एव पूर्वसूत्रवत् 'संख्येये' इति 'संख्यावाचिना' इत्यस्य विशेषणतया नेह व्याख्यातम्; "आराद्दर्थैः" [ २. २. ७८. ] 40 इति सूत्रेणारादर्थकशब्दयोगे विकल्पेन पञ्चमी भवति, पक्षे तदभावे कारकशेषत्वात् "शेषे" [ २. २. ८१. ] इति षष्ठी भवति, एतत्प्रदर्शनायोक्तम्–**येषां येभ्यो वे**ति; समासस्वरूपमाह–**आसन्नदशाः** इति–ननु "विशेषण-सर्वादि-संख्यं बहुव्रीहौ" [ ३. १. १५०. ] इति संख्यायाः पूर्वनिपातः कथं 45 न भवति ?, अथात्र "क्ताः" [ ३. १. १५१. ] इति क्तान्तस्यासन्नशब्दस्य पूर्वनिपातः स्यात् तर्हि 'अदूरदशाः' इत्यादावक्तान्ते कस्मान्न भवतीति चेत् ? उच्यते–"प्रमाणी-संख्याड्डः" [ ७. ३. १२८. ] इति समासान्तविधानात्, नहि संख्यायाः पूर्वनिपाते तत्समासान्तविधानमुपपद्यते; "प्रमाणी०" [ ७. ३. 50 १२८. ] इति समासान्ते डे "डित्यन्त्यस्वरादेः" [ २. १. ११४. ] इत्यन्त्यस्वरादिलोपे 'आसन्नदश' इति समासस्यापि नामत्वात् "नाम्नः प्र०" [ २. २. ३१. ] इति जसि–'आसन्नदशाः' इति रूपं भवति । अथ समासार्थमाह–**नवैकादश वे**ति–नवानामपि दश आसन्ना भवन्त्येकादशानामपीत्युभय- 55 ऽप्यासन्नदशा इत्युच्यन्ते ।

अत्रेदमाह लघुन्यासकारः–"आ दशभ्यः संख्या" इत्यस्य प्रायिकत्वादत्र 'दशन्'शब्दः संख्याने वर्तते, परं संख्येयेन सहाभेदे बहुवचनम् । यदि संख्येयवृत्तिना 'दशन्'शब्देन 'आसन्ना दश येषाम्' इत्येव वाक्यं क्रियते न दशत्वमिति तदा 60 'संख्यावाचिना' इति वृत्त्यंशेन निषेधान्न स्यादनेन समासः, 'नवैकादश वा' इति पर्यायश्च विघटेत, यत इत्थं कृते एकोनविंशत्येकविंशतिसंख्याप्रतीतिः" इति ।

अत्रेदमाभाति–यद्यपि संख्येयार्थग्रहणे 'दशन्'शब्दस्य संख्यावाचित्वं न विहन्यते, यतो गौणतयापि संख्यामाचक्षाणः 65 शब्दः संख्यावचनो भवतीति पूर्वसूत्रव्याख्यानादप्यवसीयते, तथापि 'नवैकादश वा' इति समासार्थे प्रदर्शनं विघटेत, यतो दशत्वसंख्याविशिष्टानां पदार्थानामासन्नाः–समीपस्थास्त्रित्वादिसंख्याविशिष्टा अपि पदार्था भवन्तीति 'नव एव, एकादश एव वा' इति नियमनं विशीर्येत, संख्यार्थग्रहणे तु संख्यानिरूपिता- 70 सन्नत्वं संख्यायां लभ्यते, तच्च प्रकृते दशत्वनिरूपितासन्नत्वमव्यवहिते पूर्वस्मिन् नवत्वे परस्मिंश्चैकादशत्वे एव भवति, संख्या-संख्यावतोरभेदाश्रयणाच्च 'आसन्नदश'शब्देन नव एकादश वा पदार्था नियन्तुं शक्यन्त इति ।

अतिदिशति–**एवमि**ति–आसन्नदशवद् अन्यान्यप्युदाहरणानि 75 ज्ञेयानीत्यर्थः, तानि कानीत्याह–**आसन्नविंशाः** इति–समासोऽयम्, आसन्ना विंशतिः संख्या येषां येभ्यो वेति विग्रहः, प्राग्वत् समासान्ते डे "विंशतेस्तेर्डिति" [ ७. ४. ६७. ] इति

तिशब्दलोपे 'आसन्नत्रिंश' इति, शेषं प्राग्वत्। समासार्थमाह-**एकान्नविंशतिरेकविंशतिर्वे**ति-एकेन न विंशतिरिति "नविंशत्या०" [ ३. १. ६९. ] इति समासे, एकशब्दस्य आदन्तादेशे दस्य च नत्वे-'एकान्नविंशति' इति, एकोनविंशतिरित्यर्थः, क्वचित् तु 'एकोनविंशतिः' इति पाठः; एवम्-**आसन्नत्रिंशाः** इति-समासोऽयम्, आसन्ना त्रिंशत् संख्या येषां येभ्यो वेति विग्रहः, प्राग्वत् समासान्ते डेऽन्त्यस्वरादिलोपे च 'आसन्नत्रिंश' इति, शेषं प्राग्वत्। समासार्थमाह-**एकान्नत्रिंशद् एकत्रिंशद् वे**ति-एकेन न त्रिंशदिति प्राग्वद् एकान्नत्रिंशद्, एकोनत्रिंशदित्यर्थः, शेषं प्राग्वत्।

अतिदिशति-**एवमि**ति-यथा आसन्नशब्देनोदाहरणानि प्रतिपादितानि तथा अदूरशब्देनापि ज्ञेयानीत्यर्थः, तदेवाह-**अदूरदशाः** इति-समासोऽयम्, अदूरे अदूरा वा दश-दशत्वसंख्या येषां येभ्यो वा ते-अदूरदशाः, नव एकादश वा, तेषां हि दश अदूरे भवन्ति; **अदूराविंशाः** इति-समासोऽयम्, अदूरे अदूरा वा विंशतिः संख्या येषां येभ्यो वा ते-अदूरविंशाः, एकोनविंशतिरेकविंशतिर्वा, शेषा सर्वापि प्रक्रिया प्राग्वदवगन्तव्या।

अधिकशब्दे विग्रहवाक्यादिषु विशेषाद् विगृह्योदाहरति—**अधिका** इत्यादिना, **अधिका दश येभ्यो येषु वा ते** इति विग्रहः, **अधिकदशाः** इति समासः, **एकादशादयः** इति समासार्थप्रदर्शनम्। अधिरूढ इत्यर्थेऽधिकशब्दो निपात्यते, अधिरूढ इति च अध्यारोहतीति कर्तरि क्ते, अध्यारुह्यत इति कर्मणि क्ते च भवति, तत्र यदा कर्तरि तदा अधिकशब्देनाल्पीयानुच्यते, यदा तु कर्मणि तदा भूयानुच्यते, प्रकृते चाल्पीयोवाचकोऽधिकशब्दो गृह्यते, एतदभिव्यक्तये "अधिकेन भूयसस्ते" [ २. २. १११. ] इति सूत्रविहिता पञ्चमी सप्तमी च दर्शिता-'येभ्यो येषु वा' इति, अधिकाः-अध्यारूढा दश येषु संख्येयेषु ते-अधिकदशाः, ते के? इत्याह-**एकादशादयः** इति, आदिशब्देन द्वादश वाऽधिकदशा इत्यत आरभ्याष्टादश वाऽधिकदशा इति पर्यन्तमर्थो लभ्यते, अष्टादशपर्यन्तं 'दशन्'-शब्दप्रयोगात्, इत्यत आह-**अधिकत्वं च दशानामेकाद्यपेक्षमि**ति-एकादशभिर्हि दश अधिकाः-अध्यारूढा भवन्ति, न चेत्? एकादयो दश दशैव स्युर्नाधिकाः, तथापि कथमयमर्थः? इत्यत आह-**अवयवेन विग्रहः समुदायः समासार्थः** इति-एकादशादीनां दशावयवः, तेन विग्रहेऽवयवेन विग्रहः प्रवर्तते, 'येभ्यो येषु वा ते' इति समुदायः, एते दश येन चाध्यारुह्यन्ते एकादिना ते सर्वे एव समुदिताः समासार्थो विज्ञायते, अतोऽधिकदशा इत्येकादशादयो भवन्ति। अतिदिशति-**एवमि**ति-अधिकदशवद् अन्यान्यप्युदाहरणानि ज्ञेयानि, तानि कानीत्याह-**अधिकविंशाः** इति-समासोऽयम्, एतदर्थमाह-**एकविंशत्यादयः** इति-आदिशब्देन चात्राष्टाविंशतिपर्यन्तस्य ग्रहणम्; **अधिकत्रिंशाः** इति-समासोऽयम्, एतदर्थमाह-**एकत्रिंशदादयः** इति-आदिशब्देनेहाष्टात्रिंशत्पर्यन्तस्य ग्रहणम्।

अध्यर्धशब्दे विग्रहादिकृतविशेषाद् विगृह्योदाहरति-**अध्यर्धे**त्यादिना, **अध्यर्धा विंशतिर्येषां ते** इति-विग्रहवाक्यमिदम्, अर्धेन अधिका-अध्यारूढा-अध्यर्धा विंशतिर्येषां प्रमातृणां ते इति तदर्थः, **अध्यर्धविंशाः** इति समासः, समासार्थमाह-**त्रिंशदित्यर्थः** इति-विंशतेरर्धं दश भवन्ति, दशभिश्चाध्यारूढा विंशतिस्त्रिंशदिति भवत्यवयवेन विग्रहः समुदायः समासार्थ इति। अतिदिशति-**एवमि**ति-अध्यर्धविंशवद् अन्यान्यप्युदाहरणानि ज्ञेयानि, तानि कानीत्याह-**अध्यर्धत्रिंशाः** इति-समासोऽयम्, अध्यर्धा त्रिंशद् येषां ते-अध्यर्धत्रिंशाः, पञ्चचत्वारिंशदित्यर्थः; **अध्यर्धचत्वारिंशाः** इति-समासोऽयम्, अध्यर्धा चत्वारिंशद् येषां ते-अध्यर्धचत्वारिंशाः, षष्टिरित्यर्थः।

अथार्धादिपूरणप्रत्ययान्तोदाहरणस्यावसर इति विगृह्योदाहरति-**अर्धपञ्चमे**त्यादिना, **अर्धपञ्चमा विंशतयो येषां ते** इति-विग्रहवाक्यमिदम्, पञ्चानां पूरणीति 'पञ्चन्'शब्दात् "नो मट्" [ ७. १. १५९. ] इति मट्प्रत्यये "नोऽपदस्य तद्धिते" [ ७. ४. ६१. ] इति नलोपे टित्त्वाच्च "अणञेये०" [ २. ४. २०. ] इति ङ्यां-'पञ्चमी' इति, अर्धं पञ्चमी यासां यासु वा ता अर्धपञ्चमाः, अत्र "पूरणीभ्यस्तत्प्राधा०" [ ७. ३. १३०. ] इत्यप्समासान्ते "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इतीकारलोपे "आत्" [ २. ४. १८. ] इत्यापि च-'अर्धपञ्चमा'शब्दः, ततो जस्; **अर्धपञ्चमविंशाः** इति-समासोऽयम्, अत्र "परतः स्त्री०" [ ३. २. ४९. ] इति पुंवद्भावः; समासार्थमाह-**नवनवतिरित्यर्थः** इति-चतस्रो विंशतयः, पञ्चमी विंशतिरर्धमिति दश, ते सर्वे समुदिता नवतिर्भवन्तीति भावः। अतिदिशति-**एवमि**ति-अर्धपञ्चमविंशवद् अन्यान्यप्युदाहरणानि ज्ञेयानि, तानि कानीत्याह-**अर्धचतुर्थविंशाः** इति-समासोऽयम्, चतसृणां पूरणीति 'चतुर्'शब्दात् "चतुरः" [ ७. १. १६३. ] इति थटि ङ्यां च-'चतुर्थी' इति, अर्धं चतुर्थी यासां यासु वा ताः-अर्धचतुर्थाः, अर्धचतुर्था विंशतयो येषां ते-अर्धचतुर्थविंशाः, शेषं पूर्ववत्, समासार्थमाह-**सप्ततिरित्यर्थः** इति-त्रयो विंशतयः, चतुर्थी विंशतिरर्धमिति दश, ते सर्वे समुदिताः सप्ततिर्भवन्तीति भावः; **अर्धतृतीयविंशाः** इति-समासोऽयम्, तिसृणां पूरणीति त्रिशब्दात् "त्रेस्तृ च" [ ७. १. १६६. ] इति तीयप्रत्यये

'तृ' इत्यादेशे आपि च–'तृतीया' इति, अर्धं तृतीया यासां यासु वेति–अर्धतृतीयाः, अर्धतृतीया विंशतयो येषां ते–अर्धतृतीयविंशाः, शेषं प्राग्वत्; समासार्थमाह–**पञ्चाशदित्यर्थः** इति–द्वे विंशती, तृतीया विंशतिरर्धमिति दश, ते सर्वे समु-5दिताः पञ्चाशद् भवन्तीति भावः।

अथ पदकृत्यपृच्छावसरः, तत्र पूर्वनामत्वेनासन्नादिग्रहणं किमर्थमिति पृच्छति–**आसन्नादिग्रहणं किमि**ति–'नाम' इत्यनुवर्तत एव, तावतैवासन्नादीनामपि नामत्वाव्यभिचाराद् ग्रहणं भविष्यतीति प्रष्टुराशयः। उत्तरयति–**सन्निकृष्टा दश** 10**येषां ते–सन्निकृष्टदशानः** इति–यथा नामत्वेनासन्नादि गृह्यते तथा सन्निकृष्टादीनामपि ग्रहणं प्रसज्येत, तन्निवारणायासन्नादिग्रहणं, प्रकृते तदभावान्नानेन समासः, "एकार्थं चा०" [ ३. १. २२. ] इत्यनेन तु भवत्येव समासः, अनेन समासे तु समासान्तो डः प्रसज्येत।

15 पुनः पृच्छति–**पूरणस्यार्धपूर्वत्वविशेषणं किमि**ति–'अर्धादि'ग्रहणमन्तरापि 'अर्धपञ्चमविंशाः' इत्यादिप्रयोगा अनेन भविष्यन्त्येवेति 'पूरण' इत्येतावदेवोच्यतामिति प्रष्टुराशयः। उत्तरयति–**पञ्चमी विंशतिर्येषां ते–पञ्चमीविंशतयः, ऊनपञ्चमा विंशतयो येषां ते–ऊनपञ्चमविंशतयः** 20इति–उत्तरयितुरयमाशयः–'अर्धादि'ग्रहणाभावे केवलस्यान्यपूर्वस्य वा पूरणस्यानेन समासः प्रसज्येत, अतस्तद्ग्रहणम्, प्रकृते चोभयत्रापि पूरणमस्ति किन्तु नार्धादीति नानेन समासः, "एकार्थं चा०" [ ३. १. २२. ] इत्यनेन तु भवत्येव, अनेन समासे डः प्रसज्येत, उभयत्र "परतः स्त्री०" 25[ ३. २. ४९. ] इति प्राप्तोऽपि पुंवद्भावः "तद्धिताक०" [ ३. २. ५४. ] इति निषेधात् पूर्वत्र न भवति।

पुनः पृच्छति–**पूरणमिति किमि**ति–ननूक्तातिप्रसङ्गवारणाय 'अर्धादि' इत्येवोच्यतां किं पूरणग्रहणेनेति–प्रश्नाशयः; उत्तरयति–**अर्धद्वया विंशतयो येषां ते–अर्धद्वयविंश-** 30**तयः** इति–अत्र द्वावयवौ यस्य तद् द्वयम्, द्वित्वविशिष्टः समुदायः, अर्धानां द्वयं यासु ता अर्धद्वयाः, अभ्रादित्वान्मत्वर्थीयोऽकारप्रत्ययः, तथा च दश दश इति द्विधा विभक्ताः–अर्धद्वयाः, द्वित्वविशिष्टसमुदायवदर्धयुक्ता विंशतयो येषां ते इति विग्रहार्थ इति केचित्; अर्धं द्वयम्–द्व्यवयवयुक्तं यासां ता अर्ध-35द्वया इत्यपरे; अर्धं द्वयं विंशतिर्यासु, एकं दशकलक्षणमर्धं द्वितीयं तु द्विभागीकृतं किं भवति? पञ्च, इति लघुन्यासकृतः; पूरणग्रहणाभावेऽत्रापि प्रसज्येत, अतस्तद्ग्रहणम्, प्रकृते चार्धादि वर्तते, न पूरणमिति नानेन समासः, उत्तरेण "एकार्थं चा०" [ ३. १. २२. ] इत्यनेन तु भवत्येव, अनेन समासे हि डः 40प्रसज्येत।

ननु चाध्यर्धस्यार्धपूर्वस्य च पूरणस्य "कसमासेऽध्यर्धः" [ १. १. ४१. ] "अर्धपूर्वपदः पूरणः" [ १. १. ४२. ] इति संख्यात्वमस्ति, तत्र किं न पूर्वेण सिध्यति यतोऽध्यर्धार्धादिपूरणग्रहणं क्रियत इति चेत्? उच्यते–पूर्वसूत्रेण संख्यायाः समासः सुज्वार्थे विधीयते, न सोऽध्यर्धविंशा इत्यादावस्ती-45ऽत्राध्यर्धार्धादिपूरणग्रहणं क्रियते। यद्येवं किमनयोः समासे संख्यासंज्ञयेति चेत्? उच्यते–"संख्या समाहारे च द्विगुश्चानाम्न्ययम्" [ ३. १. ९९. ] इति संख्यायाः समासः शिष्यते, तदर्थमनयोः समासे संख्यासंज्ञा, 'अध्यर्धशूर्पम्, अर्धपञ्चमशूर्पम्' इति यथा स्यादिति क्रियते, "वंश्येन पूर्वार्थे" [ ३. १. 50२९. ] इत्यव्ययीभावस्तु नानयोर्भवत्यनभिधानादिति।

पुनः पृच्छति–**द्वितीयाद्यन्यपदार्थे इति किमि**ति–ननु द्वितीयाद्यन्यपदार्थग्रहणाभावेऽपि 'आसन्नादि नाम संख्यावाचिना संख्येयेऽभिधेये समस्यते' इति सूत्रार्थत आसन्नदशादयः सेत्स्यन्त्येव, आसन्ना दशानामासन्नदशाः, अधिका दशा-55नामधिकदशाः, अध्यर्धा विंशतयोऽध्यर्धविंशाः, अर्धपञ्चमा विंशतयोऽर्धपञ्चमविंशाः, इत्यतोऽपि नवादयः प्रतीयन्त एवेति प्रष्टुराशयः। उत्तरयति–**आसन्ना दशे**ति–अत्रासति द्वितीयाद्यन्यपदार्थे दशेत्युत्तरपदार्थः संख्येये संख्याविशेषणे संख्येय इति समस्येत, आसन्नादिविशेषणे 'अधिका दशभिः' इत्यत्र प्राप्नोति, 60समासविशेषणे तूभयत्रापि स्यात्, तथा चानेन समासे सति 'आसन्नदशाः' इति प्रसज्येत; सति द्वितीयाद्यन्यपदार्थे तु तदभावान्नानेन समासः, 'द्वितीयाद्यन्यार्थे' इत्यस्य 'द्वितीयाद्यन्तान्यपदार्थे' इत्यस्मिन्नर्थे भागद्वयम्–द्वितीयान्तत्वं विशेषणम्, अन्यपदार्थत्वं विशेष्यं चेति, 'आसन्ना दश' इत्यत्र न द्वितीयाद्यन्तत्वं 65न वाऽन्यपदार्थ इत्युभयाभावप्रयुक्तो विशिष्टाभावः, 'आसन्ना दशभिः' इत्यत्र द्वितीयाद्यन्तत्वमस्ति, अन्यपदार्थत्वं च नास्तीति विशेष्याभावप्रयुक्तो विशिष्टाभावः, कश्चित् त्वत्रैवमाह–प्रथमान्तस्यैवान्यपदार्थप्रतीतेरन्यपदार्थोऽस्ति, द्वितीयाद्यन्तत्वं तु नास्तीति विशेषणाभावप्रयुक्तो विशिष्टाभावः। 70

विशेषवक्तव्यतया पृथक्कृत्य प्रत्युदाहरणान्तरमाह–**तथा–अधिकेत्यादि–अधिका षष्टिर्वर्षाण्यस्येति वाक्ये** इति–त्रिपदबहुव्रीहिसमासविग्रहवाक्ये इत्यर्थः, **उत्तरेण** "एकार्थं०" [ ३. १. २२. ] इति वक्ष्यमाणसूत्रेण, **त्रिपदो बहुव्रीहिः** 'अधिक-षष्टि-वर्ष'रूपाणां त्रयाणां पदानां75 बहुव्रीहिसमासो **भवत्येव** स्यादेव, तत्स्वरूपमाह–**अधिकषष्टिवर्षः** इति। ननु बहुव्रीहिसमासस्तु जात एवेति कथं प्रत्युदाहरणत्वमस्येत्यत आह–**अधिक-षष्टिशब्दयोरनेन द्विपदो बहुव्रीहिर्न भवतीति**–"एकार्थं चानेकं च" [ ३. १. २२. ] इति सूत्रेणायं त्रिपदो बहुव्रीहिर्जातः, न त्वधिक-षष्टि- 80

शब्दयोरनेन बहुव्रीहिः, तयोर्द्वितीयाद्यन्यपदार्थे वृत्त्यभावात्, 'द्वितीयाद्यन्यार्थे' इत्यसतीहापि प्राप्नुयात् । ननु प्राप्नोतु नामाधिक-षष्टिशब्दयोरनेन समासः, पुनः समासस्यापि नामत्वात् तस्य वर्षशब्देन सह "एकार्थं०" [ ३. १. २२. ] इत्यनेन
5 समासे कृते 'अधिकषष्टिवर्षः' इत्येव भविष्यतीत्यत आह–**यदि स्यात्, समासान्तो डः प्रसज्येते**ति–अधिकषष्टिशब्दयोरनेन यदि समासः स्यात् तदा प्रतिपदविहितत्वात् "प्रमाणीसंख्याड्डः" [ ७. ३. १२८. ] इति समासान्तो डः स्यात्, ननु भवतु नाम डः का तत्र क्षतिरित्यत आह–**न**
10 **चासाविष्यते** इति–डे सति "ड्यित्यन्त्यस्वरादेः" [ २. १. ११४. ] इतीकारलोपे 'अधिकषष्ट' इत्यनेन पुनः समासे 'अधिकषष्टवर्षः' इत्यनिष्टं रूपमापद्येतेति भावः ।

अत्र केचिदेवमाहुः–न केवलं डप्रसङ्ग एव, किन्तु "तद्धिताककोपान्त्य०" [ ३. २. ५४. ] इति पुंवद्भावनिषेधो-
15 ऽपि स्यात्, तथा च 'अधिकाषष्टवर्षः' इत्यनिष्टरूपमापद्येत, "एकार्थं चानेकं च" [ ३. १. २२. ] इत्युत्तरसूत्रेण त्रिपदबहुव्रीहौ कृते पूर्वपदयोः "दिगधिकं०" [ ३. १. ९८. ] इति समासे "पुंवत् कर्मधारये" [ ३. २. ५७. ] इत्यनेन पुंवद्भावो भवत्येव, तस्य बाधकबाधनार्थत्वात्, एवं द्वयोः समासस्य
20 बहुव्रीहित्वाभावादपि न समासान्तडप्रसङ्गः; न चैवम् 'अधिकविंशाः' इत्यत्रापि "तद्धिताकको०" [ ३. २. ५४. ] इति पुंवद्भावप्रतिषेधः स्यादिति वाच्यम्, अत्राधिकशब्दस्याव्युत्पन्नस्य ग्रहणेन कोपान्त्यत्वाभावात् "तद्धिताकको०" [ ३. २. ५४. ] इति न पुंवद्भावनिषेधः ।

25 अत्रेदमाभाति–यद्यपि "अधेरारूढे" [ ३. १. १८७. ] इत्यारूढार्थादधेः स्वार्थे कप्रत्यये 'अधिक'शब्दो निष्पद्यत इति कोपान्त्यत्वमस्त्येव, तथापि "अधिकेन भूयसस्ते" [ २. २. १११. ] इति सूत्रवृत्तौ 'अधिरूढ' इत्यर्थेऽधिकशब्दो निपात्यते' इति स्वयमाचार्येण प्रतिपादनादाचार्यस्य निपातन-
30 मिष्टम्, एवं तन्त्रान्तरसंवादोऽपि भवति, कप्रत्ययेन व्युत्पादनं चार्थोपदर्शनद्वारा कप्रकरणानुपातित्वात् ।

अथाधिका षष्टिर्वर्षाणामस्येति विग्रहे संख्यानमात्रवृत्तौ षष्टिशब्दस्य वर्षाणामित्यन्यपदार्थोपपत्तेस्तत्रायं समासः कस्मान्न भवति ?, तस्य च वर्षशब्देन 'अस्य' इत्यन्यपदार्थे "एकार्थं०"
35 [ ३. १. २२. ] इति बहुव्रीहिः, तथा च डप्रसङ्गादनिष्टानिवृत्तिरित्यत आह–**अधिका षष्टिर्वर्षाणामस्ये**त्यादि–अत्र संख्याने षष्टिशब्दे वाक्यमेव, न समासः, कुतः ? **अनभिधानात्** शिष्टैस्तादृशप्रयोगाप्रतिपादनाद् व्याकरणेन च सिद्धानामनुशासनात्; केचित् तु–न ह्यस्मिन् विग्रहे समासे सति 'अधिकषष्टानि वर्षाणि' इत्यनेन प्रयोगेणासावर्थोऽभिधीयते 40 क्वापीति न समासः; अन्ये तु बहुलाधिकारात् समासाभावमाहुः । अत्र परिहारान्तरमपि वर्ण्यते–'संख्येये' इत्यनेन 'संख्यया' इति निर्दिश्यमाना संख्या विशिष्यते–संख्येये या संख्या तयेति, ततश्चात्र संख्येयेऽवर्तमानायां संख्यायामयं समासो न भवति, "एकार्थं०" [ ३. १. २२. ] इति समासेऽपि संख्यायाः 45 प्रतिपदविहिते बहुव्रीहावेव डः समासान्तो भवतीति नानिष्टप्रसङ्गः । ननु च 'संख्येये' इति संख्याविशेषणे समासार्थो न विशेषितः स्यात्, तत्र 'आसन्ना दशास्य पुरुषस्य' इत्यत्राप्ययं समासः प्रसज्येत, नैष दोषः–तत्र बाहुलकान्निवृत्तिः; अथवाऽऽवृत्त्या समासार्थोऽपि विशिष्यते । 50

'द्वितीयाद्यन्यार्थे' इत्यस्याग्रे सारांशः–द्वितीयादिग्रहणाभावे हि 'अधिका षष्टिर्वर्षाण्यस्य' इत्यत्र वर्षेऽन्यपदार्थे प्राप्नोति, अन्यग्रहणाभावे 'अधिका दशभिः' इत्युत्तरपदार्थे प्राप्नोति, अर्थग्रहणमुत्तरार्थम्, इह हि 'द्वितीयाद्यन्यस्मिन् संख्येये' इति विज्ञायमानेऽर्थादर्थप्रतीतिः । ननु चैका प्रथमैव द्वितीयादिग्रहणस्य 55 व्यवच्छेद्या, तत्राप्रथमाग्रहणमेव कथं न क्रियते ? इति चेत् ? उच्यते–अत्र "एकार्थं चा०" [ ३. १. २२. ] इत्यत्र च प्रथमान्तान्यपदार्थो व्यवच्छेद्यो भवतु, द्वितीयादिप्रतीतिः कथम् ?, 'अप्रथमा' इत्यत्र पर्युदासग्रहणात् तस्य च तत्सदृशार्थग्राहित्वाद् द्वितीयादिरेव विज्ञायेतेति चेत् ? पर्युदासाश्रयणे हि केन धर्मेण 60 सादृश्यमाश्रीयते इत्यप्रतिपत्तिः स्यात्, व्याख्यानाश्रयणे तु 'व्याख्यानाद् वरं वचनम्' इति न्यायेन साक्षाद् द्वितीयादिग्रहणमेव शोभनम् ।

ननु च "एकार्थं०" [ ३. १. २२. ] इति सामान्यसूत्रेण 'आसन्नदशाः' इत्यादौ बहुव्रीहिः सिद्धः, सिद्धे किमर्थमिदं वचन- 65 मारभ्यत इत्यत आह–**एकार्थमि**त्यादि–"प्रमाणी-संख्याड्डः" [ ७. ३. १२८. ] इत्यत्र प्रतिपदविहितः [ संख्याशब्दमुच्चार्य विहितः ] संख्यान्तो बहुव्रीहिराश्रीयते, अन्यथातिप्रसङ्गात्, तत्र यदीदं वचनं नारभ्येत तदा 'आसन्नदशाः' इत्यादिबहुव्रीहिः प्रतिपदविहितो न स्यात्, ततश्च डः समासान्तो न स्यात्, 70 'द्विदशाः' इत्यादावेव स्यात्, सति त्वस्मिन् वचने स प्रतिपदविहितो भवति, प्रतिपदविधानाच्च "प्रमाणी-संख्याड्डः" [ ७. ३. १२८. ] इत्यत्र तस्य संप्रत्ययो भवति, अतस्तदर्थमिदम् "आसन्नादि०" सूत्रमारभ्यते । न केवलमस्य सूत्रस्यैवैवं प्रयोजनकत्वमपि तूत्तरसूत्रस्यापीत्याह–**एवमुत्तरत्रापी**ति–अव्य- 75 यस्यापि सामान्यसूत्रेण संख्यावाचिना सह समासः स्यादेव, अथापि विशिष्य समासविधानं समासान्तडप्रत्ययार्थमेवेति भावः ॥ ३. १. २०. ॥

## अव्ययम् । ३ । १ । २१ ॥

**त० प्र०**—अव्ययं नाम संख्यावाचिना नाम्नैकार्थ्ये समस्यते, द्वितीयाद्यन्यार्थे संख्येयेऽभिधेये, स च समासो बहुव्रीहिसंज्ञो भवति । उप-समीपे दश येषां ते-उपदशाः, नवैकादश वा; एवम्-उपविंशाः, उपत्रिंशाः; उपचत्वारिंशाः । योगविभाग उत्तरार्थः ॥ २१ ॥

**श० म० अनुसन्धानम्**-अव्ययमिति । 'नाम नाम्ना ऐकार्थ्ये समासः, संख्यया संख्येये बहुव्रीहिः, द्वितीयाद्यन्यार्थे' इत्येतानि पदानि पूर्वसूत्रेभ्योऽनुवर्तन्ते, तैः सह प्रकृतसूत्रार्थमाह- **अव्ययं नामे**त्यादिना । अथ विगृह्योदाहरति-**उपे**त्यादिना, **उप-समीपे दश येषां ते** इति विग्रहवाक्यम्, **उपदशाः** इति समासः, **नवैकादश वा** इति समासार्थः, उपशब्दस्येह सामीप्यवत्त्वमर्थः, 'तथा च येषां दश सामीप्यवन्तस्ते' इत्यर्थ आयाति, यद्यपि 'उप'शब्दस्य सामीप्यं सामीप्यवांश्चार्थः, तथापीह सामीप्याश्रय एवार्थो ग्राह्यः, सामीप्यमात्रे तु "विभक्ति-समीप०" [ ३. १. ३९. ] इति परत्वादव्ययीभाव एव स्यात् । यद्यपि महाभाष्ये 'दशानां समीपे' इति विग्रहो दर्शितः, 'दशनिरूपितसामीप्यवन्तो ये' इति च तदर्थः, केवलं बोधाकारे एव भेदः, न तु फले, यन्निरूपितसामीप्यवन्तो दश तेऽपि दशनिरूपितसामीप्यवन्तः स्युरेव सामीप्यस्योभयावधिकत्वात्, तथापि स्वमते समानाधिकरणो बहुव्रीहिः, भाष्यमते तु व्यधिकरणः, अत एव तन्मते विशिष्य सूत्रारम्भोऽपि स्वीक्रियते, यद्यपि कवभावार्थमपि सूत्रस्यावश्यकत्वं तत्रोक्तं, तथापि व्यधिकरणबहुव्रीहिरपि विशिष्य विधानफलमिति तत्रत्यकैयटग्रन्थालोचनेन लभ्यते । अतिदिशति **एवमि**ति-उपदशवद् अन्यान्यप्युदाहरणानि ज्ञेयानि, तानि कानीत्याह-**उपत्रिंशाः, उपचत्वारिंशाः**, इति-समासाविमौ, विग्रहस्तु-'उप-समीपे त्रिंशद् येषाम्, उप-समीपे चत्वारिंशद् येषाम्' इति, प्राग्वत् समासान्तो डोऽन्त्यस्वरादिलोपश्च ।

ननु च तन्त्रान्तरवदव्ययमपि पूर्वसूत्रे एव पठ्यतां, किं पृथग्योगेनेति चेत् ? अत्राह-**योगविभाग उत्तरार्थ** इति-उत्तरत्र केवलमव्ययस्यैवानुवृत्तिः स्यान्नासन्नादीनामित्येतदर्थं पृथग् योगः, एकयोगे तु * एकयोगप्रविष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः * इति न्यायेनाव्ययमात्रस्यानुवृत्तिर्न सिध्येदिति भावः ॥ ३. १. २१. ॥

## एकार्थं चानेकं च । ३ । १ । २२ ॥

**त० प्र०**—एकः-समानः, अर्थः-अर्थोऽधिकरणं यस्य तदेकार्थं-समानाधिकरणम्, एकमनेकं चैकार्थं नामान्ययं च नाम्ना द्वितीयाद्यन्तस्यान्यस्य पदस्यार्थे समस्यते, स च समासो बहुव्रीहिसंज्ञो भवति । आरूढो वानरो यं स-आरूढवानरो वृक्षः, ऊढो रथो येन स-ऊढरथोऽनड्वान्, उपहृतो बलिरस्यै सा-उपहृतबलिर्यक्षी, भीताः शत्रवो यस्मात् स-भीतशत्रुर्नृपः, चित्रा गावो यस्य स-चित्रगुश्चैत्रः, के सब्रह्मचारिणोऽस्य-किंसब्रह्मचारी, अर्धं तृतीयमेषाम्-अर्धतृतीयाः, वीराः पुरुषाः सन्त्यस्मिन्-वीरपुरुषको ग्रामः; अनेकं च-आरूढा बहवो वानरा यं स-आरूढबहुवानरो वृक्षः, ऊढा बहवो रथा अनेन-ऊढबहुरथोऽनड्वान्, शोभना; सूक्ष्मजटाः केशा अस्य-सुसूक्ष्मजटकेशः, शोभनं नतमजिनं वासोऽस्य-सुनताजिनवासाः, संजातानि अन्तेषु शितीनि रन्ध्राण्यस्मिन्-समन्तशितिरन्ध्रः, पञ्च गावो धनमस्य-पञ्चगवधनः, पञ्च नावः प्रिया अस्य-पञ्चनावप्रियः, मत्ता बहवो मातङ्गा यत्र तत्-मत्तबहुमातङ्गं वनम्, पञ्च पूला धनमस्य-पञ्चपूलधनः, पञ्च कुमार्यः प्रिया अस्य-पञ्चकुमारीप्रियः; 'नाम नाम्ना' इति विवक्षितसंख्यत्वादनेकस्य समासो न स्यादित्यनेकग्रहणम् । अव्ययं खल्वपि-उच्चैर्मुखमस्य-उच्चैर्मुखः, एवं-नीचैर्मुखः; अन्तरङ्गान्यस्य-अन्तरङ्गः, एवं-बहिरङ्गः; कर्तुं कामोऽस्य-कर्तुकामः, हर्तुं मनोऽस्य-हर्तुमनाः; व्यधिकरणत्वादव्ययस्य न प्राप्नोतीत्यव्ययानुकर्षणार्थश्चकारः, सामानाधिकरण्ये तु "एकार्थम्०" [ ३. १. २२. ] इत्यनेनापि सिध्यति; अस्ति क्षीरमस्या-अस्तिक्षीरा गौः, अस्तिधना राजधानीत्यादि; क्रियावचनत्वे त्वस्त्यादीनां "नाम नाम्नैका०" [ ३. १. १८. ] इत्यादिनैव बहुलवचनात् सिद्धम् । एकार्थग्रहणं किम् ? पञ्चभिर्भुक्तमस्य । द्वितीयाद्यन्यार्थ इत्येव-वृष्टे मेघे गतः, यथा मे माता तथा मे पिता, सुस्नातं भोः ! । इह कस्मान्न भवति-वृष्टे मेघे गतं पश्य, बहिरङ्गाऽत्र द्वितीयान्ततेति । शब्दे कार्यासंभवादर्थे लब्धे यदर्थग्रहणं तदन्यपदार्थस्य या लिङ्ग-संख्या-विभक्तयस्ता यथा स्युरित्येवमर्थम् । बहुलाधिकारात् 'राजन्वती भूरनेन, प्राग् ग्रामोऽस्मात्, पञ्च भुक्तवन्तोऽस्य' इत्यादिषु न भवति ॥ २२ ॥

**श० म० अनुसन्धानम्**—**एकार्थं चा०** इति । **एकार्थमि**त्यत्र एकस्मै इदमिति तत्पुरुषोऽपि सम्भवति, एकोऽर्थो यस्य तदेकार्थमिति बहुव्रीहिरपि सम्भवति, तत्रायं बहुव्रीहिर्ग्राह्यो न पुनस्तत्पुरुषः । एकशब्दो हि नानार्थकः, अस्ति संख्यायां, यथा-एको द्वौ त्रय इत्यादि, अस्त्यसहायार्थे, यथा-एकका आगता इति, अस्त्यन्यार्थे यथा-एके आचार्याः प्राहुरिति, अस्ति प्रधानार्थे, यथा-वदतामेकः, अस्त्यल्पार्थे यथा-नैके विनष्टाः, रथाश्च नैके व्यशीर्यन्तेति, अस्ति समानार्थे, यथा-वयमेकधर्माण इति, यदाह—

"एकोऽन्यार्थे प्रधाने च, प्रथमे केवले तथा ।
साधारणे समानेऽल्पे, संख्यायां च प्रयुज्यते ॥" इति,

तत्रायमेकशब्दः समानार्थो ग्राह्य इत्याह-**एकः समानः** इति-यदि संख्यार्थो गृह्येत तदा 'द्विपुत्रः, बहुपुत्रः' इत्यादौ न स्यात्, यद्यसहायार्थो गृह्येत तदा 'सपुत्र आयातः' इत्यादौ न स्यात्, एवमन्यार्थेष्वप्येष दोषः, अतः समानार्थ इहाश्रीयते, समानः साधारण इत्यर्थः । अर्थशब्दोऽपि नानार्थकः, 'अर्थः प्रयोजने धनेऽभिधेये च' इति, तत्राभिधेयमिह गृह्यते, तच्च यदि नीलमुत्पलमित्यनेकभेदे वस्तुनि यो भेदः, ये नीलादयः शब्दा इतरेतरविषयभेदपरित्यागेन पर्यायशब्दा भवन्ति, स इहार्थो विज्ञायेत तदा न समानो भवति, यद्यपि 'इन्द्रः शक्रः' इत्यादीनां समानो भवति, तथापि न तेषां युगपत् प्रयोगोऽस्ति, इन्द्रस्तिष्ठति शक्रस्तिष्ठतीति वान्यतर एव हि प्रयुज्यते, एवमारूढवानरादावपि न स्यात्, आरूढशब्दस्य क्रियाप्रवृत्तिनिमित्तकत्वाद् वानरशब्दस्य जातिप्रवृत्तिनिमित्तकत्वाच्च, अतोऽर्थशब्दं व्याचष्टे-**अधिकरणमि**ति-अधिकरणं च शब्दस्यार्थ एव, तथा चार्थशब्देन प्रवृत्तिनिमित्ताश्रयत्वेन विवक्षितं द्रव्यं ग्राह्यम्, एवं चारूढवानरादौ शब्दद्वयस्य प्रवृत्तिनिमित्ताश्रय एक एव, भूतकालिकारोहणक्रियाश्रयत्वं वानरत्वं च क्रमश उभयोः प्रवृत्तिनिमित्ते, तयोराश्रयो वानर एक एवेति भवति तयोरेकार्थत्वम् । बहुव्रीहिरन्यपदार्थे भवति, सोऽर्थो वाक्ये वर्तिपदार्थस्य विशेषणतयोच्यते, वृत्तौ तु विशेष्यतया, **यस्य तदेकार्थमि**ति, तं पर्यायान्तरेणाह-**समानाधिकरणमि**ति-तदुक्तं सामानाधिकरण्यं चैवमाहुः-'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति । नव्यास्त्वेवमाहुः-सम्बन्धान्तरानवच्छिन्नविशेष्यविशेषणभावापन्नत्वं सामानाधिकरण्यम्, अभेदो न संसर्गः, अत एव प्राचीनैः शाब्दिकैः 'राहोः शिरः' इत्यादौ षष्ठ्युपपत्तयेऽवयवावयविभावकल्पनम्, अन्यथाऽभेदे सम्बन्धे एव तदुपपत्तौ कल्पनाया अनावश्यकत्वात् । '**चानेकम्**' इत्यत्र चकारः 'एकम्' इत्यस्य समुच्चयार्थः, **एकमि**ति च द्विपदबहुव्रीह्यर्थम्, 'एकं समानाधिकरणम्' इत्युक्ते नियमेन द्वितीयप्रतीतेः, सपत्नीशब्दे श्रुते भार्यान्तरवत्, **अनेकमि**ति च त्रिपदादिबहुव्रीह्यर्थम्, **एकार्थमि**त्यस्य 'एकोऽर्थो यस्य' इति बहुव्रीहिणा 'एकीभूतार्थत्वम्' इत्यर्थः, एकीभूतार्थत्वं च विशेषणविशेष्यभावापन्नाभ्यामर्थाभ्यां संसर्गविधया संगतार्थत्वम्, इमानि पदानि '**नाम**' इति प्रथमान्तस्य परिचायकानि, 'एतादृशं नाम चकारादव्ययं च नाम्ना समस्यते' एतावान् सूत्रस्य विधेयांशः, 'समस्तं च तद् बहुव्रीहिसंज्ञं भवति' इत्यपि विधेयमेव, सुबोधार्थमेव वाक्ये सखण्डत्वकल्पनम् ।

अत्र सर्वत्र 'नाम नाम्ना समस्यते' इत्येतावन्मात्रोक्तावपि 'न केवला प्रकृतिः प्रयोक्तव्या' इति नियमात् "ऐकार्थ्ये" [३. २. ८.] इति स्यादेर्लुब्विधानसामर्थ्याच्च स्याद्यन्तस्य स्याद्यन्तेन समास इति फलति, तत्रापि 'द्वितीयाद्यन्यपदार्थे' इत्यन्यपदेन नित्यसाकाङ्क्षेण 'कस्मादन्यः' इत्याकाङ्क्षानिवृत्तयेऽन्तरङ्गतयोपस्थिततया 'समस्यमानस्याद्यन्तेभ्योऽन्यस्य द्वितीयाद्यन्तस्य पदस्यार्थे' इत्येवं विज्ञाते समस्यमानानि नामानि प्रथमान्तानीति फलति, अतः प्रथमान्तानां द्वितीयाद्यन्तार्थान्तर्भावेण विशेषणविशेष्यभावापत्त्या सम्बद्धैकार्थसमर्थानां बहुव्रीहिरिति सिध्यति । अत एव प्रथमान्तानां बहुव्रीहिरिति प्राचीनानां प्रवादः, 'द्वितीयाद्यन्यार्थे' इत्युक्ततया च 'अप्रथमार्थे बहुव्रीहिर्वाच्यः' इत्यादि प्राचां वचनं गतार्थं भवति ।

पूर्वसूत्रादनुवर्तमानं 'द्वितीयाद्यन्यार्थे' इति च बहुव्रीहितत्पुरुषयोर्विषयविभागार्थम्, तथाहि-स्वपदार्थे सावकाशस्तत्पुरुषोऽन्यार्थे प्रवर्तमानं बहुव्रीहिं परत्वान्न बाधते । द्वितीयान्तत्वेन पदं लभ्यते, तेन च वाक्यार्थे वर्तमानानां समासो न भवतीतीहैवाग्रे वक्ष्यते ।

अथोदाहरणावसर इति विगृह्य दर्शयति-**आरूढो वानरो यमि**त्यादिना, '**आरूढो वानरो यम्**' इति लौकिकविग्रहवाक्यम्, अनेनोक्तार्थं द्वितीयाद्यन्यपदार्थं च दर्शयति, तथाहि-'आरूढो वानरः' इत्यनेन समानाधिकरणम्, 'यम्'इत्यनेन द्वितीयाद्यन्यपदं तदर्थं च, यत् समस्यते तत् समस्तमुदाहरति-**आरूढवानरो वृक्ष** इति-अनेन तमन्यपदार्थं दर्शयति । आरूढो वानरो यमिति लौकिकविग्रहप्रदर्शनं न समासार्थं वाक्यं, समासस्यालौकिकविग्रहवाक्ये एव प्रवर्तनात् । 'आरूढवानरो वृक्षः' इत्यादेः 'वानरकर्तृकारोहणकर्म वृक्षः' इत्यर्थे समाश्रीयमाणे' वृत्ति-विग्रहयोः समानार्थकत्वमिति नियम [ व्युत्पत्ति ] भङ्गः स्यात्, व्युत्पत्तेश्च कार्यकारणभावमूलकत्वेन कार्यकारणभावस्य चान्वय-व्यतिरेकानुविधायित्वेनान्वय-व्यतिरेकयोर्व्यभिचारित्वे कार्यकारणभावप्रातिकूल्यस्य सकलतान्त्रिकैरुपहसनीयत्वात्, तथाहि-वृत्त्यारम्भकाणि पदानि यानि यादृशार्थानि तानि तादृशार्थान्येव विग्रहे स्थितानीति वृत्ति-विग्रहवाक्ययोः समानार्थकत्वं-व्युत्पत्त्यर्थः, विग्रहश्चात्र समासारम्भकपदानां समासावस्थायां यादृशानि रूपाणि तादृशरूपाणामेव तेषां प्रदर्शकं वाक्यम्, विग्रहवाक्यानुसारेणैव वृत्त्यर्थकल्पनात्, तथा च 'राजपुरुषः' इत्यादिसमासस्य 'राज्ञः पुरुषः' इति विग्रहवाक्यं समर्थसूत्रे दृश्यते । 'एवं चारूढस्य वानरस्यायं वृक्ष' इत्येव लौकिको विग्रहो न्याय्य इति केचित्, तन्न-प्रथमान्तानामेव बहुव्रीहिरित्युक्तत्वात् । 'आरूढो वानरो यम्' इत्यस्य 'आरूढवानर' इत्यस्य च यत्कर्मारोहणकर्त्रभिन्नो वानर इत्येकरूप एवार्थः, यमित्यस्य पदार्थान्तर्भावितया विशिष्टसमुदायशक्त्या

कर्मस्वरूपस्याधिकस्यार्थस्य भानेऽपि शक्त्यभावात् 'आरोहणकर्त्रभिन्नवानरकर्मीभूतो वृक्ष इत्यपि बोधः सम्भवत्येव। एवम्भूतवानरकर्मत्वं वृक्षे बाधितमिति चेत्? सत्यम्, तथापि 'सविशेषणे हि विधिनिषेधौ सति विशेष्यबाधे विशेषणमुपसंक्रा-
5 मतः' इति न्यायेन वानरे तद्बाधे तद्विशेषणभूतायामारोहणक्रियायां तत्सम्भवोऽस्त्येव, यथा शिखानाशतात्पर्येण 'शिखी विनष्टः' इति प्रयोगः, यथा वा स्वर्गभोगनाशतात्पर्येण 'स्वर्गी ध्वस्तः' इति प्रयोगः, तथेहापि सम्भवात्।

द्वितीयान्तान्यपदार्थे समासमुदाहृत्याथ तृतीयान्तान्यपदार्थे
10 विगृह्योदाहरति-**ऊढो रथो येन स** इति विग्रहवाक्यम्, **ऊढरथ** इति समासः, **अनड्वान्** इति समासस्य विशेष्यम्, अत्र समास-विग्रहयोः 'वहनकर्मीभूतरथनिरूपितकर्तृत्वशक्तिमान् अनड्वान्' इति बोधः। अथ चतुर्थ्यन्तान्यपदार्थे विगृह्योदाहरति-**उपहृतो बलिरस्यै सा** इति विग्रहः, **उपहृतबलिः** इति
15 समासः, **यक्षी** इति समासविशेष्यम्, इह समास-विग्रहयोः 'उपहारनिरूपितकर्मत्वशक्तिमद्बलिनिरूपितसम्प्रदानत्वात्मककारकशक्तिमती यक्षी' इति समान एव बोधः। अथ पञ्चम्यन्तान्यपदार्थे विगृह्योदाहरति-**भीताः शत्रवो यस्मात् स** इति विग्रहः, **भीतशत्रुः** इति समासः, **नृपः** इति समासविशेष्यम्,
20 इह समास-विग्रहयोः 'भयकर्त्रभिन्नशत्रुनिरूपितापादनत्वशक्तिमान् नृपः' इति बोधः। अथ षष्ठ्यन्तान्यपदार्थे विगृह्योदाहरति-**चित्रा गावो यस्य स** इति विग्रहः, **चित्रगुः** इति समासः, **चैत्रः** इति समासविशेष्यम्, "गोश्चान्ते०" [ २. ४. ९६. ] इति गोशब्दस्य ह्रस्वत्वम्। अत्रत्यविशेषविचारश्च
25 पूर्वं समासशक्तिनिरूपणप्रस्तावे प्रपञ्चितः। अत्र लौकिकविग्रहवाक्ये चित्राणां गवां प्राधान्येऽपि वृत्तौ वृत्त्यर्थेऽलौकिकविग्रहवाक्ये च विशेष्यविशेषणभावव्यत्यासः, स च शब्दशक्तिस्वाभाव्यादेव समाधेयः।

ननु द्वितीयाद्यन्तस्यान्यस्य पदस्यार्थे समासो विधीयते,
30 तादृशपदार्थश्च चैत्रादिरेव, स च समासेनैव गतार्थ इति तस्यानुप्रयोगो न प्राप्नोति, यथा-चार्थे द्वन्द्वसमासविधाने चशब्दस्यानुप्रयोगो न भवति, एवमिहापि चैत्रदेवदत्तादिपदानां 'चित्रगुश्चैत्रः' इत्यादिरूपेणानुप्रयोगो न स्यादिति चेत्? उच्यते-चित्रगुशब्देन चित्रगवीसम्बन्धिमात्रमुच्यते सामान्येन, न तु तत्स-
35 म्बन्धानुयोगी क इति विशिष्याभिधीयते, ततश्च विशेषाकाङ्क्षायां सत्यां चैत्रादिपदप्रयोगं विना तदनिवृत्तेस्तत्प्रयोग आवश्यकः। यदि च विशिष्यैव विग्रहवाक्यं क्रियते-चित्रा गावोऽस्य देवदत्तस्येत्यादि, तदापि वृत्तौ चैत्रशब्दानुप्रवेशाभावात् तदाकाङ्क्षा स्यात्स्यत्येवेति तदनुप्रयोग आवश्यक एव, समास-विग्रहवाक्य-
40 योरेकत्र प्रयोगाभावाद् वाक्यस्य विशेषपरत्वेऽपि समासस्य सामान्यपरत्वानपायाद् विशेषवाचकपदानुप्रयोगस्यापेक्षणीयत्वात्। नन्वेवं सामान्यार्थे समास इति स्वीकारे सामान्यार्थानां सर्वनाम्नामनुप्रयोगो न स्यादिति चेत्? उच्यते-यथा विशेषो विशेषान्तरस्य निवर्तकस्तथा सामान्यमपि विशेषान्तराणां
45 निवर्तकं सद् विशेषरूपमेव, ततश्च 'चित्रगु' इति सामान्यतः कथने 'सर्वं वा किञ्चिद् वा' इति संदेहो भवतीति तद्विषये 'किं चित्रगु' इति पृच्छायाः 'चित्रगु तत्' इत्युत्तरस्य चोचितत्वात्। अथवा नान्यस्य कृत्स्नस्य पदस्यार्थोऽभिधीयते बहुव्रीहौ किन्तु विभक्त्यर्थमात्रमित्यपि पक्षान्तरमस्ति, तथा च यदा विभक्त्यर्थः
50 सम्बन्धादिरभिधीयते समासेन तदा तद्वाचिन्या विभक्त्या अनुप्रयोगस्यानुपपन्नत्वेऽपि द्रव्यस्यानुक्ततया तद्वाची शब्दश्चावश्यमनुप्रयोक्तव्यः, 'अन्यपदार्थे' इति विहितः समासः, अस्येत्यादिपदेनाभिहिते प्रकृत्यर्थोपसर्जने प्रत्ययार्थे सम्बन्धादौ विधीयत इति विभक्त्यर्थस्यैव प्राधान्यादन्यपदार्थग्रहणेन ग्रहणादिति।

55 'किंसब्रह्मचारी भवान्? कठोऽहम्' इति प्रश्नोत्तरवाक्ये योऽयं 'किंसब्रह्मचारी' इति समासस्तस्य को विग्रहः?, के सब्रह्मचारिणोऽस्येति विग्रहो यदि क्रियते तर्हि वर्तिपदार्थो बहुत्वसंख्याविशिष्टाः पृष्टास्ततश्चैकत्वसंख्यायुक्तेनान्यपदार्थविशेषेण 'कठः' इति पदेन तस्य प्रतिवचनं न युक्तं स्यात्, दृश्यते
60 च तथा प्रतिवचनं, तन्नोपपद्येत, तदर्थं यदि 'केषां सब्रह्मचारी' इति विग्रहः क्रियेत, तर्हि पूर्वरूपेण प्रतिवचनमपि न युक्तम्, कठानामिति प्रतिवचनस्य युक्तत्वात्, किञ्चैवं सति तत्पुरुषसमासः स्यात्, तथा सति वैदिकानां स्वरेऽपि भेदो भविष्यति, बहुव्रीहौ पूर्वपदस्य प्रकृतिस्वरेणोदात्तत्वमिष्यते, तत्पुरुषे च
65 सत्यन्तोदात्तत्वं स्यात् समासस्वरेण। प्रश्नोत्तरसंगतये च 'कः सब्रह्मचारी' इति विगृह्य "नाम नाम्ना०" [ ३. १. १८. ] इति सामान्यसूत्रेण समासो यदि क्रियेत तदापि स्वरदोषः स्थास्यत्येव तत्परिहाराय च 'कः सब्रह्मचारी यस्य तव स त्वं किंसब्रह्मचारीति विग्रहे चोभयं सम्पद्यते, किन्तु किंसब्रह्मचारीति
70 प्रश्नस्य 'अहं कठः' इति यदुत्तरं दीयते तस्य विग्रहस्थेन युष्मच्छब्देन सामानाधिकरण्यं नोपपद्यते इति दोषस्तिष्ठत्येव, अतः 'के सब्रह्मचारिणोऽस्य' इति पूर्वोक्त एव विग्रहः समुचितः। नन्वेवं 'अहं कठः' इत्येकवचनेनोक्तमुत्तरमनुपपन्नमेवेति चेत्? शृणु-'अग्नौ करवाणि' इति केनचिदनुमतिं याचितः कश्चित्
75 'कुरु' इति प्रतिवचनेन कर्तृविषयामनुज्ञां ददाति, तयैव कर्मविषयोऽप्यनुज्ञातो भवति क्रियायाः सकर्मकत्वात्, कदाचिच्च 'अग्नौ करिष्ये' इति पृष्टः 'क्रियताम्' इत्यनुज्ञामाह, तत्र च कर्मणि प्रत्ययेन कर्मानुज्ञाने कर्तुरप्यनुज्ञा लभ्यते, तथेहापि 'के सब्रह्मचारिणोऽस्य' इति वाक्यस्य प्रयोगे 'कठाः' इति प्रतिवचने
80 सति सम्बन्धादेवैतद् विज्ञायते-अयमपि कठसब्रह्मचारित्वात्

कठ एवेति, समानो ब्रह्मचारी, समाने ब्रह्मणि-आगमे गुरुकुले वा व्रतं चरतीति वा "सब्रह्मचारी" [ ३. २. १५०. ] इति 'सब्रह्मचारिन्' इति निपात्यते, निपातनादेव व्रतशब्दस्यापि लोपः, तथा चोभयोः परस्परं सब्रह्मचारित्वे कठत्वमेव [ कठशाखीयवेदाध्येतृत्वमेव ] युज्यते, समासे च कृते वर्तिपदार्थभूतास्ते उपसर्जनीभूततया समासेन प्राधान्येन बोधयितुं न शक्या इति समासेन प्रश्ने 'कठः' इत्येवोत्तरं सम्यक्, प्रश्नवाक्ये यत् प्रधानं तद्विषयं यथाकथञ्चिज्जिज्ञासानिवर्तकमुत्तरम्, तथा च कठसब्रह्मचारित्वादयं कठ इति तदीयं तात्पर्यं भवति, तच्च न विग्रहवाक्यानुकूलं यद्यपि तथापि समासशक्तिस्वाभाव्यादेवं स्वीक्रियते ।

अपरे त्वेवमाहुः-इह किंसब्रह्मचारी भवानिति कः समासः ? यदि कस्य सब्रह्मचारी-किंसब्रह्मचारीति, तत्र कठोऽहमिति प्रतिवचनं नोपपद्यते, नह्यन्यत् पृष्टेनान्यदाख्येयम्, अथ कः सब्रह्मचार्यस्येति किंसब्रह्मचारी, तत्रापि न्यम्भूते कठ इत्यस्यायोगः, उच्यते-कठ इति न किमर्थवृत्तिः, किं तर्हि ? आत्मोच्यते-कठोऽहमिति, तत्रार्थादिदं विज्ञायते-कठसब्रह्मचार्यहमिति, तत्रोभयथाप्यदोषः ।

एतत् सर्वं मनसिकृत्य षष्ठ्यन्तान्यपदार्थे उदाहरणस्योक्तत्वेऽपि सविग्रहमुदाहराणान्तरमाह-**के सब्रह्मचारिणोऽस्य** विग्रहवाक्यमिदम्, **किंसब्रह्मचारी** समासोऽयम् ।

एवं विशेषवक्तव्यत्वात् षष्ठ्यन्तान्यपदार्थे तृतीयं सविग्रहमुदाहरणमाह-**अर्धं तृतीयमेषामि**ति विग्रहः, **अर्धतृतीयाः** इति समासः । अत्रायं विचारः-'अर्धं तृतीयमेषाम्' इति विग्रहे समासे सति 'अर्धतृतीयाः' इत्यत्र समासार्थोऽन्यपदार्थो नोपपद्यते, वर्तिपदार्थातिरिक्तेनान्यपदार्थेन भाव्यम्, इह च बहुत्वान्यथानुपपत्त्या क्रियायां वर्तिपदार्थस्याप्यन्वयादन्यपदेनोपस्थाप्यमानोऽर्थो नोपपद्यते, तत्परिहाराय यदि 'अर्धं तृतीयमनयोः' इति विग्रहः क्रियते तदान्यपदार्थोपपत्तावपि विग्रहस्थः षष्ठ्यर्थो नोपपद्यते तयोर्द्वयोरर्धेन सम्बन्धाभावात्, तृतीयस्य हि तदर्धमिति द्वाभ्यां तस्यार्धस्यावयवावयविभावलक्षणः सम्बन्धो नोपपद्यते, स्वस्वामिभावादेश्च सम्बन्धान्तरस्येह समासेनाप्रतीयमानत्वात् तादृशेऽर्थे समासो न भवति, ततश्च पूर्वोक्तविग्रहस्यैव स्वीकारेऽन्यपदार्थानुपपत्तिः पुनरापतति, तत्परिहाराय खण्डशोऽवयवार्थेन वाक्यं समुदायश्चान्यपदार्थः, अर्धस्य द्वयोश्च यः समुदायः सोऽन्यपदार्थः, समुदायावयवानां च कदाचिद् भेदविवक्षा कदाचिदभेदविवक्षा, यथा-ब्राह्मणानां संघः, संघीभूता ब्राह्मणा इति च, समुदायश्चान्यस्यैव पदार्थो न तु समस्यमानपदयोः, स चावयवेभ्यो भिन्नोऽन्यपदार्थः, अवयवगतबाहुल्यस्य च समुदाये समारोपाद् बहुवचनम् । एवं सति सिध्यति समासार्थः, किन्तु 'असिद्वितीयः' इत्यादिप्रयोगेऽसिना सहान्यपदार्थस्य द्वित्वेन द्विवचनमवयवभेदनिबन्धनं प्राप्नोति, ततश्च 'अर्धं तृतीयमनयोः' इत्येव विग्रहः साधुः, तत्र षष्ठ्यर्थानुपपत्तिदोषश्च 'देवदत्तस्य भ्राता' इत्यादिवाक्यवत् कल्पनया परिहर्तुं शक्यः, तद्यथा-देवदत्तस्य तद्भ्रात्रा सह समानोदरनिवासमात्रं सम्बन्धः, स च न कश्चिद् वास्तविकः सम्बन्धः, एकत्र निवासे सहोषितानां सांयात्रिकाणां परस्परसम्बन्ध इव काल्पनिक एव, तथैवार्धेन सह द्वयोः परस्परमेकप्रदेशावस्थानादिरेव सम्बन्ध इति स्वीकरणीयम्, किन्त्वस्मिन् विग्रहे द्वयोरेव समासार्थत्वाद् 'अर्धतृतीया आनीयन्ताम्' इत्युक्तेऽर्धस्यानयनं न सम्भवति, किञ्चैवं तत्र द्विवचनेन भाव्यं न तु बहुवचनेनेति । तथा च 'अर्धं तृतीयमेषाम्' इत्येव विग्रह आस्थेयः, 'असिद्वितीयः' इत्यादौ च सहायवाची द्वितीयशब्द इति समासार्थस्यैकत्वेनैकवचनोपपत्तेः, यद्यप्यत्रापि पक्षे समुदायस्यान्यपदार्थत्वेन तस्य चैकत्वेनैकवचनं प्राप्नोति, तद्वारणाय यदि 'अर्धं तृतीयमनयोः' इति विग्रहः समाश्रीयते तदाऽर्धस्यानयनं न प्राप्नोतीति दोषः प्रतिभाति, तथापि तद्गुणसंविज्ञानबहुव्रीह्याश्रयणेन तद्दोषो वारणीयः । वस्तुतस्तु संयोग-समवायसम्बन्धयोरन्यतरेण सम्बन्धेन सम्बद्धस्यैव तद्गुणसंविज्ञानेन ग्रहणं भवति, इह च तयोरभावात् तद्गुणसंविज्ञानपक्षो नाश्रयितुं युज्यते इति प्रकृतपक्षस्य 'अर्धतृतीया आनीयन्ताम्' इति कथितेऽर्धस्यानयनाप्राप्त्या दूषितत्वेन 'अर्धं तृतीयमेषाम्' इत्येव विग्रहः साधुः, समुदायस्यान्यपदार्थतया तस्य चैकत्वेनैकवचनं तु नाशङ्क्यं, बहुत्वविशिष्टस्यैव समुदायस्य प्रत्याय्यत्वेन बहुवचनस्यैव युक्तत्वात् ।

अत्रेदमपरं विचार्यते-'अर्धतृतीया द्रोणाः' इति प्रयोगो नोपपद्यते, अर्धस्य द्वयोश्च द्रोणयोर्यः समुदायः स समासार्थः, तत्रार्धस्य द्रोणत्वाभावात्, 'द्रोणाः' इति बहुवचनं नोपपद्यते इति, तत्रेयमुपपत्तिः-समुदाये प्रवृत्ताः शब्दा अवयवेष्वपि प्रयुज्यन्ते इति लोके दृश्यते, एवं च यथा पूर्णो द्रोणस्तथा तदर्धमपि द्रोण एव, तत इयमाशङ्का नोदेति-द्रोणे आढकमपि समाविष्टमिति तदपि द्रोणावयव एवेति 'द्वौ द्रोणावर्धाढकम्' इति वक्तव्येऽपि 'अर्धतृतीया द्रोणाः' इति, नैतद् युक्तम्-यं समुदायं योऽवयवो न व्यभिचरति तत्रैव तस्य प्रयोग उचितः, अर्धद्रोण-पादद्रोणादयोऽर्था द्रोणं न व्यभिचरन्ति, आढकं तु व्यभिचरतीति तत्र द्रोणशब्दस्य प्रवृत्तेरनुपपत्तेरिति 'अर्धतृतीया द्रोणाः' इति प्रयोगस्तत्र नोचितः, द्रोणार्धेन समासे च स उचितः ।

अथ सप्तम्यन्तान्यपदार्थे सविग्रहमुदाहरति-**वीराः पुरुषाः सन्त्यस्मिन्** विग्रहवाक्यमिदम्, **वीरपुरुषः** इति

समासः, **ग्रामः** इति समासविशेष्यम् । उक्तोदाहरणेषु आरूढादीनां "विशेषण०" [ ३. १. ५. ] इति प्राग् निपातः ।

नामद्वयस्य बहुव्रीहिमभिधाय बहूनामपि नाम्नां बहुव्रीहिसमासार्थं कृतस्यानेकग्रहणस्य प्रयोजनमन्वाख्यातुमाह-**अनेकं चेति** । तथैव विगृह्योदाहरति-**आरूढा बहवो वानरा यम्** विग्रहवाक्यमिदम्, **आरूढबहुवानरः** इति द्वितीयान्तान्यपदार्थे समासः, **वृक्षः** इति समासविशेष्यम्, आरूढबहुशब्दयोरुभयोरपि विशेषणत्वे न पर्यायेण प्राग् निपातः, किन्तु "क्तः" [ ३. १. १५१. ] इति क्तान्तस्यारूढस्यैव प्राग्निपातः, अत्र यद्यपि 'बहवश्च ते वानराश्च बहुवानराः' इति कर्मधारयं कृत्वा पुनः 'आरूढा बहुवानरा यत्र' इति करणे द्विपदबहुव्रीहिरेव स्यात् तथापि त्रयाणां सहैव यदा विग्रहः क्रियेत तदापि समासः स्यादेवेत्येतदर्थं सूत्रे 'अनेकम्' इति । अथ तृतीयान्तान्यपदार्थे विगृह्योदाहरति-**ऊढा बहवो रथा अनेन** इति विग्रहः, **ऊढबहुरथः** समासोऽयम्, **अनड्वान्** इति समासविशेष्यम् । अथ षष्ठ्यन्तान्यपदार्थे सविग्रहमुदाहरति-**शोभनाः सूक्ष्मजटाः केशा अस्य** इति विग्रहः, **सुसूक्ष्मजटकेशः** इति बहुव्रीहिगर्भो बहुव्रीहिसमासः, सूक्ष्मा जटा येषां केशानामिति द्विपदबहुव्रीहिणा सूक्ष्मजटशब्दं निष्पाद्य ततोऽनेन त्रिपदबहुव्रीहिविधानात् । अथ तत्पुरुषगर्भं तं सविग्रहमुदाहरति-**शोभनं नतमजिनं वासोऽस्य** इति विग्रहः, अजिनं-चर्म, **सुनताजिनवासाः** इति तत्पुरुषगर्भो बहुव्रीहिः, यतः शोभनं नतमिति तत्पुरुषे ततोऽनेन बहुव्रीहिः, एवम्-**संजातानि अन्तेषु शितीनि रन्ध्राण्यस्मिन्** इति विग्रहः, अन्ते शितीनि-'अन्तशितीनि' इति तत्पुरुषसमासार्थदर्शनाय 'अन्ते शितीनि' इत्युक्तं, विग्रहस्तु-'अन्तशितीनि' इत्यनेन ज्ञेयः, शितीनि-श्वेतवर्णानि, रन्ध्राणि-छिद्राणि, **समन्तशितिरन्ध्रः** इति तत्पुरुषगर्भो बहुव्रीहिः "संख्या समाहारे०" [ ३. १. ९९. ] इत्युत्तरपदे समासो विधीयते, उत्तरपदशब्दश्च समासस्य चरमावयवे रूढ इति प्रकृतसूत्रेण त्रिपदबहुव्रीहौ सति सम्भवतीति तदर्थमुदाहरणद्वयं सविग्रहमाह-**पञ्च गावो धनमस्य** इति, **पञ्च नावः प्रिया अस्य** इति च विग्रहः, **पञ्चगवधनः** इति, **पञ्चनावप्रियः** इति चानेन समासः, इहोत्तरपदे परे 'पञ्चन्-गो' इत्येतयोः 'पञ्चन्-नौ' इत्येतयोश्च "संख्या समाहारे०" [ ३. १. ९९. ] इति समासो भवति, स च द्विगुसंज्ञां तत्पुरुषसंज्ञां कर्मधारयसंज्ञां च लभते, तत्र 'पञ्चगवधनः' इत्यत्र तत्पुरुषत्वात् "गोस्तत्पुरुषात्" [ ७. ३. १०५. ] इति 'पञ्चनावप्रियः' इत्यत्र द्विगुत्वाच्च "नावः" [ ७. ३. १०४. ] इति च समासान्तोऽट्, टकार इत्, "ओदौतोऽवाव्" [ १. २. २४. ] इति क्रमेण 'अव्, आव्' इत्या-



देशश्च भवति, गोशब्दस्य पुंस्त्रीलिङ्गत्वे प्रकृते 'गावः-वृषभाः' इति पुंस्त्वविवक्षा, यदा तु 'गावः-धेनवः' इति स्त्रीत्वविवक्षा तदा टित्त्वाद् "अणञे०" [ २. ४. २०. ] इति ङीर्भवत्येव, यथा-'पूर्वगवीप्रिय इत्यादि । नन्वेवं सति नौशब्दस्य स्त्रीत्वात् 'पञ्चनावप्रियः' इत्यत्र कथं न ङीर्भवतीति चेत् ? उच्यते-"प्रकृतेर्लिङ्गवचने बाधन्ते स्वार्थिकाः क्वचित् ।" [ लिङ्गानुशासने परलिङ्गे-२ ] इति लक्ष्यानुरोधादटा स्त्रीत्वबाधेन नपुंसकत्वात्, केचित् त्वत्रापि ङीमिच्छन्ति-'पञ्चनावीप्रियः' इति । ननु यथा समाहृतानि पञ्च फलानीति पञ्चफलीत्यत्राकारान्तसमाहारद्विगोर्यथा ङीर्भवति तथा 'पञ्चगवधनः' इत्यत्र पुंस्त्वदशायामपि समाहारविवक्षया स्त्रीत्वे ङीः कथं न भवतीति चेत् ? उच्यते-अकारान्ते ह्युत्तरपदे समाहारे स्त्रीत्वमिष्टम्, नात्राकारान्तमुत्तरपदम्, अटस्तु समासस्यान्तत्वं नोत्तरपदस्येत्यकारान्तोत्तरपदत्वाभावान्न ङीर्भवति, तथा च तत्र नपुंसकत्वमेव, 'पूर्वगवीप्रियः" इत्यादौ च न समाहार इति तत्र स्त्रीव्यक्तेर्विवक्षयैव स्त्रीत्वमिति भेदस्य सत्त्वेन तदर्थं स्वेच्छाश्रयणमनावश्यकमिति ।

"पात्रादिवर्जितादन्तोत्तरपदः समाहारे ।

द्विगुरन्नावन्तान्तो वाऽन्यस्तु सर्वो नपुंसकः ॥" [लि० स्त्री०५], इति कारिकाव्याख्यावसरे-'समाहारे किम् ? पञ्चाम्रप्रियः, दशवटप्रियः' इति प्रत्युदाहरणप्रदर्शनेन यत्र पृथक् समाहारे समासः क्रियते तत्रैव प्रकृतकारिकाबोधितलिङ्गप्रतीतिरिति, बहुव्रीहौ च नावान्तरसमाहारद्विगुरिति लभ्यते, अवान्तरतत्पुरुषोऽवान्तरद्वन्द्वश्च भवत्येव, अन्यथा समासान्तस्याटोऽभावे 'पञ्चगवधनः, पञ्चनावप्रियः' इत्यादयः प्रयोगा न सिध्येरन्निति । अथ सप्तम्यन्तान्यपदार्थे सविग्रहं त्रिपदबहुव्रीहिमाह-**मत्ता बहवो मातङ्गा यत्र** इति विग्रहः, **मत्तबहुमातङ्गं** इति समासः, **वनम्** इति समासविशेष्यम् ।

अथ विशेषवक्तव्यत्वात् त्रिपदबहुव्रीहेः पुनरुदाहरणद्वयं सविग्रहमाह-**पञ्च पूला धनमस्य** इति विग्रहः, **पञ्चपूलधनः** इति समासः, अत्र 'पञ्चन्-पूल'शब्दयोर्यदि समाहारविवक्षा स्यात् तदाऽकारान्तोत्तरपदसमाहारद्विगुत्वाद् ङीः प्राप्नोति, किन्तु नात्र समाहारविवक्षा भवति, अवान्तरसमासे तदनाश्रयणात्, उत्तरपदे परे द्विगुस्तु भवतु नाम, न तत्र नो बाधा । **पञ्च कुमार्यः प्रिया अस्य** इति विग्रहः, **पञ्चकुमारीप्रियः** इति समासः, अत्र हि कुमारीशब्दस्य "नाप्रियादौ" [ ३. २. ५३. ] इति प्रतिषेधात् "परतः स्त्री०" [ २. ३. ४९. ] इति पुम्वद्भावो न भवति ।

"सूत्रेषु लिङ्गवचनमतन्त्रम्" इति प्रायो दृश्यते, अत एव 'अपत्यम्' इत्येकत्वेनार्थे विवक्षितेऽप्यनेकापत्येष्वपि प्रत्ययादिर्विधीयते, इति 'नाम नाम्ना' इत्यादावेकत्वस्याविवक्षणादेवाने-

केषां नाम्नां समासः सिद्ध एवेति 'अनेक'पदं व्यर्थमिति चेत् ? अत्राह–"**नाम नाम्ना०**" **इति विवक्षितसंख्यत्वादि**ति, अयमाशयः–विवक्षा तु सर्वत्र विद्यमानैव, यत्र च नान्या गतिस्तत्राविवक्षाश्रीयते, अत्र चाचार्येण सूत्रकृता 'अनेकम्' इति पदमुपात्तमिति संख्याविवक्षायाः स्पष्टमेव प्रतीतिरिति नास्या तत्र कर्तव्या यत्रानुगमः क्रियते । "अनेकमन्यपदार्थे" [ पा० सू० २. २. २४. ] इति सूत्रे महाभाष्ये च यद्यप्यनेकग्रहणं ज्ञापकादिना प्रत्याख्यातं दृश्यते, तथापि ज्ञापकादिक्लेशापेक्षयाऽनेकग्रहणस्यैव युक्तत्वं 'व्याख्यानाद् वरं करणम्' इति न्यायात् ।

चकारानुकृष्टाव्ययघटितं समासमुदाहर्तुमवतारयति–**अव्ययं खल्वपी**ति–अव्ययमपि समस्यते इति । तदेव सविग्रहमुदाहरति–**उच्चैर्मुखमस्य** इति विग्रहः, **उच्चैर्मुख** इति समासः, उच्चैः–ऊर्ध्वदेशे, अतिदिशति–**एवमि**ति–उच्चैर्मुखवद् अन्यदपि ज्ञेयमुदाहरणम्, तदेवाह–**नीचैर्मुखः** इति–समासोऽयम्, नीचैः–अधोभागे मुखमस्येति तस्य विग्रहः, **अन्तरङ्गान्यस्य** इति विग्रहः, अन्तः–मध्ये, अङ्गानि–निमित्तानि यस्य स इति तदर्थः, **अन्तरङ्गः** इति समासः, अतिदिशति–**एवमि**ति–अन्तरङ्गवदन्योऽपि समासो ज्ञेयः, स क इत्याह–**बहिरङ्गः** इति–अयं समासः, बहिः–बहिर्भागे, अङ्गानि निमित्तान्यस्येति तदर्थः, 'उच्चैस्, नीचैस्, अन्तर्, बहिस्' इत्येतेषां चादिपाठादव्ययत्वम् । **कर्तुं कामोऽस्य** इति विग्रहः, कर्तुं–करणाय, क्रियाया इत्यर्थः, कामः–अभिलाषः, **कर्तुकामः** इति समासः, **हर्तुं मनोऽस्य** इति विग्रहः, हर्तुं–हरणाय, हरणक्रियाया इत्यर्थः, **हर्तुमनाः** इति समासः, "तुमश्च मनः-कामे" [ ३. २. १४०. ] इत्युभयत्र मलोपः । 'कर्तुं, हर्तुम्' इत्येतयोः "क्त्वातुमम्" [ १. १. ३५. ] इत्यव्ययत्वम् ।

उच्चैरादीनामव्ययानामधिकरणशक्तिप्राधान्येन मुखादिना सह सामानाधिकरण्याभावान्नास्ति प्राप्तिरिति तदर्थमव्ययानुवृत्तेरावश्यकत्वमिति प्रदर्शयति–**व्यधिकरणत्वादव्ययस्ये**त्यादिना । केचित् तु–"उच्चैरादीनामव्ययानामधिकरणशक्तिप्रधानानामपि वृत्तौ, क्वचिच्चान्यत्रापि शक्तिमत्प्रधानत्वमिति कारकप्रकरणे विवेचितम्, तथा च तेषामाधेयप्रधानत्वस्यापि दर्शनात् सामानाधिकरण्यसम्भवेऽपि दार्ढ्यार्थमेवानुवृत्तिसूचकचकारकरणम्" इत्याहुः । एतन्मते–उच्चैः–ऊर्ध्वदेशगतम्, नीचैः–अधोदेशगतम्, अन्तः–मध्यगतानि, बहिः–बहिःस्थितानीत्यादि ज्ञेयम् । एतन्मतेऽरुचिं मनसि निधायाह–**सामानाधिकरण्ये त्वि**त्यादिना–तुनाऽरुचिः सूचिता, अन्यैरप्यव्ययानां बहुव्रीहिविधानार्थं पृथगेव वचनमारभ्यते, स्पष्टं चैतद् "अनेकमन्यार्थे" [ पा० सू० २. २. २४. ] इति सूत्रे महाभाष्ये ।

'अस्ति' इत्यादीनि विभक्तिप्रतिरूपकाण्यव्ययानीति मतमाश्रित्याव्ययत्वेनाप्येतेषां संग्रह इति द्योतयितुमाह–**अस्ति क्षीरमस्या** इति–अयं विग्रहः, अस्ति–विद्यमानं, क्षीरं–दुग्धम्, **अस्तिक्षीरा** इति समासः, **गौः** इति समासविशेष्यम्, एवम्–**अस्तिधना** इति समासः, अस्ति–विद्यमानं धनमस्या इति तस्य विग्रहः, **राजधानी** इति समासविशेष्यम् । यत्र च क्रियावाचकत्वमेवैतेषां तत्र व्यवस्थामाह–**क्रियावचनत्वे त्वि**त्यादिना, तुनाऽरुचिः सूचिता, सति चाव्ययत्वे बहुसम्मते क्रियावचनत्वमाश्रित्य बाहुलकरूपागतिकगतेराश्रयणं न युक्तमिति तदाशयात् ।

अथ पदप्रयोजनप्रश्नावसर इति पृच्छति–**एकार्थग्रहणं किमि**ति । उत्तरयति–**पञ्चभिर्भुक्तमस्ये**ति–अत्र 'पञ्चन्-भुक्त'शब्दयोरेकार्थविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्यविरहात् सत्यामप्यन्यपदार्थवृत्तौ न भवति समासः, एकार्थग्रहणाभावे च स्यादेवेति भावः । **द्वितीयाद्यन्यार्थ इत्ये**वेति–अत्रान्यपदार्थस्य द्वितीयाद्यन्तपदोपस्थाप्यत्वमावश्यकमेवेति भावः । तत्फलमाह–**वृष्टे मेघे गत** इति–वृष्ट-मेघयोः सामानाधिकरण्येऽपि प्रथमार्थे समासो न भवतीति भावः, एवम्–**यथा मे माता तथा मे पिता, सुस्नातं भोः !** इति–केवलम् 'अन्यार्थे' इत्युच्यमानेऽन्यस्य वाक्यस्यार्थे विद्यमानयोः पदयोः पदानां वा समासापत्तिरिति पदोपस्थापकं द्वितीयादिपदमावश्यकम्, तथा हि–कश्चित् केनचित् पृष्टः–'कीदृशः कुलशीलादिना तव पिता ?' इति, स आह–'यथा मे माता' इति, एतानि पदानि 'तथा मे पिता' इत्यस्य वाक्यस्यार्थं गमयन्तीति समासप्रसङ्गः, अथवा 'स्नाहि' इति कश्चित् केनचिदुक्तः, स तं प्रत्याह–'यथा मे माता' इत्यादि, यथा शुद्धकुला मे माता तथा मे पितेत्यभिजनशुद्धिरपि स्नानं, किं बाह्यस्नानेनेत्यर्थः, ततः 'सुस्नातं भोः !' इत्येतद्वाक्यार्थे वर्तमानानां यथाप्रभृतीनां पदानां समासाभावार्थं पदग्रहणं कर्तव्यं, तच्च द्वितीयादिपदेन लभ्यम्, अश्रुतवाक्यार्थे च पदानां वृत्तिर्दृश्यते–यथा नद्यां सिस्नासुः कश्चिदुच्यते–'नद्यां ग्राहाः सन्ति' इति, तस्माच्च मा स्नासीरिति वाक्यार्थः प्रतीयते इति, एवं चान्यवाक्यार्थे वर्तमानानां पदानां समासाभावाय द्वितीयाद्यन्तत्वेन पदानामन्यत्वेन ग्रहणमावश्यकम् ।

अन्यपदार्थस्य द्वितीयाद्यन्तत्वेऽपि क्वचित् समस्यमानेन सामर्थ्याभावान्न समास इति बोधयितुं शङ्कते–**इह कस्मान्न भवती**ति–द्वितीयाद्यन्तान्यपदार्थस्य सत्त्वे यदि समासेन भाव्यमेव तर्हीहापि भवत्वित्याशयः, केत्याह–**वृष्टे मेघे गतं पश्ये**ति–वृष्टे मेघे यो गतस्तं पश्येति प्रतीतेर्द्वितीयान्तस्य न समस्यमानपदाभ्यां सह सामर्थ्यमिति न भवति समास इत्याह–

**बहिरङ्गाऽत्र द्वितीयान्ततेति**, अयमाशयः—दर्शनक्रिया-निरूपितकर्मत्वाद् गतमिति द्वितीया, न तु समस्यमानपदार्थ-सम्बन्धनिरूपितेति सा बहिर्भूतनिमित्तकत्वाद् बहिरङ्गा ।

'द्वितीयाद्यन्यस्मिन्' इति वक्तव्येऽर्थग्रहणस्य वैयर्थ्यमाशङ्क्य तत्सार्थक्यमाह-**शब्दे कार्यासम्भवादि**त्यादिना, अयमाशयः—अन्यपदं हि शब्दः, शब्दे च कार्यासम्भवात् तत्सम्बद्धोऽर्थो ग्रहीष्यत एवेत्यर्थग्रहणं व्यर्थं सद् अन्यपदार्थस्य लिङ्गादिलाभार्थं भवति, अयं भावः—यथा पङ्गादयः शब्दाः सदा विशेष्यप्रधाना विशेष्यगतलिङ्ग-संख्या-विभक्तीरेवाश्रयन्ति, तथा बहुव्रीहिरपि स्वविशेष्यान्यपदार्थगतलिङ्गादीनाश्रयेदित्येवमर्थमर्थग्रहणमिति ।

बाहुलकादनिष्टस्थले प्रवृत्तिं वारयति-**बहुलाधिकारादि**त्यादिना, बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वस्य प्रसिद्धयेह 'राजन्वती भूरनेन' इत्यादौ सत्यपि सामानाधिकरण्येऽन्यपदार्थवृत्तौ च न समास इति भावः ॥ ३. १. २२. ॥

## उष्ट्रमुखादयः । ३ । १ । २३ ॥

**त० प्र०**—उष्ट्रमुखादयो बहुलं बहुव्रीहिसमासा निपात्यन्ते । उष्ट्रमुखमिव मुखमस्य-**उष्ट्रमुखः**, वृषस्कन्ध इव स्कन्धोऽस्य-**वृषस्कन्धः**, हरिणाक्षिणी इवाक्षिणी यस्याः सा-**हरिणाक्षी**, हंसगमनमिव गमनं यस्याः सा-**हंसगमना**, इभकुम्भाविव स्तनौ यस्याः सा-**इभकुम्भस्तनी**, एवं-**नागनासोरुः**, **चन्द्रमुखी**, **कमलवदना**, **बिम्बोष्ठी**, **चक्रनितम्बा**; पितुरिव स्थानमस्य-**पितृस्थानः**, पितरीव स्थानीयमस्मिन्-**पितृस्थानीय** इत्यादि; अत्रोपमानमुपमेयेन सामान्यवाचिना च सह समस्यते, उपमेयसरूपस्य चोपमानपदस्य यथासंभवं लोपः । कण्ठेस्थित इत्यलुप्समासः, ततः कण्ठेस्थितः कालो यस्य स-**कण्ठेकालः**, एवम्-उरसि स्थितानि लोमान्यस्य-**उरसिलोमा**; एवम्-**उदरेमणिः**, **वहेगडुः**; इत्यादिषु सप्तमीपूर्वपदं समानाधिकरणं समस्यते उत्तरपदस्य च लोपः, व्यधिकरणो वा कण्ठेकालादिषु बहुव्रीहिः । केशसंघातश्चूडा अस्य-**केशचूडः**, सुवर्णविकारोऽलंकारोऽस्य-**सुवर्णालंकारः**; इत्यादिषु संघात-विकारापेक्षया षष्ठ्या समस्तं समानाधिकरणं समस्यते उत्तरपदलोपश्च, 'केशसंघातचूडः, सुवर्णविकारालंकारः' इत्यप्यन्यः । तथा प्रपतितानि पर्णान्यस्य-**प्रपर्णः**, **प्रपतितपर्णः**; **प्रपलाशः**, **प्रपतितपलाशः**; **उद्रश्मिः**, **उद्गतरश्मिः**; इत्यादिषु प्रादिपूर्वं धातुजं पदं समस्यते तस्य च विकल्पेन लोपः । तथा अविद्यमानः पुत्रोऽस्य-**अपुत्रः**, **अविद्यमानपुत्रः**; इत्यादिषु नञ्पूर्वमस्त्यर्थं पदं समस्यते तस्य च वा लोपः । बहुवचनमाकृतिगणार्थम् ॥ २३ ॥

**श० म० अनुसन्धानम्-उष्ट्रमुखादय** इति । अनेन सूत्रेण 'उष्ट्रमुख'प्रमुखाः समासा बहुलं निपात्यन्ते, तत्रापि द्वितीयाद्यन्यार्थे बहुव्रीहिसंज्ञा विधीयते, उत्तरपदादिलोपश्च, यदाह-**उष्ट्रमुखादयो बहुलं बहुव्रीहिसमासा निपात्यन्ते** इति-पूर्वसूत्रेण सामानाधिकरण्ये समासो विहितः, प्रकृते च पूर्वोत्तरपदयोरुपमानोपमेयवृत्तित्वाच्च सामानाधिकरण्यसम्भव इति पूर्वसूत्रेण समासाप्राप्तौ समासः, उत्तरपदादिलोपश्च निपात्यत इति भावः ।

अथ सविग्रहमुदाहरणमाह-**उष्ट्रमुखमिव मुखमस्य** इदं समासार्थनिर्देशपरं वाक्यम्, एतदवलम्ब्याग्रे वक्ष्यति-'उपमेयस्वरूपस्य चोपमानशब्दस्य यथासम्भवं लोपः' इति, व्याख्यास्यते चैतत् तत्रैव । **उष्ट्रमुखः** इति समासः ।

वस्तुतस्तु नेह कस्यचिल्लोपो न वा पृथक् पदत्वं, किन्तु 'उष्ट्रमुख'प्रमुखाः शब्दा नित्यसिद्धा [ अखण्डा ] एवोष्ट्रमुखसदृशमुखवद्द्रव्यवाचका इहार्थबोधनायानुशिष्यन्ते, उष्ट्रादय एव शब्दा वृत्तौ ह्युपमानत्वेन स्थिताः स्वावयवपराः, मुखावयवसमुदायरूपस्योष्ट्रस्य स्वावयवमुखगतसाधारणधर्मेण तद्वत्तया व्यपदेशादुपमानतेति तत्त्वम् । "उपमानानि सामान्यवचनैः" [ पा० सू० २. १. ५७. ] इति सूत्रे महाभाष्ये चोपमानोपमेययोः सामानाधिकरण्यमपि प्रतिपादितम्, तच्चाग्रे सत्यवसरे प्रतिपादयिष्यते, तथा च सामानाधिकरण्ये सति पूर्वसूत्रेणापीह समासो यद्यपि सिध्यत्येव, तथाप्युपमेयसरूपस्योपमानवाचिपूर्वपदस्य लोपविधानार्थं सूत्रस्यावश्यकत्वेन निपातनमुखेन समासोऽपि प्रकृतसूत्रेणैवानुशिष्ट इति विज्ञेयम् ।

केचित् त्वेवमाहुः—वृत्तौ परार्थाभिधानं भवति, यतः परार्थाभिधानं वृत्तिः, समासादौ ह्युपसर्जनपदं पदार्थान्तरे वर्तते, उष्ट्रादिपदमुष्ट्रमुखादितुल्ये वर्तते, तस्मादिह 'उष्ट्रमुख'शब्दः 'समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इत्युष्ट्रावयवे मुखे वर्तित्वा 'अतस्मिंस्तच्छब्दः प्रयुज्यमान इवार्थं गमयति, यथा—अग्निर्माणवकः' इत्युष्ट्रमुखादितुल्यं यद् देवदत्तमुखं तत्रोष्ट्रमुखतुल्यतामुपादाय वर्तते, तद् 'उष्ट्रस्य मुखमिव' इति विग्रहे दर्श्यते, तत्र न 'मुखमिव' इत्यस्य प्रयोगप्रसङ्गः, सामानाधिकरण्यं चेति समासानाधिकरणानामेव समासः, अथ 'उष्ट्रमुखमुख' इति नेष्यते, अनभिधानान्न भविष्यति, तदर्थमेव बहुलमिति ।

एतादृशक्लेशापेक्षया 'व्याख्यानाद् परं वचनम्' इति न्यायेन स्थलान्तरवत् सूत्रस्त्रणमेव ज्याय इति प्रतीमः । उष्ट्रस्य मुखमुष्ट्रमुखमिति विग्रहे षष्ठीतत्पुरुषः ।

एवम्-**वृषस्कन्ध इव स्कन्धोऽस्य** इति विग्रहः, तत्र वृषस्य-वृषभस्य, स्कन्धः-अंसो वृषस्कन्ध इति षष्ठीतत्पुरुषः,

**वृषस्कन्धः** इति समासः, **हरिणाक्षिणी इवाक्षिणी यस्याः** इति विग्रहः, तत्र हरिणस्य–मृगस्य, अक्षिणी–नयने इति **हरिणाक्षिणी** इति षष्ठीतत्पुरुषः, "ईदूदेद् द्विवचनम्" इति 'हरिणाक्षिणी इव' इत्यत्रासन्धिः, **हरिणाक्षी** इति समासः, अत्र "सक्थ्यक्ष्णः स्वाङ्गे" [ ७. ३. १२६. ] इति समासान्तः–टः, टकारस्येत्त्वादकारोऽवशिष्यते, "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इतीकारस्य लोपे टित्त्वाच्च "अण०" [ २. ४. २०. ] इति ङ्यां च–'हरिणाक्षी' इति, **हंसगमनमिव गमनं यस्याः** इति विग्रहः, तत्र हंसस्य गमनं हंसगमनमिति षष्ठीतत्पुरुषः, **हंसगमना** इति समासः, अत्र "आत्" [ २. ४. १८. ] इत्याप्, एषु चतुर्षूदाहरणेषु क्रमेण 'मुख, स्कन्ध, अक्षि, गमन' इत्येकैकस्य 'इव' इत्यस्य च लोपः । **इभकुम्भाविव स्तनौ यस्याः** इति विग्रहः, तत्र 'इभस्य–हस्तिनः, कुम्भौ–शिरःस्थमांसपिण्डौ–इभकुम्भौ' इति षष्ठीतत्पुरुषः, **इभकुम्भस्तनी** इति समासः, अत्र "असहनञ्०" [२. ४. ३८.] इति ङीः, अतिदिशति–**एवमिति**–यादृशविग्रहकलितमिभकुम्भस्तनीत्युदाहृतं तादृशविग्रहकलितान्यान्यप्युदाहरणानि ज्ञेयानीत्यर्थः, तान्येवाह–**नागनासोरुः** इति–समासोऽयम्, नागस्य–हस्तिनः, नासा–नासिका नागनासा, नागनासेव ऊरू–जानूपरिभागौ यस्याः सेति तस्य विग्रहः, **चन्द्रमुखी** इति–समासोऽयम्, चन्द्र इव मुखं यस्याः सेति तस्य विग्रहः, "असह-नञ्०" [ २. ४. ३८. ] इति ङीः, **कमलवदना** इति–समासोऽयम्, कमलमिव वदनं यस्याः सेति तस्य विग्रहः, अत्र "आत्" [ २. ४. १८. ] इत्याप्, **बिम्बोष्ठी** इति–समासोऽयम्, बिम्बमिव–बिम्बिकाफलमिव रक्तौ, ओष्ठौ यस्याः सेति तस्य विग्रहः, "नासिको०" [ २. ४. ३९. ] इति ङीः, "वौष्ठौतौ समासे" [ १. २. १७. ] इत्यकारलोपश्च, **चक्रनितम्बा** इति–समासोऽयम्, चक्रमिव नितम्बः–कट्या अधोभागो यस्याः सेति तस्य विग्रहः, प्राग्वदत्राप्याप् विज्ञेयः, एषूपमार्थकस्येवशब्दस्य लोपः । **पितुरिव स्थानमस्य** इति विग्रहः, **पितृस्थानः** इति समासः, यथा पितुः स्थानं तथा स्वस्य चैत्रादेरपि स्थानमिति तदर्थः, **पितरीव स्थानीयमस्मिन्** इति विग्रहः, **पितृस्थानीयः** इति समासः, यथा पितरि स्थानीयं तथा स्वस्मिंश्चैत्रादावपि स्थानीयमिति तदर्थः, स्थानशब्दः स्थिति-सन्निवेश-भाजनादौ, स्थानीयशब्दश्च वासयोग्यस्थानादौ वर्तते । **इत्यादिः** इतिशब्द उपमानवाचकसमासोदाहरणसमाप्तिसूचकः, आदिशब्द एवंप्रकाराणां संग्रहार्थः ।

सूत्रप्रयोजनं स्फोरयितुमाह–**अत्रोपमानमुपमेयेने**त्यादिना, **अत्र** उष्ट्रमुखादिषु द्वादशसु समासेषु, **उपमानम्** उपमीयतेऽनेनेत्युपमानमुष्ट्रमुखादि नाम, **उपमेयेन** उपमीयते यत् तदुपमेयं तेन, मुखादिना नाम्ना, उष्ट्रमुखादिषु दशसु समासेषु, **सामान्यवाचिना च** साधारणधर्मवाचिना पुनः, अन्तिमसमासद्वये, स्थान-स्थानीयनाम्ना सह, **समस्यते** संसृज्यते, समासभावं प्राप्नोतीत्यर्थः ।

उक्तोदाहरणेषु निपातनेन समासातिरिक्तं किमप्यधिकं जातमित्याकाङ्क्षायामाह–**उपमेये**त्यादिना, **च** पुनः, **उपमेयसरूपस्य** 'उष्ट्रमुख' इत्यादावुपमेयं मुखादि, तत्सरूपस्य, **उपमानपदस्य** उष्ट्रमुखादिशब्दावयवमुखादिशब्दस्य, **यथासम्भवं लोपः** यत्र तादृशानां मुखादिशब्दानां प्रयोगस्तत्र तेषां लोपः, यत्र च 'इभकुम्भाविव स्तनौ यस्याः' इत्यादौ न तादृशानि पदानि तत्र केवलमुपमावाचकस्येवादेर्लोपः, समासार्थान्तर्भावो वेति सूचनायैव **'यथासम्भवम्'** इत्युक्तमिति ।

एवमुपमानपूर्वपदकसमासानां साधुत्वप्रकारमन्वाख्यायान्येषामपि व्यधिकरणबहुव्रीहिणां साधुत्वप्रकारमन्वाख्यातुमुपक्रमते–**कण्ठे स्थिता इत्यलुप्समास** इति–कण्ठे तिष्ठति स्मेति "क्तेन" [ ३. १. ९२. ] इति बाहुलकात् क्षेपेऽक्षेपे वा समासे "तत्पुरुषे कृति" [ ३. २. २०. ] सप्तमीलोपाभावे 'कण्ठेस्थित' इत्यलुप्समासः, ततः 'असौ–कण्ठेस्थितः' इति, क्वचित् 'कण्ठेस्थिताः' इति पाठः, **ततः** अलुप्समासेन 'कण्ठेस्थित'शब्दं साधयित्वा, वक्ष्यमाणं विग्रहवाक्यं ज्ञेयमिति शेषः, **कण्ठेस्थितः कालो यस्य** इति विग्रहः, **कण्ठेकालः** इति समासः, अत्र समानाधिकरणो बहुव्रीहिः, स्थितशब्दलोपश्च, सति सामानाधिकरण्ये समासस्य पूर्वेण सिद्धावपि स्थितशब्दलोपविधानार्थमत्र गणे पाठस्यावश्यकत्वम्, अतिदिशति–**एवमिति**–'कण्ठेकाल' इत्यत्रोक्तरीत्या वक्ष्यमाणोदाहरणत्रयमपि ज्ञेयमित्यर्थः, **उरसिस्थितानि लोमान्यस्य** इति विग्रहः, **उरसिलोमा** इति समासः, अतिदिशति–**एवमि**ति–उक्तविग्रहो वक्ष्यमाणोदाहरणद्वयेऽपि ज्ञेय इत्यर्थः, **उदरेमणिः** समासोऽयम्, उदरेस्थितो मणिर्यस्येति तस्य विग्रहः, **वहेगडुः** समासोऽयम्, वहे स्थितो गडुर्यस्येति विग्रहस्तस्य, वहः–वृषस्कन्धः, गडुः–विषमग्रन्थिः ।

उक्तसमासचतुष्टये यो विशेषस्तमाह–**इत्यादिषु सप्तमी**त्यादिना, **इत्यादिषु** अन्तराभिहितसमासचतुष्टयादिषु, **सप्तमीपूर्वपदं** सप्तम्यन्तं पूर्वपदं यत्र तादृशम्, यत् **समानाधिकरणं** 'कण्ठेस्थितः' इत्यादि स्याद्यन्तं नाम, तत् समानाधिकरणेन नाम्ना समस्यते, **च** पुनः, **उत्तरपदस्य लोपः** पूर्वपदभूतस्य कण्ठेस्थितादिसमासस्य यत् 'स्थित'रूपमुत्तरपदं तस्य प्रकृतसूत्रेण निपातनाल्लोपश्च भवति ।

निपातनेनैव साधुत्वेऽन्वाख्येये व्यधिकरणत्वेऽपि समाससाधुत्वान्वाख्यानसम्भवाद् व्यर्थः समासगर्भसमासस्वीकार-

प्रयत्न इत्याशयवानाह–**व्यधिकरणो वा कण्ठेकालादिषु बहुव्रीहिरि**ति–कण्ठे कालोऽस्य, उरसि लोमान्यस्य, उदरे मणिरस्य, वहे गडुरस्य, इति विग्रहे कृते "न सप्तमीन्द्वादिभ्यः" [ ३. १. १९५. ] "गड्वादिभ्यः" [ ३. १. १५६. ] इत्यादिसूत्राणां बहुव्रीहौ सप्तम्यन्तस्यापि प्रवेशस्यानुशासकानां व्यधिकरणानामपि बहुव्रीहिसमास इति ज्ञापकत्वेन "अमूर्धमस्तकात् स्वाङ्गादकामे" [ ३. २. २२. ] इति सप्तम्या लोपाभावे 'कण्ठेकाल'प्रमुखशब्दानां सिद्धौ न तदर्थमत्र गणे तेषां पाठस्यावश्यकत्वमिति भावः ।

एवमन्यादृशानामपि समासानां गणपाठेन साधुत्वमाह–**केशसंघातश्चूडा अस्ये**त्यादिना, **केशसंघातश्चूडा अस्य** इति विग्रहः, **केशचूडः** इति समासः, एवम्–**सुवर्णविकारोऽलङ्कारोऽस्य** इति विग्रहः, **सुवर्णालङ्कारः** इति समासः, ननूक्तोदाहरणद्वये किं किं जातमित्याकाङ्क्षायामाह–**इत्यादिषु** अनन्तराभिहितकेशचूडादिषु समासेषु, **संघातविकारापेक्षया षष्ठ्या** केशानां संघात इति संघातापेक्षया षष्ठी, सुवर्णस्य विकार इति विकारापेक्षया च या षष्ठी, हेतुभूतया तया, **समस्तं** "षष्ठ्ययत्नाच्छेषे" [ ३. १. ७६. ] इति समासभावं प्राप्तं यत् **समानाधिकरणं** केशसंघातादि नाम तत् समानाधिकरणेन चूडादिना नाम्ना, **समस्यते** बहुव्रीहिसमाससंज्ञं भवति, **च** पुनः, **उत्तरपदलोपः** केशसंघातादितत्पुरुषसमासोत्तरपदभूतस्य संघातादेरनेन निपातनाल्लोपो भवति। अत्र मतान्तरमाह–**केशसंघातचूडः, सुवर्णविकारालङ्कार इत्यप्यन्यः** इति–एतन्मते विकल्पेन संघातादेर्लोपो भवतीत्यर्थः, 'अन्यः' इत्येकवचनेनारुचिः सूच्यते ।

उदाहरणान्तराणि दर्शयितुमवतारयति–**तथे**ति–यथानन्तरं लोपघटितः समानाधिकरणबहुव्रीहिरुदाहृतस्तथाऽन्योऽपि तथाविधो ज्ञेयः, तदेवाह–**प्रपतितानी**त्यादिना, **प्रपतितानि पर्णान्यस्य** इति विग्रहः, **प्रपर्णः, प्रपतितपर्णः**, इति च समासः, **प्रपलाशः, प्रपतितपलाशः**, इति च समासः, **उद्रश्मिः, उद्गतरश्मिः**, इति च समासः, 'प्रपतितानि पलाशान्यस्य' इति 'उद्गता रश्मयोऽस्य' इति च क्रमेण विग्रहः, उक्तोदाहरणत्रये किं किं जातमित्याकाङ्क्षायामाह–**इत्यादिषु** 'प्रपर्ण-प्रपतितपर्ण'प्रमुखेषु, **प्रादिपूर्वं** प्रपतितपर्ण-प्रपतितपलाशयोः प्रः–प्रशब्दः, पूर्वं–पूर्वपदं यस्य तादृशम्, 'उद्गतरश्मि' इत्यत्र च उत् पूर्वपदं यस्य तादृशं, **धातुजं पदं** "पत्लृ गतौ" "गम्लृ गतौ" आभ्यां धातुभ्यां क्ते जातं 'पतित' इति 'उद्गत' इति च पदम्, 'प्रकर्षेण पतितानि' 'उद्–ऊर्ध्वं गता' इति "प्रात्यव०" [ ३. १. ४७. ] इति समासेन निष्पन्नं यत् 'प्रपतित' इति 'उद्गत' इति च पदमित्यर्थः, **समस्यते** समानाधिकरणेन पर्णादिना बहुव्रीहिसमाससंज्ञं भवति, **च** पुनः, **तस्य** धातुजपदस्य पतितादेः, **वा** विकल्पेन, **लोपो** भवतीति शेषः ।

पूर्वपदवैलक्षण्यदर्शनायोदाहरणान्तराणि दर्शयितुमवतारयति–**तथे**ति । **अविद्यमानः पुत्रोऽस्य** इति विग्रहः, **अपुत्रः, अविद्यमानपुत्रः**, इति च समासः । एषु किं वैलक्षण्यमित्याह–**नञ्पूर्वं** नञ् पूर्वपदं यस्य तादृशम्, **अस्त्यर्थं** विद्यमानार्थकं, **पदं** "नञ्" [ ३. १. ५१. ] इति न विद्यमानः–अविद्यमानः, इति नञ्समासभावं प्राप्तम्, अविद्यमानादिपदम्, **समस्यते** समानाधिकरणेन पुत्रादिना सह बहुव्रीहिसमाससंज्ञं भवति, **च** पुनः, **तस्य** अस्त्यर्थकपदस्य, **वा** विकल्पेन निपातनाद् लोपो भवति, गणपाठे पठितानामेषामर्थानुसन्धानवशात् तादृशतादृशविग्रहादिलाभ इति परमार्थः ।

गणपाठस्यासम्पूर्णतामाह–**बहुवचनमाकृतिगणार्थमि**ति–आक्रियतेऽनयेत्याकृतिः–वर्णिकाप्रकारः, तस्या गणस्तदर्थमिति, अयमर्थः–उष्ट्रमुखादिशब्दस्य संज्ञितया संज्ञाविशेषणत्वात् संज्ञायाश्चैकत्वाद् लाघवार्थं चैकवचने प्राप्ते यद् बहुवचनं तद् 'अन्येऽपि बहव उष्ट्रमुखादयः सन्ति' इति ज्ञापनार्थम्, एतेनान्येऽपि उष्ट्रमुखादिसधर्माणः संगृहीता भवन्ति ।

अन्यैश्च वैयाकरणैरेतद्गणीयलक्ष्याणां सिद्ध्यर्थं पृथगेव वार्तिकानि सामान्यसूत्रान्तःपातीन्यारभ्यन्ते, तथा हि–"अनेकमन्यपदार्थे" [ पा० सू० २. २. २४. ] इति सूत्रे, वार्तिके–"बहुव्रीहिः समानाधिकरणानाम्" [ वा० ] इति प्रकृत्य बहुव्रीहिसमासानां सूत्रकृदनिर्दिष्टानां परिगणनमारभ्यते, तत्रास्य वार्तिकस्यार्थस्तु स्वमते 'एकार्थम्' इति सूत्रस्थपदेनैव संगृहीतः, द्वितीयं तु वार्तिकं तत्र "अव्ययानां च" [ वा० ] इति, तच्चाव्ययानुवृत्त्यर्थेन चकारेण संगृहीतम्, तथा चोच्चैर्मुखादयः शिष्टाः । ततः पराणि–"सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च" [ कण्ठेकालः, उष्ट्रमुखः ], "समुदायविकारषष्ठ्याश्च" [ केशचूडः, सुवर्णालङ्कारः ], "प्रादिभ्यो धातुजस्य वा" [ प्रपतितपर्णः, प्रपर्णः ], "नञोऽस्त्यर्थानां च" [ अविद्यमानपुत्रः, अपुत्रः ], इत्येतेषां वार्तिकानामर्थास्तदुदाहरणानि च गणपाठेनानेन संगृहीतानि ।

तत्र च भाष्ये पूर्वोक्तानि वार्तिकानि व्याख्याय शङ्कितम्–"तत्तर्हीदं बहुवक्तव्यम् ?" इति ततो निराकृतम्–"नवानभिधानादसमानाधिकरणेषु समाससंज्ञाभावः" [ वा० ] इति, नवा वक्तव्यम्, असमानाधिकरणानां बहुव्रीहिः कस्मान्न भवति–पञ्चभिर्भुक्तमस्य, अनभिधानात्, तच्चानभिधानमवश्यमाश्रयितव्यम्, क्रियमाणेऽपि परिगणने यत्राभिधानं न भवति तत्र न बहुव्रीहिः, यथा–पञ्च भुक्तवन्तोऽस्येति" इति ।

अयमाशयः–'पञ्चभिर्भुक्तमस्य' इत्यादौ व्यधिकरणबहुव्रीहि-वारणार्थमेव "समानाधिकरणानां बहुव्रीहिः" इति [ एकार्थमिति वा ] क्रियते, तस्मिंश्च कृते व्यधिकरणसमासानामुच्चैर्मुखादीनां साधुत्वार्थं वचनान्तराण्यारभ्यन्ते, 'राजन्वती भूरनेन, प्राग्
5 प्रामोऽस्य, पञ्च भुक्तवन्तोऽस्य' इत्यादौ च समासाभावार्थमन-भिधानं वा बाहुलकं वा समाश्रीयते, इति वरं सामान्येन समानाधिकरण-व्यधिकरणानां बहुव्रीहिरस्तु, येषां समानाधि-करणानां व्यधिकरणानां वा बहुव्रीहिर्नेष्टस्तत्रानभिधानं बाहुलकं वा समाश्रयणीयम्, एवं च वचनान्तराकरणरूपं लाघवमिति ।
10 यद्यप्येवं सिध्यति तथापि 'व्याख्यानाद् वरं करणम्' इति न्यायेन स्वमते यथासम्भवमन्वाख्यानाय वचनमारब्धम्, यत्र च नान्या गतिस्तत्र बाहुलकमाश्रितमिति बोध्यम् । किंचोत्तर-पदादिलोपानुशासनार्थमपि वचनादरस्यावश्यकत्वम् । वस्तुतस्तु–उत्तरपदलोपादिकं केवलमर्थज्ञानोपायभूतं, तत्र तत्रोष्ट्रादीनां
15 पूर्वपदत्वेन श्रूयमाणपदानामेव स्वावयवमुखादिबोधकत्वमिति विवेचितं प्रागिति ॥ ३. १. २३. ॥

## सहस्तेन । ३ । १ । २४ ॥

**त० प्र०–'सह' इत्येतन्नाम तुल्ययोगे विद्यमानार्थे च वर्तमानं, तेनेति तृतीयान्तेन नाम्नाऽन्यपदार्थे समस्यते, स**
20 **च समासो बहुव्रीहिसंज्ञो भवति । तुल्ययोगे–सह पुत्रेण–सपुत्र आगतः, सच्छात्र आगतः; आगमनमुभयोस्तुल्यम्; विद्यमानार्थे–सह कर्मणा वर्तते–सकर्मकः, एवं–सलोमकः, सपक्षकः, सधनः, समदः, सदर्पः, सविद्यः, विद्यमानताऽत्र सहार्थो न तुल्ययोगः ।**

25 **सह इति किम्? साकं सार्धं सत्रा अमा पुत्रेण । बहुला-धिकारात् विद्यमानार्थे क्वचिन्न भवति–"सहैव दशभिः पुत्रैर्भारं वहति गर्दभी", सहैव धनेन भिक्षां भ्रमति । प्रथमान्तान्यपदार्थार्थ आरम्भः; एवमुत्तरत्रापि ॥ २४ ॥**

**श० म० अनुसन्धानम्–सहस्तेनेति** । 'सह' इति
30 चादिषु पठितमव्ययम्, शब्दनिर्देशपरत्वात् पुंस्त्वेन निर्देशः–**सहः** इति, एतेनानुवर्तमानं 'नाम' इति विशिष्यते, अत आह–**'सह' इत्येतन्नामेति**–अव्ययात्मकं 'सह' इत्येवंविधं नामेत्यर्थः; कस्मिन्नर्थे वर्तमानमित्याह–**तुल्ययोगे** इति–युगप-देकक्रियायोगे इत्यर्थः, च पुनः, **विद्यमानार्थे** इति–
35 यौगपद्यरहितास्तित्वमात्रविवक्षायामित्यर्थः, **वर्तमानमिति**–तद्बोधनशक्तियुक्तमित्यर्थः । एतदर्थकथनं न पदान्तरलभ्यं तादृशपदस्येहादर्शनात्, पूर्वतश्च तदनुवृत्त्यसंभवात्, किन्तु सहशब्दार्थस्य वृत्तौ तथाभासमानत्वनिबन्धनमेव, न त्वति-व्याप्तिपरिहारार्थमेव सूत्रेऽदृष्टमपि वृत्तिकृता लक्ष्यानुरोधात् पठितमिति भ्रमितव्यम्, बाहुलकेनापि तत्समाधानस्य सम्भ- 40 वात्; **'तेन'** इति सूत्रस्थपदेन किं ग्राह्यमित्याह–**तेनेति तृतीयान्तेने**ति, अनेनानुवर्तमानं 'नाम्ना' इति विशिष्यते, अत आह–**नाम्ने**ति; **अन्यपदार्थे** इति–'द्वितीयाद्यन्यार्थे' इति पूर्वसूत्रानुवृत्तस्य पदस्यैकदेश एवेहानुवर्तनीयो लक्ष्यानु-रोधादित्याशयः, तथा च * एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः 45 सह वा निवृत्तिः* इत्येतन्न्यायापवादभूतोऽयमपि न्यायः–*क्वचिदेकदेशोऽप्यनुवर्तते* इति, द्वितीयाद्यन्तत्वस्य चेह नियमासंभवान्न तदंशानुवृत्तिः, अत एव स्वातन्त्र्येण समासो विधीयते, अन्यथा पूर्वसूत्रेणैव सिद्धेः ।

सम्पन्ने सूत्रार्थे उदाहरणावसरः, तत्र पूर्वं कस्मिन्नर्थे उदा- 50 ह्रियते इत्याह–**तुल्ययोगे** इति, **सह पुत्रेण** इति विग्रहः, **सपुत्र** इति समासः, **आगतः** इति तुल्ययोगप्रतिपत्तये क्रियापदम्; एवम्–**सच्छात्रः** इति समासः, **आगतः** इति प्राग्वत्, कथमिह तुल्ययोग इत्याह–**आगमनमुभयोस्तु-ल्यमि**ति–यथा जनकाध्यापकयोरागमनक्रिया तथा पुत्रच्छात्र- 55 योरपीति तुल्ययोग इत्यर्थः, क्रिया-गुण-द्रव्यैरुभयोस्तुल्यः सम्बन्धो हि तुल्ययोगः, स चेह क्रियासम्बन्धसादृश्यादक्षत इति भावः ।

अथ विद्यमानार्थे उदाहर्तुमाह–**विद्यमानार्थे** इति, **कर्मणा सह वर्तते** इति विग्रहः, **सकर्मक** इति समासः, 60 "शेषाद् वा" [ ७. ३. १७५. ] इति कच् समासान्तः, "नाम्नो नो०" [ २. १. ९१. ] इति नकारलोपश्चात्र ज्ञेयः, इह कचा "सहात् तुल्ययोगे" [ ७. ३. १७८. ] इति तुल्य-योगे कचो निषेधात् तुल्ययोगाभावः पारिशेष्याद् विद्यमानता च सूच्यते, अतिदिशति–**एवमि**ति, **सलोमकः** इति समासः, 65 लोमभिः सह वर्तते इति तस्य विग्रहः, **सपक्षकः** इति समासः, पक्षाभ्यां सह वर्तते इति तस्य विग्रहः, अत्र **'सपक्ष्मकः'** इति पाठः सम्यगभाति, तत्र पक्ष्मणा–नेत्ररोमराज्या सह वर्तते इति विग्रहः, **सधनः** इति समासः, धनेन सह वर्तते इति तस्य विग्रहः, "शेषाद् वा" [ ७. ३. १७५. ] इति कचो 70 विकल्पेन विधानान्न कच् विहितः, एवम्–**समदः** इति समासः, मदेन सह वर्तते इति तस्य विग्रहः, **सदर्पः** इति समासः, दर्पेण सह वर्तते इति तस्य विग्रहः, **सविद्यः** इति समासः, विद्यया सह वर्तते इति तस्य विग्रहः, अत्र च "गोश्चान्ते ह्रस्वो०" [ २. ४. ९६. ] इति ह्रस्वः; ननु सकर्मकप्रभृतिषु कथं न सहा- 75 र्थस्तुल्ययोग इति चेत्? अत्राह–**विद्यमानताऽत्र सहार्थो न तुल्ययोग** इति–अयमाशयः–'सकर्मको जीवो दुःखमनु-भवति, सलोमका निमन्त्र्यन्ताम्' इत्युक्ते न कर्मणो दुःखानुभव-सम्बन्धः, न वा लोमादेर्निमन्त्रणक्रियासम्बन्धः, केवलं जीवादि-

पदार्थान्तरसम्बन्ध एव प्रतीयते इति विद्यमानतैव, न क्रियादिसम्बन्धरूपस्तुल्ययोगः । सपुत्रादिसमासेषु सहशब्दस्य "सहस्य सोऽन्यार्थे" [ ३. २. १४३. ] इति सादेशः ।

'सहः' इत्यनेन शब्दस्वरूपग्रहणं, न त्वर्थनिर्देश इति स्फोरयितुं शङ्कते—**सहेति किमिति**–यद्यपि सहग्रहणाभावे सूत्रस्य पूर्णता नास्ति, तथाप्यर्थग्रहणं कुतो नाश्रीयत इत्यत्रैव प्रश्नतात्पर्यम्, अर्थग्रहणाभावफलमाह—**साकं सार्धमि**त्यादिना–इमे चत्वारोऽपि शब्दाः सहार्थाः, तैः सह समासो नेष्टस्तदर्थमेव सहार्थग्रहणं न कृतमिति भावः । क्वचित् प्रकृतसूत्रविषयेऽपि विद्यमानार्थे समासो न भवति स च बाहुलकादेव समाधेय इत्याह—**बहुलाधिकारादि**त्यादिना, **सहैव दशभिरि**ति–दशानां पुत्राणां विद्यमानत्वेऽपीत्यर्थः, **सहैव धनेने**ति–धनस्य विद्यमानत्वेऽपीत्यर्थः, पुत्रसत्त्वे मातुर्भारवहनं, धनसत्त्वे च भिक्षाचरणमिह निन्दितत्वेन निदर्शनतयोच्यते । अन्यपदार्थे एवानेन समासः, अतिप्रसङ्गश्च बाहुलकादेव वारणीय इति यद्याश्रीयते तर्हि किमर्थं सूत्रम् ? "एकार्थं चानेकं च" [ ३. १. २२. ] इति सामान्यसूत्रेणैव समाससिद्धेरित्याशङ्कायामाह—**प्रथमान्तान्यपदार्थार्थ आरम्भः** इति–पूर्वेण हि द्वितीयाद्यन्तान्यपदार्थे एव समासो विधीयते, न प्रथमान्तान्यपदार्थे इति तदर्थोऽयमारम्भ आवश्यक इत्यर्थः । "तेन सहेति तुल्ययोगे" [ पा० २. २. २७. ] इति सूत्रे भाष्ये च कब[ज]भावार्थमपि पृथक् समासविधानमिति सूचितम्, कप्[च्] हि शेषादेव बहुव्रीहेर्न तु विशिष्य विहितादिति तत्सिद्धान्तात् ॥ ३. १. २४. ॥

## दिशो रूढ्याऽन्तराले । ३ । १ । २५ ॥

**त० प्र०—रूढ्या दिशः संबन्धि नाम रूढ्यैव दिशः संबन्धिना नाम्नाऽन्तरालेऽन्यपदार्थेऽभिधेये समस्यते, स च समासो बहुव्रीहिसंज्ञो भवति । दक्षिणस्याश्च पूर्वस्याश्च** दिशोर्यदन्तरालं सा–दक्षिणपूर्वा दिक्, एवं–पूर्वोत्तरा, उत्तरपश्चिमा, दक्षिणपश्चिमा; "सर्वादयोऽस्यादौ" ॥ [ ३. २. ६१. ] इति पूर्वपदस्य पुंवद्भावः । कथं **पश्चिमदक्षिणा ? पश्चिमोत्तरा ? कर्मधारयोऽयम्**, बहुव्रीहौ हि सर्वनाम्नः पूर्वनिपातः स्यात् । रूढिग्रहणं यौगिकनिवृत्त्यर्थम्, तेनैन्द्र्याश्च **कौबेर्याश्च** दिशोर्यदन्तरालमिति वाक्यमेव ॥ २५ ॥

**श० म० अनुसन्धानम्-दिशो०** इति । **'रूढ्या'** इति पदं **'दिशः'** इत्यनेन सम्बध्यते, 'दिशः' इति चानुवर्तमानेन **'नाम'** इत्यनेन 'नाम्ना' इत्यनेन च सम्बन्धार्थमावर्त्यते, तदावृत्त्या च तत्सम्बद्धं 'रूढ्या' इत्यप्यावर्तते, 'दिशः' इत्यत्र च वाच्यवाचकभावसम्बन्धे षष्ठी, **'अन्तराले'** इति चानुवर्तमानस्य 'अन्यपदार्थे' इत्यस्य विशेषणम्, 'समासो बहुव्रीहिः' इति त्वनुवर्तत एव, तथा च योऽर्थो निष्पन्नस्तमाह–**रूढ्या दिशः सम्बन्धि नामे**त्यादिना, रूढ्या दिशो वाचकं नाम रूढ्यैव दिशो वाचकेन नाम्ना सह समस्यतेऽन्तरालार्थेऽन्यपदार्थेऽभिधेये, स च बहुव्रीहिसंज्ञ इति भावः । इदमपि सूत्रं प्रथमान्तान्यपदार्थे समासलाभार्थं [ कजभावार्थं च ] इति पूर्वसूत्रवदनुसन्धेयम्, तथा च प्रथमान्तान्यपदार्थकमेव विग्रहमाह–**दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालमि**ति–अत्र दक्षिणस्याश्च पूर्वस्याश्च यदन्तराल[ कोणलक्षणं ]मित्येव विग्रहवाक्यं, 'दिशोः' इति स्वार्थिकार्थकथनम्, उभयोर्हि मध्यदेशेऽन्तरालशब्दस्य वृत्तेः, **दक्षिणपूर्वा** इति समासः, अत्र स्त्रीत्वं लोकात्, यद्वाऽन्तरालमपि दिगेवेति दिक्शब्दत्वादेव स्त्रीत्वम्, **दिक्** इति समासविशेषणम्, आग्नेयी विदिगित्यर्थः । अतिदिशति–**एवमि**ति–उक्तरीत्या वक्ष्यमाणसमासा अपि ज्ञेया इत्यर्थः, **पूर्वोत्तरा** इति समासः, पूर्वस्याश्च उत्तरस्याश्च यदन्तरालमिति तस्य विग्रहः, ऐशानी विदिगिति तदर्थः, **उत्तरपश्चिमा** इति समासः, उत्तरस्याश्च पश्चिमायाश्च यदन्तरालमिति तस्य विग्रहः, वायवी विदिगित्यर्थः । **दक्षिणपश्चिमा** इति समासः, दक्षिणस्याश्च पश्चिमायाश्च यदन्तरालमिति तस्य विग्रहः, नैर्ऋत्यकोण इति तदर्थः ।

दिशि वर्तमानानां शब्दानां नित्यस्त्रीलिङ्गत्वेन तत्र "परतः स्त्री पुंवत्०" [ ३. २. ४९. ] इत्यस्याप्राप्त्या 'दक्षिणपूर्वा' इत्यादौ कथं पुंवद्भाव इत्याशङ्कायामाह–**"सर्वादयोऽस्यादौ" [ ३. २. ६१ ] इति पूर्वपदस्य पुंवद्भाव** इति–सम्प्रत्युपसर्जनत्वेऽपि भूतपूर्वमनुपसर्जनत्वमादाय सर्वादित्वं दक्षिणादिशब्दानामिति बोध्यम् ।

**कथं पश्चिमदक्षिणा ? पश्चिमोत्तरा ?** इति–"विशेषण-सर्वादि-संख्यं बहुव्रीहौ" [ ३. १. १५०. ] इति सर्वादेः प्राक्प्रयोगे 'दक्षिणपश्चिमा, उत्तरपश्चिमा' इति भवितव्यमिति शङ्कितुराशयः, उत्तरयति–**कर्मधारयोऽयमि**ति–पश्चिमा चासौ दक्षिणा चेति–पश्चिमदक्षिणा, पश्चिमा चासावुत्तरा चेति–पश्चिमोत्तरा, इति "विशेषणं०" [ ३. १. ९६. ] इति कर्मधारयसमासः, तत्र च न सर्वादेः प्राक्प्रयोगनियमः, तदेवाह–**बहुव्रीहौ ही**त्यादि–तत्र सूत्रे तथोक्तत्वादिति भावः, अयमाशयः–इह नान्तरालोऽर्थोऽभिधेयः किन्तु या पश्चिमा पश्चिमत्वप्रकारकज्ञानविशेष्या सैव दक्षिणा–दक्षिणत्वप्रकारकज्ञानविशेष्या, सैव च उत्तरा–उत्तरत्वप्रकारकज्ञानविशेष्या, इत्यर्थविवक्षायामुक्तसमासाविति । 'रूढ्या' इति पदस्य सार्थक्यं दर्शयति–**रूढिग्रहणं यौगिकनिवृत्त्यर्थमि**ति–रूढ्या ह्यव्यभिचरितदिग्वृत्तित्वमुपलभ्यते, तथा च यथा पूर्वादिशब्दा दिशि

रूढास्तथा ऐन्द्र्यादिशब्दा न, किन्तु ते इन्द्रसम्बन्धनिमित्तका अन्यार्थमपि कदाचित् कथयन्ति, न त्वव्यभिचरितदिग्वृत्तयो यौगिकत्वात्, एवं सति तेषामत्र सूत्रे न ग्रहणमित्याह-**तेन** रूढ्या दिगर्थकशब्दग्रहणेन, वक्ष्यमाणवाक्ये यौगिकत्वाद् रूढ्य-5 भावाच समासो न भवतीत्यर्थः, तदाह-**ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति वाक्यमेवे**ति-अयमाशयः-रूढिः-समुदायशक्तिः, योगः-अवयवशक्तिः, रूढ्यार्थं प्रतिपादयन् शब्दो रूढ इत्युच्यते, योगेनार्थं प्रतिपादयन् शब्दो यौगिक इत्युच्यते, प्रकृते च इन्द्रो देवतास्याः-ऐन्द्री, पूर्वदिगित्यर्थः, 10 कुबेरो देवतास्याः-कौबेरी, उत्तरदिगित्यर्थः, अत्र 'ऐन्द्री-कौबेरी' शब्दयोर्योगेनैव दिग्वाचकत्वं न तु रूढ्या, प्रकृतसूत्रे च रूढिग्रहणात् समासाभावे वाक्यमेवेत्यर्थः ॥ ३. १. २५. ॥

## तत्रादाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः । ३ । १ । २६ ॥

15 **त० प्र०**—तत्रेति सप्तम्यन्तं नाम, मिथ आदायेति क्रियाव्यतिहारे, तेनेति तृतीयान्तं, मिथः प्रहृत्येति क्रियाव्यतिहारे, सरूपेण समानरूपेण नाम्ना युद्धविषयेऽन्यपदार्थे **समस्यते, स च समासोऽव्ययीभावसंज्ञो भवति ।** केशेषु च केशेषु च मिथो गृहीत्वा कृतं युद्धं-केशाकेशि, एवं-कचाकचि, 20 बाहूबाहवि; दण्डैश्च दण्डैश्च मिथः प्रहृत्य कृतं युद्धं-दण्डादण्डि, एवं-यष्टायष्टि, मुष्टामुष्टि; असासि । तत्रेति तेनेति च किम्? केशांश्च केशांश्च गृहीत्वा कृतं युद्धम्, मुखं च मुखं च प्रहृत्य कृतं युद्धम् । आदायेति प्रहृत्येति च किम्? केशेषु च केशेषु च स्थित्वा कृतं युद्धं गृहकोकिलाभ्याम्, 25 दण्डैश्च दण्डैश्चागत्य कृतं युद्धमेताभ्याम् । मिथ इति क्रियाव्यतिहारः किम्? केशेषु च केशेषु च गृहीत्वा कृतं युद्धमनेन । सरूपेणेति किम्? हस्ते च पादे च गृहीत्वा कृतं युद्धम् । युद्ध इति किम्? हस्ते च हस्ते च गृहीत्वा कृतं सख्यम्; युद्ध इति विषयनिर्देशात् युद्धोपाधिकायामन्यस्यामपि 30 क्रियायां भवति-बाहूबाहवि व्यासजेतामिति । अव्ययीभावप्रदेशाः-"अमव्ययीभावस्यातोऽपञ्चम्याः" [३. २. २.] इत्यादयः ॥ २६ ॥

**श० म० न्यासानुसन्धानम्—तत्रादाये**त्यादि । 'नाम नाम्नाऽन्यार्थे समस्यते' इति पदानि पूर्वसूत्रतोऽनुवर्तन्ते, 35 तत्र 'नाम' इत्येतद् विशेषयितुं तत्रादाय मिथस्तेन प्रहृत्येति' प्रथमांशः, 'नाम्ना' इत्येतद् विशेषयितुं 'सरूपेण' इति द्वितीयांशः, 'अन्यार्थे' इत्येतद् विशेषयितुं 'युद्धे' इति तृतीयांशः, अनुवर्तमानबहुव्रीहिसंज्ञां निवर्त्य संज्ञान्तरविधानार्थम् 'अव्ययीभावः' इत्यंशः, इति मूलांशघटना, तत्र प्रथमांशे वाक्यद्वयम्, तत्र मध्यस्थो 'मिथः'शब्दः काकाक्षिगोलकन्यायेनोभयत्र 40 सम्बध्यते, तथा च तत्र 'मिथ आदाय, तेन मिथः प्रहृत्य' इति वाक्यद्वयं जातम्, 'मिथः' इत्यव्ययमन्योऽन्यार्थं क्रियाव्यतिहारद्योतनाय, क्रियाव्यतिहारश्च-अन्येन चिकीर्षितायाः क्रियाया अन्येन हरणं-करणमिति प्रकृते का क्रिया ग्राह्येत्युक्तं-प्रथमवाक्ये 'आदाय' इति, द्वितीयवाक्ये 'प्रहृत्य' इति, 'इति'- 45 शब्दः 'सरूपेण' इति च तन्त्रेणावृत्त्या वा वाक्यद्वयेऽपि सम्बध्यते, इतिशब्दो विषयविशेषलाभार्थो लौकिकीं विवक्षामनुसरति, तेनेह यावदनुपपन्नमनुक्तं वा तत् सर्वं लभ्यते, लोके ह्यन्योऽन्यस्य, अन्या वाऽन्यस्याः केशेषु गृहीत्वा कलहायेते, दण्डैर्दण्डैर्वा युद्धं प्रवर्त्तते इति विशेषतो दृश्यते, तामेव विवक्षां 50 संकेतयितुं 'युद्धे' इति पदं दत्तम्, 'सरूपेण' इत्यस्य 'रूपेण सह वर्तमानेन' इति नार्थः, किन्तु समानं रूपमस्य तेन, रूपशब्दः श्रुतिपर्यायः, केन समानरूपं? प्रत्यासत्त्या येन सह समस्यते तेन, अन्यथा तदानर्थक्यात्, नहि तदस्ति यन्न केनचित् समानरूपम्, गवादयो हि शब्दाः सर्वेऽपि वाक्यान्तरस्थैर्गे- 55 वादिशब्दैः समानश्रुतयो भवन्ति, 'तत्र' इत्यनेन सप्तम्यन्तं 'तेन' इत्यनेन च तृतीयान्तं [नाम] ग्राह्यम्, 'मिथः' इत्यनेन क्रियाव्यतिहारलाभः, 'युद्धे' इति 'अन्यार्थे' इत्यस्य विशेषणं, 'युद्धेऽन्यपदार्थे सति' इत्यर्थानुरोधात् सप्तम्यन्तमपि 'युद्धे' इति पदं विषयविभाजकेतिशब्दसामर्थ्यात् विभक्तिविपरिणामेन 'आदाय 60 प्रवृत्तं युद्धं, प्रहृत्य प्रवृत्तं युद्धम्' इति समासार्थप्रतीतिकरम्, अत एव न सति सप्तमी, किन्तु विषयसप्तमी-'युद्धविषये' इति 'अन्यार्थे' इति च वाक्यद्वयेऽपि सम्बध्यते, एवं च सर्वसंकलनया निष्पन्नं सूत्रार्थमाह-**तत्रेति सप्तम्यन्तं नामे**त्यादिना, आदानक्रियाधिकरणं सप्तम्यन्तं नाम 'मिथ आदाय-गृहीत्वा 65 कृतं युद्धम्' इति क्रियाव्यतिहारे योत्ये समानरूपेण नाम्नाऽन्यपदार्थे समस्यते, सोऽव्ययीभावः; प्रहारसाधनं तृतीयान्तं नाम 'मिथः प्रहृत्य कृतं युद्धम्' इति क्रियाव्यतिहारे योत्ये समानरूपेण नाम्नाऽन्यपदार्थे समस्यते, सोऽव्ययीभाव इति च पृथगेव लक्ष्यसंस्कारकं महावाक्यमिति भावः । 70

केचिदिह 'युद्धे' इति पदं नाधीयते, इतिशब्दबलाच्च युद्धरूपविषयविशेषं मन्यन्ते । "तत्र तेनेदमिति सरूपे०" [२. २. २८.] इति पाणिनीयसूत्रे 'आदाय, प्रहृत्य' इति पदद्वयं नोपादीयते, इतिशब्दबलाच्च तल्लाभो वर्ण्यते, तन्मते च क्वचित् तथार्थविवक्षाभावेऽपि भवति समासः यथा-"कर्णा- 75 कर्णिप्रथितमयशः" इत्यादौ "हस्ताहस्तिमिषात् स्पृशन् कुचतटीम्" इत्यादौ च केवलं परस्परं हस्तप्रहार एव विवक्षितो न तु युद्धमिति, तदपि भिन्नविषयतयोदाहार्यं भवति; स्वमते तु बहुलग्रहणेनैवेदृशप्रयोगाणां संग्रहः ।

ननु *संज्ञा संज्ञान्तरबाधिका न* इति न्यायाद् बहुव्रीहि-संज्ञाप्यस्तु, नैवम्-"संख्या समाहारे द्विगुश्च०" [ ३. १. ९९. ] इत्यत्र चकारग्रहणाद् द्वितीया संज्ञा न भवति। ननु युद्ध-क्रियायामेवायं समासः, स चान्यपदार्थ इति "एकार्थं चा०" [ ३. १. २२. ] इति बहुव्रीहिणैव सिध्यतीति किं संज्ञान्तरेण, इजन्तश्च 'परमदण्डादण्डि' इति पदान्तरेण समासव्युदासार्थं तिष्ठद्ग्वादिषु पठनीयः, तस्य चाव्ययत्वमिति किमनेन; न चान्य-पदार्थस्य प्रथमान्तत्वात् कथं तेन समास इति वाच्यम्, 'केशानां च केशानां चान्योन्यस्य ग्रहणं यस्मिन् युद्धे' इति विग्रहात्, द्वितीयादिग्रहणं वा बहुव्रीहिविधानसूत्रे न विधास्याम इति चेत्? उच्यते-एकशेषबाधनार्थमिदम्, तथाहि-केशेषु च केशेषु च गृहीत्वा कृतं युद्धं, दण्डैश्च दण्डैश्च प्रहृत्य कृतं युद्धमित्यत्र ग्रहणप्रहरणयोः सह विवक्षितत्वादेकशेषप्राप्तौ वचन-सामर्थ्यात् समूहान्यथानुपपत्त्या समूहविषयया२नया२व्ययी-भावसंज्ञया२नवकाशया बाध्यते, पूर्वेण तु बहुव्रीहावेकशेषो बाधितुं न शक्यते तस्यान्यत्र सावकाशत्वाद् वृक्षा इतिवदिति लघुन्यासकारः।

अथोदाहरणावसर इति सविग्रहमुदाहरति-**केशेषु च केशेषु च मिथो गृहीत्वा कृतं युद्धं-केशाकेशि,** इति-विग्रहवाक्ये 'केशेषु' इत्यत्र वैषयिकाधिकरणे सप्तमी, "ऐकार्थ्ये" [ ३. २. ८. ] इति स्यादेर्लुपि 'केशकेश' इति समासात् "इज् युद्धे" [ ७. ३. ७४. ] समासान्ते इचि सति "इच्यस्वरे दीर्घ आच्च" [ ३. २. ७२. ] इति प्रथमकेशशब्दस्या-कारस्य दीर्घे आकारे वा "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इति द्वितीयकेशशब्दस्याकारलोपे च 'केशाकेशि' इति समासरूपनाम्न उत्पन्नायाः सेः "अनतो लुप्" [ ३. २. ६. ] इति लुपि-'केशाकेशि' इति सिद्धम्।

अतिदिशति-**एवमिति**-केशाकेशिवद् उदाहरणान्तरमपि ज्ञेयम्, किं तदित्याह-**कचाकचि,** इति-समासो२यम्, कचेषु च कचेषु च मिथो गृहीत्वा कृतं युद्धमिति विग्रहः, शेषं केशा-केशिवदवसेयम्, एवम्-**बाहुबाहवि;** इति-समासो२यम्, बाह्वोश्च बाह्वोश्च मिथो गृहीत्वा कृतं युद्धमिति विग्रहः, प्रागव-दिचि "अस्वयम्भुवो२व्" [ ७. ४. ७०. ] इत्यवादेशे पूर्वस्य दीर्घे-च 'बाहूबाहवि' इति, आकारे तु-'बाहाबाहवि' इति।

पाणिनीयतन्त्रे तु नात्वं विधीयते, किन्तु पूर्वस्य दीर्घत्वमेव, तेन तन्मते 'बाहूबाहवि' इत्येव स्यात्, न तु 'बाहाबाहवि' इति, तथाहि-"तत्र तेनेदमिति सरूपे" [ पा० १. २. २८. ] इति सूत्रव्याख्यानावसरे भाष्ये-'अन्यपदार्थे सामान्यसूत्रेणैव बहुव्रीहिसमासे सति रूपसिद्धौ विशिष्य समासविधानं व्यर्थम्' इति शङ्कायाम् 'एकशेषप्रतिषेधार्थं पूर्वदीर्घार्थं च' इत्येवं समा-हितम्, तत्र च यद्यपि सूत्रे पूर्वपदस्य दीर्घो नोक्तस्तथापि 'इति'-शब्दबलात् सो२पि लभ्य इति नागेश आह; केचित् तु 'तेन-आ' इति पदच्छेदं कृत्वा पूर्वपदस्यात्वं विधीयत इति कथयन्ति; तत् तु सूत्रान्तरेण दीर्घस्य सिद्धेरेतत्सूत्रप्रत्याख्यानपरभाष्य-विरुद्धमिति न सहन्ते परे, फलैक्ये प्रत्याख्यानसङ्गतिर्न फलभेदे इति सिद्धान्तादिति।

सप्तम्यन्तमुदाहृत्य तृतीयान्तमुदाहरति-**दण्डैश्च दण्डैश्च मिथः प्रहृत्य कृतं युद्धमिति** विग्रहः, **'दण्डादण्डि'** इति च समासः, प्राग्वद् इच् दीर्घ आकारश्च विज्ञेयः, अति-दिशति-**एवमिति**-दण्डादण्डिवद् अन्यान्यप्युदाहरणानि ज्ञेया-नीत्यर्थः, तानि कानीत्याह-**यष्टायष्टि, मुष्टामुष्टि, अस्यसि,** इति-समासा इमे, एषां विग्रहवाक्यानीमानि-यष्टिभिश्च यष्टि-भिश्च मिथः प्रहृत्य कृतं युद्धम्, मुष्टिभिश्च मुष्टिभिश्च मिथः प्रहृत्य कृतं युद्धम्, असिभिश्चासिभिश्च मिथः प्रहृत्य कृतं युद्धमिति, अन्तिमे स्वरादित्वाद् दीर्घाकारौ न भवतः, शेषं प्राग्वदिति।

अथ पदप्रयोजनवर्णनावसर इति पृच्छति-**तत्रेति तेनेति च किमिति**-सप्तम्यन्त-तृतीयान्तग्रहणाभावे२पि केशाकेशि प्रभृतयः प्रयोगाः सेत्स्यन्त्येवेति शङ्कितुराशयः, प्रत्युदाहरणेनो त्तरयति-**केशांश्च केशांश्चे**त्यादि-नात्रधिकरणविवक्षा करण-विवक्षा वा, किन्तु कर्मविवक्षा, तत्र समासो मा प्रसाङ्क्षीदिति तत्रेति तेनेति चावश्यकमित्यर्थः, पुनः पृच्छति-**आदायेति प्रहृत्येति च किमिति**-अयमाशयः प्रश्नस्य-'युद्धे' इत्युक्तत्वादेव ग्रहण-प्रहरणयोर्लब्धत्वात् तदुपादानमनर्थकमिति, प्रत्युदाहरणमुखेनो-त्तरयति-**केशेषु च केशेषु च स्थित्वे**त्यादि-अयमाशयः-नावश्यं केश-दण्डादिर्ग्रहण-प्रहारविषय एव, अपि तु स्थाना-२२-गमनादिविषयो२पि भवितुमर्हतीति तत्र समासाद्यप्रवृत्त्यर्थ-मादाय-प्रहृत्येतिपदयोरुपादानमावश्यकमिति। पुनः पृच्छति-**मिथ इति क्रियाव्यतिहारः किमिति**-क्रियाव्यतिहार-द्योतनार्थं 'मिथः' इति पदोपादानं किमर्थमिति प्रश्नाशयः, प्रत्युदाहरणेनोत्तरयति-**केशेषु च केशेषु च गृहीत्वा कृतं युद्धमनेनेति**-अयमाशयः—एकः सकेशः, अन्यो२केश इति न मिथोभावः, युद्धं वर्तते, अत्रापि समासो मा प्रसाङ्क्षीदिति मिथोग्रहणमावश्यकमिति। पुनः पृच्छति-**सरूपेणेति किमिति,** प्रत्युदाहरणविधयोत्तरयति-**हस्ते च पादे चे**त्यादि-'सरूपेण' इत्यस्याग्रहणे२त्रासमानरूपेणापि नाम्ना समासः प्रसज्येत, तद्वा-रणार्थं 'सरूपेण' इत्यस्यावश्यकत्वमित्यर्थः, यदा च हस्तश्च पादश्चेति कृत्वा "प्राणितूर्याङ्गाणाम्" [ ३. १. १३७. ] इत्येकत्वे हस्तपादे च २ मिथो गृहीत्वा कृतं युद्धमिति क्रियते तदा 'हस्तपादाहस्तपादि' इति भवति। पुनः पृच्छति-**युद्धे**

इति किमिति, उत्तरयति-**हस्ते च हस्ते चे**त्यादि-अत्र सख्यार्थे परस्परहस्तग्रहणेन क्रियाव्यतिहारेऽपि युद्धाभावात् समासो नेष्यते, सोऽपि मा प्रसाङ्क्षीदिति 'युद्धे' इत्यावश्यकम्। 'युद्धे' इति विषयसप्तमी, तेन युद्धविषयायां युद्धभिन्नायामपि 5 क्रियायां भवति, तदाह-**बाहूबाहवि व्यासजेतामि**ति-बाहोश्च २ मिथो गृहीत्वा व्यासङ्गः कृत इति विग्रहः, क्रियाव्यतिहारे आत्मनेपदं, ह्यस्तन्या आताम्, व्यासङ्गं कृतवन्तावित्यर्थः, माघकविप्रयोगोऽयम्, पूर्णं पद्यं चेदम्-

रोषावेशादाभिमुख्येन कौचित्, पाणिग्राहं रंहसावोपयान्तौ।
10 हित्वा हेतीर्मल्लवन्मुष्टिघातैर्घ्नन्तौ बाहूबाहवि व्यासजेताम्॥"

[शि० सर्ग-१८, श्लो० १२] इति, शिशुपालवधकाव्ये शिशुपालयुद्धप्रसङ्गे भटयोर्वर्णनमिदम्, अत्र च क्रियाव्यतिहारोऽस्त्येव, युद्धविषयत्वं च स्पष्टमिति व्यासङ्गाचरणेऽपि समासादिः प्रयुक्तः। अस्याव्ययीभावसंज्ञा विधीयते, तस्य किं फलमित्याह-15 **अव्ययीभावप्रदेशाः** इत्यादिना-प्रदेशः प्रयोजनस्थानं, संज्ञया हि संज्ञिनः प्रदिश्यन्ते-उच्चार्यन्तेऽत्रेति कृत्वेति॥ ३. १. २६.॥

## नदीभिर्नाम्नि। ३। १। २७॥

**त० प्र०—नदीवाचिभिर्नामभिर्नाम समस्यते, नाम्नि-20 संज्ञायामन्यपदार्थे, स च समासोऽव्ययीभावसंज्ञो भवति। उन्मत्ता गङ्गा यत्र स-उन्मत्तगङ्गं देशः, एवं-लोहितगङ्गम्, तूष्णींगङ्गम्, शनैर्गङ्गम्, इमानि देशनामानि। नदीभिरिति बहुवचननिर्देशात् तद्विशेषाणां स्वरूपस्य च ग्रहणम्। नाम्नीति किम्? शीघ्रगङ्गो देशः। अन्यपदार्थ इत्येव-कृष्णा 25 चासौ वेण्णा च-कृष्णवेण्णा, एवं शुष्कतापी॥ २७॥**

**श० म० न्यासानुसन्धानम्-नदीभिरि**त्यादि। 'नाम, नाम्ना, समासः, अव्ययीभावः' इति पूर्वतोऽनुवर्तन्ते, तत्र 'नाम' इति प्रथमान्तं यथास्थितमेव सूत्रार्थेऽन्वेति, 'नाम्ना' इति तृतीयान्तं च 'नदीभिः' इति बहुवचनान्तविशेष्यपदसान्नि-30 ध्याद् बहुवचनान्तत्वेन विपरिणमते, तथा च यः सूत्रार्थो निष्पन्नस्तमाह-**नदीवाचिभिरि**त्यादिना। अथ सविग्रहमुदाहरति-**उन्मत्ता गङ्गा यत्र स** इति विग्रहः, **उन्मत्तगङ्गम्** इति समासः, "परतः स्त्री पुंवत्०" [३. २. ४९.] इति पुंवद्भावे "द्वन्द्वैकत्वाव्ययीभावौ" इति लिङ्गानुशासनवचनात् 35 क्लीबत्वे "क्लीबे" [२. ४. ९७.] इति ह्रस्वत्वे स्यादेः "अमव्ययीभाव०" [३. २. २.] इत्यमादेशे-उन्मत्तगङ्गमिति, **देशः** इति संज्ञाविषयः। अतिदिशति-**एवमि**ति-उन्मत्तगङ्गवद् अन्यान्यप्युदाहरणानि ज्ञेयानि, तानि कानीत्याह-**लोहितगङ्गम्, तूष्णींगङ्गम्, शनैर्गङ्गम्,** इति-इमे समासाः, विग्रहवाक्यानीमानि-लोहिता गङ्गा यत्र सः, तूष्णींयोगात् 40 तूष्णीं गङ्गा यत्र सः, शनैर्योगात् शनैर्गङ्गा यत्र सः, इति।

ननु रूढिशब्दार्थनिरूपिकायां संज्ञायां समासस्थले यौगिकार्थप्रतीतिविघटनाद् योगार्थप्रत्यायकविग्रहवाक्यरचना नोचिता, अत एव तत्र तत्र तान्त्रिकैर्वाक्येन संज्ञानवगमाद् नित्यसमासोऽयमित्युच्यते, 'अविग्रहो नित्यसमासोऽस्वपदविग्रहो वा' इति 45 सिद्धान्तोऽपि श्रूयते, तथा चात्र कथं स्वपदविग्रहो दर्शित इति चेत्? उच्यते-बहुलाधिकारादेवात्र वा समासः, तेन पक्षे विग्रहवाक्यमपि भवति; एवं चाव्ययीभावाभावेऽपि बहुव्रीहिर्न भवति, संज्ञायामेव नदीवाचकस्य समास इति स्वीकारात्, बहुव्रीहिणा च संज्ञानवगतेः; यत्र चोत्सर्गशास्त्रस्य प्रवृत्तिरभिमता 50 भवति तत्र विकल्पार्थं वाग्रहणं करोत्याचार्यः, यथा-"द्वित्रिचतुष्पूरणाग्रादयः" [३. १. ५६.] इति सूत्रे "समेंऽशेऽर्धे नवा" [३. १. ५४.] इति सूत्राद् वाग्रहणमनुवर्त्य पक्षे षष्ठीसमासः साधितः, एतच्च तत्रैव वृत्तौ स्पष्टम्, एवं च बहुलाधिकारेऽपि न सर्वत्रोत्सर्गशास्त्रप्रवृत्तिः पाक्षिकीति विभाव्यम्। 55

अथेह बहुव्रीहिसंज्ञापि कस्मान्न भवति, नहि संज्ञानां बाध्यबाधकभावोऽस्ति, एकत्रानेकस्या अपि संज्ञाया दर्शनात्, अत एव स्मर्यते-*संज्ञा न संज्ञान्तरबाधिका* इति; न च बहुव्रीहिसंज्ञायां कच् प्राप्नोतीति वाच्यम्, नियतरूपा हि संज्ञा भवतीत्यकजन्तैव सेति कच् न भविष्यति; अत्र केचित्—बहुला-60 धिकाराद् बहुव्रीहिसंज्ञा न भविष्यतीति। वस्तुतस्तु—इह समासप्रकरणे विशेषसंज्ञा विशेषसंज्ञान्तरस्य बाधिका भवति, अत एव विशेषसंज्ञान्तरसमावेशार्थं तत्र तत्र चकारो दीयते, यथा-"विशेषणं विशेष्येणैकार्थं कर्मधारयश्च" [३. १. ९६.], "संख्या समाहारे द्विगुश्चा०" [३. १. ९९] इत्यादौ। 65

**इमानि देशनामानी**ति नामविषयतामेषां दर्शयति। सूत्राणां सूचकत्वेन लघीयस्त्वस्यावश्यकत्वेऽपि बहुवचनेन यो निर्देशः स नोचित इत्याशङ्कायामाह-**नदीभिरि**त्यादि, अयमाशयः- बहुवचनमर्थप्राधान्यविवक्षार्थम्, अर्थप्राधान्ये च नदीशब्दवाच्यार्थानां बहुत्वाद् बहुवचनमुपपन्नम्, तत्रार्थे व्याक-70 रणकार्यासम्भवादन्वयानुपपत्त्या नदीपदस्य नदीवाचकशब्दसामान्ये लक्षणा, ततश्च गङ्गा-यमुनादिनदीविशेषाणां नदीशब्दस्य च ग्रहणं सिध्यति, **'स्वरूपस्य च ग्रहणम्'** इति कथनेनोत्तरसूत्रे 'पञ्चनदम्' इत्यत्र स्वरूपग्रहणम्, पर्यायाणां च श्रोतस्विनी-निम्नगा-सिन्धुप्रभृतीनां च न ग्रहणम्। पुनः 75 पृच्छति-**नाम्नीति किमि**ति प्रत्युदाहरणमुखेनोत्तरयति-**शीघ्रगङ्गो देशः** इति- शीघ्रा गङ्गा यत्र स इति विग्रहः, नामत्वाभावादत्र नानेन समासः, किन्तु "एकार्थं चा०" [३. १. २२.] इति सामान्यसूत्रेण बहुव्रीहिः, पूर्वस्य पुंवद्भावः,

"गोश्चा०" [ २. ४. ९६ ] इत्यन्ते ह्रस्वश्च, नाम्नीति ग्रहणाभावेऽनेन समासः प्रसज्येत, सति तस्मिन् क्लीबत्वं स्यादेरम्भावश्च प्रसज्येतेत्यर्थः। 'अन्यपदार्थे' इत्यस्य व्यावर्त्यं दर्शयितुमवतारयति– **अन्यपदार्थ इत्येवे**ति, सविग्रहं व्यावर्त्यमाह– 5 **कृष्णा चासौ वेण्णा चे**ति विग्रहः, **कृष्णवेण्णा** इति समासः, अत्र संज्ञासत्त्वेऽपि नान्यपदार्थवृत्तिः, किन्तु स्वार्थपरत्वमेवेति नानेन समासः, किन्तु "विशेषणं०" [ ३. १. ९६. ] इत्यनेन कर्मधारयसमासः, 'अन्यपदार्थे' इत्यस्याभावेऽत्राप्यनेन समासः प्रसज्येत, तथा सति क्लीबत्वं स्यादेरम्भावश्च 10 प्रसज्येतेत्यर्थः, अतिदिशति–**एवमि**ति, **शुष्कतापी** समासोऽयम्, शुष्का चासौ तापी चेति विग्रहः, शेषं शीघ्रगङ्गावज्ज्ञेयमिति ॥ ३. १. २७ ॥

## संख्या समाहारे । ३ । १ । २८ ॥

**त० प्र०**—अन्यपदार्थ इति निवृत्तम्। संख्यावाचि नाम 15 नदीवाचिभिर्नामभिः सह समस्यते, समाहारे गम्यमाने, स च समासोऽव्ययीभावसंज्ञो भवति। द्वयोर्यमुनयोः समाहारो–द्वियमुनम्, एवं–त्रियमुनम्, पञ्चनदम्, सप्तगोदावरम्; अत्राव्ययीभावत्वे समासान्तोऽम्भावश्च सिद्धो भवति। समाहार इति किम्? एका नदी–एकनदी, द्वीरावतीको देशः। 20 द्विगुबाधनार्थं वचनम्। अन्ये तु 'पूर्वपदप्राधान्येऽव्ययीभावः–गोदावरीणां सप्तत्वं सप्तगोदावरम्, समाहारे तु द्विगुरेव' इत्याहुः; सप्तानां गोदावरीणां समाहारः–सप्तगोदावरि, द्विगोदावरि, इत्यादि ॥ २८ ॥

**श० म० न्यासानुसन्धानम्–संख्ये**त्यादि। समाहारे 25 यद्यपि पदार्थद्वयसमूहरूपोऽन्योऽर्थ एव प्रधानं तथाप्युभयपदार्थातिरिक्तस्यार्थस्याभानादन्यार्थत्वाभाव इति भणनाद् 'अन्यार्थे' इति निवर्तते, एतदाह–**अन्यार्थे इति निवृत्तमि**ति–तत्फलं चाग्रे वक्ष्यति। 'नाम, नाम्ना, समासः, अव्ययीभावः' इत्यनुवर्तन्ते, तत्र 'संख्या' इति प्रथमान्तं प्रथमान्तेन 'नाम' इत्य- 30 नेन, 'नदीभिः' इति तृतीयान्तं 'नाम्ना' इति तृतीयान्तेन चान्वेति, तथा च यः सूत्रार्थः सम्पन्नस्तमाह–**संख्यावाचि नामे**त्यादिना।

अथ सविग्रहमुदाहरति–**द्वयोर्यमुनयोः समाहार** इति विग्रहः, **द्वियमुनम्** इति समासः, अतिदिशति–**एवमि**ति, 35 **त्रियमुनम्**, समासोऽयं, विग्रहस्तु–तिसृणां यमुनानां समाहार इति, क्वचित् 'त्रिगङ्गम्' इति पाठः, **पञ्चनदम्**, समासोऽयम्, विग्रहस्तु–पञ्चानां नदीनां समाहार इति, **सप्तगोदावरम्**, समासोऽयम्, विग्रहस्तु–सप्तानां गोदावरीणां समाहार इति।

ननु समाहारे "संख्या समाहारे द्विगु०" [ ३-१. ९९. ] 40 इत्यनेन समासो विधास्यत एव, किमनेन समासविधाने प्रयोजनमित्यत आह–**अत्राव्ययीभावत्वे** इत्यादिना, **अत्र** निरुक्तोदाहरणेषु, **अव्ययीभावत्वे** प्रकृतसूत्रेण समासस्याव्ययीभावसंज्ञायां सत्याम्, **समासान्तः** "संख्याया नदी-गोदावरीभ्याम्" [ ७. ३. ९१. ] इति समासान्तोऽत्, **च** पुनः, 45 **अम्भावः** "अमव्ययीभावस्यातोऽपञ्चम्याः" [ ३. २. २. ] इति स्यादिविभक्तेः 'अम्' इत्यादेशश्च, **सिद्धो भवति** अव्ययीभावसंज्ञाविरहे केनाप्यप्राप्तः प्रकृतसूत्रेणाव्ययीभावसंज्ञायां निर्दिष्टसूत्रेणोपपन्नो भवति। अयमाशयः–"संख्या समाहारे द्विगु०" [ ३. १. ९९. ] इति सूत्रेण समासे द्विगुसंज्ञा स्यात्, 50 प्रकृतसूत्रेण समासे त्वव्ययीभावसंज्ञा स्यात्, तत्र 'द्वियमुनम्, त्रियमुनम्' इत्यत्र द्विगुसंज्ञायां पुंवद्भावस्य समानत्वेऽपि "द्विगोः समाहारात्" [ २. ४. २२. ] इति ङीः प्रसज्येत, पात्रादिपाठाभ्युपगमेन ङ्यभावेऽपि, यद्यपि द्विगौ समाहारत्वात्, अव्ययीभावे चाव्ययीभावत्वात् क्लीबत्वेन द्विगौ "अतः स्यमोऽम्" 55 [ १. ४. ५७. ] इति स्यमोरमादेशे, अव्ययीभावे च "अमव्ययीभाव०" [ ३. २. २. ] इति स्यमोरमादेशे च समानतास्ति, तथापि तृतीयादिषु विशेषः, द्विगौ सति 'द्वियमुनेन, द्वियमुनाय' इत्यादि स्यात्, इष्यते चापञ्चमीस्थले 'द्वियमुनम्' इत्येव, तच्चाव्ययीभावसंज्ञामन्तरेण न सिध्यति, अव्ययीभावसंज्ञायां तु 60 सर्वस्यादेः पञ्चमीवर्जितायाः "अमव्ययीभाव०" [ ३. २. २. ] इत्यमादेशो भवति; एवम्–'पञ्चनदम्, सप्तगोदावरम्' इत्यत्र च द्विगुसंज्ञायां 'पञ्चनदि, सप्तगोदावरि' इति शब्दस्वरूपं स्यात्, क्लीबे च विविधानि रूपाणि श्रूयेत्, इष्यते च 'पञ्चनदम्, सप्तगोदावरम्' इति सर्वत्र स्यादौ, तच्चाव्ययीभावमन्तरेण न सिध्येत्, 65 अव्ययीभावसंज्ञायां तु "संख्याया नदी-गोदावरीभ्याम्" [ ७. ३. ९१. ] इति समासान्तेऽति "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इतीकारलोपे "अमव्ययीभाव०" [ ३. २. २. ] इति स्यादेरमादेशे उक्तरूपं सिध्यतीति।

अथ पदकृत्यं पृच्छति–**समाहार इति किमि**ति, प्रत्युदा- 70 हरणमुखेनोत्तरयति–**एका नदी** इति विग्रहः, **एकनदी** इति "पूर्वकालैक०" [ ३. १. ९७. ] इति समासः, तस्य च तत्पुरुषसंज्ञा कर्मधारयसंज्ञा च, **द्वीरावतीको देश** इति–अत्र द्वे इरावत्यौ यत्र स इति "एकार्थं चा०" [ ३. १. २२. ] इति बहुव्रीहौ "ऋन्नित्यदितः" [ ७. ३. ११७. ] इति समासान्ते 75 कचि 'द्वीरावतीकः' इति समासस्वरूपम्, अयमन्यपदार्थप्रधानबहुव्रीहिरिति प्रदर्शनाय 'देशः' इति समासविशेष्यम्। अत्रायमाशयः–'समाहारे' इत्यस्याभावे विशेषविहितत्वात् परमपि तत्पुरुषं प्रबाध्यानेनाव्ययीभावे "संख्याया नदी-गोदावरीभ्याम्"

[ ७. ३. ९१. ] इति नित्यमति समासान्ते क्लीबत्वेन 'एकनदम्' इत्यनिष्टमापद्यते, एवमन्यपदार्थे परत्वाद् बहुव्रीहिं प्रबाध्यानेनाव्ययीभावे क्लीबत्वाद् ह्रस्वत्वे च 'द्वीरावति देशः' इति चानिष्टमापद्येतेति ।

ननु समाहारे "संख्या समाहारे द्विगु०" [ ३. १. ९९. ] इत्यनेन समासस्य विधास्यमानत्वाद् विफलोऽयं योग इत्याशङ्कायामाह-**द्विगुबाधनार्थं वचनमिति**-एतत्सूत्राभावे 'पञ्चानां नदीनां समाहारः' इत्यत्र "संख्या समाहारे द्विगु०" [ ३. १. ९९. ] इत्यनेन समासे द्विगुसंज्ञा स्यात्, तस्य च समाहारविषयकस्य क्लीबत्वाद् ह्रस्वत्वे 'पञ्चनदि' इति स्यात्, एतत्सूत्रसद्भावे तु "सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् ।" इति परमपि द्विगुं विशेषविहितत्वात् प्रबाध्यानेनाव्ययीभावे प्रागुक्तरीत्या 'पञ्चनदम्' इति सिध्यति, तदेव चेष्यत इति ।

मतान्तरमाह-**अन्ये तु-पूर्वपदार्थप्राधान्येऽव्ययीभावः** इति-अत्रायमाशयः—इह कश्चित् समासः पूर्वपदार्थप्रधानः, कश्चिदुत्तरपदार्थप्रधानः, कश्चिदन्यपदार्थप्रधानः, कश्चिदुभयपदार्थप्रधानः; तत्र पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो बहुव्रीहिः; अयं प्रायोवाद इति तूक्तपूर्वमेव, अथापि केचन पूर्वपदार्थप्रधान एवाव्ययीभाव इत्यभिमन्यन्ते; नन्वेवं सति तन्मते 'सप्तगोदावरम्' इत्यादावव्ययीभावसमासे कथं पूर्वपदार्थप्रधानत्वमित्याह-**गोदावरीणां सप्तत्वं-सप्तगोदावरमिति**-यद्यपि "आ दशभ्यः संख्या संख्येये" इति सिद्धान्तात् सप्तशब्दः सप्तत्वसंख्याविशिष्टे वर्तते तथापि ते निरुक्तसिद्धान्तस्य प्रायिकत्वं मन्वाना गोदावरीणां सप्तसप्तत्वमिति संख्यावृत्तित्वमास्थाय पूर्वपदार्थस्य प्राधान्यं समर्थयन्ते; यद्वा सप्तशब्दस्य संख्येयवृत्तित्वेऽपि 'सप्त गोदावर्यः-सप्तगोदावरम्' इत्यव्ययीभावः, अत्र पूर्वं सप्तशब्दार्थप्रक्रमे 'के सप्त ?' इत्याकाङ्क्षायां यदा 'गोदावर्यः' इत्युच्यते तदोत्तरपदार्थस्य विशेषणत्वं पूर्वपदार्थस्य च विशेष्यत्वमिति भवति पूर्वपदार्थस्य प्राधान्यम्; अथवा 'सप्त गोदावर्यः' इति वाक्ये सप्तार्थस्य विशेषणत्वेऽपीह वृत्तौ यथा-'पञ्च परिमाणमेषां-पञ्चकाः शकुनयः, त्रिकाः शालङ्कायनाः' इति पञ्चत्वपरः पञ्चशब्दः, त्रित्वपरश्च त्रिशब्दः, तद्वत् सप्तत्वे सप्तशब्दः, तस्य विशेषणत्वमुत्तरपदार्थ इति भवति पूर्वपदार्थस्य प्राधान्यमित्यपि समर्थनप्रकारः ।

अस्मिन् विषये कैयटः-"ननु द्वियमुनमित्यादिमूलोदाहरणेऽपि पूर्वपदार्थप्राधान्यं नास्ति, समाहारो ह्यत्र समासार्थः, स च यदि समाहरणं समाहार इति भावरूपस्तदाऽन्यपदार्थप्राधान्यम्, अथ समाह्रियते इति समाहारः, तथापि द्वे यमुने समाहृते द्वियमुनमिति पूर्वपदार्थविशिष्ट उत्तरपदार्थः प्रधानम्; नैष दोषः-समाह्रियमाणार्थः समाहारः, तत्र पूर्वं द्विशब्दार्थप्रक्रमे 'के द्वे ?' इत्याकाङ्क्षायां यदा 'यमुने' इत्युच्यते तदोत्तरपदार्थस्य विशेषणत्वं, विशेष्यत्वं पूर्वपदार्थस्य; अथवा वृत्तिविषये द्व्यादयः संख्यानमात्रे वर्तन्ते, इति यमुनयोर्द्वित्वमित्यर्थे द्वियमुनशब्दो वर्तेत इति भवत्येव पूर्वपदार्थप्राधान्यम्" इति ।

दर्शितमतान्तरविषये पूर्वोक्तमते 'पूर्वपदार्थे' इति निवेश्य समाहारार्थे चानिवेश्याव्ययीभावः, यदाह-"संख्या वंश्यैश्च पूर्वार्थे" इति सूत्रम्; कैयटमते च कर्मसाधनसमाहारार्थमाश्रित्य 'पूर्वपदार्थे' इति चानिवेश्यैव पूर्वपदार्थेऽव्ययीभाव इति दर्शितम्; अथोभयमतेऽपि भावसाधनसमाहारार्थे द्विगुर्भवतीत्याह-**समाहारे तु द्विगुरेवेत्याहुरिति**, तत्र **सप्तानां गोदावरीणां समाहारः** इति विग्रहवाक्यं, **सप्तगोदावरि** इति समासः; एवं-**द्विगोदावरि** इति समासः, द्वयोर्गोदावर्योः समाहार इति तस्य विग्रहः । स्वमते त्वत्र 'सप्तगोदावरम्, द्विगोदावरम्' इत्येव स्यात्, 'समाहारे' इति भणनात्, एवम् "आ दशभ्यः संख्या संख्येये वर्तते" इत्यस्य "जाति-तदन्यप्रवृत्तिनिमित्तकानां शब्दानां मध्ये जातिप्रवृत्तिनिमित्तकस्यैव विशेष्यवाचकत्वम्" इत्यस्य च परिपालनं भवति ॥ ३. १. २८. ॥

## वंश्येन पूर्वार्थे । ३ । १ । २९ ॥

**त० प्र०—विद्यया जन्मना वा प्राणिनामेकलक्षणसंतानो वंशः, तत्र भवो वंश्यः, स इहाद्यः कारणपुरुषो गृह्यते, तद्वाचिना नाम्ना संख्यावाचि नाम समस्यते, पूर्वस्य पदस्यार्थेऽभिधेयेऽव्ययीभावश्च समासो भवति । एको मुनिर्वंश्यो व्याकरणस्य-एकमुनि व्याकरणस्य, एवं-द्विमुनि व्याकरणस्य, त्रिमुनि व्याकरणस्य । यदा तु विद्यया तद्वतामभेदविवक्षा तदैकमुनि व्याकरणं, द्विमुनि व्याकरणमित्यादि सामानाधिकरण्यं भवति; सप्त काशयो वंश्या राजस्य-सप्तकाशि राजस्य, एवं-त्रिकोशलं राज्यस्य, एकविंशतिभारद्वाजं कोशलस्य । पूर्वार्थे इति किम् ? द्वौ मुनी वंश्यावस्य-द्विमुनि, द्विमुनिकं व्याकरणम्, द्विमुनिरागतः । अन्यपदार्थे बहुव्रीहिरेव । अन्ये तु पूर्वार्थे इति विशेषं नेच्छन्ति, तन्मते-एकश्चासौ मुनिश्चेति कर्मधारयप्रसङ्गे द्वौ मुनी समाहृताविति द्विगुप्रसङ्गे, एको मुनिर्वंश्योऽस्येति बहुव्रीहिप्रसङ्गे चाव्ययीभाव एव समासो भवति ॥ २९ ॥**

**श० म० न्यासानुसन्धानम्-वंश्येनेत्यादि** । वंश्यशब्दं व्युत्पादयितुं वंशपदार्थमाह-**विद्यया जन्मना** वेत्यादि-विद्यासम्बन्धस्य जन्मसम्बन्धापेक्षया प्राधान्यं बोधयितुं 'विद्यया' इति प्राथम्येनोपन्यासः, तत्र विद्यया सम्बन्ध उपदेश्योपदेशकभावलक्षणोऽध्याप्याध्यापकभावलक्षणो वा, जन्मना

च सम्बन्धो जन्यजनकभावलक्षणः, **प्राणिनां** जीवानाम्, **एकलक्षणः** एकस्वभावः, **संतानः** प्रबन्धः परम्परेति यावत्, सन्तानिनामेकलक्षणत्वात् संतानोऽप्येकलक्षणो भवति तत्र विद्यैकलक्षणः-'वैयाकरणवंशः, अध्यापकवंशः' इत्यादि-5 तत्तच्छास्त्रादिलक्षणः, जन्मना च तत्तद्गोत्रादिरूपः, तथा च विद्याविषये गुरुपरम्परा चलति, जन्मविषये च पितृपरम्परा, आपस्तम्बसंहितायां गुरुपरम्परायाः श्रेष्ठत्वमित्थं प्रतिपादितम्-"यस्माद् धर्मानाचिनोति स आचार्यः, गुरुपरम्परा, तस्मै न द्रुह्येत् कदाचन, स हि विद्योपदेशतस्तं जनयति यच्छ्रेष्ठं 10 जन्म, मातापितरौ तु शरीरमेव जनयतः" इति, मनुरपि-"उत्पादक-ब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।" इति, ब्रह्म-वेदः, स चोपलक्षणं सर्वविद्यानाम्। **वंश** इति-"टुवमू उद्गिरणे" अतो वम्यते जन्यतेऽनेनेति "पा-दा-वमि०" [उणा० ५२८.] इति शे-वंश इति। **तत्र भवो वंश्य** इति-वंशे भव इति 15 "दिगादिदेहांशाद् यः" [६. ३. १२४.] इति ये वंश्य इति। ननु पाश्चात्योऽपि वंशे भवतीति सोऽपि वंश्य इत्युच्यत इति कश्चिन्मन्येतेति तदपाकरणाय पर्यायान्तरेणाह-**स इहाद्यः कारणपुरुषो गृह्यते** इति-सः-प्रकृतवंश्यशब्देन प्रतिपाद्यः, इह-प्रकृतसूत्रे, कारणपुरुषः-प्रथमप्रवर्तकमुन्यादिरेव, गृह्यते-20 ग्रहणविषयो भवति। ननु वंशे भवा इति व्युत्पत्त्या सर्वेऽपि पाठकाः कारकाश्च कथं न लभ्यन्ते, आद्य एव कथं गृह्यते? उच्यते-*गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्ययः* इति मुख्यतयाद्यप्रवर्तक एव गृह्यते, यद्वा वंश्यशब्दस्य तत्र प्रसिद्धिः, अत एवाचार्येण स्वोपज्ञाभिधानचिन्तामणिवृत्तौ वंश्यशब्दे "वंशे 25 साधुर्भवो वा" इति व्युत्पत्तिः प्रदर्शिता। **पूर्वार्थे** इत्यस्य 'पूर्वस्य पदस्यार्थः पूर्वार्थस्तस्मिन्' इत्यर्थः, पूर्वतोऽनुवर्तमानपदैः सम्पन्नं सूत्रार्थमाह-**तद्वाचिनेत्यादिना**।

अथोदाहरणावसर इति सविग्रहमुदाहरति-**एको मुनिर्वंश्य** इति विग्रहवाक्यम्, मुनिशब्दो विद्यावंशवाचीति सूच-30 नाय 'वंश्य' इत्युक्तम्, आद्यः-प्रथमः, कारणपुरुष इत्यर्थः, **'व्याकरणस्य'** इति कारणसम्बन्धे षष्ठी, **एकमुनि** इति समासः, सिद्धहेमशब्दानुशासनव्याकरणस्याद्यप्रवर्तक एक एव हेमचन्द्रप्रभुः, तेनैव वृत्तिन्यासादिकरणात्। पाणिनीयव्याकरणस्य द्वाभ्यां मुनिभ्यां प्रकारान्तरेण त्रिभिर्मुनिभिः प्रवर्ति-35 त्वादतिदेशेनोदाहरति-एवं **द्विमुनि व्याकरणस्य, त्रिमुनि व्याकरणस्येति**-द्वौ मुनी-पाणिनि-कात्यायनौ वंश्याविति विग्रहः, त्रयो मुनयः-पाणिनि-कात्यायन-पतञ्जलयो वंश्या इति विग्रहः, 'द्विमुनि, त्रिमुनि' इति च समासः, 'व्याकरणस्य' इति कारणसम्बन्धे षष्ठी, पाणिनीयव्याकरणस्य पाणिनि-कात्यायनप्रवर्तितत्वविवक्षायां 'द्विमुनि' इति, पाणिनि-40 कात्यायन-पतञ्जलिप्रवर्तितत्वविवक्षायां 'त्रिमुनि' इति चोदाहरणम्, उक्तोदाहरणत्रये पूर्वपदार्थप्राधान्याद् यथाक्रममुत्पन्नानां 'सि, औ, जस्' विभक्तीनाम् "अनतो लुप्" [३. २. ६.] इति सूत्रेण लुब् भवति। ननु यदि पूर्वपदार्थे एवायं समासस्तर्हि कथम् 'एकमुनि व्याकरणं, द्विमुनि व्याकरणम्' इति व्याक-45 रणे वृत्तिः?, अत्राह-**यदा तु विद्यये**त्यादि-तु इति विशेषप्रदर्शनार्थम्, **यदा** प्रकारान्तरसम्भवद्योतने, **विद्यया** व्याकरणाख्यया, **तद्वतां** विद्यावतां हेमचन्द्रसूरिप्रभृतीनाम्, **अभेदविवक्षा** यः स एको मुनिः स एव व्याकरणमित्यतिशयेन विद्यया योगं तस्याख्यातुमभेदविवक्षा, **यदा** यदि क्रियते, न तु 50 'अस्येदम्' इति भेदविवक्षा, तदा भवति, किं भवतीत्याह-**एकमुनि व्याकरणं, द्विमुनि व्याकरणमित्यादी**ति-षष्ठ्या भेदनिबन्धनत्वादभेदे प्रथमया सामानाधिकरण्यं भवतीत्यर्थः, अभेदविवक्षायामपि पूर्वपदार्थस्य प्राधान्यसत्त्वेऽनेनैव समासः, केवलं विशेषणविशेष्ययोः समानविभक्तिकत्वमित्येता-55 वानेव विशेषः।

अथ जन्मना वंश्यमुदाहरति-**सप्त काशयो वंश्याः** इति विग्रहः, **राज्यस्ये**ति कारणसम्बन्धे षष्ठी, **सप्तकाशि** इति समासः, अत्र काशे राज्ञोऽपत्यानीति "दुनादि०" [६. १. ११८.] इति ञ्यः, तस्य "बहुष्वस्त्रियाम्" [६. १. 60 १२४.] इति बहुत्वे लुपि-'काशयः' इति, अपत्यार्थप्रत्ययस्य लोपे सति प्रकृतिमात्रमपत्यार्थवाचि भवति, राज्यस्य जनकाः सप्त काशिनृपतनया इत्यर्थः, यद्यपि राज्येन सह काशीनां न जन्यजनकभावलक्षणो जन्मसम्बन्धः, न वा विद्यासम्बन्धः, तथापि राज्यप्रतिष्ठापका एव राज्यस्य जनका इति यस्मिन् राज्ये 65 सप्त काशयः प्रतिष्ठापकास्तद् राज्यं सप्तकाशि भवति, राज्यस्य च सप्तकाशि भवति, भेदाभेदावलम्बनात्। अतिदिशति-**एवमिति, त्रिकोशलं** समासोऽयम्, त्रयः कोशला वंश्या इति विग्रहः, कोशलस्य राज्ञोऽपत्यानीति प्राग्वद् ञ्ये तस्य बहुत्वे लुपि 'कोशलाः' इति, राज्यस्य जनकास्त्रयः कोशलनृपतनया 70 इत्यर्थः। यदा तु कोशलशब्दः कोशलराज्यपरस्तदा तु तस्य सम्बन्धित्वमित्याह-**एकविंशति भारद्वाजं कोशलस्येति**-एकविंशतिर्भरद्वाजा वंश्या इति विग्रहः, कोशलराज्यस्य जनकाः प्रतिष्ठापका एकविंशतिमिता भरद्वाजवंश्या इति तदर्थः, अत्र भरद्वाजस्य युवापत्यानीत्यर्थेऽण्, बिदादित्वादञि तु बहुत्वे लुप् 75 स्यादित्येके; भरद्वाजस्य इमे इत्येव कार्यं "तस्येदम्" [६. ३. १६०.] इत्यण्, अपत्ये तु बिदाद्यञो "यञञः०" [६. १. १२६.] इति बहुषु लोपः स्यात्, यद्यप्येकविंशतिशब्दस्य विशेषलक्षणेनैकत्वं तथापि पूर्वपदार्थस्यैकविंशतिशब्दवाच्यस्य

बहुत्वाद् भारद्वाजा इति बहुत्वमेव शब्दशक्तिस्वाभाव्यादिति लघुन्यासकारः; तत्त्वबोधिनीकारस्त्वेवमाह–"एकविंशतिर्भरद्वाजा वंश्या इति विग्रहः"। ननु भरद्वाजाद् बिदाद्यञो "यञञोश्च" [पा. सू. २. ४. ६४.] इति लुक् प्राप्नोति, न च वर्तिपदानां 5 स्वार्थोपसर्जनैकत्वविशिष्टार्थान्तरोपसंक्रमाल्लुगभाव इति कैयटोक्तमाहर्तव्यम्, वृत्तिप्रवेशात् प्रागेव प्राप्नुवतोऽन्तरङ्गस्य लुको दुर्वारत्वात्, अन्यथा गर्गाणां कुलं गर्गकुलमिति न स्यात्। अत्राहुः-भाष्यकारप्रयोगादेव लुगभावोऽत्र बोध्य इति। एतच्च "तृतीयासप्तम्योः" [पा. सू. २. ४. ८४.] इति सूत्रे 10 शब्दकौस्तुभे स्पष्टम्" इति।

अथ पदकृत्यं पृच्छति—**पूर्वार्थ इति किमिति**, प्रत्युदाहरणमुखेनोत्तरयति–**द्वौ मुनी वंश्यावस्य** इति विग्रहः, **द्विमुनि, द्विमुनिकम्** इति समासः, **व्याकरणम्** इति समासविशेष्यम्, अत्रान्यपदार्थे "एकार्थं चानेकं च" [३. १. २२.] 15 इति बहुव्रीहिः, बहुव्रीहित्वाच्च "शेषाद् वा" [७. ३. १७५.] इति विकल्पेन समान्तः कच्, पूर्वार्थग्रहणाभावेऽत्राप्यनेनाव्ययीभावः प्रसज्येत, तथा सति सर्वासु विभक्तिषु "अनतो लुप्" [३. २. ६.] इति सर्वस्यादिलोपे 'द्विमुनि' इत्येव स्यात्, बहुव्रीहौ तु विकल्पेन कच् विविधानि च रूपाणि सिध्यन्ति, एवं–**द्विमुनिः** इति समासः, **आगतः इति**–अत्र ग्रन्थ इति 20 गम्यते, अन्यथा वंश्य इति विशेषणं न घटेत, द्वौ मुनी वंश्यावस्येति विग्रहः, अत्रापि "एकार्थं च०" [३. १. २२.] इति बहुव्रीहिः, यस्य द्वौ मुनी वंश्यौ स ग्रन्थ आगत इति फलितार्थः, वस्तुतस्त्वत्र द्विमुनिरागम इति पाठ आसीत्, लेखकप्रमादात् आगम इत्यस्य स्थाने आगत इति लिखितमित्यनु- 25 मीयते, तथा सति न ग्रन्थादिपदाध्याहारावश्यकतेति, शेषं प्राग्वदवसेयम्।

मतान्तरमाह–**अन्ये त्वित्यादिना**, यद्यपि पाणिनीये तन्त्रे "संख्या वंश्येन" [पा० २. १. १९.] इति सूत्रे 'पूर्वार्थे' इति नोच्यते, तथाप्यव्ययीभावसमासे प्रायः पूर्वपदार्थ- 30 प्राधान्यस्यावश्यकत्वमिति स्वीक्रियत एव; ये च तदपि न मन्यन्ते तेषां मतमिदम्। तन्मते च संख्यावाचकस्य वंश्येन सह समासमात्रस्य बाधकमिदमित्याह–**तन्मते एकश्चासावि**त्यादिना, **कर्मधारयप्रसङ्गे** "पूर्वकालैक०" [३. १. ९७.] इति कर्मधारयसमासप्रसङ्गे, **द्विगुप्रसङ्गे** "संख्या समाहारे०" 35 [३. १. ९९.] इति द्विगुसमासप्रसङ्गे, **बहुव्रीहिप्रसङ्गे** "एकार्थं०" [३. १. २२.] इति बहुव्रीहिसमासप्रसङ्गे च, **अव्ययीभाव एव समासो भवति** कर्मधारयं द्विगुं बहुव्रीहिं च बाधित्वा प्रकृतसूत्रेणाव्ययीभाव एव समासो भवतीत्यर्थः॥ ३. १. २९.॥

## पारे-मध्ये-ऽग्रे-ऽन्तः षष्ठ्या वा 40
## ॥ ३। १। ३०॥

**त० प्र०—पारेप्रभृतीनि नामानि षष्ठ्यन्तेन नाम्ना सह पूर्वपदार्थे वा समस्यन्तेऽव्ययीभावश्च समासो भवति, तत्संनियोगे चाद्यानां त्रयाणामेकारान्तता निपात्यते। पारं गङ्गायाः–पारेगङ्गम्, पारेसमुद्रम्; मध्यं गङ्गायाः–मध्ये- 45 गङ्गम्, मध्येसमुद्रम्; अग्रं वनस्य–अग्रेवणम्, अग्रेसेनम्; अन्तर्गिरेः–अन्तर्गिरम्, अन्तर्गिरि। वावचनात् पक्षे षष्ठीसमासोऽपि भवति–गङ्गायाः पारं–गङ्गापारम्, गङ्गामध्यम्, वनाग्रम्, गिर्यन्तः। षष्ठ्येति किम्? पारं शोभनम्॥ ३०॥**

**श० म० अनुसन्धानम्–पारे०** इत्यादि। पार-मध्या- 50 ऽग्रशब्दानामेदन्तत्वं निपात्यत इति वक्ष्यति, ततश्च कृतैदन्तनिपातनानामेवेह समास इति तादृशानामेव नामत्वमिति बोधनायाह–**पारेप्रभृतीनि नामानी**ति, वस्तुतस्तु समाससन्नियोग एवैदन्तत्वं निपात्यत इति समासात् पूर्वं 'पारे' इत्येतादृशरूपाभाव इति 'पारप्रभृतीनि नामानि' इत्येवावगन्तव्यमिति प्रतिभाति। सूत्रस्थेन 55 'षष्ठ्या' इत्यनेन "प्रत्ययः प्रकृत्यादेः" [७. ४. ११५.] इति तदन्तविज्ञानात् **'षष्ठ्यन्तेन'** इत्यर्थो भवति, **तत्सन्नियोगे** एतत्समाससन्नियोगे, न वाक्ये, नापि समासान्तरे, **आद्यानां त्रयाणां** 'पार मध्य अग्र' इति त्रयाणाम्, **एकारान्तता निपात्यते** 'पारे-मध्ये-ऽग्रे०' इति सूत्रीयनिर्देशसामर्थ्यादेकारा- 60 न्तता साध्वी भवतीत्यर्थः। यदि 'पारे मध्ये अग्रे' इति सप्तम्यन्तानि विज्ञायेरंस्तदा 'गङ्गायाः पारं- पारेगङ्गम्, पारेसमुद्रम्, गङ्गाया मध्यं- मध्येगङ्गम्, मध्येसमुद्रम्, अग्रं वनस्य–अग्रेवणम्, अग्रेसेनम्' इत्यादावसप्तम्यन्तेन समासो नोपपद्येत; यदि वा एकारान्तानि स्याद्यन्तप्रतिरूपकाण्यव्ययानि 65 स्युः, यथा–'मध्ये पदे निवचने' इति, तदाऽव्ययमपि विभक्त्यर्थप्रधानं स्यादिति मध्याभिधानं न स्यात्, इति पार-मध्याऽग्रशब्दानामेवेदं निपातनं विज्ञायते।

अथ सविग्रहमुदाहरति–**पारं गङ्गायाः** इति विग्रहः, पारे गङ्गाया इति विग्रहे सप्तम्या अलुपैव निपातितं स्यादिति 70 शङ्का मा भूदित्येतदर्थं प्रथमान्तेन विग्रहः कृतः। अयमाशयः–यदा गङ्गायाः पारे कृतमित्यादिरूपेण पारपदेन सप्तम्यर्थो बोधनीयस्तदा सप्तम्या अलुपा सिद्धावपि यदा 'गङ्गायाः पारादानय, गङ्गायाः पारं शोभनम्' इत्यादिविवक्षा तदा पारपदे सप्तम्या अभावेन सप्तम्यलुपा न सिध्यतीत्येदन्तत्वनि- 75 पातनस्यावश्यकत्वमिति। **पारेगङ्गमिति** समासः। **मध्यं गङ्गायाः** इति विग्रहः, **मध्येगङ्गमिति** समासः, **मध्येसमुद्रमि**ति समासः, तस्य मध्यं समुद्रस्येति विग्रहः,

**अग्रं वनस्ये**ति विग्रहः, **अग्रेवणमि**ति समासः, अत्र "निष्प्राग्रे०" [ २. ३. ६६. ] इति वनशब्दे नकारस्य णकारः, **अन्तर्गिरेः** इति विग्रहः, **'अन्तर्गिरम्, अन्तर्गिरि'** इति समासः, अत्र "गिरि-नदी०" [ ७. ३. ९०. ] इति विकल्पनात् 5 समासान्तः, समासान्तेऽति "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इतीकारलोपे प्रथमं रूपम्, समासान्ताभावे द्वितीयं रूपम् ।

अत्र केचित्–'अन्तर्' इति सप्तम्यर्थवृत्तिकमव्ययमिति "विभक्ति-समीप०" [ ३. १. ३९. ] इत्यनेनैव सिध्यतीति नात्रान्तर्ग्रहणं कर्तव्यमित्याहुः । तत्रापरे मन्यन्ते–विभक्त्यर्थे यद् 10 अव्ययमिति विभक्त्यर्थमात्रवृत्ति विज्ञायते, यथा–'अधिस्त्रि' इति, अत्र 'स्त्रीषु' इत्येवार्थः, 'अन्तर्' इति तु न विभक्त्यर्थमात्रमाह, अपि तु नामार्थमपि, तत्रोपसर्जनम् 'अन्तर्' इति हि मध्य इत्यर्थः, तदपि यदि विभक्त्यर्थ इति विज्ञायेत तदातिप्रसङ्गः, अव्ययानि हि विभक्त्यर्थप्रधानानि क्रियाप्रधानानि च भवन्ति, 15 तत्र सर्वत्र विभक्त्यर्थप्रधाने "विभक्ति-समीप०" [ ३. १. ३९. ] इति समासः प्रसज्येतेति, अतोऽत्रान्तर्ग्रहणं क्रियते ।

बहुलमित्यधिकारात् "नित्यं प्रतिनाऽल्पे" [ ३. १. ३७. ] इति सूत्रे नित्यग्रहणाच्चानेन विकल्पेन समासे सिद्धे वावचनं व्यर्थमिति चेत् ? अत्राह–**वावचनात् पक्षे षष्ठीसमासो-** 20 **ऽपी**ति–अयं भावः– सर्वत्र समास-तद्धितादिवृत्तौ बहुलमिति प्रकृतं, तेनैव वृत्तिर्वाक्यमिति द्वैविध्यं सिद्धमेवेति पुनर्मध्ये वावचनमपवादशास्त्रस्थमुत्सर्गशास्त्रस्य प्रवृत्तिं सूचयति, यत्र च न वावचनं तत्रापवादेन मुक्ते विषये वाक्यमेव नोत्सर्गशास्त्रप्रवृत्तिः, यथा 'पूर्वं कायस्य' इत्यादावंशिसमासाभावे 25 नोत्सर्गषष्ठीसमासप्रवृत्तिरिति द्वैरूप्यमेव, प्रकृते चापवादेनानेन मुक्ते वाग्रहणात् पक्षे षष्ठीसमासोऽपीति त्रैरूप्यमिति । अत्रायं निष्कर्षः–अत्र सर्वत्र समास इत्यनुवर्तते, "समर्थः पदविधिः" [ ७. ४. १२२. ] इति परिभाषया समर्थ इति चोपतिष्ठते, सामर्थ्यं चैकार्थीभावः, स च लोकसिद्ध एव, तथापि स क्वास्ति 30 क्व च नास्तीति लक्षणैकचक्षुष्कैर्दुर्ज्ञेयमिति तस्य ज्ञापनाय तत्र तत्र सूत्रे समासादिसंज्ञावदेकार्थीभावरूपं सामर्थ्यमपि विधेयम्, बहुलग्रहणं च सामर्थ्येनैव सम्बध्यते व्याख्यानात्, सामर्थ्ये समासविकल्पानिर्देश्च, नाम नाम्ना सहोच्चार्यमाणं वा समर्थं भवति, समर्थं च समाससंज्ञं भवतीत्यर्थः, 35 निषेधसूत्रैरपि सामर्थ्यस्यैव निषेधः । इह पुनर्वावचनं चैकार्थीभाव एव समाससंज्ञाया विकल्पबोधकमिति तत्समासाभावेऽप्येकार्थीभावसत्त्वाद् भवत्युत्सर्गशास्त्रप्रवृत्तिरिति प्रकृतसूत्रप्रवृत्त्यभावपक्षे षष्ठीतत्पुरुषसमासो भवतीति ।

सविग्रहं षष्ठीसमासमुदाहरति–**गङ्गायाः पारमि**ति विग्रहः, 40 **गङ्गापारमि**ति "षष्ठ्ययत्नाच्छेषे" [ ३. १. ७६. ] इति सूत्रेण समासः, एवमुत्तरत्रापि, "प्रथमोक्तं प्राक्" [ ३. १. १४८. ] इति गङ्गाशब्दस्य प्राग् निपातः, एवमुत्तरत्रापि, **वनाग्रमि**ति समासः, तस्य वनस्याग्रमिति विग्रहः, **गिर्यन्त** इति समासः, तस्य 'गिरेरन्तः' इति विग्रहः, यद्यप्यन्तःशब्दोऽव्ययम्, अव्ययानां च षष्ठीसमासः "तृप्तार्थपूरणाव्यया०" [ ३. १. ८५. ] 45 इति निषिध्यते, तथापीह वावचनसामर्थ्याद् भवत्येव समासः, अन्यथा तदंशे वावचनवैयर्थ्यमेव स्यादिति ।

पदकृत्यं पृच्छति–**षष्ठ्येति किमि**ति, प्रत्युदाहरणमुखेनोत्तरयति–**पारं शोभनमि**ति–षष्ठीति वचनादिह पारेशोभनमिति न भवति, षष्ठ्यभावे तु तदपि प्रसज्येतेत्यर्थः । 50

सर्वत्राकारान्ताव्ययीभावसमासे पञ्चमीवर्जितस्यादेः "अमव्ययीभावस्यातोऽपञ्चम्याः" [ ३. २. २. ] इत्यमादेशो भवति, अनकारान्ताव्ययीभावसमासे तु सर्वस्य स्यादेः "अनतो लुप्" [ ३. २. ६. ] इति लुप् भवति, अव्ययीभावसमासस्य क्लीबत्वानुशासनात् "क्लीबे" [ २. ४. ९७. ] इति यथासम्भवं ह्रस्वत्वं 55 च विज्ञेयमिति ॥ ३. १. ३०. ॥

## यावदियत्त्वे । ३ । १ । ३१ ॥

**त० प्र०**— इयत्त्वमवधारणम्, तस्मिन् गम्यमाने यावदिति, नाम नाम्ना समस्यते, पूर्वपदार्थेऽव्ययीभावश्च समासो भवति । यावन्त्यमत्राणि-यावदमत्रम्, यावानोदनो–याव- 60 दोदनम्, यावानवकाशो–यावदवकाशम्, अतिथीन् भोजय । यावन्त्यमत्राणीति निर्ज्ञातपरिमाणेनामत्रादिना तावत इति अतिथिपरिमाणमिहावधार्यते । इयत्त्व इति किम्? यावद् दत्तं, तावद् भुक्तम्, कियद् दत्तं, कियद् भुक्तमिति नावधारयति । यावदित्यव्ययमनव्ययं चेह गृह्यते । अव्ययमेवे- 65 त्यन्ये ॥ ३१ ॥

**श० म० अनुसन्धानम्–यावदि**त्यादि । **इयत्त्वमवधारणमि**ति–इदं निर्दिश्यमानं मानमस्येति "इदं-किमो०" [ ७. १. १४८. ] इत्यतुप्रत्यये इयादेशे च–'इयत्' इति, मानं तु–

"ऊर्ध्वमानं किलोन्मानं, परिमाणं तु सर्वतः । 70

आयामस्तु प्रमाणं स्यात्, संख्या बाह्या तु सर्वतः ॥" इति चतुर्विधम्, तथा च–इयता परिच्छिन्नसंख्यानाम्, इयतो वा परिच्छिन्नपरिमाणस्य भाव इयत्त्वम्, इयत्त्वशब्देनेह इयत्त्वपरिच्छेदो गृह्यते, इयत्त्वस्य परिच्छेदः– निर्णयो विशेषप्रतिपत्तिर्नियम इति–इयत्त्वपरिच्छेदः, स चावधारणं भवतीत्यर्थः । अयं 75 च परिच्छेदो न यावच्छब्देनोच्यते, स हि यत् परिमाणमस्य या वा संख्यैषामिति विग्रहेण संख्यापरिमाणिनौ सामान्येनाह, नावधारणवाक्यमत आह– **तस्मिन् गम्यमाने** इति ।

अथ सविग्रहमुदाहरति–**यावन्तीत्यादिना, यावन्त्यमत्रा-**

**णीति**–विग्रहवाक्यमिदम्, अत्र यच्छब्दात् संख्यावृत्तेः "यत्-तत्-किमः संख्याया०" [ ७. १. १५०. ] इति डावादिरतुः, **यावान् ओदन** इति, **यावान् अवकाश** इति च विग्रहवाक्ये, अत्र यच्छब्दात् परिमाणार्थवृत्तेः "यत्-तदेतदो-डावादिः" [ ७. १. १४९. ] इति डावादिरतुः, क्रमेण **यावदमत्रम्, यावदोदनम्, यावदवकाशम्**, इति समासाः, **'अतिथीन् भोजय'** इति प्रत्येकं योज्यते–'यावदमत्रमतिथीन् भोजय, यावदोदनमतिथीन् भोजय, यावदवकाशमतिथीन् भोजय' इति, **यावन्त्यमत्राणी**त्यादिनात्रावधारणं दर्शयति, **यावन्त्यमत्राणी**ति पञ्च षड् वा भाजनानि, **तावत** इत्यपि पञ्च षड् वाऽतिथीन् नोनाधिकान्, अत्र केन किमवधार्यत इति **निर्ज्ञातपरिमाणेने**त्यादिना दर्शयति, **निर्ज्ञातपरिमाणेने**ति–निश्चितेयत्ताकेन, अनिर्ज्ञातपरिमाणेनावधारणायोगात्, नेह परिमाणशब्दो रूढिशब्दः, किं तर्हि? परिमीयते–परिच्छिद्यतेऽनेनेति क्रियाशब्दः, अतः परिमाणशब्दो न संख्यावाची गृह्यते, 'यावान् ओदनः, यावानवकाशः' इत्यपि 'यावतामोदनः, यावतामवकाशः' इति प्रतीतेरतिथिपरिमाणावधारणम्, अत्र संख्यावधारणमुदाहृतम्, परिमाणावधारणे तु 'यावदमत्रमोदनं देहि, यावदोदनममत्रं देहि' इति द्रष्टव्यम्, अत्र हि यावन्त्यमत्राणि एतावन्तमोदनं देहि, यावान् ओदनस्तावदमत्रं देहि, इत्यमत्रादिसंख्यापरिमाणेन निर्ज्ञातेनोदनादिपरिमाणमवधार्यते ।

पदकृत्यं पृच्छति–**इयत्त्व इति किमि**ति, प्रत्युदाहरणमुखेनोत्तरयति–**यावद् दत्तं तावद् भुक्तमि**ति–अत्र 'यावद् दत्तम्' इत्यसमस्तमेव, अत एव तावदित्युपादीयते, समासे हि तदर्थप्रतीतेः 'यावद्' इत्येतस्य 'तावद्' इत्यपेक्षाभावाच्च तन्नोपादीयेत, यथा–'यावदमत्रमतिथीन् भोजय' इति; यथा मूलोदाहरणेऽतिथ्यादिपरिमाणमवधार्यते–'इयन्तोऽतिथयः, इयान् ओदनः' इत्यमत्रादिपरिमाणावधारणात्, न तथेह भुक्तद्रव्यपरिमाणमवधार्यते–इयद् भुक्तमिति, इयद् दत्तमित्यपि हि परिमाणविशेषानवधारणमेव, न हि तत्र दत्तमियदित्यवधार्यते, तदनवधारणे च भुक्तपरिमाणस्याप्यनवधारणात्; तदेवाह–**कियद् भुक्तमिति नावधारयती**ति–अतोऽत्र समासाभावः, अपर आह–अवधारणं सति व्यावर्तने भवति, यथा–यावदमत्रमित्यमत्रपरिमाणादधिकव्यावृत्तिः, न तथेह यावद् दत्तमिति किञ्चिद् निवर्त्यते, अनिवर्तनमेवाख्यायत इति न भवतीति ।

"यांक् प्रापणे" "यतैङ् प्रयत्ने" वा, अतः "संश्चद्-वेहद्०" [ उणा० ८८२. ] इति किब्यति निपातनाद् 'यावद्' इति मर्यादावधिपरिमाणेषु चादिपठितमव्ययमपि वर्तते, 'यावद्' इति तद्धितडावतुप्रत्ययान्तमनव्ययमपि वर्तते, तत्र कस्यात्रग्रहणमित्याकाङ्क्षायामाह–**यावदित्यव्ययमनव्ययं चेह गृह्यते** इति–विशेषविनिगमकाभावादुभयोर्ग्रहणमिति भावः, तत्राव्ययपक्षेऽव्ययत्वेन स्यादेर्लोपाद् विग्रहवाक्ये सर्वत्र यावदित्येव वक्तव्यमिति विशेषः, मतान्तरमाह–**अव्ययमेवेत्यन्ये** इति, **अन्ये** पाणिनीयाः ॥ ३. १. ३१. ॥

## पर्यपाङ्बहिरच् पञ्चम्या । ३ । १ । ३२ ॥

**त० प्र०**—पर्यादीनि नामानि पञ्चम्यन्तेन नाम्ना सहैकार्थ्ये पूर्वपदार्थेऽभिधेये समस्यन्ते, स च समासोऽव्ययीभावसंज्ञो भवति । परि त्रिगर्तेभ्यः–परित्रिगर्तम्, अप त्रिगर्तेभ्यः–अपत्रिगर्तम्, आ ग्रामात्–आग्रामम्, बहिर्ग्रामात्–बहिर्ग्रामम्, प्राग् ग्रामात्–प्राग्ग्रामम्, प्रत्यग् ग्रामात्–प्रत्यग्ग्रामम्, अपाग् ग्रामात्–अपाग्ग्रामम्, उदग् ग्रामात्–उदग्ग्रामम्, वृष्टो मेघः । पर्यादिसाहचर्यादञ्चतिर्धैनलुबन्तोऽव्ययं गृह्यते, तेनेह न भवति–प्राङ् ग्रामात् चैत्रः । प्रतिपदविहितायाश्च पञ्चम्या ग्रहणादिहाव्ययीभावो न भवति–अपगतः शाखायाः–अपशाखः । पञ्चम्येति किम्? परि वृक्षं विद्योतते विद्युत्, यदत्र मां परि स्याद् ॥ ३२ ॥

**श० म० अनुसन्धानम्**—पर्यपाङित्यादि । 'नाम नाम्ना समासः पूर्वपदार्थेऽव्ययीभावः' इति पूर्वतोऽनुवर्तन्ते, तत्र 'नाम' इति 'पर्यपाङ्बहिरच्' इत्यनेन विशिष्यत इत्याह–**पर्यादीनि नामानी**ति, 'नाम्ना' इति च 'पञ्चम्या' इत्यनेन विशिष्यते, पञ्चम्याः प्रत्ययत्वात् "प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५ ] इति तदन्तविज्ञानमित्याह–**पञ्चम्यन्तेन नाम्ने**ति, शेषं सुगमम् ।

अथ सविग्रहमुदाहरति–**परि त्रिगर्तेभ्यः** इति विग्रहः, **परित्रिगर्तमि**ति समासः, एवम्–**अप त्रिगर्तेभ्यः** इति विग्रहः, **अपत्रिगर्तमि**ति समासः, 'अप परि' शब्दाविह वर्जनार्थौ, "पर्यपाभ्यां वर्ज्ये" [ २. ७. ७१. ] इति पञ्चमी, 'त्रिगर्त' इति देशविशेषस्य संज्ञा, **'वृष्टो मेघः'** इति प्रत्युदाहरणं योज्यते, तथा च त्रिगर्तदेशं वर्जयित्वा मेघो वृष्ट इत्यर्थः, पर्यपाभ्यां प्रथमायाः, त्रिगर्तात् पञ्चम्याश्च लुप्, ततो वर्ज्यार्थः समासेनाभिहितोऽन्तर्भूतो नामार्थः सम्पन्न इति न तन्निमित्ता पञ्चमी, यथायथं तु विभक्तयो भवन्ति, तासाममादेशः, एवमुत्तरत्रापि **आ ग्रामादि**ति विग्रहः, आङ् चेह ङिदुपादीयते, तत्रेषदर्थे "आङल्पे" [ ३. १. ४६. ] इति समासो विशिष्य विधीयते, क्रियायोगे च नाम्नैकार्थ्याभावादेव न समासः, पारिशेष्यान्मर्यादाभिविध्यर्थ एवेह गृह्यते, तद्योगे च "आङावधौ" [ २. २. ७०. ] इति पञ्चमी, **आग्राममि**ति समासः, ग्राममवधिं कृत्वा वृष्टो मेघ इति तदर्थः, तत्र यदा मर्यादा तदा 'ग्रामपर्यन्तं वृष्टो

मेघः, न ग्रामेऽपीत्यर्थः, यदा त्वभिविधिस्तदा तु–ग्राममभिव्याप्य वृष्टो मेघः, ग्रामेऽपि वृष्ट इत्यर्थः । **बहिः ग्रामादि**ति विग्रहः, "प्रभृत्यन्यार्थदिक्शब्दबहि०" [ २. २. ७५. ] इति पञ्चमी, **बहिर्ग्राममि**ति समासः, ग्रामाद् बहिर्वृष्टो मेघ इति तदर्थः । 5 सूत्रे **'अञ्च्'** इति क्विबन्तोऽञ्चतिर्निर्दिश्यते, तत्र 'प्राच्' इत्यादितदन्तपरिग्रहः, तस्यैव दिक्शब्दत्वात् तद्योगे प्रतिपदविहितपञ्चम्या लाभो भवति, स एवेहाभिमतः *लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्* इति न्यायात्, अतः **प्रागि**त्यादिना विगृह्योदाहरति, **प्राग् ग्रामादि**ति विग्रहः, "अञ्चू गतौ च" 10 प्रपूर्वादतः प्रथममस्यामञ्चत्यादित्य इति क्विपि "अञ्चोऽनर्चायाम्" [ ४. २. ४६. ] इति नलोपे "अञ्चः" [ २. ४. ३. ] इति ङ्याम् "अच्च् प्राग् दीर्घश्च" [ २. १. १०४. ] इति 'च्' इत्यादेशे–'प्राची' पूर्वा दिगित्यर्थः, प्राच्यां दिशि "दिक्शब्दाद् दिग्-देश-कालेषु प्रथमा-पञ्चमी-सप्तम्याः" [ ७. २. ११३. ] 15 इति धाप्रत्ययः, प्राच्यामदूरायां दिशीति वा "अदूरे एनः" [ ७. २. १२२. ] इति एनप्रत्ययः, तयोश्च "लुबञ्चेः" [ ७. २. १२३. ] इति लोपः, तल्लुपि च "ङ्यादेर्गौण०" [ २. ४. ९५. ] इति ङीलोपे–'प्राच्' इति, तस्य "अधण्तस्वाद्या शसः" [ १. १. ३२. ] इत्यव्ययत्वम्, ततः प्रथमासिः, तस्य "अव्ययस्य" 20 [ ३. २. ७. ] इति लोपः, तदनु "चजः कगम्" [ २. १. ८६. ] इति चस्य कत्वे "धुटस्तृतीयः" [ २. १. ७६ ] इति कस्य गत्वे च 'प्राग्' इति, अस्य दिक्शब्दत्वात् तद्योगे "प्रभृत्यन्यार्थदिक्शब्द०" [ २. २. ७५. ] इति पञ्चम्यां–'ग्रामाद्' इति, **प्राग्ग्राममि**ति समासः, 'वृष्टो 25 मेघः' इत्यस्य योजनात् 'ग्रामतः पूर्वस्यां दिशि, अदूरायां पूर्वस्यां दिशि वा मेघो वृष्टः' इति समुदितार्थः । एवं–**प्रत्यग् ग्रामादि**ति विग्रहः, प्रत्यञ्चति रविरस्यामिति प्रतीची–पश्चिमा दिगित्यर्थः, शेषं प्राग्वत्, **प्रत्यग्ग्राममि**ति समासः, ग्रामतः पश्चिमायां दिशि, अदूरायां पश्चिमायां दिशि वा मेघो वृष्ट इत्यर्थः; 30 **अपाग् ग्रामादि**ति विग्रहः, **अपाग्ग्राममि**ति च समासः, अपाञ्चत्यस्यां रविरित्यपाची–दक्षिणा दिग्, ग्रामतो दक्षिणस्यां दिशि, अदूरायां वा दक्षिणस्यां दिशि मेघो वृष्ट इत्यर्थः, शेषं प्राग्वत्; **उदग् ग्रामादि**ति विग्रहः, **उदग्ग्राममि**ति समासः, उत्तरमञ्चत्यर्कोऽस्यामिति उदीची–उत्तरा दिगित्यर्थः, ङ्यां "उदच 35 उदीच्" [ २. १. १०३. ] इति 'उदीच्' इत्यादेशः, ङीलोपे च 'उदच्' इति, ग्रामत उत्तरस्यां दिशि, अदूरायामुत्तरस्यां दिशि वा मेघो वृष्ट इत्यर्थः, शेषं प्रागवदवसेयमिति ।

ननु केवलेनापि क्विबन्तेनाञ्चतिनोदाहर्तुं शक्यते, अथापि धेनलुपाऽव्ययत्वमापाद्य कथमुदाहियत इत्याशङ्कायामाह–**पर्या- 40 दिसाहचर्यादि**त्यादि–पर्यादयोऽव्ययानि, तत्सहचरितश्चाञ्चतिरप्यव्ययमेव ग्रहीतुं शक्यते, *सहचरिता-ऽसहचरितयोः सहचरितस्यैव ग्रहणम्* इति न्यायात्, धेनलुबन्तस्याव्ययत्वं प्राग् दर्शितमेव, अव्ययस्यैव ग्रहणफलं दर्शयति–**तेन** अव्ययस्यैव ग्रहणेन, **इह** वक्ष्यमाणेऽनव्यये, **न भवति** समासो न भवति, तदेवाह–**प्राङ् ग्रामाच्चैत्र** इति–प्रकर्षेणाञ्चति गच्छतीति प्राङ्, 45 नायमव्ययम्, ग्रामादित्यत्र "पञ्चम्यपादाने" [ २. २. ६९. ] इति पञ्चमी, ग्रामापादानकगमनवांश्चैत्र इति च बोधः ।

'पञ्चम्या' इत्यत्र पञ्चमी प्रतिपदोक्ता ग्राह्या, अर्थात् पर्यादिशब्दमुच्चार्य तद्योगे विहिता या पञ्चमी सा गृह्यते, *लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्* इति न्यायात्, तथा च 50 सामान्यतोऽपादानपञ्चम्यन्तस्य नेह समासो भवतीत्याह–**प्रतिपदविहितायाश्चे**त्यादि, **अपगतः शाखायाः** इति–अत्र "पञ्चम्यपादाने" [ २. २. ६९. ] इति विहिता पञ्चमी न प्रतिपदोक्तेति नानेन समासः, अनेन समासे ह्यव्ययत्वं स्यात्, "प्रात्यवपरि०" [ ३. १. ४७. ] इति सूत्रेण तु समासो भवत्ये- 55 वेत्याह–**अपशाख** इति ।

पदकृत्यं पृच्छति–**पञ्चम्येति किमि**ति–अयमाशयः शङ्कायाः–इह परस्परसाहचर्याद् वर्जनार्थयोरेव 'परि, अप' इत्येतयोर्ग्रहणं, तद्योगे च "पर्यपाभ्यां वर्ज्ये" [ २. २. ७१. ] इति पञ्चमी विहिता, आङ् चेह ङिदुपादीयते, तत्रेषदर्थे "आङल्पे" 60 [ ३. १. ४६. ] इति विशिष्य समासो विधीयते, क्रियायोगे च नाम्नैकार्थ्याभावादेव न समासः, पारिशेष्यान्मर्यादाभिविध्यर्थ एवेह गृह्यते, तद्योगे च "आङाऽवधौ" [ २. २. ७०. ] इति पञ्चमी विहितैव, बहिर्योगेऽपि "प्रभृत्यन्यार्थ०" [ २. २. ७५. ] इति पञ्चम्युक्ता, अव्ययस्य चाचन्तस्य दिक्शब्दत्वादेव तद्योगे 65 पञ्चमी, अन्यस्य तु ग्रहणमेवेह नेष्टमिति पञ्चम्या अग्रहणेऽपि पञ्चम्यन्तेनैव समासो भविष्यतीति पञ्चम्येति व्यर्थमेवेति । उत्तरयति **–परि वृक्षं विद्योतते विद्युत्, यदत्र मां परि स्यात्,** इति– अत्र परिणा योगे लक्षणेऽर्थे वर्तमानाद् वृक्षाद्, भागिनि चार्थे वर्तमानादस्मच्छब्दाद् "भागिनि च प्रतिपर्यनुभिः" [ २. 70 २. ३७. ] इति द्वितीया जाता, प्रथमे वृक्षो लक्षणं, विद्योतमाना विद्युल्लक्ष्यम्, अनयोश्च लक्ष्यलक्षणभावः सम्बन्धः परिणा द्योत्यते, वृक्षं लक्षीकृत्य विद्योतते विद्युदित्यर्थः, द्वितीये परिणा भागसम्बन्धो द्योत्यते, योऽत्र मम भाग आभवति स दीयतामित्यर्थः; अत्रापि समासो मा भूदित्येतदर्थं पञ्चमीग्रहणमावश्यक- 75 मिति भावः । न च परस्परसाहचर्याद् वर्जनार्थयोरेव ग्रहणमित्युक्तमेवेति वाच्यम्, साहचर्यन्यायस्यानित्यत्वात्, यदि चानित्यत्वे न दृढतरं प्रमाणं मित्युच्यते तदा स्पष्टार्थमेव 'पञ्चम्या' इत्युक्तमिति बोध्यमिति ॥ ३. १. ३२. ॥

## लक्षणेनाभि-प्रत्याभिमुख्ये ।३।१।३३॥

**त० प्र०**—लक्षणं-चिह्नं, तद्वाचिना नाम्ना, आभिमुख्ये वर्तमाने 'अभि प्रति' इत्येते, ऐकार्थ्ये सति पूर्वपदार्थेऽभिधेये समस्येते, अव्ययीभावश्च समासो भवति । अभि अग्निम्-अभ्यग्नि, प्रति अग्निं-प्रत्यग्नि शलभाः पतन्ति, अग्निं लक्षीकृत्याभिमुखं पतन्तीत्यर्थः । लक्षणेनेति किम् ? स्रुघ्नं प्रति गतः, प्रतिनिवृत्त्य पुनः स्रुघ्नमेवाभिमुखं गत इत्यर्थः । अभि-प्रतीति किम् ? येनाग्निस्तेन गतः । आभिमुख्य इति किम् ? वृक्षमभि विद्योतते विद्युत् । पूर्वपदार्थ इत्येव- अभिमुखोऽङ्को यासां ता अभ्यङ्का गावः ॥ ३३ ॥

---

**श० म० न्यासानुसन्धानम्**-लक्षणेत्यादि । लक्षणशब्दस्यानेकार्थत्वेनेह कीदृगर्थस्य ग्रहणमित्याकाङ्क्षायामाह-**लक्षणं चिह्नमि**ति-"लक्षीण् दर्शने" अतो लक्ष्यते-दर्श्यते येनेति करणेऽनटि लक्षणमिति, अनेनानुवर्तमानं 'नाम्ना' इति विशेष्यतेऽत आह-**तद्वाचिना नाम्ने**ति, **आभिमुख्ये** इति-अभि-प्रपन्नो मुखमित्यभिमुखः, तस्य भावः कर्म वेति "पतिराजान्त०" [ ७. १. ६०. ] इति ट्यणि आभिमुख्यं-तस्मिंस्तथा, एतद् 'अभि प्रति' इत्येतयोर्विशेषणमित्याह-**आभिमुख्ये वर्तमानौ 'अभि प्रति' इत्येतौ** इति, **ऐकार्थ्ये** इति- विशेषणविशेष्यभावोपलक्षितपूर्वोत्तरपदार्थनिरूपितायामेकोपस्थितिजनिकायां शक्तौ विवक्षितायामिति सर्वत्र समासे साधारणम्, विशेषणविशेष्यभावापन्नविशिष्टार्थविषयकैकोपस्थितिजनकशक्तित्वमेकार्थ्यमेकार्थीभाव इति यावत्, व्यस्ते तु पृथक् पृथगुपस्थितिरिति तज्जनिका शक्तिरपि पृथगेवेत्यादि पूर्वं निरूपितमेव ।

सम्पन्ने सूत्रार्थे ह्युदाहरणावसर इति विग्रहोदाहरति-**अभि अग्निम्, प्रति अग्निम्**, इति विग्रहवाक्ये, **अभ्यग्नि, प्रत्यग्नि**, इति समासौ, अस्तीह लक्षणमाभिमुख्यं चेति ज्ञापनाय-**शलभाः पतन्ती**ति वाक्यशेषः, **अग्निं लक्षीकृत्याभिमुखं पतन्तीत्यर्थ** इति तदर्थः, इह विग्रहवाक्येऽभिना योगे "लक्षणवीप्स्ये०" [ २. २. ३६. ] इति सूत्रेण, प्रतिना योगे च "भागिनि च प्रति०" [ २. २. ३७. ] इत्यनेन च द्वितीया, अत्र चाग्निर्लक्षणम्, तेन शलभपातो लक्ष्यते, अत्राभिमुख्ये चाभि-प्रती वर्तेते, तथाहि-अभ्यभिमुखमेव शलभाः पतन्ति, नापि पार्श्वतो नापि पृष्ठत इत्यर्थोऽवगम्यते, अत्र केचित्-'अत्राग्निर्लक्षणं, तस्य चाभिमुख्यमभिप्रतिभ्यां द्योत्यते, अग्नेर्लक्षणत्वं च जनकत्वं, चक्षुरादिसन्निकर्षाच्छलभानामाभिमुख्यद्वारा पतनप्रयोजकत्वमग्नेर्जनकत्वं बोध्यम्, त्यादर्थः कर्तृत्वमाश्रयत्वं वा, तथा चाग्निप्रयोज्यशलभाभिन्नैककर्तृवृत्तिवह्न्यभिमुखं पतनमिति बोधः' इत्याहुः; अपरे तु-'अग्निजन्यज्ञानविषयमग्न्यभिमुखं शलभकर्तृकं पतनमिति बोधः' इत्याहुः ।

ननु वृत्तौ 'अग्निं लक्षीकृत्य' इति यदुक्तं तत्स्थाने 'अग्निं लक्षणीकृत्य' इति वक्तव्यमग्नेर्लक्षणत्वादिति चेत्? उच्यते-पूर्वमग्निं पश्यन्ति ततस्तत्र पतन्तीति दर्शनक्रियापेक्षयाग्निर्लक्ष्यः-पतनक्रियापेक्षया च लक्षणमित्यग्निं लक्षणत्वेन लक्षीकृत्येत्यर्थावगमायोक्तप्रयोगाहरणान्न कश्चिद् दोषः, लक्षशब्दो लक्ष्यशब्दसमानार्थकः, यदाह-"वेध्यं तु लक्षं लक्ष्यं शरव्यकम् ।" इति ।

पदकृत्यं पृच्छति-**लक्षणेनेति किमि**ति-अयं प्रश्नाशयः-आभिमुख्ये लक्षणेन सहावश्यं सम्बन्ध इति लक्षणलाभेन 'लक्षणेन' इति व्यर्थमेवेति, उत्तरयति-**स्रुघ्नं प्रति गत** इति-लक्ष्यलक्षणभावे एवाभिमुख्यं भवतीति न नियमः, कर्म प्रत्यपि भवतीति तत्र समासवारणाय 'लक्षणेन' इत्यावश्यकमिति समाधातुराशयः, प्रकृते आभिमुख्यमस्ति, अपि तु स्रुघ्नमिति न लक्षणं, तथाहि-स्रुघ्नाद् मथुरां प्रस्थितो दिङ्मोहात् स्रुघ्नमेव प्रतिनिवृत्त इति नात्र स्रुघ्नो लक्षणं, यदुद्दिश्य हि गच्छति तल्लक्षणं भवति, यदा तु दिङ्मोहाद् यत एव प्रस्थितस्तमेव प्रतिगच्छति तदा तदप्रतीतं कथं लक्षणं भवति, यद्वा मथुरां प्रस्थितोऽपि मध्य एव कार्यसिद्धेश्च स्वभावत एव स्रुघ्नं प्रति परावृत्त इति नास्ति स्रुघ्नस्य लक्षणत्वमिति भावः, स्रुघ्नमिति कर्मणि द्वितीया; अत्र प्रतेर्यद्यपि गतेन सह सम्बन्ध इति कर्मणा सम्बन्धो नेति न तेन समासप्राप्तिरिति शङ्कितुं शक्यते, तथापि प्रकृते स्रुघ्नेनैव सम्बन्धो विवक्षित इति समासप्राप्तिरिति भावः, आभिमुख्यप्रकटनार्थं प्रयोगं व्याख्याति-**प्रतिनिवृत्त्ये**त्यादि-पूर्वं स्रुघ्नं परित्यज्यान्यत्र गतः पुनरपि स्रुघ्नं प्रत्येवाभिमुखीभूय [ दिङ्मोहादिना ] परावृत्त इति तदर्थ इति भावः । पुनः पृच्छति-**अभि-प्रतीति किमि**ति-आभिमुख्यस्य प्रायोऽभिप्रतिभ्यामेव द्योतनात् तद्ग्रहणाभावेऽपि ताभ्यामेव [ तयोरेव ] समासो भविष्यतीत्यभिप्रतिग्रहणं व्यर्थमिति प्रश्नाशयः । उत्तरयति-**येनाग्निस्तेन गत** इति-यत्राभिप्रतिभ्यां विनाप्याभिमुख्यं प्रतीयते तत्र समासो मा भूदित्येतदर्थमभिप्रतिग्रहणमावश्यकमित्युत्तराशयः, प्रकृते च येन-तेन-शब्दावव्ययात्मकौ लक्ष्यलक्षणभावद्योतकौ, अव्ययत्वं चानयोर्विभक्त्यन्तप्रतिरूपकत्वात्, तथा च भवत्यग्निर्लक्षणमाभिमुख्यमप्यस्ति, अग्निं लक्षीकृत्याभिमुखं गत इति प्रतीतेः, अभि-प्रती तु न स्त इति येन-तेनशब्दाभ्यां सह समासो न भवति ।

अत्र लघुन्यासः-येन-तेनौ प्रत्यर्थौ [ प्रतिशब्दसमानार्थौ ], अग्निरित्युभयत्रापि सम्बन्धनीयम्, 'येनाग्निर्गतः, तेनाग्निर्गतः,

इत्युदाहरणद्वयं द्रष्टव्यम्, गतो देवदत्तः, किमत्र लक्षणम्? येनाग्निः, अग्निलक्षणमित्यर्थः, एवम्–तेनाग्निरिति भिन्नं च, यथा एकमेवेदमुदाहरणमित्यर्थः, गत इति लक्ष्यं, तेनेति लक्ष्यस्य द्योतकम्, अग्निर्लक्षणं, येनेति लक्षणस्य द्योतकमिति 5 लक्ष्यलक्षणभावः ।

केचित् त्वेवमाहुः–येनाग्निस्तेन गत इति–येन कारणेन तत्राग्निरस्ति तेन कारणेन गतः, अथवा येन दिग्भागेनाग्निस्ति-ष्ठति तेन दिग्भागेन गत इत्यर्थः । अत्र भवत्यग्निर्लक्षणमाभि-मुख्यं चास्ति, किन्तु नाभिप्रती, अपि तु 'येन तेन' इति यत्त-10 दाविति समासो न भवतीति ।

पुनः पृच्छति–**आभिमुख्य इति किमि**ति, उत्तरयति–**वृक्षमभि विद्योतते विद्यु**दिति–अत्र विद्युद्विद्योतनापेक्षया वृक्षस्य लक्षणभावमात्रमभिना द्योत्यते, नाभिमुख्यमस्तीति 'आ-भिमुख्ये' इति वचनात् समासो न भवति । आभिमुख्ये समा-15 सविधानादभिप्रत्योरेवार्थस्य प्राधान्यं स्वत एव स्यादिति 'पूर्व-पदार्थे' इति व्यर्थमित्याशङ्कायां तस्यावश्यकत्वं द्रढयति–**पूर्व-पदार्थ इत्येवे**ति, ततश्चान्यपदार्थे न भवतीत्याह–**अभिमु-खोऽङ्को यासां ता अभ्यङ्का गाव** इति–अत्राङ्कस्य लक्षणत्वे सत्यपि गवामेव प्राधान्यात् पूर्वपदार्थस्य प्राधान्यं नास्तीति 20 नानेन समासः, अपि तु बहुव्रीहिरेवेति भावः, अभिशब्दोऽभि-मुखार्थ इत्यभिप्रेत्येदमुक्तम् ।

केचित् त्वेवमाहुः–"अभ्यङ्का गावः, प्रत्यङ्का गाव इति–अभिनवः प्रतिनवोऽङ्क आसामिति बहुव्रीहिः, अभिशब्दोऽत्रा-भिनवार्थे वर्तते; प्रतिशब्दश्च प्रतिनवार्थे, अङ्कोऽत्र भवति 25 गवां लक्षणम्, आभिमुख्यं तु नास्ति" इति, एतावताभि-मुख्यस्यैव प्रत्युदाहरणमित्यावेदितम्, वामन-जयादित्यावपि तथैव प्रतिपन्नौ, अत्र पूर्वपदार्थप्राधान्याभावोऽपि स्पष्ट एवेति 'पूर्वपदार्थे' इत्यस्यापि प्रत्युदाहरणत्वमुचितमेव, प्रत्युत तन्मते नेदं प्रत्युदाहरणं संगच्छते, यतोऽत्र पूर्वपदार्थप्राधान्याभावादेव 30 समासाभावे सिद्धे आभिमुख्यस्याकिञ्चित्करत्वमित्यवधेयमिति ॥ ३. १. ३३. ॥

## दैर्घ्येऽनुः । ३ । १ । ३४ ॥

**त० प्र०—'अनु' इत्येतन्नाम दैर्घ्ये–आयामविषये यल्ल-क्षणं तद्वाचिना नाम्नैकार्थ्ये सति पूर्वपदार्थेऽभिधेये समस्यते, 35 स च समासोऽव्ययीभावसंज्ञः । अनु गङ्गां दीर्घा–अनुगङ्गं वाराणसी, गङ्गाया लक्षणभूताया आयामेन वाराणस्या आयामो लक्ष्यते, एवम्–अनुयमुनं मथुरा । दैर्घ्य इति किम्? वृक्षमनु विद्योतते विद्युत् । लक्षणेनेत्येव– लक्ष्येण वाराण-स्यादिना मा भूत् ॥ ३४ ॥**

**श० म० अनुसन्धानम्–दैर्घ्येऽनुरिति–**'नाम' 40 इत्यनुवर्तमानमनुना विशेष्यते, अत आह–**'अनु' इत्येतन्नामेति,** दैर्घ्यपदार्थं व्याख्यातुमाह–**दैर्घ्ये** इति–दीर्घस्य भावो दैर्घ्यम्–आयामस्तस्मिंस्तथा, वैषयिकाधिकरणेऽत्र सप्तमीत्याह–**आयाम-विषये** इति–विषयत्वं च द्योत्यद्योतकभावरूपः सम्बन्धः, अनेनानुवर्तमानं 'लक्षणेन' इति नामविशेषणं विशेष्यते, तथा 45 च यस्यायामोऽनुना द्योत्यते तेन **लक्षणवाचिना नाम्ना** 'अनु' इत्येतत् नाम समस्यत इत्यर्थलाभः ।

अथ सविग्रहमुदाहरति–**अनुगङ्गां दीर्घा** इति–विग्रहोऽयम्, "भागिनि च प्रतिपर्यनुभिः" [ २. २. ३५. ] इति लक्षणे द्वितीया, गङ्गया हि वाराणस्या दैर्घ्यं लक्ष्यते; "हेतुसहार्थे-50 ऽनुना" [ २. २. ३८. ] इति द्वितीया, गङ्गया हि सहायता वारणसीति केचित्; 'दीर्घा' इति पदमनुद्योत्यार्थप्रदर्शनार्थं, न त्वलौकिकविग्रहवाक्यप्रविष्टमिति बोध्यम्, अनेन द्वितीया-न्तेनानुशब्दस्य समासः– **अनुगङ्ग**मिति, अनुगङ्गं **वारा-णसी** गङ्गामन्वायता वाराणसीत्यर्थः, अत्र प्रसिद्धदैर्घ्या गङ्गा, 55 अप्रसिद्धदैर्घ्या वाराणसी, सा हि कथं स्थितेति न ज्ञायते, तत्र गङ्गया यथा गङ्गा दीर्घा स्थिता तथा वाराणसी दीर्घा स्थितेति लक्ष्यते इति गङ्गा वाराणसीदैर्घ्यस्य लक्षणं भवति, एतदेवाह–**गङ्गाया लक्षणभूताया** इत्यादि–प्रसिद्धं हि लक्षणं भवति, दीर्घत्वेन हि गङ्गा प्रसिद्धा, तदनुगमनाद् वाराणस्या दीर्घत्वमपि 60 तत्सदृशं लक्ष्यते इति भावः, एतच्चानुपदं स्फुटीकरिष्यते, प्रयोगार्थस्तु–गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षिता वाराणसीति । अति-दिशति–**एवमि**ति, **अनुयमुन**मिति समासः, अनु यमुनां दीर्घेति तस्य विग्रहः, 'अनुगङ्गमायात्, अनुयमुनमायात्' इत्यपि गङ्गां यमुनां चान्वायतमागमनं लक्ष्यत इति गङ्गायमुने 65 दैर्घ्ये लक्षणमिति ।

पदकृत्यं पृच्छति–**दैर्घ्ये इति किमि**ति–अयं प्रश्नाशयः–अनुनाऽनुगमनं प्रतीयते, तथा चार्थान्तरे वाराणस्या अनु-गमनासम्भवाद् दैर्घ्यमेवानुगतं स्यादिति विनापि 'दैर्घ्ये' इति पदं दैर्घ्यार्थ एव समासः स्यादिति तत्किमर्थमिति । न केवलं 70 दैर्घ्यमेवानुना द्योत्यते, अपि तु तद्रहितलक्ष्यलक्षणभावोऽपीति तत्र समासो मा भूदित्येतदर्थं 'दैर्घ्ये' इत्यावश्यकमित्याशयेनो-त्तरयति–**वृक्षमनुविद्योतते विद्यु**दिति–अत्र वृक्षो विद्योत-नस्य लक्षणत्वेन विवक्ष्यते, न दैर्घ्यस्येति समासो नेष्ट इति भावः । अतिप्रसङ्गवारणार्थं 'लक्षणेन' इत्यस्यावश्यकत्वमित्याह– 75 **लक्षणेनेत्येवे**ति, तत्फलमाह–**लक्ष्येण वाराणस्यादिना मा भू**दिति, अयमाशयः–'लक्षणेन' इत्यस्यानुवृत्त्यभावे यस्य दैर्घ्यमनुना द्योत्यते तेन समास इत्यर्थे गङ्गावाराणस्योरुभयोरपि दैर्घ्यस्य सदृशत्वेन वाराणसीदैर्घ्यमनुना द्योत्यत एवेति लक्ष्यभूतेन

वाराणस्यादिना नाम्नापि समासः स्यादेव, 'लक्षणेन' इत्यनुवृत्तौ तु वाराणस्या लक्ष्यत्वेन न तेन सह समास इति ।

"यस्य चायामः" [ पा० २. १. १५. ] इति सूत्रे महाभाष्ये तु वाराणस्या सह समासाभावार्थं प्रकृतसूत्रे 'लक्षणेन' इत्यस्य सम्बन्ध इति प्रतिपाद्य तदसम्बन्धेऽपि न वाराणस्या सह समास इति पक्षान्तरमपि प्रतिपादितम्, तथाहि– "किमुदाहरणम्? अनुगङ्गं हास्तिनपुरम्, अनुगङ्गं वाराणसी, अनुशोणं पाटलिपुत्रम्; यस्य चायाम इत्युच्यते, गङ्गाप्यायता वाराणस्यप्यायता, तत्र कुत एतत्–गङ्गया सह समासो भविष्यति न वाराणस्येति? एवं तर्हि लक्षणेनेति वर्तते, गङ्गा चैव लक्षणं न वाराणसी । अथवा 'यस्य चायाम' इत्युच्यते, गङ्गा चाप्यायता वाराणस्याप्यायता, तत्र प्रकर्षगतिर्विज्ञास्यते–साधीयो यस्यायाम इति, साधीयश्च गङ्गाया न वाराणस्याः" इति ।

अयमाशयः–यत्सम्बन्ध्यायामबोधकोऽनुः स तेनोपस्थितत्वात् षष्ठ्यन्तेन समस्यत इत्यर्थे गङ्गाया आयाम इत्यर्थेऽयं समासः स्यात्, वाराणसीशब्देन च तदायामो लक्ष्यते, मुख्यार्थेनान्वयाभावात्, एवं गङ्गायामसदृशो वाराणस्यायाम इति बोधो भवति, तत्र वाराणसीशब्देन मुख्यार्थेनानुना समासोऽस्तु, गङ्गाशब्द एव लक्षणयाऽऽयामे वर्तताम्, एवं च प्रागुक्तार्थे एव 'अनुवाराणसि गङ्गा' इति स्यात्, ततश्च 'लक्षणेन' इत्यनुवर्तनीयम्, अधिकदेशव्याप्त्या गङ्गाया आयामवत्त्वेन प्रसिद्धत्वात् तस्या एव लक्षणत्वम्; यद्यपि कस्यचित् पुरुषस्य वाराणस्येवायामवत्त्वेन प्रसिद्धा न गङ्गा, तथापि न तदपेक्षया प्रयोगव्यवस्था, किन्तु प्रचुरलोकप्रसिद्ध्यपेक्षया, अथवा मानुवर्ति लक्षणेनेति, उपमानोपमेयभावे चायं समास इष्यते, न्यूनगुणमुपमेयं भवति, अधिकगुणमुपमानम्, तत्र सम्पूर्णगुणसन्निधौ न्यूनगुणमसद्गुणमिव प्रतिभाति, इति सामर्थ्यात् प्रकर्षगतिर्विज्ञास्यते, प्रकृष्टाप्रकृष्टसन्निधौ च प्रकृष्टस्य कार्येण सम्बन्धो नाप्रकृष्टस्येति प्रकृष्टाया गङ्गाया एव समासो न वाराणस्या इति । तथाप्येवं व्याख्यानापेक्षया 'लक्षणेन' इत्यस्यानुवृत्तिरेव ज्यायसीति ।

अथ 'अनुयमुनादैर्घ्यं, मथुरादैर्घ्यम्, अनुयमुनायामं मथुरायामम्' इति वा कस्मान्न भवति? 'दैर्घ्ये यल्लक्षणं तेनानुः समस्यते' इत्युच्यमाने प्राप्नोति, यमुनायामेन हि मथुरायामो लक्ष्यते, यमुना-मथुरे अप्यायामद्वारेणैव लक्ष्यलक्षणे भवतः, उच्यते–दैर्घ्यलक्षणेन दैर्घ्यवता–आयामिनैव समासः, न तु दैर्घ्येणायामेनानभिधानात्, अनुश्च समासे लक्षणस्य लक्ष्यस्य चायामं द्योतयति, स चायामिनो यमुनादेरेव सम्भवति, नायामस्य, आयामस्यायामाभावात् । अथवा 'दैर्घ्ये' इत्यनुः सम्बध्यते–'अनु' इत्येतन्नाम 'दैर्घ्ये' इति दैर्घ्ये वर्तमानमित्यर्थः, तत्रार्थे लक्षणेनेत्यपि दैर्घ्यविषय एव विज्ञायत इत्युच्यते–आयामविषये यल्लक्षणं तद्वाचिनेति, तत्र कुतोऽत्र प्रसङ्गः, यमुनायामस्य दैर्घ्यादिशब्देनैवोक्तत्वादायामस्य चायामाभावादनोरायामे वृत्त्यभावात् ॥ ३. १. ३४. ॥

## समीपे । ३ । १ । ३५ ॥

**त० प्र०–'अनु' इत्येतन्नाम समीपेऽर्थे वर्तमानमर्थात् समीपिवाचिना सहैकार्थ्ये सति पूर्वपदार्थेऽभिधेये समस्यते, स च समासोऽव्ययीभावसंज्ञः । अनु वनस्य–अनुवनमशनिर्गता, अनुनृपं पिशुनाः । अनोरव्ययत्वात्–**"विभक्ति-समीप०" [ ३. १. ३९. ] **इत्यादिनैव समासे सिद्धे विकल्पार्थवचनम्, तेन वाक्यमपि भवति । पृथग्वचनं लक्षणेनेत्यस्य निवृत्त्यर्थम् ॥ ३५ ॥**

**श० म० अनुसन्धानम्–समीपे** इति । 'समीपे' इत्येतद् 'अनुः' इत्येतस्य विशेषणमित्याह–**'अनु' इत्येतन्नाम समीपेऽर्थे वर्तमानमिति, अर्थात् समीपिवाचिने**ति– समीपं नाम कस्यचित् समीपिनो भवति, नहि विना समीपिना समीपं भवति, यथा पुत्रः पित्रा सम्बन्धित्वात्, तत्र प्रत्यासत्तेर्यस्य तत् समीपं तद्वाचिना नाम्ना समस्यत इत्यर्थः । संगता आपो यत्रेति "द्व्यन्तर०" [ ३. २. १०९. ] इत्यप ईपादेशे– 'समीप' इति वर्णानुपूर्वीज्ञानार्थं व्युत्पादनेऽप्यव्युत्पन्नः [ प्रकृतिप्रत्ययार्थानुगतिशून्यः ] सन्निकृष्टार्थवाचीह समीपशब्दः ।

**अनु वनस्ये**ति–विग्रहवाक्यमिदम्, सम्बन्धेऽत्र षष्ठी ज्ञेया, केचित् तु–"सामीप्येऽप्यशनौ वनं लक्षणं भवति, 'अनुवनमशनिर्गता' इति वचनेन समीपेऽशनिगमनं लक्ष्यत इति वनमन्विति लक्षणद्वितीया भवति" इत्याहुः । **अनुवनमि**ति समासः, वनस्य समीपे वज्रं गतमिति वाक्यार्थः, एवम्–**अनुनृपमि**ति समासः, अनु नृपाणामिति विग्रहः, नृपाणां समीपे पिशुना भवन्तीति वाक्यार्थः ।

सूत्रवैयर्थ्यमाशङ्क्य समाधत्ते–**अनोरव्ययत्वादि**त्यादिना, "विभक्ति-समीप०" [ ३. १. ३९. ] इति सूत्रे हि नित्यमित्यनुवर्तते, नित्यसमासे च वाक्यं न भवतीति समासस्यैव प्रयोगः स्यान्न वाक्यस्य, यथोपकुम्भमित्यादौ, तत्र नित्यग्रहणादन्यत्र समासे विकल्पो विज्ञायत इति प्रकृतसूत्रेण समासविधाने 'अनु वनस्य' इति वाक्यमपि प्रयुज्यत इति भावः ।

ननु तथापि पूर्वसूत्र एव "दैर्घ्यसमीपेऽनुः" इति पठ्यतां किं पृथक् सूत्रकरणेनेति चेत्? अत्राह–**पृथग्वचनं 'लक्षणेन' इत्यस्य निवृत्त्यर्थमि**ति–'लक्षणेन' इत्यस्य निवृत्त्या लक्ष्यलक्षणभावाभावेऽपि समासो भवति, तदनुवृत्तौ च तत्रैव

स्यादिति भावः। केचित् तु प्रकृतसूत्रेऽपि 'लक्षणेन' इत्यस्य सम्बन्धं स्वीकुर्वते, यदाहोत्पलः-अनुशब्दः समीप-समीपिनो-र्लक्ष्यलक्षणभावद्योतकः, तथाहि-वनसामीप्यगताया अशनेर्वनं लक्षणमिति। पाणिनीयतन्त्रेऽपि दीक्षितादिना "अनुर्यत्समया०" 5 [पा० २. १. १४.] इति सूत्रे 'लक्षणेन' इति सम्बध्य व्याख्यातम्, सूत्रभेदश्च स्पष्टप्रतिपत्तये कृत इति तदाशयः ॥ ३. १. ३५. ॥

## तिष्ठद्ग्वित्यादयः । ३ । १ । ३६ ॥

त० प्र०—तिष्ठद्गुप्रभृतयः समासशब्दा अव्ययीभाव-10 संज्ञा भवन्ति, यथायोगमन्यपदार्थे पूर्वपदार्थे चाभिधेये। तिष्ठन्ति गावो यस्मिन् काले गर्भग्रहणाय दोहाय वाहाय वत्सेभ्यो निवासाय जलपानार्थं वा स कालस्तिष्ठद्गु, वहन्ति गावो यस्मिन् काले स कालो वहद्गु; आयन्ति गावो यस्मिन् स काल आयतीगवम्; अत्र पूर्वपदस्य पुंवद्भावाभावः समा-15 सान्तश्च निपातनात्; एतेऽन्यपदार्थे काले।

तथा—खले यवा यस्मिन् स कालः—खलेयवम्, खले-बुसम्, निपातनात् सप्तम्या अलुप्; लूनयवम्, लूयमानयवम्; पूतयवम्, पूयमानयवम्; संहृतयवम्, संह्रियमाणयवम्; संहृतबुसम्, संह्रियमाणबुसम्; एते प्रथमैकवचनान्ता एवा-20 न्यपदार्थे काले, देशेऽपीत्यन्ये; तेन 'खलेयवं पश्य, खलेय-वेन कृतम्, खलेयवे कृतम्' इत्यादयः प्रयोगा असाधवः, द्वितीयादिविभक्त्यन्ता अप्येते साधव इत्यन्ये।

नाभेरधः—अधोनाभम्, निपातनादत् समासान्तः, पूर्व-पदार्थप्रधानोऽयम्।

25 तथा—समत्वं भूमेः—समभूमि, एवं—समपदाति; पक्षे पूर्वपदस्य मान्तत्वमपि निपात्यते—समंभूमि, समंपदाति; एतौ देश-काल-भावेष्वन्यपदार्थेष्वित्यन्ये, उत्तरपदार्थप्राधान्ये तु समा भूमिः—समभूमिः, समपदातिरिति कर्मधारय एव।

तथा—शोभनत्वं समस्य, शोभनत्वं समायाः शोभना 30 समा यत्र—सुषमम्, एवं—विषमम्, निष्षमं, दुष्षमम्, अप-रसमम्; उत्तरपदार्थप्राधान्ये तु तत्पुरुष एव—शोभना समा—सुषमा, शोभने समे—सुषमे; समशब्देनाव्ययीभाव इत्यन्ये।

तथा—समाया आयतीत्वम्, आयती समा यत्र, आयती समेति वा—आयतीसमम्, एवं—पापसमम्, पुण्यसमम्; 35 समशब्देन तृतीयासमास इत्यन्ये— आयत्या समम्—आयती-समम्, एवं—पापसमम्, पुण्यसमम्।

तथा—प्रगतत्वं प्रकृष्टत्वं वाह्नः—प्राह्णम्, निपातनादह्नादेशः; एवं—प्ररथम्, प्रमृगम्, प्रदक्षिणम्; काल-भावलक्षणेऽन्य-40 पदार्थेऽपीत्यन्ये—प्रक्रान्तमहरस्मिन्—प्राह्णम्, प्रगता रथा अस्मिन्—प्ररथम्, प्रनष्टा मृगा अस्मिन्—प्रमृगम्, प्रकृता दक्षिणा अस्मिन्—प्रदक्षिणम्; अन्यत्र प्रगता मृगा अस्मात्—प्रमृगो देशः; देशेऽप्यन्ये; उत्तरपदार्थप्राधान्ये तु तत्पुरुष एव— प्राह्णः, प्ररथः, प्रमृगः, प्रदक्षिणा। 45

तथैकत्वमन्तस्य, एकोऽन्त इति वा—एकान्तम्; देशेऽन्य-पदार्थेऽपीत्यन्ये; एवं— प्रान्तं, समपक्षम्, समानतीर्थम्, समा-नतीरम्।

तथा— संप्रत्यसंप्रत्यप्रदक्षिणानि यथासंख्यं वर्तमाना-ऽवर्त-मान-वामेषु। 50

तथा—युद्धे इजन्तं च,—केशाकेशि, दण्डादण्डि, द्विदण्डि, द्विमुसलि।

"तिष्ठद्ग्विति" इत्यत्रेतिशब्दः स्वरूपपरिग्रहार्थः, तेनेह समासान्तरं न भवति—परमं तिष्ठद्गु, तिष्ठद्गु प्रियमस्येति वाक्यमेव भवति, अत एव च प्रदक्षिण-संप्रतिभ्यां सह 55 नञ्समासेन सिद्धावप्रदक्षिणा-ऽसंप्रत्योः पाठः। इजन्तस्य च तिष्ठद्ग्वादिपाठः "इच् युद्धे" [७. ३. ७४.] इत्यनेनेज-न्तस्य समासान्तरप्रतिषेधार्थः, द्विदण्ड्यादेरव्ययीभावार्थश्च। अन्ये तु परपदेनैव समासं प्रतिषेधन्ति, तन्मते—परमतिष्ठद्गु, "आतिष्ठद्गु जपन् सन्ध्याम्" [स्मृति] इत्यादयोऽपि 60 साधवः। तिष्ठद्ग्वादिराकृतिगणः, तेन 'प्रसव्यम्, अप्र-सव्यम्, यत्प्रभृति, तत्प्रभृति, इतःप्रभृति' इत्यादि सिद्धम् ॥ ३६ ॥

**श० म० अनुसन्धानम्-तिष्ठद्गु०** इत्यादि। 'नाम नाम्ना ऐकार्थ्ये अव्ययीभावः समासः' इति पूर्वतोऽनुवर्तन्ते, तैः 65 सह प्रकृतसूत्रस्य कोऽर्थः?, यदि तिष्ठद्गुप्रमुखानि समुदायात्मकानि नामानि परेण नाम्ना समस्यन्त इति विज्ञायेत तदा तिष्ठद्गु-प्रमुखानि समुदायात्मकानि नामानि नामान्तरेण समस्येरन्, किन्तु तिष्ठद्गुप्रमुखा अव्ययीभावा न सिध्येयुः, एवं परमं तिष्ठद्गु—'परमतिष्ठद्गु' इति स्यात्, तच्च नेष्टम्, इह हि तिष्ठदादीनां 70 गवादिभिरव्ययीभाव इष्यते—'तिष्ठद्गु, वहद्गु' इति, न तु तिष्ठ-द्ग्वादीनामन्येन, अतो नैवं विज्ञायते; कथं तर्हि? उच्यते—तिष्ठद्गुप्रमुखा नामत्वादेव ये लब्धसाधुभावास्तेषामनेनाव्ययी-भावसंज्ञामात्रं विधेयमित्येवं सम्बन्धो विज्ञायत इति; अत्राय-म्भावः—तिष्ठद्गुप्रभृतीनां गणपाठादेव कृतसाधुत्वानामिह प्रकरणे 75 संकीर्तनमव्ययीभावसंज्ञार्थमिति। अत एवाह—**तिष्ठद्गुप्रभृतयः समासशब्दा अव्ययीभावसंज्ञका भवन्तीति**, 'नाम

नाम्ना' इति स्वावयव एव निवेश्यते-'नाम नाम्ना' इत्येवंरीत्या सम्भूता ये तिष्ठद्ग्वादय इति, इह प्रकारवाचकादिशब्दो गणद्योतनाय प्रभृत्यर्थतया व्याख्यातः। अथ 'तिष्ठदादयो गवादिभिः' इति किं नोच्यते, एवं ह्युच्यमाने सुकरं प्रतिपत्तुम्, नैवं शक्यम्, एवं ह्युच्यमाने तिष्ठदादयो गवादयश्च न तुल्यसंख्याः, अनेकत्र ह्येकमुत्तरपदं पूर्वपदं च, तत्र पूर्वोक्तपदनियमो न स्यात्, तिष्ठदादयः सर्वे गवादिभिः सर्वैः समस्येरन्, निपातनसाध्यानि चाल्लुगादीनि न स्युः। इह केचित् समासा अन्यपदार्थमभिदधति, केचित् पूर्वपदार्थं केचिच्चोभयमिति प्रयोगस्वाभाव्यं विवृणोति-**यथायोगमन्यपदार्थे पूर्वपदार्थे चाभिधेये** इति-योगं-वाच्यवाचकभावसम्बन्धमनतिक्रम्य, क्वचिदन्यपदार्थे क्वचित् पूर्वपदार्थे क्वचिच्चोभयस्मिन्नर्थेऽभिधेये इति भावः।

अथोदाहरणावसरः, तत्र तावत् पूर्वमन्यपदार्थे विगृह्योदाहरति-**तिष्ठन्ति गावो यस्मिन्नि**त्यादिना, 'तिष्ठन्ति गावो यस्मिन्' इति विग्रहः, तत्रापि 'तिष्ठन्ति' इति त्वर्थकथनमात्रं न तु स्याद्यन्तस्य समासः, अलौकिकविग्रहे तु 'तिष्ठन्ती जस्' इति द्रष्टव्यम्, तथा च तिष्ठन्तीशब्दस्य समासः, तिष्ठन्तीशब्दश्च स्थाधातोः शतृप्रत्यये ङ्यां च भवति, **'तिष्ठद्गु'** इति समासः, अत्र "परतः स्त्री पुंवत्०" [ ३. २. ४९. ] इति पुंवद्भावः, "गोश्चान्ते ह्रस्वो०" [ २. ४. ९६. ] इति ह्रस्वत्वम्, "अनतो लुप्" [ ३. २. ६. ] इति समासादुत्पन्नस्य सेर्लोप् च, अयं 'तिष्ठद्गु'समासः कालविशेषे वर्तत इति विग्रहवाक्ये **'काले'** इति कथितम्, अत एव समासस्य 'कालः' इति विशेष्यमुक्तम्। अयं च कालो गवां स्थानेनोपलक्षितो ग्राह्यः, तत्रापि वैचित्र्यमस्ति, तथा हि-तिष्ठद्गुकालो गवां दोहनकालः, तदानीं गवां शयनोपवेशनयोरभावात्, एवं तत्तत्प्रकरणादिभेदेन गर्भग्रहणकालो वाहकालो वत्सकालो निवासकालो जलपानकालो वा गृह्यते यत्र गवां स्थानमपेक्षितं भवति, एतत् सर्वं संग्रहीतुं विग्रहवाक्ये प्रोक्तम्-**गर्भग्रहणाय दोहाय वाहाय वत्सेभ्यो निवासाय जलपानार्थं वे**ति-एतानि कार्याणि गवामुत्थाने सति कालविशेषे भवन्ति, 'तिष्ठत्'शब्देनोपवेशनशयनासनगमनादिभिन्ना पादचतुष्टयोपरि स्थिरीभूयोत्थितावस्थोच्यते, सा च गर्भग्रहणसमये-पुंगवेन सह संयोगसमये, दोहसमये, [ पुंगवानां ] भारोद्वहनोद्यमसमये, वत्सार्थं तेभ्यो दुग्धं पाययितुं, चरन्त्यश्चरन्त्यो वा गावो यदा निवासस्थानं गन्तुमभिलषन्ति तदा चरणं परित्यज्य तिष्ठन्तीति स कालो निवासकालोऽनुमीयते गोपालैः, जलपानसमयेऽपि तथैव स्थितिर्दृष्टेति यथाविवक्षं सर्व एव कालोऽनेन शब्देनोच्यते; 'वत्सेभ्यः' इति बहुवचनं च गवां बहुत्वेन तदपेक्षया तदीयवत्सानामपि बहुत्वात्, किंच वत्सानामुभयलिङ्गानां संग्रहार्थमेकशेषेण बहुवचनान्तेन निर्देशः, केचित् तु-तिष्ठद्गु-प्रावृट्काल इत्याहुः, परे तु-तिष्ठद्गु रात्रिरिति प्रतिपन्नाः।

एवम्-**'वहन्ति गावो यस्मिन्'** इति विग्रहः, अत्रापि प्राग्वत् 'वहन्ति' इति स्थाने 'वहन्त्यः' इति ज्ञेयम्, वह्धातोः शतरि ङ्यां च वहन्तीशब्दः, शेषं प्राग्वत्, **'वहद्गु'** इति समासः, अयमपि कालविशेषे वर्तते, शरत्काल इति केचित्, अहरित्यपरे; एवम्-**'आयन्ति गावो यस्मिन् काले'** इति विग्रहः, अत्रापि 'आयन्ति' स्थाने 'आयत्यः' इति ज्ञेयम्, "इंण्क् गतौ" आङ्पूर्वादितः शतरि "इणोरप्०" [ ४. ३. १५. ] इति यत्वे ङ्यां च 'आयती'शब्दः; **आयतीगवमि**ति समासः, इह पूर्वतो विशेषमाह-**अत्र पूर्वपदस्य पुंवद्भावाभावः, समासान्तश्च निपातनादि**ति-"परतः स्त्री पुंवत्०" [ ३. २. ४९. ] इति प्राप्तोऽपि पुंवद्भावो न भवति, गणे पुंवद्भावरहितस्य निपातनात्, एवं "गोस्तत्पुरुषाद्" [ ७. ३. १०५. ] इति समासान्तस्य तत्पुरुषादेव विधानादिहाप्राप्तावपि गणे तादृशनिपातनसामर्थ्यात् समासान्तो भवतीति ज्ञेयमिति भावः, शेषं प्राग्वत्। **एते** अनन्तरमभिहिताः 'तिष्ठद्गु, वहद्गु, आयतीगवम्' इति त्रयः समासाः, **अन्यपदार्थे काले** कालरूपेऽन्यपदार्थे, निपात्यन्त इत्यर्थः।

ननु च यदि तिष्ठद्ग्वादयः काले वर्तन्ते तदा 'तिष्ठद्गु कालः' इत्यत्र कालशब्दस्य कथं प्रयोगः, तिष्ठद्गुशब्देनैव कालार्थस्य गतत्वात् कालशब्दस्याप्रयोगः स्यात्, उच्यते-यद्यप्ययं प्रयोगो लोके कालशब्दस्य सामान्यवाचित्वात् तद्व्यवच्छेदाय भवतीति, तिष्ठद्गुव्यवच्छेदाय कालशब्दप्रयोगो न युक्तः, गुरुलाघवप्रधानाश्च तिष्ठद्गुशब्दमेव प्रयुञ्जते न कालशब्दम्, तथापि वृत्तौ तिष्ठद्गुशब्दः काले वर्तते इति प्रदर्शनार्थं प्रयोगः।

दर्शितोदाहरणतः किञ्चिद्वैलक्षण्यकृते उदाहरणान्तराणि समुच्चेतुमाह-**तथे**ति, **'खले यवा यस्मिन् काले'** इति विग्रहः, **खलेयवमि**ति समासः, एवम्-**खलेबुसमि**ति समासः, 'खले बुसानि यस्मिन् काले' इति तस्य विग्रहः, उभयत्र "ऐकार्थ्ये" [ ३. २. ८. ] इति स्यादेर्लुप्प्राप्तापि न भवतीत्याह-**निपातनात् सप्तम्या अलुबि**ति-गणे सविभक्तिकपाठनिपातनसामर्थ्यादुभयत्र सप्तम्या लोपाभाव इत्यर्थः, **लूनयवमि**त्यादयोऽष्टौ समासाः, तेषां विग्रहवाक्यानीमानि-लूना यवा यस्मिन् काले, लूयमाना यवा यस्मिन् काले, पूना यवा यस्मिन् काले, पूयमाना यवा यस्मिन् काले, संहृता यवा यस्मिन् काले, संह्रियमाणा यवा यस्मिन् काले, संहृतानि बुसानि यस्मिन् काले, संह्रियमाणानि बुसानि यस्मिन् काले इति; एषु विशेषमाह-**एते** खलेयवादयोऽव्ययीभावाः, **प्रथमैकवचनान्ता एव** सिप्रत्ययान्ता एव प्रयुज्यन्ते-खलेयवं वर्तते, खलेबुसं वर्तते, खले-

यवं संजातम्, खलेबुसं संजातमिति, न तु द्वितीयाद्यन्ताः-खलेयवं पश्य, खलेयवेन कृतमित्यादि, म्लेच्छैरेवंपरिमाणमृणं दीयते, खलेयवं काले दातव्यं, खलेबुसं काले गृहीतमिति च केचिदुदाहरन्ति; **अन्यपदार्थे काले** अन्यपदार्थे एव काले एव 5 च, नान्यत्रेत्यर्थः।

अत्र मतान्तरमाह-**देशेऽपीत्यन्ये** इति-एके आचार्याः खलेयवादयः शब्दा न केवलं काले, अपि तु देशेऽपि वर्तन्त इत्याहुः-खले यवा यस्मिन् देशे स देशः खलेयवमिति, एवं-खलेबुसमित्यादि। **तेन** प्रथमान्तानामेव साधुत्वेन, **'खलेयवं 10 पश्य'** इति द्वितीयान्तः प्रयोगः, **'खलेयवेन कृतम्'** इति तृतीयान्तः प्रयोगः, **'खलेयवे कृतम्'** इति सप्तम्यन्तः प्रयोगः, **इत्यादयः** एवं प्रथमान्तभिन्नाः प्रयोगाः, **असाधवः** शिष्टानभिमताः; अत्र मतान्तरमाह-**द्वितीयादिविभक्त्यन्ता अप्येते साधव** इति।

15 अन्यपदार्थप्राधान्ये प्रयोगानभिधाय पूर्वपदार्थप्राधान्ये प्रयोगान् दर्शयति-**'नामेरधः'** इति विग्रहः, **अधोनाभमिति** समासः, अधोनाभं हतवान्, **निपातनादत् समासान्त** इति-"नामेर्नाम्नि" [ ७. ३. १३४. ] इति समासान्तस्य बहुव्रीहौ नाम्नि विधानादिहाप्राप्तावपि गणे तथापाठात् समासान्तो-20 ऽत् सिद्धः, **पूर्वपदार्थप्रधानोऽयमिति**-अधोनाभमित्यत्र नाभेरधोभागस्य प्रतीतिरिति पूर्वपदार्थस्य प्राधान्यं स्पष्टमस्ति।

अथ पूर्वपदार्थस्य प्राधान्येऽपि भावप्रधानं निर्देशं ज्ञापयितुं पृथक्कृत्योदाहर्तुमाह-**तथेति**, **समत्वं भूमेः** इति विग्रहः, **'समभूमि'** इति समासः, अतिदिशति-**एवं-समपदाति** 25 इति-समासोऽयम्, पदातेः समत्वमिति विग्रहः, समत्वमिति समपदस्य वृत्तौ भावप्रधानत्वमिति प्रदर्शयितुं, न तु तेन समासार्थम्, **पक्षे** गणपाठे विकल्पेन मान्तत्वकरणसामर्थ्यादेकदा, **पूर्वपदस्य** समस्य मान्तत्वं निपात्यते, तदाह-**'सम-म्भूमि, समम्पदाति'** इति, अत्र मतान्तरमाह-**एतौ** 30 समभूमि-समपदातिसमासौ, **देश-काल-भावेषु** देशरूपे कालरूपे भावरूपे च, अन्यपदार्थेषु भवतः, **इत्यन्ये** एवं केचनाचार्या मन्यन्ते, समा भूमिरस्मिन् देशादाविति-समभूमि, समाः पदातयो यस्मिन् देशादाविति-समपदाति, इति; ननूत्तरपदार्थप्राधान्ये का गतिरित्यत आह-**उत्तरपदार्थप्राधान्ये** त्विला-35 दिना, **समा भूमिरिति** विग्रहः, **समभूमिरिति** समासः, **समपदातिरिति** समासः, समः पदातिरिति तस्य विग्रहः, समा भूमिरिति भूमिर्विशेष्या, समेति विशेषणमित्युत्तरपदार्थस्य प्राधान्यं, न तु पूर्वपदार्थस्येत्यत्र नायं समासः, एवं तर्हि कोऽयं समास इत्याह-**कर्मधारय एवेति**-"विशेषणं विशेष्येण०" 40 [ ३. १. ९६. ] इति कर्मधारय एव समासो भवतीत्यर्थः।

अथ पूर्वपदार्थस्य प्राधान्ये भावपरत्वे तथान्यपदार्थप्राधान्ये च पृथक्कृत्योदाहर्तुमाह-**तथेति**, **'शोभनत्वं समस्य, शोभनत्वं समायाः'** इति विग्रहवाक्ये पूर्वपदार्थस्य प्राधान्ये भावपरत्वे च, **'शोभना समा यत्र'** इति विग्रहवाक्यमन्यपदार्थे, **सुषममिति** समासः, अतिदिशति-**एवं-विषमम्, निष्षमम्, दुष्षमम्, अपरसममिति**, विग्रहवाक्यानि तु- 45 'विगतत्वं समस्य समाया वा, विगता समा यत्र वा' 'निर्गतत्वं समस्य समाया वा, निर्गता समा यत्र वा' 'कुत्सितत्वं समस्य समाया वा, कुत्सिता समा यत्र वा' 'अपरत्वं समस्य समाया वा, अपरा समा यत्र वा' इति; ननूत्तरपदार्थप्राधान्ये का 50 गतिरित्यत आह-**उत्तरपदार्थप्राधान्ये तत्पुरुष एवेति**, **'शोभना समा'** इति विग्रहः, **'सुषमा'** इति च समासः, **'शोभने समे'** इति विग्रहः, **'सुषमे'** इति द्विवचनान्तः समासः; एवं-'विगता निर्गता कुत्सिता अपरा वा समा-विषमा, निष्षमा, दुष्षमा, अपरसमा' इति, प्रथमे "सुः पूजा- 55 याम्" [ ३. १. ४४. ] इत्यनेन, द्वितीय-तृतीययोः "प्रात्यव-परि०" [ ३. १. ४७. ] इत्यनेन, चतुर्थे "दुर्निन्दा-कृच्छ्रे" [ ३. १. ४३. ] इत्यनेन च तत्पुरुषः, पञ्चमे तु "विशेषणं०" [ ३. १. ९६. ] इत्यनेन कर्मधारयात्मकस्तत्पुरुषः; *नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्* इति समशब्दस्य समाशब्दस्य 60 वा सस्य "निर्दुःसुवेः समसूतेः" [ २. ३. ५६. ] इति सर्वत्र षत्वमवगन्तव्यमिति। मतान्तराणि-न समं-विषमम्, समाद् विप्रकृष्टो हीनो वा देशो विषमम्, समान्निष्क्रान्तं-निष्षमम्, नास्मिन् सममस्तीति निष्षमम्, कृच्छ्रेण समं दुष्षमम्, कृच्छ्रेण सममस्मिन् दुष्षमम्, दुष्टमित्यर्थः। सुषमादिशब्दाः समशब्देन 65 समाशब्देन च साधिताः, केचित् समाशब्देन नेच्छन्तीत्याह-**'समशब्देनाव्ययीभाव इत्यन्ये** इति-न तु समाशब्देनेत्यर्थः। समः-समानः, समा-संवत्सरः।

अथान्तरोपदर्शितोदाहरणतः किञ्चिद्वैलक्षण्यकृते पृथक्कृत्योदाहर्तुं प्राह-**तथेति, 'समाया आयतीत्वमिति** पूर्वपदा- 70 र्थस्य प्राधान्ये भावपरत्वे च विग्रहः, **'आयती समा यत्र'** इत्यन्यपदार्थप्राधान्ये विग्रहः, **'आयती समा'** इति विग्रहस्तु यद्यप्युत्तरपदार्थस्य प्राधान्यं बोधयतीवाभाति, तत्र च प्रामाण्यं चेत् तदा तथैवास्तु, अपि तु तथा सति प्रतिज्ञाविरोधो भवति, 'अन्यपदार्थे पूर्वपदार्थे च' इति सूत्रार्थकरणे प्रतिज्ञानात्, अत्र 75 केचित्-इदं विग्रहप्रदर्शनं सम्पातायातं मध्यमवृत्तौ तद्दर्शनादित्याहुः, 'आयती समा' इति विग्रहपाठस्य प्रामाण्ये पूर्वपदार्थप्राधान्याभिमाने चायं प्रकार आभाति-आयती कीदृशी ? समा-संवत्सररूपभविष्यत्काल इत्यर्थः, अस्तीह पूर्वपदार्थस्य विशेष्यतया प्राधान्यमिति, **आयतीसममिति** समासः, अत्र लघुन्यास, 80

कार एवमाह–"अत्र यदा 'आयती' शब्दः शत्रन्ताद् ङ्यन्तस्तदा गणपाठात् पुंवद्भावाभावः, यदा तूत्तरकालवाची 'आयती'शब्दो नित्यस्त्री ङ्यन्तस्तदा पुंवद्भावप्राप्तिरेव नास्ति" इति, अयं भावः– आयतीशब्दो द्विधा निष्पाद्यते, तथा हि–आङ्पूर्वाद् "इंण्क् 5 गतौ" इत्यतः शतरि ङ्यां च 'आयती' इति, एवम्–'आयति'-शब्दाद् ङ्याम् 'आयती' इति, आयतिशब्दोऽपि द्विविधः आयमनमायतिः, एष्यतीत्यायतिः, तत्र प्रथमाद् ङीर्न भवति, क्त्यन्तत्वेन "इतोऽक्त्यर्थात्" [ २. ४. ३२. ] इत्यत्र क्त्यर्थवर्जनात्, द्वितीयस्तु न क्त्यन्त इति ततो ङीर्भवति, अत एव लिङ्गानु-10 शासने स्त्रीलिङ्गप्रकरणे "ह्युक्त०" [ ६ ] इति कारिकावृत्तौ– "दीर्घत्वेऽप्यायतिः स्त्री स्यात्, प्रभावाऽऽगामिकालयोः ।" इत्युक्तम्, तथा "भङ्ग्यावल्यायतिस्त्रोटिः" [ २४ ] इति कारिकाया वृत्तौ–आयतिः–आगामिकालः, प्रभावः, दैर्घ्यं च, एष्यतीत्यायतिरित्यागामिकाले ह्युक्तान्तो न भवतीत्यस्योपादानम्" इति । 15 अतिदिशति–**एवं–पापसमम्, पुण्यसममिति**–इमौ समासौ, विग्रहस्तु प्राग्वत्, तथा हि–'पापत्वं समायाः, पापा समा यत्र, पापा समा वा' 'पुण्यत्वं समायाः, पुण्या समा यत्र, पुण्या समा वा' इति विग्रहवाक्यानि । अत्र मतान्तरमाह–**समशब्देन तृतीयासमास इत्यन्ये** इति–एके आचार्याः समाशब्द-20 स्थानेऽत्र समशब्दं तृतीयासमासं चेच्छन्ति, अर्थात् तृतीयातत्पुरुषापवादोऽयं समशब्देन समासः, लघुन्यासकारस्तु–"तृतीयासमासस्तृतीयातत्पुरुषः" इत्याह । 'अन्ये' इत्युक्त्या स्वमतविरोधः सूचितः, तन्मूलं तु तृतीयासमासे सति पूर्वपदार्थान्यपदार्थान्यतरप्राधान्याभावादिह गणे पाठस्यानौचित्यप्रसङ्ग एव । तृतीया-25 समासमेव सविग्रहमाह–**आयत्या सममिति** विग्रहः, **आयतीसममिति** समासः, अतिदिशति–**एवं पापसमम्, पुण्यसममिति**–इमौ हि समासौ, विग्रहस्तु पापेन पुण्येन वा सममिति ।

अथ प्रस्य पूर्वपदस्य भावपरत्वे पृथक्कृत्योदाहर्तुमाह–**तथेति**, **'प्रगतत्वं प्रकृष्टत्वं वा'** इति विग्रहः, **प्राह्णमिति** समासः, 30 किमप्यत्र कार्यान्तरं जातमित्याकाङ्क्षायामाह–**निपातनादह्लादेश** इति–"सर्वांशसंख्याव्ययात्" [ ७. ३. ११८. ] इति समासान्तोऽह्लादेशश्च तत्पुरुषे भवतीतीहाप्राप्तावपि गणे निपातनसामर्थ्यात् समासान्तोऽह्लादेशश्च भवतीत्यर्थः, अत एव च "नपुंसकाद् वा" [ ७. ३. ८८. ] इति समासान्तविकल्पोऽपि 35 न भवति, अव्ययीभावत्वात् क्लीबत्वमन्यथा पुंस्त्वं स्यात् । अतिदिशति–**एवं–प्ररथम्, प्रमृगम्, प्रदक्षिणमिति**–इमे त्रयोऽव्ययीभावसमासाः, विग्रहस्तु प्राग्वत्, तथा हि–प्रगतत्वं प्रकृष्टत्वं वा रथस्य मृगस्य दक्षिणस्य वेति । अत्र मतान्तरमाह–**काल-भावलक्षणेऽन्यपदार्थेऽप्यन्ये** इति–एके आचार्याः 40 कालरूपे धात्वर्थरूपे भावे चान्यपदार्थेऽपीच्छन्तीत्यर्थः, तदेव सविग्रहं दर्शयति–**'प्रकान्तमहरस्मिन्'** इति विग्रहः, **प्राह्णमिति** समासः, "प्राह्णे कल्याणनामानावेतौ पुष्यपुनर्वसू ।" इति प्रयोगः, **'प्रगता रथा अस्मिन्'** इति विग्रहः, **प्ररथमिति** समासः, **'प्रनष्टा मृगा अस्मिन्'** इति विग्रहः, **प्रमृगमिति** समासः, **'प्रकृता दक्षिणा अस्मिन्'** इति 45 विग्रहः, **प्रदक्षिणमिति** समासः, 'काल-भावलक्षणे' इति भणनादेतन्मते देशे न भवतीत्याह–**अन्यत्र** कालभावाभ्यामन्यत्र, **'प्रगता मृगा अस्मिन्'** इति विग्रहः, **प्रमृगः** इति बहुव्रीहिसमासः, **देशः** इति समासविशेष्यम् । पुनर्मतान्तरमाह–**देशेऽप्यन्ये** इति–एतन्मते प्राह्णं देश इत्यपि भवती- 50 त्यर्थः । ननूत्तरपदार्थप्राधान्ये का गतिरित्यत आह–**उत्तरपदार्थप्राधान्ये तु तत्पुरुष एवेति**–'प्रकान्तं प्रकृष्टं प्रगतं वाऽहः' 'प्रगतः प्रकृष्टः प्रकान्तो वा रथः' 'प्रगतः प्रकान्तः प्रनष्टो वा मृगः' 'प्रकृता दक्षिणा' इति विग्रहे "प्रात्यव०" [ ३. १. ४७. ] इति तत्पुरुषसमासे–**प्राह्णः, प्ररथः**, 55 **प्रमृगः, प्रदक्षिणेति**, 'प्राह्णः' इत्यत्र "सर्वांशसंख्याव्ययात्" [ ७. ३. ११८. ] इत्यट् समासान्तोऽह्लादेशश्च, तथा "अतोऽह्नस्य" [ २. ३. ७३. ] इति नस्य णत्वम्, 'अहन्'शब्दस्य नपुंसकत्वेऽपि "अर्धसुदर्शनदेवनमह्ना०" इति लिङ्गानुशासनवचनात् पुंस्त्वं ज्ञेयमिति । 60

अथ पूर्वपदार्थस्य प्राधान्ये भावपरत्वेऽपि [ उत्तरपदार्थप्राधान्यकृत ]वैलक्षण्यकृते पृथक्कृत्योदाहर्तुं प्राह–**तथेति**, **'प्रकृत्वमन्तस्य'** इति पूर्वपदार्थस्य प्राधान्ये भावपरत्वे विग्रहः, **'प्रकोऽन्तः'** इति विग्रहवाक्यं तूत्तरपदार्थप्राधान्यं बोधयतीवाभाति, अस्य प्रामाणिकत्वे 'अन्यपदार्थे पूर्वपदार्थे च' इति 65 बाहुल्यापेक्षयावगन्तव्यमुपलक्षणविधया वा व्याख्येयम्, अत एव प्रक्रमभेदाय 'तथा' इत्यस्योपादानं संगच्छते, यदि च पूर्वपदार्थप्राधान्ये यद्वान्यपदार्थप्राधान्ये एवायं समास इत्याग्रहस्तदायं प्रकार आभाति–'एकोऽन्तः' इति विग्रहेऽप्येकमात्रस्य 'कीदृश एकः ? अन्तः' इत्यन्तत्वविवक्षया ह्येकस्यैव प्राधान्यमिति 70 पूर्वपदार्थप्राधान्यमव्याहतमेवेति, एवमतिदिश्यमानेऽप्यवगन्तव्यम् । **एकान्तमिति** समासः, मतान्तरमाह–**देशेऽन्यपदार्थेऽपीत्यन्ये** इति–केचिदाचार्या देशरूपेऽन्यपदार्थेऽभिधेयेऽपि प्रकृतसमासमिच्छन्ति, तद्यथा–एकोऽन्तोऽस्मिन् एकान्तं देश इति । अतिदिशति–**एवं–प्रान्तम्, समपक्षम्**, 75 **समानतीर्थम्, समानतीरमिति**–एते समासाः, विग्रहस्तु प्राग्वत्, तथा हि–'प्रगतत्वमन्तस्य, प्रगतोऽन्तो वा' 'समत्वं पक्षस्य, समानः पक्षो वा' 'समानत्वं तीर्थस्य, समानं तीर्थं वा' 'समानत्वं तीरस्य, समानं तीरं वा' इति ।

अथार्थविशेषेषु पृथक्कृत्योदाहर्तुमाह–**तथेति**, **सम्प्रत्य-** 80

**सम्प्रत्यप्रदक्षिणानि** सम्प्रति असम्प्रति, अप्रदक्षिणमिति त्रयोऽव्ययीभावाः समासाः, **यथासंख्यं** क्रमेण, **वर्तमाना-वर्तमानवामेषु** वर्तमानार्थे सम्प्रति, अवर्तमानार्थे असम्प्रति, वामार्थे चाप्रदक्षिणमिति साधवः, विग्रहस्तु-सम्भूतिरिदानीं-5 सम्प्रति, न सम्प्रति-असम्प्रति, प्रगतं दक्षिणं प्रदक्षिणं, न तथा-अप्रदक्षिणमिति ।

सूत्रान्तरेण समस्तानामव्ययीभावसंज्ञार्थं पृथक्कृत्योदाहर्तुमाह-**तथेति, युद्धे इजन्तं चेति**-युद्धार्थे इजन्तं समुदायात्मकं नामाव्ययीभावसंज्ञकं भवतीत्यर्थः, **केशाकेशि, दण्डादण्डि,** 10 केशेषु केशेषु मिथो गृहीत्वा कृतं युद्धं, दण्डैश्च दण्डैश्च मिथः प्रहृत्य कृतं युद्धमिति "तत्रादाय०" [ ३. १. २६. ] इति समासावेतौ, "इज् युद्धे" [ ७. ३. ७४. ] इति चेजन्तत्वेऽनेनाव्ययीभावसंज्ञा, **द्विदण्डि, द्विमुसलि,** द्वौ दण्डावस्मिन् प्रहरणे, द्वौ मुसलावस्मिन् प्रहरणे इति "एकार्थं०" 15 [ ३. १. २२. ] इति समासः, "द्विदण्ड्यादि" [ ७. ३. ७५. ] इतीजन्तत्वमनेन चाव्ययीभावसंज्ञा ।

इतिशब्दस्य सूत्रस्थस्य प्रयोजनमाह-**'तिष्ठद्‌ग्वित्ति' इत्यत्र 'इति'शब्दः स्वरूपपरिग्रहार्थ** इति-तिष्ठद्‌गुप्रभृतीन्येवम्भूतान्येवावतिष्ठन्ते, **तेन** स्वरूपावधारणेन, **इह** अन-20 न्तरं वक्ष्यमाणप्रयोगे, **समासान्तरं न भवतीति**-अनेन लब्धाव्ययीभावसंज्ञानां तिष्ठद्‌गुप्रभृतीनां नामान्तरेण समासो न भवति, क्व? इत्याह-**'परमं तिष्ठद्‌गु'** इति-अत्र "सन्महत्परमो०" [ ३. १. १०७. ] इत्यनेन समासो न भवति, **'तिष्ठद्‌गु प्रियमस्य'** इति-अत्र "एकार्थं०" [ ३. १. २२. ] 25 इत्यनेन समासो न भवति, किं तर्हि? **वाक्यमेव भवतीति**-तच्चोक्तमेव ।

स्वरूपपरिग्रहमेव द्रढयति-**अत एव च** स्वरूपमात्रस्यैव परिग्रहात् पुनः, **प्रदक्षिण-सम्प्रतिभ्यामि**त्यादि-न प्रदक्षिणम्-अप्रदक्षिणम्, न सम्प्रति-असम्प्रति, इति "नञ्" 30 [ ३. १. ५१. ] इत्यनेन 'अप्रदक्षिणम्, असम्प्रति' इति सिद्धावपीह गणे पाठः ।

इजन्तस्येह गणे पाठस्य प्रयोजनं दर्शयति-**इजन्तस्ये**त्यादिना, **समासान्तरप्रतिषेधार्थः** इति-तिष्ठद्‌गुप्रभृतीनां पदान्तरेण समासो नेष्यते, इजन्तस्यापि तत्र पाठेन 'परमं दण्डा-35 दण्डि' इति पदान्तरेण समासो मा भूदित्येतदर्थमिह पाठः, "इज् युद्धे" [ ७. ३. ७४. ] इत्यस्येचोऽव्ययीभावसंज्ञाऽऽदौ न भवति, स हि "तत्रादाय०" [ ३. १. २६. ] इति विहिते समासे समासान्तः, स च समासोऽव्ययीभाव एवेति तदन्तोऽप्यव्ययीभावो भवति, **द्विदण्ड्यादेरव्ययीभावार्थश्च** 40 द्विदण्ड्यादौ हि "एकार्थं०" [ ३. १. २२. ] इति बहुव्रीहि-समासे "द्विदण्ड्यादिः" [ ७. ३. ७५. ] इति इच् समासान्तः, तत्र न विना पाठेनाव्ययीभावसंज्ञा सिध्यतीति तस्याव्ययीभावसंज्ञार्थश्चेह तिष्ठद्‌ग्वादिषु पाठः, 'परमं द्विदण्डि' इत्यत्राव्ययीभावत्वे नपुंसकलिङ्गं विभक्तेर्लोपश्च प्रयोजनम्, 'द्विदण्डि' इत्यादि क्रियाप्रधानं भवति-द्विदण्डि प्रहरन्ति, द्विमुसलि प्रहरन्ति, तत्र 45 नपुंसकं लिङ्गं विभक्तेर्लोपश्च सिद्धः, तदेवानेनाव्ययीभावत्वाख्यानेनानूद्यते, चकारेण समासान्तरप्रतिषेधः ।

अत्र मतान्तरमाह-**अन्ये तु परपदेनैव समासप्रतिषेधमिच्छन्तीति**-अर्थात् पूर्वपदेन समासो भवत्येव, तदेवाह-**तन्मते परमतिष्ठद्‌गु०** इत्यादि-अत्र "सन्महत्परम०" 50 [ ३. १. १०७. ] इति समासः, **'आतिष्ठद्‌गु'** इत्यत्र "पर्यपाङ्०" [ ३. १. ३२. ] इति समासः ।

बहुवचनमाकृतिगणार्थमित्याह-**तिष्ठद्‌ग्वादिराकृतिगण** इति, तत्फलमाह-**तेने**त्यादि, प्रगतत्वं सव्यस्य, अपगतत्वं सव्यस्य, यस्मात् प्रभृति, तस्मात् प्रभृति, इति विग्रहवाक्यानि, 55 अस्मात् प्रभृति-**इतःप्रभृति,** तसन्तस्य समासः, समासे चैकपद्यमिति ॥ ३. १. ३६. ॥

## नित्यं प्रतिनाऽल्पे । ३ । १ । ३७ ॥

**त० प्र०—अल्पेऽर्थे वर्तमानेन प्रतिना नाम्ना नाम नित्यं समस्यते, अव्ययीभावश्च समासो भवति । शाकस्याल्पत्वं**— 60 **शाकप्रति, सूपस्य मात्रा—सूपप्रति । अल्प इति किम्? वृक्षं प्रति विद्योतते विद्युत् । नित्यग्रहणं वाक्यनिवृत्त्यर्थम्, तेनान्यत्र समासो वाक्यं च भवति ॥ ३७ ॥**

**श० म० अनुसन्धानम्—नित्यमि**त्यादि । सूत्रार्थः सुगमः । **नित्यमि**ति समसनक्रियाविशेषणत्वाद् द्वितीयान्तं 65 नपुंसकम्, अन्यथा समास इत्यनुवृत्तेर्नित्यस्य तद्विशेषणत्वे पुंस्त्वं स्यात् । सूत्रेऽल्पपदस्य भावप्रधानत्वमिति विग्रहवाक्येन प्रकटयति-**शाकस्याल्पत्वमिति, 'शाकप्रति'** इति समासः, एवम्-**'सूपस्य मात्रा'** इति विग्रहः, मात्रा—अल्पत्वम्, **'सूपप्रति'** इति समासः । नन्वेवमल्पार्थकस्य प्रतेरेवार्थः 70 प्रधानमिति पूर्वपदार्थप्राधान्याभावादव्ययीभावत्वं कथमिति चेत्? उच्यते-स्वभावादयमुत्तरपदार्थप्रधानः समास इति तत्र 'पूर्वपदार्थे' इत्यधिकारेऽप्यसम्भवादस्याव्यापारः; यद्वा 'दोषामन्यमहः, दिवामन्या रात्रिः' इत्यादावव्ययानां द्रव्यप्रधानत्वदर्शनादिहापि प्रतिशब्दस्याल्पमात्रावद्द्रव्यपरत्वमिति शाकस्य 75 विशेषणत्वमिति 'अल्पः शाकः' इत्यादि विग्रहवाक्यमिति पूर्वपदार्थत्वमेव ।

पदकृत्यं पृच्छति-**अल्पे इति किमिति,** उत्तरयति-**वृक्षं प्रति विद्योतते विद्युदिति**-नात्र प्रतिशब्दोऽल्पार्थे, अपि तु लक्षणे इति समासो न भवति।

इह नित्यग्रहणं किमर्थम्? नहि सर्वत्र नित्यविधौ नित्यग्रहणं 5 क्रियते, यथा विकल्पविधौ वाग्रहणम्, तत्र वा ग्रहणाभावादेव विध्यन्तरवदयं नित्यो विधिः सिद्धः; न च प्रकृतमिह वाग्रहणं निवर्त्त्यमस्ति, यथा "नित्यं हस्ते पाणावुद्वाहे" [ ३. १. १५. ] इत्यत आह-**नित्यग्रहणं वाक्यनिवृत्त्यर्थमिति**-नित्यं समास एव यथा स्यान्न कदाचिद् वाक्यमित्येवमर्थं नित्यग्रहणम्। 10 ननु च विनापि नित्यग्रहणेन विध्यन्तरवदयं समासो नित्यो भवेदिति तत्र दैवादेव वाक्यं निवर्त्स्यते, एवं तर्हि नित्यग्रहणं कुर्वन्निदं ज्ञापयति-'समासविधौ यत्र नित्यग्रहणं नास्ति तत्र पाक्षिकः समासविधिः, न विध्यन्तरवन्नित्यः' इति, तेन किं सिद्धमित्यत आह-**तेनान्यत्र समासो वाक्यं च** 15 **भवतीति**-इह तु नित्याधिकारे समास एव, 'सूपप्रति' इत्यादौ सूपादीनां च वाक्यं नास्ति, शब्दान्तरेणैवार्थप्रदर्शनमस्वपदविग्रहः, अन्यत्र तु समासभाजां पदानां समासो वाक्यं चेति नेदं यत्नमन्तरेण शक्यं व्यवस्थापयितुमिति नित्यग्रहणमिति ॥ ३. १. ३७. ॥

## 20 संख्या-ऽक्ष-शलाकं परिणा द्यूतेऽन्यथावृत्तौ। ३। १। ३८॥

**त० प्र०**—संख्यावाचि नामाक्ष-शलाके च द्यूतविषयेऽन्यथावर्तने वर्तमानेन परिणा नाम्ना सहैकार्थ्ये नित्यं समस्यन्ते, अव्ययीभावश्च समासो भवति, वर्तने चैषां कर्तृत्वात् 25 तृतीयान्तत्वम्, अक्ष-शलाकयोस्त्वेकवचनान्तयोरेवेष्यते। पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति, तत्र यदा सर्वे उत्ताना अवाञ्चो वा पतन्ति तदा पातयितुर्जयः, अन्यथापाते पराजयः। एकेनाक्षेण शलाकया वा न तथा वृत्तं यथा पूर्वं जये-एकपरि, द्विपरि, त्रिपरि, परमेण चतुष्परि, 30 पञ्चसु त्वेकरूपेषु जय एव भवति। अक्षेणेदं न तथा वृत्तं यथा पूर्वं जये-अक्षपरि, शलाकापरि।

संख्यादीति किम्? पाशकेन न तथा वृत्तम्। परिणेति किम्? अक्षेण परिवृत्तम्। द्यूत इति किम्? रथस्याक्षेण न तथा वृत्तम्। अन्यथावृत्ताविति किम्? पञ्चपरीति मा 35 भूत्। केचित्-'समविषमद्यूते सममित्युक्ते यदा विषमं भवति तदा 'अक्षपरि शलाकापरि' इति प्रयुज्यते' इत्याहुः। अन्ये-पूर्वं पदमाहूतं, तच्च पतितमिष्टं सिद्धं, पुनस्तदाहूतं यदा न पतति, तदायं प्रयोगः-'अक्षपरि, शलाकापरि' इत्याहुः ॥ ३८ ॥

**श० म० अनुसन्धानम्-संख्येत्यादि।** 'नाम नाम्ना 40 एकार्थ्ये नित्यं समासोऽव्ययीभावः' इति पूर्वतोऽनुवर्तन्ते, तत्र 'नाम' इत्यस्य विशेषणमाह-**संख्याक्षशलाकमिति**-संख्या चाक्षश्च शलाका चैषां समाहार इति तथा, 'संख्या' इत्यनेन न 'संख्या' इत्येवं नाम ग्राह्यम्, अपि तु संख्यायाः संज्ञात्वेन तद्बोध्यस्य संज्ञिनो ग्रहणमित्याह-**संख्यावाचि नामेति,** *स्वं 45 रूपं शब्दस्याशब्दसंज्ञा* इति न्यायेनाक्षशलाकाशब्दयोरेव ग्रहणमित्याह-**अक्षशलाके चेति**-अक्षशब्दरूपं शलाकाशब्दरूपं च नामेत्यर्थः, 'नाम्ना' इत्यस्य विशेषणमाह-**परिणेति**-'परि'-रूपनाम्नेत्यर्थः, यद्यपि परिशब्दस्याव्ययत्वात् स्यादेर्लोपेन भवि-तव्यमिति परिणेति कथं निर्दिश्यते? इत्याशङ्कितुं शक्यते, अपि 50 त्वत्र परेः शब्दपरत्वेनासत्त्वाभावान्नाव्ययसंज्ञेति बोध्यम्, परिं विशिनष्टि-**द्यूतेरन्यथावृत्तौ वर्तमानेने**-ति-'द्युते' इत्यत्र विषयसप्तमीत्याह-**द्यूतविषये** इति, अन्यथावृत्तिं व्याचष्टे-**अन्यथावर्तने** इति- यथावर्तने जयस्तद्विपरीतवर्तने इत्यर्थः, **ऐकार्थ्ये** इति-नन्वैकार्थ्ये सति समासः, ऐकार्थ्यं चैकपद्यं, 55 तच्च समासे सति भवति, तत इतरेतराश्रयदोषे समासः कथम्? उच्यते-यत्र यत्र येन सूत्रेण समासः कर्तुमिष्यते तत्र तत्र तस्मादेवैकार्थ्यं प्रथमं ज्ञातव्यं, ततः समासः, अन्यथा हि सर्वाण्यपि सूत्राणि निरर्थकतां भजेरन्निति न्यासविदः।

पूर्वं 'षष्ठ्या' इति समर्थविभक्तिरुपस्थिता, सा चेह न संग- 60 तेति का समर्थविभक्तिरित्याशङ्कायामाह-**वर्तने चैषां कर्तृत्वात् तृतीयान्तत्वमिति**-विपरीतवर्तनं परेरर्थः, तच्च क्रियारूपं, क्रिया च नित्यं सकर्तृका, कर्तरि चानुक्ते तृतीया विभक्तिरेवोचितेति भावः, **अक्ष-शलाकयोस्त्वेकवचनान्तयोरेवेष्यते** इति-अत्र केचित्-"समासे द्वित्वाद्यनवगमा- 65 देकत्वस्यान्यनिरपेक्षत्वादन्तरङ्गत्वादवगतिसंभवान्न्यायप्राप्तमेतत्" इत्याहुः,

अक्षादयस्तृतीयान्ताः, पूर्वोक्तस्य तथा न तत्।
कितवव्यवहारे च, एकत्वेऽक्ष-शलाकयोः ॥ १ ॥

पूर्वोक्तस्य-पूर्ववृत्तस्येत्यर्थः। अन्ये तु-"पूर्ववृत्तस्यान्यथा- 70 त्वद्योतने समासोऽयम्, तच्चैकेनापि क्रियते, ततो द्विवचनादि निष्प्रयोजनमित्याह-एकत्वेऽक्षशलाकयोरिति" इत्याहुः। परे त्वेवमाहुः-"इहाक्ष-शलाकयोरेकवचनान्तयोरेव समास इष्यते तत् कथं लभ्यते? इत्यत आह-अक्षशलाकयोरित्यादिना, नेहापूर्वः शब्दोऽर्थः सम्बन्धो वा क्रियते, अनुवादकं हि शास्त्रम्, तत्रेह 75 सामान्येनाभिधानेऽपि यदि लोके विशेषविषयः शब्दः, न तस्यान्यथाभावोऽस्तीति तत्रैव साधुत्वं व्यवतिष्ठते, 'अक्षपरि, शलाकापरि' इति चैकस्यैवान्यथापाते लोके कितवैः प्रयुज्यते न तु

द्वयोस्त्रयाणां वेत्येकवचनान्तयोरेव समासः प्रयोगानुसारेण विज्ञायते" इति ।

अथान्यथावर्तनं बोधयति-**पञ्चिका नामे**त्यादिना, पञ्च परिमाणं यस्याः सा द्युतक्रिया पञ्चिका, तदीयपरिमाणं च 5 पञ्चभिरक्षैः पञ्चभिः शलाकाभिर्वा विधीयते इति सार्थकं तन्नामेति भावः । **तत्र** पञ्चिकाद्युते, **यदा** यस्मिन् समये, **सर्वे** सकला अक्षाः शलाका वा, **उत्तानाः** ऊर्ध्वमुखाः, **अवाञ्चो वा** अधोमुखा वा, पतन्ति, **तदा** तस्मिन् समये, **पातयितुर्जयः** अन्यकर्तृकक्रियाया अन्यस्य फलभोक्तृत्वानौ-10 चित्यात् पातयितुरेव जयः, **अन्यथा पाते** यदि पञ्चाप्येकरूपा न भवन्ति तदा, **पराजयः** पातयितुः पराभवः ।

प्रथमं तावत् संख्यामुदाहरति-**एकेने**त्यादि-एकेन न तथा वृत्तं यथा पूर्वं जये इति **'एकपरि'** इत्युच्यते, तत्रैकेनेत्युच्यमानमक्ष एव, नह्यन्यस्य तथा, अन्यथा वा पाते जयः पराजयो 15 वेत्याह-**अक्षेणे**ति, एवम्-एकया शलाकया न तथा वृत्तं यथा पूर्वं जये इति-**'एकपरि'** इति, पञ्चाक्षद्युते चत्वारोऽक्षा ऊर्ध्वमुखाः पतिताः, एकोऽधोमुखः, अथवा चत्वारोऽक्षा अधोमुखाः पतिताः, एक ऊर्ध्वमुखः पतितस्तदा 'एकपरि' इत्युच्यत इति भावः, एवं-**'द्विपरि'** इति-द्वाभ्यां [ अक्षाभ्यां शला-20 काभ्यां वा ] न तथा वृत्तं यथा पूर्वं जये, **'त्रिपरि'** इति-त्रिभिः [ अक्षैः शलाकाभिर्वा ] न तथा वृत्तं यथा पूर्वं जये, **परमेण** उत्कर्षेण, **'चतुष्परि'** इति-चतुर्भिः [ अक्षैः शलाकाभिर्वा ] न तथा वृत्तं यथा पूर्वं जये, इति वाक्यार्थयोजना, ननु चतुष्परिवत् 'पञ्चपरि' इति कथं न भवतीत्यत 25 आह-**पञ्चसु त्वेकरूपेषु जय एव भवती**ति-अत्र जय एव भवतीति 'पञ्चपरि' इति समासो न भवतीति भावः, जये हि यदक्षादीनां वृत्तं तदपेक्षयाऽन्यथा पातत्वे सति समासेन भवितव्यम्, न च पञ्चानामेकस्वरूपत्वेऽन्यथात्वं सम्भवति, अत एव जयस्तदा भवति यदा पञ्चाप्येकरूपा भवन्ति, ऊर्ध्वमुखा 30 अधोमुखा वा, एतेन प्रकारेण 'परमेण चतुष्परि' इत्यत्रोपपत्तिर्दर्शिता, यदि षडादिभिर्द्युतं स्यात् तदा 'पञ्चपरि' इत्यादिकं स्यात्, अपि तन्न भवतीति साधूक्तं-'परमेण चतुष्परि' इति । संख्याशब्दमुदाहृत्याक्षशलाके उदाहरति-**अक्षेणेदं न तथा वृत्तं यथा पूर्वं जये** इति-इदमर्थोपदर्शकं वाक्यम्, 35 **'अक्षपरि'** इति समासः, **'शलाकापरि'** इति च समासः, अर्थोपदर्शकं वाक्यं तु 'शलाकया न तथा वृत्तं यथा पूर्वं जये' इति, एकवचनान्तयोरेवानयोः समास इति 'अक्षाभ्यामक्षैर्वा शलाकाभ्यां शलाकाभिर्वा न तथा वृत्तं यथा पूर्वं जये' इति वाक्येषु समासो न भवति ।

पदकृत्यं पृच्छति-**संख्यादीति किमि**ति, उत्तरयति- 40 **पाशकेन न तथा वृत्तमि**ति-'संख्यादिग्रहणाभावे नामान्तरमपि समस्येतेति प्रकृते समासः प्रसज्येत तद्वारणाय संख्यादिग्रहणमावश्यकमिति भावः । पुनः पृच्छति-**परिणेति किमि**ति-उत्तरयति-**अक्षेण परिवृत्तमि**ति-अत्रावचूरिकारः-"अक्षेण परिवृत्तमित्यत्रायं परिशब्दो वाचको न तु 45 द्योतकः, अत्र तु द्योतक एवास्ति, "संख्याक्षशलाकं परिणा०" इति सूत्रे द्योतको गृह्यते इति भावः" इति ।

पुनः पृच्छति-**द्युत इति किमि**ति, उत्तरयति-**रथस्याक्षेण न तथा वृत्तमि**ति-अत्राक्षशब्दो रथावयवविशेषवाचक इति द्युताभावात् सत्यामप्यन्यथावृत्तौ समासो न भवति । 50 पुनः पृच्छति-**अन्यथावृत्ताविति किमि**ति, उत्तरयति-**पञ्चपरीति मा भूदि**ति-पञ्चस्वपि ह्येकरूपेषु समासो मा भूदित्येतदर्थमन्यथावृत्तिग्रहणमिति भावः ।

'अक्षपरि, शलाकापरि' इति समासद्वयविषये मतान्तरमाह-**केचित् समविषमद्युते सममि**त्यादिना, तच्च 'एकिका 55 द्विका' इति शब्दाभ्यां कथ्यते, विषमसंख्यया एकिका कथ्यते, समसंख्यया च द्विका, तत्रैकेनैव वैषम्यमित्येकवचनान्तयोरक्षशलाकाशब्दयोः समासः सिद्धः । इहान्यदपि मतान्तरमाह-**अन्ये पूर्वपदमाहूतमि**त्यादिना, पदमिह कोष्ठमिति केचित्, अक्षसन्निवेशविशेष इति परे, पूर्वं यथाभूतोऽक्षसन्निवेश आहूय 60 कथितः स तथैवाभूत्, सम्प्रति चाह्वानविपरीतोऽक्षपातो जात इति समुदितार्थः, अन्यथा वर्तनेऽयं प्रयोग इतीमे अपि मते स्वमतेन संगृहीते एवेति ग्रन्थकृदाकूतम् ।

ननु-'अन्यथापाते' इत्यस्य भिन्नरूपेण पात इत्यर्थः, कश्चिदुत्तानोऽन्येऽवाञ्च इतिरूपमेव वैपरीत्यम्; द्वाभ्यां वा वैपरीत्यं 65 स्यात्, त्रयाणां चतुर्णां वा वैपरीत्यं तु न सम्भाव्यते, तथाभूता अक्षा अधिकसंख्यायोगिनः स्युः, त एवानुकूलाः, न्यूनसंख्याश्च प्रतिकूला इत्येव व्यवहारतो लभ्यते, यथा-द्वावुत्तानौ त्रयोऽवाञ्चः, एक उत्तानश्चत्वारोऽवाञ्चः, अस्यां स्थितौ च द्वाभ्यामेकेन वा वैपरीत्यं व्यवहर्तव्यं स्यात्, न तु त्रिभिश्चतुर्भिर्वेति 'परमेण 70 चतुष्परि' इति कथमुक्तमिति । चिन्त्यम्, अत्र केचित्-एकेन अत्रोत्तानाः पतन्तः स्वजयावहत्वेन स्वीकृताः, परे चावाञ्चः पतन्तः, तत्र पूर्वपातयिता सर्वानुत्तानान् पातयित्वा जयी सन् पुनरपि पातयति तदा यावन्तोऽवाङ्मुखाः पतितास्तावन्त एव विपरीतवर्तनाः कथनीयाः, एवं सति पञ्चानां पाते सर्वथैव 75 विपरीतवृत्तिरिति तत्र संख्यानस्यानावश्यकत्वमेवेति तथाव्यवहाराय 'चतुष्परि' इत्येव परमेण भवतीति ग्रन्थाशयान्न कापि क्षतिः । परे तु-केचनोत्तानपातरसिकाः केचन चावाक्पातरसिकाः, न ते संख्याबलमात्रं बहु मन्यन्ते, तदपेक्षयायं ग्रन्थ इति ॥ ३. १. ३८ ॥ 80

## विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावा-ऽत्यया-ऽसंप्रति-पश्चात्-क्रम-ख्याति-युगपत्-सदृक्-संपत्-साकल्या-ऽन्तेऽव्ययम् । ३ । १ । ३९ ॥

त० प्र०—विभक्त्यादिष्वर्थेषु वर्तमानमव्ययं नाम नाम्ना सहैकार्थ्ये सति पूर्वपदार्थेऽभिधेये नित्यं समस्यते, स च समासोऽव्ययीभावसंज्ञो भवति ।

विभक्तिः—विभक्त्यर्थः कारकम्, अधिस्त्रि निधेहि, स्त्रीषु निधेहीत्यर्थः, एवम्—अधिकुमारि; समीपे–उपकुम्भं, कुम्भस्य समीप इत्यर्थः, एवम्–उपाग्नि, उपशरदम्; ऋद्धेराधिक्यं समृद्धिः, सुमद्रम्, मद्राणां समृद्धिरित्यर्थः, एवं–सुमगधम्, सुभिक्षम्; विगता ऋद्धिः–व्यृद्धिः–ऋद्ध्यभावः, दुर्यवनं, यवनानामृद्ध्यभाव इत्यर्थः, एवं–दुर्भिक्षम्; अर्थाभावो–धर्मिणोऽसत्त्वम्, निर्मक्षिकम्, मक्षिकाणामभाव इत्यर्थः, एवं–निर्मशकम्, अमक्षिकम्, उन्मशकम्, निर्वातम्; अत्ययः—अतीतत्वम्, सत एवातिक्रान्तत्वम्, अतिवर्षं, वर्षाणामतीतत्वमित्यर्थः, एवम्–अतिशीतम्, निशितम्, निहिमम्, अतृणम्, नितृणम्; असंप्रतीति वर्तमानकाले उपभोगादेः प्रतिषेधः, अतिकम्बलं, कम्बलस्योपभोगं प्रति नायं काल इत्यर्थः, एवम्–अतितैसृकम्, अत्यात्रम्; पश्चादर्थे–अनुरथं याति, रथस्य पश्चादित्यर्थः, एवम्–अनुपादातम्; क्रम–आनुपूर्व्यम्, अनुज्येष्ठं प्रविशन्तु, ज्येष्ठानुक्रमेणेत्यर्थः; एवम्–अनुवृद्धं साधूनर्चय; ख्यातिः–शब्दप्रथा, इतिभद्रबाहु, तद्भद्रबाहु, अहोभद्रबाहु, भद्रबाहुशब्दो लोके प्रकाशत इत्यर्थः; युगपदेककालार्थः, सचक्रं धेहि, चक्रेण सहैककालं चक्राणि वा युगपद्धेहीत्यर्थः, एवं–सधुरं प्राज; सदृगर्थे–सव्रतम्, व्रतस्य सदृशमित्यर्थः, एवं–सशीलम्, सकिखि, सदेवदत्तम्; अव्ययीभावे सहस्य सभावः; संपत्–सिद्धिः, सब्रह्म साधूनां, संपन्नं ब्रह्मेत्यर्थः, एवं–सवृत्तं मुनीनाम्, सक्षत्रमिक्ष्वाकूणाम्; साकल्यम्–अशेषता, सतृणमभ्यवहरति, न किंचित् त्यजतीत्यर्थः, एवं सतुषम्; अन्तः–समाप्तिः, सपिण्डैषणमधीते, पिण्डैषणापर्यन्तमधीत इत्यर्थः, एवं–सषड्जीवनिकायमधीते; अत्र समाप्तिरसकलेऽप्यध्ययने प्रतीयत इति साकल्येऽनन्तर्भावः ।

पूर्वपदार्थ इत्येव–समृद्धा मद्राः– सुमद्राः । अव्ययमिति किम्? समीपं कुम्भस्य ॥ ३९ ॥

श० म० न्यासानुसन्धानम्–विभक्तीत्यादि । अत्र वाक्यद्वयं कल्प्यते–'नाम नाम्ना समस्यते' इत्येकम्, 'स समासोऽव्ययीभावसंज्ञः' इत्यपरं च, तत्र प्रथमवाक्ये 'नाम नाम्ना' इति समुदायः संज्ञी, 'समासः' इति चान्वर्था संज्ञा, द्वितीयवाक्ये च 'समासः' इति संज्ञी, 'अव्ययीभावः' इति च संज्ञा, नित्यसमासोऽयं "नित्यं प्रतिनाल्पे" [ ३. १. ३७. ] इत्यतो नित्यमित्यस्यानुवर्तनात्, तदाह–**नित्यमिति** । अनुवृत्तस्य प्रथमान्तनामपदस्य 'अव्ययम्' इति विशेषणं, तस्य विभक्त्यादीनि विशेषणानि, 'नाम्ना' इति तृतीयान्तस्य च "समर्थः पदविधिः" [ ७. ४. १२२. ] इति परिभाषयोपस्थितं 'समर्थेन' इति विशेषणं, तच्चानुक्तमप्युपतिष्ठत्येवेति नोक्तम् ।

**विभक्त्यादिष्वर्थेष्विति**–अत्र विभक्तिपदं विभक्त्यर्थे लाक्षणिकम्, नहि विभक्तिवाचकं द्योतकं वा किमप्यव्ययं, किन्तु विभक्त्यर्थस्य वाचकं द्योतकं वा, द्वन्द्वान्ते श्रूयमाणायाः सप्तम्या बोधकतार्थत्वात्, 'विभक्त्यर्थादिबोधकमव्ययं नाम समर्थेन नाम्ना समस्यते' इत्यादिः सूत्रार्थः, तदाह–**विभक्तिर्विभक्त्यर्थः** इति, नामार्थेऽपि विभक्तेर्विधानात् तदर्थमात्रवाचकं द्योतकं वाप्यव्ययं विभक्त्यर्थबोधकं स्यादिति शङ्कापनोदायाह–**कारकमिति**, इदमुक्तं भवति–अव्ययीभावे पूर्वपदार्थस्य प्राधान्यं भवति, तत्र विभक्त्यर्थबोधकस्याव्ययस्य प्राधान्यं तदैव स्याद्, यदा तत् कारकबोधकं स्यात्, कारकस्यैव क्रियां प्रति प्राधान्यात्, यद्यपि "क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति निरुक्तोक्त्यास्कादिवचनाद् वैयाकरणैः क्रियाया एव प्राधान्यं स्वीक्रियते, तथापि क्रियाया जनकत्वेन कारकस्याप्यार्थप्राधान्यसत्त्वान्न दोषः, प्राधान्यं हि द्विविधं–शाब्दमार्थं च, तत्र क्रियायाः शाब्दं प्राधान्यं कारकस्यार्थं प्राधान्यम्; यद्वा क्रिया हि वाक्यार्थे प्रधानं "भावप्रधानमाख्यातम्" इति वचनात्, कारकार्थः क्रियान्वयी, प्रधानान्वयी प्रधानमेव विधेयवदिति; किञ्च विभज्यन्ते–प्रकाश्यन्ते कर्तृकर्मादयोऽर्था अनयेति कृत्वा विभक्तिशब्देनेह कारकमुच्यते, तच्चेहाधिकरणं विवक्षितमिति ।

**'अधिस्त्रि निधेहि'** इति–'स्त्रीषु' इत्यर्थे 'अधिस्त्रि' इति समासः, अत्राधिः सप्तम्यर्थे वर्तमानमव्ययं स्त्रीशब्देन प्रथमान्तेन सप्तम्यन्तेन वा समस्यते, अधिनैवाधिकरणार्थो गतः, न तत्र सप्तम्या अभिधेयमस्तीति प्रतिपत्तौ "नाम्नः प्रथमैकद्विबहौ" [ २. २. ३१. ] इति प्रथमा भवति, पदान्तराभिहितमेवार्थमधिशब्दो द्योतयतीति प्रतिपत्तौ सप्तमी; केचित्त्वेवमाहुः–अधिनाव्ययेनाधिकरणरूपार्थस्योक्तत्वेऽपि विभक्त्यर्थे समासविधानसामर्थ्यादेव स्त्रीशब्दादधिकरणार्थे सप्तमीति । **'स्त्रीषु निधेहीत्यर्थः'** इति–'स्त्रीषु' इति समासार्थप्रदर्शनाय 'निधेहि' इत्यधिकरणार्थविवक्षादर्शनाय च । 'स्त्रीषु' इति लौकिकं

विग्रहवाक्यम्, अलौकिकं तु 'अधि+सि, स्त्री+सुप्' इति, अथवा 'अधि+जस्, स्त्री+जस्' इति, नित्यसमासत्वात् सप्तम्या गतार्थत्वाच्च लौकिके विग्रहवाक्येऽधिशब्दप्रयोगो न भवति। अतिदिशति-**'एवमधिकुमारि'** इति-प्राग्वदत्रापि ज्ञेयम्, उभयत्राव्ययीभावस्य क्लीबत्वात् "क्लीबे" [ २. ४. ८७. ] इति ह्रस्वत्वं, स्यादेश्च "अनतो लुप्" [ ३. २. ६. ] इति लुप् च, एवमन्यत्रापि ज्ञेयमिति।

विभक्तावुदाहृत्य समीपे उदाहर्तुमाह-**समीपे** इति, **उपकुम्भमि**ति समासः, तदर्थमाह-**कुम्भस्य समीप इत्यर्थः** इति-अत्र समीपार्थेनोपशब्देनोपजनिते व्यतिरेके कुम्भशब्दात् षष्ठीति षष्ठ्यन्त एव समस्यत इत्यर्थः। अतिदिशति-**एवम्-उपाग्नि, उपशरदम्,** इति-'अग्नेः समीपे, शरदः समीपे' इत्यनयोरर्थः, "शरदादेः०" [ ७. ३. ९२. ] इति समासान्तेऽति 'उपशरद' इति समासात् स्यादेः "अमव्ययीभावस्यातोऽपञ्चम्याः" [ ३. २. २. ] इत्यमादेशे 'उपशरदम्' इति।

अत्र 'समृद्धि-सम्पत्' शब्दौ 'अर्थाभावा-ऽत्यय'शब्दौ चैकार्थाविव सम्भाव्यमानाविति तेषामर्थविशेषं दर्शयितुं प्रत्येकं व्याख्यास्यति, तत्र पूर्वं समृद्धावुदाहरणावसरात् समृद्धिशब्दं व्याचष्टे-**ऋद्धेराधिक्यं समृद्धिरि**ति-आधिक्यं पूर्वावस्थाया अतिरेकः। **सुमद्रमि**ति समासः, **मद्राणां समृद्धिरित्यर्थ** इति तदर्थः, यदा मद्रैर्विशिष्यमाणत्वात् समृद्धेः प्राधान्यं भवति तदायं समासः, मद्राणामाधिक्येन ऋद्धिर्वर्तेत इति, यदा तु मद्रा ऋद्ध्या विशिष्यमाणाः प्रधानभावमनुभवन्ति तदा तत्पुरुषो भवति-'सुमद्राः' इति, समृद्धिमन्तो मद्रा इत्यर्थः।

ननु 'सुमगधाः, सुमद्राः' इत्यादौ समृद्धेः 'सपुत्रः सच्छात्रो वा निमन्त्र्यताम्' इत्यादौ च वक्ष्यमाणसाकल्यार्थस्य प्रतीतेः पूर्वपदार्थप्राधान्यसत्त्वात् कथं न समास इति चेत्? न-अत्र हि सुमद्रादिसमुदाय एव समृद्धमद्रादिवाचकः, न तु पूर्वपदं समृद्धिवाचकमिति पूर्वपदार्थप्राधान्याभावात् समासाप्राप्तेः, यद्यपि पूर्वपदस्यापि समृद्धिरर्थोऽस्त्येव परमिह तस्य द्योतकत्वमेव, मद्रादिपदस्यैव वाचकत्वात्, एतच्चाव्ययीभावसमासप्रकरणादेवावसीयते, यत्र च मद्राणां समृद्धेरेव प्राधान्येन विवक्षा तत्र सुमद्रमित्यादिप्रयोग एव साधुः, तदेतद् वक्ष्यति-'पूर्वपदार्थ इत्येव-समृद्धा मद्राः सुमद्राः' इति।

अत एव "अव्ययं विभक्ति०" [ पा० सू० २. १. ६. ] इति सूत्रे महाभाष्ये-"इह कस्मान्न भवति-सुमद्राः, सुमगधाः, सपुत्रः, सच्छात्र इति, समृद्धौ साकल्य इति च प्राप्नोति" इत्याशङ्क्य पूर्वपदार्थप्राधान्याभावादिति समाधाय "अथवा नेमे समासार्था निर्दिश्यन्ते, किं तर्हि? अव्ययार्था इमे निर्दिश्यन्ते, एष्वर्थेषु यदव्ययं वर्तते तत् सुबन्तेन सह समस्यत इति। अस्यार्थः कैयटेनेत्थं स्फुटीकृतः-"अव्ययस्य श्रुतत्वादन्तरङ्गत्वात् तस्यैव विभक्त्यर्थादयो विशेषणानि, तत्र यदोत्तरपदार्थावच्छिन्नाः समृद्ध्यादयः प्रतिपिपादयिषितास्तदाऽव्ययं समृद्ध्यादीनां वाचकमिति तेषां तदर्थता भवति, 'सुमद्राः' इत्यत्र तु मद्रशब्द एव समृद्धिविशिष्टमर्थमाह, सुशब्दस्तु समृद्धिद्योतको न तु वाचकः, 'सपुत्रः' इत्यत्रापि सहशब्दस्तुल्ययोगस्य वाचको न तु साकल्यस्य, तत्तु प्रकारणादिसहितात् समुदायात् प्रतीयते" इति। नन्वेवं सति सतृणमत्ति' इत्यादावपि तुल्ययोग एव सहशब्दार्थोऽस्तु वृथा साकल्येऽव्ययीभावविधानमिति चेत्? न-तत्र तृणभक्षणे तात्पर्याभावात् सहशब्दस्य तुल्ययोगार्थत्वासम्भवेन झटित्येव साकल्यार्थप्रतीतेः सपुत्रादितो भेदात्।

व्यृद्धावुदाहर्तुमनाः पूर्वं व्यृद्धिशब्दं व्याचष्टे-**विगता ऋद्धिः-व्यृद्धिरि**ति-अनेन ऋद्धेरभाव उच्यत इत्याह-**ऋद्ध्यभाव** इति-ऋद्धिः-स्फीतता, **दुर्यवनमि**ति समासः, तदर्थमाह-**यवनानामृद्ध्यभाव इत्यर्थः** इति, अत्र "राष्ट्रक्षत्रियात्०" [ ६. १. ११४. ] इत्यञः "बहुष्वस्त्रियाम्" [ ६. १. १२५. ] इति लोपः, अतिदिशति-**एवम्-दुर्भिक्षमि**ति-अयं समासः, भिक्षाया स्फीतताविरह इति तदर्थः। ननु वक्ष्यमाणेन 'अर्थाभाव' इत्यनेनैव सिध्यत्येतत्, तथाहि-अर्थाभावो वस्त्वभावः, ऋद्धिविगमोऽप्यर्थाभावो भवत्येव, तत् कोऽत्र विशेषो येनार्थाभावाद् ऋद्धिविगमस्य पृथगभिधानं क्रियते? अस्ति विशेषः-उत्तरपदार्थाभावो हि द्रव्याभावः [ अर्थाभावः ], यथा निर्मक्षिकमिति मक्षिकाणामभाव उच्यते, न तु दुर्यवनमित्यत्र यवनानामभावः, किं तर्हि? तदीयाया ऋद्धेर्विगमः, अयमाशयः-व्यृद्धौ ह्युत्तरपदार्थस्य यो धर्मस्तस्याभावे समासो विधीयते, यथा-दुर्यवनमित्यत्र यवनरूपस्योत्तरपदार्थस्य ऋद्धिरूपो यो धर्मस्तस्याभावे अर्थाभावे, तूत्तरपदार्थस्य धर्मिणोऽभावे समासो विधीयते, यथा-निर्मक्षिकमित्यत्र मक्षिकारूपस्य धर्मिण उत्तरपदार्थस्याभावे, इत्यर्थाभाव-ऋद्धिविगमयोः स्फुटं भेदः, एभ्यत्ययोऽप्युत्तरपदार्थस्यैवातिक्रम इति ततोऽपि भेदः।

अथार्थाभावं व्याचष्टे-**अर्थाभावो धर्मिणोऽसत्त्वमि**ति-अर्थशब्दोपादानसामर्थ्यादेतादृशार्थलाभः, धर्मिणः-उत्तरपदवाच्यपदार्थस्य, असत्त्वम्-आत्मधारणानुकूलव्यापारः सत्ता, तदभावोऽसत्त्वम्, तथा च तत्र धर्मिणि आत्मधारणानुकूलव्यापाराभाव एव प्रतीयते, न तु सतो ध्वंसादिनाऽभावः, अतोऽत्ययाद् भेदः। उदाहरति-**निर्मक्षिकमि**ति-समासोऽयं, तदर्थमाह-**मक्षिकाणामभाव इत्यर्थः** इति-अत्र मक्षिकाणामत्यन्ताभाव एव प्रतीयते, न तु सतीनां तासां ध्वंसोऽपनयनं

वा, निर्मक्षिकं कृतमित्यादिप्रयोगश्च मक्षिकापनयनबोधकोऽप्यौपचारिक एव, तथा कृतं येनात्र मक्षिकाः पूर्वमपि नासन्निति प्रतीयत इत्येवं तात्पर्यात्; अतिदिशति-**एवमिति, निर्मशकम्, अमक्षिकम्, उन्मक्षिकम्, निवातमिति**-इमे 5 समासाः, निरादय उत्तरपदवाच्यस्य धर्मिणो मक्षिकादेरभावमाहुरिति समासः। अथार्थग्रहणं किमर्थम्? धर्माभावे प्रसज्यप्रतिषेधो मा भूत्, यथा-न भवति ब्राह्मणः-अब्राह्मण इति, अत्र कस्यचित् पुरुषस्य प्रसक्तं ब्राह्मण्यं नाम धर्मो निषिध्यते, न तु धर्म्येवेत्ययं समासो न भवति [ तत्पुरुषस्तु भवति ], भवति 10 चात्र पूर्वपदार्थस्य प्राधान्यं निषेधस्य विधेयत्वात्, न भवति, कः? ब्राह्मण इति, तदर्थमर्थग्रहणं, तदग्रहणेऽत्रापि प्रसज्येत, अर्थग्रहणे त्वर्थग्रहणसामर्थ्याद् 'अर्यते-गम्यते तैस्तैर्धर्मैरित्यर्थः' इति धर्मिप्रतिपत्तिर्न भवति, अभावमात्रप्रतिपत्तावर्थग्रहणमनर्थकं स्यात्, इह गौरश्वो न भवतीतरेतराभावेऽप्यात्यन्ताराभावो न 15 तु तस्य वस्तुनो धर्मिण एवाभाव इति न भवति।

अथात्ययं व्याचष्टे-**अत्ययोऽतीतत्वमिति**-ध्वंसत्वमित्यर्थः, एतदेव स्पष्टयति-**सत एवातिक्रान्तत्वमिति**-तत्सत्ताया अतीतकालसम्बन्धित्वं, प्रध्वंसाभावत्वमिति यावत्, उदाहरति-**अतिवर्षमिति**-समासोऽयं, तदर्थमाह-**वर्षाणामतीतत्वमित्यर्थः** इति, अतिदिशति-**एवमिति, अतिशीतम्,** 20 **निशीतम्, निहिमम्, अतृणम्, नितृणमिति**-इमे समासाः, ननु च वर्षाणामत्ययो नाम वर्षाणामभाव एव, प्रध्वंसाभावो हि सः, तत्र 'अर्थाभाव' इत्येव सिद्धे किमर्थमत्ययग्रहणम्? उच्यते-अर्थाभाव इति धर्मिणोऽभवनमात्रमुच्यते, तथाहि- 25 निर्मक्षिकं निर्मशकं वर्तत इति, तत्र मक्षिकादयो भूत्वा मा भूवन् अभूत्वा वा सर्वथा ते तत्र न सन्तीत्येतावन्मात्रमेव प्रतीयते न तु प्राक् पश्चाद् वेति विशेषः, अतोऽत्ययो नार्थाभाव इत्यत्ययग्रहणम्, यदि त्वर्थाभाव इत्यर्थाभावविशेषोऽपि गृह्येत तदाऽतिप्रसज्येत, अनभिधानाश्रयणं त्वगतिका गतिः। 30 अत्ययोऽतिक्रमः प्रध्वंसाभावः, अर्थाभावस्तु क्वचिद् देशे सर्वदैवाभावो न तूत्पन्नस्य पश्चादित्यत्ययोऽर्थाभावाद् भिद्यत इत्येके, गतिसम्बन्धेन भूतत्वमत्ययः, सत्त्वासम्बन्धेन भूतत्वमर्थाभाव इत्यपरे।

अथासम्प्रतिशब्दं व्याचष्टे-**असम्प्रतीति वर्तमानकाले** 35 **उपभोगादेः प्रतिषेधः** इति-न सम्प्रति-असम्प्रति, बाहुलकादसमर्थसमासोऽयं, यथा-असूर्यम्पश्याः, सम्प्रतीति हीदानीमित्यर्थः, अत्राधेयप्रधानेऽधिकरण आधेयमेव सम्प्रत्युपयुज्यते-सम्प्रत्यस्तीति, न सम्प्रतीत्यधिकरणं कालः, नेदानीमुपभुज्यते, ततश्चासम्प्रतीत्युपभोगादेर्वर्तमानकालप्रतिषेधो विज्ञायत इति, एवं चासम्प्रतीत्यर्थाभावाद् भिद्यते, नह्यर्थाभाव एवंरूपः। 40 उदाहरति-**अतिकम्बलमिति**-अयं समासः, तदर्थमाह-**कम्बलस्योपभोगं प्रति नायं काल इत्यर्थः** इति-यथाधिकस्य प्रावरणस्य नायं कालो निदाघः, चन्दनानुलेपस्य नायं कालो हेमन्तः, अयमिति वर्तमानकालं प्रति निर्देशः, अयमकाल इत्यस्मिन्नर्थे 'अति' इति वर्तते, तस्य कम्बलेन समासः। अति- 45 दिशति-**एवम्-अतितैसृकम्, अत्याम्रमिति**-त्रयो मुख्या आसामित्यर्थे "सोऽस्य मुख्यः" [ ७. १. १९०. ] इति के पृषोदरादित्वात् तिस्रादेशे आपि च-तिसृका नाम ग्रामः, बहुवचनविषयः स्त्रीलिङ्गसंज्ञक एको ग्रामः, पुंलिङ्गसंज्ञा बहवो ग्रामा इत्यन्ये, तत्र भवं तत आगतं वेत्यणि-तैसृकमिति, न सम्प्रति 50 तैसृकमिति-अतितैसृकम्, तैसृकस्योपयोगं प्रति नायं काल इत्यर्थः, इह केचित्-"अतितैसृकमाच्छादनम्, तिसृका ग्रामाः, तिसृकेभ्य आगतं-तैसृकम्, नायं तैसृकस्याच्छादनस्य काल इत्यर्थः' इति ग्रन्थः, तत्र समासे न्यग्भूतस्य तैसृकस्यापेक्षा चिन्त्या। **अत्याम्रमिति**-आम्राणामाम्रफलानामयमकालः, नेह 55 काले आम्राणि भवन्तीति भावः।

पश्चादर्थे उदाहरति-**अनुरथं यातीति**-अनुरथमिति समासः, पश्चादर्थज्ञापनाय यातीति, समासार्थमाह-**रथस्य पश्चादित्यर्थः** इति, ननु यथा पश्चादर्थेऽनुशब्दः समस्यते तथा पश्चाच्छब्दोऽप्यव्ययमन्वर्थे समस्यताम्, तेन वाक्यं न युज्यते 60 नित्यसमासत्वादिति चेत्? न-"सर्वपश्चादादयः" [ ३. १. ८०. ] इति वचनात् पश्चाच्छब्दस्याव्ययीभावसमासंप्रत्यनव्ययत्वप्रतीतेः, तस्याव्ययत्वे ह्यव्ययीभावसमासः स्यात्, समासान्तरप्राप्त्याऽन्यलक्षणहीनस्तत्पुरुषसमासो न स्यात्, तत्र हि सर्वत्र "गतिक्वन्यस्तत्पुरुषः" [ ३. १. ४२. ] इति सूत्रात् 'अन्यः' इति 65 पदस्याधिकृतत्वात्। अतिदिशति-**एवमिति, अनुपादातमिति** समासः, पादातस्य पश्चादिति तदर्थः; पदातीनां समूहः पादाभ्या-मतति-सातत्येन गच्छतीत्यचि वा पादातं पादातः।

अथ क्रमार्थं व्याचष्टे-**क्रम आनुपूर्व्यमिति**, उदाहरति-**अनुज्येष्ठं प्रविशन्तु** इति-अनुज्येष्ठमिति समासः, 'प्रवि- 70 शन्तु' इति क्रमार्थाभिव्यक्तये, समासार्थमाह-**ज्येष्ठानुक्रमेणेत्यर्थः** इति, अतिदिशति-**एवमिति, अनुवृद्धं साधूनर्चयेति**-अत्रानुवृद्धमिति समासः, वृद्धानुक्रमेणेति तदर्थः।

अथ ख्यातिं व्याचष्टे-**ख्यातिः शब्दप्रथेति**-शब्दस्य प्रथा शब्दप्रथा, "प्रथिष् प्रख्याने" इत्यतोऽङि-प्रथा, ततोऽय- 75 मर्थः-प्रकर्षेण ख्यातिः, सर्वेण तस्याधिगमः, प्रकाशताप्रादुर्भाव इति यावत्, उदाहरति-**इतिभद्रबाहु, तद्भद्रबाहु, अहोभद्रबाहु** इति-त्रयोऽपि समासाः, तदर्थमाह-**भद्रबा-**

**हुशब्दो लोके प्रकाशत इत्यर्थः** इति, 'इति तद् अहो' इत्यव्ययानि शब्दप्रथां द्योतयन्ति, ततः सिः, भद्रबाहुशब्दाच्च सिः, तयोः समासः, 'प्रथते [ प्रकाशते ] भद्रबाहुः' इत्यस्वपदविग्रहः, भद्रबाहुः–भद्रबाहुशब्द इत्यर्थः, स्वपदविग्रहो नास्ति नित्यसमासत्वात् ।

अथवा 'भद्रबाहोः प्रथा' इति विग्रहः, अत्रापीह विग्रहवाक्य एव प्रथेत्येतत्स्वत्वजनितव्यतिरेके भद्रबाहौ षष्ठी, समासस्तु–इत्यादिभिर्भद्रबाहुशब्दस्य प्रथमान्तस्यैव, इत्यादयो हि द्योतकाः, न ते स्वसम्बन्धिनि व्यतिरेकं जनयन्ति, यथा प्लक्षश्च न्यग्रोधश्चेति चशब्द इत्येके ।

अन्ये पुनराहुः–द्योतका अप्यन्यवृत्तौ वाचका भवन्ति, यथा–निष्कोशाम्बिः, अतिखट्वः, प्रकटः, निकटः, तथात्वम्, अन्यथात्वमिति, अव्ययीभावेऽपि सत्त्ववृत्तिता दृश्यते, उपकुम्भादागतम्, उपकुम्भेन कृतम्, उपकुम्भे निधेहीति, नह्यन्यथेयं सत्त्वविभक्तिरुपपद्यते, अतो वृत्तिशक्त्यनुसारेण भद्रबाहुशब्दात् षष्ठी, "षष्ठ्ययत्ना०" [ ३. १. ७६. ] इति समासे प्राप्ते "तृप्तार्थपूरणाव्यया०" [ ३. १. ८५. ] इति प्रतिषिद्धेऽयं समासः, एवमन्यत्रापि प्रक्रियार्थं चिन्ता, अविभक्तिकस्यैव न समासः, 'भद्रबाहुशब्दो लोके प्रकाशते' इत्यनेन शब्दप्रथां ख्यातिं दर्शयति ।

'इतिभद्रबाहु, तद्भद्रबाहु' इति शब्दाभ्यास उच्यते, भद्रबाहुशब्दस्य ख्यातो लोके पुनः पुनर्जनैरावृत्तिः प्रतीयत इति केचित्, अत्रापि शब्दप्रथा विद्यत एव ।

अथ 'युगपद्' इत्यस्यार्थमाह–**युगपद्–एककालार्थः** इति–'युगपत्'शब्द एककालार्थकः, एककालं समकालम्, उदाहरति–**सचक्रं धेही**ति–सचक्रमिति समासः, अर्थप्रदर्शनाय विग्रहमाह–**चक्रेण सहैककालं चक्राणि वा युगपद् धेहीत्यर्थः** इति–चक्रेण सह एककालमन्यदपि वस्तु धारय, चक्राणि वा एककालं–समकालं धारयेति भावः, अत्र प्रथमवाक्ये चक्रस्य तदन्यवस्तुनश्चैकस्मिन् काले धारणम्, द्वितीयवाक्ये चक्राणामेव प्रकृतानामेकस्मिन् काले धारणमिति विशेषः, प्रथमवाक्ये 'चक्रेण सह' इति स्वपदविग्रहो नोचितो नित्यसमासत्वादिति द्वितीयवाक्यप्रदर्शनमित्येके, अतिदिशति–**एवमिति, सधुरं प्राज** इति–सधुरमिति समासः, धुरा सहैककालं धुरो वा युगपत् प्राजेति तदर्थः, प्रपूर्वात् "अज क्षेपणे" इत्यस्य पञ्चम्या मध्यमपुरुषैकवचने 'प्राज' इति रूपं, वहनक्रियायां प्रेरयेति तदर्थः, शकटाक्षेण सहान्यद् वस्तु, प्रकृतानि शकटाक्षाणि वा एककालं वहनक्रियायां प्रेरयेति फलितार्थः, "अकालेऽव्ययीभावे" [ ३. २. १४६. ] इति सहस्य सादेशः, "धुरोऽनक्षस्य" [ ७. ३. ७७. ] इति समासान्तेऽति 'सधुरम्' इति । शब्दशक्तिस्वाभाव्यादन्यपदार्थेऽयं समासः–सचक्रमित्यादि ।

अथ सम्पत्पदार्थमाह–**सदृगर्थे** इति, **सव्रतमि**ति समासः, तदर्थमाह–**व्रतस्य सदृशमित्यर्थः** इति, अतिदिशति–**एवमिति, सशीलम्, सकिखि, सदेवदत्तमि**ति–इमे समासाः, एषामयमर्थः–शीलस्य सदृशं, किख्याः सदृशं, देवदत्तस्य सदृशमिति, एषु किं कार्यान्तरं जातमित्याह–**अव्ययीभावे सहस्य सभावः** इति–"अकालेऽव्ययीभावे" [ ३. २. १४६. ] इति सूत्रेण सहशब्दस्थाने 'स' इत्यादेशः कर्तव्योऽव्ययीभावे इत्यर्थः, किखिः–कालगोत्रविशेषः, शृगाली च, तत्सदृशी 'लुंकडी' इत्यर्थः ।

सदृगर्थे उदाहर्तुमाह–**सम्पत्–सिद्धिरि**ति–'सम्पत्' शब्दः सिद्धौ निष्पत्तौ सम्पन्नार्थे वर्तते' इत्यवचूरिः, "सिद्धिरात्मभावनिष्पत्तिरिति सिद्धिः समृद्धेरन्या" इति लघुन्यासः, अत्र प्रभाचन्द्रः–"किं सम्पत् समृद्धिरेव न भवति येन पृथगुपादीयते ? इत्यत आह–सम्पद्–अन्यूनत्वमिति, अन्ये "सम्पत्–सम्पत्तिः संसिद्धिर्निष्पत्तिः" इत्याहुः, अनुरूप आत्मभाव इत्यपरे, स्वावस्थायाः प्रत्यासत्तिरिति केचित्" इति [ शाकटायनामोघवृत्तिन्यासे ] । उदाहरति–**सब्रह्म साधूनामि**ति–सब्रह्मेति समासः, तदर्थमाह–**सम्पन्नं ब्रह्मेत्यर्थः** इति, सहशब्दो यद्यप्यन्यत्र सम्पदि न दृष्टः, तथापीह वृत्तौ दृश्यते, यथा निष्कोशाम्बिरित्यादौ निरादयः क्रान्ताद्यर्थे, इति सहशब्दस्य ब्रह्मशब्देन समासः, सम्पन्नं ब्रह्म ब्रह्मणः सम्पदिति वा विग्रहः, ननु 'पूर्वपदार्थे' इत्युच्चरिते तत्र कथं सम्पन्नं ब्रह्मेति विग्रहः ?, अत्रापि–सम्पन्नम्, किम् ? ब्रह्मेति सम्पन्नार्थस्य विशेष्यत्वोपपत्तेरदोषः, सम्पन्नेऽपि वृत्तौ सम्पदुपसर्जनस्य सम्पन्नत्वात् सोपसर्जनवृत्तेः सम्पदि वृत्तिः, ब्रह्मणः सम्पदिति वृत्तौ प्रदर्शनमात्रमनुपसर्जनत्वमविवक्षितम्, एवमन्यत्रापि । अतिदिशति–**एवमिति, सवृत्तं मुनीनामि**ति–सवृत्तमिति समासः, सम्पन्नं वृत्तं वृत्तस्य सम्पदिति वा विग्रहः, **सक्षत्रमिक्ष्वाकूणामि**ति–सक्षत्रमिति समासः, सम्पन्नं क्षत्रं क्षत्रस्य सम्पदिति वा विग्रहः, क्षत्रशब्दः क्षत्रियोचितकर्मपरः, सम्पदि सहयोगे "सहार्थे" [ २. २. ४५. ] इति तृतीया भवतीत्युत्तरपदेन तृतीयान्तेन समासः, सम्पन्ने प्रथमान्तेन समासः प्राग्वत् सहस्य सभावः ।

अथ साकल्यपदार्थमाह–**साकल्यम्–अशेषतेति**–कला अवयवाः, कलाभिः सह वर्तत इति सकलं, तस्य भावः साकल्यम्, अशेषतेति तत्पर्यायः, उदाहरति–**सतृणमभ्यव-**

हरति, सतृणमिति समासः, तदर्थमाह-**न किञ्चित् त्यजतीत्यर्थः**, सहशब्दोऽपरित्यागे वर्तते, न तु सहभावे, तथा च परित्यागाभाव एव प्रतीयते, न तु तृणभक्षणेन सह सम्बन्धः, यावत् पात्रे परिविष्टं तत्र तृणमात्रमपि नावशेषितं, सर्वमपि 5 भुक्तमिति तात्पर्यात्, केचित् त्वेवमाहुः- अधिकार्थवचनेनेह तत्साकल्यमुच्यते-न किञ्चिदभ्यवहार्यमिति तृणानामभ्यवहारोऽधिकार्थस्तद्वचनेन, न किञ्चिदित्यादिना वाक्येनाधिकार्थतां दर्शयति, यो हि तृणान्यभ्यवहरति स कथमन्यदभ्यवहार्यं परित्यजतीति भावः। अतिदिशति-**एवमिति, सतुषमिति** समासः, 10 अर्थस्तु प्रागवदवसेयः ।

अथान्तशब्दार्थमाह-**अन्तः समाप्तिरिति**, उदाहरति-**सपिण्डैषणमधीते** इति-सपिण्डैषणमिति समासः, तदर्थमाह-**पिण्डैषणापर्यन्तमधीत इत्यर्थः** इति-पिण्डो भक्तमिष्यते-अन्विष्यते कल्प्याकल्प्यविभागेन विचार्यतेऽस्मिन्निति 15 "इषोऽनिच्छायाम्" [ ५. ३. ११२. ] इत्यने-पिण्डैषणा दशवैकालिकग्रन्थे पिण्डैषणानामकं पञ्चममध्ययनमस्ति, अतिदिशति-**एवमिति, षड्जीवनिकायमधीते** इति-षड्जीवनिकायमिति समासः, तदर्थस्तु षड्जीवनिकायपर्यन्तमधीत इति, षड् जीवनिकाया विचार्यन्ते यत्र ग्रन्थे स उपचारात् षड्जीव-20 निकायः, दशवैकालिकग्रन्थे षड्जीवनिकायनामकं चतुर्थमध्ययनं वर्तत इति, ननु चान्तोऽवसानं समाप्तौ भवतीति तत्र कथमिदमुदाहरणम्-सपिण्डैषणं सषड्जीवनिकायमिति, पिण्डैषणया षड्जीवनिकायेन च तच्छास्त्रं समाप्यते इति भवत्यन्त इति चेत्? साकल्यं तत्र भवतीति 'साकल्य' इत्येव सिद्धेरन्तग्रहण-25 मनर्थकं स्यादिति चेत्? अत्रोच्यते-परिग्रहापेक्षत्वान्नानर्थकमन्तग्रहणं, तथाहि-यावतोऽध्ययनस्य परिग्रहः कृतः-एतावदध्ययनं मयाऽध्येतव्यमिति, तस्य समाप्तिरन्ततो विज्ञायते, तत्र पिण्डैषणादेरन्तत्वमुपपद्यते, साकल्यं च नास्ति, असकलेऽप्यध्ययने तस्य भावादिति नान्तस्य साकल्येऽन्तर्भावः, एतदेवाह-**अत्र 30 समाप्तिरसकलेऽप्यध्ययने प्रतीयत इति साकल्येऽनन्तर्भाव** इति, यत्रान्ते साकल्यमस्ति तत्र 'साकल्य' इत्यपि सिध्येत्, किन्त्वतथाभूतमेवात्रोदाहृतमिति । पिण्डैषणामन्तं कृत्वा सपिण्डैषणं, सषड्जीवनिकायमिति समासः, अत्रान्तार्थे सहशब्दः कृत्वार्थश्च वृत्तावन्तर्भवति । 'सपिण्डैषणमधीते' 35 इत्यत्र 'अधीते' इति क्रियापदं न वृत्त्यर्थबोधकं, किन्तु ततो बहिर्भूतमेव वाक्यान्तरारम्भकमित्यध्ययनार्थे कुतो न प्रत्यय इत्यादिविचारः कैश्चित् कृतोऽप्रासङ्गिक एव प्रतीयते । यदि च 'सपिण्डैषणमधीते' इत्यर्थेऽध्येत्रर्थप्रत्ययः कुतो नेति विचार्यत इति चेद्? तदपि न-वैकल्पिकत्वेन विचारानर्हत्वात्, सति च प्रत्यये "स-सर्वपूर्वाल्लुप्" [ ६. २. १२७. ] इति लुपा 40 'सपिण्डैषणः' इत्यादिरूपाणामिष्टत्वात् ।

प्रकृतसूत्रे केचित् समीपग्रहणं न कुर्वन्ति, तल्लाभाय चैवमाहुः-"अतः-समीपं, यथा-'आ उदकान्तात् प्रियं प्रोथमनुव्रजेत्' इति, अवसानं च, यथा-वस्त्रान्त इति, उभयं चेह गृह्यते, अन्तार्थोऽन्त इति" इति । 45

पदकृत्यं दर्शयितुमाह-**पूर्वपदार्थ इत्येवे**ति-"वंश्येन पूर्वार्थे" [ ३. १. २९. ] इत्यतो धाराप्रवाहेन 'पूर्वार्थे' इत्यस्यानुवर्तनादन्यत्र न भवति, क्व? इत्याह-**समृद्धा मद्राः-सुमद्राः** इति-अत्र 'पूर्वपदार्थे' इत्यसति 'समृद्धौ यदव्ययम्' इत्यर्थादव्ययीभावः प्रसज्येत, सति तु तस्मिन् 'समृद्धा मद्राः-सुमद्राः' 50 इति देशा राजानो वात्रोत्तरपदार्था उच्यन्ते, न तेषां तद्विशिष्टा समृद्धिः पूर्वपदार्थ इति नानेन समासः' "सुः पूजायाम्" [ ३. १. ४४. ] इत्यनेन तत्पुरुषसमासस्तु भवति; अपर आह-"तत्पुरुषे सुः पूजां गमयति, न समृद्धिं-शोभना मद्राः-सुमद्रा इति, न च समृद्धावेव शोभनत्वं, गुणान्तरेऽपि तद् 55 भवति, तत्र यदीह समृद्धिः प्रतीयते, तदा समृद्धावियं पूजा नान्यथेति, समृद्धिप्रतिपत्तिः समुदायाद् भवति, न चेमे विभक्त्यादयः समुदायार्थाः, अपि त्वव्ययार्था इति न भवतीति" इति ।

पदकृत्यं पृच्छति-**अव्ययमिति किमि**ति-विभक्त्याद्यर्थेषु 60 प्रायोऽव्ययमेव वर्तत इति किमव्ययग्रहणेनेति प्रष्टुराशयः, सूत्रपठिताः शब्दा अपि स्वार्थबोधका एवेति तेषामपि समासः प्रसज्येति मनसिकृत्य समाधत्ते-'**समीपं कुम्भस्ये**ति-अत्र समीपशब्दो नाव्ययमिति न समस्यते, नन्वव्ययग्रहणं मास्तु, तथापि नित्यसमासत्वात् स्वपदेन विग्रहाभावात् समीपं कुम्भ-65 स्येति विग्रहे समीपशब्दस्य समासो युज्यत एव नेति चेत्? न-तदर्थकान्तिकादिशब्देन समासो मा भूदित्यव्ययग्रहणमावश्यकमिति । ननु 'समीपं कुम्भस्य' इत्यत्र किं सर्वथा समासेन न भवितव्यम्? उतानेन न भवितव्यम्, "षष्ठ्ययत्नात्०" [ ३. १. ७६. ] इत्यनेन भवति, यदि त्वनेन स्यात् तदा प्रथमोक्तत्वात् 70 "प्रथमोक्तं प्राक्" [ ३. १. १४८. ] इति समीपशब्दः प्राग् निपतेत्, यथा-उपकुम्भमित्युपशब्दः, "षष्ठ्ययत्नात्०" [ ३. १. ७६. ] इति समासे तु षष्ठ्यन्तस्य प्रथमोक्तत्वात् कुम्भसमीपमिति भवति । ननु 'समया लङ्काम्, निकषा ग्रामम्, आराद् वनाद्' इत्यादौ समीपार्थाव्ययेन समयादिना सह कुतो न समास 75 इति चेत्? सत्यम्-समासे सति तेषां वाक्यानां प्रयोगासम्भवेन "गौणात् समयानिकषा०" [ २. २. ३३. ] "प्रभृत्यन्यार्थ०" [ २. २. ७५. ] इति सूत्राभ्यां द्वितीया-पञ्चम्योर्विधानस्य

वैयर्थ्यापातादेव न समासः। केचित् तु–"मध्यार्थकसमयाशब्दयोगे द्वितीयाया दूरार्थकारात्छब्दयोगे पञ्चम्याश्च चारितार्थ्येन समीपार्थकयोस्तयोः समासे न किञ्चिद् बाधकम्" इत्याहुः, तदपि न शोभनम्–'अब्भक्षो मीनः, वायुभक्षः सर्पः' इत्यादौ विनाप्येवकारम् 'अप एव भक्षयति, वायुमेव भक्षयति' इत्यर्थप्रतीतिवदिहापि *सर्वं वाक्यं सावधारणम्* इति न्यायाद् वा 'यदव्ययं विभक्त्यर्थादिमात्रबोधकं तदेव समर्थेन नाम्ना समस्यते' इत्यर्थस्वीकारे समया निकषा-ऽऽरात्छब्दानामधिकरणशक्तिप्रधानतया समीपमात्रार्थकत्वाभावात् समासाप्राप्तेः; एवं 'प्रासादस्योपरि, प्रासादस्य पुरः' इत्यादावप्यव्यये समासो न प्रवर्तते, उपर्यादीनां दिग्-देश-कालसहितविभक्त्यर्थे वर्तमानत्वेन विभक्त्यर्थमात्रवृत्तित्वाभावात्। अत एव "क्रमादमुं नारद इत्यबोधि सः" [ शि० व० स० १ श्लो० २ ] इत्यत्रापि न समासः, इतिशब्दस्य सर्वनामवत् प्रकृतपरामर्शकत्वेन कर्मत्वमात्रानभिधायकत्वात्। तथा च सूत्रे विभक्तिशब्दः सप्तम्यां पर्यवस्यति, अत एव कातन्त्रपरिशिष्टे व्याकरणे "अधिकरणे" इत्येव सूत्रितम्। अन्ये तु लाघवात् "ङिसमीप०" इत्यादिवक्तव्ये सति विभक्तिपदोच्चारणात् तस्य समीपमात्रपर्यवसायित्वे न मानमिति कर्मत्वमात्रद्योतकताविवक्षायाम् 'इतिनारदम्' इति प्रयोगो भवत्येवेत्याहुः।

आचाण्डलं प्रयच्छतीत्यत्र 'आ चाण्डालेभ्यः' इति "पर्यपाङ्बहिरच् पञ्चम्या" [ ३. १. ३२. ] इति विकल्प इष्यते, अत्र 'अन्त' इति नित्यो विधिः प्राप्नोति, तदर्थं यत्नः कर्तव्यः, न कर्तव्यः, तत्राङ्ग्रहणस्येत्थम्भूत एव विषयः, आङ् हि तत्र स्वसम्बन्धिना व्याप्यमानोऽव्याप्यमानो वाऽवधिर्द्योत्यते, सोऽन्त इति यदि तत्रायं नित्यो विधिस्तदाङ्ग्रहणमनर्थकं स्यात्, अतो विकल्प एव भवति। अपर आह–नेह चाण्डालोऽन्तत्वेन विवक्षितः, व्याप्तिरत्र प्रदर्श्यत इत्यन्त इति समासो न भवति, साकल्य इति प्राप्तावपि 'सपुत्र आगतः' इतिवन्न भवति, बहुलमिति चाधिकारः।

ननु 'सच्छात्र आगतः, सपुत्र आगतः' इत्यत्र 'साकल्ये यदव्ययम्' इति प्राप्नोति, अस्तीह पूर्वपदार्थः प्रधान इति चेत्? उच्यते–'सतृणमभ्यवहरति' इत्यत्र तृणेन सहेति तृणविशिष्टः सहार्थः पूर्वपदार्थः, न तथेह, इह तु–सह पुत्रो येन स सपुत्र इति सहार्थविशिष्टपुत्रार्थविशेषणकान्यपदार्थाभिधानमिति न भवति। ननु चात्र कथं साकल्यप्रतिपत्तिः? तुल्ययोगमात्रं प्रतीयते, नह्यत्र यथा सतृणमभ्यवहरतीत्यधिकार्थवचनेन नास्याभ्यवहार्ये कश्चिद् विवेकः, सकलमभ्यवहरत्येव पात्राशनमिति साकल्यप्रतिपत्तिस्तथास्तीति, उच्यते–अयमपि तथाविध एव विधाय प्रयोगो द्रष्टव्यः, सच्छात्र आगतः, न कश्चिदस्य जनोऽत्रशिष्टस्तत्रेति।

नन्विह सूत्रे 'विभक्ति-समीप०' इत्यादिको द्वन्द्वः, द्वन्द्वश्च तुल्यकक्ष्याणां भवति, इह च विभक्तिसमीपादयः सत्त्ववचनाः, 'असम्प्रति-पश्चाद्-युगपद्' इति विभक्त्यर्थप्रधाना असत्त्ववचना इति भिन्नकक्ष्याः, नहि भिन्नकक्ष्याणामेकविभक्तियोगो भवति, एकया विभक्त्या द्वन्द्वे पदार्था युज्यन्ते; उच्यते–असम्प्रत्यादयः शब्दाः स्वरूपपदार्थकाः, तत्राभेदोपचारेणार्थप्रतिपत्तिः–असम्प्रत्यर्थोऽसम्प्रतिः, पश्चादर्थः पश्चाद्, युगपदर्थो युगपद्, यथा विभक्त्यर्थः–विभक्तिः, तत्र सर्वेऽपि सत्त्ववचना एव, न भिन्नकक्ष्या इति द्वन्द्वोपपत्तिः ॥ ३. १. ३९. ॥

## योग्यता-वीप्सा-ऽर्थानतिवृत्ति-सादृश्ये ।३।१।४०॥

**त० प्र०**—एष्वर्थेष्वव्ययं नाम नाम्नैकार्थ्ये पूर्वपदार्थे समस्यतेऽव्ययीभावश्च समासः।

योग्यतायाम्—अनुरूपं चेष्टते–रूपस्य योग्यां चेष्टां कुरुते; वीप्सायाम्–प्रत्यर्थं शब्दा अभिनिविशन्ते, अर्थमर्थं प्रतीत्यर्थः, एवं–प्रतिपर्यायम्, वीप्सायां द्वितीयाया विधानात् वाक्यमपि भवति–अर्थमर्थं प्रतीति; अर्थानतिवृत्तिः–पदार्थानतिक्रमः, यथाशक्ति पठ, शक्तेरनतिक्रमेणेत्यर्थः, एवं–यथाबलम्, नात्र विन्यासविशेष इति क्रमाद् भेदः; सादृश्ये–सशीलमनयोः, शीलस्य सादृश्यमित्यर्थः, एवं-सव्रतमनयोः, सकिखि, किख्याः सादृश्यमित्यर्थः। सदृगित्यनेनैव सिद्धे सादृश्यग्रहणं मुख्यसादृश्यपरिग्रहार्थम् ॥ ४० ॥

**श० म० न्यासानुसन्धानम्**—योग्यतेत्यादि। सूत्रार्थः सुगमः। तत्र च चतुर्ष्वर्थेषु यथोद्देशन्यायेन पूर्वं योग्यतार्थे उदाहर्तुमाह–**योग्यतायामिति, अनुरूपं चेष्टते** इति–अनुरूपमिति समासः, तदर्थप्रदर्शनायाह–**रूपस्य योग्यां चेष्टां कुरुते** इति–रूपस्य योग्यामित्येव लौकिकविग्रहः, अनुशब्दस्य पश्चादर्थकत्ववद् योग्यतार्थस्यापि प्रसिद्धिः, 'अनुरूपम्, अनुगुणम्, अनुकूलम्' इत्यादिप्रयोगानुरोधात्, अत्र च 'अनुरूपम्' इति क्रियाविशेषणत्वेनोपात्तम्, अन्यविभक्तिष्वपि तस्य प्रयोगः सम्भवत्येव, 'यक्षानुरूपो बलिः' इत्यादौ तु नायं समासः, किन्तु 'अनुगतं रूपं यस्य' इत्यादिरूपेण विग्रहेण बहुव्रीहिरेव।

वीप्सार्थे उदाहर्तुमाह–**वीप्सायामिति, प्रत्यर्थं शब्दा अभिनिविशन्ते** इति– प्रत्यर्थमिति समासः, प्रतिशब्दोऽव्ययमत्र वीप्सायाम्, समासेनैव वीप्सार्थस्य द्योतनान्न वीप्सानिमित्तकं द्विर्वचनं समस्तपदस्य, वाक्ये तु लक्षणादेरनेकस्यार्थस्य द्योत्यस्य

सम्भवाद् द्विर्वचनमन्तरेण द्योतयितुं वीप्सा न शक्या, समासार्थमाह-**अर्थमर्थं प्रतीत्यर्थः** इति । ननु नित्यमितीहाधिकारः, तत्र कथमर्थमर्थं प्रतीति वाक्यमित्यत आह-**वीप्सायां द्वितीयाया विधानाद् वाक्यमपि भवतीति**-"भागिनि च प्रतिपर्यनुभिः" [ २. २. ३७. ] इति वीप्स्ये प्रतिना योगे द्वितीया विधीयते, यदि वीप्सायामिह नित्य एव समासः स्यात् तदा तद्विधानमनर्थकं स्यात्, नहि समासे द्वितीयस्यामन्यस्यां वा विभक्तावस्ति कश्चिद् विशेषः, वाक्ये त्वस्ति, अतस्तद्द्वितीयाविधानसामर्थ्यादिदं वाक्यमपि भवति; अपर आह-प्रत्यर्थतायां वीप्सायाः समासः, पदान्तरार्थतायां वाक्यं, तथा च 'एतेष्वर्थेषु यदव्ययम्' इत्युच्यते, पदान्तरार्थाश्च वीप्सादय इति ।

अर्थानतिवृत्तिं व्याचष्टे-**अर्थानतिवृत्तिः-पदार्थानतिक्रमः** इति-पदम्-उत्तरपदम् 'यथाशक्ति' इत्यादौ शक्तिरूपम्, अस्यार्थः पदार्थः, तस्यानतिक्रमोऽनुल्लङ्घनमनुवर्तनमिति यावत् । उदाहरति-**यथाशक्ति पठे**ति-अत्र 'यथाशक्ति' इति समासः, तदर्थमाह-**शक्त्यनतिक्रमेणेत्यर्थः** इति, अतिदिशति-**एव**मिति, **यथाबलमि**ति समासः, तदर्थस्तु बलानतिक्रमेण बलानुसारेणेति यावत् । पूर्वसूत्रे क्रमः पठितः, तस्य चार्थ आनुपूर्व्यमित्युक्तम्, तच्च दैशिकस्य कालिकस्य वा पूर्वापरीभावस्यानुवर्तनरूपं, तच्चान्ततो विन्यासविशेष एव, मूर्तस्यानेकपदार्थस्य नियतदेशकालादिव्यपेक्षया व्यवस्थापनं च विन्यासः, एवं च पदार्थानतिक्रमादस्य भेद इति न पूर्वसूत्रेणात्रत्यस्यानतिवृत्तिपदार्थस्य गतार्थत्वम्, तदाह-**नात्र विन्यासविशेष इति क्रमाद् भेद** इति ।

सादृश्यार्थे उदाहर्तुमाह-**सादृश्य** इति, **सशीलमनयोरि**ति-सशीलमिति समासः, तदर्थमाह-**शीलस्य सादृश्यमित्यर्थः** इति, अतिदिशति-**एवमिति । सव्रतमनयोरि**ति-सव्रतमिति समासः, तदर्थस्तु-व्रतस्य सादृश्यमिति, **'सकिखि'** इति समासः, तदर्थमाह-**किख्याः सादृश्यमित्यर्थः** इति । ननु पूर्वसूत्रे 'सदृग्' इति पठितं, तदर्थश्च सादृश्यवदिति, एवं च द्रव्यवाचिनोत्तरपदार्थेन सह सादृश्यबोधनायैव तत्रापि समास इति तेनैव सिद्धे पुनरिह सादृश्यग्रहणं विफलमित्याशङ्कायामाह-**सादृश्यग्रहणं मुख्यसादृश्यपरिग्रहार्थमि**ति, पूर्वपदार्थप्राधान्ये समासविधाने सत्यपि शब्दशक्तिस्वाभाव्यात् 'व्रतस्य सदृशं सव्रतम्' इत्यत्र व्रतनिष्ठप्रतियोगितानिरूपितसादृश्यानुयोगिताशालि किञ्चिदन्यद् वस्तु प्राधान्येन विवक्षितम्, अत एव तत्र 'सव्रतं साधुचरितम्' इति सामानाधिकरण्येन निर्देशः कर्तुं शक्यते, सादृश्ये समासविधानाच्च यत्र सादृश्यमेव प्राधान्येन विवक्ष्यते तत्रैव समासो भवति, अत एव 'सशीलमनयोः' इत्यत्र भेदेन निर्देशः, उभयोः शीले सादृश्यस्यैव प्राधान्येन प्रतीतिरित्यनयोरुभयोरुपादानमुभयत्र सार्थकमिति । यद्यपि सव्रतमित्यत्रापि चरिते व्रतस्य सादृश्यं प्रतीयत एव तथापि न तत्र व्रतस्य प्राधान्यमपि तु सादृश्यानुयोगिन एवेति स्पष्ट एव भेदः ।

ननु पूर्वसूत्रे 'सदृग्'ग्रहणमतिरिच्यते, एतत्सूत्रीयेन 'सादृश्य' इत्यनेन तस्य गतार्थत्वात्, 'सदृशो देवदत्तेन सदेवदत्तम्' इत्यत्र सादृश्यविशिष्टस्य सदृशत्वादिति चेत् ? उच्यते-गुणभूतेऽपि सादृश्ये समासो यथा स्यादित्येतदर्थं तत्र सदृग्ग्रहणं, तथाहि-द्विविधं सादृश्यम्-उपसर्जनमनुपसर्जनं च, 'सशीलमनयोः' इत्यत्रानुपसर्जनम्, इह सदेवदत्तमिति सदृशे सहशब्दवृत्तेरुपसर्जनम्, तत्र विशेषणमनभिधीयमानमेव विशेष्यं व्यवच्छिनत्ति, तदुपलक्षिते शब्दनिवेशात्, यथा-'मधुरो गुडः' इत्युक्ते य एष मधुर इति गुडमनभिधीयमानमेव माधुर्यं, नहि जातिविशिष्टद्रव्याभिधाने माधुर्यं गुणोऽभिधेयत्वेन गुडेऽन्तर्भवति, अभिधानेऽप्युपसर्जनस्य *गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः* इति गुणभूते सादृश्ये प्रकृतसूत्रेण समासो न स्यादिति तत्र समासार्थं पूर्वसूत्रे सदृग्ग्रहणमिति ॥ ३. १. ४०. ॥

## यथाऽथा । ३ । १ । ४१ ॥

**त० प्र०—थाप्रत्ययरहितं 'यथा' इत्येतदव्युत्पन्नमव्ययं नाम नाम्ना सहैकार्थ्ये नित्यं समस्यते, पूर्वपदार्थेऽभिधेये स च समासोऽव्ययीभावः । यथारूपं चेष्टते, रूपानुरूपमित्यर्थः, यथावृद्धमभ्यर्चय, ये ये वृद्धास्तानित्यर्थः, यथासूत्रमनुतिष्ठति, सूत्रानतिवृत्त्येत्यर्थः । 'अथा' इति किम् ? यथा चैत्रस्तथा मैत्रः । पूर्वेणैव सिद्धे सादृश्ये प्रतिषेधार्थं वचनम् ॥ ४१ ॥**

**श० म० न्यासानुसन्धानम्-यथाऽथे**ति । इह सूत्रे पदद्वयं-'यथा, अथा' इति, तत्र 'यथा' इति विशेष्यम् 'अथा' इति तस्य विशेषणम्, विशेषणे च तदन्तविज्ञानम्, न था-अथा, 'था' इति च यदि शब्दरूपमात्रं गृह्येत तदा 'अथा' इत्यसम्भवि विशेषणं, नहि 'यथा' इत्यथान्तमस्ति,*अर्थवद्ग्रहणे च नानर्थकस्य ग्रहणम्* इति 'था' इति प्रत्ययो गृह्यते, अत आह-**थाप्रत्ययरहितं 'यथा' इत्येतदि**ति, कीदृक् तत् ? इत्याह-**अव्युत्पन्नमव्ययमि**ति-प्रकृतिप्रत्ययविभागशून्यमखण्डमव्ययमित्यर्थः, तदेतद् योग्यतादावर्थत्रये वर्तत इति तत्रोदाहरिष्यति, सादृश्यं थाप्रत्ययान्ते गम्यते । **यथारूपं चेष्टते** इति-यथारूपमिति समासः, अत्र यथाशब्दस्य प्रकारवाचिथाप्रत्ययान्तत्वाभावबोधनाय प्रयोगार्थमाह-**रूपानुरूपमि**ति-अत्र च योग्यतायां समासो न तु सादृश्ये इति भावः । **यथावृद्धमभ्यर्चय**

इति-यथावृद्धमितीह समासः, अत्र न क्रमो विवक्षितोऽपि तु वीप्सेति बोधनायाह-**ये ये वृद्धास्तानित्यर्थः** इति, यद्यपि क्वचिद् 'यथावृद्धमभ्यर्चय' इति कथिते 'वयःक्रमेण वृद्धान् आनुपूर्व्येणाभ्यर्चय, यो हि सर्वस्माद् वृद्धस्तं पूर्वं ततः पश्चात् तदपेक्षया न्यूनवयस्कम्' इत्यादिप्रतीतिरपि भवत्येव, तथाप्यने-कार्थस्थल इव प्रकरणादिवशादिह वीप्सार्थविवक्षा प्रतीयत इति भावः। अथार्थानतिवृत्तावुदाहरति-**यथासूत्रमनुतिष्ठती**ति-यथासूत्रमिति समासः, तदर्थमाह-**सूत्रानतिवृत्त्येत्यर्थः** इति-सूत्रोक्तार्थमनतिक्रम्येति भावः। एवं च सादृश्यभिन्नेषु त्रिष्वप्यर्थेषु समासो भवति, सादृश्ये तु नेति प्रतिपादयितुमुप-क्रमते-**अथा इति किमि**ति, प्रत्युदाहरणेनोत्तरयति-**यथा चैत्रस्तथा मैत्र** इति-यथा-येन प्रकारेण शौर्यादिना चैत्रः, तथा-तेनैव शौर्यादिना प्रकारेण मैत्र इत्यर्थः, तथा चात्र यथाशब्दस्य सादृश्यवाचकत्वेन पूर्वसूत्रेण समासः प्राप्तोऽपि यथाशब्दस्य थाप्रत्ययान्तत्वेन न भवति, येन प्रकारेणेति यच्छब्दात् "प्रकारे था" [ ७. २. १०२. ] इति थाप्रत्यये यथेति। ननु चात्र सापेक्षत्वादेव समासो न भविष्यति, उपमानं ह्युपमेयमपेक्षते-चैत्रो मैत्रमिति, समासे च न्यग्भूतस्य सापेक्षा निवर्तते, उच्यते-यद्यपि समासे विशेषापेक्षा निवर्तते सामान्यापेक्षा तु श्रुतिमात्रनिबन्धना सदा सन्निहितैव भवति, न तत्र बहिरपेक्षास्तीति समासः प्राप्नोति, यथा चैत्रो यथाचैत्र-मिति, तथा मैत्र इति प्रकारप्रदर्शनेन थाप्रत्ययदर्शनं क्रियते, न तु तदपेक्षा तत्र क्रियते। अथवा 'यथा चैत्रः' इत्यस्य समुदायस्य 'तथा मैत्रः' इत्येतत्समुदायापेक्षा, न त्ववयवस्य चैत्रस्य, यदि च 'यथा' इत्यवयवोऽपेक्ष्यते समासे तदा पूर्वपदार्थ-प्राधान्यादव्ययीभावस्य प्राधान्यमिति प्राप्नोत्येव समासः, प्रधानस्य हि सापेक्षस्यापि समासो भवति, यथा राजपुरुषो दर्शनीय इति। ननु च थाप्रत्ययान्तस्येतरस्य च तुल्यमेव स्वरूपं यथेति, तत्रायं थाप्रत्ययान्तोऽयं च नेति कथं ज्ञायते, अज्ञाते च न विधि-निषेधौ कर्तुं शक्येते इति चेत्? उच्यते-प्रकारार्थे थाप्रत्यय-विधानात् प्रकारार्थे यो यथाशब्दः स थाप्रत्ययान्तः, इतरो न थाप्रत्ययान्तः, क्व प्रकारार्थः क्व चाप्रकारार्थ इति कथं ज्ञेयमिति न शक्यं, यतोऽर्थ-प्रकरण-शब्दान्तरसन्निधिभ्योऽर्थभेदप्रतिपत्ति-र्भवतीति। नन्वनेन सूत्रेण योग्यतादिवृत्तेरव्ययस्य यथाशब्दस्य समास उच्यते, स तु पूर्वसूत्रेणैव सिद्ध इति किमर्थमिदं सूत्र-वचनमित्यत आह-**पूर्वेणे**त्यादि-'अथा' इति थाप्रत्ययान्तस्य यथाशब्दस्य पूर्वेण प्राप्तः समासो मा भूदित्येवमर्थं वचनम्, न तु विध्यर्थमित्यर्थः, तत्र यद्ययम् 'अथा' इति, प्रसज्यप्रतिषेधः-यथाशब्दः थाप्रत्ययान्तो न समस्यत इति सिद्धः प्रतिषेधः, अथ पर्युदासः-यथाशब्दोऽथाप्रत्ययान्तः समस्यत इति, तदा नियमो विज्ञायते, नियमे च पूर्वसूत्रे संकोचो भवतीति तेनापि समासो न भवति, अयमाशयः-पूर्वेण सिद्धे सति नियमार्थत्वं सूत्रस्य भवति, नियमानां च सर्वेषां प्रायो विधि-निषेधोभयपरत्वस्वीकारः, यदंशेऽप्राप्तिस्तदंशे विधिपरत्वं, यदंशे च प्राप्तमनिष्टं तदंशे निषेधपरत्वं च, किञ्च नियमस्थले नियामकशास्त्रीयोद्देश्यताव-च्छेदकव्यापकं, नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यश्च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियामकशास्त्रीयोद्देश्यतावच्छेदकाव-च्छिन्ने संकोच इति संकोचाकार इति शाब्दिकमीमांसकयोः सरणिः। तथा च प्रकृते "योग्यता-वीप्सा०" [ ३. १. ४०. ] इति सूत्रे थाप्रत्ययान्तभिन्नयथाशब्दातिरिक्तत्वेन संकोचे थाप्रत्ययान्तयथा-शब्दस्थले 'यथा चैत्रस्तथा मैत्रः' इत्यत्र समासो न भवति ॥ ३. १. ४१. ॥

## गति-क्वन्यस्तत्पुरुषः । ३ । १ । ४२ ॥

त० प्र०—'कु' इत्यव्ययं पापा-ऽल्पयोर्वर्तते, गति-संज्ञकाः कुश्च नाम नाम्ना सह नित्यं समस्यन्ते, स च समा-सोऽन्यो-बहुव्रीह्यादिलक्षणरहितस्तत्पुरुषसंज्ञो भवति। ऊरी-कृत्य, खाट्कृत्य, शुक्लीकृत्य, पटपटाकृत्य, प्रकृत्य, कारिका-कृत्य; कु-कुत्सितो ब्राह्मणः-कुब्राह्मणः, एवं-कुपुरुषः, ईष-दुष्णं-कोष्णं कवोष्णं कदुष्णम्, एवं-कामधुरम्। अव्यय-मित्येव-कुर्विशाला, पृथिवीत्यर्थः। अन्य इति किम्? कुत्सिताः पुरुषा यस्य स-कुपुरुषकः, अत्र बहुव्रीहि-त्वात् कच् भवति। तत्पुरुषप्रदेशाः-"गोस्तत्पुरुषात्" [ ७. ३. १०५. ] इत्यादयः ॥ ४२ ॥

श० म० न्यासानुसंधानम्-गति-क्वन्य०। गतिश्च कुश्च गतिकु, ततः सेर्लुप्। अत्राव्ययमित्यनुवृत्तं, तत्र गतिसंज्ञ-कस्य व्यभिचाराभावात् केवलं कुशब्दस्यैव तद् विशेषणं *संभ-व-व्यभिचाराभ्यां स्याद् विशेषणमर्थवत्* इति न्यायात्, अस्ति हि कुशब्दे पापाल्पवाचिनि तत्सम्भवः, पृथ्वीवाचिनि च तद्व्य-भिचार इत्याशयवान् कुशब्दार्थसूचनव्याजेनाह-**'कु' इत्य-व्ययं पापाऽल्पयोर्वर्तत** इति-एतदर्थद्वयमुदाहरणेषु प्रकटी-करिष्यत एव। **अन्य** इत्युक्तापेक्षमन्यत्वमिहेत्याह-**बहुव्रीह्या-दिलक्षणरहित** इति-आदिशब्देनाव्ययीभावपरिग्रहः।

पूर्वं तावद् गतिसंज्ञकानुदाहरति-**ऊरीकृत्ये**त्यादि, **'ऊरी-कृत्य'** इत्यत्रोर्यादिगणपठितत्वात्, **'खाट्कृत्य'** इत्यत्रानुकरण-त्वात् **'पटपटाकृत्य'** इत्यत्र डाच्प्रत्ययान्तत्वात्, **'प्रकृत्य'** इत्यत्र चोपसर्गत्वात् "ऊर्याद्यनुकरणच्विडाचश्च गतिः" [ ३. १. २. ] इति गतिसंज्ञा, **'कारिकाकृत्य'** इत्यत्र तु "कारिका स्थित्यादौ" [ ३. १. ३. ] इति गतिसंज्ञकत्वादनेन तत्पुरुष-

समासः, गतिसंज्ञकं चाव्ययं भवति, अव्ययपूर्वपदभावात् "अनञः क्त्वो यप्" [ ३. २. १५४. ] इत्यनेन यबादेशोऽपि भवति, एषां प्रक्रियाऽर्थश्च पुरा गतिसंज्ञाप्रस्तावे प्रादर्शि । अथ कुशब्दमुदाहर्तुमाह–**कु** इति, पापार्थे सविग्रहमुदाहरति–**कुत्सि-**
5 **तो ब्राह्मणः–कुब्राह्मणः** इति, अतिदिशति–**एवमिति, कुपुरुषः** इति समासः, कुत्सितः पुरुष इत्यस्वपदविग्रहो नित्यसमासत्वात्। अथाल्पार्थे सविग्रहमुदाहरति–**ईषदुष्णं–कोष्णं कवोष्णं कदुष्णमिति**–अत्र 'ईषदुष्णम्' इति विग्रहः, शेषास्त्रयो हि समासाः, तत्र प्रथमे द्वितीये च "का-कवौ वोष्णे"
10 [ ३. १. १३७. ] इति 'का कव' इत्यादेशौ विकल्पेन, पक्षे "कोः कत् तत्पुरुषे" [ ३. २. १३०. ] इति कदादेशस्तृतीये, सर्वेषामपि 'अल्पमुष्णम्' इत्यर्थः; अतिदिशति–**एवमिति, कामधुरमिति** समासः, विग्रहस्तु–ईषद् मधुरमिति, अत्र च "अल्पे" [ ३. २. १३६. ] इति कोः कादेशः, अस्यापि 'अल्पं
15 मधुरम्' इत्यर्थः ।

पदव्यावृत्तिं दर्शयितुमाह–**अव्ययमित्येवेति**, प्रत्युदाहरणमुखेन व्यावर्त्यमाह–**कुर्विशालेति**, प्रकृते कुशब्दार्थमाह–**पृथिवीत्यर्थः** इति–अत्र कुशब्दो नाव्ययं पृथिवीवाचकत्वात्, पापाल्पार्थयोरेव तस्याव्ययत्वादित्यर्थः, अव्ययत्वाभावाच्च नानेन
20 समासः, कर्मधारयसमासस्तु स्यादेव, परं तु तत्र 'विशालकुः' इति प्रयोगः स्यात् 'विशाला' इति विशेषणस्य "विशेषणं०" [ ३. १. ९६. ] इति प्रथमोक्तत्वेन "प्रथमोक्तं प्राक्" [ ३. १. १४८. ] इति प्राक्प्रयोगात् । यद्यप्येतद् 'अव्ययम्' इत्यस्यानुवृत्तिं विनापि व्यावर्तयितुं शक्यते साहचर्यन्यायात्, "गतिः"
25 [ १. १. ३६. ] इति सूत्रेण गतिसंज्ञकानामव्ययसंज्ञाविधानाद् गतिसाहचर्यात् कुशब्दस्याप्यव्ययस्यैव ग्रहीतुं शक्यत्वात्, तथापि "त्वातुमम्" [ १. १. ३५. ] इत्यत्र साहचर्यन्यायस्यानित्यत्वशङ्कया, उत्तरत्र चाव्ययसम्बन्धस्याभिप्रेतत्वेन मध्ये तदसम्भवे *मण्डूकप्लुति*न्यायेनोत्तरत्र तत्सम्बन्धकल्पने च गौरवात्
30 स्पष्टप्रतिपत्त्यर्थमिहापि तत्सम्बन्ध उचित इति बोध्यम् ।

पदकृत्यं पृच्छति–**अन्य इति किमिति**, उत्तरयति–**कुत्सिताः पुरुषा यस्य स कुपुरुषकः** इति–अत्र बहुव्रीहिलक्षणलक्षितत्वादस्य नान्यत्वमिति नानेन समासो नवा तत्पुरुषसंज्ञा, किन्तु "एकार्थं चानेकं च" [ ३. १. २२. ]
35 इति बहुव्रीहिसमासः, अन्यग्रहणाभावे तु परत्वात् तत्पुरुषः स्यात्; नन्विह बहुव्रीहिसमाससंज्ञायाः किं फलमित्यत आह–**अत्र बहुव्रीहित्वात् कच् भवतीति**–"शेषाद् वा" [ ७. ३. १७५. ] इति बहुव्रीहित्वात् समासान्तः कच् भवति, तत्पुरुषे तु न स्यादित्यर्थः, यद्यपि कचो विकल्पेन विधानाद् बहुव्रीहिसंज्ञायामपि कुपुरुष इति स्यात्, तत्पुरुषसंज्ञायामपि तथैव 40 स्यात् तथापि पाक्षिककुपुरुषकेति प्रयोगार्थमन्यग्रहणमावश्यकमिति भावः ।

ननु समास इत्येव विधीयतां, किं तत्पुरुषसंज्ञाविधानेनेति शङ्कां तत्फलप्रदर्शनमुखेन निराकरोति–**तत्पुरुषप्रदेशाः** इति–अडादिसमासान्तप्रत्ययस्य तत्पुरुषादेव विधानात् तदर्थं तत्पुरुष- 45 संज्ञाविधानस्यावश्यकत्वमिति भावः ॥ ३. १. ४२. ॥

## दुर्निन्दा-कृच्छ्रे । ३ । १ । ४३ ॥

**त० प्र०**—दुरित्यव्ययं नाम निन्दायां कृच्छ्रे चार्थे वर्तमानं नाम्ना नित्यं समस्यते, स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । 50

**निन्दितः पुरुषः– दुष्पुरुषः, कृच्छ्रेण कृतं–दुष्कृतम् ।** अन्य इत्येव–**निन्दिताः पुरुषा यस्य स–दुष्पुरुषकः,** अत्रापि बहुव्रीहित्वात् कच् ॥ ४३ ॥

**श० म० न्यासानुसन्धानम्**–**दुर्निन्देत्यादि।** सूत्रार्थः सुगमः । क्रियायोगे हि प्रादीनां गतिसंज्ञा भवति, यत्र च 55 नास्ति क्रियायोगस्तत्र गतित्वाभावादप्राप्तः समासोऽनेनाग्रिमसूत्रैश्च विधीयते, कैश्चित् "दुर्निन्दायाम्" इत्येव पठ्यते, कृच्छ्रेण कृतमित्यर्थे दुष्कृतमित्यादौ हि धातुसम्बन्धसत्त्वात् तस्य गतित्वमेवेति गतिसंज्ञाद्वारैव समाससिद्धिरिति तदाशयः, स्वमते तु "गतिकु०" [ ३. १. ४२. ] इति दुरो यदि तत्पुरुषश्चेत् तदा 60 कृच्छ्रार्थे एवेति बोधनाय कृच्छ्रग्रहणम्, अन्यत्र तु यथायोगं समासोऽपि भवति, तथा च स्वोपज्ञन्यासः–"दुर्–ईषदर्थ–कुत्सा–वैकृत–व्यृद्धि–कृच्छ्रा–ऽप्रतिनन्दना–ऽनीप्सासु, ईषदर्थे–दुर्बलः, दुर्गृहीतः; कुत्सायाम्–दुर्गन्धः, दुरन्तः; वैकृते–दुर्वर्णः, दुश्चर्मा; व्यृद्धौ–कम्बोजानां व्यृद्धिः–दुष्कम्बोजम्; कृच्छ्रे–कृच्छ्रेण 65 क्रियते दुष्करम्; अप्रतिनन्दने–असम्यगुक्तं दुरुक्तम्; अनीप्सायाम्–अनीप्सितभगा दुर्भगा" इति । सविग्रहमुदाहरति–**निन्दितः पुरुषः–दुष्पुरुषः** इति–'निन्दितः पुरुषः' इत्यस्वपदविग्रहो नित्यसमासत्वात्, 'दुष्पुरुषः' इति समासः, अत्र निरो रस्य निसः सस्य रत्वे वा "निर्दुर्बहिरा०" 70 [ २. ३. ९. ] इति षत्वम्, **कृच्छ्रेण कृतं–दुष्कृतमिति**–कृच्छ्रेण कृतमिति विग्रहः, दुष्कृतमिति समासः, शेषं प्राग्वत् । 'अन्यः' इत्येतच्चाधिकृतं पूर्ववद् बहुव्रीह्यादिविषयेऽप्रवृत्त्यर्थं वेदितव्यमित्याह–**अन्य इत्येवेत्यादिना**, यदि 'अन्यः' इति नोच्येत तदा 'उच्चैर्मुखः' इत्यादौ बहुव्रीहिः सावकाशः, 75 'दुष्पुरुषः' इत्यादावुत्तरपदार्थे तत्पुरुषः, 'दुष्पुरुषः' इत्यादावन्यपदार्थे चोभयप्राप्तौ परत्वात् तत्पुरुषः स्यात्, न च तत्पुरुषे

बहुव्रीहिर्भवति बहुव्रीह्यादिसंज्ञानां समावेशानिष्टेः, **'निन्दिताः पुरुषा यस्य'** इति विग्रहः, **दुष्पुरुषकः** इति समासः, अत्रान्यवचनात् तत्पुरुषाभावे बहुव्रीहौ किं सिद्धमित्यत आह– **अत्रापि बहुव्रीहित्वात् कच्** इति–"शेषाद् वा" [ ७. ३. १७५. ] इति समासान्तः कच् प्रत्ययः सिद्धो भवतीत्यर्थः, अपिना पूर्वसूत्रीयस्य 'कुपुरुषकः' इत्यस्य समुच्चयः ॥ ३. १. ४३. ॥

## सुः पूजायाम् । ३ । १ । ४४ ॥

त० प्र०—**'सु'** इत्यव्ययं पूजायां वर्तमानं नाम्ना नित्यं समस्यते, स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति ।

शोभनो राजा–सुराजा । अन्य इत्येव–मद्राणां समृद्धिः–सुमद्रम्, अत्राव्ययीभावत्वादम् ॥ ४४ ॥

**श० म० न्यासानुसन्धानम्—सुः पूजायामिति ।** सूत्रार्थः सुगमः । सविग्रहमुदाहरति–**शोभनो राजा–सुराजा** इति–अत्र 'शोभनो राजा' इति नित्यसमासत्वादस्वपदविग्रहः, 'सुराजा' इति समासः, अत्र "राजन्सखेः" [ ७. ३. १०६. ] इति प्राप्तोऽपि समासान्तः "पूजास्वतेः प्राक् टात्" [ ७. ३. ७२. ] इति निषिध्यते । अनुवर्तमानस्य 'अन्यः' इत्यस्य व्यावर्त्यं दर्शयितुमाह–**अन्य इत्येवे**ति, सविग्रहं प्रत्युदाहरति–**मद्राणां समृद्धिः–सुमद्रमि**ति–मद्राणां समृद्धिरिति विग्रहः, सुमद्रमिति समासः, समृद्धिरपि पूजाद्योतिकैवेति पूजार्थोऽस्ति, अन्य इति भणनादिहाव्ययीभावलक्षणलक्षितत्वेनान्यत्वाभावान्नानेन समासः, किन्तु "विभक्ति-समीप०" [ ३. १. ३९. ] इति समासः, नन्वव्ययीभावोऽस्तु तत्पुरुषो वा, कोऽत्र विशेष इत्याह–**अत्राव्ययीभावत्वाद**मिति–"अमव्ययीभावस्यातोऽपञ्चम्याः" [ ३. २. २. ] इति पञ्चमीवर्जस्यादेरमादेशो भवतीत्यर्थः ।

यद्यपि प्रादीनां क्रियायोगे गतिसंज्ञा विहिता, तत्र च पूर्वेण समासोऽपि विहितः, तथापि सोः पूजायां क्रियायोगेऽपि गतिसंज्ञा न भवतीति पूर्वेणाप्राप्तौ सत्यामनेन समासविधानमवसेयम्, अर्थान्तरे च क्रियायोगादिना यथायोगं समासो भवति, तथा च स्वोपज्ञन्यासः–"सु–पूजा-भृशार्था-ऽनुमति-समृद्धि-दृढाख्या-ऽकृच्छ्रेषु, पूजायाम्–पूजितो राजा–सुराजा, सुगौः; भृशार्थे–सुप्रसम्, सुषिक्तम्; अनुमतौ–सुकृतम्, सूक्तम्, सुदत्तम्; समृद्धौ–समृद्धो देशः–सुमगधं वर्तते, सुमद्रं वर्तते; दृढाख्यायाम्–सुबद्धम्, सुकृतम्; अकृच्छ्रे–सुकरः कटो भवता" इति ॥ ३. १. ४४. ॥

## अतिरतिक्रमे च । ३ । १ । ४५ ॥

**त० प्र०**—अतीत्यव्ययमतिक्रमे पूजायां च वर्तमानं नाम्ना नित्यं समस्यते, स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति ।

**अतिस्तुतं भवता, अतिसिक्तं भवता, अतिक्रमेण स्तुतिसेकौ कृतावित्यर्थः, अतिस्तुत्य, अतिसिच्य; पूजायाम्—शोभनो राजा–अतिराजा । बहुलाधिकारादतिक्रमे क्वचिन्न भवति–अति स्तुत्वा, अति सिक्त्वा ॥ ४५ ॥**

**श० म० न्यासानुसन्धानम्–अतिरि**त्यादि । चकारेण पूजार्थसमुच्चयः, सूत्रार्थः सुगमः । पूर्वं तावदतिक्रमार्थे उदाहरति–**अतिस्तुतं भवता, अतिसिक्तं भवता,** इति–'अतिस्तुतम्, अतिसिक्तम्' इति समासौ, 'अतिक्रमेण स्तूयते स्म, अतिक्रमेण सिच्यते स्मेति "क्त-क्तवतू" [ ५. १. १७४. ] इति क्तः, एतदर्थमाह–**अतिक्रमेण स्तुति-सेकौ कृता**वित्यर्थः इति, एवम्–**'अतिस्तुत्य, अतिसिच्य'** इति समासौ, अतिक्रमेण स्तवनं सेचनं च कृत्वेति तदर्थः, अत्र समासत्वात् क्त्वाया यबादेशः, तकारागमश्च, उक्तेषु चतुर्ष्वपि समासेषु ह्यतिक्रमार्थत्वेनातेरुपसर्गसंज्ञाविरहात् "उपसर्गात् सुग्-सुव-सो-स्तु०" [ २. ३. ३९. ] इति "स्था-सेनि-सेध-सिच०" [ २. ३. ४०. ] इति च सस्य षत्वं न भवति । अथ पूजार्थे उदाहर्तुमाह–**पूजायामि**ति, पूजार्थं बोधयितुं सविग्रहमुदाहरति–**शोभनो राजा–'अतिराजा'** इति–'शोभनो राजा' इत्यस्वपदविग्रहः, 'अतिराजा' इति समासः, "राजन्सखेः" [ ७. ३. १०६. ] इति प्राप्तोऽपि समासान्तः "पूजास्वतेः प्राक् टात्" [ ७. ३. ७२. ] इति निषिध्यते ।

पूजार्थेऽतिक्रमार्थे चातेरुपसर्गत्वविरहात् तत्प्रयुक्तगतिसंज्ञाविरहेण पूर्वेणाप्राप्तावनेन समासविधानम्, अर्थान्तरे तु क्रियायोगादिना यथायथं समासो भवति, तथा च स्वोपज्ञन्यासः–"अति–पूजा-भृशार्था-ऽनुमत्यतिक्रमण-समृद्धि-भूताभावा-ऽवज्ञान-हीनार्थेषु, पूजायाम्–पूजितो राजा–अतिराजा, अतिगौः; भृशार्थे–अतिकृतम्, अतिसारः, अतिवृष्टिः; अनुमतौ–अतिचिन्तितम्; अतिक्रमणे–अतिक्रान्तो रथान्–अतिरथः, अतिकुलम्; समृद्धौ–समृद्धो देशः–अतिदेशः; भूताभावे–अतीतमेघं नभः; अवज्ञाने–अतिच्छिनत्सि, अतिहूतं धान्यम्; हीनं वाहयति–अतिवाहयति ।" इति ।

क्वचिदतिक्रमेऽपि समासो नेष्टः, तत्सिद्ध्युपायमाह–**बहुलाधिकारादतिक्रमे क्वचिन्न भवती**ति, क्व न भवतीत्याह–**अति स्तुत्वा, अति सिक्त्वा,** इति–अत्र समासाभावात् क्त्वाया यबादेशो न भवति, एवमुपसर्गत्वाभावात् षत्वमपि न

भवतीति । 'अति वृद्धं कुरून् महद् बलम्' इत्यत्र तु कुर्वतिक्रमेण वृद्धमित्यतिक्रमक्रियाजनितः कुरु-वृद्धयोः सम्बन्धो न समासेन गम्यत इत्यनभिधानान्न समासो भवति ॥ ३. १. ४५. ॥

## आङल्पे । ३ । १ । ४६ ॥

5 **त० प्र०—'आङ्' इत्यव्ययमल्पेऽर्थे वर्तमानं नाम्ना नित्यं समस्यते, स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति ।**

ईषत् कडारः–आकडारः, एवम्–आपिङ्गलः । 'आबद्धम्, आयुक्तम्' इत्यादौ तु क्रियायोगे गतिलक्षण एव समासः ॥ ४६ ॥

10 **श० म० न्यासानुसन्धानम्–आङल्पे** इति । सूत्रार्थः सुगमः ।

"ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः ।
एतमातं ङितं विद्यात् वाक्य-स्मरणयोरङित् ॥"

इत्युक्तदिशाऽत्रेषदर्थस्यैवाङोऽल्पार्थत्वमवसेयमिति । सविग्रह-15 मुदाहरति–**ईषत् कडारः–आकडारः** इति–'ईषत् कडारः' इत्यस्वपदविग्रहो नित्यसमासत्वात्, आकडार इति समासः, कडारशब्दः पिङ्गलवर्णे तद्वति च, अतिदिशति–**एवमिति, आपिङ्गलः** इति समासः, ईषत् पिङ्गल इति तस्य विग्रहः । ननु 'अल्पे' इति वचनादन्यत्र समासेन न भवितव्यम्, अथा-20 न्यत्रापि समासो दृश्यते, यथा–'आबद्धभ्रुकुटीविभीषणवपुः' 'आबद्धमुक्ताल तमस्य वक्षः' इत्यादिप्रयोगे, तस्य कथं सङ्गतिरिति चेत्? अत्राह–**'आबद्धम्, आयुक्तम्' इत्यादौ तु क्रियायोगे गतिलक्षण एव समासः** इति–आङ्पूर्वस्य बन्ध्धातोर्युज्धातोश्च क्ते 'आबद्धम्, आयुक्तम्' इति, तथा च 25 क्रियया सह आङ उपसर्गस्य योगात् "ऊर्या०" [ ३. १. २. ] इति गतिसंज्ञा, गतिसंज्ञकत्वाच्च "गति-कु०" [ ३. १. ४२. ] इति समासः । अयं भावः–आङोऽल्पार्थे गतिसंज्ञाविरहात् गत्यादिसूत्रेण तत्पुरुषो न प्राप्नोतीत्यल्पार्थे तत्पुरुषविधानार्थमयं योगः, अन्यत्र तु यथायोगं समासो भवति, तथा च स्वोपज्ञ-30 न्यासः–"आङ्–मर्यादा-प्राप्ति-स्पर्श-लिप्सा-भय-श्लेष-कृच्छ्राऽऽदिकर्म-ग्रहण-नीड-समीप-विक्रिया-ऽर्हणा-ऽऽवृत्त्याशीः-स्वीकरणेषदर्था-ऽभिविधि-क्रियायोगा-ऽन्तर्भाव-स्पर्धा-ऽऽभिमुख्योर्ध्वकर्म-मृशार्थ-प्रादुर्भाव-समवाय-स्मरण-विस्मय-प्रतिष्ठा-निर्देश-शक्त्य-प्रसाद-विवृता-ऽनुबन्ध-पुनर्वचनेषु । मर्यादायाम्–आ पाटलिपु-35 त्राद् वृष्टो मेघः; प्राप्तौ–आसादितः; स्पर्शे–आलिप्तः, आलभते; लिप्सायाम्–आकाङ्क्षति; भये–आविग्नः; श्लेषे–आलिङ्गति; कृच्छ्रे–आपत्; आदिकर्मणि–आरब्धः कर्तुम्; ग्रहणे–आलम्बते यष्टिम्; नीडे–आवसथः, आवासः; समीपे–आसन्नो देशः; विक्रियायाम्–आवृत्तं सुवर्णम्, आक्रन्दति बालः; अर्हणे–आमन्त्रितः; आवृत्तौ–आवृत्तो दिवसः; आशिषि–आयुराशास्ते, पुत्रमाशास्ते; 40 स्वीकरणे–आदत्ते फलानि, आदत्ते रसान् सूर्यः; ईषदर्थे–ईषत् कृतिराकृतिः, आताम्रः, आच्छाया; अभिविधौ–आकुमारं यशः शाकटायनस्य; क्रियायोगे–आयोगः, ऐष्टिः; अन्तर्भावे–आपानमुदकम्; स्पर्धायाम्–आह्वयते मल्लो मल्लम्; आभिमुख्ये–आगच्छति; ऊर्ध्वकर्मणि–आरोहति वृक्षम्; मृशार्थे–आधूता 45 शाखा, आपीनानीव धेनूनां जघनानि प्रसुस्रुवुः; प्रादुर्भावे–आपन्नसत्त्वा स्त्री; समवाये–आसेवा, आकुलम्; स्मरणे–आभवतु विज्ञानम्; विस्मये–आश्चर्यम्; प्रतिष्ठायाम्–आस्पदम्; निर्देशे–आदिष्टम्; शक्तौ–आधर्षयति; अप्रसादे–आविलमुदकम्; विवृते–आकाशम्; अनुबन्धे–आयाति; पुनर्वचने–आम्रेडितम् ।" 50 इति ॥ ३. १. ४६. ॥

## प्रा-ऽत्यव-परि-निरादयो गत-क्रान्त-क्रुष्ट-ग्लान-क्रान्ताद्यर्थाः प्रथमाद्यन्तैः । ३ । १ । ४७ ॥

**त० प्र०**—प्रादयः शब्दा गताद्यर्थेषु वर्तमानाः प्रथमा-55 न्तेन, अत्यादयः क्रान्ताद्यर्थेषु द्वितीयान्तेन, अवादयः क्रुष्टाद्यर्थेषु तृतीयान्तेन, पर्यादयो ग्लानाद्यर्थेषु चतुर्थ्यन्तेन, निरादयः क्रान्ताद्यर्थेषु पञ्चम्यन्तेन नाम्ना सह नित्यं समस्यन्ते, स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति ।

प्रादयः—प्रगत आचार्यः–प्राचार्यः, एवं–प्रान्तेवासी, 60 प्रवृद्धो गुरुः–प्रगुरुः, प्रकृष्टो वीरः–प्रवीरः, संगतोऽर्थः–समर्थः, विरुद्धः पक्षो–विपक्षः, प्रत्यर्थी पक्षः–प्रतिपक्षः, प्रतिबद्धं वचः–प्रतिवचः; उपश्लिष्टः पतिः–उपपतिः, उपपन्नोऽनुकूलः प्रतिकूलो वा नायकः–उपनायकः, अनुनायकः, प्रतिनायकः; अत्यादयः–अतिक्रान्तः खट्वाम्–अतिखट्वः, उद्गतो 65 वेलाम्–उद्वेलः, प्रतिगतोऽक्षं–प्रत्यक्षः, अनुगतः प्रतिगतो वा लोमानि–अनुलोमः, प्रतिलोमः, अभिप्रपन्नो मुखम्–अभिमुखः; अवादयः–अवक्रुष्टः कोकिलया–अवकोकिलः, परिणद्धो वीरुद्भिः–परिवीरुत्, संनद्धो वर्मणा–संवर्मा, अनुगतमर्थेन अन्वर्थं नाम, संगतमक्षेण–समक्षं वस्तु, वियुक्तमर्थेन– 70 व्यर्थं वचः, संगतमर्थेन समर्थं पदम्; पर्यादयः–परिग्लानोऽध्ययनाय–पर्यध्ययनः, उद्युक्तः संग्रामाय–उत्संग्रामः, शक्तः कुमार्यै–अलंकुमारिः; शक्तः पुरुषेभ्यः–अलंपुरुषीणः; अलंशब्दस्य चतुर्थ्यन्तेन वाक्यमपीच्छन्त्यन्ये–अलं जीविकायै–अलंजीविकः, अलं कुमार्यै–अलंकुमारिः; निरादयः–निष्क्रान्तः 75 कौशाम्ब्याः–निष्कौशाम्बिः, अपगतः शाखायाः–अपशाखः,

अन्तर्गतोऽङ्कुल्याः–अन्तरङ्कुलो नखः, उत्क्रान्ता कुलात्–उत्कुला कुलटा, एवम्–उद्वेलः समुद्रः, उच्छास्त्रं वचः, उत्सूत्रो न्यायः, उच्छृङ्खलः कलभः, अपगतमर्थाद्–अपार्थं वचः; एवम्–अपक्रमं कार्यम् ।

5 बहुलाधिकारात् षष्ठ्यन्तेनापि–अन्तर्गतो गार्ग्यस्य–अन्तर्गार्ग्यः, एवम्–अन्तरङ्कुलो नखः; सप्तम्यन्तेनापि–प्रतिष्ठितमुरसि–प्रत्युरसम् । गताद्यर्था इति किम्? वृक्षं प्रति विद्योतते विद्युत्, साधुर्देवदत्तो मातरं प्रति । अन्य इत्येव–प्राचार्यको देशः । बहुवचनमाकृतिगणार्थम् ॥ ४७ ॥

---

10 **श० म० न्यासानुसन्धानम्–प्रात्यवेत्यादि।** '**प्रात्यवपरिनिरादयः**' इति द्वन्द्वगर्भो बहुव्रीहिः, '**गत-क्रान्त-क्रुष्ट-ग्लान-क्रान्ताद्यर्थाः**' इति च द्वन्द्वगर्भबहुव्रीहिगर्भबहुव्रीहिः, '**प्रथमाद्यन्तैः**' इत्यत्रादिपदेन द्वितीया-तृतीया-चतुर्थी-पञ्चमीविभक्तीनां संग्रहो बहुव्रीहिगर्भो बहुव्रीहिश्च, 15 *द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते* इति न्यायेनादिशब्दः प्रत्येकं सम्बध्यते ह्युभयत्र, *यथासंख्यमनुदेशः समानाम्* इति न्यायेन च क्रमेणान्वयः, तथा च योऽर्थो निष्पन्नस्तमाह–**प्रादयः शब्दा गताद्यर्थेषु वर्तमानाः प्रथमान्तेने**त्यादिना, प्रादीनां च गताद्यर्थेषु वर्त-20 मानत्वं परस्परार्थान्तर्भावेण, तथाहि–यथा 'उपास्यते गुरुः' इत्यादावुपसर्गार्थान्तर्भावेण धातूनां सकर्मकत्वादिकं जायते, तथा प्रादीनामपि क्तादिप्रत्ययविशिष्टधात्वर्थावगमकत्वेन तदर्थे वृत्तिरित्येके, अपरे तु–"प्रादीनां गतादिषु–गम्यादिक्रियाविशिष्टसाधनेषु वृत्तिर्वृत्तिविषये विज्ञायते" इत्याहुः, तत्रास्यास्मिन्नर्थे 25 वृत्तिरिति विशेषनिर्णयो लक्ष्यानुसारेण भवति, तत्रापि प्रयोगपर्यालोचनया विशिष्टार्थवृत्तित्वं प्रादीनां वाक्यैर्वक्ष्यति ।

यथोद्देशन्यायेन पूर्वं प्रादीनुदाहर्तुमाह–**प्रादयः** इति, **प्रगत आचार्यः** इति विग्रहः, **प्राचार्यः** इति समासः, प्रगतत्वं चाचार्यस्य स्वविषयपारगामित्वम्, अतिदिशति–**एवमि**ति, 30 **प्रान्तेवासी**ति समासः, प्रगतोऽन्तेवासीति तस्य विग्रहः, अन्तेवासिनश्च प्रगतत्वं सर्वान्तेवासिगुणसमृद्धत्वम्, एवं क्रमेण यथायथमर्था विज्ञेयाः । आदिपदग्राह्यमर्थं दर्शयितुं सविग्रहमुदाहरणद्वयमाह–**प्रवृद्धो गुरुः–प्रगुरुः, प्रकृष्टो वीरः–प्रवीरः** इति, अथादिपदग्राह्यं प्रादिमर्थं च दर्शयितुमुदाहरणाष्टकं 35 सविग्रहमाह–**संगतोऽर्थ** इत्यादिना, **संगतोऽर्थः** इति विग्रहः, **समर्थः** इति च समासः, **विरुद्धः पक्षः** इति विग्रहः, **विपक्षः** इति च समासः, **प्रत्यर्थी पक्षः** इति विग्रहः, **प्रतिपक्षः** इति च समासः, **प्रतिबद्धं**–प्रश्नेन सम्बद्धं तदुत्तररूपं **वचः** इति विग्रहः, **प्रतिवचः** इति च समासः, उत्तरमिति तदर्थः, **उपश्लिष्टः**–सामीप्येन कृतश्लेषः, न तु 40 विधिवत् सम्बद्धः, **पतिः**–आरोपितपतित्ववान् इति विग्रहः, **उपपतिः** इति च समासः, **उपपन्नः**–स्वशीलवयोऽभिलाषादिभिर्युक्तः [ समुचितः ], **नायकः**–सुखप्राप्तिकारकः इति विग्रहः, **उपनायकः** इति च समासः, उपनयतीत्युपनायकमिति तु व्याप्तिविशिष्टपक्षधर्मतासूचकं वाक्यम्, **अनुकूलः**– 45 अनुगतः स्वेच्छानुसारी, **नायकः** इति विग्रहः, **अनुनायकः** इति च समासः, अनुनयतीत्यनुनायकस्तु प्रार्थनादिना स्वाभिमतप्रवर्तकोऽन्य एव, **प्रतिकूलः**–प्रकृतनायकप्रातिकूल्येन वर्तमानः, नायकप्रतिपक्षभूतः **नायकः** इति विग्रहः, **प्रतिनायकः** इति च समासः, उपनायकादिवदयं शब्दो न केवल-50 मङ्गनावर्गसम्बद्धः, प्रतिकूलेन सह नायकनायिकाव्यवहारस्यैवाभावात्, यस्तु वास्तविको नायकः पतिस्तस्य प्रातिकूल्ये च न प्रतिनायकशब्द प्रयुज्यते, शब्दशक्तिस्वाभाव्यात् ।

अथात्यादीनुदाहर्तुमाह–**अत्यादयः** इति, क्रान्तार्थप्रदर्शनाय सविग्रहमुदाहरति **–अतिक्रान्तः खट्वाम्–अतिखट्वः** इति– 55 स्त्रीत्वविशिष्टखट्वाकर्मकातिक्रमणकर्तेत्यर्थः, स्त्रीत्वस्य स्वरूपसम्बन्धेन खट्वापदार्थे तस्य क्रियाकर्मभावसम्बन्धेनातिक्रमणकर्तर्यन्वयात्; अत्र खट्वानिष्ठा प्रकारता क्रियाकर्मभावसम्बन्धेनावच्छिन्ना, अतिक्रमणकर्तरि निष्ठा विशेष्यता, खट्वायां च विशेषणं स्त्रीत्वम्, अतः खट्वानिष्ठप्रकारताया व्यावर्तकता स्त्रीत्वनिष्ठा, आदिपदग्राह्यं 60 शब्दमर्थं च दर्शयितुमुदाहरणपञ्चकमाह– '**उद्गतो वेलामि**त्यादिना, **उद्गतो वेलामि**ति विग्रहः, **उद्वेलः** इति च समासः, तटमतिक्रान्त इति तदर्थः, इह पूर्वत्र च "गोश्चान्ते०" [ २. ४. ९६. ] इति ह्रस्वत्वं ज्ञेयम्, **प्रतिगतोऽक्षमि**ति विग्रहः, **प्रत्यक्षः** इति समासः, 65 **अनुगतो लोमानी**ति विग्रहः, **अनुलोमः** इति समासः, **प्रतिगतो लोमानी**ति विग्रहः, **प्रतिलोमः** इति समासः, यथा लोमानि ऊर्ध्वाधःक्रमेण सन्निविष्टानि भवन्ति तथा सन्निविष्टोऽनुलोमः, तत्प्रतिकूलश्चाधऊर्ध्वक्रमेण सन्निविष्टः प्रतिलोमः, अनुलोमप्रतिलोम-शब्दावानुकूल्यप्राति-70 कूल्यार्थयोरपि लोके प्रयुज्येते, "प्रत्यन्ववात् सामलोम्नः" [ ७. ३. ८२. ] इत्युभयत्रापि समासान्ते "नोऽपदस्य तद्धिते" [ ७. ४. ६१. ] इत्यनो लोपे चानुलोम-प्रतिलोम-शब्दयोरदन्तत्वम्; **अभिप्रपन्नो मुखमि**ति विग्रहः, **अभिमुखः** इति समासः । केचित् तु–"प्रगत आचार्यः, अतिक्रान्तः 75 खट्वाम्' इत्यादिविग्रहवाक्येषु प्रादीनामुपादानं गताद्यर्थबोधनायैव, नित्यसमासत्वेन सर्वत्रास्वपदविग्रहस्यैव सर्वैराचार्यैः स्वीकृतत्वात्, एवं च 'गत आचार्यः, क्रान्तः खट्वाम्, इत्यायेव प्रादिरहितं विग्रहवाक्यम्" इत्याहुः, एवमग्रेऽपि ।

अथावादीनुदाहर्तुमाह-**अवादयः** इति, कुष्टार्थप्रदर्शनाय सविग्रहमुदाहरति-**अवक्रुष्टः कोकिलया-अवकोकिलः** इति, कोकिलया आहूत इत्यर्थ इति केचित्, अपरे तु-"कोकिलारुतं यो बालोऽनुकरोति तं सा क्रुद्धेव पुनः पुनस्तथैव शब्दं कुर्वन्ती कोपयतीवेति तत्रत्योऽयं प्रयोग इत्येव प्रतीतिपदमायाति" इत्याहुः । आदिपदग्राह्यं शब्दमर्थं च दर्शयितुमुदाहरणषट्कं सविग्रहमाह-**परिणद्धो वीरुद्भिरि**त्यादिना, **परिणद्धो वीरुद्भिरि**ति विग्रहः, **परिवीरुदि**ति च समासः, **संनद्धो वर्मणे**ति विग्रहः, **संवर्मे**ति च समासः, **अनुगतमर्थेने**ति विग्रहः, **अन्वर्थमि**ति समासः, **नामे**ति च तस्य विशेष्यम्, **संगतमक्ष्णे**ति विग्रहः, **समक्षमि**ति समासः, **वस्तु** इति च तस्य विशेष्यम्, **वियुक्तमर्थेने**ति विग्रहः, **व्यर्थमि**ति समासः, **वचः** इति च तस्य विशेष्यम्, **संगतमर्थेने**ति विग्रहः, **समर्थमि**ति समासः, **पदमि**ति च तस्य विशेष्यम् ।

अत्रापि पूर्वोक्तमतानुसारेण 'कोकिलया अवक्रुष्टः' इत्यादिस्थाने 'क्रुष्टः कोकिलया' इत्यादिरेव विग्रहः, नन्वेवं वियुक्तमर्थेन व्यर्थमित्यादौ युक्तमर्थेनेति विग्रहः स्यात्, तथा च प्रतीयमानविपरीतार्थकमेव विग्रहवाक्यमिति चेत्? न-'पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन' इति मते पूर्वं धातोरुपसर्गयोगे तन्निमित्तकसन्ध्यादिकार्ये च सति 'अध्ययन-प्रत्यया'-दिशब्दासिद्धिरिति, 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति स्वीकारे च 'उपास्यते गुरुः' इत्यादौ कर्मणि प्रत्ययाप्राप्तिरित्युभयदोषनिवारणार्थं 'पूर्वं धातुरुपसर्गार्थमन्तर्भाव्य साधनेन युज्यते पश्चादुपसर्गेण' इति सिद्धान्तेन युजिरेव प्रयुक्तवियुक्ताद्यर्थवाचकः, प्रादिशब्दबलाच्च सोऽर्थः स्फुटं द्योत्यत इत्यभ्युपगमेन दोषाभावात् । परे तु- "अस्वपदघटक'स्व'पदेनात्मीयार्थबोधकेन समासघटकवर्तिपदनिष्ठानुपूर्वी गृह्यते, तया च तद्भिन्नानुपूर्वी बोध्यते, तथा च नित्यसमासः समाससमानार्थकलौकिकविग्रहवाक्याभाववान् समासघटकवर्तिपदवृत्त्यानुपूर्वीभिन्नानुपूर्वीमत्पदघटितविग्रहवान् वा भवतीति 'अविग्रहो नित्यसमासोऽस्वपदविग्रहो वा' इत्यस्यार्थः, प्रकृते च प्राचार्य-व्यर्था-ऽवकोकिलादिसमासघटकवर्ति'प्र-वि-अव'पदवृत्त्यानुपूर्वीभिन्नानुपूर्वी प्रगत-वियुक्ता-ऽवक्रुष्टनिष्ठा, तद्वत् पदं 'प्रगतः, वियुक्तः' इत्यादि पदं, तद्घटितत्वमुक्तवाक्यस्यास्त्येवेति पूर्वोक्तम-तस्य नावकाशः," इत्याचक्षते ।

अथ पर्यादीनुदाहर्तुमाह-**पर्यादयः** इति, ग्लानार्थं दर्शयितुं सविग्रहमुदाहरति-**परिग्लनोऽध्ययनाय पर्यध्ययनः** इति-'अध्ययनाय' इति तादर्थ्ये चतुर्थी, गुरुकुलवासपरिचर्यादिव्यासङ्गादध्ययनार्थं ग्लान इत्यर्थः । आदिपदग्राह्यं शब्दमर्थं च दर्शयितुमुदाहरणत्रयमाह-**उद्युक्तः संग्रामाये**त्यादिना, **उद्युक्तः संग्रामाये**ति विग्रहः, तादर्थ्ये च चतुर्थी, **उत्संग्रामः** इति च समासः, **शक्तः कुमार्यै** इति विग्रहः, शक्तार्थयोगे चतुर्थी, एवमुत्तरत्र, **अलङ्कुमारिरि**ति समासः, "गोश्चान्ते०" [ २. ४. ९६. ] इति ह्रस्वश्च, एवमुत्तरत्रापि, **शक्तः पुरुषेभ्यः** इति विग्रहः, **अलंपुरुषीणः** इति च समासः, प्रतिमल्लादियोधनसमर्थ इति तदर्थः, अत्र 'अलंपुरुष'-शब्दात् "अषडक्षाशितं०" [ ७. १. १०७. ] इति स्वार्थे ईनप्रत्ययः । अलंशब्दविषये मतान्तरमाह-**अलंशब्दस्ये**-त्यादिना ।

अथ निरादीनुदाहर्तुमाह-**निरादयः** इति, क्रान्तार्थं दर्शयितुं सविग्रहमुदाहरति-**निष्क्रान्तः कौशाम्ब्याः-निष्कौशाम्बिः**, आदिपदग्राह्यं शब्दमर्थं च दर्शयितुमुदाहरणनवकं सविग्रहमाह-**अपगतः शाखाया** इत्यादिना, **अपगतः शाखायाः** इति विग्रहः, **अपगतशाखः** इति च समासः, **अन्तर्गतोऽङ्गुल्याः** इति विग्रहः, **अन्तरङ्गुलः** इति च समासः, **नखः** इति तस्य विशेष्यम्, अत्र च "संख्याव्ययादङ्गुलेः" [ ७. ३. १२४. ] इति समासान्तेऽति "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इतीकारलोपे च 'अन्तरङ्गुल' इत्यस्य सिद्धिः, **उत्क्रान्ता कुलादि**ति विग्रहः, **उत्कुले**ति समासः, **कुलटे**ति तस्य विशेष्यं च, अतिदिशति-**एवमिति, उद्वेलः** इति समासः, **समुद्रः** इति च तस्य विशेष्यम्, विग्रहस्तु-उत्क्रान्तो वेलाया इति, उल्लङ्घिततट इत्यर्थः, **उच्छास्त्रमि**ति समासः, **वचः** इति तस्य विशेष्यम्, विग्रहस्तु-शास्त्रादुत्क्रान्तमिति, **उत्सूत्रः** इति समासः, **न्यायः** इति तस्य विशेष्यम्, विग्रहस्तु-उत्क्रान्तः सूत्रादिति, **उच्छृङ्खलः** इति समासः, **कलभः** इति तस्य विशेष्यम्, विग्रहस्तु-उत्क्रान्तः शृङ्खलाया इति, कलभः पञ्चवर्षीयो हस्तिबालः, **अपगतमर्थादि**ति विग्रहः, **अपार्थमि**ति समासः, **वचः** इति तद्विशेष्यं च, अतिदिशति-**एवमिति, अपक्रममि**ति समासः, **कार्यमि**ति विशेष्यं तस्य, विग्रहस्तु-अपगतं क्रमादिति ।

पञ्चमीपर्यन्तमेव प्रायः समर्थविभक्तिरिह प्रकरणे गृह्यते, पञ्चानामेव गताद्यर्थानां निर्देशादिति सर्वाचार्यसम्मतम्, तथापि लक्ष्यानुरोधात् षष्ठ्यन्त-सप्तम्यन्तयोरपि ग्रहणमिति विशेषं व्याख्यातुमुपक्रमते-**बहुलाधिकारात् षष्ठ्यन्तेनापी**ति, **अन्तर्गतो गार्ग्यस्ये**ति विग्रहः, **अन्तर्गार्ग्यः** इति समासः, अतिदिशति-**एवमिति, अन्तरङ्गुलः** इति समासः, **नखः** तद्विशेष्यं, विग्रहस्तु-अन्तर्गतोऽङ्गुल्या इति, समासान्तादिकं प्राग्वत्, **सप्तम्यन्तेनापी**ति-बहुलाधिकारादिति योज्यमत्रापि, **प्रतिष्ठितमुरसी**ति विग्रहः, **प्रत्युरसमि**ति समासः, अत्र "प्रतेरुरसः सप्तम्याः" [ ७. ३. ८४. ] इत्यत् समासान्तः ।

पदकृत्यं पृच्छति–**गताद्यर्था इति किमि**ति, उत्तरयति–**वृक्षं प्रती**त्यादि–अत्र प्रतेर्गताद्यर्थाभावान्न समासः, अनुवर्तमानस्य 'अन्यः' इत्यस्य व्यावर्त्यं दर्शयितुमाह–**अन्य इत्येवे**ति, 'प्रगता आचार्या यस्मिन् देशे' इत्यर्थे **प्राचार्यको देश** इति–अत्र बहुव्रीहिलक्षणलक्षितत्वेनान्यत्वाभावान्नानेन समासः, किन्तु पूर्वेण बहुव्रीहिः, बहुव्रीहित्वाच्च समासान्तः कच् सिध्यति। पाणिनीयमते चैतादृशस्थले परिगणनरूपसमासः वारणोपायः प्राक् प्रदर्शित एव, स्वमते चार्थानामेव नियामकत्वेन न परिगणनावश्यकत्वमिति लाघवम्। सूत्रे लाघवानुरोधेनैकवचनान्तस्यैव निर्देशे करणीये बहुवचनान्तप्रयोगे किं फलमित्याशङ्कायामाह–**बहुवचनमाकृतिगणार्थमि**ति, तथा चोक्तातिरिक्तानामपि प्रादीनां गतादीनां विभक्तीनां च संग्रह इति भावः ॥३.१.४७.॥

## अव्ययं प्रवृद्धादिभिः । ३ । १ । ४८ ॥

**त० प्र०**—अव्ययं नाम प्रवृद्धादिभिर्नामभिर्नित्यं समस्यते, स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । पुनःप्रवृद्धं बर्हिः, पुनरुत्स्यूतं वासः, पुनर्निष्क्रान्तो रथः, पुनरुक्तं वचः, पुनर्नवं वयः, पुनःशृतं पयः, स्वर्यातः, अन्तर्भूतः, प्रातःसवनम्, उच्चैर्घोषः, नीचैर्गतम्, अधस्पदम्, अनद्धा पुरुषः, असशक्तः पुरुषः, प्रायश्चित्तम्, सद्यस्क्रीः, प्राग्वृत्तम्, पुराकल्पः, श्वःश्रेयसम्, श्वोवसीयसम्; इति । बहुवचनमाकृतिगणार्थम् ॥ ४८ ॥

**श० म० न्यासानुसन्धानम्**—**अव्ययमि**त्यादि । सूत्रार्थः सुगमः । उदाहरति–**पुनःप्रवृद्धं बर्हिः**, पुनःप्रवृद्धमिति समासः, बर्हिरिति तद्विशेष्यं, बर्हिः कुशः, नित्यसमासत्वाद् विग्रहवाक्यं न प्रदर्शितम्, अर्थदर्शनाय च 'पुनः प्रवर्धते स्म' इत्यादिरूपेण विग्रहो विधेयः, छिन्नोऽपि यः पुनर्वर्धत इत्यर्थः, "कालवाचकात् पुनःशब्दात् "कालाध्वनो०" [ २. २. ४२. ] इति विकल्पेन द्वितीया सप्तमी वा सर्वत्र" इति लघुन्यासः, **पुनरुत्स्यूतमि**ति समासः, पुनरुत्स्यूयते स्मेति विग्रहः, **वासः** इति तस्य विशेष्यं, तदर्थो वस्त्रमिति, **पुनर्निष्क्रान्तः** इति समासः, पुनर्निष्क्राम्यति स्मेति विग्रहः, **रथः** इति च तद्विशेष्यम्, **पुनरुक्तमि**ति समासः, पुनरुच्यते स्मेति विग्रहः, **वचः** इति च तस्य विशेष्यम्, **पुनर्नवमि**ति समासः, पुनर्नवीनतां गतमिति विग्रहः, **वयः** इति तद्विशेष्यं च, **पुनःशृतमि**ति समासः, पुनः पक्वमिति विग्रहः, **पयः** इति च तस्य विशेष्यम्, **स्वर्यातः** इति समासः, स्वर्गं याति स्मेति विग्रहः, **अन्तर्भूतः** इति समासः, अन्तर्भवति स्मेति विग्रहः, **प्रातःसवनमि**ति समासः, प्रातः स्नानमिति विग्रहः, **उच्चैर्घोषः** इति समासः, महद् घोषणमिति विग्रहः, **नीचैर्गतमि**ति समासः, नीचं गतं गमनमिति विग्रहः, मन्दगतिरसद्व्यवहारो वेत्यर्थः, **अधस्पदमि**ति समासः, अधःस्थाने पदमिति विग्रहः, "शिरोऽधसः०" [ २. ३. ४. ] इति सत्वं च, **अनद्धा पुरुषः** इति समासः, अत्र लघुन्यासः—"अनिर्णयोऽनद्धा तेन पुरुषः, न विद्यते द्धा संशयोऽस्येति व्युत्पत्त्याऽद्धा धर्मी उच्यते, न अद्धा–अनद्धा, संशयितः पुरुषः, ससंशय पुरुषो वा–अनद्धा पुरुषः।" इति । **प्रायश्चित्तमि**ति समासः, प्रकर्षेण एति–आगच्छति अस्मादाचारधर्म इति प्रायो मुनिजनः, चिन्त्यते स्मेति चित्तम्, प्रायैर्मुनिजनैश्चित्तं चिन्तितं पापशुद्धये इति प्रायश्चित्तमुच्यते, **सद्यस्क्रीरि**ति समासः, सद्यः क्रीणातीति विग्रहः, भ्रातुष्पुत्रकस्कादित्वात् सत्वम्, **प्राग्वृत्तमि**ति समासः, पुरा वर्तते स्मेति विग्रहः, **पुराकल्प** इति समासः, पूर्वकालिकः कल्प इति विग्रहः, **श्वःश्रेयसमि**नि समासः, शोभनं श्रेय इति "निसश्च श्रेयसः" [ ७. ३. १२२. ] इति समासन्तेऽति श्वःश्रेयसमिति, **श्वोवसीयसमि**ति समासः, पूर्वं वसुशब्दः, वसून्यस्य सन्ति "तदस्यास्त्य०" [ ७. २. १. ] इति मतौ वसुमत्, अयमनयोरतिशयेन वसुमानिति "गुणाङ्गाद् वेष्ठेयसू" [ ७. ३. ९. ] इति इयसुः, "विन्मतोर्णीष्ठेयसौ०" [ ७. ४. ३२. ] इत्यनेन मतोर्लोपः, तदनन्तरं "त्र्यन्त्यस्वरादेः" [ ७. ४. ४३. ] इति वसोरुकारलोपे 'वसीयस्' इति, शोभनं वसीयः–श्वोवसीयसम्, "श्वसो वसीयसः" [ ७. ३. १२१. ] इति अत् समासान्तः । अत्रापि बहुवचनं पूर्ववल्लक्ष्यानुसरणार्थमित्याह—**बहुवचनमाकृतिगणार्थमि**ति, तथा चान्येऽप्येतादृशाः प्रयोगाः साधनीयाः, विशेषतो यत्र तत्पुरुषसंज्ञाप्रयुक्तं कार्यमेषणीयं, यथा 'पुनर्गवः' इत्यादाविति नागेशादिमतम् ॥ ३. १. ४८. ॥

## ङस्युक्तं कृता । ३ । १ । ४९ ॥

**त० प्र०**—कृत्प्रत्ययविधायके सूत्रे ङसिना–पञ्चम्यन्तेन नाम्नोक्तं ङस्युक्तम्, तत् कृदन्तेन नाम्ना नित्यं समस्यते, स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । कुम्भं करोति–कुम्भकारः, शरलावः, अग्निचित्, सोमसुत्, अन्यथाकारं भुङ्क्ते, अतिथिवेदं भोजयति; इह च *गति-कारक-ङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समास इष्यते* तेन 'प्र-स्+स्थ' इत्यादौ 'चर्मन्–टा+क्रीत, अभ्र–टा+विलिप्त'इत्यादौ 'कच्छ–अम्+प'इत्यादौ च समासे सति मकारान्तत्वात् ङीः सिद्धः–प्रष्ठी, चर्मक्रीती, अभ्रविलिप्ती, कच्छपी, इत्यादि; यदि पुनर्विभक्त्यन्तैः कृदन्तैः समासः स्यात् तदान्तरङ्गत्वाद् विभक्तेः प्रागेव आपः प्राप्तावकारान्त-

त्वाभावात् ङीर्न स्यात् । तथा-'माषान्+वापिन्, व्रीहीन्+वापिन्' इत्यादौ समासे नकारस्यान्तत्वाण्णत्वं सिद्धम्-माषवापिणी, व्रीहिवापिणी, विभक्त्यन्तेन तु समासेऽन्तरङ्गत्वाद् विभक्तेः प्रागेव ङीप्राप्तौ नकारस्यानन्तत्वाण्णत्वं न 5 स्यात्; पूर्वपदस्य च विभक्त्यन्तत्वनियमात् 'चर्मक्रीती' इत्यादिषु पदकार्यं नकारलोपादि सिद्धं भवति । ङस्युक्तमिति किम्? कारकस्य गतिः, कारकस्य व्रज्या, अलं कृत्वा, खलु कृत्वा। कृतेति किम्? धर्मो वो रक्षतु ॥ ४९ ॥

**श० म० न्यासानुसन्धानम्-ङस्युक्तमि**त्यादि । 10 **ङस्युक्तमि**ति पदं सामान्यतोऽभिधीयमानार्थपरं चेत् तदा सामान्यगतदेशविशेषानतिदेश इति लोकप्रसिद्धपरिभाषया यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमित्यनेनाग्रासनाद्यतिदेशो दृश्यते न तु माठरकौण्डिन्यसम्बन्धिपरिवेषणादिधर्मस्य, एवं च प्रकृते यस्य कस्यापि ङसिनोक्तस्य ग्रहणं स्यादिति तत्पदं 15 व्याख्याति-**कृत्प्रत्ययविधायके**त्यादिना-कृत्प्रकरणे हि "कर्मणोऽण्" [ ५. १. ७२. ] इत्यादिसूत्रेषूपपदत्वेन कर्माद्यो ङसिना निर्दिश्यन्ते,त इह ङस्युक्तपदेन ग्राह्या इति भावः । कृदन्तं च नाम प्रत्यासत्त्या तत्सूत्रविहितप्रत्ययान्तमेव ग्राह्यमुपस्थितत्यागेऽनुपस्थितकल्पने मानाभावात्, तथा च "कर्मणोऽण्" [ ५. १. 20 ७२. ] "सोमात् सुगः" [ ५. १. १६६३. ] "कर्तुर्णिन्" [ ५. १. ५३. ] इत्यादिसूत्रस्थं 'कर्मणः' इत्यादि पदं लक्ष्यते, तथा 'कृत्'शब्देन तत्तत्सूत्रविहितप्रत्ययान्तमेव गृह्यते । अत्र **'नाम्ना'** इति निर्विभक्तिकनामपरमेव, अग्रे तदुपपादकस्य वचनस्य वक्ष्यमाणत्वात् ।

25 अथ कृत्प्रत्ययार्थं दर्शयितुं विगृह्योदाहरति-**कुम्भं करोती**ति-लौकिकोऽयमस्वपदविग्रहः, **कुम्भकारः** इति समासः, "कर्मणोऽण्" [ ५. १. ७५. ] इति कृणोऽणि वृद्ध्यावारादेशादिः, एवं-**शरलावः** इति-समासोऽयम्, शरान् लुनातीति विग्रहः, प्राग्वदणादिः, **अग्निचित्** इति समासः, अग्निं चितवानिति 30 विग्रहः, "अग्नेश्चेः" [ ५. १. १६४. ] इति क्विपि सति तागमः, एवं-**सोमसुत्** इति समासः, सोमं सुतवानिति विग्रहः, "सोमात् सुगः" [ ५. १. १६३. ] इति क्विपि सति तागमः । **अन्यथाकारं भुङ्क्ते** इति-अन्यथा कृत्वेति विग्रहः, अन्यथाकारमिति समासः, अनर्थकात् कृगः "अन्यथैवं०" [ ५. ४. ५०. ] 35 इति खणमि वृद्ध्यादिः, आनर्थक्यं च करोतेरन्यथाशब्दात् पृथगर्थाभावात्, यावदुक्तं भवति-अन्यथा भुङ्क्ते, तावदुक्तं भवति-अन्यथाकारं भुङ्क्ते इति । **अतिथिवेदं भोजयती**ति-अतिथिवेदमिति समासः, "विद्दृग्भ्यः कार्त्स्न्ये णम्" [ ५. ४. ५४. ] इति णम् उपान्त्यगुणश्च, यं यमतिथिं जानाति लभते विचारयति वा तं सर्वं भोजयतीत्यर्थः । 'राजपुरुषः' 40 इति समासविषये यथा 'राज्ञः पुरुषः' इति लौकिकं 'राजन् ङस्-पुरुष सि' इत्यलौकिकं च विग्रहवाक्यं, तथैवात्र, अस्ति वा कश्चिद् विशेष इत्याकाङ्क्षायामाह—**इह च** एतत्सूत्रविधेयसमासविषये, अथवा एतत्प्रकरणे इतीहशब्दार्थः, **गति-कारक-ङस्युक्तानामि**ति-गतिः "गतिक्वन्यस्तत्पुरुषः" [ ३. १. ४२. ] 45 इति सूत्रेण गृहीतः, कारकं "कारकं कृता" [ ३. १. ६८. ] इति सूत्रगृहीतं, ङस्युक्तं प्रकृतसूत्रविषयः, एतेषां **विभक्त्यन्तानामेव** स्वस्वसमर्थविभक्तिसहितानामेव, **कृदन्तैः** स्वेन सह समस्यमानैः कृत्प्रत्ययान्तैर्नामभिः, **विभक्त्युत्पत्तेः प्रागेव** अन्यत्र विभक्त्यन्तैरेव सह समासस्येष्टत्वेऽपि 50 तैस्तदुत्पत्तिरहितैरेव सह, **समास इष्यते** लक्ष्यसंस्कारोपयुक्ततया स्वीक्रियते, ततः किमित्याह-**तेन 'प्र+सि-स्थ' इत्यादावि**ति-'प्रतिष्ठते' इति लौकिकं वाक्यम्, अलौकिकं तु 'प्र+सि- स्थ' इति, 'चर्मणा क्रीयते स्म' इति लौकिकं वाक्यम्, अलौकिकं तु 'चर्मन्+टा-क्रीत' इति, 'अल्पेनाभ्रेण 55 विलिप्यते स्म' इति लौकिकं वाक्यम्, अलौकिकं तु 'अभ्र+टा-विलिप्त' इति, कच्छोऽनूपप्रायः कूर्मपादो वा, 'कच्छं पाति कच्छेन पिबति वा इति लौकिकं वाक्यम्, अलौकिकं तु 'कच्छ+अम्-प' इति, एवमलौकिकविग्रहवाक्ये उत्तरपदस्य निर्विभक्तिकत्वं स्वीकृत्य समासे कृते सति समस्तस्याकारान्तत्वादकारान्त- 60 लक्षणो ङीप्रत्ययः सिध्यति, तदाह-**प्रष्ठी**ति-प्रपूर्वात् स्थाधातुतः "उपसर्गादातो डोऽश्यः" [ ५. १. ५६. ] इति डः, "स्था-पा-स्ना-त्रः०" [ ५. २. १५२. ] इति तु को न भवति, प्रायेण 'नामग्रहणे उपसर्गस्य न ग्रहणम्' इत्यस्यार्थस्य ज्ञापनात्, तत्र नामग्रहणात् तेनोपसर्गस्यासंग्रहात्, डस्य डित्त्वात् "डित्यन्त्य- 65 स्वरादेः" [ २. १. ११४. ] इति व्यपदेशिवद्भावेनाऽऽकारस्यान्त्यस्य लोपे 'प्रस्थ' इति, "प्रष्ठोऽग्रगे" [ २. ३. ३२. ] इति षत्वे 'प्रष्ठ' इति, ततोऽकारान्तत्वाद् "धवाद्योगा०" [ २. ४. ५९. ] इति ङ्याम् "अस्य ङ्यां लुक्" [ २. ४. ८६. ] इति पूर्वाकारलोपे 'प्रष्ठी' इति । **चर्मक्रीती**ति-अत्र "कारकं 70 कृता" [ ३. १. ६८. ] प्रागुक्तदिशा चर्मक्रीतशब्दस्याकारान्तत्वात् "क्रीतात् करणादेः" [ २. ४. ४४. ] इति ङ्यां 'चर्मक्रीती' इति । **अभ्रविलिप्ती**ति-अत्रापि "कारकं कृता" [ ३. १. ६८. ] इति समासः, प्रागुक्तदिशा 'अभ्रविलिप्त' इति समासस्याकारान्तत्वात् "क्तादल्पे" [ २. ४. ४५. ] इति ङीः। 75 **कच्छपी**ति-"स्था-पा-स्ना-त्रः कः" [ ५. १. १४२. ] इति के ककारस्येत्त्वेन कित्त्वात् "इडेत्पुसि चातो लुक्" [ ४. ३. ९४. ] इत्याकारलोपे च 'कच्छप' इति समासस्याकारान्तत्वादकारान्तलक्षणो "जातेरयान्त०" [ २. ४. ५४. ]

इति ङीः, समासस्तु प्रकृतसूत्रेण । उक्तसमासेषु विभक्तिरहित-
कृदन्तैः समसनमित्यावेदितम्। ननु विभक्तिसहितकृदन्तैर्यदि
समासः स्यात् तदा का हानिरित्याकाङ्क्षायामाह– **यदि पुनर्वि-
भक्त्यन्तैरि**त्यादि, **अन्तरङ्गत्वाद् विभक्तेः प्रागेवे**ति–
5 अयमाशयः–स्वार्थ-द्रव्य-लिङ्ग-संख्या-कारकाणां क्रमेणोपस्थि-
तिरिति वैयाकरणसमयः, तत्र स्वार्थः– प्रवृत्तिनिमित्त गोत्वादि
जातिः, द्रव्यं–प्रवृत्तिनिमित्ताश्रयः संघातः, लिङ्गं–स्त्री-नपुंसकादि,
संख्या–एकत्व-द्वित्वादि, कारकं– कर्त्रादि, एते पञ्चापि नामार्थाः,
तत्र स्वार्थ-द्रव्ये निमित्तान्तरानपेक्षे एव प्रतीयेते, लिङ्गादि तु
10 स्वद्योतकं निमित्तमपेक्षते, एवं च यथा यथा क्रमेणार्थानामुप-
स्थितिस्तथा तथा तन्निमित्तकार्याणामपीति संख्या-कारकाद्युप-
स्थितिसापेक्षविभक्त्यपेक्षया पूर्वोपस्थितलिङ्गनिमित्तः प्रत्ययो-
ऽन्तरङ्ग इति तदुत्पत्तिः पूर्वमेव स्यादिति स्त्रीत्वनिमित्त आप् पूर्वमेव
स्यात्, ङीस्तु जाति-करणपूर्वकत्वादिनिमित्तो विना समासं न
15 प्राप्त इत्यपि सति विभक्त्युत्पत्तेः पश्चात् समासेऽकारान्तत्वा-
भावः स्पष्ट एवेति ङीर्न स्यात्। अथ फलान्तरमप्याह–**तथा
माषान् वापिन्**, इत्यादिना, माषान् व्रीहीन् वा वपत्यभीक्ष्णं
साधु वेति माषादेर्जातित्वात् "अजातेः शीले" [५. १. १५४.]
इति णिनोऽभावात् "साधौ" [५. १. १५५.] इति
20 "व्रताभीक्ष्ण्ये" [५. १. ५७.] इति वा णिनि विभक्तिरहितेन
'वापिन्' इत्युत्तरपदेन सहानेन समासे 'माषवापिन् व्रीहिवापिन्'
इत्यत्र नकारस्योत्तरपदान्तत्वात् "वोत्तरपदान्त०" [२. ३.
७५.] इति णत्वं भवति, णस्य च "णषमसत्०" [२. १. ६०.]
इति परे कार्येऽसत्त्वात् नकारबुद्ध्या "स्त्रियां नृतो०" [२. ४. १.]
25 इति ङ्यां— **माषवापिणी, व्रीहिवापिणी** इति, ननु
विभक्त्यन्तं पदमिति 'वापिन्' इत्यस्य विभक्त्यन्तत्वाभावात्
कथमुत्तरपदत्वमिति चेत्? उच्यते–'उत्तरपदशब्दो हि समासस्य
चरमावयवे रूढः' इति पारिभाषिकोत्तपरदत्वमवसेयमिति ।
ननु 'माषवापिणी व्रीहिवापिणी' इत्येतयोर्विभक्त्यन्तकृदन्तेन
30 समासे कथं न सिद्धिरित्याशङ्कायामाह–**विभक्त्यन्तेने**त्यादिना,
इदमुक्तं भवति–लिङ्गबोधकप्रत्ययोऽन्तरङ्गः कारकविभक्तिस्तु तद-
पेक्षया बहिरङ्गेति प्रागुक्तमेव, अन्तरङ्गकार्यं पूर्वं प्रवर्तते, पश्चाद्
बहिरङ्गमिति प्रसिद्धमेव, विभक्त्यन्तेन सह समासे चिकीर्षिते
प्राग् लिङ्गबोधकप्रत्ययस्ततो विभक्तिस्ततः समासः, तथा च
35 'माष+शस् वापिन्+ङी+सि' इति दशायां 'माषवापिनी' इति
समासः स्यात्, अत्र ङीप्रत्ययस्यैवोत्तरपदान्तत्वं न तु नकार-
स्येति णत्वं न स्यादित्यर्थः, "रषृवर्णान्नो ण:०" [२. ३. ६३.]
इत्यनेन तु णत्वप्राप्तिरेव नास्ति निमित्त-निमित्तिनोरेकपदेऽभावा-
दिति । ननु पूर्वपदस्यापि विभक्त्यन्तत्वं माभिलप्यतामिति चेत्?
40 अत्राह–**पूर्वपदस्य च विभक्त्यन्तत्वनियमा**दिति–अय-
माशयः–चर्मक्रीतीत्यत्र 'चर्मन्+टा क्रीत' इति दशायां समासो
भवति, अत्र "ऐकार्थ्ये" [३. २. ८.] इति विभक्तिलोपेऽपि
*प्रत्ययलोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायते* इति न्यायेन
पूर्वस्य पदान्तत्वं, तेन च "नाम्नो नोऽनह्नः" [२. १. ९१.]
इति पदान्तस्थस्य नामनकारस्य [ 'चर्मन्'शब्दनकारस्य ] लोपो 45
भवति, यद्यत्र पदान्तत्वं न स्यात् तदा पदकार्यं नलो-
पादिकं न स्यादिति । किञ्च पूर्वपदात् कृत्प्रत्ययोत्पत्तेः पूर्वमेव
सामर्थ्योपपत्तये विभक्त्युत्पत्तिरपेक्षितैवेति तस्य विभक्त्यन्तत्वम-
वश्यं प्राप्तमित्यपि स्वीकरणीयम् । इदमिष्टवचनं परैर्ज्ञापकादिना
साध्यते, तच्च "उपपदमतिङ्" [ पाणि० २. २. १९. ] इति 50
सूत्रे महाभाष्ये तत्रत्ये कैयटे च स्पष्टम् । स्वमतेऽपि ज्ञापकं
कारक-ङस्युक्तविषये समुपपादयितुं शक्यते, ततश्च स्थाली-
पुलाकन्यायेन गतिविषयेऽपि ज्ञापकसिद्धत्वं सेत्स्यत्येव, तथाहि–
"ङस्युक्तं कृता" [२. १. ४८.] इति प्रकृतसूत्रे "कारकं
कृता" [२. १. ६८.] इति सूत्रे च 'कृता' इति कथनमेव 55
कारक-ङस्युक्तानां कृदन्तेन विभक्त्युत्पत्तेः पूर्वमेव समास इति
ज्ञापयितुमलम्, तथाहि–तत्र कृतेति किमर्थं, नाम्नेति हि पदम-
धिक्रियते, ङस्युक्तं नाम्ना समस्यत इत्युक्तेऽपीष्टस्थल एव समासः
स्यात्; न च 'धर्मो वो रक्षतु' इत्यत्र "पदाद् युग्विभक्त्यैक०"
[२. १. २१.] इति वसादेशः पदादिति ङसिना निर्दिष्टात् 60
परस्य विहित इति तत्र ङस्युक्तं पदं 'धर्मः' इति तस्य वसादेशेन
सह समासः स्यादिति वाच्यम्, तेन सह सामर्थ्याभावात्,
'वस्' इति हि कर्म क्रियया साकाङ्क्षं न कर्त्रा, तस्यापि क्रिययैव
सम्बन्धात्; न च 'रक्षतु' इत्यनेन समासः स्यादिति शङ्क्यम्,
तस्य नामत्वाभावात्; न च तर्हि कृतेति किम्? 'धर्मो वो 65
रक्षतु' इत्युक्तिरसंगता स्यादिति वाच्यम्, 'कृता' इत्यस्य फला-
न्तरानभिधानदशायां तादृशलेखस्य क्वचिदसामर्थ्येऽपि 'असूर्य-
पश्या' इत्यादौ बाहुलकादिना समासादिवदिहापि स्यादित्याशयाद्
वक्ष्यमाणाभिप्रायाच्च, एवं च त्याद्यन्तानां नामत्वाभावादगत्या
ङस्युक्तानां कृदन्तेनैव समासः स्यात्, एवं कारकाणामपीति 70
तत्र तत्र कृतं 'कृता' इति पदं विशिष्य कृदन्तत्वमात्रदशायामेव
समासलाभार्थमिति प्रकृतवचनांशद्वयं ज्ञापकसिद्धत्वेन स्वमतेऽपि
समर्थयितुं शक्यते; अंशद्वये च समर्थिते यथा स्थालीस्थाः
कतिपये तण्डुलाः पक्वा इति विज्ञाते सर्वे पक्वतयावधार्यन्ते,
तथात्र वचने द्वयोरंशयोः प्रमाणसिद्धत्वज्ञानेंऽशान्तरस्यापि 75
तत्सिद्धत्वानुमानं सुकरमिति ।

अथ पदकृत्यं पृच्छति–**ङस्युक्तमिति किमि**ति–कृद-
न्तानां स्वसमीपोच्चारितैरुपपदैरेव सह सामर्थ्यं, तानि चोपपदानि
प्रायो ङस्युक्तान्येवेति व्यर्थमेव तत् पदमव्यावर्तकत्वादिति प्रश्ना-
शयः । प्रत्युदाहरणमुखेनोत्तरयति–**कारकस्य गतिरि**ति–अत्र 80

"क्रियायां क्रियार्थायां तुम् णकच् भविष्यन्ती" [५. ३. १३.] इति सूत्रेण क्रियार्थायाः क्रियाया गतिरूपाया उपपदत्वेन तस्य कृता कारकशब्देन सह समासः स्यादिति गतिकारक इत्यादि-प्रयोगः स्यात्, सति तु ङस्युक्तग्रहणे तस्य सप्तम्युक्ततया समासो 5 न भवतीति भावः, एवं-**'कारकस्य व्रज्या'** इत्यस्यापि व्यावृत्तिरूहनीया, व्रजतेः "आस्यटिव्रज्०" [५. ३. ९७.] इति क्यपि-व्रज्या, **अलं कृत्वा, खलु कृत्वा** इति-"निषेधेऽलं-खल्वोः क्त्वा" [५. ४. ४४.] इति निषेधार्थ-योरलं-खल्वोरुपपदयोः कृगः क्त्वा भवति, अत्राप्युपपदस्य सप्त-10 म्यन्तत्वान्नानेन समासः। पुनः पृच्छति-**कृतेति किमिति**-विनापि तदुपादानं कृता सहैव ङस्युक्तस्य समासः स्यादिति प्रष्टुराशयः। उत्तरयति-**धर्मो वो रक्षतु** इति-अत्र पदात् परस्य वसादेशविधानाद् धर्मशब्दस्य ङस्युक्तत्वेन 'रक्षतु' इत्यनेन समासः स्यादिति भावः; न च 'नाम्ना' इत्यधिकृतत्वेना-15 ख्यातेन सह कथं समासप्राप्तिरिति शङ्क्यम्, 'कृता' इत्यस्या-भावे विनाप्येतत् सूत्रं ङस्युक्तानां समर्थेन नाम्ना समाससम्भवे सूत्रस्य वैयर्थ्यप्रसङ्गेन सूत्रारम्भसामर्थ्यादिह नाम्नाति नानुवर्तेत इति बोधनात्, तथा च येन केनापि ङस्युक्तपदसमर्थेन सह समासः स्यादिति प्रकृते आख्यातेनापि समासः स्यादेवेत्याश-20 यात्, एवं चाख्यातेन समासनिराकरणार्थमेव 'कृता' इति पदम्। किञ्च पूर्वसूत्रे गतिग्रहणं पृथक्कृत्य 'कृता' इति तत्रानु-कर्षणीयम्, वाक्यभेदेन च 'गतिः कृता समस्यते' इति व्याख्येयम्, तथा च 'नाम्ना' इति पदनिवृत्तिसत्त्वे स्याद्यन्त-त्वस्यापि परपदेनावश्यकतेति प्रतीयत इति गति-कारक-25 ङस्युक्तानामित्यादीष्टिः सर्वांशेन ज्ञापकसिद्धा भवति, इयमेव प्रक्रिया च पाणिनीयतन्त्रसम्मतापीति स्पष्टम् "उपपदमतिङ्" [पाणि० २. २. १९.] इति सूत्रे महाभाष्य-कैयटयोः, सर्वमेतन्मनसि निधाय 'कृतेति किम्? धर्मो वो रक्षतु' इति प्रोक्तमिति।

30 अथ सिंहावलोकनन्यायेन किञ्चिद् विचार्यते-'कुम्भकारः' इत्यत्र 'त्रिकश्चतुष्को वा नामार्थः, कर्मादयो विभक्त्यर्थाः' इति दर्शने कर्मार्थसम्पत्तये पूर्वं कुम्भपदाद् द्वितीया, ततः कृधातोरण्, यतः कर्मोपपदाद् धातोरण् भवति, तथा च 'कुम्भ+अम्-कार' इति दशायामनेन समासः। 'पञ्चको नामार्थः [स्याद्यन्तो 35 नामार्थः' इति दर्शने तु नाम्नैव कर्मार्थावगतेस्ततः पराद् धातो-रणि 'कार' इति जाते "कर्मणि कृतः" [२. २. ८३.] इति कुम्भशब्दात् षष्ठी, तथा च 'कुम्भ+अस्-कार' इति दशाया-मनेन समासः, 'शरलाव' इत्यादिष्वपि ज्ञेयम्, 'अन्यथाकारं भुङ्क्ते, अतिथिवेदं भोजयति' इत्यत्र तु "क्त्वातुमम्" [१. १. 40 ३५.] इत्यनेनामन्तस्याव्ययत्वात्, अव्ययस्य कर्मणि च तृन्नुदन्ताव्यय०" [२. २. ९०.] इति षष्ठीनिषेधादन्यथा-शब्दादतिथिशब्दाच्च द्वितीयया भवितव्यमिति, वस्तुतस्तु कर्मणो नामार्थत्वेऽपि द्योतकविभक्त्यपेक्षावश्यकीति नामार्थपञ्चकेऽपि पूर्वं द्वितीयया कर्मत्वे द्योतिते सति पश्चादण् भवेत्, नाम-विभक्त्योः पूर्वं बुद्धिकृतसम्बन्धकल्पने न किञ्चित् फलान्तरमी-45 क्षामहे॥ ३. १. ४९.॥

## तृतीयोक्तं वा। ३। १। ५०॥

त० प्र०—"दंशेस्तृतीयया" [५. ४. ७३.] इत्यारभ्य यत् तृतीयोक्तं नाम तत् कृता नाम्ना वा समस्यते, स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति। मूलकेनोपदंशं-मूलको-50 पदंशं भुङ्क्ते, दण्डेनोपघातं-दण्डोपघातं गाः कालयति, पार्श्वयोः पार्श्वाभ्यां वोपपीडं-पार्श्वोपपीडं शेते। वाशब्दो नित्यसमासनिवृत्त्यर्थः, तेनोत्तरेषु वाक्यमपि भवति॥ ५०॥

**श० म० न्यासानुसन्धानम्-तृतीयोक्तं वेति।** अत्र तृतीयापदं न पूर्वसूत्रवत् केवलं तृतीयान्ततया निर्दिष्टेन 55 नाम्ना यदुक्तं तत्परम्, अपि तु साक्षात् तृतीयाशब्देन तृतीया-विभक्त्यन्तेन च पदेन यदुक्तमुपपदं तत्परमिति व्याख्यानेन स्पष्टयति-**"दंशेस्तृतीयया"** इत्यादिना, अयमाशयः—"दंशेस्तृतीयया" [५. ४. ७३.] इत्यारभ्य "आनुलो-म्येऽन्वचा" [५. ४. ८८.] इति सूत्रपर्यन्तं यान्युपपदानि 60 कथितानि तेषां संग्राहकं 'तृतीयया' इति पदमिति।

अथ विग्रहोदाहरति-**मूलकेनोपदंशमि**ति विग्रहः, **मूलकोपदंशमि**ति समासः, "दंशेस्तृतीयया" [५. ४. ७३.] इति दंशधातोर्णमि-उपदंशमिति, ततोऽनेन समासे मूलकोपदंशमिति, अत्र मूलकस्य भुजिक्रियां प्रति करणत्वं, 65 दंशक्रियां प्रति च कर्मत्वम्, तथा च केन भुङ्क्ते? इत्याकाङ्क्षायां मूलकेनेति तृतीया करणे, किं कृत्वा भुङ्क्ते? उपदश्य भुङ्क्ते, किमु-पदश्य भुङ्क्ते? इत्याकाङ्क्षायां मूलकमिति कर्मणि द्वितीया, तथा चेह मूलकस्य कर्मत्वं करणत्वं च प्राप्तमिति किं कारणं करणत्व-शक्तिनिबन्धना तृतीयैव भवति, न कर्मत्वशक्तिनिबन्धना 70 द्वितीयेति चेत्? उच्यते-मूलकाद्युपदंशेः कर्मापि प्रधानस्य भुजेः करणमिति तृतीयैव भवति, प्रधानक्रियोपयुक्ते हि कारके गुणक्रिया न स्वानुरूपां विभक्तिमुत्पादयितुमलम् प्रधानत्वादेव, यथा-इष्यते ग्रामो गन्तुम्, पक्त्वा भुज्यते ओदन इति, यदा त्ववयवक्रियापेक्षया पूर्वकालविवक्षायां क्त्वा क्रियते तदा 75 क्रियाभेदात् सम्बन्धभेदे द्वितीयापि भवति-मूलकमुपदश्य भुङ्क्ते इति, किन्तु तृतीयान्तयोगाभावात् समासो न भवतीति।

हरिणाप्युक्तं वाक्यपदीये-

"प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।" इति,

5 अयमर्थः-यत्र द्रव्यस्य प्रधानाप्रधानक्रिययोः पृथक् शक्तिस्तत्र गुणाश्रया शक्तिः-अप्रधानभूता शक्तिः, प्रधानमनुरुध्यते-प्रधानानुरोधिनी भवति, किञ्च-तत्र प्रधानविषयैव शक्तिः प्रत्ययेनाभिधीयत इति, एवं चाख्यातक्रिया प्रधानं तदनुरोधेन कर्मत्वशक्तिः प्रत्ययेन नाभिधातुं शक्यत इति करणे तृतीयैव 10 भवतीति ।

**दण्डेनोपघातम्**इति विग्रहः, हेतौ करणे वा तृतीया, **दण्डोपघातं गाः कलयती**ति समासघटितं वाक्यं, तत्र दण्डोपघातमिति समासः, उपपूर्वाद् हन्तेः "हिंसार्थात्०" [ ५. ४. ७४. ] इति णमि "ञ्णिति" [ ४. ३. १००. ] 15 इति घातादेशे च 'उपघातम्' इति, गाः-धेनूः, कलयति-गमयति, "कलण् संख्यान-गत्योः" इति वचनात् । **पार्श्वयो**रित्यादि-पार्श्वयोरुपपीडं पार्श्वाभ्यामुपपीडमिति वा विग्रहः, **पार्श्वोपपीडं शेते** इति समासघटितं वाक्यं, तत्र पार्श्वोपपीडमिति समासः, अत्रोपपूर्वात् पीडधातोः "उपपीडरुध-20 कर्षस्तत्सप्तम्या" [ ५.४. ७९. ] इति णम् ।

ङस्युक्त-तृतीयोक्तादिभिः सहैकार्थ्यस्यावश्यकत्वेनैकार्थ्ये च समासस्यावश्यंभावात् तत्र समासो विकल्प्य विधातुं न शक्यत इति वाग्रहणमनर्थकमित्याशङ्कायामाह-**वाशब्दो नित्यसमासनिवृत्त्यर्थः** इति, अयमाशयः-ङस्युक्तादिपदसम्बन्धेन जाय-25 मानः कृत्प्रत्ययविधिरपि पदविधिरिति तत्र "समर्थः पदविधिः" [ ७. ४. ११२. ] इति परिभाषासूत्रेण तस्य समर्थाश्रितत्वमात्रं बोध्यते, तत्र सामर्थ्यं च व्यपेक्षैकार्थीभावभेदेन द्विविधमिति पूर्वत्र प्रदर्शितम्, तत्र ङस्युक्तादिभिरेकार्थीभाव एवेति न वक्तुं शक्यते मानाभावात्, अतः पूर्वसूत्रे नित्यमित्यनुवर्तितं, तेन 30 ङस्युक्तेन नित्यसमासो लब्ध इति तत्रैकार्थीभावो नित्य इत्यायाति, अत्र च वाग्रहणात् पक्षे व्यपेक्षासामर्थ्यस्यापि सूचनाद् वाक्यमपि लभ्यते । यद्यपि सर्वत्र समासप्रकरणे बहुलमित्यस्याधिकृतत्वाद् वाक्यस्यापि सत्ता प्रतीयते, तथापि पूर्वत्र नित्यग्रहणेन तत्सम्बद्धसमासेषु वाक्याभावो बोधित इति 35 तस्येहापि सम्बन्धो मा शायि, किन्तु पाक्षिकं वाक्यमपि प्रयुक्तं भवत्वेतदर्थं वाग्रहणस्यावश्यकत्वमिति ॥ ३. १. ५०. ॥

## नञ् । ३ । १ । ५१ ॥

**त० प्र०**—'नञ्' इत्येतन्नाम नाम्ना समस्यते, स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । न गौः-अगौः, अनुच्चैः, असः । निवर्त्यमानतद्भावश्चोत्तरपदार्थः पर्युदासे नञ्समासार्थः, 40 स चायं चतुर्धा-तत्सदृशः, तद्विरुद्धः, तदन्यः, तदभाव इति । अब्राह्मणः, अशुक्ल इति तत्सदृशः-क्षत्रियादिः पीतादिश्च प्रतीयते; अधर्मः, असित इति तद्विरोधी-पाप्मा कृष्णश्च प्रतीयते; अनग्निः, अवायुरित्यग्नि-वायुभ्यामन्यः प्रतीयते; अवचनम्, अवीक्षणमिति वचन-वीक्षणाभावः प्रतीयते । 45 नञ्स्योत्तरपदार्थप्राधान्येन तल्लिङ्गसंख्यत्वे सति कथं 'भवन्त्यनेके जलधेरिवोर्मयः' इत्यादौ 'अनेके' इति बहुवचनम्? असाधव एवेदृशाः शब्दाः । प्रसज्यप्रतिषेधे तु नञ् पदान्तरेण सम्बध्यत इत्युत्तरपदं वाक्यवत् स्वार्थ एव वर्तते, तत्रासामर्थ्येऽपि यथाभिधानं बाहुलकात् समासः-सूर्यमपि न 50 पश्यन्ति-असूर्यंपश्या राजदाराः, पुनर्न गीयन्ते-अपुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्ते-अश्राद्धभोजी, अलवणभोजी भिक्षुः; तथा कर्णवेष्टकाभ्यां न शोभते-अकार्णवेष्टकिकं मुखम्, "शोभमाने" [ ६. ४. १०२. ] इतीकण्; वत्सेभ्यो न हितोऽवत्सीयो गोधुक्, "तस्मै हिते" [ ७. १. ३५. ] 55 इतीयः, वधं नार्हतीति-अवध्यो ब्राह्मणः, "दण्डादेर्यः" [ ६. ४. १७८. ] इति यः, सन्तापाय न शक्तः-असांतापिकः सदुपदेशः, "तस्मै योगादेः शक्ते" [ ६. ४. ९४. ] इतीकण् । अन्य इत्येव-न विद्यन्ते मक्षिका यत्र सोऽमक्षिकाकः, मक्षिकाणामभावोऽमक्षिकमिति ॥ ५१ ॥ 60

**श० म० न्यासानुसन्धानम्-नञि**ति । सूत्रार्थः सुगमः । अथ विगृह्योदाहरति-**न गौरि**ति-विग्रहोऽयम्, **अगौरि**ति समासः, "गोस्तत्पुरुषात्" [ ७. १. १०५. ] इति प्राप्तोऽपि समासान्तः "नञ्तत्पुरुषात्" [ ७. ३. ७१. ] इति प्रतिषिध्यते, नञः "नञत्" [ ३. २. १२५. ] इत्यदादेशः, 65 **अनुच्चैरि**ति समासः, 'न उच्चैः' इति विग्रहः, "अन् स्वरे" [ ३. २. १२९. ] इति नञोऽनादेशः, **असः** इति समासः, तच्छब्दस्य पुंसि सौ 'सः' इति रूपम्, 'न सः' इति विग्रहः ।

'तत्पुरुषसंज्ञो भवति' इति यदुक्तं तदेव 'उत्तरपदार्थप्रधानस्तत्पुरुषः' इति प्राचीनपरिभाषास्मारणपूर्वकं प्रकृते स्पष्टयति- 70 **निवर्त्यमानतद्भावश्चोत्तरपदार्थः** इति-निवर्त्यमानः-तिरस्क्रियमाणः, तद्भावः-उत्तरपदस्य भावः प्रवृत्तिनिमित्तं यत्र तादृश उत्तरपदस्यार्थः, केनचिद् व्यामोहादिनाऽश्वादेर्यो गवादिभाव आशङ्कितः स निवर्त्यते यत्र तादृश उत्तरपदस्यार्थः, **पर्युदासे नञ्समार्थः** इति-निवृत्तिविशिष्टोत्तरपदार्थप्राधान्यं 75 नञ्समासस्यापीत्यर्थः । इदमुक्तं भवति-गवादिभिन्नेष्वश्वादिषु कुतश्चित् कारणाद् गोत्वादिकमारोपितं, तदनेन नञा निवर्त्यते, एवं च निवृत्तेरिह प्राधान्येऽपि तस्य धर्मिपारतन्त्र्येण भानमिति

निवर्त्यमानगोत्वविशिष्टो गौरेवेह समासार्थः, तथा च गोत्वावच्छिन्नप्रतियोगिताकभेदवान् तत्सदृशोऽश्वादिरिह प्रतीयते, सोऽपि नाश्वत्वेन किन्तु गोभिन्नत्वेनैवेति गोपदार्थस्यैव प्राधान्यमिति । **पर्युदासे नञ्समासार्थः** इत्यस्यायमाशयः-द्वौ हि नञर्थौ 5 मुख्यतः-पर्युदासः प्रसज्यप्रतिषेधश्च, तत्र प्रायः पर्युदास एव नञ् समस्यते; अन्यत्र तस्य क्रियासम्बन्धात् नाम्ना सामर्थ्याभावात्, क्वचित् प्रसज्यप्रतिषेधेऽपि गमकत्वात् समासस्याग्रे प्रतिपाद्यमानत्वात् 'प्रायः' इति ज्ञेयम्, तत्र यदा पर्युदासे नञ्समासो भवति तदैव पूर्वोक्तमुत्तरपदार्थप्राधान्यमिति स एव [ तादृश 10 उत्तरपदार्थ एव ] नञ्समासार्थ इति । निवर्त्यमानतद्भावस्योत्तरपदार्थस्य प्रतीतिरपि शब्दशक्तिस्वाभाव्यादनेकधा भवति, तदेव स्फुटयति-**स चायं चतुर्धेति**-सोऽयमुत्तरपदार्थः पुनश्चतुर्विधो भवतीत्यर्थः । तानेव प्रकारान् दर्शयति-**तत्सदृश** इत्यादिना । तथा च क्व कीदृशोऽर्थः प्रतीयत इति विभज्य 15 प्राहयति-**अब्राह्मणः, अशुक्ल** इति-अत्रारोपितब्राह्मणत्ववान् तत्सदृशः क्षत्रियादिः, आरोपितशुक्लत्ववान् तत्सदृशः पीतादिश्च प्रतीयते, तदेवाह-**तत्सदृशः क्षत्रियादिः पीतादिश्च प्रतीयते** इति, न चैवमन्यपदार्थप्राधान्यमेवार्थत आपततीति वाच्यम्, अन्यपदार्थस्यारोपितप्रतियोगिधर्मवत्त्वेन भावात् तस्य 20 प्राधान्याभावात्, विवेचयिष्यते चैतदग्रे । अथ तद्विरुद्ध इत्यस्योदाहरणमाह-**अधर्मः, असितः,** इति-अत्र हि न सादृश्यप्रतीतिर्युक्ता धर्माधर्मयोः कथमपि सादृश्यस्याभावात्, ततश्च विरोध एव प्रतीयत इत्याह-**तद्विरोधी पाप्मा**-पापं **कृष्णश्च प्रतीयते** इति । अथ तदन्य इत्यस्योदाहरणमाह- 25 **अनग्निः, अवायुरि**ति-अनयोरपि सादृश्य-विरोधयोः प्रतीतिर्न भवति, नहि भवत्यग्निभिन्नजलादावग्निसादृश्यं, तद्भिन्ने तृणादौ च तद्विरोधित्वं, तथा च पूर्वोक्ताभ्यामर्थाभ्यामन्य एवार्थो भेदरूप इह प्रतीयत इत्याह-**अग्नि-वायुभ्यामन्य** इति । एवं क्रियावाचकपदेन नञ्समासे एते त्रयोऽप्यर्था न प्रतीयन्ते, 30 किन्तु केवलमभाव एवेत्याह-**अवचनम्, अवीक्षणमि**ति-अत्र हि न वचनसदृशी निरीक्षणादिक्रिया प्रतीयते, किन्तु केवलं वचनाद्यभाव एवेत्याह-**अभावः प्रतीयते** इति, एवं तर्हि कथमुत्तरपदार्थप्राधान्यं, यावता पूर्वपदस्य नञ एवार्थो भेदोऽभावश्च प्रतीयत इति चेत्? सत्यम्-स्वाभावविशिष्टं वचनं 35 स्वभेदविशिष्टो वायुरित्यादिरूप एव शाब्दो बोधः, वचनाभावो वायुभेद इत्यादिश्चार्थः पार्ष्णिको बोध इत्यङ्गीकारात् पूर्वपदार्थप्राधान्याक्षतेः ।

एवं चोत्तरपदार्थप्राधान्ये स्थापिते तदनुकूलस्यैव लिङ्गवचनादेर्नञ्समासे औचित्यमिति क्वचित् तदभावस्य कविभिः 40 प्रयुक्तमानत्वं कथं सङ्गतिमङ्गतीत्याशङ्क्य समाधातुं प्रवर्तते-**नन्वस्योत्तरपदार्थप्राधान्येनेत्यादि-अस्य** नञ्समासस्य, **तल्लिङ्ग-संख्यत्वे** तत्पुरुषे परवल्लिङ्गताया उक्तत्वात् संख्यायाश्च प्रधानानुरोधिनीत्वादुत्तरपदार्थानुकूललिङ्गसंख्यासद्भावे सति 'भवन्त्यनेके जलधेरिवोर्मयः' इत्यादौ कविप्रयोगे 'अनेके' इति बहुवचनं कथमित्यन्वयः, एकशब्दस्यैकत्वसंख्याव- 45 त्वेन तत्प्रधानस्यानेकशब्दस्याप्येकत्वसंख्यावत्त्वादाशङ्का, मुख्यं समाधानमाह-**असाधव एवे**ति-'कवीनां निरङ्कुशत्वेन छन्दोवत् कुर्वन्ति' इत्यादिरूपेण, एकशब्दस्य ।

"एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे संख्यायां च निगद्यते ॥" 50

इत्याद्युक्तरीत्यानेकार्थत्वेन संख्यातिरिक्ते प्रधानाद्यर्थेऽत्र प्रयोग इत्यादिसमाधानानि समाधानाभासानीति तदभिप्रायः, [ एकत्व ] संख्याया एव प्रतिषिध्यमानत्वावगमात् प्रधानाद्यर्थाप्रतीतेः ।

विचारितश्चायमर्थः "नञ्" [ पाणि० सू० २. २. ६. ] 55 इति सूत्रे महाभाष्यकैयटादिषु विस्तरशः, स च विचारः स्मर्तेऽप्युपयोगीति शिष्यबुद्धिवैशद्याय प्रदर्श्यते, तथाहि- "किंप्रधानोऽयं समासः? उत्तरपदार्थप्रधानः ।" इति भाष्यम् । अत्र कैयटः- "इहाब्राह्मणादिना क्षत्रियादेरभिधानं लोके दृश्यते, तत्र प्रक्रियागतगुणदोषनिरूपणाय प्रश्नः- किंप्रधान 60 इति । त्रयश्चात्र पक्षा अन्यपदार्थ-पूर्वपदोत्तरपदार्थप्राधान्यलक्षणाः सम्भवन्ति, यदा जातौ ब्राह्मणशब्दो वर्तते- अविद्यमानं ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिः, तदाऽन्यपदार्थः प्रधानम्; यदा त्वसत्सामान्यवृत्तिर्नञ् ब्राह्मणादिभिर्विशेष्यते- ब्राह्मणत्वेनाऽसन्, अन्यथा तु दुरुपदेशान्मिथ्याज्ञानाद् 65 वा ब्राह्मणशब्दः क्षत्रिये प्रयुज्यते, ब्राह्मणपदार्थनिवृत्तिश्च स्वाभाविकी नञा द्योत्यते तदोत्तरपदार्थः प्रधानम्; यद्यपीहार्थो न निर्दिष्टस्तथाप्यभिधानशक्तिस्वाभाव्याल्लभ्यते, द्वन्द्ववत् तु स्वतन्त्रपदार्थद्वयानवगमादुभयपदार्थप्राधान्यं नाशङ्कितम्, एवं पक्षत्रयसम्भवेऽल्पप्रतिविधेयपक्षमाश्रयितुमाह- उत्तरपदार्थप्रधान 70 इति" । अयमाशयः- ब्राह्मणभिन्नस्य क्षत्रियादेः प्रतीत्याऽन्यपदार्थप्राधान्यम्, ब्राह्मणत्वेनासन् [ क्षत्रियादिः ] इति प्रतीत्या नञर्थप्राधान्यात् पूर्वपदार्थप्राधान्यम्; यदि च क्वचिद्ब्राह्मणेऽपि कुतश्चित् कारणाद् ब्राह्मणत्वभ्रमस्तदा ब्राह्मणपदार्थो ब्राह्मण्यं, तस्य स्वाभाविकी निवृत्तिर्मुख्यब्राह्मण्याभावो नञा द्योत्यते इति 75 फलत आरोपितब्राह्मणवत्ताद्योतको नञ् भवतीत्युत्तरपदार्थस्य प्राधान्यम्, तत्राद्ययोः पक्षयोर्बहुतरदोषस्य समाधेयत्वप्रसङ्गादल्पतरसमाधानयोग्यदोषयुक्तमुत्तरपदार्थप्राधान्यपक्षमेव सूचीकटाहन्यायेनाहेति । [ पुनराक्षिपति- ] "यद्युत्तरपदार्थप्रधानः,

'अब्राह्मणमानय' इत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति" इति, [समाधत्ते-] "अन्यपदार्थप्रधानस्तर्हि भविष्यति" इति, [पुनराक्षिपति-] "यद्यन्यपदार्थप्रधानः अवर्षा हेमन्तः' इति हेमन्तस्य यल्लिङ्गं वचनं च तत् समासस्यापि प्राप्नोति", 5 [समाधत्ते-] "पूर्वपदार्थप्रधानस्तर्हि भविष्यति।" इति भाष्यम्। अत्र कैयटः-'ब्राह्मणमात्रस्येति, इहानियतगुणस्य [विशेष्यस्य] गुणविशेषप्रतिपादनाय विशेषणं प्रवर्तते न तदुपघाताय, यदि च नञा ब्राह्मणार्थः प्रतिषिध्यते तदा सर्वात्मना तदर्थस्याभावात् कथं प्राधान्यं स्यात्, तस्मात् तद्गतविशेषावचनान्नञनर्थक एवेति 10 ब्राह्मणाब्राह्मणशब्दयोः पर्यायता प्रसज्येत, अन्वाख्यानाद्धि साधुत्वमेवम्भूतस्यार्थवदनर्थकावयवस्य समासस्य स्यात्" इति। अयमाशयः-यद्युत्तरपदार्थप्राधान्यमिष्यते तर्हि नञा न किमपि ब्राह्मणे प्रतिपाद्यते, अपि तु स्वार्थप्रतिषेधरूपाभावविशिष्टः स एव बोध्यत इति विशेषाप्रतिपादनान्नञोऽनर्थकत्वमिति ब्राह्मणा- 15 ब्राह्मणशब्दयोः पर्यायतैव शास्त्रप्रामाण्यादवगम्येत, ततश्च 'अब्राह्मणमानय' इत्युक्ते ब्राह्मणस्यैवानयनं स्यादिति भाष्याशय इति, एतद्दोषपरिहाराय विचारान्तरप्रवृत्त्यर्थं च भाष्यकृताऽन्यपदार्थप्राधान्यमाश्रित्य समाहितम्, तत्र चान्यपदार्थानुसारेणैव लिङ्गवचनता युक्तेति 'अवर्षाः हेमन्तः' इति प्रयोगेऽवर्षाशब्दे 20 स्त्रीत्वं बहुवचनं च न युक्तमपि तु हेमन्तापेक्षं पुंस्त्वमेकवचनं च स्यादिति नान्यपदार्थस्वीकारे निस्तारः। अत्र 'अवर्षाः' इति प्रतीकमादाय कैयटः-"न चात्र परवल्लिङ्गतास्ति यस्मान्न्यासभेदेन द्वन्द्वैकदेशिसमासयोरेव सोक्ता, वचनदोषस्तु यथान्यासेऽप्यपरिहार्य एव, किञ्च नञ्समासस्यान्यपदार्थप्रधानत्व आश्रीयमाणे- 25 ऽपवादत्वादनेन बहुव्रीहेर्बाधनादब्राह्मको देश इत्यादि न सिद्ध्यति- 'असः, असर्वस्मै' इति चोत्तरपदार्थस्योपसर्जनत्वात् त्यदादि, सर्वनामकार्यप्रसङ्गः, "सर्वादीनि सर्वनामानि" [पाणि० सू० १. १. २७.] इत्यत्र संज्ञोपसर्जनस्य प्रतिषेधाभिधानात्।" इति। अयमाशयः-तत्पुरुषे परवल्लिङ्गतायाः कथञ्चित् सम्भवेन 30 'अवर्षाः' इत्यस्य स्त्रीत्वप्राप्तावपि वचनदोषोऽपरिहरणीय एव, किञ्च नञ्समासेऽयमेव स्यादिति 'अब्राह्मणको देशः' इति प्रयोगो न स्यात्, 'न सः-असः, न सर्वः-असर्वः, तस्मै-असर्वस्मै' इत्यादौ 'अत्व-सत्व-स्मै' इत्यादेशकार्याणि च न स्युः संज्ञोपसर्जनयोः सर्वादित्वप्रतिषेधादिति। इत्थम् 'अवर्षाः हेमन्तः' इत्यस्यासिद्धि- 35 रिति तत्राह भाष्यकृत्-पूर्वपदार्थप्रधानस्तर्हि भविष्यतीति, एवं च प्रकृतदोषसमाधानेऽपि दोषान्तरं शङ्कते- "यदि पूर्वपदार्थप्रधानः, अव्ययसंज्ञा तर्हि प्राप्नोति- अव्ययं ह्यस्य पूर्वपदमिति" इति, [समाधत्ते-] "नैष दोषः, पाठेनाप्यव्ययसंज्ञा क्रियते, न च समासस्तत्र पठ्यते" इति भाष्यम्, अयमाशयः-न केवलमलिङ्गमसंख्यमव्ययमपि तु तथात्वे सति स्वरादिपठितत्वम्, 45 तथा च नञ्समासस्य स्वरादिपाठाभावान्नाव्ययत्वप्रसङ्ग इति, [पुनराक्षिपति-] "यद्यपि नञ्समासो न तत्र पठ्यते, नञ् तु पठ्यते, पाठेनाप्यव्ययसंज्ञायां सत्यामभिधेयवल्लिङ्गवचनानि भवन्ति, यश्चेहार्थोऽभिधीयते न तस्य लिङ्गसंख्याभ्यां योगोऽस्ति।" इति भाष्यम्, अयमाशयः-पाठो नास्तीति यदुच्यते, 45 तस्य कोऽर्थः? नञ्समासस्य पाठाभावेऽपि नञः पाठसत्त्वेन तस्याव्ययत्वादलिङ्गसंख्यत्वाच्च तत्प्रधानसमासस्यापि लिङ्गसंख्यादि न स्यादिति हि मयाक्षिप्तमिति। तत्र समाधानमाह-"नेदं वाचनिकमलिङ्गताऽसंख्यता वा, किं तर्हि स्वाभाविकमेतत्, तद्यथा-समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते- 50 ऽपरे न, न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्, कश्चिद् वाऽनर्थक इति कृत्वा सर्वैरनर्थकैः, तत्र किमस्माभिः शक्यं कर्तुं, यन्नञः प्राक् समासाल्लिङ्गसंख्याभ्यां योगो नास्ति समासे च भवति, स्वाभाविकमेतत्। अथवाऽऽश्रयतो लिङ्गवचनानि भवन्ति, गुणवचनानां हि शब्दानामाश्रयतो 55 लिङ्गवचनानि भवन्ति, तद्यथा 'शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लाः कम्बलाः' इति, यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवति, एवं च यदसौ द्रव्यं श्रितो भवति समासस्तस्य यल्लिङ्गं वचनं च तत् समासस्यापि भविष्यति।" इति भाष्यम्। अस्यायमाशयः- 60 शब्दशक्तिस्वभाव एवायं, यन्नञ् वाक्ये लिङ्गसंख्याद्यनन्वय्यर्थमाह, समासे सति तु लिङ्गसंख्यान्वयिनमर्थमिति न नञ्समासस्याव्ययवदलिङ्गत्वमसंख्यत्वं च स्यादिति। अत्र पक्षेऽपि दोषसद्भावः-पूर्वपदार्थप्राधान्ये स्वीकृतेऽर्थाभावेऽव्ययीभावसमासमयं बाधेत, तथा चामक्षिकमित्यादि न स्यात्, अर्थाभावे 65 समासविधानं तु निर्मक्षिकमित्यादौ चरितार्थम्, किञ्च 'असः, असर्वस्मै' इत्याद्यसिद्धिरिति मनसि कृत्वा पुनराह भाष्यकृत्- "अथवा पुनरस्तूत्तरपदार्थप्रधानः" इति, आक्षेप्ता पूर्वोक्तं दोषं स्मारयति-"ननु चोक्तम्-'अब्राह्मणमानय' इत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोतीति" इति, समाधत्ते-"नैष दोषः, इदं 70 तावत् प्रष्टव्यः-अथेह राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं कुतो न भवति? अस्त्यत्र विशेषः-राजा विशेषकः प्रयुज्यते, तेन विशिष्टस्यानयनं भवति, इहापि तर्हि नञ् विशेषकः प्रयुज्यते, तेन नञ्विशिष्टस्यानयनं भविष्यति" इति, अयमाशयः-राजपुरुष इत्यादिसमासे पुरुषस्य प्राधान्येऽपि 75 न यः कश्चित् पुरुषस्ततः प्रतीयते, किन्तु राजविशिष्ट एव, एवमिहापि ब्राह्मणस्य प्राधान्येऽप्यारोपितब्राह्मण्यविशिष्टस्य क्षत्रियादेरेवानयनं भवति, न केवलं ब्राह्मणस्येति। पुनः पृच्छति- "कः पुनरसौ?" इति, प्रत्याह-"निवृत्तपदार्थकः" इति,

भावाभावयोर्विरोधादभावस्यैव च नञर्थत्वेन तस्य भावरूपेण ब्राह्मणपदार्थेन सह कीदृशो विशेष्यविशेषणभाव इति कोऽसौ नञ्विशिष्ट उत्तरपदार्थ इति प्रश्नाशयः; निवृत्तः पदार्थो मुख्यं ब्राह्मण्यं यस्य तादृशः, सादृश्यादिनाऽध्यारोपितब्राह्मण्यविशिष्टः क्षत्रियादिरेवेह नञ्विशिष्ट उत्तरपदार्थ इति समाधानाशयः । तदुक्तं हरिणापि–

"नञ्समासे चापरस्य, प्राधान्यात् सर्वनामता ।
आरोपितत्वं च नञ्द्योत्यं, नह्यसोऽप्यतिसर्ववत् ॥ " इति ।

अयमर्थः–नञ्समासे उत्तरपदार्थस्य प्राधान्यस्वीकारादेव नञ्समासे 'असः' इत्यादौ सर्वादित्वकार्यं भवति, अन्यथाऽतिसर्वशब्दस्येव सर्वादिकार्यमस्य न स्यादिति । अग्रे च पदार्थनिवृत्तिः स्वाभाविकी नञ्प्रयोज्या वेति विचारे नञो द्योतकत्वं स्थिरीकर्तुमधिकरणमारचयति–"यदा पुनरस्यार्थो निवर्तते, किं स्वाभाविकी निवृत्तिः ? आहोस्विद् वाचनिकी ?, किं चातः ?, यदि स्वाभाविकी, किं नञ् प्रयुज्यमानः करोति ?, अथ वाचनिकी, तद् वक्तव्यं–नञ् प्रयुज्यमानः पदार्थं निवर्तयतीति, एवं तर्हि स्वाभाविकी निवृत्तिः, ननु चोक्तं–किं नञ् प्रयुज्यमानः करोतीति, नञ् प्रयुज्यमानः पदार्थं निवर्तयति, कथम् ? कीलप्रतिकीलवत्, तद्यथा–कील आहन्यमानः प्रतिकीलं निर्हन्ति, यद्येतन्नञो माहात्म्यं स्यात्–न जातुचिद् राजानो हस्त्यश्वं बिभृयुः नेत्येव राजानो ब्रूयुः । एवं तर्हि स्वाभाविकी निवृत्तिः, ननु चोक्तं–किं नञ् प्रयुज्यमानः करोतीति । नञ्निमित्ता तूपलब्धिः, तद्यथा समन्धकारे द्रव्याणां समवस्थितानां प्रदीपनिमित्तं दर्शनं, न च तेषां प्रदीपो निर्वर्तको भवति" इति, अयमाशयः–'नञ्समासे' उत्तरपदस्य मुख्यार्थत्यागपूर्वकमारोपितप्रवृत्तिनिमित्तकार्थबोधकता 'किं' स्वाभाविकी, किं वा वचनेन नञेवारोपितत्वस्य वाचकः सन् मुख्यपदार्थप्रत्ययं निवर्तयति ?, तत्र प्रथमे पक्षे स्वीकृते नञः प्रयोगो व्यर्थः स्यात्, आरादादिशब्दो दूरादूरार्थाविव ब्राह्मणशब्दोऽपि ब्राह्मणाब्राह्मणार्थौ बोधयन् क्षत्रियादिकमपि बोधयिष्यति, वृथा नञः प्रयोगः; द्वितीयपक्षाङ्गीकारे च तादृशमपूर्ववचनं कर्तव्यमिति; तत्र प्रथमपक्ष एव सम्मतः, तत्र नञ्प्रयोगस्तु कीलकप्रतिकीलकवद् भवति, यथा कीलके आहन्यमाने तत्र स्थितोऽल्पः कीलको व्यापारान्तरमन्तरैव निर्हन्यते तथैव नञः प्रसिद्धार्थशत्त्यनुद्बोधपूर्वकमर्थान्तरशत्त्युद्बोधकत्वं स्वभावः, पदार्थान्तरशत्त्युद्बोधे च सति प्रयुज्यमानपदार्थशक्तिर्निवर्तेत इति स्वभावः, एवं च भाष्याशयमजानानेनाक्षेप्त्रा यदि नञः पदार्थनिवर्तकत्वं स्वभावस्तर्हि राज्ञां हस्त्यादिसैन्यसंग्रहो व्यर्थ एव, नकारोच्चारणेनैव प्रतिपक्षिणो निवर्तेरन्निति सोपालम्भमुक्ते प्रदीपदृष्टान्तेन स्वाभिप्रायमाह, तस्यायमाशयः–यथा प्रदीपप्रकाशेऽर्थाः प्रतिभासन्ते, न तु प्रदीपोऽर्थजनकः कथ्यते, तथा नञ्सत्त्वे पदार्थनिवृत्तिर्ज्ञायते, न तु नञ् पदार्थनिवर्तक इति । एवं च निवृत्तपदार्थकमुत्तरपदं प्रधानमिति सिद्धान्तिते पुनराक्षिपति–"यदि पुनरयं निवृत्तपदार्थकः, ब्राह्मणशब्दः किमर्थं प्रयुज्यते ?" इति, "एवं यथा विज्ञायेत–अस्य पदार्थो निवृत्त इति, नेत्युक्ते सन्देहः स्यात्–कस्य पदार्थो निवर्तेत इति, तत्रासन्देहार्थो ब्राह्मणशब्दः प्रयुज्यते, एवं चैतत्" इति समाधानभाष्यम् । 'अर्थप्रत्ययार्थमेव शब्दः प्रयुज्यते, स चेदर्थो नञा निवर्त्स्यते किमर्थं तादृशशब्दस्य प्रयोगः क्रियते' इत्याशङ्का, 'यद्यपि निवृत्तपदार्थो ब्राह्मणशब्दो नार्थं प्रत्याययति, तथापि प्रतिषेधविषयप्रदर्शनाय बुद्ध्या ब्राह्मण्यं क्षत्रियादावारोप्य तस्य [ ब्राह्मण्यस्य ] मुख्यसत्ताविरहप्रतिपादनाय नञ्सहितस्य तस्य प्रयोगः सार्थकः' इति समाधानाशयः । इदमत्राकूतम्–नञो द्योतकत्वेन स्वसमभिव्याहृतपदशत्त्युद्बोधकत्वं वाच्यं, तच्च पदान्तरप्रयोगं विना न सम्भवतीति तत्पदप्रयोग आवश्यकः । समाधानान्तरमप्याह–"अथवा सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते–ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति,

"तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् ।
तपः-श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥"

तथा–'गौरः शुच्याचारः पिङ्गलकपिलकेशः' इत्येतानप्यभ्यन्तरात् ब्राह्मणे गुणान् कुर्वन्ति । समुदाये वृत्ताः शब्दा अवयवेऽपि वर्तन्ते, तद्यथा–पूर्वे पञ्चालाः, तैलं भुक्तम्, घृतं भुक्तम्, शुक्लो नीलः कपिलः कृष्णः' इति, एवं समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेष्वपि प्रवर्तते जातिहीने गुणहीने च, गुणहीने तावत् 'अब्राह्मणोऽयं यस्तिष्ठन् मूत्रयति' 'अब्राह्मणोऽयं यस्तिष्ठन् भक्षयति' जातिहीने सन्देहाद्दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते, संदेहात् तावत्–गौरं शुच्याचारं कपिलकेशं च दृष्ट्वाध्यवस्यति–ब्राह्मणोऽयमिति, तत उपलभते–नायं ब्राह्मणः—अब्राह्मणोऽयमिति, तत्र सन्देहाद् ब्राह्मणशब्दो वर्तते, जातिकृता चार्थस्य निवृत्तिः, दुरुपदेशाच्च, दुरुपदिष्टमस्य भवति–अमुष्मिन्नवकाशे ब्राह्मणस्तमानयेति, स तत्र गत्वा यं पश्यति तमध्यवस्यति–ब्राह्मणोऽयमिति, ततश्च पश्चादुपलभते–नायं ब्राह्मणः–अब्राह्मणोऽयमिति, तत्र दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते, जातिकृता चार्थस्य निवृत्तिः, आतश्च सन्देहाद्दुरुपदेशाद् वा, न ह्ययं कालं माषराशिवर्णमापणे आसीनं दृष्ट्वाऽध्यवस्यति–ब्राह्मणोऽयमिति निर्ज्ञातं तस्य भवति ।" भाष्यम् । अयमाशयः–'अब्राह्मणः' इत्यादौ न ब्राह्मण्यस्य सर्वथा सर्वथा निवृत्तिः, ब्राह्मणशब्दस्य गुणसमुदाये शक्तत्वात् केषांचिद् ब्राह्मणगुणानां नञा निवृत्तावपि केषांचित् तत्र प्रतीयमानत्वेन तत्र ब्राह्मण-

शब्दप्रयोगं आवश्यकः । 'तपः श्रुतं च' इत्यादिस्मृत्यनुसारेण ब्राह्मण्यस्य कारकत्रयनिरूपणात्, एकेन द्वाभ्यां वा हीनेऽपि तस्य प्रयोगेण गुणकारणाद् ब्राह्मणार्थनिवृत्तिः, जातिकारणाच्च प्रवृत्तिः, क्वचिद् गुणकारणात् प्रवृत्तिर्जातिकारणान्निवृत्तिः, 5 क्वचित् सन्देहाद् दुरुपदेशाद् वा प्रवृत्तिर्जातिकारणान्निवृत्तिरित्यादिलौकिकव्यवहारदर्शनात् प्रतीयते, तथा च 'अब्राह्मणः' इति प्रयोगे नञा गुणसमुदायैकदेश एव निवर्त्यते, यश्च न निवर्तते तत्प्रतीतये ब्राह्मणशब्दप्रयोग आवश्यक इति समुदितार्थः, इत्थमुत्तरपदार्थप्राधान्यं निवृत्तपदार्थकत्वं चोत्तरपदस्येति द्वयमपि 10 सुनिरूपितं भवति । उत्तरपदार्थप्राधान्यं पुनरपि द्रढयन्नाह– "इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये सति संगृहीतं भवति, किम्? अनेकमिति, किमत्र संगृहीतम्? एकवचनम्; कथं पुनरेकस्य प्रतिषेधे द्विबहूनां सम्प्रत्ययः स्यात्? प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति, तद्यथा–आसय शायय भोजय 15 अनेकमिति ।" भाष्यम् । अयमाशयः–उत्तरपदार्थप्राधान्यादेवानेकशब्दस्यैकत्वबोधकत्वात् तत्रैकवचनं सिध्यति, पूर्वपदार्थप्राधान्येऽन्यपदार्थप्रधान्ये च तन्न स्यात्, अत्र शङ्का–अनेकशब्दो बहूनां वाचक एकस्य वा?, तत्र नाद्यः–बहुवचनप्रयोगापत्तेः, नान्त्यः–तथा सत्येकत्वनिवृत्तिमात्रमस्यार्थः स्यात्, तथा चानेको 20 जन आगत इत्युक्ते 'एको नागतः' इत्येव प्रतीतिः स्यात्, न च तथा प्रतीयते, तत्र यद्यपि प्रसज्यप्रतिषेधस्तथापि 'अनेकम्' इत्यादिसूत्रप्रयोगात् प्रसज्यप्रतिषेधेऽपि समासः, एवं चोभयथा दोषसद्भावात् कथमनेकमिति प्रयोगः, तत उत्तरम्–अनेकमित्यादौ प्रसज्यप्रतिषेधः, तत्र च प्रसक्तिर्गुणक्रिययोः, तयोश्च 25 निराश्रययोरसम्भवादनियततद्द्रव्याक्षेपे सत्येकप्रतिषेधाद् बहूनां प्रतीतिर्भवति, यदि चेह पर्युदास एवेत्याश्रीयते तदा द्व्यादिष्वेकत्वमारोप्य प्रतिषिध्यते, यथा क्षत्रियादौ ब्राह्मणत्वम्, ततो यथा–अब्राह्मणः क्षत्रियादिरुच्यते तथाऽनेकशब्देन संख्यान्तरयुक्तः, द्वित्र्यादिनिर्णयस्तु तात्पर्यवशात्, आरोपि- 30 तैकत्ववत्त्वेनैव बोधाच्चैकवचनसिद्धिः; एवं च 'अनेके' इति बहुवचनमसाध्वेवेति यदुक्तं तदुचितमेव । पुनराक्षिपति– "यद्यपि तावदत्रैतच्छक्यते वक्तुं–यत्र क्रियागुणौ प्रसज्येते, यत्र खलु न प्रसज्येते तत्र कथम्–अनेकं तिष्ठतीति?" इति, समाधत्ते–"भवति चैवंजातीयकानामप्येकस्य प्रतिषेधेन बहूनां 35 सम्प्रत्ययः, तद्यथा–'न न एकं प्रियम्, न न एकं सुखम्" इति, अयमाशयः–"यत्र पूर्वं गुण-क्रिये प्रसज्य प्रतिषिध्येते तत्र पूर्वोक्तरीत्या बहूनां प्रतीतिसद्भावेऽपि यत्र पूर्वमेकं निषिध्य पश्चात् क्रिया विधीयते, यथा–अनेकं तिष्ठतीत्यादौ, तत्र पूर्वं क्रियोपस्थित्यभावात् तदाश्रयानियतसंख्यद्रव्याक्षेपाभावेनैको न 40 तिष्ठतीत्येव बोधपर्यवसानमिति कथं बहूनां सम्प्रत्ययः? मैवम्–



धात्वर्थेन कारकस्यावश्यमाक्षेपात्, एकप्रतिषेधादेव तत्रापि बहूनां सम्प्रत्ययात्, यथा– नः एकं न प्रियमित्युक्ते एकप्रतिषेधसामर्थ्यादेव संख्यान्तरयुक्तवस्तुप्रतीतिः, अन्यथा न प्रियमित्येव वाच्यं स्यात्, किमेकशब्दोच्चारणेन कृतं स्यात्, ततश्च यदि वाक्येऽपि सामर्थ्यात् संख्यान्तरप्रतीतिर्जायते, तत्र वाक्यविल- 45 क्षणधर्मप्रादुर्भावहेतौ समासे सा प्रतीतिर्भविष्यतीत्यत्र कानुपपत्तिः? इत्थमवसित उत्तरपदार्थप्राधान्यविचारः, प्रकृतमनुसरामः ।

एष च नञ्समासः क्वचित् प्रसज्यप्रतिषेधेऽपि भवति तत्र विशेषः वक्तुमुपक्रमते–**प्रसज्यप्रतिषेधे त्वि**ति–तुशब्देन पूर्वपक्षाद् विशेषः प्रतिपिपादयिषितः सूच्यते, प्रसज्यप्रतिषेधे 50 हि प्रसज्यमानेन क्रियादिनैव नञः सम्बन्धः, तेन च न समासः; समस्यमानेन च न नञः सम्बन्ध इति न तदर्थनिवृत्तिरिति नञा सह समस्यमानमुत्तरपदं वाक्य इव समासे सत्यपि स्वार्थमेवाभिधत्ते न तु पदार्थमारोपितस्वार्थविशिष्टम् । ननु प्रसज्यप्रतिषेधे यद्युत्तरपदार्थेन सह न सामर्थ्यं तर्हि कथं समास इति 55 चेत्? अत्राह–**तत्रासामर्थ्येऽपी**ति, **यथाभिधान**मिति कथनं शब्दस्वाभाव्यद्योतनाय, यत्रासामर्थ्येऽपि सता समासेन प्रतिपिपादयिषितार्थप्रत्ययो भवति तत्र समासो भवति, स च बाहुलकेन समाधेय इति भावः, उदाहरति–**सूर्यमपी**त्यादिना, सूर्यमपि न पश्यन्तीति विग्रहः, **असूर्यम्पश्याः** इति समासः, 60 "असूर्योग्राद् दृशः" [ ५. १. १२६. ] इति असूर्यात् परात् दृशेः खशि "श्नौति०" [ ४. २. १०८. ] इति दृशेः पश्यादेशे "खित्यनव्यया०" [ ३. २. १११. ] इति **पूर्वस्य** मागमे च 'असूर्यम्पश्य' इति, **राजदाराः** इति समासविशेष्यम्, अपरिहार्यदर्शनो हि सूर्यः, तमपि न पश्यन्ति, किमुत परपुरुष- 65 मिति परपुरुषदर्शनाभाव एव तात्पर्यं, तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यते, अतो यदा सूर्यदर्शनाभावमात्रं सूर्येतरचन्द्रादिदर्शनं वा विवक्षितं तदा नायं प्रयोगः, नापि कृत्प्रत्यय इत्याहुर्न्यासकारादयः, 'असूर्यम्पश्या' इत्यादेः सूर्यकर्मकदर्शनाभाववतीति शाब्दोऽर्थः । **न पुनर्गीयन्त** इति विग्रहः, 70 **अपुनर्गेयाः** इति समासः, कर्मणि यः, **श्लोकाः** इति समासविशेष्यम्, **श्राद्धं न भुङ्क्ते** इति विग्रहः, **अश्राद्धभोजी** इति समासः, **अलवणभोजी**ति समासः, लवणं न भुङ्क्ते इति विग्रहः, **भिक्षुरि**ति विशेषणम्, "व्रताभीक्ष्ण्ये" [ ५. १. १५७. ] इति णिन् प्रत्ययः । उदाहरणान्तरं समुच्चेतुमाह– 75 **तथे**ति, **कर्णवेष्टकाभ्यां न शोभते** इति विग्रहः, **अकर्णवेष्टकिक**मिति समासः, **मुख**मिति विशेष्यम्, **वत्सेभ्यो न हितः** इति विग्रहः, **अवत्सीय** इति समासः, गां दोग्धीति **'गोधुक्'** इति विशेष्यम्, **वधं नार्हती**ति विग्रहः, **अवध्यः** इति समासः, **ब्राह्मण** इति विशेष्यम्, **संतापाय न शक्तः** 80

इति विग्रहः, **असांतापिकः** इति समासः, **सदुपदेशः** इति विशेष्यम्, एषु क्रियया सम्बन्धः स्पष्ट एव । कर्णवेष्टकादिना सह नञः सम्बन्धाभावान्नञोऽकारस्य न वृद्धिः ।

परे तु–"असूर्यमश्राद्धमित्यादिरूपत्रयमेवासमर्थोदाहरणं प्रसज्यप्रतिषेधे क्रियया नञर्थस्यान्वयात्, अन्यत्र च गमकाभावान्नासमर्थसमास इति तत्रोपायान्तरमेवाश्रयणीयम्, तथाहि–"असूर्योग्रात्०" [५. १. १२६.] इति सूत्रेऽसूर्यश्रुतेः, "व्रताभीक्ष्ण्ये" [५. १. १५७.] इति सूत्रे व्रतश्रुतेश्च श्राद्धभोजनाभावस्यैव व्रतत्वाद् गत्यन्तराभावादसमर्थसमासस्वीकारेऽपि 'अपुनर्गेयाः' इत्यादौ तत्स्वीकारे मानाभावात्, तत्र हि पुनर्गीयन्त इति पुनर्गेयाः, न पुनर्गेयाः–अपुनर्गेया इत्यस्य, एवं कार्णवेष्टिकस्य वत्सीयस्य च नञा समासेऽकार्णवेष्टकिकमित्यादेः साधुत्वे सम्भवति तत्रापि प्रसज्यप्रतिषेधे नञ्समासस्वीकारे फलाभावः" इत्याहुः, विवेचितं चैतन्मञ्जूषादौ।

वस्तुतस्तु पुनर्गेयत्वस्याप्रसक्तस्य निषेधस्यानौचित्येन गेयत्वस्यैव प्रसक्तस्य पुनः प्रसक्त्यभावो बोधनीय इति प्रसज्यप्रतिषेध एव युक्त इति तथाविवक्षायामसमर्थसमास एवोचित इति विचार्य तथोक्तेः ।

बहुव्रीह्यव्ययीभावयोरवकाशः प्रकटयितुमत्राप्यन्य इत्यनुवर्तनीयमिति तदाह–**अन्य इत्येवे**ति, तथा च यदा पूर्वपदार्थप्राधान्यं विवक्ष्यते तदाऽव्ययीभावः, यदोत्तरपदार्थप्राधान्यविवक्षा तदा तत्पुरुषः, यदा चान्यपदार्थप्राधान्यविवक्षा तदा बहुव्रीहिरिति विषयविभागः, दीक्षितादिभिस्तु–अर्थाभावेऽव्ययीभावेन सहायं विकल्प्यते, तथा च यथालक्ष्यं द्वयोरपि प्रवृत्तिरित्युक्तम्, उभयथापि प्रयोगदर्शनात्, तथाहि–"उत्तरे कर्मण्यविघ्नमस्तु" इत्यादिप्रयोगेषु विघ्नाभाव एवार्थः, तत्र च परत्वादस्य प्रवृत्तौ पुंस्त्वं स्यात्; सर्वत्रार्थाभावे नञर्थप्राधान्येऽव्ययीभाव एवेति स्वीकारे च "रक्षोहागमलघ्वसंदेहाः प्रयोजनम्" इति पस्पशाह्निकभाष्यप्रयोगेऽसन्देहशब्दे तत्पुरुषसमासोऽनुचितः स्यात्, सति हि तत्पुरुषे तदुत्तरपदस्य द्वन्द्वस्येह पुंस्त्वं दृश्यते, अन्यथा सन्देहाभावोऽसन्देहमित्यव्ययीभावाश्रयणे "रक्षोहागमलघ्वसन्देहानि" इति प्रयोगः स्यात् । एवं "परः सन्निकर्षः संहिता" [पाणि० सू० १. ४. १०९.] इति सूत्रे च महाभाष्ये 'द्रुतायामसंहितम्' इति प्रयोगः कृतः, तत्र च संहिताभावोऽसंहितमित्यर्थः, एवं चोभयविधप्रयोगसम्भवादुभयोर्विकल्पेन प्रवृत्तिरिति स्वीकार्यम् । स्वमतेऽपि 'अवचनम्, अवीक्षणम्' इत्यादावभाव एव नञर्थ इति स्वीकृतं, तच्चैतत्सूत्रस्योदाहरणबुद्ध्या प्रदत्तमिति स्वीकार्यं, नञ्समासार्थस्यैव तत्र विभागप्रदर्शनप्रकरणात् । न चैवमिह पूर्वपदार्थप्राधान्यापत्तिरित्यव्ययत्वं स्यादिति वाच्यम्, स्वभावभेदमाश्रित्य पूर्वं निराकृतत्वात्, इत्थं च 'अन्य' इत्यनुवृत्तेरव्ययीभावेन सह विषयभेदकथनं कथं संगच्छते, इति चेत्? अत्रोच्यते–'पूर्वपदार्थप्राधान्यं नञ्समासस्य' इति समाधायापि पुनरुत्तरपदार्थप्राधान्यं स्थापयतो भाष्यकृतस्याव्ययीभाव-नञ्समासयोर्विषयव्यवस्थाया एव सम्मतत्वात् ।

नागेशस्तु–"नञ्" [पाणि० सू० २. २. ६.] इति सूत्रस्थे पूर्वपदार्थप्राधान्ये दोषपरिहारे सत्यपि पक्षान्तरं कुत आश्रितमित्यर्थविचारे कैयटेन यदुक्तम्–'अत्रापि पक्षे दोषः–यदि तावत् स्वाभाविकदर्शनमाश्रीयते तदानेनापवादत्वादव्ययीभावस्य बाधनप्रसङ्गादमक्षिकमित्यादि न सिद्ध्यति' इति, तत्र–अव्ययीभावस्येति प्रतीकमादायाह–परे तु नञा स नेष्ट एव, असंहितमित्यत्रारोपितसन्निकर्षार्थं परः सन्निकर्षः, तदभावाद् द्रुतायां वृत्तौ संहितासंज्ञाप्रयुक्तं कार्यं न प्राप्नोतीत्यर्थ इति न दोषः, अत्यन्ताभावार्थकनञः क्रियागुणमात्रान्वयित्वेनामक्षिकमित्यादौ 'असंहितम्' इत्यादावुत्तरपदार्थाभावाप्रतीत्याव्ययीभावाप्रसिद्धेश्च । अनञ्समासग्रहणात् स्त्र्यादिसिद्धिरप्युक्तेति तुल्यविकल्पाभिप्रायेणैव भाष्यम् । अवर्षा हेमन्त इत्यपि प्रतियोगिरूपाश्रयगतलिङ्गसंख्यादिग्रहणात् सिद्धम्, अभावेन प्रतियोगिनोऽपि स्वज्ञानाश्रयेण तस्याप्याश्रयत्वात् स्वघटितसमासघटकत्वेनोपस्थितत्वाच्चास्यैवाश्रयस्य ग्रहणम्, अन्यथा तद्दोषदूषितपक्षोऽप्येवमाश्रितेऽपि तद्दोषानुवृत्तौ भाष्यस्य निर्दलत्वापत्तिः । अथवा पुनरस्तूत्तरपदार्थप्रधान इति समकक्षतया पक्षान्तरकथनासङ्गतिश्च" इति प्राह ।

**अयमाशयः**—अर्थाभावेऽव्ययीभावेन सह बाध्यबाधकभावः स्यादिति कारणात् पूर्वपदार्थप्राधान्यपक्षमपहायोत्तरपदार्थप्राधान्यपक्षः समाश्रितो भाष्यकृतेति कथनमयुक्तमेव, अर्थाभावार्थकस्य नञः क्रियागुणाभ्यामेवान्वयस्य व्युत्पन्नतया मक्षिकादिभिः सम्बन्धाभावात्, एवं चार्थाभावार्थे नञा सह न समासः, अपि तु निरादिनैवेति निर्मक्षिकमित्यादिप्रयोगा एव तत्रोचिता न त्वमक्षिकमिति । 'असन्देहः, अविघ्नम्, असंहितम्' इत्यादिप्रयोगाणां सिद्ध्यर्थं यदव्ययीभावेन सहास्य विकल्प इत्युच्यते, तदपि न–असन्देहादौ तत्पुरुषसमासेऽपि कार्यनिर्वाहात्, अविघ्नमित्यादि च क्रियाविशेषणत्वेन नपुंसकम् । असंहितमिति च संहितशब्देन क्लीबेन पदसन्निकर्षबोधकेन सह नञ्समास एव । 'असर्वस्मै' इत्यादौ सर्वनामप्रयुक्तकार्यार्थमुत्तरपदार्थप्राधान्यमाश्रितमित्यपि न, तस्य "एतदश्च व्यञ्जनेऽनग्नञ्समासे" [१. ४. ४५.] इति सूत्रे नञ्समासपर्युदासस्य सामान्यज्ञापकेनैव सिद्धेः । अयमाशयः–'असौ वाति' इत्यादौ

तदः परस्य सेर्लुगभावार्थं हि नञ्समासः पर्युदस्यते, तत्र च पूर्वपदार्थप्राधान्ये तद उपसर्जनत्वादेव वारणसम्भवे तत्र पर्युदासो व्यर्थः सन् नञ्समासे सर्वादित्वप्रयुक्तं कार्यं सामान्यतो ज्ञापयतीति 'असर्वस्मै' इत्यादिसिद्धिः स्यादेव । एवं च तुल्यविकल्पाभिप्रायेणैव पक्षान्तराश्रयणं, न तु तत्र पक्षेऽधिकदोषदर्शनेन, 'अवर्षा हेमन्तः' इत्यत्र लिङ्गसंख्यादिसिद्धिश्च प्रतियोगिवर्षारूपाश्रयगतलिङ्गसंख्याद्याश्रयणादेव, एवं रीत्या च सर्वत्र निर्वाहसम्भवे कस्यापि पक्षस्य विशिष्य भाष्यकारस्वीकृतत्ववर्णनं कैयटस्य नोचितमिति । प्रकृते चार्थाभावेऽयं समास एव प्रवर्तते नाव्ययीभाव इत्येव नागेशमतम् ।

एतच्च स्वमते न स्वीकर्तुं शक्यते, 'अन्य' इत्यनुवृत्तिसामर्थ्यात् पूर्वपदार्थप्राधान्यविवक्षायामव्ययीभावविषयतया तत्पुरुषविषयत्वातिक्रमात् । अन्यत्राभावार्थकनञः क्रियागुणाभ्यामेवान्वयो न तु द्रव्येणेत्यपि न स्वीक्रियते प्रकृतवृत्तिग्रन्थविरोधादित्यलं विस्तरेण ॥ ३. १. ५१ ॥

## पूर्वा-ऽपरा-ऽधरोत्तरमभिन्नेनांशिना ।३।१।५२॥

त० प्र०—अंश एकदेशस्तद्वान्-अंशी, पूर्वादयः शब्दाः सामर्थ्यादंशवाचिनोऽशिना समस्यन्ते, अभिन्नेन-न चेत् सोऽशी भिन्नः प्रतीयते, तत्पुरुषश्च समासो भवति । पूर्वः कायस्य-पूर्वकायः, एवम्-अपरकायः, अधरकायः, उत्तरकायः । पूर्वादिग्रहणं किम् ? दक्षिणं कायस्य । अभिन्नेनेति किम् ? पूर्वं छात्राणामामन्त्रयस्व । प्रसज्यप्रतिषेधः किम् ? पूर्वं पाणिपादस्य, अत्र हि समाहारस्यैकत्वेऽपि पाणिः पाद इति भेदप्रतीतेर्न भवति । पूर्वग्राम इत्यादौ तु न ग्रामशब्दात् प्रासादादिभेदप्रतीतिः । अंशिनेति किम् ? पूर्वो नाभेः कायस्य ॥ ५२ ॥

श० म० न्यासानुसन्धानम्-पूर्वापरेत्यादि । पूर्वादीनां समाहारः । 'अभिन्नेन' इत्यस्य वस्तुत एकत्वसंख्याविशिष्टेनेत्यर्थः, एतच्चाग्रे स्फुटीभविष्यति । 'अंशिना' इति पदं व्याख्यातुमाह-अंश एकदेश इति-एकदेशोऽवयवः, तद्वान् अवयवी, अवयवसमुदायवानित्यर्थः । सामर्थ्यादिति-सापेक्षत्वादित्यर्थः, अवयवी च स्वावयवैरेव सापेक्ष इति स एवेहावयविना सामर्थ्यभागिति स एव गृह्यते, नान्योऽसम्बद्धः पदार्थ इति भावः । 'अभिन्नेन' इत्यस्य पर्युदासपरत्ववारणायाह-न चेदिति-भिन्नो हि पृथक् कदाचिदवस्य प्रतीयते, यश्चाभिन्न एकः स न तादृगिति भेदवति न समासप्रवृत्तिरिति फलति ।

अथ सविग्रहमुदाहरति-पूर्वः कायस्येति विग्रहः, पूर्वकायः इति समासः, अतिदिशति-एवमिति, अपरकायः इति समासः, अपरः कायस्येति विग्रहः, अधरकायः इति समासः, अधरः कायस्येति विग्रहः, उत्तरकायः इति समासः, उत्तरः कायस्येति च विग्रहः । न च पूर्वशब्दो दिक्शब्दः, तथा च कायात् पूर्वं इति विग्रहः स्यादिति शङ्क्यम्, दिग्वाचिनाम्ना योगेऽवधिवाचिन एव पञ्चमीविधानात्, इह च कायो नावधिरपि तु सम्बन्धी, अवधिस्तु नाभ्यादिः, तथा च कायस्य पूर्वः कस्मात् ? नाभेरिति पूर्वत्वनिरूपकान्नाभ्यादिशब्दादेव पञ्चमी, न कायशब्दात्, "तस्य परम्" [ पाणि० सू० ८. १. १.] इत्यादिप्रामाणिकप्रयोगादवयववाचियोगे षष्ठ्या ज्ञापनाच्च । एवं च षष्ठीसमासापवादोऽयम्, समासप्रकरणे यत्रोत्सर्गापवादौ बहुलाधिकाराद् विकल्पेन प्रवर्तेते तत्रापवादेन मुक्तेऽपि नोत्सर्गप्रवृत्तिरिति "पारेमध्येऽग्रेऽन्तः षष्ठ्या वा" [ ३. १. ३०.] इति सूत्रे प्रतिपादितत्वेनैतदभावे षष्ठीसमासो न भवति, षष्ठीसमासे सति हि कायपूर्वं इति प्रयोगोऽपि स्यात्, एवं च पूर्वः काय इति विग्रहे कायशब्दस्य भक्त्या स्वावयवत्वविवक्षायां सिद्धावपि कदाचित् षष्ठीसमासप्रवृत्त्या कायपूर्वं इति प्रयोगः स्यात् तद्वारणार्थमेवेदं सूत्रमिति ।

पदकृत्यं पृच्छति-पूर्वादिग्रहणं किमिति-अवयवनिर्देशे प्राय एषामेव प्रयोगो भवतीति प्रश्नाशयः । नैत एव प्रयुज्यन्ते, किन्त्वन्येऽपीत्याह-दक्षिणं कायस्येति, तथा चात्र समासाभावार्थं परिगणनमावश्यकमिति भावः । अवयवा एव भिन्ना भवन्ति, अवयवी त्वेक एवेति 'अभिन्नेन' इति व्यर्थमित्याशङ्कते-अभिन्नेनेति किमिति, पूर्वं छात्राणामिति-अत्र छात्रशब्दश्छात्रसमुदायपरः, तेष्वेकस्तदंशो यद्यप्यस्ति तथाप्यवयविन उद्भूतसंख्यावत्त्वेन विवक्षितत्वाद् बहुवचनान्ततया निर्देशाद् भेदप्रतीतिरिति न भवति समासः, एतदभावे तु समासः स्यादेवेति भावः । अभिन्नेनेत्यस्य प्रसज्यप्रतिषेधेन व्याख्यानफलं स्फोरयति-प्रसज्यप्रतिषेधः किमिति-प्रसक्तं कृत्वा प्रतिषेधः प्रसज्यप्रतिषेधः "अव्ययं प्रवृद्धादिभिः" [ ३. १. ४८. ] इति समासः, पूर्वं पाणिपादस्येति प्रत्युदाहरणम्, अत्राभिन्नत्वाभावं संगमयति-अत्र हीत्यादिना, यद्यप्यत्र पाणिश्च पादश्चेति, पाणी च पादौ चेति विग्रहे समाहारसमासे सत्येकत्वस्योत्पत्त्याऽभिन्नत्वमस्ति तथापि विग्रहवाक्ये भेदप्रतीत्या भेदात्यन्ताभावो नास्तीति समासो न भवतीति भावः । नन्वेवं ग्रामशब्दस्यापि सप्रासादे सचत्वरे सजलाशये सवने च रूढत्वादनेकत्वेनोपस्थित्या ग्रामस्य पूर्वं इति विग्रहे पूर्वग्राम इति प्रयोगो न स्यादिति चेत् ? अत्राह-पूर्वग्राम इत्यादौ त्विति, अयमाशयः-बह्वर्थोऽयं ग्रामशब्दः, अस्त्येव-शालासमुदाये वर्तते,

तद्यथा-ग्रामो दग्ध इति, अस्ति-वाटपरिक्षेपे वर्तते-ग्रामं प्रविष्ट इति, अस्ति च-मनुष्येषु वर्तते-ग्रामो गतो ग्राम आगत इति, अस्ति-सारण्यके ससीमके सस्थण्डिले वर्तते, तद्यथा-ग्रामो लब्ध इति, इति "आद्यन्तवदेकस्मिन्" [पाणि० सू० १. १. २१.] इति सूत्रस्थभाष्योक्त्या ग्रामशब्दस्य शालासमुदायवाचकत्वेन तत्र च बहुत्वप्रतीतेरभिन्नत्वाभावात् समासो नेति नाशङ्कनीयम्, प्रासादादिभेदस्याप्रतीतेर्ग्रामस्यैकत्वावगमात् । पुनः पृच्छति-**अंशिनेति किमि**ति, अयमाशयः-'पूर्वादयोऽभिन्नेन द्रव्येण तादृशद्रव्यवाचकनाम्ना समस्यन्ते' इत्यर्थेऽपि लक्ष्यसिद्धौ सत्यामंशिनेति पदमव्यावर्तकमिति नोपादेयमिति, उत्तरयति-**पूर्वो नाभेः कायस्ये**ति, अयमाशयः-न केवलं पूर्वादिशब्दानामंशिनैव सामर्थ्यमपि तु स्वावधिनापि, ततश्चावधिभूतेन नाम्ना समासो मा भूदित्येतदर्थमंशिनेति पदमावश्यकमिति ॥ ३. १. ५२. ॥

## सायाह्नादयः । ३ । १ । ५३ ॥

**त० प्र०**—सायाह्नादयः शब्दा अंशिना तत्पुरुषेण साधवो भवन्ति । सायमह्नः-सायाह्नः, मध्यमह्नः-मध्याह्नः, मध्यं दिनस्य-मध्यंदिनम्, मध्यं रात्रेः-मध्यरात्रः, "उपारताः पश्चिमरात्रगोचरात्" इत्यादयः । बहुवचनमाकृतिगणार्थम् । 'पूर्वे पञ्चालाः, उत्तरे पञ्चालाः' इतिवत् समुदायवाचिनामंशेऽपि प्रवृत्तिदर्शनात् सामानाधिकरण्ये सति कर्मधारयेणैव सिद्धम्-पूर्वश्चासौ कायश्च-पूर्वकायः, सायं च तदहश्च-सायाह्न इति, तत्पुरुषविधानं त्विह पूर्वत्र चाह्नः सायं कायस्य पूर्वमिति षष्ठीसमासबाधनार्थम् ॥ ५३ ॥

**श० म० न्यासानुसन्धानम्-सायाह्नादय** इति । विगृह्योदाहरति-**सायमह्नः** इति विग्रहः, "षोंच् अन्तकर्मणि" स्यति दिनं सायं पुंक्लीबः, गौडस्तु-"उत्सूरश्च विकालश्च सायश्च सबलिश्च सः" इति पुंस्याह, "स्था-च्छा-मा-सा०" [उणा० ३५७.] इति ये सायं दिनावसानम्, इत्यकारान्तः सायशब्दः, अथवा "स्यतेर्णित्" [उणा० ९३६.] इति णिति अमि-सायं दिनावसानम्, "सायं प्रातरमी पुण्यमग्निहोत्रमुपासते" सायन्तनी सन्ध्या, इति मकारान्तमव्ययं सायंशब्दः, **सायाह्नः** इति समासः, अनेन समासे सति "सर्वांशसंख्याव्ययात्" [७. ३. ११८.] इत्यट् समासान्ते अह्नादेशे च सायाह्नः, अत एव निर्देशात् "संख्यासायवेः०" [१. ४. ५०.] इत्यत्र 'साय' इति निर्देशबलाद् वा मान्ताव्ययपक्षे मकारलोपः, अनव्ययपक्षे तु निसर्गतो मकारो नास्ति, अकारान्त एव सायशब्दोऽत्र ग्राह्य इति केचन, "परलिङ्गो द्वन्द्वोंऽशी" इति लिङ्गानुशासनेनाह्नशब्दस्य क्लीबत्वेन प्राप्तेऽपि नपुंसकत्वे "अर्धसुदर्शनदेवनमह्ना०" इति लिङ्गानुशासनविशेषवचनेन समासस्य पुंस्त्वमवसेयम् । ननु सायशब्दस्य सायंशब्दस्य वा दिनान्तवाचकत्वात् तेन सहाह्नः कथं सामर्थ्यमिति चेत्? उच्यते-विशिष्टवाचकपदस्य सति विशेषणवाचकपदसमभिव्याहारे विशेष्यमात्रपरत्वमिति सिद्धान्तात् सायशब्दस्य सायंशब्दस्य वान्तमात्रार्थकत्वेनाह्ना सह सामर्थ्योपपत्तिः । अत एव "सकीचकैर्मारुतपूर्णरन्ध्रैः" [रघुवंशे, स. २.] इत्यादिप्रयोगेषु 'मारुतपूर्णरन्ध्रैः' इति विशेषणं सार्थकम्, अन्यथा "कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इति कोशेनानिलपूर्णे तत्कम्पिते च वेणौ कीचकपदशक्तेरेव सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव, निरुक्तसिद्धान्ताङ्गीकारे तु कीचकशब्दस्य विशेषणवाचक'मारुतपूर्णरन्ध्रैः' इति पदसान्निध्ये विशेष्य'वेणु'मात्रपरत्वमिति न दोषः । **मध्यं दिनस्ये**ति विग्रहः, **मध्यंदिनमि**ति समासः, "लोकम्पृण-मध्यंदिन०" [३. २. ११३.] इति निपातनात् पूर्वपदस्य मान्तत्वम् । **मध्यं रात्रेरि**ति विग्रहः, **मध्यरात्रः** इति समासः, "संख्यातैक०" [७. ३. ११९.] इत्यत् समासान्तः, "सिचयनिकाय्यरात्रवृत्राः" इति लिङ्गानुशासनविशेषवचनेन परवल्लिङ्गतापवादभूतमत्र पुंस्त्वमवसेयमिति । अन्यैः केचन शब्दा इह सूत्रे संगृहीताः, अन्येषां च ज्ञापकादिना समास आश्रित इति तद्दोषपरिहारायैवेह गणपाठ आश्रित इति वरमेव, गणपाठाश्रयणाच्च कविप्रयोगाणामपि संग्रह इत्याह-**"उपारताः पश्चिमरात्रगोचरात्" इत्यादयः** इति भारविप्रयोगोऽयं सम्पूर्णपद्यमिदम्-

> "उपारताः पश्चिमरात्रगोचरादपारयन्तः पतितुं जवेन गाम् ।
> तमुत्सुकाश्चक्रुरवेक्षणोन्मुखं गवां गणाः प्रस्नुतपीवरोधसः ॥"
> [किराते] इति,

अर्जुनस्य तपश्चरणायेन्द्रकीलपर्वतं गच्छतो मार्गे गवां वर्णनमिदम्, अत्र रात्रेः पश्चिमो भागः-पश्चिमरात्रः, तत्र यो गोचरो गवां तृणादिभक्षणार्थं गमनं तस्मादुपरताः प्रतिनिवृत्ताः, उत्सुकाः-वत्सदर्शनार्थमुत्कण्ठिताः, प्रस्नुतानि-क्षरद्दुग्धानि, पीवराणि-स्थूलानि, ऊधांसि-दुग्धस्थानानि यासां तथाभूताः, अत एव च जवेन गां पतितुमपारयन्तो गवां गणाः, तमर्जुनमवेक्षणोन्मुखं स्वकर्मकदर्शनाभिमुखं चक्रुरित्यन्वयः । अत्र पश्चिमरात्रशब्दो गणपाठादेव सिध्यतीति भावः । "सायाह्नादिः" इत्येकवचनमेव प्रयोक्तुमुचितमिति बहुवचनं किमर्थमित्याशङ्कायामाह-**बहुवचनमाकृतिगणार्थमि**ति-एकवचननिर्देशे हि गणपठितानामेव कार्यं स्यात्, बहुवचनाच्च तद्बहिर्भूतानामपि तदाकृतीनां शब्दानां ग्रहणं भवतीति भावः । निपातस्यागतिकगतित्वादुपायान्तरमप्याह-**समुदायवाचिनामंशेऽपी**ति, अयमाशयः-पञ्चाल-

शब्दो हि सीमाविशेषपरिच्छिन्ने प्रदेशे प्रयुक्त इति तस्य पूर्वो भाग इति विवक्षायां 'पञ्चालानां पूर्वः' इति वैयधिकरण्येनैव प्रयोगः समुचित इति प्रकृते सामानाधिकरण्येन प्रयोगात् समुदायवाचिनां शब्दानां स्वांशपरत्वमपीति प्रतीयत इति। तथा सति च पूर्वकायादीनां कर्मधारयेणापि सिद्धिरित्याह–**पूर्वश्चासौ कायश्चेति**, किमर्थं तर्हि पूर्वसूत्रमिदं चेति सूत्रद्वयमिति चेत्? अत्राह–**तत्पुरुषविधानं त्विहे**ति–एतच्च पूर्वसूत्रव्याख्यानावसरे प्रतिपादितमेव। ननु सायमोऽव्ययत्वात् "तृप्तार्थपूरणाव्यय०" [३. १.८५.] इति षष्ठीसमासस्य प्रतिषेधेन प्राप्तिरेव नास्ति, किमुच्यते–**षष्ठीसमासबाधनार्थ**मिति, उच्यते–यदाऽकारान्तः सायशब्दोऽनव्ययं तदा प्राप्नोतीति ॥ ३.१.५३.॥

## समेंऽशेऽर्धं नवा। ३। १। ५४॥

**त० प्र०**—अर्धमित्येतत् समेंऽशे वर्तमानमंशिनाऽभिन्नेन वा समस्यते, तत्पुरुषश्च समासो भवति। अर्धं पिप्पल्याः–अर्धपिप्पली, पक्षे–पिप्पल्यर्धम्, एवम्–अर्धकोशातकी, कोशातक्यर्धम्; अर्धपणः, पणार्धम्; अर्धवेदिः, वेद्यर्धम्; अर्धचापम्, चापार्धम्; अर्धस्वरः, स्वरार्धम्; अर्धग्रामः, ग्रामार्धम्; अर्धापूपः अपूपार्धम्। समेंऽश इति किम्? ग्रामार्धः, नगरार्धः। अर्धं च सा पिप्पली चेति कर्मधारयेणैव सिद्धे भेदविवक्षायां पक्षे षष्ठीसमासबाधनार्थमसमांशे चार्धश्चासौ ग्रामश्चेति कर्मधारयनिषेधार्थं वचनम्। अंशिनेत्येव–पिप्पल्या अर्धं चैत्रस्य, अत्र चैत्रेण समासो न भवति। अभिन्नेनेत्येव–अर्धं पिप्पलीनाम्। कथमर्धपिप्पल्यः? अर्धं पिप्पल्या इत्यभिन्नेन समासे सत्येकशेषात्, अर्धराशिरित्यत्र राशेरभेदप्रतिभासाद् भविष्यति। अत्र समेंऽशे वर्तमानोऽर्धशब्द आविष्टलिङ्गो नपुंसकः, असमांऽशे तु पुंलिङ्गः; अन्ये त्वसमासे वाच्यलिङ्गमेनमाहुः, असमांश एव च षष्ठीसमासं, समांशे तु नित्यमंशितत्पुरुषमिच्छन्ति ॥ ५४ ॥

**श० म० न्यासानुसन्धानम्–समेंऽशे०** इत्यादि। अर्धशब्दस्य खण्डसामान्यवाचकत्वं समविभागवाचकत्वं च, तत्र खण्डसामान्यवाचकत्वे "अर्धसुदर्शनदेवनमह्ना०" इति लिङ्गानुशासनवचनात् पुंस्त्वम्, समांशवाचकत्वे तु "धर्मे दानादिके तुल्यभागेऽर्धं ब्राह्मणं श्रुतौ" इति वचनान्नपुंसकत्वमिति व्यवस्था, तत्र नपुंसकस्यैवेह ग्रहणार्थमाह–**समेंऽशे** इति–तुल्यभागे इत्यर्थः। विगृह्योदाहरति–**अर्धं पिपल्याः** इति विग्रहः, **अर्धपिप्पली**ति समासः, "प्रथमोक्तं प्राक्" [३. १. १४९.] इत्यर्धशब्दस्य प्राग् निपातः, "परलिङ्गो द्वन्द्वोऽंशी" इति समासस्य पिप्पलीलिङ्गम्, 'नवा' इत्युक्ततयाऽस्य समासस्योत्सर्गापवादत्वेनैतेन मुक्तपक्षे षष्ठीसमासोऽपि भवतीत्याह–**पक्षे पिप्पल्यर्धमि**ति–"षष्ठ्ययत्ना०" [३. १. ७६.] इति समासः, षष्ठ्यन्तस्य च प्रथमोक्ततया प्राग्निपातः, 'नवा' इत्यस्यानुक्तौ तु एतदपवादत्वेन वाक्यमेव तिष्ठेन्न षष्ठीसमासः। अतिदिशति–**एवमिति, अर्धकोशातकी**त्यनेन समासः, **कोशातक्यर्ध**मिति षष्ठीसमासः, अर्धं कोशातक्या इति विग्रहः, **अर्धपणः** इत्यनेन समासः, **पणार्धमि**ति षष्ठीसमासः, अर्धं पणस्येति विग्रहः, **अर्धवेदि**रित्यनेन समासः, **वेद्यर्धमि**ति षष्ठीसमासः, अर्धं वेद्या इति विग्रहः, **अर्धचापमि**त्यनेन समासः, **चापार्धमि**ति षष्ठीसमासः, अर्धं चापस्येति विग्रहः, **अर्धस्वरः** इत्यनेन समासः, **स्वरार्धमि**ति षष्ठीसमासः, अर्धं स्वरस्येति विग्रहः, **अर्धग्रामः** इत्यनेन समासः, **ग्रामार्धमि**ति षष्ठीसमासः, अर्धं ग्रामस्येति विग्रहः, **अर्धापूपः** इत्यनेन समासः, **अपूपार्धमि**ति षष्ठीसमासः, अर्धमपूपस्येति विग्रहः, पिप्पली प्रसिद्धौषधिजातिः, कोशातकी पटोलिका, पणो वेतनम्, वेदिः–दारुपरिष्कृता चतुरस्रा विश्रान्तिभूः, चापं धनुः, स्वरः–अकारादिः, ग्रामः प्रसिद्धः, अपूपः पक्वान्नविशेषः।

पदकृत्यं पृच्छति–**समेंऽश इति किमि**ति–अर्धशब्दस्य लोके समांशवाचकत्वेन प्रसिद्ध्या तत एव समांशावगतौ व्यर्थमेतदुपादानमिति शङ्काशयः, उत्तरयति–**ग्रामार्धः, नगरार्धः** इति, अयमाशयः–यस्य वस्तुनोऽंशे समत्वं नाकलयितुं शक्यते, किन्तु केवलं कल्पनयाऽर्धत्वमुच्यते, तत्रार्धशब्दस्य तत्खण्डमात्रपरत्वेन नायं समास इष्यते, किन्तु केवलं षष्ठीसमास एवेति विषयविभागसिद्ध्यर्थं 'समेंऽशे' इत्यावश्यकम्, प्रकृते च खण्डमात्रपरत्वेन नानेन समसनं किन्तु षष्ठीसमासावेवेति। सूत्रवैयर्थ्यमाशङ्क्य समाधत्ते–**अर्धं च सा पिप्पली चे**त्यादिना, **भेदविवक्षायामि**ति–स्याद्वादेन गुण-गुणिनोरवयवा-ऽवयविनोः कथञ्चिद् भिन्नाभिन्नत्वं सुप्रसिद्धं; गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वादिति मीमांसकादिस्वीकृतन्यायेनापि गुणगुणिनोरवयवावयविनोश्च भिन्नाभिन्नत्वं, तत्र यदाऽभेदविवक्षा तदा कर्मधारयेणार्धपिप्पलीत्यादीनां सिद्धौ सत्यामपि भेदविवक्षायां केवलं षष्ठीसमास एव स्यादिति तन्निवारणार्थमनेन समासो विधीयते, किञ्चासमांशवाचकार्धशब्दस्य 'अर्धश्चासौ ग्रामश्च' इत्यादौ समासाभावज्ञापनार्थं च; समांशवाचकार्धशब्दोऽंशिनैव वा समस्यत इति ज्ञापनार्थत्वात् सूत्रस्येति समुदितार्थः। व्यावर्त्यं दर्शयितुमाह–**अंशिनेत्येवे**ति, व्यावर्त्यमाह–**पिप्पल्या अर्धं चैत्रस्ये**ति–'अंशिना' इत्यनुवर्तनाच्चैत्रेणार्धस्य समासो न भवति, चैत्रो हि तदर्धस्य स्वामी, न त्वंशी, न चार्धशब्दस्य समांशवाचकत्वेनावश्यमंशिनैव साकाङ्क्षत्वमिति तेनैव समासः स्यान्नान्येनेति विफलमनुवर्तनमिति वाच्यम्, यथार्धशब्दस्यांशिना

साकाङ्क्षत्वं तथा स्वामिनापीति स्वस्वामिभावसम्बन्धेऽपि विवक्षिते समासः स्यादिति तद्वारणायानुवर्तनं सार्थकम्, न चात्रार्धं पिप्पल्यपेक्षं, तत्र सापेक्षत्वादेव समासो न भविष्यतीति वाच्यम्, प्रधानमत्रार्धं, प्रधानस्य सापेक्षस्यापि भवति समासः, यद्येवं चैत्रसापेक्षस्यार्धस्य पिप्पल्या कथं समासो न भवतीति न शङ्क्यम्, भवत्येव-अर्धपिप्पली चैत्रस्येति । पुनर्व्यावर्त्यं दर्शयितुमाह-**अभिन्नेने**त्येवेति, व्यावर्त्यमाह-**अर्धं पिप्पलीनामि**ति-अत्रापि पूर्वसूत्रवद् भिन्नेन न समास इत्येवार्थोऽर्थाधिकारादिति च बोध्यम्, तथा चावयविनां बहुत्वे न भवति समासः, न वा समाहाररूपसमुदायार्थविवक्षायाम्, प्रकृतेऽशिन्यो बह्व्यः पिप्पल्यो भिन्ना इत्ययं समासो न भवति, आशङ्कते-**कथमर्धपिप्पल्यः** इति-नेहांशिसमासेन विनार्धशब्दस्य पूर्वनिपात उपपद्यते, तत्र यद्यर्धं पिप्पल्या इति समासस्तदार्धस्यैकत्वाद् बहुवचनायोगः, अथार्धानि पिप्पल्य इति तदा नैकस्य पिप्पल्यो बहवः समप्रविभागा भवन्ति, अतोऽत्र पिप्पलीनां बहुत्वमङ्गीकर्तव्यं, येनार्धानि प्रतीयन्ते-अर्धानि पिप्पलीनामिति, तत्राभिन्नेनेत्यनुवृत्तावस्यानुपपत्तिः, दशानां पिप्पलीनामर्धमिति विग्रहेऽप्यर्धस्य पञ्चसंख्यात्वेन तत्र बहुत्वस्य सम्भवादभिन्नेनेत्यस्यानुपपत्तिस्तथैवेति शङ्काशयः; समाधत्ते-**अर्धं पिप्पल्या इत्यभिन्नेन समासे सत्येकशेषादि**ति-अत्रैकवचनान्तेन पिप्पलीशब्देन समासः-अर्धं पिप्पल्या इति, न तु बहुवचनान्तेन, यद्येवं कथं प्रचयो बहुत्वमिति चेत् ? अर्धपिप्पली च अर्धपिप्पली च अर्धपिप्पली चेत्येकशेषो विज्ञायते, तत्रायं प्रचयो बहुत्वम्, तथा चैवं वा को विशेष इति चेत् ? एवं सत्यर्धप्रचयो जायते, तथा सति पिप्पलीप्रचयोऽपि, पिप्पलीप्रचये च समासेऽखण्डाः पिप्पल्यः प्रतीयेरन्, पिप्पलीनां चार्धं प्रति विशेषणत्वात् पिप्पलीप्रचये सति एकवचनमपि प्रसज्येत-अर्धं पिप्पलीनामर्धपिप्पलीति, न चात्र कदाचिदपि पिप्पलीप्रचयो गम्यते, पिप्पलीप्रचये हि एकवचनमपि स्यात्, न त्वेकवचनमेव, तत्रापि तद्बहुत्वे बहुवचनोपपत्तिः, यत इदं बहुवचनान्तमेव खण्डा एव च पिप्पल्यः प्रतीयन्ते, अतोऽर्धप्रचय एवायं, न पिप्पलीप्रचयः । **अर्धराशिरि**त्यादि-राश्यादौ वस्तुतः सत्यपि भेदे राश्यादिशब्दाः पिप्पल्यादिभिरभिन्नप्रतिभासाः प्रतीयन्ते, तत्राभेदोऽस्तीति समासो भवतीत्यर्थः, किञ्च, यद्यपि राशिशब्दोऽनेकव्यक्तिसमुदायपर इत्यस्याभिन्नत्वं नास्ति, तथा च तेन समासो नोचितस्तथापि समुदायस्यावयवैः सह भेदाभेदोभयविवक्षायाः पूर्वमुपपादितत्वादभेदविवक्षायामेकत्वाक्षतेस्तत्र समासो निर्बाध इति ।

अथार्धशब्दस्य लिङ्गव्यवस्थां दर्शयति-**अत्र समेंऽशे** इत्यादिना, अर्धशब्दस्योभयार्थत्वमादौ प्रतिपादितमेव, तथा चात्र सूत्रे समांशवाचकस्यैव ग्रहणम्, स चाविष्टलिङ्गी-नियतलिङ्ग इति तस्य केवलं नपुंसकत्वमेव, अन्यार्थे तु केवलं पुंलिङ्ग एव, यदाहामरः-"भित्तं शकलखण्डे वा, पुंस्यर्धोऽर्धं समेंऽशके ।" इति । मतान्तरमाह-**अन्ये त्वसमांशे** इति-असमांशे वाच्यलिङ्गत्वं कैयटाभिमतम्, तथाहि-"अर्धं नपुंसकम्" [ पाणि० सू० २. २. २. ] इति सूत्रे "समप्रविभागे नपुंसकलिङ्गः, अवयववाची च पुंलिङ्गः" इति महाभाष्यग्रन्थव्याख्यावसरे स आह-"अवयववाची पुंलिङ्ग इति नियमेन नपुंसकलिङ्गो न भवतीत्येवंपरमेतत्, अवयववाची त्वभिधेयवशात् सर्वलिङ्गः, तथा च प्रयोगो दृश्यते-अपूपार्धं मया भक्षितं, दन्तार्धमास्यात् पतितमिति" इति । नागेशस्तु समांशवाचिनोऽपि पुंस्त्वमित्याह, तथाहि-पूर्वोक्तकैयटग्रन्थव्याख्यावसरे तेनोक्तम्-"परे तु 'समप्रविभागे नपुंसकः' इत्यस्य नपुंसकलिङ्गोऽपीत्यर्थः, अत एव "एओङ्" [ माहेश्वरसूत्र-३ ] "एच इग्" [ पाणि० सू० १. १. ४८. ] इति सूत्रयोर्महाभाष्ये एचो ह्रस्वविधानेऽर्धेकाराधौंकारौ प्राप्नुत इति शङ्कायां "नैव लोके नापि वेदेऽर्ध एकारोऽर्ध ओकारो वास्ति" इत्युत्तरभाष्ये समविभागविषयेऽपि पुंलिङ्गः प्रयुक्तः, अवयववाची तु पुंलिङ्ग एव, अपूपार्धमिति समप्रविभाग एव, अन्यत्रापूपार्ध एवेति । अन्यमपि विशेषमाह-**असमांश एव षष्ठीसमासं, समांशे तु नित्यमंशितत्पुरुषमि**ति, एतच्च "अर्धं नपुंसकम् [ २. २. २. ] इति सूत्रे विकल्पानुक्तेस्तत्रत्यभाष्याच्च लभ्यते । नागेशस्तु-अपूपार्धमित्यादौ समांशवाच्यर्धशब्द इति कथयंस्तत्रापि विकल्पेन षष्ठीसमासमपि पक्षे प्राह, तथाहि-[ प्रकृतसूत्रे ] अन्यतरस्यां ग्रहणापकर्षणेन योगविभागेन वा एकदेशिसमासविषये षष्ठीसमासः सूत्रकृतोऽपीष्ट एव" इति, अयमाशयः-"अर्धं नपुंसकम्" [ पा० सू० २. २. २. ] इत्यतोऽग्रेतनसूत्रे विकल्पविधायकमन्यतरस्यामिति पदमस्ति, तदिहापकर्षणीयं, तत्रैव वा योगविभागेन व्याख्येयमिति समांशवाचिनोऽपि विकल्पेनैकदेशि-[ अंशि ] समास इति 'अपूपार्धं दन्तार्धम्' इत्यादयः प्रयोगा अपि साधवः स्युरिति, तथा च स्वमतेन साम्यमेव, केवलं तस्य [ समांशार्थस्य ] नियतक्लीबत्वमिति स नाभिप्रैति पूर्वोदाहृतमाहेश्वरसूत्रस्थभाष्यात्, परममरकोशादिप्रामाण्यात् प्रकृतसूत्रवृत्तिग्रन्थाच्च तस्य नियतक्लीबत्वमेवेति बोध्यम् ॥ ३. १. ५४. ॥

## जरत्यादिभिः । ३ । १ । ५५ ॥

**त० प्र०**—असमांशार्थ आरम्भः, अर्धशब्दो जरत्यादिभिरंशिभिरभिन्नैः सह वा समस्यते, तत्पुरुषश्च समासो भवति । अर्धो जरत्याः-अर्धजरती, तत्तुल्यम्-अर्धजरतीयम्,

अर्धवैशसम्, अर्धोक्तम्, अर्धविलोकितम्; पक्षे–जरत्यर्ध इत्याद्यपि भवति। बहुवचनमाकृतिगणार्थम्। इदमपि षष्ठीसमासबाधनार्थम् ॥ ५५ ॥

**श० म० न्यासानुसन्धानम्**–जरत्यादिभिरिति। अर्धमित्यनुवर्तते, तथा च पूर्वसूत्रेणैव समाससिद्धावस्य वैयर्थ्यमाशङ्क्याह–**असमांशार्थ आरम्भ** इति–समांशवाचिनोऽर्धशब्दस्य समासविधायकं हि पूर्वसूत्रं, यत्र च खण्डसामान्यवाचकत्वमर्धशब्दस्य तत्र तेनासिद्धेरस्य चारितार्थ्यमिति भावः। अर्धं ह्यंशस्तस्यांशिना सह सापेक्षत्वमिति 'अंशिना' इति पदमनुवर्तते, तच्च योग्यत्वाद् बहुवचनान्ततया परिणमते, तदाह–**जरत्यादिभिरंशिभिरि**ति। विगृह्योदाहरति–**अर्धो जरत्याः** इति विग्रहः, **अर्धजरती**त्यनेन समासः, ततः तत्तुल्यमित्यर्थे "काकतालीयादयः" [ ७. १. ११७. ] इतीयप्रत्यये–**अर्धजरतीयमिति**, एतच्च व्युत्पत्तिदर्शनमात्रं, वस्तुतस्तु 'अर्धजरतीय'पदं व्यवहारविशेषस्य प्रतिपादकम्, यथा जरत्याः किञ्चिदङ्गं काम्यते कामिभिः किञ्चिन्नेति तद्वद् यः कश्चिद् व्यवहरति तद्व्यवहारेऽयं शब्दः प्रयुज्यते। **अर्धवैशसमि**ति समासः, "शसू हिंसायाम्" विशसनं विशसा भिदादित्वादङ्, प्रज्ञाद्यणि च वैशसम्, अर्धो वैशसस्य–अर्धवैशसमिति, अर्धमरणमित्यर्थः, प्रयुक्तश्चायं कालिदासेन कुमारसम्भवे रतिविलापे–

"विधिना कृतमर्धवैशसं, ननु मां कामवधे विमुञ्चता।
अनपायिनि संश्रयद्रुमे, गजभग्ने पतनाय वल्लरी ॥" इति,

कामवधे मां विमुञ्चता विधिना अर्धवैशसं कृतम्, अर्धांशेनाहं हताऽवश्यं विनाशमेष्याम्येव, ततश्च ममापि वध एवोचितः स्यात्, व्यर्थमितः क्लेशस्य भोगायाहं मुक्ता, एतच्चार्थान्तरन्यासेन समर्थयति–अनपायिनि स्थिरे, संश्रयद्रुमे आश्रयभूते वृक्षे गजभग्ने सति, वल्लरी लता [ अपि ] पतनाय, अवश्यं पतत्येवेति भावः। ईदृशस्थल एवार्धवैशसं प्रयुज्यते। **अर्धोक्तमिति** समासः, उक्तस्यार्ध इति विग्रहः, किञ्चिद् वचोंऽशेन कथितमेव केनापि हेतुना न पूर्यते तत्रेदमवगन्तव्यम्। **अर्धविलोकितमि**ति समासः, अर्धो विलोकितस्येति विग्रहः, इदमपि प्रायः शृङ्गारादौ प्रसिद्धम्। 'नवा' इत्यस्यानुवृत्तेः फलमाह–पक्षे जरत्यर्ध इत्याद्यपीति। 'जरत्यादिना' इत्येकवचनमेव कुतो न प्रयुक्तमित्याशङ्कायामाह–**बहुवचनमाकृतिगणार्थमि**ति। अंशांशिनोरभेदविवक्षया कर्मधारयेण सिद्धिमाशङ्क्याह–**इदमपि षष्ठीसमासबाधनार्थमि**ति–अर्धश्चासौ जरती चेति विग्रहे यद्यपि रूपं सिध्यति तथापि 'अर्धो जरत्याः' इति विग्रहेऽपि षष्ठीसमासं प्रबाध्यांशिसमासार्थमिदमिति भावः। अन्यैस्तु नारभ्यत एवेदं सूत्रम्, शब्दस्वरूपयोः [ अर्धजरती-जरत्यर्धयोः ] यथाकथञ्चिद् विग्रहे सिद्धयोरर्थस्य चेष्टस्य बोधः स्यादेवेति बुद्ध्या, स्वमते च विग्रहकृतोऽपि विशेषोऽर्थे प्रतिभासत एवेति मत्वा सूत्रमिदमारभ्यत इति तत्त्वम् ॥ ३. १. ५५. ॥

## द्वि-त्रि-चतुष्पूरणाग्रादयः। ३। १। ५६ ॥

**त० प्र०**—'द्वि त्रि चतुर्' इत्येते पूरणप्रत्ययान्ता अग्र इत्यादयश्च शब्दा अंशवाचिनोऽंशिनाऽभिन्नेन वा समस्यन्ते, तत्पुरुषश्च समासो भवति। द्वितीयं भिक्षायाः–द्वितीयभिक्षा, एवं–तृतीयभिक्षा, चतुर्थभिक्षा, तुर्यभिक्षा, तुरीयभिक्षा; अग्रं हस्तस्य–अग्रहस्तः, एवं–तलपादः, ऊर्ध्वकाय इत्यादि; पक्षे–भिक्षाद्वितीयम्, भिक्षातृतीयम्, भिक्षाचतुर्थम्, भिक्षातुर्यम्, भिक्षातुरीयम्, हस्ताग्रम्, पादतलम्, कायोर्ध्वमित्यादि। नित्याधिकाराभावादेव पक्षे वाक्यस्य सिद्धत्वाद् वाऽनुवृत्तिः पक्षे षष्ठीसमासार्थम्, तेन पूरणेन निषिद्धोऽपि षष्ठीसमासो भवति। द्व्यादिग्रहणं किम्? पञ्चमं भिक्षायाः। पूरण इति किम्? द्वौ भिक्षायाः। अंशिनेत्येव–भिक्षाया द्वितीयं भिक्षुकस्य, भिक्षुकेण समासो न भवति। अभिन्नेनेत्येव–द्वितीयं भिक्षाणाम्। अग्रादिराकृतिगणः ॥ ५६ ॥

**श० म० न्यासानुसन्धानम्**–द्वि-त्रि-चतु० इत्यादि। "संख्यापूरणे डट्" [ ७. १. १५५. ] इति प्रकृत्य संख्यापूरणार्थे विहितो यः प्रत्ययः स इह पूरणशब्देन ग्राह्यः, तत्रापि द्वि-त्रि-चतुःशब्दसान्निध्यात् तत्प्रकृतिकोऽवसेयः, द्विश्च त्रिश्च चतुश्चेति समाहारः, तदवयवकसमुदायवृत्तेस्तदन्ततोपपत्तिः, अथवा द्वि-त्रि-चतुरां पूरणः, द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमभिसम्बन्धात् द्व्यादयः पूरणप्रत्ययान्ता इत्यर्थो लभ्यते, तदाह–**'द्वि त्रि चतुर्' इत्येते पूरणप्रत्ययान्ता** इति–"द्विश्च त्रिश्च चत्वारश्च द्वि-त्रि-चतुः, तच्च तत् पूरणं, सूत्रत्वात् पूरणशब्दस्य विशेषणस्यापि न पूर्वनिपातः" इति लघुन्यासकारः। तथा च द्वितीय-तृतीय-चतुर्थ-तुरीय-तुर्यशब्दा इत्यर्थः फलति, **'अग्रादयः'** इति मूलं विवृणोति–**अग्र इत्यादयश्चे**ति–आदिशब्देन मध्य-तलोर्ध्वप्रभृतयो ज्ञेयाः, शेषमनुवृत्त्या पूरयति–**अंशवाचिन** इत्यादिना, अंशा अवयवाः। अथ विगृह्योदाहरति–**द्वितीयं भिक्षायाः** इति विग्रहः, अत्र भागरूपमित्यादि विशेष्यमध्याहार्यं, तथा च तेन सह विशेष्यविशेषणभावेन सापेक्षत्वेऽपि गमकत्वात् समासः, **द्वितीयभिक्षा** इत्यनेन समासः, पूरणप्रत्ययान्तस्य प्रथमोक्तत्वात् प्राग् निपातः, भिक्षाया द्वितीयो भाग इति समासार्थः, अतिदिशति–**एवमिति**, **तृतीयभिक्षा** इति समासः, तृतीयं भिक्षाया इति विग्रहः, **चतुर्थभिक्षा** इति समासः, चतुर्थं भिक्षाया इति विग्रहः, **तुर्यभिक्षा**

इति समासः, तुर्यं भिक्षाया इति विग्रहः, **तुरीयभिक्षा** इति समासः, तुरीयं भिक्षाया इति विग्रहः, द्वयोः पूरणमिति "द्वेस्तीयः" [ ७. १. १६५. ] इति तीये 'द्वितीय'मिति, त्रयाणां पूरणमिति "त्रेस्तृ च" [ ७. १. १६६. ] इति तीये 'तृ'इत्यादेशे च 'तृतीय'मिति, चतुर्णां पूरणमिति "चतुरः" [ ७. १. १६३. ] इति थटि 'चतुर्थ'मिति, "येयौ च लुक् च" [ ७. १. १६४. ] इति च 'तुर्य'मिति 'तुरीय'मिति च, 'चतुर्थ' इत्यत्र रेफस्य सकारो न भवति "चतुर्थी" [ २. २. ५३. ] इति सूत्रनिर्देशात् । अथाग्रादीन् विगृह्योदाहरति–**अग्रं हस्तस्येति** विग्रहः, **अग्रहस्तः** इति समासः, हस्ताग्रभाग इति तदर्थः, अतिदिशति–**एवमिति**, **तलपादः** इति समासः, तलं पादस्येति विग्रहः, **ऊर्ध्वकायः** इति समासः, ऊर्ध्वं कायस्येति विग्रहः । प्रकृतसूत्रस्य वैकल्पिकत्वात् पाक्षिकप्रवृत्त्यभावे षष्ठीसमासोऽपि भवतीत्याह–**पक्षे भिक्षाद्वितीयमित्यादि**–द्वितीयं भिक्षाया इति "षष्ठ्ययत्नाच्छेषे" [ ३. १. ७६. ] इति षष्ठीतत्पुरुषः, षष्ठ्यन्तस्य प्रथमोक्तत्वात् तस्य पूर्वनिपातः । ननु कथमिह षष्ठीसमासः ? "तृप्तार्थपूरणा०" [ ३. १. ८५. ] इति पूरणप्रत्ययान्तेन समासनिषेधादित्याशङ्कायामाह–**नित्याधिकाराभावादेवे**त्यादि, अत्रायं विचारः–ननु पूरणप्रत्ययान्तेन षष्ठीसमासनिषेधात् कथं भिक्षाद्वितीयमित्यादिः षष्ठीसमासः, प्रकृतसूत्रे वाग्रहणसामर्थ्यात् [ विकल्पानुवर्तनसामर्थ्यात् ] पक्षे षष्ठीसमासोऽपि स्यात्, अथ वाग्रहणं वाक्यार्थं कस्मान्न भवति, असति वाग्रहणे वाक्ये प्राप्ते 'येनाप्राप्त०' न्यायेनारभ्यमाणः समासो वाक्यस्य बाधकः स्यात्, स न बाधते–वाक्यमपि स्यात् तदर्थं वाग्रहणमस्तु । अथैवं मन्येत–भिन्नार्थौ वाक्यसमासौ, वाक्यं हि विशेषविषयमुपसर्जनस्य तत्र संख्यादिविशेषप्रतीतेः, तदभावात् सामान्यविषयः समासः, नहि समासे उपसर्जनार्थस्य संख्यादिभेदप्रतीतिरस्ति, समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितं निवर्तयति, यथा–गोशब्दो गावीशब्दं, तत्र तस्मिन् प्राप्ते शास्त्रान्वितारम्भादिति समासो न वाक्यं निवर्तयति, येन तदर्थं वाग्रहणमुपयुज्येत; एवं सत्यन्यत्रापि सर्वत्र वाक्यप्रसङ्गः, तथा च नित्यसमासः कश्चिदपि न स्यात्; अथ नित्यग्रहणान्नियतविषयमभिधानम्, क्वचिदेकार्थीभाव एव, क्वचिदेकार्थीभावो व्यपेक्षा च, क्वचिद् व्यपेक्षैवेति नित्यसमासोऽपि स्यादिति; तथा सति वाक्यनिवृत्त्यर्थं नित्यग्रहणं, समासवृत्त्यर्थश्च यत्नः, एवमिह वाक्यार्थं वाग्रहणमपि युक्तम्, न ह्ययं विचारो यत्नमन्तरेण सुकरः प्रतिपत्तुमिति; द्वितीयं भिक्षाया इति व्यपेक्षाविषयः समुदायः, स च नित्यग्रहणेनापि तदभावे सिध्यति यथा पूर्वत्र, अतो नेह वाग्रहणं वाक्यार्थमपि तु प्राप्नुवतः समासान्तरस्य षष्ठीसमासस्य प्रापणार्थमेव, तेन पूरणप्रत्ययान्तनिषेधो न भवति । ननु च नित्याधिकाराभावालब्धेनैव वाग्रहणेन षष्ठीसमासो भवति, तद्विपक्षे समासाभावार्थं तत्र वाक्यमपि प्राप्नोति षष्ठीसमासश्च, तत्र वाक्ये प्राप्त आरभ्यमाणः षष्ठीसमासो भवति, सोऽपि पाक्षिकः, तदभावे वाक्यमपि स्यादिति त्रैरूप्यं सिध्यति; अथैवं मन्येत–तेन वाग्रहणेन समासाभावे न तत्र षष्ठीसमासः स्यात् "तृप्तार्थपूरणा०" [ ३. १. ८५. ] इति प्रतिषेधादिति । यद्येवं कृतेऽपीह पुनर्वाग्रहणे तदपि पक्षे समासाभावमेव करोतीति पूर्ववत् पुनरपि षष्ठीसमासाभावः स्यात्, उच्यते–पूर्वकं वाग्रहणं "तृप्तार्थ०" [ ३. १. ८५. ] इति षष्ठीसमासप्रतिषेधेऽपि वाक्यप्रापणेन कृतार्थम्, अन्यथा वाक्ये लाभात्र निषेधं सावकाशमपसारयितुं समर्थम्, इदं तु वाक्यस्य तेनैव सिद्धत्वादनवकाशं शक्नोति निषेधमपसारयितुम्, द्वित्रिचतुष्पूरणान्तं वा समस्यते षष्ठी वेति द्वयोर्विकल्पेनान्यथानर्थक्यात् । किञ्च यत्रोत्सर्गापवादे विभाषा न तत्रापवादविनिर्मुक्त उत्सर्गो भवति, विकल्पान्तरे प्राप्ते विकल्पान्तरस्यारभ्यमाणस्य बाधकत्वात् । पदकृत्यं पृच्छति–**द्व्यादिग्रहणं किमिति**–अंशवाचकत्वेन पूरणप्रत्ययान्ता एते एव प्रायः प्रसिद्धा इति वृथैषां ग्रहणं 'पूरणाग्रादयः' इत्येव सूत्र्यतामिति शङ्काशयः, प्रत्युदाहरणमुखेनोत्तरयति–**पञ्चमं भिक्षायाः** इति–यथैते द्व्यादयोंऽशवाचकास्तथाऽन्योऽपि पूरणप्रत्ययान्तो भवितुमर्हति समानन्यायादिति तत्र समासो नेष्ट इत्युत्तराशयः, **पञ्चानां पूरणमिति**–"नो मट्" [ ७. १. १५९. ] इति मटि–पञ्चममिति, अत्र चैतत्सूत्रस्थवाग्रहणेन प्रसूतः षष्ठीसमासोऽपि न, स्वविषयातिरिक्तविषये सामर्थ्याभावेन "तृप्ता०" [ ३. १. ८५ ] इति निषेधवारणेऽसामर्थ्यात् । पुनः पृच्छति–**पूरणेति किमिति**–'अंशिना' इत्यधिकारसामर्थ्यादंशवाचिन एव ग्रहणं स्यादिति पूरणग्रहणेऽपि केवलद्व्यादिशब्दानामंशवाचित्वाभावात् पूरणप्रत्ययान्तानामेव ग्रहणं स्यादिति प्रश्नाशयः, प्रत्युदाहरणमुखेनोत्तरयति–**द्वौ भिक्षायाः** इति–यत्र प्रकरणादिना 'भागौ' इति विशेष्यं लब्धं तत्र विशेषणमात्रवाचकस्यापि 'द्वौ' इति पदस्य शान्ताकाङ्क्षत्वेन भिक्षया सह सामर्थ्यसम्भवाद् भवति तस्यांशवाचकत्वमपीति तत्र द्व्यादिग्रहणसामर्थ्यात् समासः स्यादित्युत्तराशयः । अंशवाचिनां सूत्रपठितानां प्रायोऽशिनैव सह सामर्थ्यमिति तदभावेऽपि [ अंशिनेति पदानुवृत्त्यभावेऽपि ] दोषाभाव इत्याशङ्कामपनेतुमाह–**अंशिनेत्येवे**ति, व्यावर्त्यमाह–**भिक्षाया द्वितीयं भिक्षुकस्ये**ति–अंशिनेव स्वामिनापि सह तस्य साकाङ्क्षत्वमिति भिक्षुकेण समासो मा भूदित्येतदर्थमंशिनेति पदमनुवर्तनीयमेवेति भावः । पूर्वसूत्रादिवत् 'अंशिना' इत्यस्य 'अभिन्नेन' इति विशेषणमपीह पूर्ववद्भिन्नांशिव्यावर्तनाया-

दरणीयमेवेत्याह-**अभिन्नेनेत्येवेति**, व्यावर्त्यमाह-**द्वितीयं भिक्षाणामिति**-अत्र भिक्षाणां बहुत्वेन भिन्नत्वप्रतीतेर्न समासः, अग्रादय इत्यत्र बहुवचनेनादिशब्देनाकृतिगणता ज्ञेयेत्याह-**अग्रादिराकृतिगण** इति ॥ ३. १. ५६. ॥

## कालो द्विगौ च मेयैः । ३ । १ । ५७ ॥

**त० प्र०**—अंशांशिनिवृत्तौ तत्संबद्धं वेति निवृत्तम् । कालवाचि नामैकवचनान्तं, द्विगौ च विषये वर्तमानं मेयवाचिना नाम्ना समस्यते, तत्पुरुषश्च समासो भवति । मासो जातस्य-मासजातः, मासजातौ, मासजाताः, मासजाता स्त्री, एवं-संवत्सरजातः, मासमृतः, संवत्सरमृतः; द्विगौ-एको मासो जातस्य-एकमासजातः, द्वे अहनी सुप्तस्य-द्व्यहसुप्तः, त्र्यहाध्यापितः । कथं द्व्यहजातः, त्र्यहजातः? समाहारद्विगोर्जातेन काल इत्यंशेन समासेन भविष्यति । इह च यद्यपि विग्रहे जातादि कालस्य विशेषणं तथापि शब्दशक्तिस्वाभाव्यात् समासो जातादिप्रधानः, तेन समासे लिङ्गं संख्या च तदीयतदीयमेव भवति । काल इति किम्? द्रोणो धान्यस्य, काल इति चैकवचनं द्विगोरन्यत्र प्रयोजकम्, तेन मासौ मासा वा जातस्येत्यत्र न भवति, द्विगौ तु द्वौ त्रयो वा मासा जातस्य-द्विमासजातः, त्रिमासजात इत्यपि भवति, द्विगुग्रहणं त्रिपदसमासार्थम्, अन्यथा नाम नाम्नेत्यनुवृत्तेर्द्वयोरेव स्यात् । चकारो द्विगुरहितकालपरिग्रहार्थः । मेयैरिति किम्? मासश्चैत्रस्य, जातादेरेव हि मेयत्वं जन्मादेः प्रभृति जातादिसंबन्धित्वेनैवादित्यगतेः परिच्छेदात्, न द्रव्यमात्रस्य; कान्तेनैव च मेयेन प्रायेणायं समास इष्यते, तेन 'मासो गच्छतः, वर्षमधीयानस्य, मासो गन्तुं वर्तते' इत्यादौ न भवति । अयमपि षष्ठीसमासापवादो योगः ॥ ५७ ॥

**श० म० न्यासानुसन्धानम्-कालो०** इत्यादि । **अंशांशिनिवृत्ताविति**-कालस्य मेयैः सहांशांशिभावाभावात् तद्वाचकयोरिह सम्भवाभावात् *सम्भव-व्यभिचाराभ्यां स्याद् विशेषणमर्थवद्* इति न्यायेन तदनुवृत्तेर्वैयर्थ्यापत्त्या तन्निवृत्तिरिति भावः । **तत्सम्बद्धं वेति निवृत्तमिति**-ताभ्यां वाशब्दस्य सम्बन्धश्चैकयोगनिर्दिष्टत्वरूपः, तथा च *एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः* इति न्यायाद् वाशब्दस्यापि निवृत्तिरुचितैवेति भावः । **कालः** इति कालशब्दो न विवक्षितः, किन्त्विह कालपदं स्ववाचके लाक्षणिकमिति तत्पदेन कालवाचकं नाम गृह्यत इत्याह-**कालवाचि नामेति**, किञ्च **काल** इति कालविशेषपरिग्रहः, न कालशब्दस्य नापि तत्पर्यायाणां 'वेला समय' इत्यादीनां, मेयैरिति वचनात्, मेयैरिति वचनाद्धिकालेन मानेन भवितव्यं सन्निधानात्, तदपेक्षया मेयविज्ञानात्, न च तस्मिन्नमाने तदपेक्षं मेयत्वमुपपद्यते, मानश्च कालः कालविशेषो मुहूर्तादिर्भवति, न तु कालमात्रमिति । **एकवचनान्तमिति**-'कालः' इत्येकवचनस्य विवक्षितत्वादिति भावः, यद्यपि वृत्तौ सर्वत्रैकत्वमेव स्वाभाविकतया भासते, प्रतिपादितं चैतद् महाभाष्यादिष्वपि बहुशः, "अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिः" इति च कौण्डभट्टेनापि वैयाकरणभूषणसारे प्रतिपादितं विस्तरेण, तथापि विवक्षावशादर्थवशाद् वा क्वचिद् द्वित्वादिभानमपीष्यते, इह तु तन्नेति स्फोरयितुमेकवचनान्तमित्युक्तम् । **मेयवाचिनेति**-कालो हि मापकः सर्वेषां वस्तूनां परिच्छेदकः, तस्य मेयवाचिभिः-परिच्छेद्यवाचिभिः सामर्थ्यं स्वाभाविकमेव तथापि कालकृतपरिच्छेदयोग्यक्रियासम्बन्धशून्यस्य द्रव्यमात्रस्य कालवाचिना समासाभावार्थमेतदुक्तमित्यग्रे स्फुटीभविष्यति ।

अथ विग्रहोदाहरति-**मासो जातस्येति** विग्रहः, **मासजातः** इति च समासः, मासपरिच्छिन्नं भूतजनिक्रियाकर्तृत्वमित्यर्थः, मासपरिच्छिन्ना एककर्तृका भूतकालिका जनिक्रियेत्यर्थो वा; **मासजाताविति** समासः, मासो जातयोरिति विग्रहः, **मासजाताः** इति समासः, मासो जातानामिति विग्रहः, **मासजाता** इति समासः, **स्त्रीति** समासविशेष्यं, मासो जातायाइति विग्रहः, अतिदिशति- **एवमिति**, **संवत्सरजातः** इति समासः, संवत्सरो जातस्येति विग्रहः, **मासमृतः** इति समासः, मासो मृतस्येति विग्रहः, **संवत्सरमृतः** इति समासः, संवत्सरो मृतस्येति विग्रहः; सूत्रार्थो विभज्य दर्शितः प्राक्-एकवचनान्तं कालवाचि नाम मेयवाचिना समस्यते, द्विगुविषये वर्तमानं नाम मेयवाचिना समस्यते इति च, तत्र प्रथमार्थानुगतमुदाहृत्याथ द्वितीयार्थानुगतमुदाहर्तुमाह-**द्विगाविति**, **एको मासो जातस्येति** विग्रहः, **एकमासजातः** इति च समासः, अत्र एक इति च मास इति च नामद्वयं जातस्य इति नाम्ना समस्यते, ततस्त्रिपदे समासे जाते जात इत्युत्तरपदे परे "संख्या समाहारे च द्विगुश्च०" [ ३. १. ९९. ] इत्येकशब्दस्य मासशब्देन द्विगुसंज्ञा, अतोऽत्र द्विगुविषये द्वयोर्नाम्नोरुत्तरपदनिमित्ते द्विगौ भाविनि त्रयाणां तत्पुरुषः, तत्र द्वयोर्द्विगुत्वे द्विगुस्तत्पुरुष इति तत्पुरुषसंज्ञापि भवति, नन्विह द्विगोस्तत्पुरुषसंज्ञा भवतु वा मा, न कंचन फलविशेषं पश्याम इत्याशङ्कायां फलविशेषकलितमुदाहरणान्तरं विगृह्याह-**द्वे अहनी सुप्तस्येति** विग्रहः, **द्व्यहसुप्तः** इति च समासः, अत्र द्विशब्दस्याहःशब्देन द्विगुसंज्ञा, द्विगुत्वाच्च तत्पुरुषसंज्ञा, तत्पुरुषसंज्ञया च "सर्वांशसंख्याव्ययात्" [७. ३. ११८.] इति समासान्तोऽट् 'अह' इत्यादेशश्च सिध्यति, तत्पुरुषसंज्ञाविरहे समासान्तादेशौ न स्यातां, तत्पुरुषमाश्रित्यैव तयोर्विधानात् । एवम्-**त्र्यहाध्यापितः** इति समासः, त्रीणि अहानि अध्या-

पितस्येति विग्रहः, शेषं प्रागवदवसेयम् । शङ्कते-**कथं द्व्यहजातः, त्र्यहजातः** इति-अयमाशयः शङ्कायाः-द्वे अहनी जातस्य त्रीणि अहानि जातस्येति विग्रहे प्रागवददसमान्तेऽह्लादेशे च 'द्व्यह्नजातः, त्र्यह्नजातः' इति भवितव्यमिति, समाधत्ते-**समाहाराद् द्विगोर्जातेन काल इत्यंशेन समासेन भविष्यतीति**, अयं समाधानाशयः-द्वयोरह्नोः समाहार इति "संख्या समाहारे०" [ ३. १. ९९. ] इति समासे द्व्यह इति, अत्र "द्विगोरनह्न०" [ ७. ३. ९९. ] इत्यत्र 'अहन्' ग्रहणात् ज्ञापकात् "सर्वांश०" [ ७. ३. ११८. ] इति परमप्यट बाधित्वा "द्विगोरनह्नोऽट्" [ ७. ३. ९९. ] इत्यट् समासान्त एव भवति, ततोऽह्लादेशाभावः, समाहारेऽपि "अह्ननिर्व्यूहकलहाः" इति लिङ्गानुशासनात् पुंस्त्वमवसेयम्, ततो द्व्यहो जातस्येति प्रकृतसूत्रस्य "कालवाचि एकवचनान्तं नाम मेयवाचिना समस्यते' इत्यंशेन समासे सति द्व्यहजात इति, एवं त्रयाणामह्नां समाहारः-त्र्यहः, त्र्यहो जातस्येति त्र्यहजात इति विज्ञेयम् । न चैवं सति द्व्यह्नसुप्त इत्यादिप्रयोगानुपपत्तिः, उत्तरपदे परे ह्ययं द्विगुः, न समाहारे, ततो न "द्विगोरनह्नोऽट्" [ ७. ३. ९९. ] इत्यस्य प्रवृत्तिः, तद्धि समाहार एव प्रवर्तते नान्यत्रेति सर्वं विशदमिति ।

अथ किंप्रधानोऽयं समासः, यदि पूर्वपदार्थप्रधानस्तदा 'मासो जाताया मासजाता' इत्यत्र "गोश्चान्ते ह्रस्वो०" [ २. ४. ९६. ] इति ह्रस्वत्वं प्रसज्यते, पूर्वपदार्थस्य मासादेर्यल्लिङ्गं संख्या च तत् समासस्य स्यात्, नोत्तरपदस्य जातादेः, ततश्च सर्वत्र पुंलिङ्गैकवचनश्रुतिरेव स्यात्-मासजात इति, न तु 'मासजातौ, मासजाताः, मासजाता' इति लिङ्गान्तरवचनान्तरश्रुतिः, प्रधानस्य लिङ्गसंख्याभ्यां भवितव्यं, यथा-निष्कौशाम्बिः, अतिखट्व इति, "परलिङ्गो द्वन्द्वोऽंशी" इति लिङ्गानुशासनबलेन परवल्लिङ्गेऽपि ह्रस्ववचनदोषो दुर्निवारः, ह्रस्वे हि मासो जातवत्या इति मासजातवतीत्यत्र ह्रस्वः श्रूयेत । अथोत्तरपदार्थप्रधानोऽयं समासस्तदा विग्रहोऽनुपपन्नः-मासो जातस्येति, अत्र हि जातस्येति षष्ठ्यन्तेन परार्थेन समासो विशेष्यते, यथा-राज्ञः पुरुष इत्यत्र पुरुषः, समासानुगुणेन च विग्रहवाक्येन भवितव्यं तस्मास्मिन्नर्थेऽयं समास इति तदर्थदर्शनपरत्वादित्यत आह-**इह च यद्यपि विग्रहे** इत्यादि-यद्यपि विग्रहवाक्ये जातादिरुत्तरपदार्थः कालस्य मासादेर्विशेषणं, समासस्तु यो जातादेरुत्तरपदस्यार्थस्तत्प्रधानो विज्ञायते, शब्दशक्तिस्वाभाव्यात्, शब्दशक्तिरीदृशी, तथा च मासजात आनीयतां मासजातः शोभन इति स मासविशिष्टो जातो दारक एवानयनादिना युज्यते, **न तु मासः**, दृष्टश्च वृत्ति-वाक्ययोरन्यत्रापि विपरीतो विशेष्यविशेषणभावः, यथा चित्रा गावोऽस्य चित्रगुरिति, सत्यपि च भेदे कयाचिदनन्यसमविन्या प्रत्यासत्त्या विग्रहो भवति, नहि वृत्ति-वाक्ययोः क्वचिदपि सर्वथा शब्दतोऽर्थतो वा साम्यमस्ति, संख्यादिभेदोपपत्तेः, **तेन** जातादेरुत्तरपदार्थस्य प्राधान्येन हेतुना, समासस्य लिङ्गं संख्या च **तदीयमेव** जातादेरुत्तरपदार्थस्य यत् तदेव भवति, न पूर्वपदार्थस्य मासादेः; एवं "गोश्चान्ते०" [ २. ४. ९६. ] इति ह्रस्वश्च न भवति । यद्ययमुत्तरपदार्थप्रधानः समासस्तदा यथान्यत्र 'राज्ञः पुरुषो राजपुरुषः, राज्ञः पुरुषं राजपुरुषम्' इति प्रधानपदं वाक्यविभक्तिं वृत्तावपि न परित्यजति, तथात्र कस्मान्न भवति, अत्र तु वाक्ये षष्ठी वृत्तौ प्रथमादयः, केनैतदेवं भवतीति चेत्? उच्यते-पूर्वपदेनोत्तरपदस्य यः सम्बन्धः स विपर्यस्तविशेष्यविशेषणभावः समासेऽन्तर्भूतः, स जातस्य यस्य मासः संवृत्तः स मासजात इति समासेन तत्सम्बन्धविशिष्टाभिधानात्, सम्बन्धस्य च न्यग्भावात्, अतस्तत्र विभक्तिर्न भवति, यथा-राजपुरुषश्चित्रगुरिति राजपुरुषादिसम्बन्धे प्रधानत्वात् प्रधानसम्बन्धे तद्योग्यैव विभक्तिर्भवति, एतदुक्तं भवति-राज्ञः पुरुषो राजपुरुष इत्यत्र वाक्ये यत् प्रधानमुपसर्जनं च तदेव वृत्तावपि, प्रधानोपसर्जनसम्बन्धश्च वाक्ये विभक्तिगम्यो वृत्तौ वृत्त्यैव गम्यते इति न तत्र विभक्तिर्भवति, प्रधानस्य तु यः पदान्तरसम्बन्धः स न वृत्त्या गत इति तत्र वृत्तौ वाक्ये चैकैव विभक्तिर्भवति, इह तु विपरीतो विशेषणविशेष्यभावः, वाक्ये मासादिः प्रधानं जातादिरप्रधानं, वृत्तौ तु मासादिरप्रधानं, जातादिः प्रधानं, तत्सम्बन्धश्च वृत्त्या गतः, न प्रधानस्य पदान्तरसम्बन्ध इति वाक्ये षष्ठी, वृत्तौ पदान्तरसम्बन्धयोग्याः सर्वा विभक्तयो भवन्तीति, मासजातस्येत्यपि बाह्यसम्बन्ध एव-मासजातस्य हस्तः पादो वेति, न तु माससम्बन्धे ।

पदकृत्यं पृच्छति-**काल इति किमिति**-मेयप्रत्यासत्त्या मानवाचिन एव ग्रहणसम्भवे कालस्यापि मानतया तस्य ग्रहणं भविष्यतीति कालग्रहणं व्यतिरिच्यत इति प्रश्नाशयः; प्रत्युदाहरणमुखेन समाधत्ते-**द्रोणो धान्यस्येति**-द्रोणो मानविशेषः, न केवलं कालस्यैव मानत्वमपि तु कालभिन्नस्य द्रोणादेरपीति तत्र समासो मा भूदित्येतदर्थं कालग्रहणमावश्यकमिति समाधानाशयः । अथ **'कालः'** इत्येकवचनान्तप्रयोगेणैकवचनान्तस्यैव तस्य समासो भवितुमर्हं इति द्विमासजातादयः प्रयोगा न स्युः, अथ न तत्रैकत्वविवक्षेति स्वीकृत्य यदि तेषां साधुत्वमाश्रीयते तर्हि मासौ जातस्य मासा जातस्येत्यादिविग्रहेऽपि समासः स्यादित्याशङ्कायामाह-**काल इति चैकवचनमिति, द्विगोरन्यत्र प्रयोजकमिति**-द्विगोरन्यत्रैव तच्चरितार्थमिति कृत्वा द्विगौ तन्न प्रवर्तत इति तत्र द्विवचनान्त-बहुवचनान्तयोरपि समासो भवति, एतदपि शब्दशक्तिस्वाभाव्यादेव लभ्यते, मासजात इत्यादिप्रयोगे चैकत्वमेव मासशब्दे प्रतीयते, न द्वित्वादीति

न द्विवचनान्तेन बहुवचनान्तेन वा विग्रहः, एकत्वं हि प्रवृत्तिनिमित्तस्यैकत्वाद् वस्त्वन्तरानपेक्षत्वाच्च प्रतीयते, द्वित्वादिका तु संख्या वस्त्वन्तरापेक्षत्वाद् बहिरङ्गेति सा विना निमित्तविशेषं न प्रतीयते। तदुक्तं हरिणा–

5 "शौर्पिके मासजाते च, परिमाणं स्वभावतः।
उपाधिभेदमाश्रित्य संख्या भेदेन वर्तते ॥ १ ॥" इति।

यथा शौर्पिकादिप्रयोगे एकत्वरूपा संख्या स्वरूपेण भासते तथैव मासजातेऽपि, तत्र हेतुमाह–स्वभावत इति, कुत्र सा संख्या प्रतीयते तदाह–परिमाणमुपाधिभूतमाश्रित्येति, परिमाणमत्र परिमाणत्वं, तदेव शूर्पमासादिशब्दानामुपाधिभूतं, तदाश्रित्यैव संख्या प्रतीयत इति भावः। कालवाचिनो द्विगुसमासोऽन्येनैव सिद्ध इति द्विगुग्रहणं व्यर्थमिति चेत्? अत्राह–**द्विगुग्रहणं त्रिपदसमासार्थमि**ति–द्विगुविषये त्रयाणामपि पदानां समासो यथा स्यादित्येवमर्थं द्विगुग्रहणम्, **अन्यथे**त्यादिना द्विगुग्रहणाभावे एतन्न लभ्यत इति व्यतिरेकमाह, **अन्यथा** द्विगुग्रहणाभावे, अत्र **द्वयोरेव** नाम्नोः समासः स्यात्, न त्रयाणां, **नाम नाम्नेत्यनुवृत्तेः** नाम नाम्नेत्यनुवर्तते, तत्र च संख्या विवक्षिता, अन्यथातिप्रसङ्गात्, अथेह न विवक्ष्येत तथाप्यद्विगावपि प्रसङ्गादतिप्रसज्यते, अतः संख्याविवक्षायां नाम नाम्नेति द्वयोरेव समाप्यते, नातिरिच्यते, इति त्रिपदसमासो न प्राप्नोति, द्विगुग्रहणे तु द्विगुग्रहणसामर्थ्यात्, अन्यथा द्विगुग्रहणानर्थक्याद् द्विगुविषये नामेत्यस्य संख्याविवक्षां परित्यज्य त्रिपदः समासो विज्ञायते। सूत्रे चकारग्रहणं किमर्थमित्याकाङ्क्षायामाह–**चकारो द्विगुरहितकालपरिग्रहार्थः** इति–असति चकारे "कालो द्विगौ मेयैः" इत्युच्यमाने द्विगावेव स्यान्न केवलस्य नाम नाम्ना, अथ योगविभागः क्रियेत–"कालो मेयैः, द्विगौ" इति, चकाराद् योगविभागो गरीयान्। पुनः पृच्छति–**मेयैरिति किमि**ति–कालः परिच्छेदकः, तस्य स्वभावत एव परिच्छेद्यवाचिना समासो भविष्यतीति मेयग्रहणं विफलमिति प्रश्नाशयः, प्रत्युदाहरणमुखेनोत्तरयति–**मासश्चैत्रस्ये**ति–अत्रोत्सवादिसम्बन्धिमासस्वामित्वेऽपि चैत्रस्य न परिच्छेद्यत्वमिति न भवति समासः, मेयैरित्यस्याभावे तु स स्यादेवेति भावः। अत्रायं विचारः–ननु कथमिह जातादेर्मेयत्वं, जातो मृत इत्यत्र हि द्वयं सन्निहितं भवति–उपसर्जनं च क्रिया, प्रधानं च द्रव्यम्, तत्र न द्रव्यं मासादिना मीयते कालस्य क्रियामानत्वात्, न च जन्म मरणं वा क्रिया मीयते, तस्य क्षणिकत्वान्मासादेरव्यापकत्वात्। किञ्च कियान् कालो जातस्य दारकस्येति बुभुत्सिते मासजात इति प्रयुज्यते, तत्र कालस्य मेयत्वं युक्तं परिचिच्छित्सितत्वात्, न जातस्य तत्सम्बन्धितयोपात्तस्य, यथा कियन्तोऽस्य पुत्रा इति प्रश्ने शतमित्युक्ते न पुत्रवान् पिता मेयो भवति, अपि तु पुत्र एव, न च कालो नाम तदात्मभूतः, स ह्यहोरात्रादिलक्षण आदित्यादिगतिरूपः, येन तस्मिन् मेये जातादिर्मेयो भवति, मेयेन च समास उच्यते; उच्यते–सत्यम्, कियान् कालो जातस्येति बुभुत्सिते मासजात इति प्रयुज्यते, किन्तु तत्कालबुभुत्सा तस्यैव जातादेर्बुभुत्सया क्रियते, न पुत्रादिबुभुत्सावत्; किञ्चिद्धन्यार्थं बुभुत्स्यते किञ्चिदन्यार्थम्, कालोऽपि तस्येति व्यपदिश्यमानः, इति जातादिस्तत्सम्बन्धिकालपरिच्छेदसम्मितो भवति, जन्मादेः प्रभृत्या विवक्षितात् कालाद् एतावत्कालमरणादिक इति, यथा संख्यापरिमाणादिमाने–का संख्या पुत्राणां शतं, किं परिमाणं काष्ठस्य दिष्टिरिति, पदार्थो हि केनचिद् धर्मेण मीयते, न तावता तस्य [ मानभूतस्य ] मेयत्वं हीयते, कालोऽपि च पदार्थस्य धर्मो भवति, यथा संख्यादिः। द्रव्यक्षेत्रकालभावात्मकं हि घटिकादिकं तत्त्वं प्रतिजानते जैनाः, लोके च कियन्तस्ते पुत्राः कियान् घट इति प्रश्ने संख्यापरिमाणादिना मानेन परिच्छिन्नः प्रयुज्यते– शतमेतावानिति च, तथा कियांस्ते दारक इति पृष्टे कालेन परिच्छिन्नः प्रत्युच्यते–मासजातः संवत्सरजात इति, अतो मासाद्यपेक्षया जातादेर्मेयत्वमुपपद्यते। जातादेरित्यत्र जन्मादेरित्यत्र चादिपदेन मरणादिपरिग्रहः, यद्यपि मास इत्यादिना तस्य जातादेः सम्बन्ध्यादित्यगतिरूपः कालो मीयते तथापि जन्मादेः प्रभृति तत्परिच्छेदादसौ जातादिः परिच्छिन्नो भवति–एतावत्कालकः स इति, अतो जातादेर्मेयत्वमुपपद्यत इति जातादिसमासोपपत्तिः, सूत्रे '**मेयैः**' इति सामान्यतो निर्दिष्टमपि मेयविशेषपरमित्याह–**कान्तेनैव च मेयेन प्रायेणायं समास इष्यते** इति–प्रायग्रहणादस्याप्यर्थस्य शब्दशक्तिस्वाभाव्यादेव लाभ इति प्रतीयते, अभिधीयमान एवार्थः शास्त्रेणानुशास्यते, न तु किञ्चन नूतनं बोध्यत इति तत्र तत्राचार्यैः स्पष्टमुक्ततया क्तान्तेनैव कालः समस्यमानोऽर्थमभिदधानो दृष्ट इति तेनैव समास इति भावः, तत्फलमाह–**तेने**त्यादिना–ईदृशाभिधानस्वाभाव्यलब्धार्थस्वीकारेणेति भावः। पूर्ववत् समासस्य सामान्यसूत्रेणैव सिद्धिमाशङ्क्य सूत्रस्य सार्थक्यमाह–**अयमपि षष्ठीसमासापवादः** इति–मानमेयसम्बन्धेऽत्र षष्ठी भवति–मासो जातस्येति, तत्र षष्ठीसमासः प्राप्नोति, तस्मिन् प्राप्त एवारम्भात् तस्यायमपवादः, तेनेह षष्ठीसमासो न भवति, एतदभावे षष्ठीसमासे च जातादेरेव प्राक् प्रयोगः स्यादिति भावः ॥ ३. १. ५७. ॥

## स्वयं-सामी क्तेन । ३ । १ । ५८ ॥

**त० प्र०**–'स्वयं सामि' इत्येते अव्यये क्तान्तेन नाम्ना सह समस्येते, तत्पुरुषश्च समासो भवति। स्वयंधौतौ पादौ,

स्वयंविलीनमाज्यम्, आत्मनेत्यर्थः; सामिकृतम्, सामिभुक्तम्, अर्धमित्यर्थः। समासे सत्यैकपद्यादेकविभक्तिस्तद्धितात्युत्पत्तिश्च भवति–स्वायंधौतिः, सामिकृतिः, सामिकृतायनिरित्यादि । क्तेनेति किम्? स्वयं कृत्वा, सामि भुक्त्वा ॥ ५८ ॥

5 **श० म० न्यासानुसन्धानम्–स्वयं०** इति । क्त इति प्रत्ययः, तेन प्रकृतिराक्षिप्यते, तथा च तदवयवकः समुदायः, तस्य "विशेषणमन्तः" [ ७. ४. ११३. ] इति तदन्तप्रतिपत्तिरित्याह–**क्तप्रत्ययान्तेने**ति । "धावूग् गतिशुद्ध्योः" अतः क्ते "अनुनासिके च च्छ्वः०" [ ४. १. १०८ ]
10 इति वस्योटि "ऊटा" [ १. २. १३. ] इत्यौकारे 'धौत' इति, ततोऽनेन समासे–**स्वयंधौतौ, पादा**विति तस्य विशेष्यम्, **स्वयंविलीनमि**ति समासः, तस्याज्यमिति विशेष्यं, स्वयंशब्दस्यार्थमाह–**आत्मनेत्यर्थः** इति–अत्र कर्तरि करणे वा तृतीया, विलीनमिति विपूर्वकस्य लीधातो रूपं, यद्ययं "लींङ्च्
15 श्लेषणे" इति दिवादिस्तदा सूयत्यादिगणपठितत्वात् ततः परस्य क्तस्य "सूयत्याद्योदितः" [ ४. २. ७०. ] इति क्तस्य नत्वम्, अथ यदि "लींश् श्लेषणे" इति क्र्यादिस्तदा ल्वादिगणपठितत्वात् "ऋल्वादेः०" [ ४. २. ६८. ] इति ततः परस्य क्तस्य नत्वम्, "कृत् सगतिकारकस्यापि" [ ७. ४. ११७. ] इति
20 विलीनमित्यपि क्तान्तमेव । **सामिकृतमि**ति कृगः क्तान्तेन **सामिभुक्तमि**ति भुजेः क्तान्तेन समासः, सामिशब्दार्थमाह–**अर्धमित्यर्थः** इति । ननु 'स्वयं-सामि'शब्दावव्यये, तयोः समासेऽसमासे वा न कश्चिद् विशेष उभयत्रापि तुल्यरूपत्वादित्याशङ्कायामाह–**समासे सत्यैकपद्यादेकविभक्तिस्तद्धिता-**
25 **त्युत्पत्तिश्चे**ति–ऐकपद्यार्थं समासवचनं, समासे ह्येकार्थीभावात् समुदायात् स्याद्युत्पत्तावैकपद्यं पूर्वोत्तरपदयोर्भवति, तेन किं सिद्धम्? एकविभक्तिः, समाससंज्ञस्य नामसंज्ञया स्यादिप्रकृतित्वेन तत एव यथायोगमेका विभक्तिः, स्याद्यन्ततया पदत्वात् तत एव तद्धितप्रत्ययोत्पत्तिरिति तस्यैव तद्धितप्रत्ययनिमित्तं कार्यमिति
30 सर्वः समासकृत एव विशेषः । तथा समासत्वात् तत्र नित्यं सन्धिर्विरामाभावोऽपि वाक्यतो विशेषो ज्ञातव्यः, यदुक्तं—

संहितैकपदे नित्या, नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु, सा विवक्षामपेक्षते ॥" इति ।

अयमर्थः–वर्णानां परस्परं सन्निकर्षः संहिता, तस्या विषयं
35 दर्शयति–संहितेत्यादिना, एकपदे नित्या संहिता, धातूपसर्गयोर्नित्या संहिता, नित्यसमुदितत्वात्, समासे नित्या संहिता निरन्तरानेकपदात्मकत्वात्, पद-धातूपसर्ग-समासानां च नियमेनैकप्रयत्नोच्चार्यत्वात् विरामाभावे नित्यं संहितेत्यर्थः, वाक्ये तु सा विवक्षां–वक्तुरिच्छाम् अपेक्षते–यदि वक्ता विरम्य वक्तुमिच्छति
40 तदा सन्धिर्न स्यात्, यदा त्वविरम्य वक्तुमिच्छति तदा संधिः स्यात्, वाक्ये सर्वत्रैकप्रयत्नोच्चार्यत्वस्यानियमाद् यदा विरामसद्भावस्तदा सन्धिः, यदा न विरामस्तदा सन्धिरित्यर्थः ॥

तत्रान्येषु विशेषेषु स्पष्टतया न फलप्रतिपत्तिरिति तद्धितोत्पत्तिकृतविशेषमेवोदाहरति–**स्वायंधौतिरि**ति–स्वयंधौतस्यापत्यमिति "अत इञ्" [ ६. १. ३१. ] इति समुदायादेव इञि 45
तस्यैव चादिस्वरस्य तद्धितनिमित्तायां वृद्धौ च–स्वायंधौतिरिति, **सामिकृतिः सामिकृतायनिरि**ति–सामिकृतस्यापत्यमित्यर्थः, अत्र "अवृद्धाद् दोर्नवा" [ ६. १. ११०. ] इति विकल्पेन 'आयनिञ्' प्रत्ययः, यदा आयनिञ् तदा सामिकृतायनिरिति, पक्षे "अत इञ्" [ ६. १. ३१. ] इति 'इञ्' प्रत्यये सामिकृति- 50
रिति, अतः समासो विधीयते ।

अथ पदकृत्यं पृच्छति–**क्तेनेति किमि**ति, उत्तरयति–**स्वयं कृत्वा, सामि कृत्वे**ति–अत्र 'क्तेन' इति वचनात् समासो न भवति, समासाभावाच्च "अनञः क्त्वो यप्" [ ३. २. १५४. ] इति समासे उच्यमानः क्त्वो यबादेशो न 55
भवतीत्यर्थः ।

अत्र स्वयमिति कर्तृवाचकं करणवाचकं वेति दर्शयितुमेव तस्य आत्मना इत्यर्थो दर्शितः, ततश्च तत्रान्येन समासाप्राप्तावपि, सामीत्यस्यार्धार्थकत्वेन क्रियाविशेषणत्वसम्भवे तस्य "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इति समासे सिद्धेऽपि, विशेषण- 60
विशेष्यभावस्य याहच्छिकत्वेन कदाचित् क्तान्तस्यापि विशेषणत्वविवक्षायां समासे प्राक्प्रयोगापत्तिरिति विशिष्यानेन समासविधानं सार्थकमिति ॥ ३. १. ५८. ॥

## द्वितीया खट्वा क्षेपे । ३ । १ । ५९ ॥

**त० प्र०–**'खट्वा' इत्येतन्नाम द्वितीयान्तं क्षेपे गम्यमाने 65
क्तान्तेन नाम्ना सह समस्यते, तत्पुरुषश्च समासो भवति; क्षेपः समासार्थो न वाक्येन गम्यत इति नित्य एवायं समासः । खट्वारूढः, खट्वाप्लुतो जाल्मः, उत्पथप्रस्थित एवमुच्यते । खट्वा–पल्यङ्क आचार्यासनं वा, अधीत्य गुरुभिरनुज्ञातेन हि खट्वाऽऽरोढव्या, यत् त्वन्यथा खट्वारोहणं 70
तदुत्पथप्रस्थानम्, उपलक्षणं चेह खट्वारोहणमुत्पथप्रस्थानस्य, तेन सर्वोऽपि विमार्गप्रस्थितः खट्वारूढ इत्युच्यते । क्षेप इति किम्? खट्वामारूढ उपाध्यायोऽध्यापयति ॥ ५९ ॥

**श० म० न्यासानुसन्धानम्–द्वितीये**त्यादि । **द्वितीये**ति द्वितीया विभक्तिः, सा च प्रत्ययः, प्रत्ययग्रहणे च तदन्त- 75
विज्ञानमिति योऽर्थो निष्पन्नस्तमाह–**'खट्वा' इत्येतन्नाम द्वितीयान्तमि**ति । नित्याधिकाराभावेऽपि नित्योऽयं समासः, कुत इत्याह–**क्षेपः समासार्थः** इति–न तु पूर्वपदार्थो नाप्युत्तरपदार्थः समासस्यैव समुदायरूपस्यार्थः, स एव हि तत्र

प्रसिद्धः, **न वाक्येन गम्यते** इति-वाक्येन हि खट्वामारूढ इति भूतखट्वारोहणक्रियां प्रति कर्तृत्वमात्रं प्रतीयते न क्षेपः, **इति**-एतस्मात् कारणात्, **नित्य एवायं समासः** इति-नित्याधिकाराभावेऽपि विकल्पो न विज्ञायत इत्यर्थः ।

5 अथोदाहरति-**खट्वारूढः** इति **खट्वाप्लुतः** इति च समासः, "रुहं जन्मनि" आङ्पूर्वादस्मात् क्ते ह्रस्व ढत्वे तकारस्य धत्वे तस्य ढत्वे पूर्वढकारलोपे दीर्घे च "आरूढ' इति, तेन 'खट्वा अम्' इति द्वितीयान्तस्य समासः, "प्लुङ् गतौ" आङ्पूर्वादतः क्ते 'आप्लुत' इति, तेन द्वितीयान्तखट्वाशब्दस्य समासः, 10 **जाल्मः** इति-अयुक्तकारीत्यर्थः, अनेन समासस्य क्षेपवचनतां दर्शयति । ननु चेह पुरुषो निन्द्यमानः केनचिन्निन्दितेनाचारेण निन्द्यते, तत्र यदि खट्वारूढ इति खट्वामारूढ उच्यते तदा न काचिन्निन्दास्ति, न हि लोके खट्वारोहणं निन्दितम्, आचरन्ति हि लोके सन्तः खट्वारोहणम्; अथान्यः कश्चिदर्थो येन निन्दा 15 क्षेपो भवति स उच्यतामित्यत आह-**उत्पथस्थित एवमुच्यत** इति-खट्वारूढ इति खट्वाप्लुत इति चोत्पथेनोन्मार्गेण शिष्टनिषिद्धेनाचारेण प्रवृत्त उच्यते, उत्पथप्रस्थानं च निन्दितं तेन पुरुषो निन्द्यत इति क्षेपो भवति । कथमस्यात्र प्रवृत्तिः, किं तिरस्कृतान्वयवार्थोऽत्र प्रवर्तते ? इत लक्षणयेत्याह-**अधीत्य** 20 **गुरुभिरनुज्ञातेन हि खट्वारोढव्ये**ति-इह द्विविधं खट्वारोहणं भवति-निन्दितमनिन्दितं च, नैकान्तेनानिन्दितं निन्दितं वा, तत्राधीत्य गुरुभिरनुज्ञातेन खट्वा-पर्यङ्क आचार्यासनं वा, आरोढव्येत्यनिन्दितमुच्यते, नेदं पुरुषस्य निन्दायै भवति, **यत् त्वन्यथे**ति निन्दितप्रदर्शनायोच्यते, यत् तु अन्यथा-उक्तविपरीतं 25 खट्वारोहणं तच्छिष्टैरनाचरितं निन्दितं, तदुत्पथप्रस्थानममार्गगमनरूपं तद्विशिष्टं खट्वारोहणं खट्वारूढ इत्यत्रोच्यत इति क्षेपः । खट्वाशब्दस्य पर्यङ्कार्थत्वे-गुरुकुले ब्रह्मचर्यव्रतधारणपूर्वकमध्ययनं परिसमाप्य गुरुभिः [ गृहस्थगुरुभिः ] गृहस्थाश्रमप्रवेशायानुज्ञातेन कृतोचितोद्वाहेन च भार्यया सहैव खट्वारोढव्येत्यनिन्दिनम्, 30 अनधीतविद्यो गुर्वनुज्ञारहितश्च यदि भार्यया सह तल्पमारोहेत् तदा निन्दितं भवति, आचार्यासनार्थत्वे तु गुरुभिराचार्यकर्मणेऽनुज्ञात एव यदाचार्यासनमधिरोहेत् तदा न निन्दितम्, यदा तु विपरीतं तदा निन्दितं खट्वारोहणम्, तत्र निन्दिते क्षेपो भवतीति भावः । नन्वेवं सति निन्दितखट्वारोहणमेव 35 खट्वारूढशब्देनोच्येत नाविनयान्तरमित्यत आह-**उपलक्षणं चेह खट्वारोहणमुत्पथप्रस्थानस्ये**ति-अनेनोत्पथप्रस्थानरूपेण खट्वारोहणेनोत्पथप्रस्थानमात्रं लक्ष्यते, यथा-'काकेभ्यो दधि रक्ष्यताम्' इति काकैरुपघातकमात्रं, तेन सर्वोऽपि विमार्गप्रस्थितः खट्वारूढ इत्युच्यते । यदि खट्वारूढशब्दो निन्दायां 40 प्रसिद्धस्तर्हि विशिष्य निन्दायां समासविधानं विफलमित्याशङ्कते-**क्षेप इति किमि**ति, क्षेपग्रहणाभावे सामान्येन द्वितीयान्तं *खट्वेति नाम क्तान्तेन नाम्ना समस्यत इत्यर्थापत्तौ खट्वामारूढ* उपाध्यायोऽध्यापयतीति समुचितेऽपि प्रयोगे समासापत्तिः स्यादित्याह-**खट्वामारूढ** इति-अत्र खट्वारोहणं प्रति कर्तृत्वमात्रमुच्यते न क्षेपो निन्द्यमानतेति समासो न भवति, 45 खट्वेहाचार्यासनं न तु तल्पं तत्रस्थस्याध्यापननिषेधात्, एवं च क्षेपग्रहणस्यावश्यकत्वमिति फलितार्थः ।

अत्र भाष्यकारः-"क्षेप इत्युच्यते, कः क्षेपो नाम ?, अधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वारोढव्या, य इदानीमतोऽन्यथा करोति स उच्यते-खट्वारूढो जाल्मः, नातिव्रतवानिति" खट्वा- 50 रोहणं चाविनयोपलक्षणार्थमित्याह-नातिव्रतवानिति कैयटः, तथा चाविनयिन्येवायं समास इति फलति ।

ननु द्वितीयाग्रहणं न कर्तव्यम्, न चासति द्वितीयाग्रहणेऽत्र-विभक्त्यन्तरान्तमपि समस्येतेति वाच्यम्, नहि क्षेपे विभक्त्यन्तरान्वयोऽस्ति, यदि च विभक्त्यन्तरमपि क्षेपे सम्भवेत् 55 तद्व्युदासार्थं द्वितीयाग्रहणं कर्तव्यम्, द्वितीयायामेवेह क्षेपस्य नियतत्वात् क्षेपग्रहणेनैव द्वितीयान्तं समस्यत इति नियमो लभ्यत इति चेदुत्तरार्थं द्वितीयाग्रहणमवसेयम्, यद्येवमुत्तरत्रैव क्रियतां यत्रार्थः, किमिह कृत्वोत्तरत्रानुवर्तनेन ? उच्यते-इहापि विस्पष्टतार्थं भविष्यति, प्रतिपत्तिगौरवं च परिहृतं भवतीति 60 ॥ ३. १. ५९. ॥

## कालः । ३ । १ । ६० ॥

**त० प्र०**-कालवाचि नाम द्वितीयान्तं नाम्ना सह समस्यते, तत्पुरुषश्च समासो भवति । रात्रिमतिसृताः-रात्र्यतिसृताः, एवं-रात्र्यारूढाः, रात्रिसंक्रान्ताः; अहरतिसृताः षट् 65 मुहूर्ताश्चराचराः, ते हि दक्षिणायने रात्रिं गच्छन्ति, उत्तरायणे त्वहरिति; मासं प्रमितो मासप्रमितः, प्रतिपच्चन्द्रमा मासं प्रमातुमारब्ध इत्यर्थः । अव्याप्त्यर्थ आरम्भः ॥ ६० ॥

**श० म० न्यासानुसन्धानम्-काल** इति । "कालो द्विगौ च मेयैः" इत्यत्र कालशब्दार्थस्य कालविशेषस्य परिग्रहो 70 न कालशब्दस्य, इहापि सति सम्भवे न प्रतिपन्नार्थत्यागो युक्तः । न च कालशब्दस्य परिग्रहे क्षणेऽपि कालरूपसम्भवादव्याप्तिरुपपद्यते, अव्याप्त्यर्थं चेदं वचनम्, तेन काल इत्यर्थपरिग्रहः, अर्थे च कार्यासम्भवात् तदर्थकशब्दरूपसम्प्रत्यय इत्याह-**कालवाची**ति, **नाम्ना सहे**ति-क्तान्तेन नाम्नेति ज्ञेयमुत्तर- 75 सूत्रवृत्तौ 'क्तेन' इत्यस्य निवृत्तत्वात्वादिह च क्तान्तानामेवोदाहृतत्वात् । अथ सविग्रहमुदाहरति-**रात्रिमतिसृताः** इति विग्रहः, **रात्र्यतिसृताः** इति समासः, "सृं गतौ" अति-

पूर्वादतः क्तः, तेन समासः, अतिदिशति-**एवमिति, रात्र्यारूढाः** इति समासः, रात्रिमारूढा इति विग्रहः, आरूढशब्दः क्तान्तः प्राक् साधितः, तेन समासः, **रात्रिसंक्रान्ताः** इति समासः, रात्रिं संक्रान्ता इति विग्रहः, सम्पूर्वात् "क्रमू पादविक्षेपे" इत्यतः क्तः, "अहन्पञ्चमस्य क्विङिति" [ ४. १. १०७. ] इति दीर्घः, मस्य नकारश्च, **अहरतिसृताः** इति समासः, अहः अतिसृता इति विग्रहः, "रो लुप्यरि" [ २. १. ७५. ] इत्यहन्शब्दनकारस्य रेफः, एवंविधाः के ? इत्याकाङ्क्षायां चतुर्णामपि समासानां विशेष्यमाह-**षड् मुहूर्ताश्चराचरा** इति, कथमेते षड् मुहूर्ता एवंविधा इत्याकाङ्क्षायामाह-**ते दक्षिणायने रात्रिं गच्छन्ति, उत्तरायणे त्वहरिती**ति, अयं भावः-अव्याप्त्यर्थमिति वक्ष्यति, तत्राव्याप्तिरनेन दर्श्यते, त्रिंशन्मुहूर्ता अहोरात्रः, तत्राह्नो रात्रेश्च द्वादश मुहूर्ता ध्रुवाः, षट् पुनश्चराचरा अनवस्थायिनः, तेनोत्तरायणे क्रमेणाहर्गच्छन्ति, दक्षिणायने रात्रिम्, अत एवोत्तरायणेऽहानि वर्धन्ते, हीयन्ते रात्रयः, दक्षिणायने रात्रयो वर्धन्ते, हीयन्तेऽहानि, ते मुहूर्ता उच्यन्ते 'अहरतिसृताः' इत्यादिना, न चैतैर्मुहूर्तैरतिसरणादिकया वा क्रिययाऽह्नो वा रात्रिर्वा व्याप्यते इत्यव्याप्तिः, **चराचरा** इति-चरन्ति भ्रमन्तीति चराचरा अनवस्थिता इत्यर्थः, "चराचर०" [ ४. १. १३. ] इति निपातनादच् द्विर्भावो दीर्घश्च पूर्वस्य । **मासं प्रमितः** इति विग्रहः, **मासप्रमित** इति समासः, प्रपूर्वात् "मांक् माने" इत्यतः "आरम्भे" [ ५. १. १०. ] इति भूते कर्तरि क्तः, "दो-सो-मा-स्थ इः" [ ४. ४. ११. ] इति इकारश्च, प्रशब्द आरम्भं द्योतयति, मानारम्भस्य कर्ता प्रमित इति कथ्यते, एतदाह-**मासं प्रमातुमारब्ध इत्यर्थः,** शुक्लप्रतिपदादितो मासस्यारब्धत्वात् तत्रस्थश्चन्द्रो मासं परिच्छेत्तुमारब्ध एव, ननु चात्र मानारम्भेण क्रियया मासैकदेशवर्तिन्या मासस्य व्याप्तिर्मा भूत्, चन्द्रेण भवति व्याप्तिः, चन्द्रो ह्याकाशमास्ते, कथमव्याप्तिरित्यत उक्तम्-**प्रतिपच्चन्द्रः** इति-एकोऽपि चन्द्रमा अवस्थाभेदेन भिद्यते, तत्र यदि मासप्रमित इति प्रमायाः कर्तृत्वेनाभिन्नरूप उच्येत तदा भवेन्मासस्य व्याप्तिश्चन्द्रमसा, या तु प्रतिपदवस्था विभिन्ना तया चेदुच्यते, न सा द्वितीयस्यां तिथावस्तीति न व्याप्तिः, तयैव चेहावस्थया विभिन्नश्चन्द्रः प्रतिपच्चन्द्रो नाम मासप्रमित इत्युच्यते, नाभिन्नात्मा; अपरे तु-अभिन्नात्मन्यपि प्रमातरि चन्द्रमसि तस्यामावास्यायामादित्यानुप्रवेशादनुपलभ्यमानस्य स्वकृत्यमकुर्वतोऽसत्त्वमेवेत्यव्याप्तिश्चन्द्रमसा मासस्य" इति वर्णयन्ति । केचित् तु-"मासं प्रमातुमारब्ध इति मासस्यैकदेशस्य प्रतिपदश्चन्द्रमसा योगं दर्शयन् मासस्य तेनानत्यन्तसंयोगमाचष्टे, कालस्य हि कृत्स्नस्य स्वेन सम्बन्धिना व्याप्तिरत्यन्तसंयोगः, न च प्रतिपच्चन्द्रमसा मासस्येह व्याप्तिः संयोगोऽस्तीति नेहात्यन्तसंयोगः" इति वर्णयन्ति । **अव्याप्त्यर्थ आरम्भः** इति-व्याप्तौ ह्युत्तरेण सिध्यति, प्रकृते चाव्याप्तिरुपपादितैव, तत्र नोत्तरेण प्राप्तिरित्यस्य योगस्यारम्भ इत्यर्थः । ननु यद्युत्तरेण व्याप्तौ भवति, अनेनाव्याप्तौ, तर्हि किमुत्तरेण योगेन, अनेनैवाविशेषेणोक्ते सर्वत्र भविष्यति, नैतदस्ति-इह क्तेनेति वर्तते, तत्राक्तान्तेन समासो न स्यात्-मुहूर्तसुखं मुहूर्तरमणीयमिति, तदर्थमुत्तरो योगः । यद्येवमिहेव 'क्तेन' इति निवर्तनीयं, सामान्येन च समासो विधेयः, तत्र मुहूर्तसुखमित्याद्यप्यनेनैव भविष्यति, नैवं वक्तुं शक्यम्, एवं ह्यक्तान्तेनाव्याप्तावपि स्यात्; तत्र कथं द्वितीया, व्याप्तौ तु "काला-ऽध्वनोर्व्याप्तौ" [ २. २. ४२. ] इति स्यादिति चेत्? यथा क्तान्तेन समासे 'अहरतिसृताः' इत्यादौ "कर्मणि" [ २. २. ४०. ] इति भवति, एवम्-'अहरतिसृतवन्तः, अहर्गां मुक्ताः' इत्यादावपि स्यात्, अत इह क्तेनेति निवर्त्यमिति न शक्यं वक्तुम्, एवं चेदिदं क्तान्तेनाव्याप्तावपि यथा स्यादित्येवमर्थं वक्तव्यम्, उत्तरं व्याप्तावक्तान्तेनापि स्यादित्येवमर्थमिति ॥ ३. १. ६०. ॥

## व्याप्तौ । ३ । १ । ६१ ॥

**त० प्र०-व्याप्तिः-गुण-क्रिया-द्रव्यैरत्यन्तसंयोगः, व्याप्तौ या द्वितीया तदन्तं कालवाचि नाम व्यापकवाचिना नाम्ना सह समस्यते, तत्पुरुषश्च समासो भवति; क्तेनेति निवृत्तम् । मुहूर्तं सुखं-मुहूर्तसुखम्, मुहूर्तरमणीयः, सर्वरात्रकल्याणी, सर्वरात्रशोभना, मुहूर्ताध्ययनम्, मुहूर्तगुडः । व्याप्ताविति किम्? मासं पूरको व्रजति । काल इत्येव-क्रोशं कुटिला नदी ॥ ६१ ॥**

**श० म० न्यासानुसन्धानम्-व्याप्ताविति ।** व्याप्तिपदार्थं परिचाययति-**व्याप्तिर्गुण-क्रिया-द्रव्यैरत्यन्तसंयोगः** इति-अत्रानुयोगित्वं तृतीयार्थः, गुणक्रियाद्रव्येतत्रितयानुयोगिका, व्याप्तिः-अत्यन्तसंयोग इत्यर्थः, अतिक्रान्तोऽन्तमभावं यः संयोगः सम्बन्धः सोऽत्यन्तसंयोगः, एवं च द्रव्यस्य गुणेन क्रियया द्रव्येण चाव्यभिचरितसम्बन्धो व्याप्तिरिति फलितमिति । व्याप्ताविति द्वितीयाया विशेषणमित्याह-**व्याप्तौ या द्वितीये**ति-"काला-ऽध्वनोर्व्याप्तौ" [ २. २. ४२. ] इति सूत्रविहिता या द्वितीयेत्यर्थः, तया च कालो विशेष्यत इत्याह-**तदन्तं कालवाचि नामे**ति, **व्यापकवाचिना नाम्ने**ति-एतच्च व्यापकमन्तरा व्याप्तेरसम्भवात् स्वभावतो लब्धं, न तु सूत्रस्थपदव्याख्यानरूपं, तत्रत्यपदेनानुवृत्तपदैर्वा वृत्त्यानुपस्थापितत्वात् । **क्तेनेति निवृत्तमि**ति-यदि न निवर्त्येत तदा पूर्वेणैव सिद्धेर्योगोऽनर्थकः स्यादतो निवृत्तमित्यर्थः । विगृह्योदाह-

रति-**मुहूर्तं सुखमिति** विग्रहः, **मुहूर्तसुखमिति** च समासः, द्विघटिकात्मकः कालो मुहूर्तम्, तद्व्याप्ति सुखमनुकूलवेदनीय आत्मविशेषगुण इति भावः, एवं-**मुहूर्तरमणीयः** इति समासः, मुहूर्तं रमणीय इति विग्रहः, **सर्वरात्रकल्याणी**ति समासः, सर्वरात्रं कल्याणीति विग्रहः, सर्वा चासौ रात्रिश्च सर्वरात्रः "संख्यातैक०" [ ७. ३. ११९. ] इत्यत् समासान्तः, एवं-**सर्वरात्रशोभने**ति समासः, सर्वरात्रं शोभनेति विग्रहः; नन्विह रात्रिः कालो न सर्वं इति कालस्योच्यमानः समासः कथं कालेतरसमुदायस्य स्यात्, नैष दोषः-उत्तरपदार्थप्रधानोऽयं समासः, स चोत्तरपदार्थः काल एवेति कालवृत्तेरुच्यमानः समासो भवति द्वितीया च। **मुहूर्ताध्ययनमि**ति समासः, मुहूर्तमध्ययनमिति विग्रहः, क्रियाव्याप्तेरिदमुदाहरणं, द्रव्यव्याप्तेराह-**मुहूर्तगुरुरि**ति-समासोऽयं, विग्रहस्तु मुहूर्तं गुरुरिति। सूत्रवैयर्थ्यं शङ्कते-**व्याप्ताविति किमि**ति-पूर्वसूत्रेणैव कान्तेनाक्तान्तेन चात्यन्तसंयोगेऽनत्यन्तसंयोगे च सामान्येन समासो विधेयो व्यर्थमेवेदं सूत्रमिति प्रश्नाशयः, उत्तरयति-**मासं पूरक** इति-अत्र कालवाचिनपूरणं न व्यापकमपि तु तदेकदेशान्तमात्रसम्बन्ध इति समासो न भवति, सूत्राभावे तु स्यादेवेति भावः। कालानुवृत्तिर्व्यर्थेति शङ्कते-**काल इति किमि**ति, उत्तरयति-**क्रोशं कुटिला नदी**ति-क्रोशव्यापककौटिल्यवतीति तदर्थः, तथा चाध्ववाचिनोऽपि व्याप्तौ द्वितीयाया विधानात् तस्यापि समासः प्रसज्येतेति तद्वारणाय काल इत्यस्यानुवृत्तिरुचितैव ॥ ३. १. ६१. ॥

## श्रितादिभिः । ३ । १ । ६२ ॥

त० प्र०—**द्वितीयान्तं नाम श्रितादिभिर्नामभिः समस्यते, तत्पुरुषश्च समासो भवति। धर्मं श्रितः-धर्मश्रितः, श्रीश्रितः, संसारातीतः, नरकपतितः, निर्वाणगतः। 'श्रित, अतीत, पतित, गत, अत्यस्त, प्राप्त, आपन्न, गमिन्, गामिन्, आगामिन्' इति श्रितादयः। बहुवचनमाकृतिगणार्थम्, तेन-'ओदनबुभुक्षुः, हिताशंसुः, तत्त्वबुभुत्सुः, सुखेच्छुः' इत्यादि सिद्धम् ॥ ६२ ॥**

**श० म० न्यासानुसन्धानम्-श्रितादिभिः**। श्रितादयोऽग्रे वक्ष्यन्ते, तैः सह द्वितीयान्तं नाम समस्यते। अत्र यद्यपि द्वितीयान्तं कारकं श्रितादयश्च कृतः, तथा च *गतिकारकङस्युक्तानां०* इति न्यायेनेच्छया वा स्याद्युत्पत्तेः पूर्वमेव समासो युक्तः, तथापि स्याद्युत्पत्त्यनन्तरमेव समासो भवति, यतस्तस्य न्यायस्य कारकसामान्यस्य कारकविशेषस्य वा साक्षादुद्देश्यत्वे सत्येव प्रवृत्तिः, इह च द्वितीयान्तस्य वस्तुतः कारकत्वसत्त्वेऽपि तेन रूपेण समासोद्देश्यत्वाभावः स्पष्ट एव। नन्वेवं काष्टश्रितेयो न सिद्ध्येत्, श्रितशब्दादपि स्यादौ कष्टं श्रितेति विग्रहे *नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्* इति न्यायेन समासे श्रिताशब्दस्यैवाबन्ततदादित्वात् कष्टश्रिताया अपत्यमित्यर्थे "ङ्याप्त्यूङः" [ ६. १. ७०. ] इत्येयणि 'कष्टश्रैतेय' इत्यापद्येत, स्याद्युत्पत्तेः प्राक् कृदन्तेन समासे तु कष्टश्रितशब्दादेवापो विधानात् तस्यैवाबन्ततदादित्वात् इत एवेयणि 'काष्टश्रितेय' इति भवति, ततश्च स्याद्युत्पत्तेः प्रागेव समास उचित इति चेद् ? न-अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेनातदादावपि तदादित्वारोपेण स्याद्युत्पत्तेः पश्चादपि समासे समुदायस्याप्याबन्ततदादित्वात् तत एयणीष्टरूपसिद्धौ बाधकाभावात्। न च कदाचित् श्रिताशब्दादेयणि 'कष्टश्रैतय' इत्यपि रूपं स्यादिति वाच्यम्, जहत्स्वार्थायां वृत्तौ श्रिताशब्दमात्रे सामर्थ्याभावात् तस्यापत्यार्थेन योगासम्भवात्, अजहत्स्वार्थायामप्यैकार्थ्यस्योभयत्रैव सत्त्वेन केवलश्रिताशब्दे तदभावात्, अन्यथा कुम्भकार्या अपत्यमित्यर्थे 'कुम्भकारेय' इति स्यात् 'कौम्भकारेय' इतीष्टानापत्तिश्च स्यात्।

अथ सविग्रहमुदाहरति-**धर्मं श्रितः** इति विग्रहः, **धर्मश्रितः** इति च समासः, "श्रिग् सेवायाम्" इति गताविह वर्तते, धर्मं श्रित इति गतः प्राप्त इति प्रतीतेः, तेन "गत्यर्थाकर्मकपिबभुजेः" [ ५. १. ११. ] कर्तरि क्तः, धर्मकर्मकश्रयणकर्तेत्यर्थः, एवं-**श्रीश्रितः** इति समासः, श्रियं श्रित इति विग्रहः, **संसारातीतः** इति समासः, संसारमतीत इति विग्रहः, अतिपूर्वात् "इंण्क् गतौ" इत्यतः कर्तरि क्ते "गति०" [ ३. १. ४२. ] इति समासे 'अतीत' इति, अतिक्रान्त इति तदर्थः, न च 'अतिक्रमार्थवर्जे' इत्यनेनोपसर्गसंज्ञाविरहात् कथं गतिसंज्ञया समास इति वाच्यम्, यदर्थं क्रिया तस्मिन् निष्पन्नेऽपि क्रियाप्रवृत्तिरतिक्रमः, यथा- अतिसिक्तं, पुष्पफलादौ निष्पन्नेऽपि पुनः सेकक्रियाप्रवृत्तेः, प्रकृते तथात्वाभावान्न तादृशातिक्रम इति भवत्युपसर्गसंज्ञा, एवं दुःखातीतः कान्तारातीत इत्यादि ज्ञेयम्, **नरकपतितः** इति समासः, नरकं पतित इति विग्रहः, "पत्लृं गतौ" अतः कर्तरि क्ते 'पतित' इति; एवमशुचिपतित इत्यादि, **निर्वाणगतः** इति समासः, निर्वाणं गत इति विग्रहः, एवं ग्रामगत इत्यादि, "गम्लृं गतौ" अतः कर्तरि क्ते 'गत' इति। के श्रितादय इत्याकाङ्क्षायां श्रितादीनाह-**'श्रित अतीत** इत्यादिना, तत्र 'श्रित अतीत पतित गत' इत्युदाहृताः, अत्यस्तादय उदाह्रियन्ते-**अत्यस्त,** अतिपूर्वात् "असूच् क्षेपणे" इत्यतः कर्मणि क्तः, द्विकर्मकोऽयम्, तरङ्गमत्यस्यति-अतिगमयति देवदत्तो जिनदत्तमिति, तत्र तरङ्गरूपं कर्म केनाप्युक्तमिति ततो द्वितीया, अन्ये-'अत्यस्यतिरपि गत्यर्थ इति कर्तर्येव क्तः' इत्याहुः, तरङ्गमत्यस्त इति तरङ्गात्यस्तः; **प्राप्त आपन्न-**

"आप्लृंट् व्याप्तौ" प्रपूर्वः, "पदिंच् गतौ" आङ्पूर्वः, इमौ गत्यर्थाविति कर्तरि क्तः, सुखं प्राप्तः–सुखप्राप्तः, दुःखमापन्नः–दुःखापन्नः, **गमिन्**–गमिष्यतीति गमी जिगमिषुः, "वर्त्स्यति गम्यादिः" [ ५. ३. १. ] इति वचनात् "गमेरिन्" [ उणा० ६९९. ] इति भविष्यतीन्, ग्रामं गमी–ग्रामगमी; **गामिन् आगामिन्**–गमिष्यतीति गामी प्रस्थितादिः, आगमिष्यतीति–आगामी प्रोषितादिः, उभयत्र "आङश्च णिन्" [ उणा० ६२०. ] इति णिन्, एषु 'ग्रामम्' इत्यत्र "कर्मणि कृतः" [ २. २. ८३. ] इति न षष्ठी "एष्यदृणेनः" [ २. २. ९४. ] इति निषेधात्, किन्तु "कर्मणि" [ २. २.४०. ] इति द्वितीयैव । 'श्रितादिना' इत्येकवचनेनैव निर्दिश्यतां किमर्थं बहुवचनमित्याह–**बहुवचनमाकृतिगणार्थम्**इति, तत्फलमाह–**तेन 'ओदनबुभुक्षुः, हिताशंसुः, तत्त्वबुभुत्सुः, सुखेच्छुः' इत्यादि सिद्धम्**इति–आदिपदाद् गुरुशुश्रूषुरित्यादिपरिग्रहः, ओदनं बुभुक्षुः, हितमाशंसुः, तत्त्वं बुभुत्सुः, सुखमिच्छुः, गुरुं शुश्रूषुरिति च विग्रहवाक्यानि, "भुजंप् पालना-ऽभ्यवहारयोः" "आङः शसुङ् इच्छायाम्" "बुधिं ज्ञाने" "इषत् इच्छायाम्" "श्रुंट् श्रवणे" इति, भोक्तुमिच्छति, आशंसते, बोद्धुमिच्छति, इच्छति, श्रोतुमिच्छतीति "सन्-भिक्षा-ऽऽशंसेरुः" [ ४. २. ३२. ] इति "विन्द्विच्छू" [ ४. २. ३४. ] इति च उः ।

ननु श्रित इत्यत्र कर्तरि क्तं विधाय धर्मश्रित इत्यादि साधितम्, अथ यो धर्मं श्रितस्तेन धर्मोऽपि श्रितो भवतीति कर्मणि क्तं विधाय श्रितो धर्मो येन स धर्मश्रित इति बहुव्रीहिणापि सेत्स्यति, राजदन्तादिपाठाच्च श्रितशब्दस्य परनिपातोऽपि भविष्यति, इदमुक्तं भवति–अर्थभेद-रूपभेदावेव समासभेदप्रयोजकौ वक्तुं युक्तौ, किन्त्विह बहुव्रीहि-तत्पुरुषयोरर्थभेदस्य रूपभेदस्य चाभावात् समासभेदाश्रयणं विफलमिति बहुव्रीहिणा सामान्यविहितेन सिद्धे तत्पुरुषविधानं नावश्यकमिति श्रितादीनां क्तान्तानां गणे पाठो न विधेय इति ।

अत्र केचिदेवमाहुः–एवं तर्हि सिद्धे सति यत् तत्पुरुषं शास्ति तज्ज्ञापयत्याचार्यः–समानार्थे केवलं विग्रहभेदाद् यत्र तत्पुरुषः प्राप्नोति बहुव्रीहिश्च तत्र तत्पुरुष एव भवति, तेन 'राज्ञः सखा' इत्यर्थे 'राजसखः' इति तत्पुरुष एव भवति, न तु राजा सखा यस्येति बहुव्रीहिः, राज्ञो यः सखा तस्य राजापि सखा भवतीति समानार्थत्वम् ।

अपरे तु ज्ञापकत्वं खण्डयन्ति, तथाहि–बहुव्रीहिः सामान्यविहितः, तत्पुरुषस्तु विशेषविहित इति बहुव्रीह्यपवादः, तथा च नास्य वैयर्थ्यमिति न ज्ञापकत्वम्, अथवा नानयोः सामान्यविशेषभावः, यतः स्वपदार्थे तत्पुरुषः, अन्यपदार्थे बहुव्रीहिः, यश्च बहुव्रीह्यर्थस्तत्पुरुषे तत्पुरुषार्थश्च बहुव्रीहावन्तर्भवति स शब्दसंस्कारे निमित्तं भवितुं नार्हति, किन्तु शब्दवाच्य एवार्थः शब्दसंस्कारनिमित्तम्, तथा चानयोर्विषयभेद एवेति तत्पुरुषारम्भ आवश्यक इति बहुव्रीहिणा धर्मश्रितादीनां या सिद्धिर्निगद्यते सापि नोचिता, तथाहि–बहुव्रीहि-तत्पुरुषयोः शब्दकृतोऽर्थकृतश्च विशेषः, शब्दकृतो विशेषः–पाक्षिककच्प्रत्ययकृतः, "जातिकालसुखादेर्नवा" [ ३. १. १५२. ] इति क्तान्तस्य पाक्षिकप्राक्प्रयोगे रूपभेदकृतोऽपि, अर्थकृतश्च–गत्यर्थादीनां कर्मणि क्तान्तत्वे बहुव्रीहिः, कर्तरि क्तान्तत्वे च तत्पुरुषः, तत्र कर्मणि क्तान्तत्वेनाश्रयस्य भूतत्वमतिक्रान्तं प्रतीयते, कर्तरि प्रत्यये च सम्प्रत्यपि तत्क्रियावैशिष्ट्यं प्रतीयते शब्दशक्तिस्वाभाव्यादिति यथा बद्धो बन्धनमनुभवन्नेवाच्यते तथा कष्टश्रितोऽपि कष्टमनुभवन्नेवोच्यते, न चासावर्थो बहुव्रीहिणा प्रतीयत इति नेह बहुव्रीहिणा तत्पुरुषस्य वैयर्थ्यं शङ्कितुं शक्यते, एवं राज्ञः सखेत्युक्ते यथा राजसम्बन्धिसख्यं देवदत्ते शब्देन प्रत्यक्षमेव [ साक्षादेव ] प्रतीयते, तथा राजनि देवदत्तसख्यं न प्रतीयते, किन्तु तत्सम्बन्धादेव प्रतीयत इत्यार्थम्, ततश्च यज्ज्ञापकफलं प्रागुपन्यस्तं 'राजसख इति तत्पुरुष एव भवति, न राजा सखा यस्येति बहुव्रीहिः' इति, तदपि प्रत्युक्तं भवति, 'स्वस्ति सोमसखा' 'पुनरेहि गवां सख' इत्युभयप्रकारस्य प्रयोगस्य शिष्टैः कृतत्वादित्यलं पल्लवितेन ॥ ३. १. ६२. ॥

## प्राप्ताऽऽपन्नौ तयाऽच्च । ३ । १ । ६३ ॥

**त० प्र०—प्राप्ताऽऽपन्नौ** सामर्थ्यात् प्रथमान्तौ **तया**–द्वितीयान्तेन नाम्ना सह समस्येते, तत्पुरुषश्च समासो भवति, तत्संनियोगे चानयोरन्तस्याऽकारो भवति । **प्राप्ता जीविकां–प्राप्तजीविका, आपन्ना जीविकाम्–आपन्नजीविका; एवं प्राप्तगवी, आपन्नगवी स्त्री; प्राप्तो जीविकां–प्राप्तजीविकः, आपन्नजीविकः, प्राप्तगवः, आपन्नगवः पुरुषः; प्राप्तं जीविकां प्राप्तजीविकम्, आपन्नजीविकं कुलम् । अद्वचनं स्त्रीलिङ्गार्थम् । प्राप्तापन्नयोः प्रथमोक्तत्वात् पूर्वनिपातार्थं वचनम् । श्रितादित्वाच्चानयोर्द्वितीयाया अपि प्रथमोक्तत्वेन प्राग् निपातः, तेन जीविकाप्राप्तः, जीविकापन्न इत्यपि भवति ॥ ६३ ॥**

**श० म० न्यासानुसन्धानम्–प्राप्ता०** इति । **सामर्थ्यादि**ति–द्वितीयान्तेन समासविधानसामर्थ्यात् कर्तृवाचकत्वमनयोरिति प्रतीयते, कर्मणि च द्वितीयासत्त्वे कर्तुः प्रथमान्तस्यार्थवशादेव लब्धत्वादाह–**प्रथमान्तावि**ति, **तये**ति तत्पदं पूर्वपरामर्शि, तत्रापि स्त्रीलिङ्गनिर्देशेन द्वितीया प्रतिनिर्दिश्यते, तत्र च तदाक्षिप्तसमुदायविशेषणे तदन्तप्रतिप्रत्तौ तृतीयान्तत्वेन निर्दिष्टत्वेन 'नाम्ना' इत्यस्य विशेषणत्वे योऽर्थो निष्पन्नस्तमाह–

**तया द्वितीयान्तेन नाम्नेति, तत्सन्नियोगे च** तत्पुरुषसंज्ञासन्नियोगे पुनः, एष चार्थः, **अनयोरन्तस्य** प्राप्तापन्नशब्दयोरन्तस्य, **अत्** अकारो भवति, अथ 'प्राप्त आपन्न' इत्येतयोरन्तेऽकारोऽस्त्येव किमकारविधानेनेति न शङ्क्यं, 5 *नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्*इति न्यायेन 'प्राप्ता आपन्ना' इत्याबन्तयोरपि ग्रहणात् तत्र च नाकारोऽपि तु आकार इति तदर्थमकारविधानमावश्यकम्, एतदेव सविग्रहमुदाहरणमुखेन सूचयति–**प्राप्ता जीविकामिति** विग्रहः, **प्राप्तजीविकेति** समासः, प्रथमोक्तत्वात् प्राप्ताशब्दस्य प्राग् 10 निपातोऽन्तस्य चादादेशः, एवम्–**आपन्ना जीविकामिति** विग्रहः, **आपन्नजीविकेति** च समासः, यत्र तत्पुरुषसंज्ञाया विशेषतः फलं तदुदाहरति–**प्राप्तगवी, आपन्नगवीति**–समासाविमौ, प्राप्ता गाम्, आपन्ना गामिति विग्रहौ, **स्त्रीति** विशेष्यम्, अत्र "गोस्तत्पुरुषाद्" [ ७. ३. १०५. ] इति 15 समासान्तोऽट्, स्त्रीविशेषणत्वात् टित्वात् "अणजे०" [ २. ४. २०. ] इति ङीश्च । प्रकृतसूत्रस्य न केवलं स्त्रियामेव प्रवृत्तिः, किन्तु पुंसि क्लीबे चापीति तत्रोदाहरति–**प्राप्तो जीविकामिति** विग्रहः, **प्राप्तजीविकः** इति च समासः, अत्र "गोश्चान्ते०" [ २. ४. ९६. ] इत्यन्तस्य ह्रस्वः, एवम्–आपन्नो जीविका- 20 मिति विग्रहे–**आपन्नजीविकः** इति समासः, **प्राप्तगवः** इति समासः, प्राप्तो गामिति विग्रहः, अत्र प्राग्वदट् समासान्तः, पुंसि उदाहृत्य क्लीबे उदाहरति–**प्राप्तं जीविकामिति** विग्रहः, **प्राप्तजीविकमिति** समासश्च, अत्रान्तस्य प्राग्वि ह्रस्वः, एवम्–आपन्नं जीविकामिति विग्रहे–**आपन्नजीविकमिति** समासः, **कुलमिति** 25 नपुंसकार्थाभिव्यक्तये तद्विशेष्यमिति । **अद्वचनं स्त्रीलिङ्गार्थमिति**–'प्राप्ता आपन्ना' इति यौ स्त्रीलिङ्गौ प्राप्तापन्नशब्दौ तदर्थम् 'अच' इत्यद्वचनम्, तत्र ह्यद्वचनाभावे आकारः श्रूयेत, पुंनपुंसकयोस्त्वकारान्तावेव ताविति न तदर्थमद्वचनं कर्तव्यम्, तकारोऽकारनिर्देशाभिव्यक्त्यर्थः, असति तकारे 'तया च' इत्यु- 30 च्यमानेऽकारः संदिह्येत; अथ सविभक्तो निर्देशः 'तयाश्च' इति तदा तत्रात्र को विशेषः ? । ननु तत्पुरुषः समासः पूर्वेण सिद्धः, श्रितादिषु हि प्राप्तापन्नशब्दौ पठ्येते, किमर्थमिदं वचनमित्यत आह–**श्रितादित्वादनयोरि**त्यादि–पूर्वेण सिद्धस्तत्पुरुषः, किन्तु तत्र द्वितीयेति द्वितीयान्तं प्रथमोक्तं भवतीति "प्रथमोक्तं प्राक्" 35 [ ३. १. १४८. ] इति पूर्वनिपातः स्यात्–जीविकाप्राप्तः, जीविकापन्न इति, न च परनिपातः, इष्यते च परनिपातः, न स विनानेन सिध्यति, सति त्वस्मिन् वचने प्राप्तापन्नाविति प्राप्तापन्नशब्दौ प्रथमोक्तौ भवतः, तत्र तयोः पूर्वनिपातः स्यात्, द्वितीयान्तस्य परनिपातः, स च पक्ष एव भवति, पूर्वेण हि 40 समासे विपर्यासः, अन्यथा तयोः श्रितादिपाठानर्थक्यादिति द्वितीयायाः प्राप्तापन्नशब्दाभ्यां पक्षे परत्वार्थमिदं वचनम् ॥ ३. १. ६३. ॥

## ईषद् गुणवचनैः । ३ । १ । ६४ ॥

**त० प्र०**—'ईषद्' इत्येतदव्ययं गुणवचनैर्नामभिः सह **समस्यते, तत्पुरुषश्च समासो भवति, ये गुणे वर्तित्वा तद्योगे** 45 **गुणिनि वर्तन्ते ते गुणमुक्तवन्तो गुणवचनाः । ईषद्** अल्पं पिङ्गलः–ईषत्पिङ्गलः, एवम्–ईषत्कडारः, ईषद्विकटः, ईषदुन्नतः, ईषद्रक्तः । गुणवचनैरिति किम् ? ईषत्कारकः, ईषद्गार्ग्यः, गुणैः क्रियया वा हीनो गार्ग्य एवमुच्यते । समासे तद्धित-काम्य-समासान्तराणि च वसाद्यादेशाभावा- 50 दयश्च प्रयोजनम्–ईषत्पिङ्गलस्येदम्–ऐषत्पिङ्गलम्, ऐषत्पिङ्गलकाम्यत्; कोपेनेषद् रक्तः–कोपेषद्रक्तः, ईषत्पिङ्गल ! युष्माकमथो पुत्र इति ॥ ६४ ॥

**श० म० अनुसन्धानम्**–**ईषद्गुण०** इति । ईषदिति **गुणवचनैरि**ति च विशेषोपादानाद् द्वितीयेति श्रितादिभिरिति 55 च निवर्तते, नामेति नाम्नेति चानुवर्तते, तत्र 'ईषद्' इति नामेत्यस्य 'गुणवचनैः' इति च नाम्नेत्यस्य विशेषणम् । **ईषदित्येतदव्ययमि**ति–अनेन गुणवचनैर्योज्यमानं प्रतिपदोक्तमव्ययं दर्शयति, न तु "ईषत् उञ्छे" इत्यस्य शत्रन्तं विपरीतं गृह्यते । गुणवचना इत्यस्य द्विधा व्याख्यानं–ये गुणमुक्तवन्तस्ते 60 गुणवचनाः' इति 'यैर्गुण उक्तास्ते गुणवचनाः' इति च, तत्र प्राचां प्रसिद्धिमनुरुध्याह–**गुणमुक्तवन्तो गुणवचना** इति, एतदर्थं स्पष्टयति–**ये गुणे वर्तित्वा तद्योगाद् गुणिनि वर्तन्ते** इति–ये शब्दाः कदाचिद् गुणे वर्तन्ते कदाचिच्च गुणयोगाद् गुणिनि द्रव्ये वर्तन्ते, यथा–पटस्य शुक्लो गुणः, 65 शुक्लं रूपम्, शुक्लः पटो द्रव्यमिति, तत्र यदा गुणिनि द्रव्ये वर्तन्ते तदा गुणवचना उच्यन्ते; गुणे वर्तित्वेति गुणमात्रे या वृत्तिः 'पटस्य शुक्लः' इति सोच्यते, या वानागृहीतविशेषणा विशेष्ये बुद्धिरिति द्रव्यवृत्तावपि गुणे वृत्तिरपाद्रियते सा वा । "बहुलम्" [ ५. १. २. ] इति कर्तर्यनटि 'वचन' इति, ततः 70 षष्ठीसमासे 'गुणवचनाः' इति भवति, यद्यप्यनटा भूतार्थता नोच्यते तथापि वचनग्रहणसामर्थ्यात् भूतप्रतिपत्तिः, यदि हि गुणवचना इति गुणवृत्ता उच्येरन् तदा गुणवचनमनर्थकं, गुणैर्नैवेत्येवोच्येत, तत्र गुणे कार्यासम्भवात् तत्र वर्तमाने शब्दे संप्रत्ययः स्यात्, 'गुणमुक्तवन्तो गुणवचनाः' इति च 75 पूर्वाचार्यप्रसिद्धिः, तत्प्रसिद्ध्या चेहोपादानमित्ययमर्थो लभ्यते । अपरा व्याख्या–'यैर्गुण उक्तास्ते गुणवचनाः' इति यैरिति कर्तरि तृतीया, शब्दा हि स्वव्यापारमुक्तिं प्रति कर्तारो भवन्ति,

अथवा प्रयोक्ता पुरुष एव कर्ता विवक्ष्यते, शब्दाः करणं, करणे
एव च तृतीया-यैर्गुण उक्तः प्रयोक्त्रा ते गुणवचनाः, 'वचन'
इत्यत्र करणे चानट्, समासस्तु षष्ठीतत्पुरुषः, 'यैर्गुण उक्तः'
इत्यनेन शब्दा लक्ष्यन्ते, ते शब्दा गुणे गुणिनि वा यत्र क्वचन
5 सर्वत्रापि गुणवचना उच्यन्ते, 'ये गुणे वर्तित्वा तद्योगाद् गुणिनि
वर्तन्ते' इत्यपि शब्दोपलक्षणमेवेति, गुणो लोकप्रसिद्धः पैङ्गल्या-
दिर्विज्ञायते, यस्येदं 'द्रव्याश्रयो गुणो, द्रव्यम्' इत्यादि लक्षणं
परतन्त्रमात्रम्, प्रतिपत्तौ तु [ परतन्त्रत्वमात्रस्य गुणलक्षणस्य
प्रतिपत्तौ तु ] सर्वत्र जात्यादावपि प्रसज्यते, जात्यादयो हि
10 शब्दप्रवृत्तिनिमित्तभूतास्तद्विशिष्टार्थाभिधाने पारतन्त्र्यं प्रतिपद्यन्ते,
तथा चार्थवन्नाम गुणवचनं परिभाषितं गुणवचनग्रहणेन गृह्यते,
तेन सर्वं नाम गुणवचन इत्यतिप्रसङ्ग एव, अनर्थकं चेह गुण-
वचनग्रहणमुभयत्र व्यवच्छेद्याभावात्, अतः पैङ्गल्यादिरेव
लौकिको गुणः । ईषदिति गुणवचनैर्युज्यमानम् 'अल्पं पिङ्गलः'
15 इति 'अल्पेन पिङ्गलः' इति वा युज्यते, ईषदल्पं पिङ्गल इति
तत्रैकं प्रकारं दर्शयितुं सविग्रहमुदाहरति-**ईषद्-अल्पं पिङ्गल**
इति विग्रहः, **ईषत्पिङ्गलः** इति च समासः, उक्तविग्रहेण चेदं
गुणवचनप्रवृत्तिनिमित्तविशेषणं, न यत्र गुणवचनो वर्तेत तत्रास्य
वृत्तिरिति विशेषणसमासेन सिद्ध्याशङ्कामपाकरोति, 'अल्पेन
20 पिङ्गलः' इत्यत्रापि विशेषणसमासाभाव एव सामानाधिकरण्या-
भावात्, अल्पेनेति तदेव प्रवृत्तिनिमित्तं गुणे द्रव्यस्य पिङ्गलभावे
साधकतमत्वेन निर्दिश्यते-अल्पेन पिङ्गलगुणेन पिङ्गलो देवदत्त
इति, न भवति हि पिङ्गलगुणोऽल्पो महांश्च । अतिदिशति-**एव-
मिति**, **ईषत्कडारः** इति समासः, ईषदल्पं कडार इति विग्रहः,
25 एवम्-**ईषद्विकटः** इति समासः, ईषदल्पं विकट इति विग्रहः,
**ईषदुन्नतः** इति समासः, ईषदल्पमुन्नत इति विग्रहः, **ईषद्रक्तः**
इति समासः, ईषदल्पं रक्त इति विग्रहः, "उन्नतरक्तशब्दा-
वौणादिकौ "पुत-पित०" [ उणा० २०४. ] इति साधू, ततो
गुणवचनौ, क्ते तु क्रियावचनौ स्याताम्" इति लघुन्यासकारः,
30 अपरे तु-उन्नत-रक्तशब्दयोरौणादिकत्वेन क्रियावचनत्वपरिहार-
पूर्वकं गुणवचनत्वकथनं तु नावश्यकं नवौचित्ययोगि, यत
उणादीनां व्युत्पत्तिपक्षे तेषामपि क्रियाकारकसम्बन्धप्रवृत्ति-
निमित्तकत्वं दुर्वारम्, तथा च क्रियादिप्रवृत्तिनिमित्तकत्वेऽप्यौ-
न्नत्य-रागादिगुणवाचकत्वमात्रेणेदृशानां गुणवचनत्वस्वीकार आव-
35 श्यकः, अत एव च ये कथञ्चिदपि न गुणवाचकास्त एवेह प्रत्युदा-
हरिष्यन्ते" इत्याहुः । पदकृत्यं पृच्छति-**गुणवचनैरिति
किमिति**, प्रत्युदाहरणमुखेनोत्तरयति-**ईषत् कारकः, ईषद्
गार्ग्यः** इति-करोतीति कारक इति क्रियावचनः कारकः, गर्गस्य
वृद्धापत्यमिति "गर्गादेर्यञ्" [ ६. १. ४२. ] इति यञि-गार्ग्यः,
40 अपत्यप्रत्ययान्तस्य गोत्रत्वात् "गोत्रं च चरणैः सह" इति जाति-
वचनत्वं गार्ग्यशब्दस्य, एवं ह्यनयोर्गुणवचनत्वाभावाद् 'गुण-
वचनैः' इति वचनान्न समासः, किन्तु पृथक्पदतैव; अथ 'ईषत्
कारकः' इति प्रत्युदाहरणं युक्तमीषद्योगोपपत्तेः, गुणवत् क्रियाया
अपि ह्यल्पत्वं बहुत्वं चोपपद्यते-ईषच्चलति, बहु प्रभूतमतितरां
चलति, बहु भुङ्क्ते इति; 'ईषद् गार्ग्यः' इति तु न युक्तं, गार्ग्यस्य 45
गोत्रवाचित्वेन गोत्रस्य जातिरूपत्वेन जातेश्चैकरूपत्वेन तत्र च
नाल्पत्वं बहुत्वं वेति तत्रेषद्योगाभावादिति चेत्? उच्यते-
यद्यपि जातेः स्वतोऽल्पत्वं ह्रासः, बहुत्वमुपचयश्च न स्तः,
तथापि तदुपलक्षितानां गुणक्रियाणां स्तः, ताभ्यां जातिस्तद्वती
व्यपदिश्यते, यथा-प्रकर्षापकर्षाभ्यां गार्ग्यतरो गार्ग्यकल्प इति, 50
तत्र तरबादिवत् समासोऽपि मन्येतेति प्रत्युदाह्रियते-ईषद्
गार्ग्य इति, एतदेवाह-**गुणैः क्रियया वा हीनो गार्ग्य
एवमुच्यते** इति-गर्गगोत्रोत्पन्नानां यादृशा गुणा यादृशी
चाचारादिरूपा क्रिया तैस्तया वा हीनो गार्ग्य इत्युच्यते, केवलं
तत्र समासाभावात् पदान्तरव्यवधानाद्यपि सम्भवति, गुण- 55
वचनाभावे तन्न स्यात्, ननु 'ईषत्' शब्दस्याव्ययत्वेन ततः
परं स्यादिश्रवणाभावात् समासासमासयोः को भेदः? तदेव
ह्युभयत्रापि रूपं-ईषत्पिङ्गलः, ईषत्कारक इति, येनैकत्र समास
इष्यते नापरत्रेत्यत आह-**समासे तद्धित-काम्य-
समासान्तराणि वसाद्यादेशाभावादयश्च प्रयोजन-** 60
**मिति**-समासे संजाते समुदाय एकार्थः-एकत्वादिमदर्थवृत्ति-
र्भवति, ततः समुदायात् स्याद्युत्पत्तिः, ततश्च स्याद्यन्तादुच्य-
मानस्तद्धितः काम्यश्च समुदायात् स्याद्यन्तादुत्पद्यते, एवं
समुदायस्यैवार्थवदेकनामत्वात् समासान्तरप्रवेशः, समुदायस्यै-
वैकपदत्वात् तस्यामव्ययत्वेऽसत्त्वात् पदात् परत्वाभावाच्च वसाद्या- 65
देशाभावश्च सिध्यतीत्यर्थः, एतदेवोदाहरणद्वारा स्पष्टयति-**ईष-
त्पिङ्गलस्येदमि**त्यादिना, ईषत्पिङ्गलस्येदमित्यर्थे "तस्येदम्"
[ ६. ३. १६०. ] इत्यनेन समुदायादेव षष्ठ्यन्तादिदमर्थेऽण्
भवति, समुदायादिस्वरस्यैव च वृद्धौ-**ऐषत्पिङ्गलमिति**, ईष-
त्पिङ्गलमिच्छति स्वेत्यर्थे "द्वितीयायाः काम्यः" [ ३. ४. २२. ] 70
इत्यनेन समुदायादेव द्वितीयान्तादिच्छायां काम्यो भवति, तद्धदि-
तसमुदायस्यैव च धातुत्वात् तस्यैवाद्यस्वरस्य "स्वरादेस्तासु"
[ ४. ४. ३१. ] इति वृद्धौ-**ऐषत्पिङ्गलकाम्यदि**ति भवति,
**कोपेन ईषद्रक्तः** इति विग्रहः, **कोपेषद्रक्तः** इति च समासः,
अत्र 'ईषद्रक्त' इति समुदायस्यैकनामत्वात् गुणवचनत्वात् तेन सह 75
तृतीयान्तस्य "तृतीया तत्कृतैः" [ ३. १. ६५. ] इत्यग्रिमसूत्रेण
समासः, अन्यथा 'नाम नाम्ना' इत्यनुवृत्तेरेकत्वस्य च विवक्षणात्
त्रिपदसमासो न स्यात्, सति त्वस्मिन् योगे ईषच्छब्दस्य रक्तशब्देन
समासे एकनामत्वात् तस्य पुनः कोपेन तृतीयान्तेन समास
इति समासान्तरप्रवेशः, न च रक्तशब्दस्य गुणवचनत्वेऽपीष- 80

द्रक्तस्य गुणवचनत्वं कथमिति वाच्यम्, विशेष्यपारतन्त्र्येण तस्य गुणवाचकत्वाक्षतेः, एवं चास्य गुणवाचकत्वं निराकृत्य "ऊनार्थपूर्वाद्यैः" [ ३. १. ६६. ] इति सूत्रेण समासकथनं नोचितमाभाति, यतो यदि विशेष्यपारतन्त्र्येणास्य गुणवाचकत्वं न स्यात् तर्हि विशेषणपारतन्त्र्येणोनार्थत्वमपि कथं स्वीकार्यम्? ईषच्छब्दस्योनार्थत्वेऽपि समुदायस्य तदर्थत्वाभावात्; न च पूर्वादेराकृतिगणत्वात् तदन्तर्भावेण सिद्धिरिति वाच्यम्, तस्यागतिकगतित्वात्। अथ वसादेशाभावमुदाहरति–**ईषत्पिङ्गल! युष्माकमथो पुत्र इती**ति–अत्र समस्तस्य 'ईषत्पिङ्गल' इत्यस्यामन्त्र्यार्थपदत्वेन तस्य "असादिवामन्त्र्यं पूर्वम्" [२. १. २५.] इत्यसत्त्वातिदेशे पदात् परत्वाभावेन वसादेशो न भवतीति भावः, यदि च समासो न स्यात् तर्हि पिङ्गलमात्रस्यामन्त्र्यत्वेन तस्यासत्त्वातिदेशेऽपीषद्रूपपदात् परत्वे वसादेशो दुर्वारः स्यात्।

अत्रेदं विचार्यते–'ईषत्पिङ्गल' इत्येकवचनान्तेन संबोध्य तस्य युष्माकमिति बहुवचनेन कथं परामर्शः? यतश्च यद्रूपवत्त्वेन प्रथमया सम्बोध्यते तद्रूपवत एव सर्वादिना युष्मदा तत्पर्यायेण वा परामर्शो भवतीति पदवाक्यप्रमाणपारावारीणानां सरणिः; न च

"हे चण्ड! हे मुण्ड! बलैर्बहुलैः परिवारितौ।
तत्र गच्छत गत्वा च, सा समानीयतां लघु॥"

इति मार्कण्डेयपुराणान्तर्गतदुर्गासप्तशतीसप्तमाध्यायप्रयोगः कथम्? तत्रापि 'चण्ड! मुण्ड!' इत्येकवचनेन सम्बोध्य, युवां तत्र गच्छतमिति द्विवचनेन परामर्शस्य क्रियमाणत्वादिति वाच्यम्, एकघटैकपटावितिवदेकत्ववतश्चण्डस्यैकत्ववतो मुण्डस्य च समुदितत्वेन द्वित्वयुक्तत्वाद् 'युवां तत्र गच्छतम्' इति द्विवचनेन परामर्शसम्भवात्। नन्वेवमपि वेणीसंहारनाटके-

रे रे अर्जुन! सात्यके!

"कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं,
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्॥"

इति निजपितुर्द्रोणाचार्यस्य छलेन वधात् कुपितस्याश्वत्थाम्नोऽर्जुनसात्यकी एकवचनेन सम्बोध्य भवद्भिरिति बहुवचनेन परामर्शः कथमुपपद्यते? इति चेत्? अत्र केचित्–भवद्भिरिति नेह सर्वादिर्युष्मत्पर्यायो भान्तीत्यर्थे औणादिको डवतुप्रत्ययान्तः, किन्तु भवन्तीत्यर्थे भवतेः शतृप्रत्ययान्तः, तथा च भवद्भिरित्यस्य पदस्य यैर्धृष्टद्युम्नादिभिर्युधिष्ठिरादिभिर्वोदायुधैर्भवद्भिः सद्भिः, इदं गुरुपातकं कृतमनुमतमित्यादिक्रमेणान्वय इति न दोष इति समादधति, अन्ये तु–क्रोधावेशस्याधिक्यं द्योतयितुं कविना स्वयमसमञ्जसः प्रयोगः कृत इति प्रतियन्ति। एवं च प्रकृते एकवचनेन सम्बोध्य बहुवचनेन परामर्शोऽयुक्त इति चेत्? अत्रैके–'ईषत्पिङ्गल! अस्माकमथो पुत्रः' इत्येव पाठः समुचितः, लेखकप्रमादाद् युष्माकमिति पठितमित्याहुः, अन्ये तु–वसादेशस्य प्रकृतत्वेन युष्माकमित्येव पाठः, सम्बोधनपदे एव बहुवचनान्तत्वं प्रमादाद् भ्रष्टमिति वदन्ति, किञ्च, अनेकत्रोपलब्धानां पाठानामप्रामाणिकत्वकल्पना नोचिता, अतोऽन्यः पन्थाः समाश्रयणीयः, अथवा बहूनां समुदायमुद्दिश्य संबोध्य चैकं लोकेऽपि व्यवहारो दृश्यते, यथा–हे चैत्र! सर्वेऽपि भवन्तः कुशलिन इति, शास्त्रेऽपि "त्यदादिः" [ ३. १. १२०. ] इति सूत्रेण 'त्यदादिनाऽन्येन वा सहोक्तौ त्यदादिरेवैकः शिष्यते' इत्येकशेषकरणरीत्या 'त्वं च गुरवश्च-यूयं, तेषां युष्माकम्' इत्यादिरूपया एकवचनबहुवचनसंगमना विधेयेति॥ ३.१.६४.॥

## तृतीया तत्कृतैः। ३। १। ६५॥

**त० प्र०**—तृतीयान्तं नाम तत्कृतैः-तृतीयान्तार्थकृतैर्गुणवचनैर्नामभिः सह समस्यते, तत्पुरुषश्च समासो भवति। शङ्कुलया कृतः खण्डः–शङ्कुलाखण्डश्चैत्रः, एवं गिरिकाणः, मदपटुः, क्षारशुक्लः, कुसुमसुरभिः; कृतार्थो वृत्तावन्तर्भूत इति कृतशब्दो न प्रयुज्यते। तत्कृतैरिति किम्? अक्ष्णा काणः, पादेन खञ्जः, शङ्कुलया हेतुना खण्डः, काणत्वादि ह्यत्र काण्डादिना कृतम्, नाक्ष्यादिना, अक्ष्यादिना परं संबन्धमात्रम्, यदा तु तत्कृतत्वविवक्षायां कर्तरि करणे वा तृतीया तदा भवत्येव समासः–अक्षिकाण इत्यादि। गुणवचनैरित्येव–गोभिर्वपावान्, दध्ना पटुः, पाटवमित्यर्थः; न ह्येतौ पूर्वं गुणमुक्त्वा साम्प्रतं द्रव्ये वर्तेते इति गुणवचनौ न भवतः; अत एव शुद्धगुणवाचिनापि समासो न भवति–घृतेन पाटवम्, विद्यया धार्ष्ट्यम्; अत्रापि समासो भवतीति कश्चित्। अन्ये तु गुणवचनैर्गुणमात्रवृत्तिभिरपि समासमिच्छन्ति–शङ्कुलाखण्डश्चैत्रस्य, गिरिकाणश्चैत्रस्येति॥ ६५॥

**श० म० न्यासानुसन्धानम्-तृतीया०** इति। तृतीयेति 'नाम' इत्यस्य विशेषणं, तत्र तदन्तविज्ञानमित्याह–**तृतीयान्तं नामेति तत्कृतैरि**ति–तया कृतैः–तत्कृतैरिति तच्छब्देन तृतीया परामृश्यते, तत्र तृतीया प्रत्ययः "परः" [ ७. ४. १०८. ] इति वचनान्न विना प्रकृतिं भवतीति प्रकृतिराक्षिप्यते, प्रकृति-प्रत्ययाभ्यां च तदवयवकः समुदायः, तस्य विशेषणे तदन्तप्रतिपत्तिः, तत्राप्युपचारात् तदर्थप्रतिपत्तिः, कृतैरित्यप्यर्थद्वारकम्, गुणवचनार्थो गुणः कृत इति गुणवचना अपि शब्दाः कृता विज्ञायन्ते, तृतीयान्तार्थेन हि गुणवचनार्थः क्रियते, न

तृतीयान्तेन शब्देन गुणवचनाः शब्दाः क्रियन्त इति तृतीयान्तार्थकृतार्थैर्गुणवचनैरित्यर्थः फलति, तदेवाह—**तृतीयान्तार्थकृतैरि**ति अत्र तृतीयान्तार्थकृतार्थैरिति पाठः सम्यगाभाति ।

अथोदाहरणावसर इति विगृह्योदाहरति—**शङ्कुलया कृतः खण्डः** इति विग्रहः, अत्र यद्येवं विज्ञायेत—देवदत्तः शङ्कुलया खण्डः कृत इति, तदा कृत इति प्रधानं भवति, तद्वयञ्जातं ज्ञास्यते; तदर्थमिदं वाक्यं, तत्र प्रधानस्य परानुप्रवेशाभावात्, अनुप्रवेशेऽतदर्थप्रतीतेः समासाभावः, नहि शङ्कुलाखण्ड इत्युक्ते कृतार्थः प्रधानतया प्रतीयते किन्तु कृतार्थोपसर्जनः खण्डार्थो गम्यते, अतोऽत्र वाक्ये कृत इति खण्ड इत्यस्य विशेषणम्, तत्खण्डस्य तु कृतत्वमात्रमावेदयितुमुपादीयते, अत्र तृतीयान्तार्थकृतार्थेन [ तृतीयान्तस्यार्थेन कृतोऽर्थो यस्य तादृशेन ] खण्डशब्देन गुणवचनेन तृतीयान्तस्य 'शङ्कुलया' इत्यस्य समासः—**शङ्कुलाखण्डः** इति, **देवदत्तः** इत्यनेन द्रव्यशब्दसामानाधिकरण्यात् खण्डशब्दस्य गुणिनि द्रव्ये वृत्तिर्दर्श्यते । अतिदिशति—**एवमि**ति, **गिरिकाणः** इति समासः, गिरिणा कृतः काण इति विग्रहः, **मदपटुरि**ति समासः, मदेन कृतः पटुरिति विग्रहः, **क्षारशुक्लः** इति समासः, क्षारेण कृतः शुक्ल इति विग्रहः, **कुसुमसुरभिरि**ति समासः, कुसुमेन कृतः सुरभिरिति विग्रहः ।

अथ खण्डितः खण्डनं वा खण्डः, इति खण्डशब्दस्य कृत्प्रत्ययान्तत्वात् "कारकं कृता" [ ३. १. ६८. ] इत्यनेनैव समासो भविष्यति, किमनेनेति चेत् ? उच्यते—नात्रायं क्रियावचनः किन्तु एकदेशविकलतालक्षणगुणार्थः, एवं काणशब्देऽपि, अयं भावः—खण्डकाणशब्दावत्र खण्डने निमीलने च क्रियारूपापन्ने गुणे वर्तित्वा पश्चान्मतुब्लोपादभेदोपचाराद् वा तद्वति द्रव्ये वर्तेते इति गुणवचनौ भवतः; एवं यत्र क्रियावचनताशङ्कैव नास्ति तत्र 'गिरिकाणः, मदपटुः' इत्यादौ विनानेन न सिद्धिरित्यावश्यकत्वमस्य योगस्य । ननु शङ्कुलया कृतः खण्ड इत्यादौ पूर्वोत्तरपदयोः कृतापेक्षास्ति, तत्र यद्यपि साधनयोरेकक्रियानुप्रवेशेन योगो भवति, प्रधानेनापेक्षेऽपि च भवति समासः, तथाप्यप्रधानमपि तृतीयान्तमपेक्षत इति समासानुपपत्तिः, अथ वचनात् स्यात् कृत इति पृथक् युज्यमानेऽपि स्यादित्यत आह—

**कृतार्थो वृत्तावन्तर्भूत इति कृतशब्दो न प्रयुज्यते** इति—कृतार्थः—कृतशब्दार्थः, स वृत्तौ—अत्र समासे, अन्तर्भूत इति स पृथक् स्ववाचकं कृतशब्दं न प्रयोजयति, एतदुक्तं भवति—शङ्कुलाशब्दस्तदुत्तरपदार्थकर्मककरणक्रियाविषयमाचष्टे, खण्डशब्दोऽपि शङ्कुलाकर्तृकां शङ्कुलाकरणिकां वा भूतकरणक्रियां प्रति कर्मभूतमाह शब्दशक्तिस्वाभाव्यात्, तत्र कृतार्थो वृत्तौ पूर्वपदे वान्तर्भवतीति तत्प्रतिपत्तये न कृतशब्दः पृथक् प्रयुज्यते, वाक्ये तु न तथाभिधानमिति कृतशब्दप्रयोगः; एवं च समस्यमानव्यतिरेकेण न बहिरपेक्षास्ति, बहिरपेक्षायां तु वृत्तौ न्यग्भूतस्य बहिरपेक्षा निवर्तत इति वृत्तिर्न स्यात्, इह तु कृतार्थो वर्त्तिपदार्थ एव, न कृतः पृथक् प्रयुज्यत इति सापेक्षत्वाभावाद् भवति, यत्र तु कृतशब्दस्य पृथक् प्रयोगः, प्रधाने तत्र सापेक्षत्वान्न भवतीति । पदकृत्यं पृच्छति—**तत्कृतैरिति किमि**ति—'तृतीयान्तं गुणवचनैः समस्यते' इत्येवोच्यतामिति प्रश्नाशयः, प्रत्युदाहरणमुखेनोत्तरयति—**अक्ष्णा काण** इत्यादि, 'दध्ना पटुः, घृतेन पटुः' इत्यत्र कृतवद् 'भुङ्क्ते' इत्यस्य यदान्तर्भावस्तदा समासः स्यात्, न च कृतादन्यस्यान्तर्भाव इति प्रतिपत्तिनिबन्धनमस्ति, प्राधान्यादननुप्रवेशेऽप्रधानस्य स्यात्—'दध्ना भुक्तवान् पटुरास्ते' इति, अर्थप्रकरणादिनान्तर्भवति, 'दध्ना पटुः' इत्युक्ते भुक्तवानिति, न चानभिधानादिह समासेऽनन्तर्भाव इति प्रतिपत्तिर्लघीयसीत्याद्युत्तरवचनं भवति, तथापि 'तत्कृतैः' इत्यस्याभावे निर्विवादं यत्र प्राप्नोति तत्स्थलं दर्शयितुमाह—**अक्ष्णा काण** इत्यादिना, **अक्ष्णा काणः, पादेन खञ्जः** इति—अत्र "यदङ्गैदैस्तद्वदाख्या" [ २. २. ४६. ] इति तृतीया, **'शङ्कुलया'** इत्यत्र हेतौ तृतीया, 'शङ्कुलया खण्डः' इत्येतावन्मात्रे उक्ते तृतीयाया अन्यत्रापि दर्शनाद् तया स्पष्टं हेतुभावो न ज्ञायेतेति हेतुभावं **'हेतुना'** इत्यनेनाभिव्यनक्ति, नात्र तत्कृतत्वमिति समर्थनायाह—**काणत्वादि ह्यत्र काण्डादिना कृतं, नाक्ष्यादिने**ति, एवं तर्हि कथमक्ष्यादिप्रयोग इत्यत आह—**अक्ष्यादिना परं सम्बन्धमात्रमि**ति—काणत्वादिसम्बन्धमात्रप्रतिपादनायाक्ष्यादिप्रयोग इत्यर्थः, यदा कर्तरि करणे तृतीया तदा तत्कृतत्वं, यदा तु हेत्वादौ तदा न, प्रकृते च न कर्तरि नवा करणे तृतीयेति तत्कृतत्वाभावान्न समासः, यदा तु कर्तरि करणे वा तृतीया तदा तत्कृतत्वात् समासः स्यात्, एतदेवाह—**यदा तु कर्तरि करणे** वेत्यादि, तदुदाहरणम्—**अक्षिकाण** इत्यादि । 'गुणवचनैः' इत्यस्य व्यावर्त्यं दर्शयितुमाह—**गुणवचनैरित्येवे**ति, व्यावर्त्यमाह—**गोभिर्वपावानि**ति—गोभिर्धेनुभिः क्षीरादिभावोपगमेन वपावत्ता मेदस्विता कृता भवति, न तु वपावच्छब्दो गुणवचनो गुणलब्धप्रतिष्ठः, यथा—खण्डादयः शब्दाः, अयं हि वपाऽस्यास्तीति मत्वन्तः सर्वदा द्रव्यप्रतिष्ठ एव, यद्यपि वपासम्बन्ध्यत्र गुणी भवति, तथापि तत्र नायमात्मानं प्रतिलभत इति गुणवचनैरिति वचनादिह समासो न भवति । नन्वेतद्वारणार्थं यदि गुणवचनैरित्युच्यते तदा वचनमनर्थकम्, गुण इत्युच्यमानेऽपि तद्वारणसम्भवादतः प्रत्युदाहरणान्तरमाह—**दध्ना पटुरि**ति, पटुशब्दोऽत्र गुणे वर्तते न गुणिनीति दर्शयितुमाह—**पाटवमित्यर्थः** इति, तथा च

वचनग्रहणाभावेऽत्रापि समासः प्रसज्येतेत्यर्थः, वचनग्रहणे तु नेह प्रसक्तिः, कुतः ? इत्याह–**न हि** न खलु, **एतौ** वपावत्-पटुशब्दौ, **पूर्वं** प्रागन्यत्र कुत्रापि, **गुणमुक्त्वा** गुणे वर्तित्वा **साम्प्रतम्**–अधुना प्रकृतप्रयोगे, **द्रव्ये** गुणिनि, वर्तेते, **इति** 5 एतस्मात्, **गुणवचनौ न भवतः**, 'ये गुणे वर्तित्वा तद्योगाद् गुणिनि वर्तन्ते ते गुणवचनाः' इति लक्षणात्, **अत एव** गुणवचनग्रहणादेव, **शुद्धगुणवाचिनापि** केवलं गुणवाचिनापि, अपिशब्दाद् द्रव्यवाचिना च, **समासो न भवति** गुणवचनत्वाभावात् प्रकृतसूत्रेण समासो न भवति, क्वेत्याकाङ्क्षा-10 यामाह–**घृतेन पाटवम्, विद्यया धार्ष्ट्यमि**ति–अत्र पाटव-धार्ष्ट्यशब्दौ केवलं गुणमेवाहतुर्न गुणिनमिति शुद्धगुणवाचिनौ स्तः, धार्ष्ट्यस्थाने 'दार्ढ्यं' इत्यपि पाठः, ननु चात्रापि समासमिच्छन्त्येव–घृतपाटवम्, विद्यादार्ढ्यमिति, तत् कथङ्कारं कथ्यते–अत एव शुद्धगुणवाचिनापि न समासो भवतीत्यत 15 आह–**अत्रापि समासो भवतीति कश्चिदि**ति–कश्चिदित्यनेनाल्पत्वं सूच्यते, तथा चाल्पा एव मन्यन्ते, न सर्वे, इति भूयसामिष्ट्यपेक्षया तदुच्यत इत्यदोषः। पुनर्मतान्तरमाह–**अन्ये** अपरे केचनाचार्याः, **तु**शब्दः पूर्वोक्ततो विशेषदर्शनार्थः, कोऽयं विशेष इत्याह–**गुणवचनैर्गुणमात्रवृत्तिभिरपि** ते हि सूत्रे 20 गुणवचनग्रहणं स्वीकुर्वन्ति, किन्तु ये केवलं गुणे वर्तन्ते, अपिशब्दाद् गुणिनि च वर्तन्ते ते सर्वेऽपि गुणवचना इति स्वीकृत्य गुणमात्रवाचिभिरपि, **समासं** प्रकृतसूत्रेण समासमिच्छन्ति, एवं च लभते–'शङ्कुलाखण्डश्वैत्रः, गिरिकाणश्वैत्रः' इति यद् भवति तत्र **शङ्कुलाखण्डश्चैत्रस्य, गिरिकाणश्चैत्रस्ये**त्यपि 25 तन्मते भवतीति। इदत्रैदम्पर्यम्–'गुणवचनाः' इत्यस्य व्याख्या द्विधा–'गुणमुक्तवन्तो गुणवचनाः' इत्येका, यामाश्रित्य सूत्रकृताचार्येण व्याख्यातम्, 'यैर्गुण उक्तास्ते गुणवचनाः' इत्यपरा, यामाश्रित्येदं दर्शनं प्रवृत्तम्, एतद्दर्शनरसिका एवमाहुः–गुणोक्त्या शब्दो लक्ष्यते, स गुणे गुणिनि च गुणवचन इति तत्रेदमुदाहरणं–30 शङ्कुलाखण्डश्चैत्रस्येति, अत्र खण्डशब्दस्य गुणे–एकदेशविकलतायां वृत्तिरित्याख्यायते, षष्ठी हि भेदमादर्शयति, यदा गुणिनि वर्तते तदा शङ्कुलाखण्डश्चैत्र इत्युदाहरणम्, शास्त्रे च व्यापिपक्षाश्रयणं श्रेयः, तत्र यद्यतिव्याप्तिप्रसङ्गः स्यात् तदानभिधानेन परिहरिष्यते, अव्यापिपक्षाश्रयणे त्वधिकसम्भवे तस्यासाधुत्वं 35 प्रसज्येत। अथ वचनग्रहणाभावे 'गुण' इत्युच्यमाने गुणे वर्तमानैः समासः स्यात्, न गुणिनि, अथ शब्दोपलक्षणं, तथा च ये गुणे एव वर्तन्ते तैरपि पाटवादिभिः शब्दैः समासः स्यात्–घृतेन पाटवम्, विद्यया वा धार्ष्ट्यमिति तेषामपि गुणे वृत्तेः, वचनग्रहणे तु वचनग्रहणसामर्थ्याद् गुणे वर्तित्वा तद्वति ये वर्तन्ते तेषां 40 ग्रहणमिति न भवति. पाटवादयश्च पाटवादिशब्दैर्यद्यपि न पारतन्त्र्येणोच्यन्ते तथापि लोके गुणव्यपदेशेन प्रसिद्धाः, लौकिकस्य चेह ग्रहणं गुणस्य न परतन्त्रस्य, पारतन्त्र्यं च पटुर्देवदत्त इत्यादावनुभवन्ति, अतस्तन्निवृत्त्यर्थं वचनग्रहणमिति ॥ ३. १. ६५. ॥

## चतस्रार्धम् । ३ । १ । ६६ ॥

**त० प्र०**—अर्धशब्दस्तृतीयान्तस्तत्कृतार्थेन चतसृशब्देन 45 सह समस्यते, तत्पुरुषश्च समासो भवति। **अर्धेन कृताश्चतस्रोऽर्धचतस्रो मात्राः, एवम्–अर्धचतस्रः खार्यः। चतस्रेति किम्? अर्धेन कृताश्चत्वारो द्रोणाः** ॥ ६६ ॥

**श० म० न्यासानुसन्धानम्–चतस्रार्धमिति।** *स्वं रूपं शब्दस्याशब्दसंज्ञा* इति न्यायाच्चतसृशब्दस्य शब्दस्वरूप-50 परत्वं नार्थपरत्वमिति नात्र बहुवचनान्तत्वमिति **'चतस्रा'** इत्येकवचनेन निर्देशः, शब्दस्वरूपपरत्वं दर्शयितुमाह–**चतसृशब्देनेति। अर्धेन कृताश्चतस्रः** इति विग्रहः, **अर्धचतस्रः** इति च समासः, **मात्राः** इति तद्विशेष्यम्, अक्ष्णो निमेषेणोन्मेषेण वा मितः कालो मात्रा, यामाश्रित्य प्राह– 55

"एकमात्रो भवेद्ध्रस्वो, द्विमात्रो दीर्घ उच्यते ।
प्लुतः स्वरस्त्रिमात्रः स्याद्, व्यञ्जनं चार्धमात्रकम्" ॥ इति,

अतिदिशति–**एवमिति, अर्धचतस्रः** इति समासः, अर्धेन कृताश्चतस्र इति विग्रहः, **खार्यः** इति तद्विशेष्यं, खारी मानविशेषः। पदकृत्यं पृच्छति–**चतस्रेति किमिति**–चतसृशब्दो 60 न स्वतन्त्रः, किन्तु त्रिशब्दस्य स्त्रियामादेशरूपः, तेन कथमत्र निर्देशः, मूलभूतेन त्रिशब्देन पुंसा निर्दिश्यतां, तथा सति लिङ्गविशिष्टपरिभाषया चतसृशब्दस्यापि ग्रहणं भविष्यतीति प्रश्नाशयः, प्रत्युदाहरणमुखेनोत्तरयति–**अर्धेन कृताश्चत्वारो द्रोणाः** इति–पुंसा निर्देशे पुंस्यपि स्यात्, इष्यते च स्त्रिया-65 मेवेति स्त्रीलिङ्गेनैव निर्देश उचित इत्युत्तराशयः। द्रोणो मानविशेषः। अन्ये वैयाकरणा एतादृशं सूत्रं नारभन्ते, प्रयुञ्जते चैतादृशान् प्रयोगान्, यथा–"लण्" [ माहे० सू० ६. ] इति सूत्रे महाभाष्ये 'अर्धचतस्रो मात्राः' इति प्रयुक्तम्, कैयटेन च 'अर्धेन चतस्रः' इति विगृहीतम्, ते हि "तृतीया" इति 70 योगं विभज्य तादृशे प्रयोगे समासं स्वीकुर्वन्ति भाष्यप्रामाण्यात्, अन्यप्रयोगे च 'अर्धेन कृताश्चत्वारः' इत्यादावनभिधानात् समासाभावं च, एतदपेक्षया प्रतिपत्तिलाघवात् सूत्रारम्भो ज्यायानिति मनसिकृत्याचार्येण सूत्रं निरमायि॥ ३. १. ६६.॥

## ऊनार्थ-पूर्वाद्यैः । ३ । १ । ६७ ॥ 75

**त० प्र०**—तृतीयान्तं नाम ऊनार्थैः पूर्वादिभिश्च नामभिः समस्यते, तत्पुरुषश्च समासो भवति। **माषेणोनं–माषोनम्, एवं–कार्षापणोनम्, माषविकलम्, कार्षापणविकलम्;**

पूर्वाद्याः-मासेन पूर्वः-मासपूर्वः, संवत्सरपूर्वः, एवं-मासावरः; संवत्सरावरः । 'पूर्व, अवर, सदृश, सम, कलह, निपुण, मिश्र, श्लक्ष्ण' इति पूर्वादयः । आकृतिगणोऽयं, तेन 'धान्येनार्थो-धान्यार्थः, हिरण्यार्थः; आत्मनापञ्चमः, आत्मनाषष्ठः,
5 एतावलुप्समासौ, माषेणाधिकं-माषाधिकं कार्षापणम्, एवं-द्रोणाधिका खारी; भ्रात्रा तुल्यः-भ्रातृतुल्यः, एकेन द्रव्यवत्त्वम्-एकद्रव्यवत्त्वम्' इत्यादि सिद्धम् । पूर्वादियोगे यथायोगं हेत्वादौ तृतीया ॥ ६७ ॥

**श० म० न्यासानुसन्धानम्-ऊनार्थ०** इति । ऊन-
10 शब्दोऽपूर्णार्थः, तदर्थका ऊनविकलादिशब्दाः, पूर्वाद्याश्चेह वक्ष्यमाणा अष्टौ शब्दाः । सविग्रहमुदाहरति-**माषेणोन**मिति विग्रहः, **माषोन**मिति च समासः, अतिदिशति-**एवमिति**, **कार्षापणोन**मिति समासः, कार्षापणेनोनमिति विग्रहः, **माषविकल**मिति समासः, माषेण विकलमिति विग्रहः, **कार्षापण-
15 विकल**मिति समासः, कार्षापणेन विकलमिति विग्रहः । पूर्वादीनुदाहर्तुमवतारयति-**पूर्वाद्या** इति, **मासेन पूर्वः** इति विग्रहः, **मासपूर्वः** इति च समासः, **संवत्सरपूर्वः** इति समासः, संवत्सरेण पूर्व इति विग्रहः, **मासावरः** इति समासः, मासेनावर इति विग्रहः, **संवत्सरावरः** इति समासः, संवत्सरे-
20 णावर इति विग्रहः । के पूर्वादय इत्याह-**'पूर्व, अवर, सदृश, सम, कलह, निपुण, मिश्र, श्लक्ष्ण' इति पूर्वादय** इति-तत्र पूर्वावराभ्यामुदाहृतम्, शेषैरुदाह्रियते-विद्यया सदृशः-विद्यासदृशः, विद्यया समः-विद्यासमः, वाचा कलहः-वाक्कलहः, कर्मणि निपुणः-कर्मनिपुणः, गुडेन मिश्रः-गुडमिश्रः, वाचा
25 श्लक्ष्णः-वाक्श्लक्ष्णः । बहुवचनमाकृतिगणार्थमित्याह-**आकृतिगणोऽयमिति**, **तेन** आकृतिगणत्वेन, अस्य **सिद्धमि**त्यनेनान्वयः, किं किं सिद्धमित्याह-**धान्येनार्थ** इत्यादि, **धान्येनार्थः** इति विग्रहः, **धान्यार्थः** इति समासः, **हिरण्यार्थः** इति समासः, हिरण्येनार्थ इति विग्रहः, **आत्मना पञ्चमः**,
30 **आत्मना षष्ठः**, **एतावलुप्समासौ** "ऐकार्थ्ये" [ ३. २. ८. ] इति प्राप्तोऽपि लुप् "आत्मनः पूरणे" [ ३. २. १४. ] इति निषिध्यत इत्यलुक्समासावेतावित्यर्थः, **माषेणाधिकम्** इति विग्रहः, **माषाधिकमिति** च समासः, **कार्षापणाधिकमिति** समासः, कार्षापणेनाधिकमिति विग्रहः, अतिदिशति-
35 **एवमिति**, **द्रोणाधिकेति** समासः, द्रोणेनाधिकेति विग्रहः, **खारीति** विशेष्यम्, **भ्रात्रा तुल्यः** इति विग्रहः, **भ्रातृतुल्यः** इति च समासः, । **एकेन द्रव्यवत्त्वमिति** विग्रहः, **एकद्रव्यवत्त्वमिति** च समासः यद्यपि एकं च तद् द्रव्यमिति कर्मधारये कृते मतुना रूपसिद्धिरिति शङ्कितुं शक्यते, तथापि
40 तथा सति "एकादेः कर्मधारयात्" [ ७. २. ५८. ] इतीकण् स्यात्, अतस्तद्व्यावृत्तये द्रव्यवत्त्वस्यैकेन समास उचितः, पूर्वादीनां बहुवचनावेदिताकृतिगणत्वेनार्थपूरणप्रत्ययान्ताऽधिक-तुल्य-द्रव्यवत्त्वादीनां संग्रहात् तद्घटितोक्तसमासानां सिद्धिरिति भावः ।

अथ पूर्वशब्दस्य दिक्शब्दत्वेन तद्योगे "प्रभृत्यन्यार्थदि-45 क्शब्द०" [ २. २. ७५. ] इति पञ्चमी समुचितेति कथं मासेन पूर्व इति तृतीयान्तेन विग्रह इत्याशङ्कायामाह-**पूर्वादियोगे यथायोगं हेत्वादौ तृतीयेति**-मासादिरिह पूर्वादीनां पूर्वादिभावे हेतुत्वेन विवक्ष्यते, अतो हेतुत्वविवक्षायां दिक्शब्दयोगां पञ्चमीं प्रबाध्य तृतीया भवतीति भावः, सदृशादियोगे तु 50 "तुल्यार्थैस्तृतीया-षष्ठ्यौ" [ २. २. ११६. ] इति तृतीया विहितैवेति सूचनाय 'यथायोगम्' इत्युक्तिः, योगं-सम्बन्धमनतिक्रम्येति तदर्थः, तथा च यस्य शब्दस्य यथा सम्बन्धो विवक्ष्यते तथैव विभक्तिर्भवति, *विवक्षातः कारकाणि* इति न्यायादिति सूचितम्, अत एव 'हेत्वादौ' आदिपदं दत्तं, तेन च सदृश-55 योगादिसंग्रहः ।

इह तृतीयाविषयेऽनेकधा विचारश्रेणिः, तथाहि-मासेन पूर्वो मासपूर्व इत्यत्र पूर्वशब्दो न क्रियाशब्दः, अतो न तद्योगे कर्तरि करणे वा तृतीया सम्भवति, कर्तृ-करणयोः क्रियापेक्षत्वात्; यदि च शङ्कुलाखण्डादिवदिह कृत इत्यन्तर्भूता क्रिया प्रतीयेत 60 तदा "तृतीया तत्कृतैः" [ ३. १. ६५. ] इति सिद्धेर्वचनमनर्थकं स्यात्, पूर्व इति हि खट्वादिवद् गुणवचनो भवतीत्येके ।

मासेन पूर्व इत्यत्र कर्तरि करणे वा तृतीया, कृत इति ह्यत्र प्रतीयते, गुणतया तु न लोके पूर्वादयः प्रसिद्धा इति "तृतीया तत्कृतैः" [ ३. १. ३५. ] इति न सिध्यतीत्यारम्भ इत्यन्ये । 65

अपरे त्वेवमाहुः-"यद्भेदैस्तद्वदाख्या" [ २. २. ४६. ] इति सूत्रेणात्र तृतीया, पूर्व इति हि स मासभेदः, तेन यस्य समासे तद्वानाख्यायते-पूर्व इति, नह्यपूर्वे समासे देवदत्तस्तेन पूर्वो भवति, एवं मासावर इति, विद्यासदृश इत्यत्रापि यदि न विद्या सदृशी न विद्यया सदृशः स्यात्, माषोनमित्यपि माष ऊने 70 भवति, यद्यपि विगता कलाऽस्येति विगतकलं विकलमुच्यते, तथापि रूढिशब्दोऽयम्, येन तद्विकलं भवति तत्रापि भवति, एतत् कलहादौ न सम्भवति, नहि वाक्कलह इत्यादौ वागादिभेदेन तद्वानाख्यायते ।

समसदृशयोगेऽपि विचारभेदः, तथाहि-गुरुणा सदृशो गुरु-75 सदृश इत्यत्र सदृशयोगे यथा तृतीया प्राप्नोति तथा षष्ठ्यपि, तत्र तृतीयायामनेन समासः, षष्ठ्यर्थमारम्भो विधेयः, न विधेयः, त्रैरूप्यमिह साध्यं-गुरुणा सदृशः, गुरोः सदृशः, गुरुसदृश इति, अवश्यं च षष्ठीसमासोऽप्राप्तौ कर्तव्यः, दास्याः-सदृशः, वृषल्याः

सदृशः' इत्यत्र "षष्ठ्याः क्षेपे" [ ३. २. ३०. ] इत्यलुगर्थम्, अत एवेह गुरुसदृश इति नोदाहियत इति मत्वा हेतावियं तृतीयेत्याहेति केचन ।

अपरे त्वेवमाहुः-अत एव समासवचनादत्र विषये षष्ठ्यपवादेन तृतीया विज्ञायत इतीह विद्यासदृशः, विद्यासम इति, यद्यपि विद्यया सदृशो देवदत्तो गुरुदत्तेनेति गुरुदत्तापेक्षास्ति, न च तत्र विद्यापेक्षते, अपि तु सदृशः प्रधानमिति समासोपपत्तिः ॥ ३. १. ६७. ॥

## कारकं कृता । ३ । १ । ६८ ॥

**त० प्र०**—कारकवाचि नाम तृतीयान्तं सामर्थ्यात् कर्तृ-करणरूपं कृदन्तेन नाम्ना सह समस्यते, तत्पुरुषश्च समासो भवति । कर्तृ-आत्मना कृतम्-आत्मकृतम्, परकृतम्; "कृत् सगतिकारकस्यापि" [ ७. ४. ११७. ] चैत्रेण नखनिर्भिन्नः-चैत्रनखनिर्भिन्नः, एवं-सुजनसुलभः, दुर्जनदुर्लभः; अरिदुर्जयः; करण-परशुना छिन्नः-परशुच्छिन्नः, एवं-नखनिर्भिन्नः, पादप्रहारः, पादाभ्यां ह्रियते-पादहारकः, तलाहतिः, शस्त्रप्रहतिः । बहुलाधिकारात् स्तुतिनिन्दार्थतायां प्रायेण कृत्यैः समासः, कर्तृ-काकपेया नदी, एवं नाम पूर्णेत्यर्थः; श्वलेह्यः कूपः, एवं नामासन्नोदक इत्यर्थः, कुक्कुटसंपात्या ग्रामाः, एवं नामासन्ना इत्यर्थः; करण-कण्टकसंचेय ओदनः, एवं नाम विशद इत्यर्थः; बाष्पच्छेद्यानि तृणानि, एवं नाम मृदूनीत्यर्थः; अन्यत्रापि तुशोपेन्ध्यम्, तृणोपेन्ध्यम्, तेजसः अल्पता ख्याप्यते; धनघात्यः, कृच्छ्रसाध्यत्वमुच्यते । कारकमिति किम्?,-विद्ययोषितः, अन्नेनोषितः, तेन हेतुनेत्यर्थः; पुत्रेण गतः, छात्रेणागतः, तेन सहेत्यर्थः । कृतेति किम्? गोभिर्वपावान्, धान्येन धनवान् । बहुलाधिकारादेव क्तवतुना क्त्वया तव्या-ऽनीयाभ्यां च न भवति-दात्रेण लूनवान्, परशुना छिन्नवान्; दात्रेण कृत्वा, परशुना छित्त्वा; काकैः पातव्यः, श्वभिर्लेढव्यः ॥ ६८ ॥

**श० म० न्यासानुसन्धानम्-कारकमिति ।**

"कर्ता कर्म च करणं, सम्प्रदानं तथैव च ।
अपादानाधिकरणमित्याहुः कारकाणि षट् ॥"

इति यद्यपि षड्विधं कारकं तथापि तृतीयायाः कर्तरि करणे वा कारके विधानबलादिह कारकपदं कर्तरि करणे वा विश्राम्यतीत्याह-**सामर्थ्यात् कर्तृ-करणरूपमिति**, तृतीयान्तं कर्तृरूपं करणरूपं वा नामेत्यर्थः, तथा चान्यैः "कर्तृ-करणे कृता बहुलम्" [ पाणि० सू० २. १. ३१. ] इति विशिष्यैव सूत्रमारब्धम्, भाष्यकृता च "साधनं कृता" इति न्यासोऽपि तदभिमसूत्रे सूचित एव, सामर्थ्यादेव तयोः [ कर्तृ-करणयोः ] लाभ इत्याशयात् । यद्यपि "समो ज्ञोऽस्मृतौ वा" [ २. २. ५१. ] इति कर्मण्यपि तृतीया भवति, कारकं च तत् तथापि तत्रानभिधानान्न भवति समासः, अथाभिधानमस्ति तदा कर्तृकरणरूपमिति तस्योपलक्षणं भविष्यति । तत्र तावत् पूर्वं कर्तर्युदाहर्तुमवतारयति-**कर्तृ-इति, आत्मना कृतमिति**-इदमर्थप्रदर्शनमात्रं, विग्रहवाक्यं तु-आत्मना क्रियते स्मेति, यतोऽत्र सर्वत्र प्रायः *गतिकारकङस्युक्तानाम्०* इति न्यायेन स्याद्युत्पत्तेः प्रागेव समासः, क्तः कृत्प्रत्ययः, कृगः क्ते-'कृत' इति, कृदन्तत्वादनेन सह समासे-**आत्मकृतमिति**, एवम्-**परकृतमिति** समासः, परेण कृतमित्यर्थप्रदर्शनं, परेण क्रियते स्मेति विग्रहश्च । कृदिति प्रत्ययः, स च "प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इति परिभाषया प्रकृत्यादिसमुदायस्यैव विशेषणं स्यान्नोनस्याधिकस्य वेति "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषया प्रकृत्यादिसमुदायस्यैव कृदन्तत्वं स्यान्नाधिकस्य, तथा च भिदः-क्ते 'भिन्न' इत्यस्यैव कृदन्तत्वं स्यात्, न निर्भिन्न इत्यस्य नवा नखनिर्भिन्न इत्यस्य, एवं सति कथं चैत्रनखनिर्भिन्न इति समासप्रयोग इत्याशङ्कायामाह-**कृत् सगतिकारकस्यापी**ति-"कृत् सगतिकारकस्यापि" [ ७. ४. ११७. ] इति परिभाषया कृत् प्रत्ययः प्रकृत्यादेः समुदायस्य-गतिकारकपूर्वस्य केवलस्य च विशेषणं भवतीति दर्शितम्, तथा च गतिपूर्वस्य निर्भिन्न इत्यस्य गतिकारकपूर्वस्य च नखनिर्भिन्न इत्यस्य कृदन्तत्वे-**चैत्रेण नखनिर्भिन्नः-चैत्रनखनिर्भिन्नः** इति प्रकृतसूत्रेण समासः, चैत्रेण नखनिर्भिन्न इत्यर्थप्रदर्शनम्, निपूर्वात् "भिदंपी विदारणे" इत्यतः कर्मणि क्ते "रदादमूर्छमदः०" [ ४. २. ६९. ] इति दस्य नत्वे "गतिक्वन्य०" [ ३. १. ४२. ] इति समासे 'निर्भिन्न' इति, अस्य सगतिकस्यापि कृदन्तत्वात् करणे तृतीयायां नखैर्निर्भिन्नः-नखनिर्भिन्न इति प्रकृतसूत्रेण समासः, अस्य च गतिकारकपूर्वस्यापि कृदन्तत्वात् कर्तरि तृतीयायां चैत्रेण नखनिर्भिन्नः-चैत्रनखनिर्भिन्न इति प्रकृतसूत्रेण समासो भवतीति भावः । अतिदिशति-**एवमिति, सुजनसुलभ, दुर्जनसुलभः, अरिदुर्जयः**, इति-इमे प्रकृतसूत्रेण समासाः, शोभनो जनः सुजनः "सुः पूजायाम्" [ ३. १. ४४. ] इति समासः, दुष्टो जनः-दुर्जनः "दुर्निन्दाकृच्छ्रे" [ ३. १. ४३. ] इति समासः, "डुलभिंष् प्राप्तौ" इत्यतः सुपूर्वात् "जिं जये" इत्यतो दुष्पूर्वाच्च सुखेन लभ्यते दुःखेन जीयते इति "दुःस्वीषतः०" [ ५. ३. १३९. ] इति खलि, सुशब्दस्य गतिसंज्ञासम्पत्तये पूजार्थाविवक्षणात् गतिसंज्ञाया "गतिक्वन्य०" [ ३. १. ४२. ] इति सूत्रेण, 'दुस्' शब्दस्य च "दुर्निन्दाकृच्छ्रे" [ ३. १. ४३. ] इति सूत्रेण समासे सुलभ इति दुर्जय इति, ततः

कर्तरि तृतीयायां सुजनेन सुलभः, दुर्जनेन सुलभः, अरिणा दुर्जय इति विग्रहे प्रकृतसूत्रेण गतिसहितस्यापि कृदन्तत्वात् समासे सुजनसुलभः, दुर्जनसुलभः, अरिदुर्जयः, इति समासाः । ननु गतिसंज्ञासम्पत्तये सोर्दुसो दुरो वोपसर्गत्वमास्थेयमत्र, तथा सति "सुदुर्भ्यः" [ ४. ४. १०९. ] इति लभः स्वरात् परो नोऽन्तः प्राप्नोतीति 'सुलम्भः, दुर्लम्भः' इति भवितव्यं, न तु 'सुलभः, दुर्लभः' इति चेत्? उच्यते–उक्तसूत्रेण नोऽन्तो हि समुदिताभ्यामन्योपसर्गेण सहिताभ्यां वा सुदुर्भ्यां भवति, न केवलाभ्याम्; अत एव धातुपारायणे प्रोक्तम्–"केवलेभ्यस्तु नस्याभावे–सुलभं दुर्लभमिति ।

अथ करणतृतीयामुदाहर्तुमवतारयति–**करणे** इति, **परशुना छिन्नः** इति विग्रहः, छिदः क्ते–'छिन्न' इति, कृदन्तत्वादनेन समासे–**परशुच्छिन्नः** इति । अतिदिशति–**एवमिति**, **नखनिर्भिन्नः** इति गतिसहितस्यापि कृदन्तत्वात् समासः, नखैर्निर्भिन्न इति विग्रहः, **पादप्रहारः** इति समासः, पादाभ्यां प्रहार इति विग्रहः, प्रपूर्वात् "हृंग् हरणे" इत्यतो घञि प्रहार इत्यस्य गतिसहितस्यापि कृदन्तत्वात् समासः, **पादाभ्यां ह्रियते** इति विग्रहः, **पादहारकः** इति समासः, अत्र "बहुलम्" [ ५. १. २. ] इति बाहुलकात् कर्मणि णकः, पादाभ्यामिति च करणे तृतीया, इति स्वमतम्, कश्चित् तु–'सम्प्रदाने चतुर्थी, अपादाने वा पञ्चमी, चतुर्थ्यां हितादेराकृतिगणत्वात् समासः, पञ्चम्यां भयादेराकृतिगणत्वाच्च समासः इत्याहुः, परे तु बाहुलकादतृतीयान्तेनाप्यनेन समास इति, अन्ये तु–"पादाभ्यामित्यपादाने पञ्चमी, नहि बलाद् ग्रहणादिरूपहरणकरणत्वं पादयोः प्रसिद्धम्, अपि तु पादयोः स्थितो नूपुरादिरलङ्कारस्ततः पृथक् क्रियत इत्यपादानत्वं तयोः, बाहुलकाच्चानेन समासः" इत्याहुः, स्वमते *विवक्षातः कारकाणि* इति करणतृतीयान्तत्वे स्वाभाविकप्रवृत्त्यैवानेन समासः, अपादानत्वविवक्षायां च बाहुलकात् समास इत्यवधेयम् । प्रकृतसूत्रेण समासविषये विशेषं दर्शयितुमाह–**बहुलाधिकारादिति**–"नाम नाम्नैकार्थ्ये समासो बहुलम्" [ ३. १. १८. ] इत्यतो बहुलमित्यधिकारात्, ततः समासो बहुलं भवतीत्यर्थलाभादित्यर्थः, **स्तुतिनिन्दार्थतायामिति**–स्तुत्या स्तुतिमुखेन या निन्दा तदर्थतायां, स्तुत्यै या निन्दा–निन्दामुखेन या स्तुतिस्तदर्थपरतायां, स्तुति-निन्दोभयार्थतायामिति च व्याख्याप्रकाराः, तत्राचार्येण स्तुत्यर्थः साक्षाद् दर्शयिष्यते, **प्रायेणेति**–काकपीता नदीत्यादौ क्वचित् क्तान्तेनापि समासदर्शनात् कृत्यैरित्यस्य प्रायिकत्वमिति द्योतयितुमेवेयमुक्तिः, **कृत्यैरिति**–"ते कृत्याः" [ ५. १. ४७. ] इति 'घ्यण् तव्य अनीय य क्यप्' इति कृत्याः संज्ञायन्ते, तत्र तव्यानीयनिषेधस्य वक्ष्यमाणत्वात् शेषा इह ग्राह्याः, तत्रापि य-घ्यणोरेवाचार्येणोदाहरिष्यन्ते, इह च यद्यपि "कारकं कृता" इति प्रकृतेन सामान्यसूत्रेण स्वभावप्रवृत्त्यापि समासः सिद्ध एवेति बहुलाश्रयणं नावश्यकं, तथापि स्तुति-निन्दयोरेव प्राधान्येन क्रियायाश्च गौणत्वेन गौणमुख्यन्यायेन यत्र पानादिक्रियावाचकस्य कृतो मुख्यत्वं तत्रैव सूत्रप्रवृत्तिः स्यादिति गौणे सूत्रप्रवृत्त्यनुपपत्त्या बहुलाश्रयणमावश्यकमिति बोध्यम्, काकपेयेत्यादौ हि काककर्तृकपानकर्म नदीति बोधेऽल्पाम्भस्त्वपूर्णाम्भस्त्वादिना निन्दा-स्तुतिमात्रे तात्पर्यात् क्रियाया निष्प्रयोजनत्वेन गौणत्वात् कर्तृ-करणयोरपि गौणत्वमिति भावः । पूर्वं तावत् कर्तरि तृतीयायां कृत्यैः समासमुदाहर्तुमवतारयति–**कर्तृ** इति, **काकपेया नदी**ति–काकैः पीयत इति काकपेया "पां पाने" इत्यतः "य एच्चातः" [ ५. १. २८. ] इति ये आकारस्य एकारे तत आपि तेन तृतीयान्तस्य *नामग्रहणे लिङ्गविशिष्टस्यापि* इति न्यायादनेन समासः, समास एव विशिष्टविषये रूढ इत्याह–**एवं नाम पूर्णेत्यर्थः** इति–एवं नाम पूर्णा यत् काकैरपि तटस्थैरुत्पतद्भिर्वा पातुं शक्यत इति पूर्णतातिशयख्यापने प्रसिद्धः समासः, अयं च विशेषो न वाक्येन गम्यत इत्यत्र नित्यसमासो वेदितव्यः, यथा–खट्वारूढ इति क्षेपो न वाक्येन गम्यत इति नित्यसमासः, एवमुत्तरत्रापि, अत्र पूर्णतोयत्वोद्भावनेन नद्याः स्तुतिः, अल्पतोयत्वोद्भावने तु नद्या निन्दा, एवं नामाल्पतोया नदी यत् काकैरपि शक्यं पातुमिति, यद्वा काकेनैव पेया मलिननिकृष्टजलसत्त्वादिति निन्देति कश्चित् । **श्वलेह्यः कूपः** इति–श्वभिर्लिह्यत इति श्वलेह्यः, "लिहींक् आस्वादने" इत्यतः "ऋवर्णव्यञ्जनाद् घ्यण्" [ ५. १. १७. ] इति घ्यण्, समासार्थमाह–**एवं नामासन्नोदक इत्यर्थः** इति–एवं नामासन्नोदकः कूपो यतः श्वभिरपि लिह्यते इति कूपस्य स्तुतिः, अशुद्धतोयत्वोद्भावनं निन्दा, एवं नामाशुचिः कूपो यत् श्वभिरपि [ श्वभिरेव वा ] लिह्यत इति । **कुक्कुटसम्पात्या ग्रामाः** इति–कुक्कुटैः सम्पत्यन्ते सम्पातविषयीक्रियन्त इति "ऋवर्णव्यञ्जनाद् घ्यण्" [ ५. १. १७. ] इति घ्यण्, **एवं नामासन्ना इत्यर्थः** इति–एवं नामासन्ना यत् कुक्कुटैः सम्पतितुं शक्यन्ते, कुक्कुटानामतिदूरोड्डयनगमनाद्यक्षमत्वाद् ग्रामाणां परस्परासन्नत्वं गम्यत इति स्तुतिः, कुक्कुटानामवकरव्याप्तस्थानसम्पातित्वाद् ग्रामाणामतिशयावकरपूर्णत्वावगतिरूपा च निन्दा करणतृतीयायामुदाहर्तुमवतारयति–**करण** इति, **कण्टकसंचेय ओदनः** इति–कण्टकैः संचीयत इति कण्टकसंचेयः, सम्पूर्वाच्चिनोतेर्यप्रत्ययः, समासार्थमाह–**एवं नाम विशद इत्यर्थः** इति–एवं नामौदनस्य विशदतातिशयो यत् कण्टकेनापि शक्यः संचेतुम्, ओदनानां तथा परस्परासंसक्तं यथा सर्वे पृथक् पृथक्

कण्टकैश्चेतुं शक्यन्ते इति स्तुतिः, अल्पतोद्भावनं निन्दा, एवं नामाल्प ओदनो यत् कण्टकैरपि चीयत इति, यद्वा तथा कण्ठोरा यथा कण्टकैरेव परस्परसम्बन्धयोग्या न व्यञ्जनादिनोपक्षेक्षव्या इति निन्देति केचित् । **बाष्पच्छेद्यानि तृणानी**ति–बाष्पैश्छिद्यन्ते इति ध्यण्, समासार्थमाह–**एवं नाम मृदूनीत्यर्थः** इति–एवं नाम मृदूनि यत् बाष्पेण छिद्यन्ते–छेत्तुं शक्यन्ते, अत्र मृदुतातिशयेन स्तुतिः, क्वथितोद्भावनं निन्दा, एवं नाम क्वथितानि तृणानि यद् बाष्पेणापि च्छिद्यन्ते । न केवलं निन्दा-स्तुत्योरेवायं कृत्यैः समासः, अपि तु तदभावेऽपीत्याह–**अन्यत्रापी**ति–स्तुतिनिन्दाभ्यामन्यत्रापि, स्तुतिमन्तरा निन्दामन्तरा चेत्यर्थः, केत्याह–**बुसोपेन्ध्यम्, तृणोपेन्ध्यमि**ति–बुसेन तृणेन वा उपेन्धितुं प्रज्वालयितुं योग्यमिति तथा, उपपूर्वात् "ञिइन्धैपि दीप्तौ" इत्यतो ध्यण्, तथाभूतमिदं तेजो यद् बुसेनैव तृणेनैव वा प्रज्वालयितुं शक्यते, नान्यस्येन्धनस्यापेक्षेति प्रतीतेस्तेजसोऽग्न्यादेरल्पता प्रतीयत इत्याह–**तेजसोऽल्पता ख्याप्यते** इति, **घनघात्यः** इति–घनेन–बलवता हन्यत इति तथा, 'हनंक् हिंसा-गत्योः" इत्यतः "ऋवर्ण-व्यञ्जनाद् ध्यण्" [ ५. १. १७. ] इति ध्यणि "ञ्णिति घात्" [ ४. ३. १०० ] इति घातादेशः, नावश्यमत्र घनेन तप्तायःप्रसारणसाधनेन लोहकुट्टनेन हननयोग्यता प्रतीयते, अपि तु क्लेशसाध्यत्वमात्रमित्याह–**कृच्छ्रसाध्यत्वमुच्यते** इति, इत्थं च प्रकृतप्रयोगेषु स्तुतिनिन्दयोरभावेऽपि समासो दृश्यत इति तदंशेऽपि प्रायिकत्वं सूचयितुं प्रायेणेत्युक्तिरिति भावः ।

पदकृत्यं पृच्छति–**कारकमिति किमि**ति–कारकग्रहणाभावेऽपि कृतां क्रियाप्रवृत्तिनिमित्तत्वेन कारकस्यैव तृतीयान्तस्य तैः सह सामर्थ्यमिति सामर्थ्यलभ्यमेव कारकग्रहणप्रयोजनमिति प्रश्नाशयः, प्रत्युदाहरणमुखेनोत्तरयति–**विद्ययोषितः, अन्नेनोषितः** इति,–नात्र कर्तरि करणे वा कारके तृतीया, अपि तु हेतावित्याह–**तेन हेतुनेत्यर्थः** इति–विद्यारूपहेतुना अन्नरूपहेतुना वा उषित इत्यर्थः, अयं भावः–अत्र विद्याया अन्नस्य च वासं प्रति न कारकत्वम्, अपि तु हेतुत्वं–प्रयोजकत्वम्, प्रयोजकं च न क्रियाजनकम्, अपि तु कर्तृप्रेरकत्वात् परम्परया क्रियासम्बद्धमिति साक्षात् क्रियाजनकत्वरूपकारकत्वाभावादिह समासो न भवति, कारकग्रहणाभावे च स्यादेव समासः, "वसं निवासे" इत्यस्य भूते कर्तरि क्ते "क्षुधवसस्तेषाम्" [ ४. ४. ४३. ] इति इटि "यजादिवचेः किति" [ ४. १. ७९. ] इति वस्य उकारे सस्य च षत्वे 'उषित' इति, **पुत्रेण गतः, छात्रेणागतः** इति–नात्र कर्तरि करणे वा कारके तृतीया, अपि तु सहार्थे, अत आह–**तेन सहेत्यर्थः** इति–पुत्रच्छात्रयोस्तृतीयायास्तुल्ययुक्तत्वमात्रेण सम्बन्धो न तु जनकत्वमिति कारकत्वाभावः, यद्यपि तावपि गमनागमनक्रियां कुर्वाते एव तथापि तां प्रति कर्तृत्वस्याविवक्षा ज्ञेया, ननु 'पुत्रेण गतः, छात्रेणागतः' इति तृतीयान्तं सहेत्यपेक्षत इत्यसामर्थ्यादिवेह समासो न भविष्यति, नैतदस्ति, सहेति न पृथक् प्रयुज्यते, ताभ्यामेव पदाभ्यां तदर्थो गम्यते, न बहिरपेक्षास्तीति समर्थे ते पदे इत्यसति कारकमित्यस्मिन् प्राप्नोतीति युक्तं प्रत्युदाहरणम् ।

पुनः पदकृत्यं पृच्छति–**कृतेति किमि**ति–कारकस्य क्रिययैवान्वयो भवति, क्रियावाचकं च कृदन्तमाख्यातं च, तत्राख्यातस्य नामत्वाभावादेव तेन न समास इति पारिशेष्यात् कृदन्तेनैव समासो भविष्यतीति कृतेति व्यर्थमिति प्रश्नाशयः, प्रत्युदाहरणमुखेनोत्तरयति–**गोभिर्वपावान्, धान्येन धनवानि**ति–अत्र गवां स्वसम्बन्धिदध्याद्युपयोगद्वारा वपावत्ताजनकत्वं, धान्यस्य च स्वलभ्यधनद्वारा धनवत्ताजनकत्वं, न तु साक्षादिति कारकत्वाभावो यद्यपि वक्तुं शक्यते तथापि गवामेव वपावत्ताकरणत्वविवक्षायां, धान्यस्य च धनवत्ताकरणत्वविवक्षायां कारकत्वमव्याहतमेव, किन्तु वपाऽस्यास्तीति वपावान् धनमस्यास्तीति धनवानिति तद्धितान्तौ वपावद्धनवच्छब्दाविति कृदन्तत्वाभावात् समासो न भवति, वस्तुतस्तु कारकाणां क्रिययैव सामर्थ्यमिति गवां धनस्य च कारकत्वविवक्षायां वपावच्छब्देन धनवच्छब्देन च सामर्थ्यं न स्यादिति गोभिः कृतो वपावान्, धान्येन कृतो धनवान् इति विग्रहे दोषो बोध्यः, पूर्ववत् कृतशब्दस्य वृत्तावन्तर्भाव इति न प्रयोगः कृतः, एतेनात्र कारकत्वाभावाद् व्यक्तविकलतेति नेदं प्रत्युदाहरणं युक्तमिति केषांचिदुक्तिः परास्ता वेदितव्या ।

ननु गोभिर्धान्येनेति च कृत इत्यपेक्षते, सापेक्षं चासमर्थं भवतीति सामर्थ्याभावादेव समासो न भविष्यतीति चेद् ? उच्यते–एवं सति "तृतीया तत्कृतैः" [ ३.१.५४, ] इत्यत्र 'गुणवचनैः' इत्यस्येदं कथं प्रत्युदाहरणं स्यात्, तत्रासामर्थ्येऽपि समासेऽतिप्रसङ्गः स्यात्, अत इह कृत इति समुदाये पूर्वत्रोत्तरत्र वा पदेऽन्तर्भूतं न पृथगपेक्ष्यत इति पूर्वोत्तरपदयोः सामर्थ्यं मन्तव्यम्, तत्रासति कृतेति 'कृता भवति, न तद्धितेन' इति न शक्यं प्रतिपत्तुमतः 'कृता' इत्युपादीयते । अन्ये त्वेवमाहुः–'कृता' इति स्याद्युत्पत्तेः प्राक् कृदन्तेनैव समासो यथा स्यादित्येवमर्थमिति, तेन 'वस्त्रक्रीती, वसनक्रीती, अभ्रविलिप्ती द्यौः, सूपविलिप्ती पात्री' इति "क्रीतात् करणादेः" [ २.४.४४. ] इति "क्तादल्पे" [ २.४.४५. ] इति चाकारान्तादुच्यमानो ङीप्रत्ययः सिद्धो भवति, यदि च स्याद्यन्तेनेह समासः स्यात् तदा स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतं, समवेतस्य तु वचने लिङ्गं संख्यां विभक्तिं चेति प्रत्यासत्तिक्रमेण पूर्वं

लैङ्गाः प्रत्यया भवन्ति, पश्चात् संख्येति स्याद्युत्पत्तेः प्रागाप् ततः स्यादावाकारः, तत्राऽकारान्तता नास्तीति तन्निमित्तः प्रत्ययो न स्यात्, अतः स्त्रीप्रत्ययोत्पत्तेः प्रागेव समास एषितव्यः, स्याद्यन्तेन समासे न सिध्यतीति कृतैव समासो विज्ञा-
5 यते, यदि चापि वचनसामर्थ्यादनकारान्तादपि स ङीप्रत्ययो विज्ञायेत तदा "सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी" इत्यत्रापि स्यात्, अतो नैवं शक्यं प्रतिपत्तुम्, ननु च यदि कृता समस्यते तदा कथं धनक्रीतेति, अत्रापि ङीप्रत्ययेन भवितव्यम्, उच्यते—बहुलमित्यत्रास्ति, तेन बहुलं कृता
10 भवति, कदाचिदाबन्तेनापि समास इति ।

बहुलमित्यधिकारलभ्यमर्थान्तरमप्याह—**बहुलाधिकारादेवेत्यादिना, दात्रेण लूनवान्, परशुना छिन्नवानिति**- "लूग्श् छेदने" "छिंदृंपी द्वैधीकरणे" आभ्यां भूते कर्तरि क्तवतुः, तकारस्य च "ऋल्वादे०" [ ४.२.६८. ] इति
15 "रदादमूर्छ०" [ ४. २. ६९. ] इति च नः, **दात्रेण कृत्वा, परशुना छित्त्वेति**-अत्र "प्राक्काले" [ ५.४.४७. ] इति क्त्वा, **काकैः पातव्यः, श्वाभिर्लेढव्यः** इति- "तव्यानीयौ" [ ५.१.२७. ] इति तव्यः, 'लिह् तव्य' इति स्थिते इकारस्य गुणः, हस्य ढः, तस्य धः, धस्य ढः, पूर्वढस्य
20 लोपश्च, नन्वनभिधानन्यायादेवातिप्रसक्तप्रयोगवारणं भविष्यति, तथाहि-अपूर्वव्युत्पादने फलाभावात् सिद्धे शब्दार्थसम्बन्धे शास्त्रमिदं, तत्राभिधानाभावे दैवादेव निवर्तिष्यते, किं बहुलाधिकारेणेति चेत् ? तस्यैव न्यायस्योपलक्षणं वचनमुच्यत इति ॥ ३.१.६८. ॥

25 **नविंशत्यादिनैकोऽच्चान्तः । ३ । १ । ६९ ॥**

**त० प्र०**—एकशब्दस्तृतीयान्तो **नविंशत्यादिना नाम्ना** सह समस्यते, **तत्पुरुषश्च समासो भवति, एकशब्दस्य चादन्तो भवति** । एकेन नविंशतिः—एकान्नविंशतिः, पक्षे-एकाद्नविंशतिः; एवम्—एकान्नत्रिंशत्, एकाद्नत्रिंशत्; एकान्न-
30 चत्वारिंशत्, एकाद्नचत्वारिंशत् । नविंशत्यादिनेति निर्देशात् "नञत्" [ ३. २. १२५. ] न भवति ॥ ६९ ॥

**श० म० न्यासानुसन्धानम्-नविंशत्यादी**ति । **एकेन न विंशतिरि**ति विग्रहः, **एकान्नविंशतिरि**ति च समासः, अत्र एकशब्दस्य 'अद्' इत्यन्तागमः, 'अद्' इति
35 विधानसामर्थ्यात् पूर्वाकारस्य "लुगस्यादेत्यपदे" [ २.१.११३. ] इति लुग् न भवति, अन्यथा 'द्' इत्येव कुर्यात्, किन्तु "समानानां तेन दीर्घः" [ १. २. १. ] इति दीर्घे 'एकाद्' इति जाते "तृतीयस्य पञ्चमे" [ १.३.१. ] इति दस्य नकारे-एकान्नविंशतिरिति, **पक्षे** नस्य विकल्पेन विधानात् तदभावपक्षे-**एकाद्नविंशतिरि**ति, अतिदिशति-**एवमि**ति, **एकान्नत्रिंशत्**, 40 **एकाद्नत्रिंशदि**ति नविकल्पेन समासस्य रूपद्वयम्, एकेन न त्रिंशदिति विग्रहः, ननु 'न विंशतिरविंशा' इति नञोऽदादेशे "नञव्ययात् संख्याया डः" [ ७.३.१२३. ] इति डे समासान्ते च भवितव्यमिति चेत् ? अत्राह-**"नविंशत्यादिना' इति निर्देशादि**त्यादि, उपलक्षणत्वाड्डसमासान्ताभावोऽपि 45 बोध्यः ॥ ३. १. ६९. ॥

**चतुर्थी प्रकृत्या । ३ । १ । ७० ॥**

**त० प्र०**—प्रकृतिः-परिणामि कारणम्, चतुर्थ्यन्तमर्थाद् विकृतिवाचि नाम प्रकृतिवाचिना नाम्ना सह समस्यते, तत्पुरुषश्च समासो भवति । यूपाय दारु-यूपदारु, कुण्डल- 50 हिरण्यम् । प्रकृत्येति किम् ? रन्धनाय स्थाली, अवहननायोलूखलम्; 'मूत्राय संपद्यते यवागूः' इत्यादौ तु विकारस्याप्रधानस्य 'संपद्यते' इत्यादिक्रियासापेक्षत्वात् न भवति ॥७०॥

**श०म०न्यासानुसन्धानम्-चतुर्थी**ति । प्रकृतिशब्दस्य व्याकरणे प्रत्ययोद्देश्ये प्रसिद्धतया तस्य च प्रकृतेऽनुपयु- 55 ज्यमानत्वेन तदर्थं ग्राहयति-**परिणामि कारणमि**ति- परिणामः-तद्भावः, दारुहिरण्यादेः यूपकुण्डलादिर्विकारस्तद्भवनं तद्रूपापत्तिः, स परिणामः, परिणामोऽस्त्यस्येति परिणामि, प्रक्रियते-रूपान्तरमापाद्यत इति, स्वामिततया कार्यं प्रकरोतीति वा व्युत्पत्त्या कर्मणि कर्तरि वा बाहुलकात् क्तौ- 60 प्रकृतिः, तथा च यदन्यद्द्वारा स्वयमेव वा कार्यरूपेण परिणमते तादृशं कारणं प्रकृतिशब्देनोच्यत इति भावः । **चतुर्थी**ति विभक्तिः, सा च प्रत्ययः, प्रत्ययग्रहणे च तदन्तविज्ञानमित्याह- **चतुर्थ्यन्तमिति, अर्थाद् विकृतिवाचि नामे**ति-प्रकृतेर्विकृत्यपेक्षा, नहि विकृत्यनपेक्षायां प्रकृतिर्नाम भवतीति **प्रकृ**- 65 **त्ये**ति विकृतिः सन्निधाप्यते, अपेक्षिता ह्यर्था यदपेक्षया भवन्ति प्रतियोगिनि तस्मिन् प्रत्ययमुत्पादयन्ति, यथा पित्रा सहागतः, पुत्र इति, अर्थे च कार्यासम्भवात् तद्वाचिनि प्रतिपत्तिः, अर्थात् विकृतिवाचि नामेति विज्ञायते ।

अथ सविग्रहमुदाहरति-**यूपाय दारु** इति विग्रहः, 70 तादर्थ्ये चतुर्थी, अत्र दारु प्रकृतिः, यूपो विकृतिः, तक्षणादिना दारु यूपतां प्रतिपद्यत इति यूपस्य दारुपरिणामत्वमित्यनेन समासे-**यूपदारु** इति, एवं-**कुण्डलहिरण्यमि**ति समासः, कुण्डलाय हिरण्यमिति विग्रहः, तपनकुट्टनादिना हिरण्यं कुण्डलतां प्रतिपद्यत इति हिरण्यपरिणामत्वं कुण्डलस्य । 75

अथ पदकृत्यं पृच्छति-**प्रकृत्येति किमिति**-तादर्थ्यचतुर्थ्यन्तस्यैवेह समासः, सम्प्रदानचतुर्थ्याश्च क्रिययैव सम्बन्धात् तस्य नाम्ना सम्बन्धासंभवात्, तादर्थ्ये च प्रकृतिविकृतिभाव एवेह ग्रहीष्यते, अग्रे च हितादिगणे बलिरक्षितग्रहणसामर्थ्यात्, 5 भवति हि राज्ञे बलिस्तदर्थ इति तादर्थ्यचतुर्थ्या सहानेनैव समासो भविष्यतीति व्यर्थ एव गणे तत्पाठ इति व्यर्थः सन् स ज्ञापयिष्यति-यत्र प्रकृतिविकृतिभावस्तत्रैव तादर्थ्यचतुर्थ्या पूर्वसूत्रेण समास इति विनापि प्रकृतिग्रहणं तल्लाभः स्यादेवेति तद्ग्रहणं व्यर्थमिति प्रष्टुराकूतम्। प्रत्युदाहरणमुखेनोत्तरयति-**रन्ध-** 10 **नाय स्थाली, अवहननायोलूखलमिति**, अयमाशयः-ज्ञापकसिद्धस्यार्थस्यासार्वत्रिकत्वेन कदाचित् प्रकृतिविकारभावाभावेऽपि समासः स्यात्, एवं यथा शङ्कुलाखण्ड इत्यत्र करणान्तर्भावात् सामर्थ्योपपत्तिस्तथा सम्प्रदानचतुर्थ्यामपि 'द्विजाय दीयमाना गौः' इति दानार्थस्य वृत्तावन्तर्भावात् सामर्थ्योपप- 15 त्त्या 'द्विजगवी' इति समासः प्रसज्येत, स मा भूदित्येतदर्थं 'प्रकृत्या' इति वक्तव्यमिति, अत्र हि रन्धनप्रयोजना स्थाली, अवहननप्रयोजनमुलूखलमित्येवार्थः प्रतीयते, न तु रन्धनरूपेण परिणता स्थाली, अवहननरूपेण परिणतमुलूखलमिति, ततश्च प्रकृतिविकृतिभावाभावः स्पष्ट एव। किञ्च प्रकृतिविकृतिभावस्य 20 सत्त्वेऽपि क्वचिन्न भवति समास इत्याह-**मूत्राय सम्पद्यते यवागूरिति**-अत्र यद्यपि यवागूर्न साक्षान्मूत्रभावाय भवति, किन्तु स्वकारणोत्पन्नमेव मूत्रं यवाग्वा वृद्धिमाप्नोतीत्येवमायुर्वेदादिविज्ञानेनावगम्यत इति प्रकृतिविकृतिभावो नास्तीति समासाप्राप्तिरेव, तथापि यवागूभक्षणोत्तरं मूत्रवृद्ध्यवलोकनेन मूत्रस्य 25 तज्जन्यत्वविज्ञानाद् प्रकृतिविकृतिभावः साधारणजनैरवगम्यत इति दृष्ट्या प्रयुक्तेऽत्र प्रयोगे समासशङ्कोचिता, परं तु विकारस्य मूत्रस्य यवाग्वा सहाकाङ्क्षाभावादेव समासाभावः, यवागूर्हि शब्दमर्यादया प्रधानं प्रतीयते मूत्रं चाप्रधानम्, तत्राप्रधानस्य मूत्रस्य 'सम्पद्यते' इति क्रियया सहैवाकाङ्क्षा न तु यवाग्वेति 30 निराकाङ्क्षत्वात् सामर्थ्याभावेन समासाभाव इत्याह-**विकारस्याप्रधानस्ये**त्यादि, वस्तुतस्तु 'वाताय कपिला विद्युत्' इत्यादिवद् मूत्राय यवागूरित्यपि प्रयुज्यत एव, तथा च सम्पद्यत इत्यादिक्रियां विनाप्येतयोः परस्पराकाङ्क्षेति प्रकृतिविकृतिभावाभावादेव नेह समास इत्यवधेयम्। ननु प्रकृतिविकृतिभावे ताद- 35 र्थ्याच्चतुर्थ्येव भविष्यतीति चतुर्थीग्रहणं विफलमिति चेत्? उच्यते-कुण्डलं हिरण्यस्य, अत्र प्रथमा, न चतुर्थी, चतुर्थीति वचनाद् हिरण्येन प्रकृत्याः समासो न भवति, "षष्ठ्ययत्नाच्छेषे" [ ३. १. ७६. ] इति तु समासो भवत्येव-हिरण्यकुण्डलमिति, अत्र षष्ठ्यन्तस्य पूर्वनिपातो भवति, तदेतन्न स्यादिति 40 भावः ॥ ३. १. ७०. ॥

## हितादिभिः । ३ । १ । ७१ ॥

**त० प्र०**-चतुर्थ्यन्तं नाम हितादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। गोभ्यो हितं-गोहितम्, एवं-गोसुखम्, गोरक्षितः। हित, सुख, रक्षित, बलि इति हितादयः। आकृतिगणश्चायम्, तेन 'अश्वघासः, श्वश्रूसुरा, 45 श्वश्रूसुरम्; हस्तिविधानम्, धर्मनियमः, धर्मजिज्ञासा, नाट्यशाला, आत्मनेपदम्, परस्मैपदम्' इत्यादि सिद्धम्। कृत्यप्रत्ययान्तं चेह पठ्यते-देवदेयम्, ब्राह्मणदेयम्, वरप्रदेया कन्या; इह न भवति-ब्राह्मणाय दातव्यम् ॥ ७१ ॥

**श० म०** न्यासानुसन्धानम्-**हितादिभिरि**ति 50 सूत्रार्थः सुगमः। सविग्रहमुदाहरति-**गोभ्यो हितमिति** विग्रहः, **गोहितमि**ति समासः, अतिदिशति-**एवमि**ति, **गोसुखमि**ति समासः, गोभ्यः सुखमिति विग्रहः, गोभ्य इत्यत्र "हितसुखाभ्याम्" [ २. २. ६५. ] इति हितशब्दयोगे सुखशब्दयोग एव चतुर्थी, न तु "तद्भद्रायुष्यः [ २.२.६६. ] 55 इत्याशीर्विवक्षायां, समासेन हितस्य सुखस्य चानुवाद्यत्वमात्रप्रतीतेः, आशिषि तु आशीरर्थकक्रिययैव हितस्य सुखस्य च सम्बन्धाच्चतुर्थ्यन्तेन सह सामर्थ्याभावात् समासप्राप्तिरेव न। समासादाशिषोऽनवगमान्नाशिषि चतुर्थीति केचित्, अयं तदाशयः-आशिषि आशीर्विषयस्य विधेयत्वं तदाश्रयस्य चोद्देश्यत्वं, 60 न च वृत्तावुद्देश्यविधेयभावेनान्वयोऽवगम्यत इति, वस्तुतस्तु 'अभ्यासलोपः, सलोपः कलोपः' इत्यादिप्रयोगे वृत्तावप्युद्देश्यविधेयभावः प्रतीयत एव, तथा च 'आशीर्विवक्षायामाशीर्विषयक्रियान्वय्यर्थकान्नाम्नः, तद्वारकहितसुखादियोगे चतुर्थी' इति "तद्भद्रायुष्य०" [ २. २. ६६. ] इति सूत्रस्यार्थसत्त्वादुभयो- 65 रपि क्रियायामन्वयेन परस्परमसामर्थ्यान्न समास इत्यवधेयम्। **गोरक्षितः** इति समासः, गोभ्यो रक्षित इति विग्रहः, तादर्थ्येऽत्र चतुर्थी, सम्प्रदानेऽपीति केचित्। कोऽयं हितादिगण इत्याकाङ्क्षायामाह-**'हित सुख रक्षित बलि' इति हितादय** इति-एवं हितादिचतुष्के त्रय उदाहृताः, चतुर्थ 70 उदाह्रियते-महाराजाय बलिः-महाराजबलिः, तादर्थ्येऽत्र चतुर्थी, महाराजाय दीयमानो बलिः-महाराजबलिरिति सम्प्रदानेऽपि चतुर्थीति केचित्, दानार्थस्य वृत्तावन्तर्भावात् सामर्थ्योपपत्तिः। **हितादिभिरि**ति बहुवचनमाकृतिगणार्थमत आह-**आकृतिगणश्चायमि**ति, तत्फलमाह-**तेन** हितादे- 75 राकृतिगणत्वेन, **अश्वघास इत्यादि सिद्धम्** अश्वघास इत्यादयः समासाः सिध्यन्तीत्यर्थः, **अश्वघास** इति समासः, अश्वाय घास इति विग्रहः, तादर्थ्येऽत्र चतुर्थी, मतान्तरे-

अश्वघासादयः षष्ठीसमासाः, अथवा अश्वार्थो घास इति विगृह्य शाकपार्थिववत् मयूरव्यंसकादित्वादश्वघासादीनां सिद्धिः, श्वश्र्वै सुरेति विग्रहे-**श्वश्रूसुरा श्वश्रूसुरमि**ति समासस्वरूपद्वयं "सेना-शाला-सुरा-छाया०" इति लिङ्गानुशासनेन विकल्प्य 5 नपुंसकत्वविधानात्, कामसूत्रे कन्यासम्प्रयुक्ताधिकरणे-"कन्यालाभार्थं कन्यामातुरुन्मादनं विहितम्-"अन्ये पुनरस्यान्यतो विशिष्टेन कन्यालाभेन कन्यामातरमुन्मादयेयुः" इति, कन्दर्पचूडामणौ च---

"अनुकूलयेयुरनिशं कथया कौलादिगुणायन्त्या।
10 कन्यामातुर्हृदयं बहुना मित्राणि यत्नेन ॥"

इत्यादिना कन्यामातुरुन्मादनं यत्नेन विधेयमिति वर्णितं,तत्रोन्मादकारणभूता सुरा श्वश्रूसुरेति कथ्यत इति तद्विदः। **हस्तिविधानमि**ति समासः, हस्तिने विधानमिति स्वमते विग्रहः, परमते तु हस्त्यर्थं विधानमिति विग्रहः, भाष्ये च हस्तिविधेति 15 प्रयोगः, तत्र 'विधा हस्त्यन्नं माषादि' इति नागेशः, प्रकृतस्वमतपाठे च विधानं तदर्थं भोजनादिव्यवस्थापनमिति। **धर्मनियमः** इति समासः, धर्माय नियम इति स्वमते, परमते च धर्मार्थो धर्मप्रयोजनो वा नियम इत्यादिविग्रहः, **धर्मजिज्ञासे**ति समासः, धर्माय जिज्ञासेति विग्रहः, **नाट्यशाले**ति समासः, 20 नाट्याय शालेति विग्रहः, **आत्मनेपदमि**ति समासः, 'पचते' इत्येवमादीनामात्मा स्वभावस्तदर्थं पदं 'ते आते' इत्यादीत्यात्मनेपदम्, **परस्मैपदमि**ति समासः, तिवाद्यपेक्षया प्रकृतिप्रत्ययसमुदायः पचतीत्यादिलक्षणः परोऽर्थः, तदर्थं तिवादिकं पदं परस्मैपदम्, 'आत्मनेपदं, परस्मैपदम्' इति 25 तेप्रभृतीनां संज्ञायां समासौ, अत एव "परात्मभ्यां ङेः" [ ३. २. १७. ] इति संज्ञायां चतुर्थ्या लुब् न भवति। क्वचिदधिको गणपाठ इत्याह-**कृत्यप्रत्ययान्तं चेह पठ्यते इति**-देवदेयमित्यादौ गणपाठमन्तरा समासार्थं गत्यन्तराभावादवश्यं स्वीकार्योऽयं पाठः, **देवदेयमि**ति समासः, 30 देवाय देयमिति विग्रहः, **ब्राह्मणदेयमि**ति समासः, ब्राह्मणाय देयमिति विग्रहः, **वरप्रदेया कन्या** वराय प्रदेयेति विग्रहः, गतिपूर्वेणापि समासः, नामग्रहणपरिभाषया क्रियामुदाहृतं, कन्येति तद्विशेष्यमिति, एषु स्वमते सम्प्रदाने चतुर्थी, परमते त्विमे षष्ठीसमासाः; यद्यपि "लोकतोऽर्थप्रयुक्ते शब्द-35 प्रयोगे शास्त्रेण धर्मनियमः" इति पस्पशाह्निकस्थे महाभाष्यवार्तिके किमिदं धर्मनियम इति प्रश्ने धर्माय नियमो धर्मनियमः, धर्मार्थो नियमो धर्मनियमः, धर्मप्रयोजनो वा नियमो धर्मनियमः, इति समाधाने धर्माय नियम इति तादर्थ्यचतुर्थ्यापि विग्रहः कृत एव महाभाष्यकृता, तथापि तत्र धर्माय नियम इति प्रतीकमुपादाय "चतुर्थ्या तादर्थ्यं प्रतिपाद्यते, 40 सम्बन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः, चतुर्थीसमासस्य प्रकृतिविकृतिभाव एव विधानात्" इति कैयटेन व्याख्यानात्। केचित् तु-एवंविधबहुप्रयोगसिद्ध्यर्थं "चतुर्थीतदर्थार्थ०" [ पाणि० सू० २. १. ३५. ] इति सूत्रे चतुर्थीति योगविभागं विधाय निर्वहन्ति। 'कृत्यप्रत्ययान्तं चेह पठ्यते' 45 इत्युक्त्या 'घ्यण् तव्य अनीय य क्यप्' इति पञ्चानामपि कृत्यप्रत्ययानां पाठ आपतित इति 'ब्राह्मणाय दातव्यम्' इत्यादावपि समासः स्यादित्याशङ्कायामाह-**इह न भवति-ब्राह्मणाय दातव्यमि**ति-अनभिधानात्, प्रयुक्तानामेव शब्दानां व्याकरणेनान्वाख्यानादनभिहिते लक्षणाभावस्यैव 50 योग्यता, न तु लक्षणप्रवृत्तेरिति भावः ॥ ३. १. ७१. ॥

## तदर्थार्थेन । ३ । १ । ७२ ॥

**त० प्र०-तस्याश्चतुर्थ्या अर्थो** यस्य स तदर्थः, चतुर्थ्यन्तं नाम तदर्थेनार्थशब्देन नाम्ना सह समस्यते, तत्पुरुषश्च समासो भवति। **पित्रे इदं-पित्रर्थं पयः, महदर्थं धनम्,** 55 **उदकार्थो घटः, आतुरार्था यवागूः।** "ङेऽर्थो वाच्यवत्" इति [ लिङ्गानुशासने ] वाच्यलिङ्गता, नित्यसमासश्चायं चतुर्थ्यैव तदर्थस्योक्तत्वाऽदर्थशब्दाप्रयोगे वाक्यासंभवात्, समासस्तु वचनाद् भवति। तदर्थेत्यर्थविशेषणं किम्? पित्रेऽर्थः, मात्रेऽर्थः, तदर्थं धनमित्यर्थः ॥ ७२ ॥ 60

**श० म० न्यासानुसन्धानम्-तदर्थार्थेने**ति। **'तदार्थार्थेन'** इति समस्तपदं व्याचष्टे-**तस्याः-चतुर्थ्या अर्थो यस्य स तदर्थः** इति-तत्पदस्य बुद्धिस्थपरामर्शकत्वात् "चतुर्थी प्रकृत्या" [ ३. १. ७०. ] इति पूर्वतरसूत्रस्था चतुर्थ्येव परामृश्यत इति भावः, एतच्चार्थप्रदर्शनपरं वाक्यं, न तु 65 बहुव्रीहिसमासोपयोगि, व्यधिकरणपदबहुव्रीहिस्वीकारापत्तेः, उष्ट्रमुखादिगणपाठकल्पनाऽपि च कर्तव्या स्यात्, ततश्च तस्यै-चतुर्थ्यै अयं तदर्थ इति प्रकृतसूत्रलक्ष्यत्वेन विग्रहो विधेयः, चतुर्थ्यन्तश्च शब्दो यदर्थबोधनाय प्रयुज्यते स एवार्थोऽर्थशब्देनोच्यत इति भवति तदर्थत्वमर्थशब्दस्य। एवं च तादर्थ्यचतुर्थ्य-70 न्तस्यार्थशब्देन समास इह सुलभः, तादर्थ्यं चोपकारकत्वा-ऽपकारकत्वाभ्यां द्विविधम्, तत्रोपकारकत्वमपि द्विविधम्-उपचायकत्वं सुखजनकत्वं च, अपकारकत्वं च चतुर्विधम्-अपचायकत्वाऽनुपपादकत्व-नाशकत्व-दुःखजनकत्वभेदात्, तत्रोपचायकत्वार्था चतुर्थी **'अश्वाय घासः, काननाय वृष्टिः'** इत्यादौ, 75 **'अश्वोपचायको घासः, काननोपचायिका वृष्टिः'** इति बोधात्, **'पित्र्यर्थं पयः'** इत्यादौ **'पित्रे इदम्'** इत्यादिरूपेण

सुखजनकत्वार्था चतुर्थी; 'दन्तिने नवबन्धनम्, जलाशयेभ्य उष्णोपगमः' इत्यादौ चापचायकत्वार्था चतुर्थी, 'दाहाय मणिः, नरकाय देवपूजनम्, इत्यादावनुत्पादकत्वार्था, 'हरिणेभ्यो वागुरा, मशकेभ्यो धूमः' इत्यादौ दुःखजनकत्वार्था सा, एष्व-5र्थेषु प्रायोऽर्थशब्देन समासो भवति, तथा चाश्वार्थो घासः, काननार्था वृष्टिः, पित्रर्थं पयः, दन्त्यर्थं बन्धनम्, जलाशयार्थमुष्णोपगमः, दाहार्थो मणिः, नरकार्थं देवपूजनम्, तापार्थमुशीरम्, मोहार्थं तत्त्वज्ञानमित्यादीन्युदाहरणानि ज्ञेयानि। इत्थं चार्थशब्दस्यापि चतुर्थ्यर्थवाचकत्वेन चतुर्थ्युपकारकतया तादर्थ्य 10सम्भवतीति प्रकृतसूत्रेणैव तदर्थपदे समासः, तस्या अर्थो यस्येति विगृह्य समासविधानं क्लिष्टमिति प्रतीमः। पूर्वोक्तश्च तादर्थ्यप्रपञ्चः प्रायिकोऽन्यविधस्यापि तस्य सम्भवात्, तथाहि–उदकार्थो घट इत्यत्र संग्राहकत्वरूपमुपकारकत्वं बोध्यम्, आतुरार्था यवागूरित्यत्र चोपचायकत्वरूपमेवोपकारकत्वं तादर्थ्यमिति।

15 अथ प्रकृतमनुस्रियते–**पित्रे इदमि**ति विग्रहः, **पित्रर्थमि**ति समासः, **पयः** इति च समासविशेष्यम्, एवम्–**उदकार्थः** इति समासः, उदकायायमिति विग्रहः, **घटः** इति समासविशेष्यम्, **आतुरार्था** इति समासः, आतुराय इयमिति विग्रहः, **यवागूरि**ति समासविशेष्यम्। ननु तत्पुरुषे परपदार्थ-20प्राधान्येन परपदलिङ्गतैव विहितेति कथमस्य समासस्य विशेष्यलिङ्गत्वमित्याशङ्कायामाह–**ङेऽर्थो वाच्यवदिति वाच्यलिङ्गतेति**–'ङेऽर्थो वाच्यवत्' इति लिङ्गानुशासनम्, ङेऽर्थः–चतुर्थ्यर्थोऽर्थशब्दः, यत्र, प्रक्रमात् तत्पुरुषसमासे स वाच्यस्य यल्लिङ्गं तत्समानलिङ्गो भवतीति प्रकृतलिङ्गानुशासनवाक्यार्थः, 25वाच्यं च विशेष्यरूपमेवेति तस्यैव प्राधान्यात्, ततश्च पयआदीनां नपुंसकत्वेन क्रमेणार्थशब्दसमासस्य तत्तल्लिङ्गता भवतीति भावः। अर्थशब्देनेह विग्रहो नेष्यत इत्यस्वपदघटितविग्रहरूपत्वं नित्यसमासत्वमस्येत्याह–**नित्यसमासश्चायमि**ति, ननु च "नित्यं प्रतिनाल्पे" [ ३. १. ३७. ] इत्यत्र नित्यग्रहणादन्यत्र 30विकल्पे प्राप्ते कथमत्रार्थशब्देन नित्यसमासो लभ्यत इत्याशङ्कायामाह–**चतुर्थ्यैव तदर्थस्योक्तत्वादर्थशब्दाप्रयोगे वाक्यासम्भवादि**ति–सत्यपि तेन नित्यग्रहणेनात्र विकल्पेऽर्थशब्देन नित्य एवायं समासो वेदितव्यः, यस्माच्चतुर्थी चायमर्थशब्दश्च समानार्थावुभौ, तत्र वाक्ये चतुर्थ्यां प्रयुज्यमानायां 35चतुर्थ्यैवार्थशब्दार्थस्योक्तत्वादर्थशब्दस्याप्रयोगो भवति, उक्तार्थानामप्रयोगः, समासे तु चतुर्थी न प्रयुज्यते, अर्थशब्देनैव सोऽर्थ उच्यत इत्यर्थशब्दप्रयोगोपपत्तिः। ननु च तथापि चतुर्थ्यन्तस्यायमर्थशब्देन समास उच्यते–चतुर्थ्यन्तमर्थशब्देन समस्यत इति, तत्र न चतुर्थ्यर्थशब्दयोः सन्निधानमस्तीति 40कथं तत्पूर्वकसमासः स्यादिति चेत्? उच्यते–उक्तार्थानामप्रयोगः प्रयोजनाभावात्, अयं च न्यायोऽर्थे प्रयुज्यमानेषु शब्देषु भवति, न तु समासकरणे विभक्त्यन्तेऽप्राप्तकार्योन्तरेऽलौकिके शब्दे शास्त्रे कार्यार्थे परिकल्पिते 'पितृ ङे– अर्थ सि' इति स्थिते, उक्ते प्रयोगस्य प्रयोजनाभावस्याभावात्, यतो नायमर्थे प्रयुज्यते, केवलं समासकारणतया बुद्धौ परि-45कल्प्यते, समासश्च प्रयोजनमिति न प्रयोजनाभाव इति समासोपपत्तिः, अन्यच्च वचनात् समासो भवतीत्याह–**समासस्तु वचनाद् भवती**ति–तुशब्दो विशेषणार्थः, उक्तेन न्यायेन वाक्यनिवृत्तिर्भवति, न तु समासनिवृत्तिः, समासस्तु यस्मात् 'चतुर्थ्यन्तमर्थशब्देन समस्यते' इत्युच्यते, 50अतो वचनात् समासविषये चतुर्थीशब्दोऽर्थशब्दश्चोभावपि सन्निहितौ भवत इति भवति, बहुलमिति चाधिकृतमस्तीत्यर्थशब्देन नित्यसमासो विज्ञायते, लिङ्गं तूत्तरपदार्थप्रधानेऽपि तत्पुरुषे 'ङेऽर्थो वाच्यवत्' इति विशिष्य लिङ्गं विज्ञायते।

पदकृत्यं पृच्छति–**तदर्थेत्यर्थविशेषणं किमि**ति–'अर्थेन' 55 इत्येवोच्यतामिति प्रष्टुराशयः, प्रत्युदाहरणमुखेनोत्तरयति–**पित्रेऽर्थः, मात्रेऽर्थः**, इति–चतुर्थ्यर्थभिन्नो धनादिवाचकोऽर्थशब्दोऽनेन विशेषणेन व्यावर्त्यत इत्यर्थः, तादर्थ्ये चतुर्थीसत्त्वेऽप्यर्थशब्दस्य वाक्ये प्रयोगो भवतीत्यर्थशब्दस्य न चतुर्थ्यर्थकत्वमपि तु धनार्थकत्वमित्याह–**तदर्थं धनमित्यर्थ** इति–'पित्रे 60 मात्रे' इत्यस्य तादर्थ्ये चतुर्थीविधानात् 'तदर्थम्' इत्यर्थः, 'धनम्' इति 'अर्थः' इत्यस्यार्थः।

अत्र केचित्–विग्रहनिवृत्त्यर्थमर्थेति, पित्रे इदं पित्रर्थमिति तद्धितः कर्तव्य इति मन्यन्ते, यदा देवतान्तात् तदर्थे पाद्यार्घे इति तदर्थे तद्धितः, तन्त्रेरिति (?) लोपः प्राप्नोति, अपदस्य स 65 लोप इति पदत्वार्थं यदि सित् क्रियेत "भ्रूहल्भ्रोश्चियुव्" इतीय् प्राप्नोति, एतत् 'भ्र्यर्थम्' इति दर्श्यते, इति प्रभाचन्द्रः।

अन्ये–पित्रर्थमिति यत् पित्रे भवति तस्य पिता प्रयोजनं भवति, अर्थशब्दश्च प्रयोजनवचनो भवति, तत्र पित्रार्थः प्रयोजनमस्येति बहुव्रीहिणा सिध्यतीति, तत्र "जातीयैकार्थे०" 70 [ ३. २. ७०. ] इत्यात्वं प्राप्नोति–महार्थमिति, तत्र महदर्थमिति न सिध्येदिति प्रदर्शयितुं महदर्थमित्युदाह्रियते, चतुर्थ्यर्थश्च तादात्म्यमनन्यार्थतात्मकं बहुव्रीहिणा न प्रतीयते, 'महते इदं नान्यस्मै' इति 'महदर्थं' इत्यनन्यार्थं तौ प्रतीयेते, बहुव्रीहौ तु महार्थः, महाप्रयोजनकमिति प्रतीयते, न तु तथा, 75 महानर्थोऽस्येति हि न महते इदमिति चतुर्थ्यर्थः प्रतीयते, तस्मिंश्च बहुव्रीहिरिति न बहुव्रीहिणा सिध्यति। भिन्नार्थयोश्च बहुव्रीहि-चतुर्थीसमासयोर्न चतुर्थीसमासेन बहुव्रीहिर्बाध्यत इति बहुव्रीहिणापि भवितव्यमेव महार्थमिति, अथ नेष्यते

प्रयोजनवाचिनाऽर्थशब्देन बहुव्रीहिः, अनभिधानं श्रयितव्यम्। अपदे उत्तरपदार्थस्यार्थादेशमाहुः, तत्र वीवधशब्दस्यार्थादेशे स्थानिवद्भावेन "मन्थोदनसक्तबिन्दुवज्र०" [ ३. २. १०६. ] इत्युदभावः प्राप्नोति तदुदकार्थौ वीवध इति दर्श्यते 5॥ ३. १. ७२. ॥

## पञ्चमी भयाद्यैः। ३। १। ७३॥

त० प्र०-पञ्चम्यन्तं नाम भयाद्यैर्नामभिः सह समस्यते, तत्पुरुषश्च समासो भवति। वृकाद् भयं-वृकभयम्, एवं-वृकभीतः, भयभीता। भय, भीत, भीति, भी, भीरु, भीलुक, 10 निर्गत, जुगुप्सु, अपेत, अपोढ, मुक्त, पतित, अपत्रस्त इति भयादयः। आकृतिगणश्चायं, तेन 'द्वीपान्तरानीतः, स्थानभ्रष्टः, तात् परः-तपरः' इत्यादि सिद्धम्। बहुलाधिकारादिह न भवति-प्रासादात् पतितः, भोजनादपत्रस्तः॥७३॥

श० म० न्यासानुसन्धानम्-पञ्चमीति। **वृकाद् 15 भयमिति** विग्रहः, **वृकभयमिति** समासश्च, अतिदिशति-**एवमिति, वृकभीत** इति समासः, वृकाद् भीत इति विग्रहः, **भयभीता** इति समासः, भयाद् भीतेति विग्रहः, लिङ्गविशिष्टपरिभाषया स्त्रियामपि भवतीत्यर्थः, एषु "पञ्चम्यपादाने" [ २. २. ६९. ] इत्यपादाने पञ्चमी, के भयादय इत्याकाङ्क्षायां 20 भयादिगणमाह-**भय, भीत**, इत्यादि-त्रयोदश भयादयः, तत्र द्वयोरुदाहृतं, शेषेषूदाह्रियते-वृकाद् भीतिर्वृकभीतिः, पापाद् भीरुः पापभीरुः, पापाद् भीलुकः पापभीलुकः, ग्रामाद् निर्गतो ग्रामनिर्गतः, अधर्माद् जुगप्सुरधर्मजुगुप्सुः, शाखाया अपेतः शाखापेतः, मुखादपोढो मुखापोढः, दारकाद् 25 मुक्तो दारकमुक्तः, नरकात् पतितो नरकपतितः, तुहिनादपत्रस्तस्तुहिनापत्रस्तः। भयाद्यैरिति बहुवचनमाकृतिगणार्थमित्याह-**आकृतिगणश्चायमिति**, तत्फलमाह-**तेन** भयादेराकृतिगणत्वेन, **द्वीपान्तरानीतः, इत्यादि सिद्धमिति**, **द्वीपान्तरानीत** इति समासः, द्वीपान्तरादानीत इति विग्रहः, 30 **स्थानभ्रष्टः** इति समासः, स्थानाद् भ्रष्ट इति विग्रहः, **तात्** तकारात् **परः- तपरः**, न केवलं तः परोऽस्मादिति तपरः, अपि तु तादपि परस्तपरः, इत्याकृतिगणत्वेन यथाप्रयोगं सिद्धं भवति। भयादिषु पञ्चमीनिमित्तानामेव शब्दानां पाठात् प्रायः सर्वेऽपि पञ्चमीसमासाः संगृहीता इति 35 व्याकरणान्तरवद् योगविभागः पञ्चम्यन्तसमासविधानार्थं नावश्यकः, आकृतिगणत्वात् सर्वेष्टसंग्रहादिति भावः। बहुलमित्यधिकृतमस्ति, लक्ष्यानुसारि तत्फलमाह-**बहुलाधिकारादिह न भवती**त्यादि॥ ३. १. ७३॥

## क्तेनाऽसत्त्वे। ३। १। ७४॥

त० प्र०-असत्त्वे वर्तमाना या पञ्चमी तदन्तं नाम 40 क्तप्रत्ययान्तेन नाम्ना सह समस्यते, तत्पुरुषश्च समासो भवति। स्तोकान्मुक्तः, अल्पान्मुक्तः, कृच्छ्रान्मुक्तः, कतिपयान्मुक्तः दूरादागतः, विप्रकृष्टादागतः, अन्तिकादागतः, अभ्याशादागतः, कृच्छ्राल्लब्धम्-"असत्त्वे ङसेः" [ ३. २. १०. ] इत्यलुप्। क्तेनेति किम्? स्तोकान्मोक्षः। असत्त्वे इति 45 किम्? स्तोकाद् वर्धितः, स्तोकाद्द्रव्यादित्यर्थः, एवम्-अल्पात् प्रवृद्धम्। समासे तद्धिताद्युत्पत्तिः फलम्-'स्तौकान्मुक्तिः' इत्यादि॥ ७४॥

श० म० न्यासानुसन्धानम्-क्तेनेति। **असत्त्वे वर्तमाना या पञ्चमी**ति-"स्तोक-ऽल्प-कृच्छ्र-कतिपयादसत्त्वे 50 करणे" [ २. २. ७९. ] इति सूत्रेण "आरादर्थाद्वाक्सिद्ध्यम्" [ २. २. १२०. ] इति सूत्रेण च विहिता या पञ्चमी, सात्र गृह्यते, यतो द्रव्ये शब्दप्रवृत्तिः स गुणोऽसत्त्वं तद्वाचकाच्छब्दाद् विहिता पञ्चमी असत्त्वे वर्तमाना कथ्यते, सा च प्रतिपदोक्तन्यायसहकारेण पूर्वोक्तसूत्राभ्यां विहितैव गृह्यते, न 55 तु हेत्वादौ विहिता, पञ्चमीविधायकसूत्रयोश्च स्तोकादीनामेव ग्रहणं, न तु लेशादीनां तदर्थानां व्याख्यानात्।

**स्तोकान्मुक्तः, अल्पान्मुक्तः, कृच्छ्रान्मुक्तः, कतिपयान्मुक्तः** इति चत्वारोऽपि समासाः, अत्र विग्रहवाक्यं समानमेव, पञ्चमी च "स्तोकाल्प०" [ २. २. ७९. ] इति 60 सूत्रेण विहिता ज्ञेया; **दूरादागतः, विप्रकृष्टादागतः, अन्तिकादागतः, अभ्याशादागतः** इति चत्वारोऽपि समासाः, अत्रापि विग्रहवाक्यं समानमेव, पञ्चमी च "असत्त्वारादर्था०" [ २. २. २०. ] इति सूत्रेण विहिता ज्ञेया, विप्रकृष्टशब्दो दूरार्थकः, अभ्याशशब्दोऽन्तिकार्थः। ननु समासे हि 65 "ऐकार्थ्ये" [ ३. १. ८. ] विग्रहवाक्यीयविभक्त्या लोपेन भवितव्यमिति कथं तस्याः श्रवणमित्याशङ्कायामाह-**"असत्त्वे ङसेः" इत्यलुबिति**-अनेन सूत्रेण लोपनिषेधादिमेऽलुक्समा इत्यर्थः। पदकृत्यं पृच्छति-**क्तेनेति किमिति**, एतदभावेऽपि निरुक्तसमासाः सेत्स्यन्त्येवेति प्रश्नाशयः, प्रत्युदाहरणमुखेनोत्तरयति- 70 **स्तोकान्मोक्षः** इति-क्तग्रहणाभावेऽत्रापि निरुक्तपञ्चमीसत्त्वात् समासः प्रसज्येत, क्तग्रहणे तु मोक्षशब्दस्य क्तान्तत्वाभावादेव समासो न भवति, किन्तु विग्रहवाक्यमेवावतिष्ठते। पुनः पृच्छति-**असत्त्व इति किमिति**-स्तोकादीनामसत्त्व एव वृत्तिरिति 'क्तेन' इत्येवोच्यतामसत्त्वे इति विफलमिति प्रश्नाशयः, प्रत्यु- 75 दाहरणमुखेनोत्तरयति-**स्तोकाद् वर्धितः** इति, यद्यपि 'असत्त्वे' इत्यस्याभावे क्तान्तेन पञ्चम्यन्तं समस्यत इत्येवार्थः

स्यादिति 'ग्रामादागतः' इत्यादावपि समासः स्यादेवेति तदेव प्रत्युदाहरणीयं, न तु स्तोकाद् वर्धित इत्यादि, तथापि असत्त्ववाचिता गुणिपरत्वविवक्षायां समासापत्तिरिति तुष्यतु दुर्जनन्यायेनोक्तं-स्तोकाद् वर्धित इति, अत्र स्तोकशब्दस्य स्तोकत्वगुणविशिष्टद्रव्यपरत्वमित्यसत्त्ववाचकत्वाभाव इत्याह-**स्तोकाद् द्रव्यादित्यर्थः** इति । ननु चात्रालुक्समासत्वात् समस्त-व्यस्तयो रूपे विशेषाभावात् किमिह समासफलमिति चेत् ? अत्राह-**समासे तद्धिताद्युत्पत्तिः फलमिति**-समासे सत्यैकपद्येन समुदायादेव तद्धितोत्पत्तिरिति तत्प्रत्ययनिमित्तं कार्यमादिस्वरवृद्ध्यादिरूपं समुदायस्यैवेति समासफलमिति भावः, तदेव स्पष्टयति-**स्तोकान्मुक्तिरिति**-स्तोकान्मुक्तस्यापत्यमिति "अत इञ्" [ ६. १. ३१. ] इतीञि तादृशरूपम् ॥ ३. १. ७४. ॥

## परःशतादिः । ३ । १ । ७५ ॥

**त० प्र०**-परःशतादिः पञ्चमीतत्पुरुषः साधुर्भवति । शतात् परे-परःशताः, सहस्रात् परे-परःसहस्राः, लक्षाल्लक्षाया वा परे-परोलक्षाः, परशब्दस्य पूर्वनिपातः सकारागमश्च निपातनात् । परशब्देन समानार्थः परस्शब्दः सकारान्तोऽप्यस्तीत्यन्ये ॥ ७५ ॥

**श० म० न्यासानुसन्धानम्-परःशतादिरिति** । **साधुर्भवतीति**-निपात्यत इत्यर्थः, निपातनफलं चाग्रे वक्ष्यते । **शतात् परे** इति विग्रहः, **परःशताः** इति समासः, **सहस्रात् परे** इति विग्रहः, **परःसहस्राः** इति च समासः, **लक्षात् परे** इति **लक्षायाः परे** इति वा विग्रहः, उभयथापि **परोलक्षाः** इति समासः, "माने लक्षम्" इति लिङ्गानुशासनं, तदर्थश्च-लक्षशब्दो माने-संख्यायां वाच्ये स्त्री-नपुंसकलिङ्ग इति, यदाह गौडः-"संख्यायां तु न ना लक्षं, क्लीबं व्याज-शरव्ययोः" इति, अत एव च स्त्रियां प्रयुज्यते-

'कियती पञ्चसहस्री कियती लक्षाथ कोटिरपि कियती ।
औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ १ ॥' इति,

प्रकृते चोभयलिङ्गानुरोधेनोभयथा विग्रहोपदर्शनम्, समासस्तु एकविध एव विशेष्यलिङ्गपरत्वात् । नन्विह निपातनस्य किमसाधारणफलमित्याकाङ्क्षायामाह-**परशब्दस्य पूर्वनिपातः सकारागमश्च निपातनादिति**- शतात् परे इति विग्रहे शतपरे इति प्रसज्येत, तद्वारणार्थमिदं निपातनं, तत्र पञ्चम्यन्तस्य प्रथमोक्ततया प्राप्तोऽपि पूर्वनिपातो निवार्यतेऽर्थात् परनिपातो भवति, एवं परशब्दस्य सकारागमो भवति, एतद्वयं निपातनबलाद् भवतीति भावः । अत्र मतान्तरमाह-**परशब्देन समानार्थ** इत्यादि-उदाहृतसमासादन्यत्र 'परस्' शब्दस्यानुपलम्भाद् 'अन्ये' इत्यरुचिः सूचिता ॥ ३. १. ७५. ॥

## षष्ठ्ययत्नाच्छेषे । ३ । १ । ७६ ॥

**त० प्र०**-शेषे या षष्ठी तदन्तं नाम नाम्ना सह समस्यते, तत्पुरुषश्च समासो भवति, अयत्नात्-न चेत् स शेषो "नाथः" [ २. २. १० ] इत्यादेर्यत्नाद् भवति । राज्ञः पुरुषः-राजपुरुषः, यतिकम्बलः, राज्ञो गोक्षीरं-राजगोक्षीरम्, राजगव्याः क्षीरं-राजगवीक्षीरम् । 'ऋद्धस्य राज्ञः पुरुषाः, जिनभद्रगणेः क्षमाश्रमणस्य भाष्यम्' इत्यादौ सापेक्षत्वान्न भवति । कथं देवदत्तस्य गुरुकुलम् ?, जिनदत्तस्य दासभार्येति ? सापेक्षत्वेऽपि गमकत्वाद् भवति । अयत्नादिति किम् ? सर्पिषो नाथितम्, मातुः स्मृतम्, सर्पिषो दयितम्, मातुरीशितम्, एधोदकस्योपस्कृतम्, चौरस्य रुजणम्, चौरस्योज्जासितम्, शतस्य द्यूतम्, शतस्य द्यूतश्चैत्रः, कटकरणस्यायुक्तः । शेष इति किम् ? सर्पिषो ज्ञानम्, रुदतः प्रव्रजितः, मनुष्याणां क्षत्रियः शूरतमः, गवां कृष्णा संपन्नक्षीरतमा, अध्वगानां रथगामी शीघ्रतमः। कथं सर्पिर्ज्ञानम्, मातृस्मरणम्' इत्यादि ? कृद्योगेऽत्र षष्ठीत्युत्तरेण भविष्यति, संबन्धे स्वनेनैव । 'गोस्वामी, पृथिवीश्वरः, विद्यादायादः' इत्यादिषु त्वयत्नजा शेष एव षष्ठी, "स्वामीश्वरा०" [ २. २. ९८ ] इत्यादिसूत्रस्य नित्यं षष्ठीप्राप्तौ पक्षे सप्तमीविधानार्थत्वात् । 'संघस्य भद्रं भूयात्, शासनस्य भद्रं भूयाद्' इत्यादौ त्वाशिषि षष्ठ्याः समासो न भवति, असामर्थ्यादनभिधानाद् वा, नहि 'संघभद्रं भूयाद्' इत्युक्ते 'संघस्य भद्रं भूयाद्' इत्यर्थः प्रतीयते, अपि तु संघभद्रं नाम-संघसंबन्धितया प्रसिद्धं किञ्चिद् भद्रं कस्यचिद् भूयादिति ॥ ७६ ॥

**श० म० न्यासानुसन्धानम्-षष्ठ्ययत्नादिति** । **शेषे** इति- शेषो हि कर्मादिभ्योऽन्यस्तदविवक्षारूपः स्वस्वामिभावादिसम्बन्धविशेषः, स च द्विविधः-स्वाभाविको यत्नसाध्यश्च, तत्र स्वाभाविके शेषे या षष्ठी तदन्तस्य समास इष्यते, न तु यत्नसाध्यशेषे या षष्ठी तदन्तस्यात आह-**अयत्नादिति**, एतदेव स्पष्टयति-**न चेत् स शेषः "नाथः" [ २. २. १०. ] इत्यादेर्यत्नाद् भवतीति** ।

अथोदाहरणावसर इति विगृह्योदाहरति-**राज्ञः पुरुषः** इति विग्रहः, शेषे च षष्ठी, **राजपुरुषः** इति च समासः, एवं-**यतिकम्बलः** इति समासः, यतेः कम्बल इति विग्रहः, **राज्ञो गोक्षीरमिति** विग्रहः, **राजगोक्षीरमिति** च समासः, **राजगवीक्षीरमिति** समासः, राजगव्याः क्षीरमिति विग्रहः, अत्रोभयत्रापि गवा क्षीरं विशेषितमेव, राज्ञा तु राजगोक्षीरमित्यत्र क्षीरं विशेष्यते न गौः, यद् गोक्षीरं तद्

राज्ञः, गौस्तु तस्य वान्यस्य वा तन्नोक्तम्, राजगवीक्षीरमित्यत्र तु गौर्विशेष्यते न क्षीरं, नहि क्षीरस्य राजसम्बन्धित्वमत्र प्रतीयतेऽतोऽर्थभेदः, गोक्षीरमिति गोः क्षीरं गोक्षीरमित्यनेनैव समासः, एवं राजगवीत्यपि, राज्ञो गौः राजगवीति "गोस्तत्पुरुषात्" [ ७. ३. १०५. ] इति समासान्तोऽट् टित्त्वाच्च ङीः । **'ऋद्धस्य राज्ञः पुरुषः'** इत्यत्र 'राजपुरुषः' इति, **'जिनभद्रगणेः क्षमाश्रमणस्य भाष्यम्'** इत्यत्र च 'क्षमाश्रमणभाष्यम्' इति च समासो न भवति, कुत इत्याह–**सापेक्षत्वान्न भवतीति**–समासस्य पदविधित्वेन सामर्थ्यापेक्षितत्वात्, सापेक्षस्य च *सापेक्षमसमर्थवद् भवति* इति न्यायादसमर्थत्वेन समासानर्हत्वादिति भावः, एतन्मूलकमेव "सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न" इति परेषां वचनमिति बोध्यम्, अयं भावः–यथा 'ऋद्धस्य राज्ञः पुरुषः' इति विग्रहे समासाभावस्तथा राजपुरुष इति समासावयवे राज्ञि 'ऋद्धस्य' इति विशेषणमपि पश्चाद् योजयितुं न शक्यते, पुरुषेण पारतन्त्र्यमनुभवतस्तस्य स्वतन्त्रोपस्थितिजनकत्वेन विशेषणान्वयायोग्यत्वात् । 'ऋद्धस्य राज्ञः पुरुषः' इत्यादौ 'ऋद्धस्य' इत्यादिकमपेक्षमाणस्य 'राज्ञः' इत्यादेः समासो न भवति, कुतः ? अगमकत्वात्, अत्र वाक्ये योऽर्थः प्रतीयते–य ऋद्धो राजा तस्य पुरुष इति, स न समासे गम्यते, समासे तु 'ऋद्धस्य राजपुरुषः' इति राज्ञो गोक्षीरवत् प्रतिपत्तिः, समासे न्यग्भूतस्यात्र बहिरपेक्षानिवृत्तेः, अर्थगत्यर्थश्च शब्दप्रयोगः, अतोऽत्रागमकत्वादप्रतिपादकत्वाद् विवक्षितस्यार्थस्य सत्यपि "षष्ठ्ययत्नाद्" इति लक्षणेऽनभिधानमप्याश्रीयते, तदर्थमेव बहुलमित्यधिकृतमिति समासो न भवतीत्यपि समासाभावे प्रकारः । इत्थं निर्णीते सति क्वचित् सापेक्षस्यापि समासः प्रयुज्यमानो दृश्यते स कथं सङ्गतिमङ्गतीत्याशङ्कते–**कथं देवदत्तस्य गुरुकुलम्, जिनदत्तस्य दासभार्येतीति**–अत्र देवदत्तस्य यो गुरुस्तस्य कुलमिति देवदत्तस्य गुरुणा सम्बन्धो गुरोश्च कुलेनेति देवदत्तेन सापेक्षस्य गुरोः कुलेन सह कथं सम्बन्धः स्यादिति समासो न युक्त इति भावः, एवं जिनदत्तस्य यो दासस्तस्य भार्येति जिनदत्तस्य दासेन सम्बन्धः, दासस्य च भार्ययेति जिनदत्तेन सापेक्षस्य दासस्य भार्यया कथं सम्बन्धः स्यादिति समासो न युक्त इति शङ्काशयः । उत्तरयति–**सापेक्षत्वेऽपि गमकत्वाद् भवतीति**, अयमिहाशयः–सापेक्षस्यासामर्थ्यं न राजाज्ञाप्राप्तं, किन्तु न्यायप्राप्तमेव, अन्यमपेक्षमाणस्यापूर्णस्यान्येनान्वयायोग्यत्वात्, यत्र च सापेक्षत्वेऽप्यन्वययोग्यतानुभूयते तत्र समासे बाधकाभावः, एवम्भूतश्चार्थः सम्बन्धिशब्दप्रतिपाद्यो नित्यसाकाङ्क्षः, तद्विषये च पूर्वोक्तनियमप्रवृत्तौ तस्य क्वापि समास एव न स्यात्, किञ्चैतादृशः शब्दः समस्तोऽपि परेण सह पारतन्त्र्यमनुभवन्नपि स्वसम्बन्धिनमपेक्षत एवेति न तत्रासामर्थ्यम् । तदुक्तं हरिणापि–

> "सम्बन्धिशब्दः सापेक्षो, नित्यं सर्वः समस्यते ।
> वाक्यवत् सा व्यपेक्षा हि, वृत्तावपि न हीयते ॥ १ ॥
> समुदायेन सम्बन्धो, येषां गुरुकुलादिना ।
> संस्पृश्यावयवांस्ते तु, युज्यन्ते तद्वता सह ॥ २ ॥" इति ।

व्याख्याते चेमे कारिके पूर्वम् । एवं च देवदत्तस्य गुरुकुलमित्यादौ देवदत्तो गुरुणा सह सम्बन्धमनुभवन्नपि गुरुकुलेनापि सम्बध्यत एवेति समासे सत्यपि देवदत्तस्य गुरोः कुलमिति वाक्ये यथा परस्परं सम्बन्धप्रतीतिस्तथैव समासे भवति शब्दशक्तिस्वाभाव्यादित्येव 'गमकत्वात्' [ विवक्षितार्थस्य प्रतिपादकत्वात् ] इत्यस्याभिप्रायः ।

पदकृत्यं पृच्छति–**अयत्नादिति किमिति**–यत्र यत्नानुशिष्टा षष्ठी तत्र तत्र धातूनामेव निर्देशात् तेषां च त्याद्यन्तत्वेन नामत्वाभावात् तैः सह समासाप्राप्तिरेव, अन्येन च सामर्थ्याभावादेव न समासो भविष्यतीति 'अयत्नात्' इति विफलमिति प्रष्टुराशयः; न केवलं त्याद्यन्तानामेव तेषां योगे कर्मणः शेषत्वमपि तु कृदन्तानामपि, तेषां च नामत्वं प्रसिद्धमिति तत्र समासाभावाय सूत्रेऽयत्नादित्यावश्यकमिति प्रत्युदाहरणमुखेनोत्तरयति–**सर्पिषो नाथितमित्यादिना, सर्पिषो नाथितमिति**–"नाथृङ् उपतापैश्वर्याशीःषु च" तत्र "आशिषि नाथः" [ ३. ३. ३६. ] इत्यात्मनेपदविषये "नाथः" [ २. २. १०. ] इति यत्नात् पाक्षिके कर्मभावे निवृत्ते तन्निबन्धनद्वितीयानिवृत्तौ निषिद्धे कर्मणि षष्ठ्येव भवतीति शेषो विज्ञायत इति यत्नजे शेषे षष्ठीति समासो न भवति, अत्र भावे क्लीबे क्ते नाथितमिति, सर्पिर्मे भूयादित्याशासनमिति तदर्थः, **मातुः स्मृतमिति**–"स्मृं चिन्तायाम्" अतो भावे क्लीबे क्ते स्मृतमिति; **सर्पिषो दयितमिति**–"दयि दानगतिहिंसादहनेषु च" अतो भावे क्लीबे क्ते दयितमिति, **मातुरीशितमिति**–"ईशिक् ऐश्वर्ये" अतो भावे क्लीबे क्ते ईशितमिति, मातुः स्मरणं सर्पिषो दानादि मातुरैश्वर्यमिति क्रमेणार्थः, एषु "स्मृत्यर्थदयेशः" [ २. २. ११. ] इति यत्नात् पाक्षिके कर्मभावे निवृत्ते शेषो भवतीति यत्नजे शेषे षष्ठीति समासो न भवति; **एधोदकस्योपस्कृतमिति**–"डुकृंग् करणे" उपपूर्वादतो भावे क्लीबे क्ते "उपाद् भूषा०" [ ४. ४. ९२. ] इति स्सडागमे चोपस्कृतमिति, एधोदकस्योपस्कारः प्रतियत्न इत्यर्थः, अत्र "कृगः प्रतियत्ने" [ २. २. १२. ] इति यत्नात् कर्मभावे निवृत्ते शेषो भवतीति यत्नजे शेषे षष्ठीति समासो न भवति; **चौरस्य रुग्णमिति**–"रुजोंत् भङ्गे" अतो भावे क्लीबे क्ते

ओदित्त्वात् "सूयत्याद्योदितः" [ ४. २. ७०. ] इति तस्य नत्वे "क्तादेशोऽषि [ २. १. ६१. ] इति नस्यासिद्धत्वेन घुटि "चजः कगम्" [ २. १. ८६. ] इति गे रुग्णमिति, चौरस्य पीडनमिति तदर्थः, अत्र "रुजार्थस्य०" [ २. २. १३. ] इति यत्नात् कर्मभावे निवृत्ते शेषो भवतीति यत्नजे शेषे षष्ठीति समासो न भवति; **चौरस्योज्जासितमिति**- उत्पूर्वात् "जसण् हिंसायाम्" इत्यतो भावे क्लीबे क्ते उज्जासितमिति, चौरस्य हिंसनमित्यर्थः, अत्र "जासनाट०" [ २. २. १४. ] इति यत्नात् कर्मभावे निवृत्ते शेषो भवतीति यत्नजे शेषे षष्ठीति समासो न भवति; **शतस्य द्यूतमिति**-भावे क्लीबे क्तः, शतस्य क्रयविक्रये द्यूतजयत्वे वा विनियोग इति तदर्थः, **शतस्य द्यूतश्चैत्रः** इति-कर्तरि क्तः, क्रयविक्रये द्यूतपणत्वे वा शतं चैत्रो विनियुङ्क्ते इत्यर्थः, "दिवूच् क्रीडाजयेच्छापणिद्युतिस्तुतिगतिषु" अतो भावे कर्तरि च क्ते "अनुनासिके०" [ ४. १. १०८. ] इति वस्य ऊटि इकारस्य च यत्वे 'द्यूत' इति, अत्र "न" [ २. २. १८. ] इति यत्नात् कर्मभावे निवृत्ते शेषो भवतीति यत्नजे शेषे षष्ठीति समासो न भवति; **कटकरणस्यायुक्तः** इति-कटकरणे तत्पर इत्यर्थः, अत्र "कुशलायुक्तेनासेवायाम्" [ २. २. ८७. ] इति यत्नादाधारभावे निवृत्ते शेषो भवतीति यत्नजे शेषे षष्ठीति समासो न भवतीति ।

पुनः पदकृत्यं पृच्छति-**शेष इति किमिति**—'अयत्नात्'इति पर्युदासबलेनैव शेषत्वाक्षेप इति प्रष्टुराकूतम्; न सर्वत्र यत्नसम्पाद्यषष्ठ्यां शेषार्थप्रतिपादकत्वमपि तु क्वचित् कारकत्वसत्त्वेऽपि षष्ठी विधीयते, तत्र मा भूदित्येतदर्थं शेष इत्यावश्यकमित्युत्तरयति-**सर्पिषो ज्ञानमित्यादिना, सर्पिषो ज्ञानमिति**-अत्र "अज्ञाने ज्ञः षष्ठी" [ २. २. ८०. ] इति करणे षष्ठी, सर्पिषा करणभूतेन प्रवृत्तिः, प्रवृत्तिरत्र जानातेरर्थः, अथवा सर्पिषि रक्तो विरक्तो वा चित्तभ्रान्त्या सर्वमेवोदकादि सर्पीरूपेण प्रतिपद्यत इति मिथ्याज्ञानवचनोऽयं जानातिः, मिथ्याज्ञानं चाज्ञानमेव भवति; **रुदतः प्रव्रजितः** इति-अत्र "षष्ठी वाऽनादरे" [ २. २. १०८. ] इति षष्ठी, रुदन्तं पुत्रादिकमनादृत्येत्यर्थविवक्षायां कर्मत्वमत्र; **मनुष्याणां क्षत्रियः शूरतमः, गवां कृष्णा सम्पन्नक्षीरा, अध्वगानां रथगामी शीघ्रतमः** इति- एष्वपादाने "सप्तमी चाविभागे निर्धारणे" [ २. २. १०९. ] इति षष्ठी: एवं तत्तन्निमित्तासु विभक्तिषु प्राप्तासु षष्ठी विधीयत इति न तस्याः कर्मत्वादिभिन्नसम्बन्धसामान्यादिरूपशेषार्थप्रतिपादकत्वमिति न तत्र समास इष्टः, शेषग्रहणाभावे तु तत्रापि स्यादित्यभिप्रायः । क्वचिदीदृशस्थले समासस्य दर्शनादाशङ्कते-**कथं सर्पिर्ज्ञानमिति**, परत्वाद् बाधकेनाग्रिमसूत्रेण विशेषविहितेनात्र समासः, न त्वनेनेत्युत्तरयति-**कृद्योगेऽत्र षष्ठीत्युत्तरेण भविष्यतीति**-सर्पिषो ज्ञानं मातुः स्मरणमिति "कर्मणि कृतः" [ २. २. ८३. ] इति कृद्योगे कर्मणि षष्ठी "कृति" [ ३. १. ७७. ] इति च समासः, यदि नात्र करणत्वादिविवक्षा, कर्मत्वमप्यविवक्षितम्, अपि तु सम्बन्धसामान्यं विवक्ष्यते तदा विशिष्य विहितायाः षष्ठ्यास्तथाभूतसमासस्य च न प्राप्तिरपि तु "शेषे" [ २. २. ८१. ] इति षष्ठी तदा प्रकृतसूत्रेणैव समास इत्याह-**सम्बन्धे त्वनेनैवेति** । क्वचिदन्यत्रापि यत्नजायाः षष्ठ्याः समासो दृष्ट इति शङ्कितुराशयमाक्षिपन्नाह-**गोस्वामीत्यादि**, कथमत्रायत्नजा शेषषष्ठीति प्रतिपादयति-**स्वामीश्वरेत्यादि**, इत्थं चैषां शब्दानां योगे सम्बन्धस्यैव प्रतीयमानत्वेन शेषत्वमेव षष्ठ्याः, केवलं सप्तम्यपि तत्र स्यादित्येतदर्थं यत्नकरणम्, तथा च तत्र सप्तम्या एव यत्नजत्वं न षष्ठ्याः । क्वचित् सत्यपि सर्वस्मिन् निमित्ते न समास इत्याह-**संघस्य भद्रं भूयादित्यादिना**, समासाभावे हेतुमाह-**असामर्थ्यादिति**-भद्रमित्यस्य भूयादिति क्रियया सापेक्षत्वमिति संघसम्बन्धसत्त्वेऽपि न सामर्थ्यमिति भावः; ननु पूर्वं संघेन सम्बन्धमनुभूयैकार्थीभावसामर्थ्ये सत्यपि तेन सह समासोऽस्तु पश्चात् समुदायस्य क्रियया सम्बन्धे का बाधेति चेत् ? अत आह-**अनभिधानाद् वेति**-परार्थाभिधानं हि वृत्तिरिति कृत्तद्धितसमासादयो वृत्तयोऽर्थाभिधानसम्भव एव भवन्ति, ततश्च यादृशोऽर्थोऽत्राभिधातुमिष्टः स नाभिधीयते समासेनेति समासो न भवति, तदेवानभिधानं स्पष्टयति-**नहि संघभद्रमित्यादिना**, अयमाशयः-समासे सति संघस्य भद्रेण सह पारतन्त्र्यादुभयोरुद्देश्यविधेयभावो न प्रतीयते, तत्प्रतीतौ पृथगुपस्थितेः स्वतन्त्रत्वात्; यत् तु क्वचिच्छास्त्रे 'सलोपः स्यात्' इत्यादिषु समासेऽप्युद्देश्यविधेयभावः स्वीक्रियते स गमकत्वादेव समाधेयः, न तेन सामान्यत ऐकपद्येऽप्युद्देश्यविधेयभावः स्वीकर्तुं शक्यते, तथा चेदृशस्थले समासाभाव उचित एवेति ॥ ३. १. ७६. ॥

## कृति । ३ । १ । ७७ ॥

त० प्र०-"कर्मणि कृतः" [ २. २. ८३ ] "कर्तरि" [ २. २, ८६. ] इति च या कृति-कृत्प्रत्ययनिमित्ता षष्ठी विहिता तदन्तं नाम नाम्ना समस्यते, तत्पुरुषश्च समासो भवति । सिद्धसेनकृतिः, गणधरोक्तिः इध्मव्रश्चनः, पलाशशातनः, धर्मानुस्मरणम्, तत्त्वानुचिन्तनम्, सर्पिर्ज्ञानम्, एधोदकोपस्करणम्, चौरोज्जासनम् ॥ ७७ ॥

श० म० न्यासानुसन्धानम्— कृति । 'कृति' इत्यत्र 'युद्धे सन्नह्यते' इतिवत् निमित्तरूपाधिकरणार्थे सप्तमी,

कृच्च प्रत्ययः, "आ तुमोऽत्यादिः कृत्" [ ५. १. १. ] इति प्रत्ययविशेषस्य कृत्संज्ञाविधानात्, प्रत्ययग्रहणे च तदन्तविज्ञानं, षष्ठीति चानुवर्तते, एवं सति कृदन्तनिमित्तायाः षष्ठ्या इत्यर्थो लभ्यते, तदेव स्पष्टयति- **कर्मणि कृतः** इत्यादि- कृदन्तस्य योगे कर्मणि कर्तरि वा या षष्ठी विहिता सा समर्थेन नाम्ना समस्यत इत्यर्थः; **'कृत्प्रत्ययनिमित्ता'** इति वृत्तेः कृदन्त-निमित्ता' इत्येवार्थः, उदाहृतसूत्राभ्यां हि कृदन्तनिमित्ताया एव षष्ठ्या विधानात्, तस्यैव कर्मणा कर्त्रा वा सम्बन्धसम्भवात्, कृत्प्रत्ययमात्रस्य तदभावात् ।

उदाहरति-**सिद्धसेनकृतिः**, इति-समासोऽयं, विग्रहस्तु- सिद्धसेनस्य- सिद्धसेनदिवाकराभिधस्य आचार्यस्य, कृतिः- सम्मतितर्कादिग्रन्थरचना, करोतेर्भावे क्तिः, कर्तरि च षष्ठी; **गणधरोक्तिः** इति-समासोऽयं विग्रहस्तु-गणधरस्य-भगवतो गौतमादेः, उक्तिः-उपदेशादि वचनम्, "वचंक् भाषणे" अतो भावे स्त्रौ क्तिः इति कत्वे च उक्तिः, अत्रापि कर्तरि षष्ठी ज्ञेया, **इध्मव्रश्चनः** इति-समासोऽयं, विग्रहस्तु- इध्मानां- काष्ठानां व्रश्चन इति, "ओव्रश्चौत् छेदने" अतो व्रश्च्यते छिद्यतेऽनेनेति "करणाधारे" [ ५. ३. ११२. ] इति करणे बाहुलकात् कर्तरि वाऽनटि-व्रश्चनः कुठारादिः, इध्माना-मिति कर्मषष्ठ्यन्तस्यानेन समासः; **पलाशशातनः** इति- समासोऽयम्, विग्रहस्तु-पलाशानां पर्णानां शातन इति, "शद्लृं शातने" अतो ण्यन्तात् "शदिरगतौ शात्" [ ४. २. २३. ] इति शातादेशे शात्यतेऽनेनेति करणे बाहुलकात् कर्तरि वाऽनटि-शातनो दण्डः, पलाशानामिति कर्मषष्ठ्यन्तस्यानेन समासः; **धर्मानुस्मरण**मित्यादयः पञ्चापि समासाः, विग्रहवाक्यानि त्विमानि-धर्मस्यानुस्मरणं तत्त्वस्यानुचिन्तनं सर्पिषो ज्ञानमेवोदकस्योपस्करणं चौरस्यो-ज्जासनमिति, अनुपूर्वात् "स्मृं चिन्तायाम्" इत्यतः, अनुपूर्वात् "चितुण् स्मृत्याम्" इत्यतः, "ज्ञांश् अवबोधने" इत्यतः, उपपूर्वात् "डुकृंग् करणे" इत्यतः, उत्पूर्वात् "जसण् हिंसा-याम्" इत्यतश्च भावेऽनटि-अनुस्मरणमनुचिन्तनं ज्ञानमुप-स्करणमुज्जासनमिति, उपस्करणमित्यत्र च सडागमो विशेषः, सर्वत्र कर्मषष्ठ्यन्तस्य समासः । शेषाभावात् "षष्ठ्ययत्नाच्छेषे" [ ३. १. ७६. ] इत्यनेन समासाप्राप्तौ समासविधानार्थमयं योगः ॥ ३. १. ७७. ॥

## याजकादिभिः । ३ । १ । ७८ ॥

**त० प्र-षष्ठ्यन्तं नाम याजक इत्येवमादिभिर्नामभिः सह समस्यते, तत्पुरुषश्च समासो भवति । ब्राह्मणानां याजकः- ब्राह्मणयाजकः, एवं-गुरुपूजकः । याजक, पूजक, परिचारक, परिवेषक, स्नापक, अध्यापक, उच्छादक, उन्मादक, उद्वर्तक, होतृ, भर्तृ । आकृतिगणोऽयम्, तेन तुल्यार्था अपि- गुरुसदृशः, गुरुसमः । दास्याःसदृशः, वृषल्याःसमः;- "षष्ठ्याः क्षेपे" [ ३. २. ३०. ] इत्यलुप् । तथा 'अन्यत्कार-कम्' विश्वगोप्ता, तीर्थकर्ता, तत्प्रयोजको हेतुश्च, जनिकर्तुः प्रकृतिः, इत्यादि सिद्धं भवति । "कर्मजा तृचा च" [ ३. १. ८३. ] इति प्रतिषेधापवादो योगः, तुल्यार्थै-र्विध्यर्थश्च ॥ ७८ ॥**

**श० म० न्यासानुसन्धानम्—याजकादिभिः ।** सूत्रार्थः सुगमः । विगृह्योदाहरति-**ब्राह्मणानां याजकः** इति विग्रहः, **ब्राह्मणयाजकः** इति च समासः, याजक इति प्रसिद्धिवशाद् याजयिता गृह्यते, न यष्टा, तेन "यजीं देवपूजा-संगतिकरणदानेषु" इत्यतो णिगि ततः "णक-तृचौ" [ ५. १. ४८. ] इति णके याजकः, ब्राह्मणा यजन्ते, तेषां प्रयोजकः, यस्तान् याजयति, न ब्राह्मणो याजकः । अतिदिशति-**एवमि**ति, **गुरुपूजकः** इति समासः, विग्रहस्तु गुरूणां पूजक इति, "पूजण् पूजायाम्" इत्यतः कर्तरि णके-पूजक इति । के याजकादय इत्याकाङ्क्षायां तान् नामग्राहमाह-**याजक, पूजक** इत्यादिना, याजकादय एकादश, तत्राद्यौ व्युत्पादितौ, शेषा व्युत्पाद्यन्ते- परिपूर्वात् "चर भक्षणे च" इत्यतः कर्तरि णके-**परिचारक** इति, "विष्लृंकी व्याप्तौ" परिपूर्वादतो णके-**परिवेषक** इति, "ष्णांक् शौचे" अतो णौ प्वागमे प्राग्वत् णके च-**स्नापक** इति, 'इङ्क् अध्ययने' अधिपूर्वादतो णौ "णौ क्रीजीङः" [ ४. २., १०. ] इत्यात्वे "अर्तिरी०" [ ४. २. २१. ] इति प्वागमे प्राग्वत् णके च-**अध्यापक** इति, "छदण् संवरणे" उत्पूर्वा-दतो णके-**उच्छादक** इति, "मदैच् हर्षग्लपनयोः" उत्पूर्वा-दतो णौ णके च-**उन्मादक** इति, क्वचिन्नास्य पाठः, "वृतूङ् वर्तने" उत्पूर्वादतो णौ णके च-**उद्वर्तक** इति, हुंक् दानादान-योः" अतस्तृप्रत्यये-**होतृ** इति, "भृंग् भरणे" अतस्तृप्रत्यये- **भर्तृ** इति । उदाहरणद्वयं वृत्तौ दर्शितं, शेषाणि सविग्रहाण्युदा-हरणानीमानि-गुरूणां परिचारकः-गुरुपरिचारकः, साधूनां परि-वेषकः- साधुपरिवेषकः, राज्ञः स्नापकः-राजस्नापकः, साधूना-मध्यापकः-साध्वध्यापकः, राज्ञ उच्छादकः-राज्ञोच्छादकः, जडानामुन्मादकः-जडोन्मादकः, क्षत्रियस्योद्वर्तकः-क्षत्रियोद्व-र्तकः, क्षीरस्य होता-क्षीरहोता, तीर्थस्य भर्ता-तीर्थभर्ता । एक-वचनेनापि निर्वाहे 'याजकादिभिः' इति यद् बहुवचनं कृतं तज्ज्ञापयति-आकृतिगणोऽयमिति, तदेवाह-**आकृतिगणो-ऽयमि**ति, तत्फलं दर्शयितुमाह-**तेने**ति-आकृतिगणत्वेनेत्यर्थः, **तुल्यार्था अपी**ति-तुल्यार्था अपि याजकादिग्रहणेन याजकादे-

राकृतिगणतया गृह्यन्त इत्यर्थः, तानुदाहरति-**गुरुसदृशः** इति-समासोऽयं, विग्रहस्तु-गुरोः सदृश इति, **गुरुसमः** इति-समासोऽयं, विग्रहस्तु-गुरोः सम इति, **दास्याःसदृशः, वृषल्याःसदृशः** इति समासाविमौ, नन्वेवं तर्हि दासीसदृशो 5 वृषलीसदृश इति विभक्तिलोपेनैव भवितव्यमित्याशङ्कायामाह-**"षष्ठ्याः क्षेपे" इत्यलुबिति**, अत्र "तुल्यार्थैस्तृतीयाषष्ठ्यौ" [ २. २. १०६. ] इति षष्ठी ज्ञेया। न केवलं तुल्यार्था एवाकृतिगणत्वेन ग्राह्याः, अपि त्वन्येऽपि ग्राह्या इति दर्शयितुमाह-**तथेति**, केऽन्ये इत्याकाङ्क्षायामुदा-10 हरति-**अन्यत्कारकमिति**-समासोऽयं, विग्रहस्तु-अन्यस्य कारकमिति, अत्र "ईयकारके" [ ३. २. १२१. ] इति दकारोऽन्तावयवो भवति, करोतेर्णके-कारकमिति, **विश्वगोप्ता** इति समासः, विग्रहस्तु-विश्वस्य गोप्ता, "गुपौ रक्षणे" अतः कर्तरि "णक-तृचौ" [ ५. १. ४८. ] इति तृच्प्रत्यये-गोप्तेति, 15 **तीर्थकर्ता** इति समासः, विग्रहस्तु-तीर्थस्य कर्ता, करोतेस्तृच्प्रत्यये-कर्तेति, **तत्प्रयोजको हेतुश्चेति**-तस्य प्रयोजक इति विग्रहः, तत्प्रयोजक इति च समासः, प्रपूर्वात् "युजूंपी योगे" इत्यतो णके-प्रयोजक इति, **जनिकर्तुः प्रकृतिः** इति-जनेः कर्ता इति विग्रहः, जनिकर्तेति समासः, तस्य तथा, 20 करोतेस्तृच्प्रत्यये-कर्ता, **इत्यादि सिद्धमिति**-आकृतिगणतया साधु भवति, आदिशब्देनान्यस्यापि यथा शिष्टप्रयोगं परिग्रहः, शिष्टप्रयोगानुसरणप्रदर्शनार्थमेव 'तत्प्रयोजको हेतुश्च' इत्यादिः प्रयोग उपन्यस्यते। ननु याजकादिषु केचित् णकप्रत्ययान्ताः केचन च तृच्प्रत्ययान्ताः, णक-तृचौ च कृत्प्रत्ययाविति 25 "कृति" [ ३. १. ७७. ] इत्यनेनैव समाससिद्धिः, किमर्थमयं योग इति चेत्? अत्राह-**"कर्मजा तृचा" इति प्रतिषेधापवादो योग** इति-पूर्वसूत्रेण प्राप्तावपि सा प्राप्तिः "कर्मजा तृचा च" इत्यनेन प्रतिषिध्यत इति बाधकबाधनार्थमयं योग इत्यर्थः। तुल्यार्थानां योगे न 30 शेषषष्ठीति "षष्ठ्ययत्नाच्छेषे" [ ३. १. ७६. ] इति न समासप्राप्तिरतस्तदंशे विध्यर्थोऽयं योगः, एतदाह-**तुल्यार्थैर्विध्यर्थश्चेति** ॥ ३. १. ७८. ॥

## त्ति-रथौ गणकेन । ३ । १ । ७९ ॥

त० प्र०-पत्ति-रथशब्दौ षष्ठ्यन्तौ गणकेन नाम्ना 35 समस्येते, तत्पुरुषश्च समासो भवति। पत्तीनां गणकः-पत्तिगणकः, एवं-रथगणकः। पत्ति-रथाविति किम्? कार्षापणानां गणकः। गणकेनेति किम्? रथस्य दर्शकः। कथं ज्योतिर्गणकः? "अकेन क्रीडाऽऽजीवे" [ ३. १. ८१. ] इति भविष्यति। "कर्मजा तृचा च" [ ३. १. ८३. ] 40 इत्यस्यापवादोऽयम् ॥ ७९ ॥

**श० म० न्यासानुसन्धानम्—पत्तिरथौ०।** सूत्रार्थः सुगमः, सविग्रहमुदाहरति-**पत्तीनां गणकः** इति विग्रहः, **पत्तिगणकः** इति समासः, अतिदिशति-**एवमिति, रथगणकः** इति समासः, रथानां गणक इति विग्रहः; "गणण् संख्याने" इत्यदन्तो धातुः, ततो णौ कर्तरि णके 45 च-गणक इति, अत्र "अतः" [ ४. ३. ८२. ] इत्यकारलोपस्य स्वरादेशत्वेन पूर्वविधिं प्रतिस्थानित्वादुपान्त्यस्वरस्य न वृद्धिः। पदकृत्यं पृच्छति-**पत्तिरथाविति किमिति**-गणकशब्दो याजकादिषु पठ्यतां, पृथग् वा 'गणकेन' इति विशिष्य सूत्र्यतां, तावतापि प्रकृतसूत्रीयोदाहरणसिद्धिरिति 50 पत्तिरथोपादानं विफलमिति प्रश्नाशयः, प्रत्युदाहरणमुखेनोत्तरयति-**कार्षापणानां गणक** इति- पत्तिरथशब्दानुपादानेऽत्रापि समासः प्रसज्येत, तद्वारणार्थं पत्तिरथग्रहणमावश्यकमित्यर्थः, पुनः पृच्छति-**गणकेन किमिति**-अयमाशयः-"पत्तिरथावकेन" इत्येव सूत्रं "क्रीडाजीवे" इत्यतः पूर्वं 55 पठ्यताम्, 'अकेन' इत्यग्रेऽनुवर्तिष्यते, ततश्च 'गणकेन' इति व्यर्थमिति, प्रत्युदाहरणमुखेनोत्तरयति- **रथस्य दर्शक** इति-गणकग्रहणाभावेऽत्रापि प्रसज्येत तद्वारणाय गणकग्रहणमावश्यकमित्यर्थः,। ननु पत्तिरथयोरुपादानादन्येषां गणकेन सह समासोऽनुचित इति शङ्कते-**कथं ज्योतिर्गणक** इति- 60 ज्योतिषो गणक इति विग्रहे कथमयं समास इत्यर्थः, समाधत्ते-**"अकेन क्रीडाजीवे" इति भविष्यतीति**-अयमाशयः-नात्र सामान्यतो गणकशब्देन सह समासः, किन्तु आजीवार्थं ज्योतिषां गणकेन, तथा चाजीवार्थे विशिष्य विहितः समासोऽस्त्येवेति स एवेह भविष्यतीति। शेषे षष्ठीसमासेन सिद्धिमाश- 65 ङ्क्याह-**"कर्मजा तृचा च"** इति-अयमाशयः-नानेन सूत्रेण शेषषष्ठ्या समासो विधीयते, किन्तु कृद्योगषष्ठ्या, सा च कर्मणि कर्तरि वा भवतीति न तस्याः शेषत्वम्, "कर्मजा तृचा च" इत्यनेन च कर्मजायाः षष्ठ्याः समासप्रतिषेधात् तत्र प्रतिप्रसवार्थं प्रकृतसूत्रस्यावश्यकत्वमिति ॥ ३. १. ७९. ॥ 70

## सर्वपश्चादादयः । ३ । १ । ८० ॥

त० प्र०-'सर्वपश्चात्' इत्यादयः षष्ठीतत्पुरुषाः साधवो भवन्ति। सर्वेषां पश्चात्-सर्वपश्चात् पदं वर्तते, सर्वचिरं जीवति, तदुपरिष्टात् रुक्मं निदधाति, इत्यादि। अव्ययेन प्रतिषेधं वक्ष्यति तस्यापवादोऽयम्। बहुवचनं शिष्ट- 75 प्रयोगानुसरणार्थम् ॥ ८० ॥

**श० म० न्यासानुसन्धानम्—सर्वपश्चा०।** सूत्रार्थः सुगमः। निपातनसूत्रमिदम्, निपातनं च लक्षणाप्राप्तकार्यसिद्ध्यर्थमाश्रीयते। विग्रहोदाहरति-**सर्वेषां पश्चात्**

इति विग्रहः, **सर्वपश्चादिति** समासः, **'सर्वपश्चात् पदं वर्तते'** इति प्रयोगोपन्यासः शिष्टप्रयोगानुसरणाभिव्यक्तये, एवमुत्तरत्रापि, अतिदिशति-**एवमिति, सर्वचिरं जीवतीति**-अत्र सर्वचिरमिति समासः; सर्वेषां चिरमिति विग्रहः, 5 **तदुपरिष्टात् रुक्मं निदधातीति**-अत्र 'तदुपरिष्टात्' इति समासः, तस्योपरिष्टादिति विग्रहः, रुक्मं काञ्चनम्; चिरमित्यस्य स्वरादित्वात् 'पश्चात् उपरिष्टात्' इत्येतयोश्च तसाद्यन्तत्वादव्ययत्वम् । ननु "षष्ठ्ययत्नाच्छेषे" [ ३. १. ७६.] इति सामान्यसूत्रेणैव प्रकृतसमाससिद्धया विफलोऽयं योग 10 इत्याशङ्कायामाह-**अव्ययेन प्रतिषेधं वक्ष्यति तस्यापवादोऽयमिति**-"तृप्तार्थपूरणाव्ययातृश्०" [ ३. १. ८५. ] इति सूत्रेणेति भावः। यदि चोत्तरस्यातृशः साहचर्येण कृदव्ययमेव गृह्यत इति प्राचां रीत्योच्यते तदा प्रपञ्चार्थं स्पष्टप्रतिपत्त्यर्थमेव सूत्रमिति ध्येयम्। एतच्च शेषषष्ठीविषयम्, यत्र च 15 "रि-रिष्टात्०" [ २. २. ८२. ] इति सूत्रेण षष्ठी, तत्र चाप्राप्तप्रापणार्थमेव सूत्रमिति बोध्यम् । एकवचनेनापि निर्वाहे यद् बहुवचनं कृतं तस्य फलं दर्शयितुमाह-**बहुवचनं शिष्टप्रयोगानुसरणार्थमिति**-शिष्टानां ये सर्वपश्चादादयः प्रयोगास्तेऽत्र गणे साकल्येन न पठितास्तथापि तेऽनेन 20 लक्षणेन साधुत्वेन मन्तव्या इति बोधनार्थं बहुवचनमिति भावः ॥ ३. १. ८०. ॥

## अकेन क्रीडाऽऽ-जीवे । ३ । १ । ८१ ॥

त० प्र०-आजीवो जीविका, षष्ठ्यन्तं नामाकप्रत्ययान्तेन नाम्ना समस्यते, क्रीडायामाजीवे च गम्यमाने तत्पुरुषश्च 25 समासो भवति । उद्दालकपुष्पभञ्जिका, वारणपुष्पप्रचायिका, सालभञ्जिका, कस्याश्चित् क्रीडायाः संज्ञा । आजीवे-दन्तलेखकः, नखलेखकः, अवस्करसूदकः, रमणीयकारकः, दन्तलेखनादिरस्याजीवो गम्यते । क्रीडा-ऽऽजीवौ वाक्येन न गम्येते इति नित्यसमासा एते । क्रीडा-ऽऽजीव इति किम्? 30 ओदनस्य भोजकः, पयसः पायकः । "कर्मजा तृचा च" [ ३. १. ८३. ] इति प्रतिषेधे प्राप्ते वचनम् ॥ ८१ ॥

**श० म० न्यासानुसन्धानम्-अकेन०** । क्रीडा च आजीवश्चेत्यनयोः समाहार इति क्रीडाजीवं तस्मिन् **क्रीडाजीवे**, क्रीडा प्रसिद्धा, आजीवं व्याचष्टे-**आजीवो जीवि-** 35 **केति**-आजीवन्त्यनेनेति आजीवः, "जीव प्राणधारणे" अतो जीवन्त्यनयेति "नाम्नि पुंसि च" [ ५. ३. १२१. ] इति स्त्रियां संज्ञायां णके-जीविकेति, उत्सृष्टानुबन्धस्य णकप्रत्ययस्य तृतीयैकवचने-**'अकेन'** इति, प्रत्ययग्रहणे तदन्तविज्ञानमित्याह-**अकप्रत्ययान्तेनेति**, अनेन च नाम्नेति विशिष्यते, 'क्रीडाजीवे' इत्यर्थपरं, स चार्थः समासेन गम्यत इत्याह- 40 **क्रीडायामाजीवे च गम्यमाने तत्पुरुषश्चेति** ।

उदाहरति-**उद्दालकपुष्पभञ्जिका** इति-उद्दालको वृक्षविशेषः, तस्य पुष्पाणि भज्यन्तेऽस्यामिति उद्दालकपुष्पभञ्जिका "भञ्जोंप् आमर्दने" इत्यतोऽधिकरणे "नाम्नि पुंसि च" [ ५. ३. १२१. ] इति स्त्रियां णके भञ्जिकाशब्दं व्युत्पाद्य 45 तद्योगे कर्मणि षष्ठ्या अनेन समासः, कस्याश्चित् क्रीडायामुद्दालकपुष्पाणि भज्यन्ते तस्या इयं संज्ञास्ति, 'भञ्जनं भञ्जिका' इति भावेऽपि विगृह्य समासः कर्तुं शक्यत एव, क्रीडाया भञ्जनक्रियारूपत्वात्, तथा चोभयथा सामञ्जस्ये सति क्रीडायां कर्तृत्वं समारोप्यमिति केषाञ्चिद् व्याख्यानं न युक्तम्, न च 50 तथा सति णकस्य कर्तृवाचकत्वाभावात् तत्र "कर्मजतृचा च" [ ३. १. ८३. ] इति निषेधाप्राप्तेः "कृति" [ ३. १. ७६. ] इत्यनेनैव समासः सिद्ध इत्यस्य वैयर्थ्यमिति वाच्यम्, नित्यसमासार्थं विशिष्य समासविधानस्यावश्यकत्वात्, आजीवे च 'दन्तलेखक' इत्यादौ कर्तर्येव णक इति तत्र निषेध- 55 बाधनार्थत्वस्यापि सत्त्वात्, "नाम्नि पुंसि च" [ ५. ३. १२१. ] इत्यत्र 'शालभञ्जिका' इति वृत्तिकृतोदाहरणाच्च भावाधिकरणणकप्रत्ययान्तस्यानेन समासविधानस्येष्टत्वावगमात्, एवं च सम्भवति लक्षणानुकूल्ये यस्यां क्रीडायां पुष्पाणि भज्यन्ते तस्यां कर्तृत्वोपचाराश्रयणं केषाञ्चिदयुक्तमिति स्पष्टी- 60 भवति । **वारणपुष्पप्रचायिकेति** समासः, वारणपुष्पाणि प्रचीयन्तेऽस्यामित्यस्वपदविग्रहः, "चिंग्ट् चयने" प्रपूर्वादतः प्राग्वत् णकः, **सालभञ्जिकेति** समासः, सालो वृक्षविशेषः, स एव भज्यतेऽस्यां क्रीडायामिति विग्रहः, प्राग्वत् णकादि, एषु सर्वत्रापि कर्मजा षष्ठी ज्ञेया । क्रीडायामुदाहृत्याजीवे 65 उदाहर्तुमाह-**आजीव** इति, **दन्तलेखक** इति समासः, दन्तांल्लिखतीति विग्रहः, एवं-**नखलेखक** इति समासः, नखांल्लिखतीति विग्रहः, **अवस्करसूदक** इति समासः, अवस्करं सूदते इति विग्रहः, **रमणीयकारक** इति समासः, रमणीयं करोतीति विग्रहः, एषु "लिखत् अक्षरविन्यासे" 70 "षूदि क्षरणे" "डुकृंग् करणे" इत्येतेभ्यः कर्तरि णके-लेखकः सूदकः कारक इति, तद्योगे च कर्मणि षष्ठी, तस्याश्च समासनिषेधोऽग्रिमसूत्रेण "कर्मजा तृचा च" [ ३. १. ८३. ] इत्यनेन प्राप्तोऽनेन प्रतिप्रसूयते । आजीवार्थं स्पष्टयति-**दन्तलेखनादिरस्याजीव** इति-लेखनादिना कर्मणैव स 75 जीवतीति प्रतीयत इति भावः । ननु "नित्यं प्रतिनाऽल्पे" [ ३. १. ३७. ] इत्यत्र नित्यग्रहणाद् यत्र न नित्यग्रहणं तत्र विकल्पेन समास इति प्रकृतेऽपि नित्यग्रहणाभावाद् विकल्पेन

समासा वक्तव्या इति चेत् ? अत्राह-**क्रीडाजीवौ वाक्येन न गम्येते इति नित्यसमासा एते** इति- 'उद्दालकपुष्पभञ्जिका' 'नखलेखकः' इत्यादेः समासात्मकसमुदायात् क्रीडा आजीवश्च प्रतीयते, न पुनः 'उद्दालकपुष्पाणां भञ्जिका' 'नखानां लेखकः' इत्यादिवाक्यतः, वाक्याद्धि क्रियाकारकसम्बन्धमात्रप्रतीतेः, तथा च समासार्थविबोधकवाक्याभावात् "द्वितीया खट्वा क्षेपे" [ ३. १. ५९. ] इति वत् नित्यग्रहणाभावेऽप्यमी नित्यसमासा इति भावः । पदकृत्यं पृच्छति-**क्रीडाजीव इति किमिति**, उत्तरयति-**ओदनस्य भोजकः, पयसः पायकः** इति-"भुजंप् पालनाभ्यवहारयोः" अतः कर्तरि णके-भोजक इति, "पां पाने" अतः कर्तरि णके "आत ऐः कृञ्चौ" [ ४. ३. ५३. ] इति आकारस्य ऐकारे तस्य चायादेशे पायक इति भवति, क्रीडाजीवग्रहणाभावे 'अकेन' इत्येतावन्मात्रोक्तावत्रापि समासः प्रसज्येत तद्वारणाय 'क्रीडाजीवे' इत्युपादानमावश्यकमिति भावः, ननु "कृति" [ ३. १. ७७. ] इत्यनेनैव प्रकृतसमाससिद्धिः, किमर्थमिदं वचनमित्याह-**"कर्मजा तृचा च" इति प्रतिषेधे प्राप्ते वचनमिति**-एतच्च क्रीडायां नान्वेतीति पूर्वं व्याख्यातम्, विशिष्य समासविधानस्य नित्यार्थत्वमित्युक्तमेव ॥ ३. १. ८१. ॥

## न कर्तरि । ३ । १ । ८२ ॥

**त० प्र०—कर्तरि विहिता या षष्ठी तदन्तं नामाकप्रत्ययान्तेन नाम्ना न समस्यते । भवतः शायिका, भवत आसिका, भवतोऽग्रगामिका । कर्तरीति किम् ? इक्षुभक्षिकां मे धारयसि, पयःपायिकां मे धारयसि ॥ ८२ ॥**

**श० म० न्यासानुसन्धानम्—न कर्तरि** । 'अकेन' इत्यादि अनुवर्तते । इह 'कर्तरि' इत्यनेन षष्ठी विशेष्यत इत्याह-**कर्तरि विहिता या षष्ठीति**, अकर्मकस्याविवक्षितकर्मणश्च कृदन्तस्य योगे कर्तर्येव षष्ठी भवति, तस्याश्च "कृति" [ ३. १. ७७. ] इत्यनेन समासः प्राप्तः, सोऽनेन निषिध्यते ।

उदाहरति-**भवतः शायिकेति**-"शीङ्क् स्वप्ने" अतः शयितुं पर्यायः क्रम इति वाक्ये "पर्यायार्हर्णोत्पत्तौ०" [ ५. ३. १२०. ] इति स्त्रियां भावे णके-शायिका, भवत इत्यत्र "कर्तरि" [ २. २. ८६. ] इति षष्ठी, एवं-**भवत आसिका** इति-आसितुं पर्याय इति "आसिक् उपवेशने" इत्यतः प्राग्वत् णके-आसिका, शेषमपि प्राग्वत्, **भवतोऽग्रगामिका** इति-"गम्लृं गतौ" अतो णके-गामिका, अग्रे गामिका-अग्रगामिका, "कृत् सतिकारकस्यापि" [ ७. ४. ११७. ] इति 'अग्रगामिका' इत्यप्यकप्रत्ययान्तं भवति, 'शायिका गामिका' इत्यत्र "नामिनोऽकलिहलेः" [ ४. ३. ५१. ] इत्यनेनान्तस्य "ञ्णिति" [ ४. ३. ५०. ] इत्युपान्त्यस्य च वृद्धिः, अनयोरासिकाशब्दे च "अस्यायत्०" [ २. ४. १११. ] इत्यकारस्य इकारः, शयितुम्, आसितुम्, अग्रे गन्तुं च भवतः क्रम इत्येषामर्थः । प्राय ईदृशप्रयोगेषु कर्तर्येव षष्ठीति 'कर्तरि' इति पदं विफलमित्याशङ्क्या पृच्छति-**कर्तरीति किमिति**, न केवलं कर्तरि षष्ठी, किन्तु कर्मण्यपि, तथा च तदन्तस्य समासो भवत्येव स न स्यादित्याशयेनोत्तरयति-**इक्षुभक्षिकां मे धारयसि, पयःपायिकां मे धारयसीति**-"भक्षण् अदने" इत्यत ऋणार्थे भावे स्त्रियां "पर्यायार्हर्णोत्पत्तौ०" [ ५. ३. १२०. ] इति णके 'भक्षिका' इति, "पां पाने" इत्यतोऽपि ऋणार्थे भावे स्त्रियां "पर्यायार्हर्णोत्पत्तौ०" [ ५. ३. १२०. ] इति णके "आत ऐः कृञ्चौ" [ ४. ३. ५३. ] इति आकारस्य ऐकारे आयादेशे च-'पायिका' इति, इक्षुः पयश्च कर्म, तदनुक्तमिति तत्रेयं षष्ठी, 'कर्तरि' इति वचनात् कर्मषष्ठ्याः समासनिषेधो न भवति, तेन इक्षूणां भक्षिका-इक्षुभक्षिका, पयसः पायिका-पयःपायिका इति "कृति" [ ३. १. ७७. ] इत्यनेन समासो भवति, 'मे' इत्यत्र धारिणा योगे उत्तमर्णार्थे "रुचिक्लृप्त्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु" [ २. २. ५५. ] इति चतुर्थी । यद्वा भक्षेः पिबतेश्च कर्तरि षष्ठी, ऋणार्थाधिगतये चोभयत्र वाक्योपन्यासः ॥ ३. १. ८२. ॥

## कर्मजा तृचा च । ३ । १ । ८३ ॥

**त० प्र०—कर्तरीत्यनुवर्तते तच्चाकस्य विशेषणम्, कर्मणि विहिता षष्ठी कर्मजा, तदन्तं नाम कर्तरि विहितो योऽकप्रत्ययस्तदन्तेन तृजन्तेन च नाम्ना सह न समस्यते । ओदनस्य भोजकः, सक्तूनां पायकः, अपां स्रष्टा, पुरां भेत्ता । कर्मजेति किम् ? संबन्धषष्ठ्याः प्रतिषेधो मा भूत्-गुणो गुणिविशेषकः, गुणितः संबन्धी विशेषक इत्यर्थः । कर्तरीत्येव ? इक्षुभक्षिकां मे धारयसि, पयःपायिकां मे धारयसि । कथं भूभर्ता ? वज्रभर्तेति ? भर्तृशब्दो यः पतिपर्यायस्तेन संबन्धषष्ठ्या याजकादिपाठात् कर्मषष्ठ्या वाऽयं समासः, क्रियाशब्दस्य तु तत्राग्रहणादनेन प्रतिषेधः-भुवो भर्ता, वज्रस्य भर्ता ॥ ८३ ॥**

**श० म० न्यासानुसन्धानम्—कर्मजा०** । पूर्वसूत्रे 'कर्तरि' इति पदमुपात्तं, तच्च षष्ठ्या सम्बद्धम्, इह तु तत्सम्बन्धानुपपत्तेर्नानुवृत्तिस्तस्येति कश्चिन्मन्येतात आह-**कर्तरीत्यनुवर्तत** इति-अर्थवशादधिकाराणां प्रवृत्तिनिवृत्ती, न तु सम्बन्धवशादित्यर्थः, तच्चानुवर्तमानस्य 'अकेन' इत्यस्य

विशेषणं, न षष्ठ्याः, नापि तृचः, षष्ठ्या विशेषणत्वे पूर्वसूत्रेणैव निषेधस्य सिद्धत्वात्, तृचा योगे तृच्प्रत्ययेनैव कर्ता उक्त इति कर्तरि षष्ठ्यसम्भवात्, तृच्प्रत्ययश्च कर्तर्येव विहितो न तस्य कर्तरि व्यभिचार इति न तृच्प्रत्ययस्यापि विशेषणम्, सम्भवे 5 व्यभिचारे च विशेषणमर्थवद् भवति, सम्भवव्यभिचारयोगश्चाकस्यैवेति तस्यैवेदं विशेषणमिति दर्शयति- **तच्चाकस्य विशेषणमि**ति, एवं च 'कर्मजा' इति षष्ठ्या विशेषणं, कर्तरि हि 'अक तृच्' इत्येतयोर्वर्तमानयोस्तद्योगे कर्मण्येव षष्ठी भवति, न कर्तरीत्याह-**कर्मणि विहिता षष्ठी कर्मजे**ति-कर्म- 10 शब्दव्याख्यानद्वारेणोक्तार्थो ज्ञापितः, 'कर्मणि' इत्युक्त्यापि निर्वाहे 'कर्मजा' इत्युक्तिः कर्मणः षष्ठीविशेषणत्वस्पष्टप्रतिपत्तये 'कर्तरि' इत्यस्यानुवृत्त्यर्थं वा ज्ञेया, 'कर्मणि विहिता' इत्यस्य कर्मवाचकान्नाम्नो विहितेत्यर्थः ।

उदाहरति-**ओदनस्य भोजकः** इति-"भुजंप् पालना- 15 भ्यवहारयोः" अतो भुङ्क्ते इति "णक-तृचौ" [ ५. १. ४८. ] इति णके भोजक इति, "कर्मणि कृतः" [ २. २. ८३. ] इति षष्ठ्याम् 'ओदनस्य' इति, **सक्तूनां पायक** इति-"पां पाने" पिबतीति णके पायक इति प्राग्वत् षष्ठ्या सक्तूनामिति च, **अपां स्रष्टा** इति-"सृजंत् विसर्गे" अतः सृजतीति 20 "णक-तृचौ" [ ५. १. ४८. ] इति तृचि "अः सृजिदृशोऽकिति" [ ४. ४. १११. ] इति स्वरात् परतोऽकारे "यजसृज०" [ २. १. ८७. ] इति जस्य षत्वे "तवर्गस्य०" [ १. ३. ६०. ] इति तस्य टकारे सेहीदादेशेऽन्त्यस्वरादिलोपे च-'स्रष्टा' इति, "कर्मणि कृतः" [ २. २. ८३. ] इति षष्ठ्यां 25 च 'अपाम्' इति, **पुरां भेत्ता** इति-"भिदृंपी विदारणे" अतो भिनत्तीति प्राग्वत् तृचि-भेत्ता, पुरशब्दस्य षष्ठीबहुवचने 'पुराम्' इति, अत्र प्राग्वत् कर्मणि षष्ठी ।

पदकृत्यं पृच्छति-**कर्मजेति किमि**ति-कर्तरि षष्ठ्याः पूर्वसूत्रेण समासनिषेधात् पृथक् सूत्रारम्भसामर्थ्यात् कर्मषष्ठ्या 30 एवात्र ग्रहणं भविष्यतीति प्रष्टुराशयः; न केवलं कर्तृकर्मणोरेव षष्ठी, किन्तु णक-तृचोर्योगेऽपि सम्बन्धसामान्यविवक्षायां शेषेऽपि षष्ठी प्रयुज्यते, तस्याः समासनिषेधाभावार्थं 'कर्मजा' इति पदमावश्यकमित्याशयेनोत्तरयति-**सम्बन्धषष्ठ्याः प्रतिषेधो मा भूदि**ति, केत्याकाङ्क्षायामाह-**गुणो 35 गुणिविशेषक** इति-'शिष्लृंप् विशेषणे" अतो विशिनष्टीति "णक-तृचौ" [ ५. १. ४८. ] इति णके- विशेषक इति, गुणिनो विशेषक इति विग्रहे कर्मषष्ठ्या अपि सम्भवादाह- **गुणिनः सम्बन्धी**ति-कारकत्वस्य हि विवक्षाधीनत्वेन कर्मत्वाविवक्षायां सम्बन्धसामान्ये एवेह षष्ठी, तस्या एवेह 40 समासः, तन्निषेधाभावाय 'कर्मजा' इति पदम्, तथा च 'कर्मजा' इति वचनान्नेह कर्मणि षष्ठी, कर्म क्रियापेक्षं भवति, नात्र क्रियापेक्षा, प्रत्ययार्थस्तु स्वरूपमात्रपरिचयाय, किन्तु यः कर्ता द्रव्यभूतस्तेन योग इति प्रतिषेधो न भवति, अपि तु भवत्येव समास इति भावः । 'अकस्य' 'कर्तरि' इति विशेषणं सार्थकयति-**कर्तरीत्येवे**ति, व्यावर्त्यमाह-**इक्षुभक्षिकां मे 45 धारयसि, पयःपायिकां मे धारयसी**ति-इह ऋणे भावे स्त्रियां णक इति तु प्रागुक्तमेव, तथा च तेन 'इक्षूणां भक्षिका-इक्षुभक्षिका, पयसः पायिका-पयःपायिका, इति "कृति" [ ३. १. ७७. ] इत्यनेन समासो भवत्येव, न तु प्रकृतसूत्रेण निषेधः, षष्ठ्याः कर्मजत्वेऽपि चरमपदस्य कर्तरि 50 विहितो योऽकस्तदन्तत्वाभावात् । ननु यदि कर्मषष्ठ्यास्तृचा समासोऽनेन निषिध्यते तर्हि **कथं भूभर्ता वज्रभर्ते**ति- भुवो वज्रस्य च भर्तेति कर्मजैवेयं षष्ठीति शङ्काशयः, उत्तरयति- **भर्तृशब्दो यः पतिपर्यायस्तेन सम्बन्धषष्ठ्ये**ति- भर्तृशब्दो द्विविधः-पतिपर्याय औणादिकः, भरणक्रिया- 55 निमित्तकर्तृजन्तश्च, तथाहि-"डुभृंग्क् पोषणे च" अतः "शासि-शंसि-नी-रु-श्रु-हृ-सृ०" [ उणा० ८५७. ] इति तृप्रत्यये यो भर्तृशब्दः स औणादिकः पतिपर्यायः, यश्चात एव धातोः "णक-तृचौ" [ ५. १. ४८. ] इति तृच्प्रत्ययान्तः स भरणक्रियानिमित्तकर्तृजन्तः, तत्र प्रथमे *उणा- 60 दयोऽव्युत्पन्नानि नामानि * इति न तृप्रत्ययान्तत्वं न वा कृदन्तत्वमिति न कृत्कर्मजा षष्ठीति नानेन प्रतिषेधः, किन्तु स्वस्वामिभावसम्बन्धे षष्ठीति "षष्ठ्ययत्नात्०" [ ३. १. ७६. ] इति च समास इत्यर्थः, अथोणादीनां व्युत्पत्तिपक्षमाश्रित्य कदाचित् कर्मणि षष्ठी तदापि समासमाह-**याजकादिपाठात् 65 कर्मषष्ठ्या वाऽयं समासः** इति-याजकादिष्वयं भर्तृशब्दः पठ्यते, अतो "याजकादिभिः" [ ३. १. ७८. ] इति वा समासः, यद्येवं भर्तृशब्दस्य बिभर्तीति भर्तेति भरणक्रियामात्रमुपादाय वर्तमानस्यापि समासः प्राप्नोति, याजकादौ हि 'भर्तृ' इति रूपमात्रं पठ्यते, न तस्य कश्चिद् विशेषः, उच्यते-याजकादयः 70 प्रायेण सम्बन्धिशब्दाः, तत्साहचर्यात् क्रियोपादानेऽपि योगरूढ्या सम्बन्धिशब्दस्यैव भर्तृशब्दस्य तत्र परिग्रह इत्याह- **क्रियाशब्दस्य तत्राग्रहणादि**त्यादि-क्रियामात्रवाचकस्य याजकादिष्वग्रहणात् क्रियामात्रवाचकेऽनेन भवति प्रतिषेधः समासस्य, तदाकारमाह-**भुवो भर्ता, वज्रस्य भर्ते**ति । 75

"हठादाकृष्टानां कतिपयपदानां रचयिता,
यदि स्पर्धी जातो भुवनजयिना रामकविना ।
ततोऽहं जानेऽस्मिन् कतिपयदिनैः पापिनि कलौ,
घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥ १ ॥"

इति प्राचीनपद्ये त्रिभुवनविधातुरित्यत्रापि शेषषष्ठ्या एव 80 समास इति कैयटः ॥ ३. १. ८३. ॥

## तृतीयायाम् । ३ । १ । ८४ ॥

**त० प्र०**—कर्तरि या तृतीया तस्यां सत्यां कर्मजा षष्ठी न समस्यते । आश्चर्यो गवां दोहोऽगोपालकेन, साध्विदं शब्दानामनुशासनमाचार्येण । तृतीयायामिति किम् ? साध्विदं शब्दानुशासनमाचार्यस्य, साध्वी कटचिकीर्षा चैत्रस्य; कर्तरि षष्ठ्यामपि न समास इति कश्चित्–विचित्रा सूत्रस्य कृतिराचार्यस्य । कर्तरीत्येव–साध्विदं शब्दानुशासनमाचार्यस्य नः पुण्येन । कर्मजेत्येव–मैत्रस्य संबन्धी कृतो मैत्रकृतश्चैत्रेण । कथं गोदोहो गोपालकेन ? संबन्धषष्ठ्या भविष्यति ॥ ८४ ॥

**श० म० न्यासानुसन्धानम्—तृती०** । 'कर्तरि' इति वर्तते, तत् 'तृतीयायाम्' इत्यस्य विशेषणम्, 'तृतीयायाम्' इति च सत्सप्तमीत्याह–**कर्तरि या तृतीया तस्यां सत्या-मिति**–सत्सप्तमी नाम "यद्भावो भावलक्षणम्" [ २. २. १०६. ] इति सूत्रेण विहिता सप्तमी, 'कर्मजा' इति च वर्तते, तत् पूर्ववत् 'षष्ठी' इत्यस्यैव विशेषणमित्याह–**कर्मजा षष्ठी**ति । अत्रत्यसूत्रार्थबोधप्रकारश्चेत्थम्–तृतीयायामिति सप्तम्यर्थः कालवृत्तित्वं, तदेकदेशे कालेऽधिकरणतया प्रकृत्यर्थस्यान्वयः, कालवृत्तित्वरूपसप्तम्यर्थस्य 'न समस्यते' इति समासनिषेधक्रियायामन्वयः; तथा च स्वसम्बन्धिकर्तृत्व-रूपधर्मपारतन्त्र्येण तृतीयाधिकरणकालवृत्तिनमिप्रकृतिकस्याद्यन्तस्य नामप्रकृतिकस्याद्यन्तेन समासनिषेधक्रियेत्यर्थः; एवं च वाक्ये तृतीयान्तपदसत्त्व एव कर्मषष्ठ्याः समासनिषेधो नान्यथा, एतच्च तृतीयायामित्यस्य प्रत्युदाहरणावसरे स्पष्टमेव । उदाहरति–**आश्चर्यो गवां दोहोऽगोपालकेने**ति–आङ्पूर्वात् "चर भक्षणे च" इत्यत आचर्यत इति "चरेराङ्स्त्वगुरौ" [ ५. १. ३१. ] इति ये "वर्चस्का०" [ ३. २. ४८. ] इति शे च–'आश्चर्य' इति, "दुहींक् क्षरणे" इत्यतो भावे घञि 'दोह' इति, तस्य गावः कर्म, तत्र "कर्मणि कृतः" [ २. २. ८३. ] इति षष्ठी, अगोपालकः कर्ता, तत्र "द्विहेतोरस्यणकस्य वा" [ २. २. ८७. ] इति षष्ठीनिवृत्तौ "हेतु-कर्तृ-करण०" [ २. २. ४४. ] इति तृतीयया 'अगोपालकेन' इति, अत्र गोदोह इति समासो न भवति । अत्र 'अगोपालकेन' इत्युक्तिर्दोग्धुर्दोहनानभिज्ञत्वोपलक्षिका, तदनुक्तौ तु तृतीयाया असत्त्वात् समासः स्यादेव, अत्र चानेन वाक्येनेत्थं प्रतीयते–दुर्दोहा गावोऽशिक्षितेन दोग्ध्रा यदि दुह्यन्ते तदाश्चर्यमिति, तथा च प्रकृतोदाहरणप्रसङ्गे कैयटेन कृते टिप्पणीकृदाह–"आश्चर्यमत्र विधेयं, तच्च तदा सम्भवति यदा दुर्दोहा गावोऽशिक्षितश्च दोग्धा, तथा चाश्चर्यान्वयानुपपत्त्या तथाविधतात्पर्यानुपपत्त्या वा गोपदस्य दुर्दोहगवीषु लक्षणा, यद्वा 'अगवाम्' इति च्छेदः 'अगोपालकेन' इतिवत्, अप्रशस्तगवामिति तदर्थः" इति । **साध्विदं शब्दानामनुशासनमाचार्येणे**ति–अनुपूर्वाच्छास्तेर्भावे करणे वाऽनट्, तृतीया प्राग्वत्, अत्र शब्दानुशासनमिति समासो न भवतीति । पदकृत्यं पृच्छति–**तृतीयायामिति किमि**ति–तस्यां विद्यमानायामित्यर्थः, कुतः समाश्रीयत इति प्रश्नाशयः, "कर्तरि" [ २. २. ८६. ] इति कृदन्तस्य कर्तरि षष्ठी नित्यं भवति, तत्रापि स्थलविशेषे "द्विहेतोरस्यणकस्य वा" [ २. २. ८७. ] इति षष्ठी विकल्प्यते–भवति न भवति च, तत्र यदा न भवति तदा "हेतुकर्तृ०" [ २. २. ४४. ] इति कर्तरि तृतीया भवति, यदा भवति, तदा सा षष्ठ्येव, तत्र यदा कर्तरि षष्ठी तदा "कृति" [ ३. १. ७७. ] इत्यनेन समासो भवत्येव, यदा कर्तरि तृतीया तदा प्रकृतसूत्रेण समासाभाव इति विवेकार्थं तृतीयाग्रहणमित्याशयात् प्रत्युदाहरणमुखेनोत्तरयति–**साध्विदं शब्दानुशासनमाचार्यस्ये**ति–तृतीयाविरहादनेन प्रतिषेधविरहात् शब्दानामनुशासनं–शब्दानुशासनमिति भवति समास इत्यर्थः; वस्तुतस्त्वत्रातिव्याप्तिप्रदर्शनं नोचितं, यतः तृतीयायामिति किमिति प्रश्नस्य सूत्रमेव किमर्थमित्येवाशयः, सूत्राभावे च शब्दानामनुशासनमाचार्येणेत्यत्रापि समासः स्यादेव निषेधकाभावात्, पूर्वसूत्रेण च कर्मजायाः षष्ठ्या अकेन तृचा च समासो निषिध्यते, तस्य चात्राप्राप्तिरेवेत्यव्याप्तिरेव दोषः, तस्य चातिव्याप्त्यपेक्षया प्राबल्यात्; तथापि तृतीयायां किमित्यस्य–पूर्वसूत्रेण सामान्यत एव कर्मजायाः षष्ठ्याः समासनिषेधो विधेयः, न तु कर्त्रकेन तृचा च योगे, इत्थं च शब्दानामनुशासनमाचार्येणेत्यादावव्याप्तिः परिहृता भवति 'इक्षुभक्षिकां मे धारयसि, शब्दानुशासनमाचार्यस्य' इत्यादावतिव्याप्तिः परमवशिष्यते, तत्परिहारार्थं पूर्वत्र 'अक' इत्यस्य 'कर्तरि' इति विशेषणवदस्यापि सूत्रस्यावश्यकत्वमेवेति बोध्यम् । एवं–**साध्वी कटचिकीर्षा चैत्रस्ये**ति–'कर्तुमिच्छा' इत्यर्थे करोतेः सन्नन्तात् "शंसिप्रत्ययात्" [ ५. ३. १०५. ] इति भावे स्त्रियामेव–चिकीर्षा, कटस्य चिकीर्षेति विग्रहः, शेषं प्राग्वदवसेयम् । अत्र मतान्तरमाह–**षष्ठ्यामपि न समास इति कश्चिदि**ति, तदाकारमाह–**विचित्रा सूत्रस्य कृतिराचार्यस्ये**ति, एतच्च पाणिनीयमतसम्मतमपीति गम्यते, प्रकृतसूत्राशयकसूत्रादर्शनात्; तृतीयायामित्यस्य 'कर्तरि' इति यद् विशेषणं तत्फलं दर्शयितुमाह–**कर्तरीत्येवे**ति, फलं दर्शयति–**साध्विदं शब्दानुशासनमाचार्यस्य नः पुण्येने**ति–'पुण्येन' इत्यत्र हेतौ करणे वा तृतीयायां सत्यामपि न निषेध इष्ट इति भावः । षष्ठ्याः 'कर्मजा' इति यद् विशेषणं तत्फलं दर्शयितुमाह–**मैत्रस्य सम्बन्धी कृतः–मैत्रकृतश्चैत्रेणे**ति–

मैत्रसम्बन्धी यः कश्चिदोदनादिपदार्थः स चैत्रेण कृत इति वाक्यार्थः, मैत्रस्य कृतो मैत्रकृतः, कृत ओदनोऽन्यो वा प्रकरणादिना निर्ज्ञातो वृत्तावन्तर्भूत इति षष्ठ्यन्तस्य न बहिरपेक्षास्ति, 'चैत्रेण' इत्यस्य च कृत इति प्रधानापेक्षेति भवति समासः, अत्र
5 'चैत्रेण' इति कर्तरि तृतीया भवति, 'मैत्रस्य' इति तु न कर्मणि षष्ठी, अपि तु कृतसम्बन्ध इति 'कर्मजा' इति वचनात् प्रतिषेधो न भवति । आशङ्कते-**कथं गोदोहो गोपालकेनेति**-यदि कर्तरि तृतीयायां कर्मजषष्ठ्यन्तस्य समासोऽनेन निषिध्यते तदा प्रकृते कथं समास इति शङ्काशयः, उत्तरयति-**सम्बन्धषष्ठ्या**
10 **भविष्यतीति**-नात्र कर्मणि षष्ठी किन्तु गवां सम्बन्धी दोहः-गोदोह इति सम्बन्धे षष्ठीति "षष्ठ्ययत्ना०" [ ३. १. ७६. ] इति सामान्यसूत्रेण समासः, सर्वस्य प्रकृतप्रकरणस्थस्य निषेधस्य कारकषष्ठीविषयत्वमिति भावः ॥ ३. १. ८४. ॥

## तृप्तार्थ-पूरणाऽ-व्ययाऽ-तृश्-शत्रा-
15 ## नशा । ३ । १ । ८५ ॥

**त० प्र०**—तृप्तार्थैः पूरणप्रत्ययान्तैरव्ययैरतृशन्तैः शत्रन्तैरानशन्तैश्च नामभिः षष्ठ्यन्तं नाम न समस्यते । तृप्तार्थ-फलानां तृप्तः, फलानां सुहितः, सक्तूनां पूर्णः, ओदनस्याशितः, पयसो घ्राणः । पूरण-तीर्थकराणां षोडशः, चक्रधराणां
20 पञ्चमः शान्तिः, चक्रधराणां द्वितीयः सगरः; वासुदेवानां तृतीयः स्वयंभूः । अव्ययं राज्ञः साक्षात्, ग्रामस्य पुरस्तात्, चैत्रस्य कृत्वा, मैत्रस्य प्रकृत्य, अव्ययीभावस्याप्यन्वर्थाश्रयणात् क्वचिदव्ययत्वं, तेन चैत्रस्योपकुम्भमित्यत्र समासो न भवति केचित् । अतृश्-रामस्य द्विषन्, रावणस्य द्विषन् ।
25 शतृ-चैत्रस्य पचन्, अध्वगानां धावन्तः शीघ्रतमाः, चैत्रस्य पक्ष्यन् । आनश्-चैत्रस्य पचमानः, चैत्रस्य पक्ष्यमाणः । सर्वत्र संबन्धे षष्ठी । एतैरिति किम्? ब्राह्मणस्य कर्तव्यम्-ब्राह्मणकर्तव्यम्, इध्मवश्चनः, पलाशशातनः । 'राज्ञः पाटलिपुत्रस्य धनम्, शुकस्य माराविदस्य शब्दः, सर्पिषः पीय-
30 मानस्य गन्धः; सुत्रस्याधीयमानस्यार्थः, इत्यादौ सामानाधिकरण्ये धनादिपदापेक्षा षष्ठीत्यसामर्थ्यात् समासो न भवति, विशेषणसमासस्तु निरपेक्षत्वेन सामर्थ्याद् भवत्येव-पाटलिपुत्रकश्चासौ राजा च तस्य पाटलिपुत्रकराजस्येत्यादि, षष्ठीसमासे तु अनियमेन पूर्वनिपातः स्यात् ॥ ८५ ॥

35 **श० म० न्यासानुसन्धानम्-तृप्तार्थ०** । तृप्तोऽर्थः-अभिधेयं येषां, तृप्तस्यार्थ एवार्थो येषामिति वा तृप्तार्थाः, उष्ट्रमुखादित्वात् समासः; पूरणशब्देन च पूरणार्थाः प्रत्यया गृह्यन्ते, प्रत्ययग्रहणे च तदन्तग्रहणमिति पूरणार्थकप्रत्ययान्तानां ग्रहणं, तैः; अव्ययैः, अतृश्प्रत्ययान्तैः, शतृप्रत्ययान्तैः, आनश्प्रत्ययान्तैश्च नामभिः षष्ठ्यन्तस्य समासोऽनेन निषिध्यते । 40

यथोद्देशन्यायेन पूर्वं तृप्तार्थेनोदाहर्तुमाह-**तृप्तार्थेति**, उदाहरति-**फलानां तृप्त** इति-"तृपौच् प्रीतौ" तृप्यतीति तृप्तः; **फलानां सुहित** इति-सुष्ठु दधातीति "डुधांग्क् धारणे च" इत्यतः क्ते "धागः" [ ४. ४. १५. ] इति 'हि' इत्यादेशे-सुहित इति; **सक्तूनां पूर्ण** इति-"पूरैचि आप्यायने" अतः 45 पूर्यत इति क्ते तस्य नत्वे च-'पूर्ण' इति; **ओदनस्याशित** इति-आङ्पूर्वात् "अशश् भोजने" इत्यत आश्नातीति क्ते-आशित इति; **पयसो घ्राण** इति-"घ्रै तृप्तौ" इत्यत आघ्रायतीति क्ते तस्य "ऋ-ह्री-घ्रा-घ्रा०" [ ४. २. ७६. ] इति विकल्पेन नत्वे णत्वे च-घ्रात घ्राण इति; तृप्तः सुहितः पूर्ण आशितो 50 घ्रातो घ्राण इति पर्यायाः; एभ्यः शीलादित्वात् "ज्ञानेच्छार्चार्थञीच्छीलादिभ्यः क्तः" [ ५. २. ९२. ] इति वर्तमाने क्तः, बहुलाधिकाराद् यथाभिधानमेभ्यो भूतेऽपि क्तो भवति, तथा च तद्योगे तृतीयासमासोऽपि सिद्धः-'अर्हद्भ्यस्त्रिभुवनराजपूजितेभ्यः' इति [ उत्तरसूत्रसाधारणमेतत् ], एवं शीलितो मैत्रेणेत्या- 55 दावपि द्रष्टव्यम्, वर्तमानक्ते तु षष्ठ्येव-'कान्तो हरिश्चन्द्र इव प्रजानाम्' इति; अन्ये तु ज्ञानाद्यर्थेभ्यः *तक्रकौण्डिन्य*-न्यायेन भूते क्तस्य बाधात् वर्तमानक्तेन च योगे षष्ठीविधानात् त्वया ज्ञातो मया ज्ञात इत्यादिरपशब्द इति मन्यन्ते । अत्र षष्ठीविषये विविधा अभिप्रायाः, तथाहि-षष्ठीविधौ तृपिपूर्योरुप- 60 संख्यानं कर्तव्यम्, तत इह षष्ठीत्येके; यद्येवं यत्नादियं षष्ठी स्यात्, तत्रायत्नादिष्वेव समासो न भविष्यति, घ्राताशितसुहितयोगे च निषेधो न स्यात्, तत्करणस्य सम्बन्धिविवक्षायां "वसोसाम्" [ शेषे ] इत्येवेयं षष्ठी, सा च विवक्षा लोके नियतेति नानिष्टप्रसङ्ग इत्यन्ये; अपर आह-यथाऽश्वानां युक्तो 65 रथः-अश्वयुक्तो रथ इति, नात्राश्वा युजेः कर्तारो नापि करणम्, सारथिर्हि तत्र कर्ता रश्मयः करणम्, न च तत्रोपयुज्यमानाः शक्यन्ते वक्तुमकारकमिति, ततः कारकशेष एषा षष्ठी, यथा नटस्य शृणोति, ग्रन्थिकस्य शृणोतीति, तथेहापि फलानां न तृप्तेः कर्तृत्वं नापि करणत्वमिति कारकशेषे एषा षष्ठी "वसो- 70 साम्" [ शेषे ] इति; केचित् तु-अयं च निषेधः सम्बन्धसामान्यषष्ठ्याः कर्मणि षष्ठ्याश्च विशेषानभिधानात्, असति बाधके प्रमाणानां सामान्ये पक्षपातस्य स्वीकारादित्याहुः; स्वमतं चाग्रे वक्ष्यते ।

पूरणप्रत्ययान्तानुदाहर्तुमाह-**पूरणेति**, उदाहरति-**तीर्थ-** 75 **कराणां षोडशः** इति-षडुत्तरा दश-षोडश "एकादश षोडश०" [ ३. २. ९१. ] इति सूत्रेण षषोऽन्तस्य उत्वं दकारस्य

च डकारः, षोडशानां पूरण इति "संख्यापूरणे डट्" [ ७. १. १५५. ] इति डित्वादन्त्यस्वरादिलोपे च 'षोडशः' इति; एवं **चक्रधराणां पञ्चमः शान्तिः** इति–चक्रधराणां–चक्रवर्तिनाम्, पञ्चानां पूरण इति "नो मट्" [ ७. १. १५९. ] इति मटि "नाम सि०" [ १. १. २१. ] इति पदत्वे "नाम्नो नो०" [ २. १. ९१. ] इति नलोपे च पञ्चमः, शान्तिः–शान्तिनामा जिनः; **चक्रधराणां द्वितीयः सगरः** इति–द्वयोः पूरण इति "द्वेस्तीयः" [ ७. १. १६५. ] इति तीये द्वितीय इति, सगरः-सगरनामा; **वासुदेवानां तृतीयः स्वयम्भूः** इति–त्रयाणां पूरण इति "त्रेस्तृ च" [ ७. १. १६६. ] इति तीयप्रत्यये प्रकृतेश्च 'तृ' इत्यादेशे–तृतीयः, स्वयम्भूः–स्वयम्भूनामा। कथं तर्हि–"तान्युञ्छषष्ठाङ्कितसैकतानि, शिवानि वस्तीर्थजलानि कच्चित्" [ रघुवंशे स. ५।८ ] इति कालिदासप्रयोगे पूरणप्रत्ययान्तेन समासः कृत इति चेत्? प्रमाद एवायमिति केचित्, उञ्छेषु षष्ठः, उञ्छात्मकः षष्ठ इति विग्रह इति शब्दकौस्तुभे दीक्षितः, केचित् तु–उञ्छसम्बन्धी पूरण इति विग्रहे उत्तरपद–समास इत्याहुः।

अव्ययमुदाहर्तुमाह–**अव्ययेति**, उदाहरति–**राज्ञः साक्षात्** इति–अत्र स्वरादित्वात् 'साक्षात्' इत्यस्याव्ययत्वम्, **ग्रामस्य पुरस्तात्** इति–अत्र च "अधण्तस्वाद्या शसः" [ १. १. ३२. ] इत्यनेन पुरस्तादित्यस्याव्ययत्वम्, **चैत्रस्य कृत्वा** इति, **मैत्रस्य प्रकृत्येति** च–अत्र "क्त्वातुमम्" [ १. १. ३५. ] इति क्त्वान्तत्वादव्ययत्वम्, प्रकृत्येत्यत्र स्थानिवद्भावात् क्त्वान्तत्वम्। इह 'राज्ञः साक्षात्, ग्रामस्य पुरस्तात्' इत्युदाहरणं युक्तम्, इदं त्वयुक्तम्–'चैत्रस्य कृत्वा, मैत्रस्य प्रकृत्य' इति, अत्र हि षष्ठ्या कर्मापेक्ष्यते–कटं पटं चेति, तत् क्त्वान्तमपेक्षते न षष्ठी, नह्यत्र चैत्रो मैत्रो वा क्रियते, तथा सति "तृन्नुदन्ताव्यय०" [ २. २. ९०. ] इति प्रतिषेधादौत्सर्गिकी द्वितीयैव स्यात्, न "कर्मणि कृतः" [ २. २. ८३. ] इति षष्ठी; उच्यते–यद्यप्यत्र कटः पटो वा क्रियते तथापि तस्यार्थात् प्रकरणाद् वा कुतश्चित् कदाचिदापेक्ष्यस्य निर्ज्ञानं भवति तदा तदविवक्षा, तत्र क्रियासम्बन्धे एव षष्ठी भवति, नहि चैत्रस्याक्रियमाणतायामसम्बन्ध एव, क्रिययाऽनेकधा सम्बन्धोपपत्तेः, तस्य कटादेस्तत्सम्बन्धित्वात् तद्द्वारेण तत्क्रियापि तत्सम्बन्धितया व्यपदिश्यते तदादिष्टत्वाद् वा। अव्ययं चेह प्रतिपदोक्ततया पठितमेवेह गृह्यत इति केचित्। पाणिनीये तु "पूरणगुणसुहित०" [ २. २. ११. ] इति सूत्रे भाष्ये कृदव्ययानामेवोदाहरणदानात् पूर्वोत्तरसाहचर्याच्च कृदव्ययमेव गृह्यते इति व्याख्यातं दीक्षितादिभिः, राज्ञः साक्षादित्यादौ तु विशेष्यापेक्षासत्त्वेन सापेक्षमसमर्थवद् भवतीति सामर्थ्याभावादेव न समास इति तदाशयः, एवं च तन्मते 'चैत्रस्य कृत्वा, मैत्रस्य प्रकृत्य' इत्यादीन्येवास्य मुख्योदाहरणानि, राज्ञः साक्षादित्यादीनि चान्यथासिद्धानि। हरदत्तमते तु सामान्येनैव सर्वेषामव्ययानां ग्रहणम्, 'तदुपरि' इत्यादयश्च प्रयोगा बाहुलकात् समाधेयाः। स्वमते हि कृदव्ययमेव गृह्यत इति न नियमः 'तदुपरि' इत्यादिप्रयोगाश्च "सर्वपश्चादादयः" इति साधवः। मतान्तरमाह–**अव्ययीभावस्यापि** अव्ययीभावसमासस्यापि, **अन्वर्थाश्रयणात्** अनव्ययमव्ययं भवतीत्यव्ययीभाव इति सार्थसंज्ञाश्रयणात्, **क्वचित्** स्थलविशेषे न सर्वत्र, **अव्ययत्वं** भवतीति शेषः, **तेन** अव्ययीभावस्याव्ययत्वेन, 'चैत्रस्योपकुम्भम्' इत्यत्र **समासो न भवति** प्रकृतसूत्रेण समासनिषेधः, **इति केचित्** एवंप्रकारेण केचन वैयाकरणाः प्राहुः। अयमाशयः–अव्ययीभावस्याव्ययत्वं नाङ्गीकर्तव्यम्, तदङ्गीकारे हि 'उच्चकैः, नीचकैः' इत्यादिवद् 'उपाग्नि' 'प्रत्यग्नि' इत्यत्रापि "अव्ययस्य कोद् च" [ ७. ३. ३१. ] इत्यक् प्रसज्येत, तथा 'उपकुम्भमन्यम्' इत्यादौ 'दोषामन्यमहः' इत्यादिवद् मागमप्रतिषेधः स्यात्; अथाव्ययीभावस्य तु "तृप्तार्थपूरणाव्यया०" [ ३. १. ८५. ] इति षष्ठीसमासस्य प्रतिषेधोऽव्ययत्वस्य फलमिति चेत्? न–तत्र समासकाण्डे बहुलाधिकारात् सेत्स्यति; किञ्च 'अव्ययीभाव' इति महतीं संज्ञां यत् कृतवानाचार्यस्ततोऽपि ज्ञापयति–क्वचिदव्ययत्वमपीति, तेन 'चैत्रस्योपकुम्भम्' इत्यत्र न समास इति। अव्ययीभावस्यान्वर्थाश्रयणाद् यदव्ययत्वं प्रतीयते तच्च यद्यपि गौणं तथापि *गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः* इति न्यायस्य पदकार्यविषयत्वेनेह विभक्तिनिमित्तकसमासस्यापि विभक्तिनिमित्तकत्वेन पदकार्यत्वाभावेनाप्रवृत्तेर्निषेधेऽव्ययीभावस्याव्ययत्वेन ग्रहणात् समासनिषेधः सिध्यति, पदकार्यत्वं च स्त्रीत्वानिमित्तकत्वे सति स्यादिविभक्त्यनिमित्तकत्वमिति न्यायसिन्धौ प्रपञ्चितम्; अन्ये चाव्ययीभावस्याव्ययसंज्ञामेवेच्छन्तीति मुख्यमेवाव्ययत्वं तस्य, तेषां मतेऽव्ययीभावस्य न षष्ठीसमासः। केचिदित्युक्तयाऽन्यैरिष्यते समास इत्यर्थो लभ्यते।

अतृशप्रत्ययान्तमुदाहर्तुमाह–**अतृशिति**, उदाहरति–**रामस्य द्विषन्, रावणस्य द्विषन्** इति–"द्विषींक् अप्रीतौ" अतः "सुग्-द्विषार्ह०" [ ५. २. २६. ] इत्यतृशि–'द्विषन्' इति, कर्मण्यप्रधानत्वमात्रविवक्षायामत्र षष्ठीति प्रभाचन्द्रः। शतृप्रत्ययान्तमुदाहर्तुमाह–**चैत्रस्य पचन्** इति–"डुपचींष् पाके" इत्यतः "शत्रानशावेष्यति तु सस्यौ" [ ५. २. २०. ] इति वर्तमाने शतृप्रत्यये 'पचन्' इति, अत्रापेक्ष्यनिर्ज्ञाने सम्बन्धमात्रे षष्ठी, यदि पचिरावर्जनवचनो यथा लोकपक्तिरिति,

तस्य चैत्रः कर्म विवक्ष्येत तदा द्वितीया स्यात्, एवं–**अध्वगानां धावन्तः शीघ्रतमाः** इति–"धावूग् गतिशुद्ध्योः" अतः प्राग्वत् शतरि बहुवचने धावन्त इति, अत्र निर्धारणाविवक्षया सम्बन्धमात्रे षष्ठी, **चैत्रस्य पक्ष्यन्** इति–अत्र भविष्यति स्यसहितः शतृप्रत्यय इति विशेषः । आनशप्रत्ययान्तमुदाहर्तुमाह–**आनशिति, चैत्रस्य पचमानः, चैत्रस्य पक्ष्यमाणः** इति–पचेः "शत्रानशावेष्यति तु सस्यौ" [ ५. २. २०. ] इति वर्तमाने आनशि शवि मागमे च–पचमान इति, भविष्यति तु स्यसहिते आनशि [ स्यानशि ] चस्य कत्वे सस्य षत्वे नस्य णत्वे च पक्ष्यमाण इति। प्रकृतसूत्रोदाहरणेषु कस्मिन् कस्मिन्नर्थे षष्ठीत्यपेक्षायामाह–**सर्वत्र सम्बन्धे षष्ठी**ति–प्रकृतसूत्रस्य सर्वसूदाहरणेषु सतोऽपि कर्मत्वाद्यर्थस्याविवक्षणात् सम्बन्धमात्रविवक्षायां "शेषे" [ २. २. ८१. ] इति षष्ठी ज्ञेया, न पुनरर्धजरतीयन्यायाश्रयणं वरमिति भावः ।

प्रकृतसूत्रे कृत्प्रत्ययविशेषाणां यदुपादानं कृतं तत्फलं स्फोरयितुं पृच्छति–**एतैरिति किमि**ति, अन्यैः समासो भवतीत्यावेदनमुखेनोत्तरयति-**ब्राह्मणस्य कर्तव्यमि**ति विग्रहः, **ब्राह्मणकर्तव्यमि**ति च समासः, **इध्मव्रश्चन** इति समासः, इध्मानां व्रश्चन इति विग्रहः, **पलाशशातन** इति समासः, पलाशानां शातन इति विग्रहः, एषु "कृति" [ ३. १. ७७. ] इति समासः ।

ननु समानाधिकरणानां षष्ठीसमासनिषेधार्थमिह समानाधिकरणग्रहणं कर्तव्यम्–समानाधिकरणेनापि षष्ठी न समस्यत इति, असति समानाधिकरणग्रहणे इह समासः प्राप्नोति–राज्ञः पाटलिपुत्रकस्येति, षष्ठीसमासे हि पूर्वपदस्य नियमः–षष्ठीति, नोत्तरपदस्य सामान्येनोपादानात्, तत्र षष्ठ्यन्तेनापि तेन समानाधिकरणेन समासः स्यात्; ननु चेह सत्यपि षष्ठीसमासे "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इति समासः स्यात्, तत्र को विशेषः षष्ठीसमासे विशेषणसमासे वा ? न च प्रतिषेधसामर्थ्याद् विशेषणसमासोऽप्यत्र न भवतीति शक्यं प्रतिपत्तुम्, 'नीलोत्पलस्य पत्रम्, आचार्यगुप्तस्य भाष्यम्' इति दर्शनात्; न च षष्ठीसमासे उभयोरनियमेन पूर्वप्रयोगः स्यात्, उभयोरपि प्रथमोक्तत्वात्, विशेषणसमासे तु विशेषणस्यैव पूर्वनिपातः, तस्यैव प्रथमोक्तत्वात्, न विशेष्यस्य, अतः समानाधिकरणग्रहणमिह कर्तव्यमिति वाच्यम्, विशेषणसमासस्य परत्वात्; उच्यते–सामानाधिकरण्येऽपि क्वचिद् विशेषणसमासो न भवति–लोहितस्तक्षकः, अर्जुनः कार्तवीर्य इति, तत्र समासः स्यात्–लोहितस्य तक्षकस्य विषम्, अर्जुनस्य कार्तवीर्यस्य विक्रम इति; तथा चेह राज्ञः पाटलिपुत्रकस्येत्यत्र समासो नेष्यते, तद्वारणाय केचित् समानाधिकरणानामपि षष्ठीसमासनिषेधं विदधते, तदन्यथासिद्धिमाह–**राज्ञः पाटलिपुत्रकस्य धनमि**त्यादि, **शुकस्य माराविदस्य शब्दः** इति–समुपलभ्यमानमहाभाष्यपुस्तके [ २. २. ११. सूत्रे ] 'माराविकस्य' इति पाठः, तद्व्युत्पत्तिरित्थमुक्ता पदमञ्जर्याम्–"मा रावि' इति शब्दमाह 'माराविकः' शब्दनक्रियायाः प्रतिषेधक इत्यर्थः, संज्ञैषा शुकविशेषस्य; क्वचित्तु 'माराविदस्य' इति पाठः, तत्र 'मा रावि' शब्दं ददातीति माराविदः, स एवार्थः" इति; इत्थं च मारमावेत्तीति मारावित्, तस्यापत्यमित्याद्यर्थकरणं शुकविशेषणाननुगुणं व्यर्थमिति प्रतीयते; राज्ञः पाटलिपुत्रकस्य धनमित्यादौ सामानाधिकरण्ये या षष्ठी सा कीदृशीत्याह–**धनादिपदापेक्षे**ति–प्रथमे धनापेक्षा, द्वितीये शब्दापेक्षा, तृतीये गन्धापेक्षा, चतुर्थेऽर्थापेक्षा, तथा च सापेक्षमसमर्थवद् भवतीति सामर्थ्याभावादेव समासाभावः सिध्यति, न तदर्थं यत्नो विधेय इत्यर्थः । ननु तर्हि किमीदृशस्थले सर्वथा समासाभाव एवेति चेत्? अत्राह–**विशेषणसमासस्तु निरपेक्षत्वेन सामर्थ्याद् भवत्येवे**ति–विशेष्यविशेषणभावस्य पदद्वयमात्रापेक्षत्वेन धनादिपदार्थान्तरापेक्षाऽभावेन तदंशे सामर्थ्यसत्त्वेन स समासः "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इति भवत्येवेति भावः, तत्र विग्रहमाह–**पाटलिपुत्रकश्चासौ राजा च, तस्य पाटलिपुत्रकस्येत्यादी**ति–एतच्च प्रथमोपस्थितत्वात् प्रथमाविभक्त्यन्तेनैव समास इत्यभिप्रायेण, परिनिष्ठितविभक्त्यापि समास इति स्वीकारे तु पाटलिपुत्रकस्य राज्ञ इत्यपि विग्रहः कर्तुं शक्यत एव । ननु को विशेषः षष्ठीसमासविशेषणसमासयोरिति चेत्? अत्राह–**षष्ठीसमासे त्वनियमेन पूर्वनिपातः स्यादि**ति–अयमाशयः–"प्रथमोक्तं प्राक्" [ ३. १. १४८. ] इति सूत्रेण समासविधायकशास्त्रे प्रथमान्तेन निर्दिष्टस्य प्राक् प्रयोगो विधीयते, "षष्ठ्ययत्नाच्छेषे" [ ३. १. ७६. ] इति सूत्रे तु प्रथमोक्तं षष्ठ्यन्तं, तच्चोभयमिति विनिगमकाभावादुभयोरपि पर्यायेण पूर्वप्रयोगः स्यात्, विशेषणसमासे तु विशेषणस्यैव प्रथमोक्तत्वाद् राज्ञो विशेष्यतया पाटलिपुत्रकशब्दस्यैव नियमेन पूर्वप्रयोगो भवतीति ।

अत्रेदं विचार्यते–योऽयं पूर्वनिपातानियमः षष्ठीसमासे प्रोक्तः स विशेषणसमासेऽप्यस्त्येव, तथाहि–यदा नीलमुद्दिश्य क इति जिज्ञासा तदा नीलो घट इति वाक्ये नीलमुद्देश्यं घटो विधेयः, यदा घटमुद्दिश्य कीदृश इति जिज्ञासा तदा घटो नील इति वाक्ये नीलो विधेय इति विशेष्यविशेषणभावे कामचारेणेहापि राज्ञो विशेष्यत्वे पाटलिपुत्रकराज इति, पाटलिपुत्रकस्य विशेष्यत्वे राजपाटलिपुत्रक इत्युभयविधप्रयोगप्राप्तेः सत्त्वात् स एवानियमः षष्ठीसमास इव प्राप्त इति चेत्? न–विशेष्यविशेषणभावस्योद्देश्यविधेयभावातिरिक्तत्वात्, अत एव पर्वतो वह्निमानिति,

पर्वते वह्निरिति वा विशेष्यविशेषभाववैपरीत्येन वाक्यकल्पनेऽपि विधेयता वह्निनिष्ठैवेत्युक्तमनुमानदीधितौ, तथा च भाष्यादिषु विशेषणत्वादि विषयताविशेषरूपमेवेत्युक्तम्, यत्र तत्र भेद्यभेदकशब्दाभ्यामपि तदेवोच्यते, व्यावर्तकत्वरूपं विशेषणत्वं तु न व्यावर्तकम्, तस्योक्तरीत्या नील इति सामान्योपक्रमे उत्पलेऽपि सत्त्वात् ।

अत्रेयं विशेष्यविशेषणभावव्यवस्थाऽवगन्तव्या – जातिसंज्ञयोर्गुण-क्रियाभ्यां समभिव्याहारे तयोर्विशेष्यतैव, गुणयोः क्रिययोर्गुण-क्रिययोश्च परस्परं समभिव्याहारेऽनियमः, व्याप्यव्यापकभावानापन्नजात्योरप्येवम्, यथा भूतत्व-मूर्तत्वयोः, तद्भावापन्नयोस्तु व्यापकस्य विशेष्यतैव, यथा शिंशपावृक्ष इति, यत्रैकोऽवयवशब्दः परः समुदायशब्दस्तत्रावयवस्य विशेषणत्वमेव, अत एव कृष्णसारङ्ग इत्युदाहृत्य तृतीयातत्पुरुषेणेदं सिद्धमित्युक्तं **पतञ्जलिना,** अन्यथा कर्मधारये पूर्वनिपातानियमेन तृतीयासमासे च तन्नियमेन तदसङ्गतिः स्पष्टैव, द्वयोरप्यवयवशब्दत्वे त्वनियमः, इत्थं च सोमयाजिडित्थ इत्येवोचितं न तु डित्थसोमयाजीति, 'कुब्जखञ्जः, खञ्जकुब्जः', इत्यादौ विषयताया अपि शाब्दबोधे भानाद् बोधे विशेष इति, एवं गुण-क्रिययोरपि समभिव्याहारेऽप्यनियमः–पाचकखञ्जः खञ्जपाचक इति । तथा च पाटलिपुत्रक-राजन्शब्दयोः समभिव्याहारे पाटलिपुत्रकशब्दस्य संज्ञाशब्दत्वेन व्याप्यत्वेन च विशेषणत्वे राजन्शब्दस्य व्यापकत्वेन विशेष्यत्वे शिंशपावृक्षवत् पाटलिपुत्रकराज इत्येव साध्विति वृत्तिकृदाशयः । परं समानाधिकरणस्थले षष्ठीतत्पुरुषे द्वयोः षष्ठ्यन्तत्वेऽपि " षष्ठ्ययत्नाच्छेषे " [ ३. १. ७६. ] इति सूत्रे षष्ठीपदेन विशेषणपदोत्तरषष्ठी ग्रहीतव्या वा विशेष्यपदोत्तराऽथवोभयमपीति " प्रथमोक्तं प्राक् " [ ३. १. १४८. ] इति सूत्रे व्याख्यातव्यमिति ध्येयमिति ॥ ३. १. ८५. ॥

## ज्ञानेच्छार्चार्थाधारक्तेन । ३ । १ । ८६ ॥

**त० प्र०—ज्ञानार्थादिच्छार्थादर्चार्थाच्च वर्तमाने यः क्तो यश्च "अद्यर्थाच्चाधारे" [ ५. १. १२. ] इत्याधारे विहितस्तदन्तेन नाम्ना षष्ठ्यन्तं नाम न समस्यते । राज्ञां ज्ञातः राज्ञां बुद्धः; राज्ञामिष्टः, राज्ञां मतः; राज्ञामर्चितः, राज्ञां पूजितः; इदमेतेषां यातम्, इदमेषां यातम्; इदमेषामासितम्, इदमेषां भुक्तम्, इदमेषां पीतम् । कथं 'राजपूजितः ? राजमहितः ? राजसंमतः ? कलहं स राममहितः कृतवान् ?' इति; बहुलाधिकारादिष्टेन भूतकालक्तेन तृतीयासमासा एत इति कश्चित् । अन्ये तु कृद्योगजाया एव षष्ठ्या इह समासप्रतिषेध इति संबन्धषष्ठीसमासा एत इत्याहुः ॥ ८६ ॥**

**श० म० न्यासानुसन्धानम्–ज्ञानेच्छा०** । ज्ञानं च इच्छा च अर्चा चैषां समाहार इति ज्ञानेच्छार्चम्, तद् अर्थो यस्य स ज्ञानेच्छार्चार्थः, अर्थशब्दस्य द्वन्द्वान्ते श्रूयमाणतया प्रत्येकमन्वयः, तथा च ज्ञानार्थक इच्छार्थकोऽर्चार्थकश्च यो धातुरित्यर्थः, ततो ज्ञानेच्छा चार्थश्चाधारश्चेति ज्ञानेच्छार्चार्थाधारमिति द्वन्द्वः, तत्सम्बन्धी क्त इति ज्ञानेच्छार्चार्थाधारक्तः तेन तथा, अत्रापि क्तस्य द्वन्द्वान्ते श्रूयमाणतया प्रत्येकमन्वयः, स चान्वयो यथायोगं विधेयो न त्वेकयैव रीत्येति विभज्य सूत्रार्थमाह–**ज्ञानार्थाद् इच्छार्थाद् अर्चार्थाच्च वर्तमाने यः क्त** इति, यश्च **" अद्यर्थाच्चाधारे " इत्याधारे विहित** इति प्रत्ययग्रहणे तदन्तविज्ञानमित्याह–**तदन्तेने**ति, एतच्च 'नाम्ना' इत्यस्य विशेषणमित्याह–**नाम्ने**ति । उदाहरति– **राज्ञां ज्ञातः, राज्ञां बुद्धः; राज्ञामिष्टः, राज्ञां मतः, राज्ञामर्चितः, राज्ञां पूजित** इति–"ज्ञांश् अवबोधने'; "बुधिं ज्ञाने" "इषत् इच्छायाम्" "मनिंच् ज्ञाने" "अर्च पूजायाम्" "पूजण् पूजायाम्" एभ्यः " तत् साप्याऽनाप्यात् कर्मभावे कृत्यक्तखलर्थाश्च " [ ३. ३. २३. ] इति कर्मणि "ज्ञानेच्छार्चा०" [ ५. २. ९२. ] इति सूत्रेण वर्तमाने क्तो भवति, सर्वत्र "कर्तरि" [ २. २. ८६. ] इति कर्तरि षष्ठी, वर्तमाने क्तविधानात् "क्तयोरसदाधारे" [ २. २. ९१. ] इति न षष्ठ्या निषेधः, राज्ञा ज्ञायमानो बुध्यमान इष्यमाणो मन्यमानोऽर्च्यमानः पूज्यमान इति क्रमेणार्थः । अथाधारक्तेनोदाहरति—**इदमेतेषां यातम्, इदमेषां यातम्, इदमेषामासितम्, इदमेषां भुक्तम्, इदमेषां पीतमिति**– "यांक् प्रापणे" "आसिक् उपवेशने" "भुजंप् पालना-ऽभ्यवहारयोः" "पांक् पाने" एभ्यः "क्त-क्तवतू" [ ५. १. १७४. ] इति भूते "अद्यर्थाच्चाधारे" [ ५. १. १२. ] इति सूत्रेणाधारे क्तो भवति, सर्वत्र "कर्तरि" [ २. २. ८६. ] इति कर्तरि षष्ठी भवति, आधारे क्तविधानात् "क्तयोरसदाधारे" [ २. २. ९१. ] इति न षष्ठ्या निषेधः, यायते स्मात्र आस्यते स्मात्र भुज्यते स्मात्र पीयते स्मात्र तत् क्रमेण यातम् आसितम् भुक्तम् पीतमिति ।

ज्ञानेच्छार्चार्थात् क्तस्य षष्ठ्या सह समासोऽपि क्वचिद् दृश्यते स कथङ्कारं सङ्गतिमङ्गतीत्याशङ्कते–**कथं राजपूजित** इति, न एक एवैतादृशः प्रयोगः, किन्तु बहव इति दर्शयितुमाह– **राजमहितः, राजसम्मतः** इति, न केवलं निरङ्कुशानां कवीनामेवेदृशाः प्रयोगाः, किन्तु वैयाकरणवरस्य भट्टिकवेरपीत्याह– **'कलहं स राममहितः कृतवान्'** ( भट्टि० १०१२ ) इति– राममहितः–रामकर्तृकपूजापात्रं स कलहं कृतवानित्यर्थस्तत्र प्रकरणानुकूलः, तथा च पूजार्थात् क्तः, तस्य योगे षष्ठ्या नित्यत्वेन

कथं समास इति शङ्काशयः, समाधत्ते- **बहुलाधिकारादिष्टेन भूतकालक्तेन तृतीयासमासा एते इति केचिदिति-** कृत्प्रकरणेऽपि बहुलाधिकारः कृतोऽस्ति, तत्र च तस्य सर्वोपाधिव्यभिचारार्थत्वं सर्वैरेव स्वीक्रियते, तच्च यदीष्टस्थलार्थमेवेति 5 चोद्यते तर्हि ज्ञानाद्यर्थेभ्योऽपि भूते क्त इष्टः, अत एव "तेन प्रोक्ते" [६. ३. १८१.] इत्यतः 'तेन' इति तृतीयाधिकारे "उपज्ञाते" [६. ३. १९१.] इत्युपज्ञातार्थे प्रत्ययो विहितः, अन्यथा 'उपज्ञात' इत्यत्र वर्तमान एव क्ते, तद्योगे च षष्ठ्या एव विधानात् तृतीयान्तेन तस्य सामर्थ्याभावादेव 10 तद्वैयर्थ्यं स्यात्, तथा चेष्वपि प्रयोगेषु भूते क्तः, तत्र च कर्तरि तृतीयैव, "क्तयोरसदाधारे" [२. २. ९१.] इति षष्ठीनिषेधात् तृतीयाया एव सत्त्वेन तृतीयासमासा एवैते इति समाधानार्थः, अत्र केचिदित्युक्त्या परमतेन समाहितम्, तर्हि स्वमते का गतिरित्याकाङ्क्षायां- **'बहुलाधिकारात्'** 15 इति पृथक् कर्तव्यं, तदर्थश्च बहुलाधिकारस्य समासप्रकरणेऽपि सद्भावात् बहुलबलादिमे समासाः साधव इति, किञ्च केचिदित्युक्तया परमताभासेऽपि स्वस्य तत्राभिरुचिरस्त्येव, यतः स्वयमेवाचार्येण "ज्ञानेच्छार्चा०" [५. २. ९२.] इति सूत्रवृत्तावुक्तम्-"बहुलाधिकाराद् यथाभिधानमेभ्यो भूतेऽपि क्तो 20 भवति, तथा च तद्योगे तृतीयासमासोऽपि सिद्धः-- अर्हद्भ्यस्त्रिभुवनराजपूजितेभ्यः" इति, तथा च 'बहुलाधिकारात्'इत्यस्य न पृथक्करणावश्यकता। पुनर्मतान्तरद्वारा समाधानमाह- **अन्ये तु कृद्योगजाया एव षष्ठ्या इह प्रतिषेध इति सम्बन्धषष्ठीसमासा एत इत्याहुरिति-** यथा षष्ठीप्रतिषेधसूत्राणि 25 कारकषष्ठीपराणीत्याख्यीयते तथा षष्ठीसमासनिषेधसूत्राण्यपि कृद्योगे कारकषष्ठ्या एव समासप्रतिषेधकानि, या तु सम्बन्धसामान्ये षष्ठी तया समासो भवत्येवेति राजपूजितादिषु वर्तमानेऽपि क्ते कारकत्वाविवक्षायां सम्बन्धसामान्ये षष्ठीं कृत्वा समासः कर्तुं शक्यत एवेत्यन्येषामाशयः; तुनाऽरुचिः सूचिता, 30 तद्बीजं तु- षष्ठीसमासनिषेधप्रकरणे कृद्योगजाया एव षष्ठ्या निषेध इति नियमाभावः अत एवाचार्येण "तृप्तार्थ०" इति सूत्रवृत्तावुक्तम्-"सर्वत्र सम्बन्धे षष्ठी' इति; यदि च 'इह' इत्यनेन प्रकृतसूत्रस्यैव परामर्शस्तदा 'प्रकृतसूत्रे कृद्योगजाया एव षष्ठ्याः समासनिषेधः, भूतक्तस्य वर्तमानक्तेन बाधात् न भूते क्तो न 35 तृतीया न वा तृतीयासमास इति वर्तमानक्तेन षष्ठ्यैव भवितव्यम्, तत्राऽन्यगत्या सम्बन्धषष्ठ्यामिमे समासाः साधुतामापादनीया इत्याशयः, नात्र तथाविधरुचिः, यतः स्वयमाचार्येण "ज्ञानेच्छा०" [५. २. ९२.] इति सूत्रवृत्तावुक्तम्- "अन्ये तु ज्ञानाद्यर्थेभ्यस्तक्रकौण्डिन्यन्यायेन भूते क्तस्य बाधात् वर्त- 40 मानक्तेन च योगे कर्तरि षष्ठीविधानात् त्वया ज्ञातो मया ज्ञात इत्यादिरपशब्द इति मन्यन्ते"इति ॥ ३. १. ८६. ॥

## अस्वस्थगुणैः । ३ । १ । ८७ ॥

**त० प्र०**—ये गुणाः स्वात्मन्येवावतिष्ठन्ते न द्रव्ये ते स्वस्थाः, तत्प्रतिषेधेनास्वस्थगुणवाचिभिर्नामभिः सह षष्ठ्यन्तं नाम न समस्यते । 45

पटस्य शुक्लः, काकस्य कृष्णः, गुडस्य मधुरः, चन्दनस्य सुरभिः, घृतस्य तीव्रः, कुङ्कुमस्य मृदुः; अत्र अर्थात् प्रकरणाद् वापेक्ष्यस्य वर्णादेर्निर्ज्ञाने य इमे शुक्लादयस्ते पटादेरिति सामर्थ्योपपत्तेः समासः प्राप्नोतीति प्रतिषिध्यते। तथा-पटस्य शौक्ल्यम्, काकस्य कार्ष्ण्यम्, गुडस्य माधुर्यम्; 50 एषु पूर्वेषु च शुक्लादेर्गुणस्य 'शुक्लः पटः' इत्यादौ द्रव्येऽपि वृत्तिप्रदर्शनादस्वास्थ्यमस्त्येव। गुणशब्देन चेह लोकप्रसिद्धा रूपरसगन्धस्पर्शगुणा अभिप्रेतास्ततस्तद्विशेषैरेवायं प्रतिषेधः, तेन 'यत्नस्य गौरवं-यत्नगौरवम्, वचनगौरवम्, प्रक्रियालाघवम्, बुद्धिकौशलम्, मतिवैगुण्यम्, करणपाटवम्, 55 पुरुषसामर्थ्यम्, अङ्गसौष्ठवम्, हस्तचापलम्, वचनमार्दवम्, उत्तरपदार्थप्राधान्यम्, क्रियासातत्यम्, वर्तमानसामीप्यम्, सत्सामीप्यम्, अधिकरणैतावत्त्वम्, प्रयोगान्यत्वम्, गततार्च्छील्यम्, पटहशब्दः, नदीघोषः, वचनप्रामाण्यम्, शब्दाधिक्यम्, वाङ्माधुर्यम्, गोविंशतिः, गोत्रिंशत्, गोशतम्, 60 गोसहस्रम्, समाहारैकत्वम्' इत्यादिषु प्रतिषेधो न भवति। अस्वस्थगुणैरिति किम्? घटवर्णः, कन्यारूपम्, कपित्थरसः, चन्दनगन्धः, स्तनस्पर्शः। बहुलाधिकारात् 'कण्टकस्य तैक्ष्ण्यम्, वृषलस्य धार्ष्ट्यम्' इत्यादिषु समासो न भवति, 'कुसुमसौरभ्यम्, चन्दनसौरभम्' इत्यादिषु भवतीति ॥८७॥ 65

**श० म० न्यासानुसन्धानम्—अस्वस्थ०** । गुणवाचकशब्दानां गुणगुण्युभयपरतया प्रयोगाद् गुणशब्दस्यानियतार्थत्वेन सविशेषणः स प्रयुक्तः, तत्र विशेषणमस्वस्थपदं, तच्च स्वस्थप्रतियोगितया ख्यातमर्थमाह, तथा च ये स्वस्था न भवन्ति तेऽस्वस्था इत्यर्थः स्यात्, नहि ते गुणाः सन्ति 70 ये स्वस्मिन् आत्मनि न तिष्ठन्ति, सर्वेषामपि भावप्रत्ययेन स्वस्मिन्नवस्थितानां प्रतीतेः-वृषलस्य धार्ष्ट्यम्, काकस्य तैक्ष्ण्यमिति, ततश्च सर्वे एव गुणाः स्वस्थाः, तदेदमसम्भविलक्षणम्-अस्वस्थगुणैरिति, अत आह- **ये गुणाः स्वात्मन्येवावतिष्ठन्ते** इति-स्वस्था इत्यनवधारणाश्रये आनर्थक्या- 75 दवधारणमाश्रीयते-स्वस्मिन्नेव आत्मन्येव स्वात्मनि स्वस्वरूप एवावतिष्ठते ये ते स्वस्थाः, अवधारणावच्छिन्नमाह- **न द्रव्ये** इति-द्रव्यात्मनि विशेष्ये नेत्यर्थः, विशेष्यात्मनि चानवस्थानं- विशेष्यसामानाधिकरण्यमनुभवन्तोऽननुभवन्तो वा न कदाचिद् विशेष्यस्य लिङ्गं संख्यां वानुविदधतीति। ये स्वलिङ्गे स्वसंख्याया- 80

मेवावतिष्ठन्ते ते स्वस्था रूपाद्यर्था विंशत्यादयश्च, ततोऽन्येऽस्वस्था गुणाः, यदभिधाने विशेष्यस्य लिङ्गसंख्यमुपादीयते शुक्ला दन्ता इति । यद्यपि गुणानां गुणिपृथग्भावेन स्थितिरनुपपन्ना, तथा सति तेषां गुणत्वमेव व्याहन्येत, तथापीह 5 गुणपदेन गुणवाचकं पदमभिधीयते, तथा च ये गुणाः—गुणवाचकपदानि, केवलं स्वार्थमेवाभिदधति, न तु स्वोपसर्जनं द्रव्यं ते स्वस्था इति पर्यवस्यति, एवं च प्राधान्येनाप्राधान्येन वा द्रव्याप्रतिपादकत्वे सति गुणप्रतिपादकत्वं स्वस्थगुणत्वं, यथा रूपादीनाम्, शुक्लादयस्तु गुणं गुणिनं च प्रतिपादयन्ति, शुक्लं रूपं 10 शुक्लः पट इत्युभयविधव्यवहारादिति न तेषां स्वात्मन्येव वृत्तिरित्यपि व्याख्याप्रकारः, उदाहरति—**पटस्य शुक्लः, काकस्य कृष्णः** इति—उभयत्र वर्ण इति गम्यम्, **गुडस्य मधुरः**, इति—रस इति गम्यम्, **चन्दनस्य सुरभिः, घृतस्य तीव्रः** इति—उभयत्र गन्ध इति गम्यम्, **कुङ्कुमस्य मृदुः** इति—स्पर्श 15 इति गम्यम् । ननु पटस्य शुक्ल इत्यत्र वर्ण इति शेषपूरणेन 'पटस्य वर्णः शुक्लः' इत्यर्थे पटशब्दस्य वर्णशब्देनैवान्वयात् शुक्लशब्देनान्वयाभावादसामर्थ्यात् कथमिह समासप्राप्तिरित्याह—**अर्थात् प्रकरणाद् वापेक्ष्यस्ये**त्यादि-अर्थात् प्रकरणाद् वा कदाचिदपेक्ष्यस्य निर्ज्ञानं भवति, तत्र यदाऽर्थात् प्रकरणाद् वा 20 वर्णो गन्धो रसः स्पर्श इत्यपेक्ष्यं निर्ज्ञानं भवति तदा शुक्ल इत्यादिवर्णादिष्वेव वर्तते, यावानर्थः शुक्लो वर्ण इत्यत्र तावानेव ह्यर्थः शुक्ल इत्यत्रापीति पृथगपेक्षाभावात् सामर्थ्योपपत्तेः समासः प्राप्नोति, सामर्थ्योपपत्तिं दर्शयति—**य इमे शुक्लादयस्ते पटादेरिति सामर्थ्योपपत्ते**रिति— इमे इति निर्ज्ञातान् 25 प्रत्यक्षभावेन निर्दिशति । किञ्च शुक्ल इति गुणाश्रयमात्रप्रतीतिः, तेन तत्रावश्यं विशेषापेक्षया भवितव्यम्, नहि तथा गुणशब्देषु प्रतिपत्तिर्नास्ति, नहि काणाय देयं खञ्जाय देयमिति करुणाप्रवर्तितान्तःकरणप्रयुक्ते वचसि विशेष्यापेक्षास्तीति तत्सम्बन्धिविवक्षायामस्ति समासप्राप्तिः । अर्थात् प्रकरणाद् 30 वापेक्ष्यनिर्ज्ञानविषये **बालमनोरमा**कार एवमाह— "दन्ताः संयुक्ताः शुभावहाः, न तु विरला इत्यादिदन्तवर्णने प्रकृते यदा ब्राह्मणस्य शुक्ला इत्युच्यते तदा प्रकरणाद् दन्ता इति विशेष्योपस्थितिः; यदा वा सर्ववर्णेषु दन्तवस्त्रभूषणेषु प्रकृतेषु ब्राह्मणस्य शुक्ला इत्युच्यते तदा अर्थाद् दन्ता इति 35 विशेष्योपस्थितिः, तत्र सामर्थ्यसत्त्वात् समासे प्राप्ते निषेध इत्यर्थः ।" इति । न च द्रव्यमत्रोच्यत इत्युदाहरणत्वानुपपत्तिरिति वाच्यम् । तत्रापि गुणभावात्, गुणोपकारणं हि द्रव्यमत्रोच्यते; न च * गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः* इत्युदाहरणत्वानुपपत्तिरिति वाच्यम्, मुख्य एव ह्यत्र गुणः, इदमेव हि गुणस्य 40 मुख्यरूपं यदाश्रयपरतन्त्रत्वम्; न च द्रव्याश्रयो गुणो द्रव्यमिति विशिष्टपरिग्रहेऽपि परतन्त्रता नास्तीति वाच्यम्, परतन्त्रविशेषत्वात् तस्य, इत्थमेव चास्वस्थता ।

लक्ष्यप्रकारान्तरं दर्शयितुमाह—**तथे**ति, तदेव प्रकारान्तरमाह—**पटस्य शौक्ल्यम्, काकस्य कार्ष्ण्यम्, गुडस्य माधुर्यमिति**—शुक्लस्य भावः शौक्ल्यम्, कृष्णस्य भावः 45 कार्ष्ण्यम्, मधुरस्य भावो माधुर्यम्। अत्र "वर्णदृढादिभ्यष्ट्यण् च वा" [७. १. ५९.] इति भावे ट्यण्, यकारश्चावशिष्यते । ननु पटस्य शौक्ल्यमित्यादिभावप्रत्ययान्तं कथमस्योदाहरणं यावता स्वस्थ एवायं शौक्ल्यादिगुणः, न ह्ययं कदाचिदपि शौक्ल्यमिति शुक्लादिवद् द्रव्येण सामानाधिकरण्यमनुभवंस्तल्लिङ्गसंख्यमनुविधत्त 50 इत्यत आह— **एषु पूर्वेषु** चेत्यादि **एषु** 'पटस्य शौक्ल्यम्' इत्यादिषु **पूर्वेषु** 'पटस्य शुक्लः' इत्यादिषु च लक्ष्येषु, **शुक्लादेर्गुणस्य** पूर्वत्र शुक्लपदप्रतिपाद्यस्य, अत्र च शौक्ल्यपदप्रकृतिभूतशुक्लादिशब्दप्रतिपाद्यस्य गुणस्येत्यर्थः, **द्रव्येऽपि वृत्तिदर्शनात्** गुणिपरतया द्रव्यप्रतिपादकत्वात्, **अस्वास्थ्यम्** 55 स्वात्ममात्रावृत्तित्वमस्त्येव । अयमाशयः-'शुक्लः पटः' इत्यादिषु प्रयुज्यमानशुक्लादिपदानामेव भावे शौक्ल्यादिरूपमिति परम्परया तेषामपि न स्वास्थ्यमिति । किञ्च गुणेत्यर्थाख्यानमेतत्, न शब्दाख्यानम्, अर्थे च कार्यासम्भवात् तद्वाचिनि शब्दे प्रतिपत्तिः, तत्र य एव गुणः, शुक्लः पटः' इत्यादावस्वस्थो द्रव्यनिष्ठो 60 द्रव्यपरतन्त्र उपलब्धः स एव पटस्य शौक्ल्यमित्यादावपि शौक्ल्यादिशब्देनोच्यते; यद्यपि 'शुक्लः पटः' इत्यादौ पारतन्त्र्यं पटस्य 'पटस्य शौक्ल्यम्' इत्यादौ च स्वातन्त्र्यमिति भेदोऽस्ति, तथापि नाभेदो नास्ति, सोऽभेद आश्रीयते, न भेद इति पटस्य शौक्ल्यमित्यादावपि प्रतिषेधः, अन्यथा पटस्य शुक्लः 65 काकस्य कृष्ण इत्यादावपि न स्यात्, गुणस्य प्राधान्यात्, न च वस्त्वाश्रये प्रतिषेधे शब्दभेदाभेदावुपयुज्येते इति तद्वचनैः सर्वैरपि प्रतिषेधः । रूपादिशब्दा अपि मत्वर्थीयसहिता आश्रयवचनैः शब्दैः समानाधिकरणाः सन्तस्तल्लिङ्गसंख्यमनुविदधतीति तैरपि समासो न प्राप्नोति, नैष दोषः—यतो न 70 मत्वर्थीयसहिता रूपादिशब्दा गुणोपकरणा द्रव्यमाचक्षते, तत्र हि सम्बन्धः शब्दस्य प्रवृत्तौ निमित्तम्, अतश्चैतदेवं यतो भावप्रत्ययः प्रवृत्तिनिमित्ते उत्पद्यमानः, इह सम्बन्धे उत्पद्यते, रूपवत्ता गन्धवत्तेति रूपादिषु रूपादीनां प्रवृत्तिनिमित्तत्वे भावप्रत्ययेन तत्रोत्पत्तव्यम्, यथा शौक्ल्यं 75 कार्ष्ण्यमिति शुक्लादिगुणे, तथा च शौक्ल्यं शुक्ल इति पर्यायशब्दो न तथा रूपं रूपवत्तेति कथं शक्यन्ते रूपादयः शुक्लादिभिस्तुल्ययोगक्षेमाः कल्पयितुमिति रूपादिभिरेव समासो न शौक्ल्यादिभिः ।

गुणविषये विविधानि मतानि सन्ति, तथाहि—गुणः शब्दस्य प्रवृत्तिनिमित्तमित्येके; तत्रातिप्रसङ्गः, राजपुरुष इत्यादावपि प्रतिषेधः स्यात्, यथा देवदत्तस्य शुक्लाः जिनदत्तस्य कृष्णा इति, जात्यादेः प्रवृत्तिनिमित्तस्य सर्वत्र भावात्ः अतो रूपरसादयो वैशेषिकतन्त्रप्रसिद्धाश्चतुर्विंशतिर्गुणा इत्यन्ये; अपर आह—तत्र गुरुत्ववत्तैक्ष्ण्यवतां जाड्यलघुत्वचारुत्वादे रूपादिभ्योऽर्थान्तरभावोपपत्तेरव्याप्तिरिति द्रव्याश्रयो गुणो द्रव्यमित्यादिना गुणलक्षणलक्षितो गुणो विज्ञायते एवं च गुणशब्दस्य तंत्रभेदेन मतभेदेन चार्थभेदादिह केषां ग्रहणमिति निर्णयति—**गुणशब्देन चेह लोकप्रसिद्धा रूपरसगन्धस्पर्शा गुणा अभिप्रेताः** इति—लोके रूप-रस-गन्ध-स्पर्शानामेव साधारण्येन गुणतया प्रसिद्धिः, ते च स्वशब्दप्रतिपाद्याः सामान्यरूपाः स्वस्था एव, न कदाचित् तेषामस्वस्थत्वं सम्भवति पटो रूपमित्यादिप्रयोगाभावात्, तथा चास्वस्थविशेषणमहिम्ना तद्विशेषाः शुक्ल-मधुर-सुरभि-मृद्वादय एव गुणत्वेनेह ग्राह्याः, एतदेवाह—**ततस्तद्विशेषैरेवायं प्रतिषेध** इति, पाणिनीयतन्त्रे च

"सत्त्वे निविशतेऽपैति, पृथग्जातिषु दृश्यते ।
आधेयश्च क्रियाजश्च, सोऽसत्त्वप्रकृतिर्गुणः ॥"

इति कैयटादिभिः "पूरणगुण०" [ पाणि० सू—२. २. ११. ] इति सूत्रे निर्णीतम्, अतिप्रसङ्गश्च ज्ञापकादिना वारिताः, तदपेक्षया गुणपदवृत्तेरेव संकोचे लाघवमिति कृत्वा स्वमते इत्थं संकोचः कृतः। **तेने**ति—लोकप्रसिद्धा ये रूप-रस-गन्ध-स्पर्शात्मका गुणास्तद्विशेषैरेव षष्ठीसमासनिषेध इति स्वीकारेणेत्यर्थः, '**प्रतिषेधो न भवति**' इत्यग्रिमेणान्वयः, अर्थात् "षष्ठ्ययत्नाच्छेषे" [ ३. १. ७६. ] इत्यनेन समासो भवतीति भावः, केत्याकाङ्क्षायां सविग्रहमाह- **यत्नस्य गौरवमि**ति विग्रहः, **यत्नगौरवमि**ति च समासः, गुरोर्भावो गौरवम्, अत्र "रवृवर्णाल्लघ्वादेः" [ ७. १. ६९. ] इत्यण् "वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते" [ ७. ४. १. ] इत्याद्यस्वरवृद्धिः "अस्वयम्भुवोऽव्" [ ७. ४. ७०. ] इत्युकारस्यावादेशश्च, एवमुत्तरत्र लघोर्भावो लाघवं पटोर्भावः पाटवं मृदोर्भावो मार्दवमित्यत्रापि ज्ञेयम्, सुरभेर्भावः सौरभमित्यत्र "अवर्णोवर्णस्य" [ ७. ४. ६८. ] इतीकारलोपो विशेषः, शेषं समानम्; **वचनगौरवमि**ति समासः, वचनस्य गौरवमिति च विग्रहः; **प्रक्रियालाघवमि**ति समासः, प्रक्रियाया लाघवमिति विग्रहः, वृत्तौ तस्याप्रदर्शनं प्राग्दर्शितदिशा सुगमत्वात्, एवमुत्तरत्र सर्वत्र ज्ञेयम् । **बुद्धिकौशलमि**ति समासः, बुद्धेः कौशलमिति विग्रहः, कुशलस्य भावः कौशलम्, अत्र "युवादेरण्" [ ७. १. ६७. ] इत्यण् अकारस्य लोपश्च, एवमुत्तरत्र चपलस्य भावश्चापलमित्यत्रापि, सुष्ठु शोभनस्य भावः सौष्ठवमित्यत्र तु केवलमवादेशो विशेषः । **मतिवैगुण्यमि**ति समासः, मतेर्वैगुण्यमिति च विग्रहः, विगुणस्य भावो वैगुण्यम्, अत्र "पतिराजान्तगुणाङ्गराजादिभ्यः०" [ ७. १. ६०. ] इति ट्यण्, यकारोऽवशिष्यते, एवमुत्तरत्रापि ज्ञेयम्, **करणपाटवमि**ति समासः, करणस्य पाटवमिति च विग्रहः, **पुरुषसामर्थ्यमि**ति समासः, पुरुषस्य सामर्थ्यमिति च विग्रहः, समर्थस्य भावः सामर्थ्यम्; **अङ्गसौष्ठवमि**ति समासः, अङ्गस्य सौष्ठवमिति च विग्रह; **हस्तचापलमि**ति समासः, हस्तस्य चापलमिति च विग्रहः; **वचनमार्दवमि**ति समासः, वचनस्य मार्दवमिति च विग्रहः, **उत्तरपदार्थप्राधान्यमि**ति समासः, उत्तरपदार्थस्य प्राधान्यमिति च विग्रहः, प्रधानस्य भावः प्राधान्यम्; **क्रियासातत्यमि**ति समासः, क्रियायाः सातत्यमिति विग्रहः, सततस्य भावः सातत्यम्; **वर्तमानसामीप्यमि**ति समासः, वर्तमानस्य सामीप्यमिति विग्रहः, समीपस्य भावः सामीप्यम्; **सत्सामीप्यमि**ति समासः, सतो वर्तमानकालस्य सामीप्यमिति च विग्रहः, एतल्लक्ष्यं च "सत्सामीप्ये सद्वद्वा" [ ५. ४. १. ] इति; **अधिकरणैतावत्त्यमि**ति समासः, अधिकरणस्य ऐतावत्यमिति विग्रहः, एतावतो भाव ऐतावत्यम्; **प्रयोगान्यत्वमि**ति समासः, प्रयोगस्यान्यत्वमिति विग्रहः, **गतताच्छील्यमि**ति समासः, गतस्य ताच्छील्यमिति विग्रहः, तच्छीलस्य भावस्ताच्छील्यम्, एतल्लक्ष्यं च "इगो गतताच्छील्ये" [ ३. ३. ९८. ] इति; **पटहशब्दः** इति समासः, पटहस्य शब्द इति च विग्रहः; **नदीघोषः** इति समासः, नद्या घोष इति च विग्रहः; **शब्दाधिक्यमिति** समासः, शब्दानामाधिक्यमिति च विग्रहः, अधिकस्य भाव आधिक्यम्; **वाङ्माधुर्यमिति** समासः, वाचो माधुर्यमिति च विग्रहः, मधुरस्य भावो माधुर्यम्, अत्र दृढादित्वात् ट्यण्, गोविंशतिरिति समासः, गवां विंशतिरिति च विग्रहः; गोत्रिंशदिति समासः; गवां त्रिंशदिति च विग्रहः; गोशतमिति समासः, गवां शतमिति च विग्रहः; गोसहस्रमिति समासः, गवां सहस्रमिति च विग्रहः, समाहारैकत्वमिति समासः, समाहारस्य एकत्वमिति च विग्रहः, । पृच्छति—अस्वस्थगुणैरिति किमिति—केवलं गुणैरित्येव वक्तव्यमिति प्रश्नाशयः, अन्यथा तु सूत्रवैयर्थ्यशङ्कैव स्यात्, न पदवैयर्थ्यशङ्का; उत्तरयति—**घटवर्ण** इत्यादिना, अयमाशयः—अस्वस्थग्रहणाभावे ये सर्वदा गुणमात्रवृत्तयः स्वस्थास्तेषामपि समासनिषेधः प्रसज्येत, अस्वस्थग्रहणे तु ये वर्णरूपरसादयः कदाचिदपि परप्रत्यायका न भवन्ति तेषां स्वस्थानां षष्ठ्यन्तेन समासो भवत्येव, घटवर्णः इति समासः, घटस्य वर्ण इति च विग्रहः;

कन्यारूपमिति समासः, कन्याया रूपमिति च विग्रहः; कपित्थरसः इति समासः, कपित्थस्य रस इति च विग्रहः; चन्दनगन्ध इति समासः, चन्दनस्य गन्ध इति च विग्रहः; स्तनस्पर्शः इति समासः, स्तनस्य स्पर्श इति च विग्रहः।
5 समासप्रकरणे बहुलमित्यधिकारः, तस्य च "क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः" इत्यादिरूपत्वेनालक्ष्ये लक्षणगतिर्लक्ष्ये च लक्षणाप्रवृत्तिरूपं फलद्वयमप्याह– बहुलाधिकारात् कण्टकस्य तैक्ष्ण्यम्, वृषलस्य धाष्टर्यम्' इत्यादिषु समासो न भवतीति– अत्र प्रकृतसूत्रालक्ष्यत्वेन "षष्ठ्ययत्ना०" [ ३. १. ७६ ] इति प्राप्तोऽपि
10 समासो न भवति, कुसुमसौरभ्यम्, चन्दनसौरभमित्यादिषु भवतीति– अत्र प्रकृतसूत्रलक्ष्यत्वेन प्राप्तोऽपि समासनिषेधो न भवति, कुसुमसौरभ्यमिति समासः, कुसुमस्य सौरभ्यमिति विग्रहः, अत्र दृढादित्वात् ट्यण्, अथवा सौरभमिति पाठः, चन्दनसौरभमिति समासः, चन्दनस्य सौरभमिति च विग्रहः ॥ ३.१.८७. ॥

## 15 सप्तमी शौण्डाद्यैः । ३ । १ । ८८ ॥

त० प्र०—सप्तम्यन्तं नाम शौण्डाद्यैर्नामभिः सह समस्यते, तत्पुरुषश्च समासो भवति। पाने प्रसक्तः शौण्डः– पानशौण्डः, पानशौण्डो मद्यपः, अक्षेषु प्रसक्तः शौण्ड इव– अक्षशौण्डः, शौण्डशब्द इह गौणो व्यसनिनि वर्तते, वृत्तौ
20 प्रसक्तिक्रियाया अन्तर्भावादप्रयोगः; अक्षधूर्तः, अक्षकितवः। शौण्ड, धूर्त, कितव, व्याल, सव्य, आयस, व्यान, सवीण, अन्तर्, अधीन, पटु, पण्डित, कुशल, चपल, निपुण, सिद्ध, शुष्क, पक्व, बन्ध। बहुवचनमाकृतिगणार्थं, तेन 'शिरःशेखरः, हस्तकटकः, आपातरमणीयः, अवसानविरसः, पृथिवीविदितः,
25 पृथिवीप्रणतः, अन्तेगुरुः, मध्येगुरुः, [ गलेचोपकः, त्वचिसारः; ] ऋणेऽधमः–अधमर्णः, ऋणे उत्तमः–उत्तमर्णः; राजदन्तादित्वात्परनिपातः' इत्यादि सिद्धं भवति ॥ ८८ ॥

श० म० न्यासानुसन्धानम्—सप्तमी० । सप्तमीति प्रत्ययः, प्रत्ययग्रहणे च तदन्तविज्ञानमित्याह–
30 सप्तम्यन्तमिति, एतच्च 'नाम' इत्यस्य विशेषणमित्याह– नामेति, शौण्डाद्यैरिति 'नाम्ना' इत्यस्य विशेषणमिति वचनविपरिणामेनाह– **शौण्डाद्यैर्नामभिरिति** । अथ विगृह्योदाहरति– **पाने प्रसक्तः शौण्डः** इति विग्रहः, **पानशौण्डः** इति च समासः, **मद्यप** इति तु समासार्थो
35 दर्शितः, "मत्ते शौण्डोत्कटक्षीबाः" इति मत्तार्थे शौण्डशब्दः, स एव मुख्यार्थोऽत्र ग्राह्यः, "शुन्त् गतौ" अतः "कु-गु-द०" [ उणा० १७०. ] इति किति डे– शुण्डा सुरा हस्तिहस्तश्च, शुण्डायां मदिरायां भवोऽभिरतः शौण्डः, शुण्डाऽस्त्यस्य वा ज्योत्स्नादित्वादण्; **अक्षेषु प्रसक्त शौण्ड इवेति** विग्रहः, **अक्षशौण्डः** इति च समासः,
40 कारकाणां क्रियाद्वारैव कारकान्तरेण सम्बन्ध इति पानस्याक्षाणां च सम्बन्धाभावमाशङ्क्य प्रसक्तिक्रियाद्वारा सामर्थ्यसम्पादनायोक्तं–प्रसक्त इति, प्रसक्तशब्दार्थश्च वृत्तावेवान्तर्भूतः, न वृत्त्यर्थेऽलौकिके प्रक्रियावाक्ये तस्य प्रयोगो वृत्तिस्वाभाव्यात्, अयं चार्थः "सप्तमी शौण्डैः" [ पाणि० सू० २. १. ३९. ]
45 इति सूत्रे **कैयटे**नापि प्रतिपादितः– "वृत्त्यन्तर्भूतप्रसक्त्यादिक्रियापेक्षोऽक्षा [ पाना ] दीनामाधारभावः" इति । **नागेशेन** च प्रसक्त्यादिक्रियानपेक्षयापि सामर्थ्यं प्रतिपादितं तत्रैव– "यदि तु यद्द्वारकं यस्य कारकत्वं तदन्वयद्वारैव तस्य क्रियान्वय इत्यङ्गीक्रियते तदा साक्षादपि सामर्थ्यमस्त्येवेति बोध्यम्"
50 इति एवं च कर्तृद्वारैव [ क्वचित् कर्मद्वारापि ] आधारस्य कारकत्वमिति शौण्डद्वारैव पानादीनां क्रियायामन्वय इति पानादीनां शौण्डादिभिः साक्षादेवान्वयसम्भवान्न प्रसक्त्यादिक्रियाद्वारान्वयोऽपेक्षणीयः समासस्येति तदाशयः । ननु चेह वृत्तौ 'अक्षशौण्ड' इत्यत्राक्षशब्दः शौण्डशब्दश्च श्रूयते, न
55 प्रसक्तशब्द इव शब्दो वा शब्दान्तरम्, तत्र कथं प्रसक्तार्थ इवार्थो वा ? नह्यनिबन्धना प्रतिपत्तिरस्ति, अतिप्रसङ्गादित्यत आह–**शौण्डशब्द इह गौणो व्यसनिनि वर्तते** इति शौण्डशब्दो यद्यपि मद्यपे रूढः, स इह वृत्तौ गौणः, यथा मद्यपो मद्यपाने प्रसक्तो भवति, तथा योऽक्षेषु प्रसक्तो व्यसनी
60 तत्र वर्तत इतीवार्थलाभः प्रसक्तार्थलाभश्च 'गौणो व्यसनिनि वर्तते' इत्यनेन तदुभयमुक्तं, गुणादन्यत्रागतो गौण इत्यस्मिंस्तच्छब्दः प्रयुज्यमान इवार्थं मुख्यसादृश्यं गमयतीति इवार्थ उक्तः, गुणश्चौपम्यनिबन्धनः, येनासौ मुख्य इव भवति, स च गुणप्रसक्तिरिति विशेषणेनोच्यते, व्यसनिनीति
65 व्यसनमात्यन्तिकः कार्यान्तरोच्छेदी प्रसङ्ग उच्यते । ननु अतस्मिंस्तच्छब्दप्रयोगादस्तु तद्गुणयोगः, किन्तु सामान्यमात्रं गम्यते कथं प्रसक्त इति विशेष इति तदर्थं प्रसक्तशब्दः प्रयोक्तव्य इत्यत आह– **वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादप्रयोग** इति– यथा वृत्तौ सप्तम्यर्थस्यान्तर्भावः, तथाविध
70 एवार्थे वृत्तौ पूर्वपदस्य वृत्तेः, तथोत्तरपदमपि यः शौण्ड इव प्रसक्तः, तत्र वृत्तौ वर्तते नान्यत्रेति वृत्तौ प्रसक्तिक्रियाया अन्तर्भाव इति प्रसक्तार्थलाभः, तदपेक्षाशब्दादधिकरणे सप्तमी, बहिरपेक्षा च नास्तीति सामर्थ्योपपत्तिः, अन्यथाऽक्षेष्वित्यधिकरणं प्रसक्तापेक्षं, न शौण्डशब्देन युक्तमित्यसामर्थ्यात्
75 समासानुपपत्तेः, वचनप्रामाण्याद्सामर्थ्येऽपि समासेऽतिप्रसङ्गः, सक्तस्त्वमक्षेषु शौण्डः पिबति पानागारे इत्यत्रापि प्रसङ्गात्।

केचिदिहातः समासवचनादेव शौण्डशब्दयोगे सप्तमीत्याहुः, तत्रातिप्रसङ्गः, देवदत्तः शौण्ड इत्यादावपि प्रसङ्गात्।

के शौण्डादय इत्याकाङ्क्षायां तान् नामग्राहमाह–**शौण्ड, धूर्त,** इत्यादिना, एकोनविंशतिः शौण्डादयः, तत्र शौण्डशब्दे 5 उदाहृतं वृत्तौ, शेषेषु सुगमत्वान्नोदाहृतम्; शिष्यबुद्धिवैशद्यायोदाह्रियते–"धुर्वै हिंसायाम्" धूर्वति हिनस्तीति "शी-री-भू०" [ उणा. २०१. ] इति किति ते "य्वोः प्वय्व्यञ्जने लुक्" [ ४. ४. १२१. ] इति वलोपे "भ्वादेर्नामिनो" [ २. १. ६३. ] इति उकारस्य दीर्घत्वे '**धूर्त**' इति, क्ते तु धूर्ण इति 10 स्यात्, अक्षेषु धूर्तः–अक्षधूर्तः, अत्रापि क्रिया प्रतीयते तदपेक्षाधिकरणे सप्तमी, यथा वृक्षे शाखेति, एवमक्षेषु धूर्तो भवन्नक्षधूर्तः। "कित निवासे" केतति निवसति यत्र तत्रेति "किति-कुडि०" [ उणा० ५१८. ] इत्यवे–'**कितव**' इति, यद्वा किं तवास्तीति पणते इति पृषोदरादित्वात्–'**कितव**' 15 इति, कितं ज्ञानं वायति शोषयति नाशयतीति वा '**कितव**' इति, अक्षेषु कितवः–अक्षकितव इति। विविधमालमनर्थोऽस्मादिति '**व्याल**' इति, अक्षेषु व्यालः–अक्षव्यालः, व्यालो दुष्टगजः "भुजगश्वापदक्रूरास्त्रयो व्याला इति स्मृताः। षूत् प्रेरणे" अतः "स्था-छा-मा०" [ उणा० ३५७. ] इति ये 20 '**सव्य**' इति, कार्येषु सव्यः–कार्यसव्यः, सव्यः–वामोऽदक्षिणोऽनिपुण इति यावत्। आङ्पूर्वात् "यसूच् प्रयत्ने" अतोऽचि–'**आयस**' इति कार्येषु, आयसः–कार्यायसः, आयसः–अलस आद्यून औदरिक इति यावत्। "अन प्राणने" अतो घञि–आनः, विवृद्धो विततो वा आनो बलमस्येति– 25 '**व्यान**' इति, कर्मसु व्यानः–कर्मव्यानः, अनेन कर्मसु शक्त उच्यते। वीणया सह वर्तत इति '**सवीण**' इति, अर्थेषु सवीणः–अर्थसवीणः, सवीणः–मधुरः, दक्षिणः कुशल इत्येके। '**अन्तर**' इति स्वरादौ–स्वर अन्तर इति पठितो रेफान्तशब्दः, गृहेऽन्तर्वसतीति–गृहान्तर्वसति, अन्तरित्यधिकरणप्रधान- 30 मध्यमाह, अन्तरित्येतदपेक्षयाधारः, अन्तरिति वसतीत्येतदपेक्षया गृहे यन्मध्यं भवति तत्र वसतीत्यर्थः, अन्ये त्वत्र पूर्वोत्तरपदे समानाधिकरणे वसतीति क्रियापेक्षयाधिकरणे वर्तेते, नान्तरित्यपेक्षया पूर्णमधिकरणमित्याहुः। न चैतत् षष्ठीसमासेन सिद्धमिति वाच्यम्, अर्थभेदात्, नहि गृहेऽन्तर्गृहस्या- 35 न्तरिति चैकार्थः, प्रतिषिध्यते चाव्ययेन षष्ठीसमासः, अन्तर्वणमन्तर्जलमिति "पारेमध्येऽग्रेऽन्तः षष्ठ्या वा" [ ३. १. ३०. ] इति पूर्वपदार्थप्राधान्येऽव्ययीभावः अन्तरङ्गुलो नख इति तु प्रादिसमासः। अन्ये तु 'अन्त' इत्यकारान्तं पठन्ति, तत्र गृहेऽन्तः–गृहान्तः, गृहान्ते तिष्ठति, अन्तशब्दः समीपेऽवयवे 40 च गृहे यत् समीपमवयवो वा तत्र तिष्ठतीत्यर्थः। स तस्यैवान्त इति षष्ठीसमासेन सिध्यतीति तदनर्थकमित्येके। '**अधीन**' इति–अव्युत्पन्नोऽयं शब्दः, अथवा अधिगत इनमिति–अधीनः, अधिगत इनोऽनेनेति वा–अधीन आयत्तः, यथा वाक्यं वक्तर्यधीनं हीति, राजनि अधीनः–राजाधीनः। "पट गतौ" इत्यतः पटति दाक्ष्यमिति "भृ-मृ-तृ०" [ उणा० ७१६. ] 45 इत्युप्रत्यये–'पटुः' इति, दक्ष इति तदर्थः, शास्त्रे पटुः–शास्त्रपटुः। "पडुङ् गतौ" अतः क्ते–पण्डा, "पणि व्यवहारस्तुत्योः" इत्यतः पण्यते स्तूयत इति "पञ्चमाड्ड:" [ उणा० १६८. ] इति डे वा–पण्डा तत्त्वानुगा मतिः, पण्डा संजाताऽस्य तारकादित्वादिते–'**पण्डित**' इति, पण्डते जानातीति 50 वा [ उणा० २०४. ] युतादिपाठात् तान्तं '**पण्डित**' इति निपात्यते, ज्ञानार्थात् वर्तमाने क्ते वा '**पण्डित**' इति शास्त्रेषु पण्डितः–शास्त्रपण्डितः। कुशान् लातीति '**कुशल**' इति, ते हि व्युत्पन्नैरादातुं शक्याः, यद्वा "कुशच् श्लेषणे" कुश्यतीति "तृपि-वापि०" [ उणा० ४६८. ] इत्यलकि कुशलो मेधावी, 55 शास्त्रेषु कुशलः–शास्त्रकुशलः। "चप सान्त्वने" अतः "मृदिकन्दि०" [ उणा० ४६५. ] इत्यले '**चपल**' इति कार्येषु चपलः–कार्यचपलः। निपूर्वात् "पुणत् शुभे" शुभं शुभविषया क्रिया, अतो नियतं पुणतीति "नाम्युपान्त्य०" [ ५. १. ५४ ] इति के '**निपुण**' इति, शास्त्रेषु निपुणः–शास्त्रनिपुणः। "षिधू 60 गत्याम्" "षिधौ शास्त्र-माङ्गल्ययोः" "षिधूंच् संराद्धौ" अतः क्ते '**सिद्ध**' इति, काम्पिल्ये सिद्धः–काम्पिल्यसिद्धः। "शुषंच् शोषणे" "डुपचींष् पाके" शुष्यति स्म पच्यते स्मेति क्ते "क्षै-शुषिपचो म-क-वम्" [ ४. २. ७८. ] इति प्रथमे कल्पे द्वितीये कल्पे चस्य कत्वे च '**शुष्कः, पक्वः**' इति आतपे शुष्कः– 65 आतपशुष्कः, स्थाल्यां पक्वः–स्थालीपक्वः। बन्धेर्घञि–'**बन्ध**' इति चक्रे बन्धः–चक्रबन्धः। एकवचनेनापि निर्वाहे बहुवचनस्य यो निर्देशस्तत्फलमाह–**बहुवचनमाकृतिगणार्थमिति, तेन** शौण्डेदेशकृतिगणत्वेन, वक्ष्यमाणप्रयोगजातं सिद्धमित्यर्थः, शिरसि शेखरः–**शिरःशेखरः,** 70 हस्ते कटकः–**हस्तकटकः,** आपाते रमणीयः–**आपातरमणीयः,** अवसाने विरसः–**अवसानविरसः'** पृथिव्यां विदितः–**पृथिवीविदितः,** पृथिव्यां प्रणतः–**पृथिवीप्रणतः, अन्तेगुरुः, मध्येगुरुः** इति–समासाविमौ "मध्यान्ताद् गुरौ" [ ३. २. २१. ] इति सप्तम्या अलुप्, 75 समासत्वादेकपदत्वादि फलम्, **गलेचोपकः** इति समासः, गले चोप्यते इति "बहुलम्" [ ५. १. २. ] इति कर्मणि णकः, "तत्पुरुषे कृति" [ ३. २. २० ] इति सप्तम्या अलुप्, **त्वचिसारः** इति समासः, त्वचि वल्के सार इति विग्रहः, त्वचिसार इति वंशस्य संज्ञा, अत एव "अद्व्यञ्जनात्" [ ३. २. 80

१८.] इति नाम्नि सप्तम्या अलुप् । **ऋणे अधमः** इति विग्रहः, **अधमर्णे** इति समासः, ग्राहक इत्यर्थः, **ऋणे उत्तमः** इति विग्रहः, **उत्तमर्णे** इति समासः, दायक इत्यर्थः, **राजदन्तादित्वात् परनिपातः** इति-ऋणशब्दस्य राजदन्तादिगणे पाठात् परनिपातः, अन्यथा सप्तम्यन्तस्य प्रथमोक्तत्वात् पूर्व एव निपातः स्यादित्यर्थः ॥ ३. १. ८८. ॥

## सिंहाद्यैः पूजायाम् । ३ । १ । ८९ ॥

त० प्र०—सप्तम्यन्तं नाम सिंहाद्यैर्नामभिः सह समस्यते, पूजायां गम्यमानायां तत्पुरुषश्च समासो भवति। समरे सिंह इव-समरसिंहः, एवं-रणव्याघ्रः, भूमिवासवः, कलियुधिष्ठिरः, उपमयाऽत्र पूजाऽवगम्यते। बहुवचनमाकृतिगणार्थम् ॥ ८९ ॥

**श० म० न्यासानुसन्धानम्-सिंहाद्यैः०** । सूत्रार्थः सुगमः । विगृह्योदाहरति-**समरे सिंह इवेति** विग्रहः, **समरसिंह** इति च समासः, इवशब्दः सादृश्यं गमयति, तच्चात्र शूरत्वादिना; **रणव्याघ्रः** इति समासः, रणे व्याघ्र इवेति च विग्रहः, अत्रापि सादृश्यं शूरत्वादिना; **भूमिवासवः** इति समासः, भूमौ वासव इव इन्द्र इवेति च विग्रहः, सादृश्यमत्रैश्वर्यादिना; **कलियुधिष्ठिरः** इति समासः, कलौ युधिष्ठिर इवेति च विग्रहः, सादृश्यमत्र सत्यवचनादिना बोध्यम् । यद्यपि समरे सिंह इवेति विग्रहे इवशब्दार्थः सादृश्यम्, यत्पदोत्तरमिवशब्दः श्रूयते प्रायेण तत्प्रतियोगिकत्वं सादृश्यस्य नियमेन प्रतीयते, तथा चानुयोगिसाकाङ्क्षतया शूर इत्यादिनैवाकाङ्क्षापूर्तिः, न समर इति सप्तम्यन्तेनेत्यसामर्थ्यात् समासाप्राप्तिरस्ति, तथापि वचनप्रामाण्यात् समासोऽवगन्तव्यं इति केचित्, अपरे त्वेवमाहुः-समर इत्यादि पूर्वपदमुत्तरपदेनोपमानेन सिंहादिनैव सम्बध्यते, नोपमेयेन शूरादिना, यदि तेनापि सम्बध्यते-समरेऽयं सिंह इवेति तदा तत्र समरादावेवातिदेश उच्येत नान्यत्र; न चात्र समास उपपद्यते, उपसर्जनस्य बहिरवेक्षणादतः समर इति सिंहादिनैव सम्बध्यते-समरे सिंह इवेति । वस्तुतस्तु समरेण [ समरशब्दार्थेन ] सह सिंहशब्दस्य [ सिंहशब्दार्थस्य ] आधाराधेयभाव एव सामर्थ्योपपादकः । इवशब्दप्रतिपादिते सादृश्ये सिंहशब्दार्थे एवान्तर्भूते, गौणलक्षणया सिंहशब्दस्य स्वसदृशशूरार्थपरत्वादिति ध्येयम् । एतच्चानुपक्षप्रदर्श्यमानमतान्तरानुमतमपि । ननु समरसिंह इत्यादौ सादृश्यमात्रं प्रतीयते, कुतस्तत्र पूजेत्यत आह-**उपमयात्र पूजा गम्यत** इति-अयमाशयः-उपमया साधारणधर्मविधया शूरत्वादीनामवगतिर्भवति, शूरत्वादयो हि गुणाः, गुणोद्भावनं च पूजेति पूजार्थावगतिरिति । केचित् त्वीदृशं सूत्रमनारभमाणाः शौण्डादेराकृतिगणत्वेन समरे सिंह इति विग्रहे समासं विधाय सिंहादिशब्दार्थस्य विशेषे बाधात् तस्य सादृश्ये लक्षणामाश्रित्य पूजार्थावगतिं मन्यन्ते-सिंहो माणवक इत्यादाविव । वस्तुतस्तु-शौण्डादिषु सादृश्यगर्भितार्थकाक्षपदोपादानेन प्रकृते तथोपपादनेऽपि समरसिंहादीनां न पूजार्थनियमनौमत्यर्थविशेषाभिव्यक्तये पृथक् सूत्रारम्भ उचित एव, किञ्चान्यथा काकादीनामपि शौण्डादिगणे पाठकल्पनया "काकाद्यैः क्षेपे" इत्यादीनामपि विफलतापत्तेरिति ध्येयम् । ईदृशानामन्येषामपि लक्ष्याणां सिद्ध्यर्थमेव सिंहाद्यैरिति बहुवचनमित्याह-**बहुवचनमाकृतिगणार्थमिति** ॥ ३. १. ८९. ॥

## काकाद्यैः क्षेपे । ३ । १ । ९० ॥

त० प्र०—सप्तम्यन्तं नाम काकाद्यैर्नामभिः सह समस्यते, क्षेपे गम्यमाने, तत्पुरुषश्च समासो भवति। तीर्थे काक इव-तीर्थकाकः, एवं-तीर्थध्वाङ्क्षः, तीर्थवायसः, तीर्थबकः, तीर्थश्वा, तीर्थसारमेयः, तीर्थकुक्कुटः, तीर्थशृगालः, अनवस्थित एवमुच्यते, उपमया चात्र क्षेपो गम्यते। क्षेप इति किम्? तीर्थे काकस्तिष्ठति। बहुवचनमाकृतिगणार्थम् ॥ ९० ॥

**श० म० न्यासानुसन्धानम्-काकाद्यैः** । आदौ भव आद्यः, आदिर्धर्ममात्रेऽत्र, दिगादित्वाच्च यः, तथा चादिशब्दपर्याय आद्यशब्दः, आदिश्चात्र प्रकारे, नहि काक इत्यादयः शब्दा गणपाठरूपेण पठिताः सन्ति काकादयश्चेहार्था विज्ञायन्ते, तत्र तदभिधायिशब्दप्रतिपत्तिः; यैर्निन्दितधर्मैभिस्तत्त्वारोपेण जनो निन्द्यते-काकोऽयं श्वायमिति, ते काकप्रकाराः, काको ह्येवंप्रकारः, सूत्रार्थः सुगमः । अथ विगृह्योदाहरति-**तीर्थे काक इवेति** विग्रहः, **तीर्थकाक** इति समासः, अत्रापि काकपदं स्वसदृशे वर्तते; अतिदिशति-**एवमिति, तीर्थध्वाङ्क्षः** इति समासः, तीर्थे ध्वाङ्क्ष इवेति विग्रहः; **तीर्थवायसः** इति समासः, तीर्थे वायस इवेति च विग्रहः; **तीर्थबकः** इति समासः, तीर्थे बक इवेति च विग्रहः; **तीर्थश्वा** इति समासः, तीर्थे श्वा इवेति च विग्रहः; **तीर्थसारमेयः** इति समासः, तीर्थे सारमेय इवेति च विग्रहः; **तीर्थकुक्कुट** इति समासः, तीर्थे कुक्कुट इवेति च विग्रहः; **तीर्थशृगालः** इति समासः, तीर्थे शृगाल इवेति च विग्रहः।

ननु यस्तीर्थे काक इव स एवमुच्यते, कस्तत्र क्षेपः, दोषोद्भावनेन हि क्षेपो भवति, क्षेपो निन्दा गर्हेत्यनर्थान्तरमित्यत आह-**अनवस्थित एवमुच्यते** इति-यो गुरुकुलं गत्वापि न चिरं तिष्ठति, अन्यत्र वा कार्ये, सोऽनवस्थित उच्यते,

तीर्थकाक इत्येवमादिभिः शब्दैस्तदनवस्थितत्वं बोध्यते, तच्च दोष इति क्षेपावगतिर्भवति । अन्ये त्वाहुः-अनवस्थित इत्युपलक्षणं क्षेपहेतोः, तेन यस्तीर्थे गुरुकुले चिरं तिष्ठन्नपि न तीर्थस्नानफलं लभते तीर्थं वोपहन्ति सोऽप्येवमुच्यत इति । अथ तीर्थकाकादिभ्यः शब्देभ्यः कथमनवस्थितताद्यर्थावगतिः, किं साक्षादेतेऽनवस्थिताद्यर्थमाहुः, यथानवस्थितादयः शब्दाः, किं वान्यथा, येनात्र क्षेपः स्यादित्यत आह-**उपमया चात्र क्षेपो गम्यते** इति- तीर्थकाक इत्यादौ, उपमया-तीर्थे काक इवायमित्यादिरूपया क्षेपो गम्यते-क्षेपावगतिर्भवति, समासे स्वतुल्ये काकादिशब्दो वर्तत इति नेवशब्दप्रयोगः, एतेन-उपमया तीर्थकाकादिशब्देभ्योऽनवस्थिताद्यर्थप्रतिपत्तिः, नानवस्थितादिशब्दवदित्याह, अयमाशयः-उपमायां ह्युपमानमुपमेयं तयोश्च साधारणो धर्म इति त्रितयं सन्निधीयते, अन्यथोपमाया असम्भवात्, तत्र साधारणधर्मप्रतिपत्तावयमनवस्थिताद्यर्थो व्यवतिष्ठते तत्तुल्येऽनवस्थितादौ, तत्र सिद्धेः, तत्र तीर्थ इत्यादि पूर्वपदमुत्तरपदेनोपमानेनैव सम्बध्यते, नोपमेयेनानवस्थितादिना, यदि तेनापि सम्बध्येत-तीर्थेऽयं काक इवेति, तदा तीर्थादावेवानवस्थितातिदेश उच्येत, नान्यत्र; न चात्र समास उपपद्यते, उपसर्जनस्य बहिरपेक्षणात्, अतस्तीर्थशब्दः काकादिनैव सम्बध्यते; यथा तीर्थे काको न चिरं तिष्ठति, तद्वदन्योऽपि गुरुकुलेऽप्यन्यत्र वा न चिरं तिष्ठतीत्यनवस्थितः 'तीर्थकाक'इति क्षिप्यते; एवमन्योदाहरणेष्वपि ज्ञेयम् । पदकृत्यं पृच्छति- **क्षेप इति किमिति,** उत्तरयति-**तीर्थे काकस्तिष्ठतीति**- अत्र तत्त्वाख्यानं, न पुनरन्यः काकतुल्यः क्षिप्यमाण उच्यत इति क्षेप इति वचनात् समासो न भवतीति भिन्नपदत्वमेव । बहुवचनस्य फलमाह-बहुवचनमाकृतिगणार्थमिति ॥ ३. १. ९०. ॥

## पात्रेसमितेत्यादयः । ३ । १ । ९१ ॥

**त० प्र०**--पात्रेसमितादयः सप्तमीतत्पुरुषा निपात्यन्ते, क्षेपे गम्यमाने । पात्र एव समिताः-पात्रेसमिताः, एवं-पात्रेबहुलाः, गेहेशूरः; गेहेदाही, गेहेक्ष्वेडी, गेहेनर्दी, गेहेनर्ती; गेहमेव विजितमनेन-गेहेविजिती, "इष्टादेः" [ ७. १. १६८. ] इतीनि "व्याप्ये क्तेनः" [ २. २. ९९. ] इति सप्तमी, एवं-गेहेविचिती; गेहेव्यालः, गेहेपटुः, गेहेपण्डितः, गेहेप्रगल्भः; गोष्ठेशूरः, गोष्ठेक्ष्वेडी, गोष्ठेनर्दी, गोष्ठेविजिती, गोष्ठेव्यालः, गोष्ठेपटुः, गोष्ठेपण्डितः, गोष्ठेप्रगल्भः, एषु अवधारणेन क्षेपो गम्यते । उदुम्बरे मशक इव-उदुम्बरमशकः, एवम्-उदुम्बरकृमिः, कूपकच्छपः, कूपमण्डूकः, अवटकच्छपः, अवटमण्डूकः, उदपानमण्डूकः, अल्पदृश्वैवमुच्यते; नगरकाकः, नगरवायसः, नगरश्वा, एतैः सदृशो धृष्ट उच्यते, उदुम्बरमशकादिपूपमया क्षेपो गम्यते । गेहेमेही, पिण्डीशूरः;-य आवश्यकार्थमपि बहिर्न निर्गच्छति, भोजन एव च संरभते स एवमुच्यते, अत्रावधारणेन निरुत्साहता तया च क्षेपो गम्यते । पितरिशूरः, मातरिपुरुषः, यः सदाचारं भिनत्ति स एवमुच्यते; अत्र प्रतिषिद्धासेवनेन क्षेपो गम्यते । गर्भेधीरः, गर्भेशूरः, गर्भेसुहितः, गर्भेतृप्तः, गर्भेदृप्तः, योऽलीकाभिमानित्वादनुचितचेष्टः स एवमुच्यते, तत एव च क्षेपो गम्यते । कर्णेटिरिटिरिः, कर्णेचुरुचुरः, कर्णेटिरिटिरा, कर्णेचुरुचुरा, चापलेनानुचितचेष्टोच्यते, टिरिटिरीति गत्यनुकरणम्, चुरुचुर्विति वाक्यानुकरणम्, तत् करोतीति णिजन्तादप्रत्ययो निपातनसामर्थ्याच्चाणो न भवति। इतिशब्दः समासान्तरनिवृत्त्यर्थः, तेन 'परमाः पात्रेसमिताः, पात्रेसमितानां पुत्रः' इत्यादिषु समासो न भवति । निपातनात् सप्तम्या अलुप् । बहुवचनमाकृतिगणार्थम्, तेन 'व्रणकृमिः गृहसर्पः, गृहकलविङ्कः; आखनिकबकः' इत्यादयो गृह्यन्ते ॥ ९१ ॥

**श० म० न्यासानुसन्धानम्-पात्रेसमि० । पात्रेसमितादयः सप्तमीतत्पुरुषाः** इति-सप्तम्यास्तत्पुरुष इति सप्तमी शिष्टा, तथा च तदन्तावयवाः, तथा च सप्तम्यन्तपूर्वपदास्तत्पुरुषाः सप्तमीतत्पुरुषाः, अनेनेदमाह-पात्रेसमितादीनि सप्तम्यन्तनामानि नामान्तरेण समस्यन्त इति प्रकरणप्राप्तो नार्थः, किन्तु पात्र इत्यादीनि सप्तम्यन्तानि नामानि समितादिभिर्नामभिर्यथायोगं समस्यन्ते, तत्पुरुषश्च समासो भवतीति, **निपात्यन्ते** इति-अवधारणे सादृश्ये चान्तर्भूते सप्तम्यन्तेन समासः सप्तम्या अलुप् चेह साध्यः, एतावांश्च विधेयो न प्रकरणप्राप्त इति निपातनमारभ्यत इति भावः ।

विगृह्योदाहरति-**पात्र एव समिताः** इति विग्रहः, **पात्रेसमिताः** इति च समासः "पां पाने" "पांक् रक्षणे" अतः "त्रट्" [ उणा० ४४६. ] इति त्रटि-'पात्र' इति, सम्पूर्वात् "इंण्क् गतौ" इत्यतः "गत्यर्थाकर्मक०" [ ५. १. ११. ] इति कर्तरि क्ते-'समित' इति, पात्रे भोजनार्थे भाजने एव समिताः समागताः, भोजने एव सन्ति न कार्यान्तरे ते पात्रेसमिताः, "तत्पुरुषे कृति" [ ३. २. २०. ] इति सप्तम्या अलुप् । अतिदिशति-**एवमिति पात्रेबहुलाः** इति समासः, बहु बहुत्वं लातीति 'बहुल' इति, अथवा "स्था-वङ्कि-बंहि०" [ उणा० ४८६. ] इति सूत्रेण "बहुङ् वृद्धौ" इत्यतः किति उले नलोपे च-'बहुल' इति, पात्रे एव बहुलाः प्रचुराः, नान्यत्र कार्ये इति प्राग्वत् पात्रबहुला इति,

पात्र इति पात्रसहचारि कर्म भोजनं लक्ष्यते । अत एव निपातनात् सप्तम्या अलुप्; अत्रोभयत्रैवकारोपादानेन क्षेपमावेदयति- पात्र एव नान्यत्र कार्ये इति, कार्ये तु न कश्चिद् दृश्यते दिशो दिशः पलायन्ते ते पात्र एव समिताः, पात्रे एव बहुलाः 5 कार्ये त्वेको द्वौ वा दृश्येते ते पात्रेबहुलाः, अतोऽवधारणात् क्षेपो निन्दा गम्यते, समासेऽवधारणमन्तर्भूतं गम्यत इति न तत्रैवकारप्रयोगः । एवं-**गेहेशूर** इति समासः, गेहे एव शौर्ययुक्तो न युद्धे इत्यर्थः, शेषं प्राग्वत् । **गेहेदाही**ति समासः, गेहे एव दहति भस्मीकरोति नान्यत्र, कुलमात्रध्वंसक 10 इत्यर्थः, **गेहेक्ष्वेडी**ति समासः, "ञिक्ष्विदा अव्यक्ते शब्दे" अत्र दस्थाने ड इति केचित्, गृहे एव क्ष्वेडते गर्जति, युद्धादौ तु न प्रवर्तेत इत्यर्थः, **गेहेनर्दी**ति समासः, "नर्द शब्दे" गेहे एव नर्दति गर्जति, युद्धादौ तु न प्रवर्तेत इत्यर्थः, **गेहेनर्ती**ति समासः, "नृतैच् नर्तने" गेहे एव नृत्यति, न 15 बहिः सामर्थ्यं दर्शयितुं प्रभवतीत्यर्थः, एषु "ग्रहादिभ्यो णिन्" [ ५. १. ५३. ] इति णिन् प्रत्यय इति लघुन्यासकारः। बालमनोरमाकारस्तु-गेहेनर्दीति प्रतीकमुपादाय "नर्द शब्दे सुप्यजातौ" इति णिनिः" इत्याह, प्रभाचन्द्रस्तु-गेहेक्ष्वेडीति स्थाने गेहेक्ष्वेलीति प्राह, प्राह च-घञन्तान्मत्वर्थीय इन्, 20 व्रताभीक्ष्ण्ये साधाविति णिन् वा, अत एव निपातनात् "तत्पुरुषे कृति बहुलम्" इति वा अलुक्, एवं-गेहेमेली, गेहेनर्ती, गेहेनर्दीति । गेहमेव विजितमनेनेति विग्रहः, अर्थप्रदर्शनपरं वाक्यं वा, **गेहेविजिती**ति च समासः, यो गेहे एव विजयते न शत्रुमध्ये स एवमुच्यते-गेहेविजितीति, नन्विह केन इन् 25 केन च सप्तमीत्याकाङ्क्षायामाह-"**इष्टादेः**" [७. १. १६८.] **इति इनि** "**व्याप्ये केनः**" [ २. २. ९९. ] **इति सप्तमी**ति, विजितमस्यास्तीति मत्वर्थीय इत्येके, अत एव निपातनादलुप् च । अतिदिशति-**एवमि**ति, **गेहेविचिती**ति समासः, गेहे विचितमनेनेति विग्रहः, शेषं प्राग्वत्, 30 गेहे स्थित्वा इदं युक्तमिदमयुक्तमिति विचिनोति निरूपयति बुद्धिमतां प्रकाशयति, न सभामध्ये कार्ये वा स उच्यते- गेहेविचितीति । **गेहेव्यालः** इति समासः, गेहे एव व्यालो नान्यत्रेत्यर्थः, निपातनात् सप्तम्या अलुप्, **गेहेपटु**रिति समासः, गेहे एव पटुर्नान्यत्रेत्यर्थः, **गेहेपण्डित** इति 35 समासः, गेहे एव पण्डितो नान्यत्रेत्यर्थः, **गेहेप्रगल्भः** इति समासः, गेहे एव प्रगल्भो नान्यत्रेत्यर्थः, वस्तुतोऽपटुरपि यः स्वगेहे पटुत्वाडम्बरं करोति स गेहेपटुरित्यादि कथ्यते इति फलितार्थः । **गोष्ठेशूर** इति समासः, गोष्ठे एव शूर इति च विग्रहः, **गोष्ठेक्ष्वेडी**ति समासः गोष्ठे एव क्ष्वेडतीति च विग्रहः, **गोष्ठेनर्दी**ति समासः, गोष्ठे एव नर्दतीति च 40 विग्रहः, **गोष्ठेविजिती**ति समासः, गोष्ठो विजितोऽनेन विग्रहः, **गोष्ठेव्यालः** इति समासः, गोष्ठे एव व्याल इति च विग्रहः, **गोष्ठेपटुरिति** समासः, गोष्ठे एव पटुरिति च विग्रहः, **गोष्ठेपण्डितः** इति समासः, गोष्ठे एव पण्डित इति च विग्रहः, **गोष्ठेप्रगल्भ** इति समासः, गोष्ठे एव प्रगल्भ इति 45 विग्रहः, शेषं प्राग्वज्ज्ञेयं, केवलं गेहशब्दस्थाने गोष्ठशब्द इति विशेषः । उक्तोदाहरणेषु कथं क्षेप इत्यत आह-**एषु अवधारणेन क्षेपो गम्यते** इति-एषु-पात्रेसमितादिषूदाहरणेषु, अवधारणेन-पात्रे एव समिता इत्येवमवधारणेन, क्षेपो गम्यते- निन्दा प्रतीयते, अवधारणेन ह्यन्यत्र तेषां व्यापाराभावो ज्ञाय- 50 मानस्तेषामनौचित्यमशौर्यादिकं च द्योतयतीति क्षेपः प्रतीयत इति भावः ।

न केवलमवधारणेनैव क्षेपो गम्यते, अपि तु क्वचिदुपमयापि पूर्वसूत्रवदिति तदुदाहरति-**उदुम्बरे मशक इवे**ति विग्रहः, **उदुम्बरमशकः** इति च समासः, यथोदुम्बरे स्थितो मशक- 55 स्तस्माद् रसाद् विशिष्टमन्यं रसं न जानाति, तादृशो यः स एवमुच्यते-उदुम्बरमशक इति, अतिदिशति-**एवमि**ति, **उदुम्बरकृमिः** इति समासः, उदुम्बरे कृमिरिवेति च विग्रहः, प्रागुक्त एवार्थः, अन्ये तु-उदुम्बरमशकोऽल्पप्राणः सुकुमारश्च भवति, तादृशो यः स उदुम्बरमशक उदुम्बरकृमिश्चोच्यते, 60 इत्याहुः, अपरे त्वेवमाहुः-यथोदुम्बरस्थितो मशक एतावानेव संसार इत्यवबुध्यते, तथाऽयमपि यावज्जानाति तावदेव बहु मन्यत इति, **कूपकच्छप** इति समासः, कूपे कच्छप इवेति च विग्रहः, कूपकच्छपस्ततोऽन्यज्जलस्थानं सरः समुद्रं वाधिकं न पश्यति, तद्वद् यः पुरुषः क्वचिद् ग्रामे नगरे वा शास्त्रे वा 65 प्रतिबद्धस्ततोऽन्यं विशिष्टं न पश्यति स कूपकच्छप इत्युच्यते, एवं वक्ष्यमाणोदाहरणचतुष्केऽपि ज्ञेयम्, **कूपमण्डूक** इति समासः, कूपे मण्डूक इवेति च विग्रहः, **अवटकच्छप** इति समासः, अवटे कच्छप इवेति च विग्रहः, **अवटमण्डूक** इति समासः, अवटे मण्डूक इवेति च विग्रहः, **उदपानमण्डूक** 70 इति समासः, उदपाने कूपे मण्डूक इवेति च विग्रहः, उदकं पीयतेऽस्मिन्निति उदपानः, "नाम्न्युत्तरपदस्य च" [ ३. २. १०७. ] इत्युदकस्योदभावः । ननूदुम्बरमशकादिषु कुतः क्षेप इत्यत आह-**अल्पदृश्वैवमुच्यते**-इति यथोदुम्बरस्थितो मशक एतावानेव संसार इत्यवबुध्यते तथायमपि 75 यावज्जानाति तावदेव बहु मन्यते. इत्येषोऽर्थ उपमया द्योत्यते, दूत्युपमेयस्याल्पदर्शनप्रयुक्तः क्षेपो गम्यत इति भावः । न केवलमुपमयाऽल्पदर्शनेनैव क्षेपो गम्यते, अपि तु धृष्टत्वेनापीति तदुदाहरति-**नगरकाक** इति समासः,

नगरे काक इवेति च विग्रहः, **नगरवायसः** इति समासः, नगरे वायस इवेति च विग्रहः, **नगरश्वा** इति समासः, नगरे श्वा इवेति च विग्रहः, यथा नगरे काकादयो धर्षिता अपि न पलायन्ते, चिरपरिचयादहिंसकस्वभावावधारणात्, तथाऽयमपीति प्रतीत्योपमेयस्य धृष्टत्वं प्रतीयत इत्याह-**एतैः सदृशो धृष्ट उच्यते** इति-ततश्च निन्दावगतिरित्यर्थः, एतमेवार्थं सर्वोपसंहारेणाह-**उदुम्बरमशकादिषूपमया क्षेपो गम्यते** इति । वैचित्र्यार्थं पुनरुदाहरति-**गेहेमेहीति** समासः, गेहे एव मेहतीति च विग्रहः, मेहनं मूत्रणक्रिया, तस्याश्च गेहाद् बहिरेवौचित्यम्, यदाह-"दूरादावसथान्मूत्रं दूरात् पादावसेचनम् । दूराच्च दस्युभ्यो भाव्यं दूराच्च कुपिताद् गुरोः ॥" इति (४।१५१) मनुः, एवं चावश्यकशारीरिकक्रिया-कृतेऽपि यो बहिर्न गच्छति स किमन्यकार्यार्थं गमिष्यतीति प्रतीयते, **पिण्डीशूर** इति समासः, यद्यपि पिण्डीशब्दो भोज्यद्रव्य-विशेषे वर्तते तथापीह खादितव्योपलक्षणम्, पिण्ड्यां-पिण्या-कादिखादितव्ये एव शूरः, तदर्थमेव संरम्भं प्रकाशयति नान्यकार्यार्थमित्यर्थः, अयं भावः-पिण्ड्यामेव शूरः-कलह-तर्जनादिकं कृत्वा खादितव्यं खादति, अन्यत्र कार्यान्तरे निर्विक्रमो यः स पिण्डीशूर इत्युच्यते, प्रयोगद्वयप्रतिपाद्यं क्रमेणाह-**य आवश्यकार्थमपी**त्यादि, **भोजन एव चे**त्यादि, कथं चैतादृशार्थेन क्षेपावगतिरित्याह-**अत्रावधारणेन निरुत्साहतेति**-अत्र-उक्तप्रयोगद्वये, अवधारणेन-गेहे एव 'पिण्ड्यामेव' इत्येवंरूपेण विग्रहवाक्ये प्रदर्शितावधारणार्थस्य वृत्तावपि प्रतीत्याऽन्यत्र तदभावावगतिद्वारा, निरुत्साहता-विशेषस्य निरुत्साहत्वं प्रतीयते, **तया च** निरुत्साहतया च, **क्षेपो गम्यते** निन्दा प्रतीयत इत्यर्थः । पुनरुदाहरति-**पितरिशूर** इति समासः, **मातरिपुरुषः** इति समासः, मातरिपुरुषः पुमान् धवो भर्तेति मातरिपुरुष इत्युच्यते, पितरि शौर्यप्रदर्शनं मातरि पुरुषत्वप्रदर्शनं च लोकप्रतिषिद्धं, तदासेवमानस्य निन्दा भवत्येवेत्याह-**अत्र प्रतिषिद्धासेवनेन क्षेपो गम्यते** इति-अत्रावधारणोपमयोरभावेऽपि दर्शित-प्रकारेण क्षेपो गम्यत इत्यर्थः, अन्ये त्वेवमाहुः-पुरुषशब्द इह शूरवचनः, मातरि एव पुरुषस्तर्जयति मातरं, मातरं वर्जयि-त्वाऽन्यस्मात् सर्वस्माद् बिभेतीति मातरिपुरुष इति भीरुरुच्यत इति । पुनरुदाहरति-**गर्भेधीरः** इति समासः, गर्भे एव धीरः, गर्भान्निःसृत्य कातर इत्यर्थः, **गर्भेशूर** इति समासः, गर्भान्निःसृत्य विक्लव इत्यर्थः, **गर्भेसुहितः** इति समासः, गर्भे एव सुहितः-तृप्तः. **गर्भेतृप्त** इति समासः, गर्भे एव तृप्तः स्वमात्राहृतेनाहारेण, न ततो निःसृत्य कदाचिदुदरपूरं कृतवानिति गर्भे सुहितो गर्भे तृप्तो दरिद्र इत्यर्थः, **गर्भेदृप्त** इति समासः, गर्भे एव दृप्तो मातृश्चेष्टया, अथवा मातुरायासनेन, ततोऽन्यत्र निस्तेजा गर्भे दृप्तः, यद्यपि गर्भे धीर इत्यादिविग्रहेण गर्भे एव धीरो न साम्प्रतमिति प्रतीयमानमपि निन्दां व्यन-क्त्येव, तथापि **"योऽलीकाभिमानित्वादनुचितचेष्टः०"** इत्यादिवृत्तिग्रन्थेन स्वधीरत्वादि ख्यापयंस्तदुचिताचारहीन इति प्रतीत्याऽवधारणार्थाप्रतीतिरिति गम्यते, तदवस्थावधारणस्य कर्तुमशक्यत्वात्, तथा च पार्ष्णिकोऽवधारणार्थबोध इति ध्येयम्, 'गर्भेधीरः, गर्भेशूरः' इत्यादिषु यत्र कृदन्तमुत्तरपदं तत्र "तत्पुरुषे कृति" [ ३. २. २० ] इत्यनेन शेषेषु चात एव निपातनात् सप्तम्या अलुप् । पुनरुदाहरति-**कर्णेटिरिटिरिः कर्णेचुरुचुरुः, कर्णेटिरिटिरिाश, कर्णेचुरुचुरा,** इति चत्वारः समासाः, अत्र केचिदेवमाहुः-कर्णेटिरिटिरिः कर्णेचुरुचुरुरिति कर्णे किमपि जल्पित्वा जीवति न चास्य विक्रम इति क्षेपः, टिरिटिरि चुरुचुरु इत्यनुकरणशब्दौ तथा कारिणि व्यवह्रियेते, केचित् टिरिटिरा चुरुचुरा इत्याकारान्तौ स्त्रीलिङ्गावादीयेते" इति आचार्येण तूदाहरणचतुष्कप्रदर्शनेनोभयमपि मतं संगृहीतम्, तत्रानुकारणशब्दौ द्वावेव, इतरौ तु ताभ्यामेव निष्पाद्याविति चाग्रे वक्ष्यति, अधुनार्थविषये यो विशेषस्तमाह-**चापलेनानुचिता चेष्टोच्यते** इति-यश्चपलत्वेन कर्णे प्रागभिहितशब्दं करोति तस्येयं चेष्टा नोचिता, अनुचितचेष्टनाच्च क्षेपावगतिः; चतुर्णां मध्ये क्वनुकरणशब्दौ, कस्य कस्यानुकृतिरितरौ च ताभ्यां कथं निष्पाद्यावित्याकाङ्क्षायामाह-**टिरिटिरिरिति गत्यनुकरणमिति**-कस्यचित् प्राणिनः 'टिरिटिरि' इति शब्दज्ञेया गतिस्तस्या अनुकरणमित्यर्थः, **चुरुचुरु इति वाक्यानुकरणमिति**-कस्यचिच्चौरादेर्मिथः साभिज्ञानार्थे 'चुरुचुरु' इति वाक्यं प्रयुज्यते तस्यानुकरणमित्यर्थः, 'चुरुचुरु' स्थाने 'चुरुचुर' इत्यपि पाठो दृश्यते, उणादिगणे च "चुरण् स्तेये" इत्यतः "इदुदुपान्त्याभ्यां०" [ उणा० १७. ] इति सूत्रेण 'चुरुचुर' इत्यनुकरणशब्दः साधितः, न चानुकरणशब्दा-नामसाधुत्वात् कथं तत्प्रयोगसाधनमिति वाच्यम्, स्वयमा-चार्येणानुकरणसाधकं "पटच्छपदादयोऽनुकरणाः" [ उणा० ८. ८३. ] इति सूत्रं सूत्रयता वृत्तावुक्तम्-"सर्वे एते कस्यचिद् विशेषस्य श्रुतिप्रत्यासत्त्या अनुकरणशब्दाः, अनुकरणमपि साधु कर्तव्यं, न यत्किञ्चिद् यथा न क्षरमिति शिष्टाः स्मरन्ति" इति, **तत् करोतीति णिजन्तादप्रत्ययः** इति-तत्-टिरिटिरि चुरुचुरुं [ चुरुचुरं ] वा करोतीति "णिज् बहुलं नाम्नः कृगादिषु" [ ३. ४. ४२. ] इति णिचि "शंसिप्रत्ययात्" [ ५. ३. १०५. ] इति भावाकर्त्रोः स्त्रियामप्रत्यये-टिरिटिरा चुरुचुरा इति शब्दौ निष्पाद्यौ । नन्विह "णिवेत्यास०" [ ५.

३. १११.] इत्यतप्रत्ययेन भवितव्यं, यथा-कारणा, इति चेत्? अत्राह-**निपातनसामर्थ्याद्यानो न भवतीति**। पात्रेसमितेत्यादयः इत्यत्र योऽयमिति शब्दः स स्वरूपपरिग्रहार्थः, तेन 'पात्रेसमित' इत्येवंस्वरूपा एव समासात्मकाः शब्दाः प्रकृतसूत्रेण साधुत्वं प्रतिपद्यन्ते, न तु नामान्तरेण समस्यमानाः, तथा चैषां नामान्तरेण समासान्तरनिवृत्तिरावेदिता, एतदेवाह-**इतिशब्दः समासान्तरनिवृत्त्यर्थः** इति, एतदेव स्पष्टयति-**तेने**त्यादिना, **तेन** इति शब्दस्य समासान्तरनिवृत्तिप्रयोजनकत्वेन, **परमाः पात्रेसमिताः** परमाश्च ते पात्रेसमिताश्चेति वाक्ये "सन्महत्परम०" [३. १. १०७.] इति सूत्रेण समासो न भवतीत्यर्थः, **पात्रेसमितानां पुत्रः** इति-अत्र "षष्ठ्ययत्नाच्छेषे" [३. १. ७६.] इति सूत्रेण समासो न भवतीत्यर्थः। पात्रेसमितादिषु क्वचित् सप्तमी श्रूयते, तत्र कृदन्त उत्तरपदे "तत्पुरुषे कृति" [३. २. २०.] इत्यलुप् भवति, अन्यत्र कथमलुप् "ऐकार्थ्ये" [३. २. ८.] इति नित्यं लुब्विधानादिति चेत्? अत्राह-**निपातनात् सप्तम्या** अलुबिति-सप्तमीसहितानामेव गणे पाठसामर्थ्यादिति भावः। "पात्रेसमितेत्यादिः" इत्येकवचनेनापि निर्वाहे बहुवचनं किमर्थमिति चेत्? अत्राह-**बहुवचनमाकृतिगणार्थमिति**-यदि गणे पठ्यमानशब्दबहुत्वार्थं बहुवचनं स्यात् तदा तत् पाठादेव सिद्धमित्यनर्थकं पठ्यमानेभ्योऽप्यन्ये सन्ति बहव इत्येवमर्थमित्याकृतिगणत्वं बहुवचनम्। **तेन** आकृतिगणत्वेन, व्रणकृमिप्रभृतीनां प्रकृतसूत्रेण सिद्धिर्भवतीत्यर्थः। **व्रणकृमिरिति** समासः, व्रणे कृमिरिवेति च विग्रहः, अल्पस्थेत्यर्थः, **गृहसर्प** इति समासः, गृहे सर्प इवेति च विग्रहः, सर्पवद् धृष्ट इत्यर्थः, **गृहकलविङ्कः** इति समासः, गृहे कलविङ्क इव चटक इवेति विग्रहः, चटकवद् धृष्ट इत्यर्थः, **आखनिकबक** इति समासः, "खनूग् अवदारणे" इत्यतः "खनो ड-डरेक०" [५. ३. ३७.] इति इके 'आखनिक' इति, आङः "पाणि-पनि०" [उणा० ३९.] इति बहुवचनादिके वा 'आखनिक' इति, आखनिके-चलस्रोतसि खाते बक इवेति विग्रहः, आखनिके बको यत् किञ्चिदात्मीये आखनिके लभते तद् भक्षयति नान्यत्र गच्छति तद्वद् य आत्मीये गृहे यत् किञ्चिदस्ति तद् भक्षयति नान्यत्र गच्छति स निर्व्यायाम उच्यते-आखनिकबक इति केचित्; अपर आह-आखनिके बको यो य आगच्छति मत्स्यः स्रोतसा तं तं भक्षयित्वा निभृतस्तिष्ठति तद्वद् योऽयमुत्पन्नमुत्पन्नं भक्षयित्वा निभृतस्तिष्ठति स आखनिकबक इत्युच्यत इति, 'नगरकाकः, नगरवायसः' इत्यादयः काकादित्वात् सिद्धा अपि समासान्तरनिषेधार्थमिह पठिता ज्ञेयाः॥ ३. १. ९१.॥

## क्तेन । ३ । १ । ९२ ॥

**त० प्र०**—सप्तम्यन्तं नाम क्तान्तेन नाम्ना सह समस्यते, क्षेपे गम्यमाने; तत्पुरुषश्च समासो भवति। भस्मनिहुतम्, प्रवाहेमूत्रितम्, उदकेविशीर्णम्, निष्फलं कृतमेवमुच्यते; अवतप्तेनकुलस्थितम्, कार्येष्वनवस्थितत्वमुच्यते; सर्वत्रोपमानेन क्षेपो गम्यते। नित्यसमासाश्चैते पात्रेसमितादयश्च॥ ९२॥

**श० म० न्यासानुसन्धानम्-क्तेन।** **क्तेने**ति-क्तप्रत्ययः, प्रत्ययग्रहणे च तदन्तविज्ञानम्, तेन च नाम्नेति विशिष्यते, अत आह-**क्तान्तेन नाम्ना सहे**ति। **भस्मनिहुतमि**ति समासः, "हुंक् दानादनयोः" दानमत्र हविःप्रक्षेपः अतः क्ते 'हुत' इति, भस्मनि हुतमिवेत्यर्थावगतिः, वृत्त्या च यथा भस्मनि हुतं न हवनफलाय कल्पते तथोपमेयकार्यं निष्फलमित्यवगतिरिति कार्यस्य निन्दितत्वं स्पष्टम्। **प्रवाहेमूत्रितमि**ति समासः, "मूत्रण् प्रस्रवणे" अतो भावे क्ते 'मूत्रितम्' इति, प्रवाहे मूत्रितमिवेति विग्रहः, प्रवाहे मूत्रितमित्यस्य यथा प्रवाहे मूत्रं न पृथग् लक्ष्यते न वा स्वस्थिरतां धारयति तथैव कार्यमिदमित्याशयेन फलतः कार्यस्य वैफल्यमेवायाति। **उदकेविशीर्णमि**ति समासः, विपूर्वाद् "शॄश् हिंसायाम्" इत्यतः क्ते "ऋवर्णश्र्यूर्णुगः कितः" [४. ४. ५७.] इतीऽभावे "ऋतां०" [४. ४. ११६.] इतीरादेशे दीर्घत्वे "ऋल्वादेः०" [४. २. ६८.] इति तस्य नत्वे णत्वे च 'विशीर्ण' इति उदके विशीर्णमिवेति विग्रहः, जले विशीर्णस्यानुसन्धानं यथा न सम्भवति तथैवेदं कार्यमपि कृतं न वेति नानुसन्धीयते, फलमेव हि कार्यसत्त्वानुसन्धायकं, तथा च निष्फलमिदमिति सर्वत्रापि प्रतीतिरित्याह-**निष्फलं कृतमेवमुच्यते** इति। **अवतप्तेनकुलस्थितमि**ति समासः, अवतप्ते नकुलस्थितमिवेति विग्रहः, स्थाधातोर्भावे क्लीबे क्ते 'स्थितम्' इति, नकुलस्य स्थितौ कर्तृत्वम्, नकुलेन स्थितमिति "कारकं कृता" [३. १. ६८.] इति समासे नकुलस्थितमिति, "कृत् सगतिकारकस्यापि" [७. ४. ११७.] इति परिभाषया नकुलस्थितशब्दोऽपि क्तान्तः, तेन सह 'अवतप्ते' इति सप्तम्यन्तस्य प्रकृतसूत्रेण समासे कृते "तत्पुरुषे कृति" [३. २. २०.] इति सप्तम्या अलुप् हे चैत्र! अवतप्तेनकुलस्थितं ते एतत् अवस्थानम्, यथा अवतप्ते प्रदेशे नकुला न चिरं तिष्ठन्ति तथा कार्याण्युपक्रम्य तान्यनिवर्त्य इतस्ततो प्रधावनमित्यर्थः, अव्यवस्थितोऽसीति निन्दा ज्ञेया, एतदेवाह-**कार्येष्वनवस्थितत्वमुच्यते** इति क्षेपावगतिप्रकारमाह-**सर्वत्रोपमानेन क्षेपो गम्यते** इति-भस्मनिहुतमित्यादिषु भस्मनि

हुतमित्येवाद्युपमानेन निन्दा प्रतीयत इत्यर्थः, एषु क्रान्तसमुदायेनोक्तायाः क्रियायाः क्रियान्तरेण साम्यस्य विवक्षितत्वप्रतीत्या समुदायस्यैवोपमानत्वं, 'निष्फलं कृतम्, कार्येष्वनवस्थितत्वम्' इति कथनेन वृत्तिकारस्यापि तथैवाशय इत्यवगमात्, तथा चाह-**सर्वत्रोपमानेन क्षेपो गम्यते** इति, उपमेयस्यैवोपमानेन स्तुतिर्वा निन्दा वा प्रत्याय्यते, तथा च समुदायस्यैवोपमानत्वमास्थेयमित्यपि केषाञ्चिन्मतमस्ति । **नित्यसमासाश्चैते पात्रेसमितादयश्चे**ति-नित्यग्रहणभावाद् विकल्पे प्राप्तेऽपि वाक्येन-पृथग्व्यत्यासेनोपादीयमानपदाभ्यां-निन्दानवगमान्नित्यसमासत्वं ज्ञेयम् इति 'अविग्रहोऽस्वपदविग्रहो वा नित्यसमासः' इति नित्यसमासलक्षणात् प्रकृते चास्वपदविग्रहत्वान्नित्यसमासत्वं ज्ञेयमिति ॥ ३. १. ९२. ॥

## तत्राहोरात्रांशम् । ३ । १ । ९३ ॥

**त० प्र०**—पृथग्योगात् क्षेप इति निवृत्तम्, तत्रेत्येतत् सप्तम्यन्तं नामाहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन नाम्ना सह समस्यन्ते, तत्पुरुषश्च समासो भवति । तत्रकृतम्, तत्रभुक्तम्; पूर्वाह्णे कृतं-पूर्वाह्णकृतम्, एवम्-अपराह्णकृतम्, पूर्वरात्रकृतम्, अपररात्रकृतम्, तद्धिताद्युत्पत्तिः समासफलं-तात्रकृतिः । तत्राहोरात्रांशमिति किम् ? घटे कृतम् । कथम् 'अन्यजन्मकृतं कर्म' इति ? "कारकं कृता" [ ३. १. ६८. ] इति तृतीयासमासोऽयम् । अहोरात्रग्रहणं किम् ? शुक्लपक्षे कृतम्, पक्षो मासांशः । अंशग्रहणं किम् ? अहनि भुक्तम् । "एतत्तु ते दिवा वृत्तं, रात्रौ वृत्तं तु द्रक्ष्यसि" । कथं रात्रिवृत्तं, संध्यागर्जितमिति ? बहुलाधिकारात् । केनेत्येव-तत्र भोक्ता, पूर्वाह्णे भोक्ता ॥ ९३ ॥

**श० म० न्यासानुसन्धानम्-तत्राहो०** । क्षेपप्रकरणादिहापि तस्य सम्बन्ध इत्याशङ्कायामाह-**पृथग् योगात् क्षेप इति निवृत्तमिति**-पूर्वत्रैव "तत्राहोरात्रांशं च" इति कर्तव्ये पृथक् सूत्रारम्भेण प्रकरणविच्छेदो गम्यते इति भावः । अहश्च रात्रिश्च अहोरात्रौ, "ऋक्साम०" [ ७. ३. ९७. ] इत्यदन्तद्वन्द्वनिपातनम्, "पुष्यः सिचय-निकाय्य-रात्र-वृत्राः" [ लिङ्गानुशासने-१२ ] इति पुंलिङ्गत्वं च, अहोरात्रयोरंशः-अवयव एकादेश इति-अहोरात्रांशः, अंशशब्दः प्रत्येकमभिसम्बध्यते द्वन्द्वान्ते श्रूयमाणत्वात्, तत्रश्चाहोरात्रांशश्चानयोः समाहारः-**तत्राहोरात्रांशम्**, चतुष्पदद्वन्द्वे 'अहोरात्र' इति न स्यात्, त्रिपदद्वन्द्वे 'अंश' इत्यस्य पूर्वनिपातः स्यात्, तथा च 'तत्र' इति 'अहरवयव' इति 'रात्र्यवयव' इति त्रितयं लभ्यते, एतच्च सप्तमीत्यस्य विशेषणमत आह-**तत्रेत्येतत् सप्तम्यन्तमि**त्यादि, तत्रेत्यस्य सप्तम्यन्तत्वं सप्तम्यर्थवृत्तित्वात्, यद्यपि तत्रभवानित्यादावन्यविभक्त्यर्थमपि 'तत्र' इति प्रकृते प्रकरणात् सप्तम्यर्थकं ज्ञेयम्, असम्भवादत्र सप्तम्यन्तमिति न सम्बध्यते इति केचित्, एवं 'तत्र' इति स्वरूपमस्यात्र ग्रहणं, न तु सामान्येन सप्तम्यर्थबोधकस्य ।

उदाहरति-**तत्रकृतम्, तत्रभुक्तम्,** समासाविमौ, वर्णानुपूर्व्यां विशेषाभावाद् विग्रहो न दर्शितः, कृधातोः क्ते-कृतम्, भुज्धातोः क्ते भुक्तमिति, पुनर्विगृह्योदाहरति-**पूर्वाह्णे कृतमि**ति विग्रहः, **पूर्वाह्णकृत**मिति च समासः, अह्नः पूर्वमिति "पूर्वापरा०" [ ३. १. ५२. ] इति समासः, सर्वांश-संख्याव्ययात्" इति समासान्तोऽट् अह्नश्चाह्लादेशः, "अतोऽह्नस्य" [ २. ३. ७३. ] इति णत्वं च, अयमहरवयवः 'कृत' इति क्तान्तं च, अतः समासः अतिदिशति-**एवमि**ति, **अपराह्णकृतमि**ति समासः, अपराह्णे कृतमिति च विग्रहः, अपरमह्नः-अपराह्णः, प्रक्रिया प्राग्वत्, उभयत्र लिङ्गानुशासनतः पुंस्त्वमवसेयम्, **पूर्वरात्रकृतम्, अपररात्रकृतम्,** समासाविमौ, पूर्वरात्रे कृतमिति अपररात्रे कृतमिति च विग्रहः, रात्रेः पूर्वं रात्रेरपरमिति "पूर्वापरा०" [ ३. १. ५२. ] इति समासे "संख्यातैक०" [ ७. ३. ११९. ] इति समासान्तेऽतिलिङ्गानुशासनतः पुंस्त्वे च 'पूर्वरात्रः, अपररात्रः' इति, अयं रात्र्यवयवः कृतेति क्तान्तं चेति भवति समासः । ननु 'तत्र कृतम्, तत्र भुक्तम्' इत्यत्र समासेऽसमासे वा रूपे विशेषाभावात् समासविधानं विफलमिति चेत् ? अत्राह-**तद्धिताद्युत्पत्तिः समासफलमि**ति-समासे सति ह्यैकपद्यात् समुदायादेव तद्धितोत्पत्तिरिति तद्धितप्रत्ययनिमित्तकं वृद्ध्यादिरूपं कार्यं समुदायस्यैव भवतीत्यर्थः, समासफलस्थलं दर्शयति-**तात्रकृति**रिति-तत्र कृतस्यापत्यमिति "अत इञ्" [ ६. १. ३१. ] इत्यनेन समुदायादेव इञ् समुदायस्यैवादेः स्वरस्य वृद्धिश्च भवतीति भावः ।

**तत्राहोरात्रांशमिति किमि**ति-इदं सूत्रमेव व्यर्थमिति भावः, तथा सति क्तान्तेन सप्तम्यन्तस्य क्षेप एव समासः स्यान्नान्यत्रेति चेत् ? "काकाद्यैः क्षेपे" [ ३. १. ९० ] इत्यतः पूर्वमेव "क्तेन" इति योगः क्रियताम्, पृथग्योगाच्च पूजायामित्यस्य निवृत्तिः स्यात्, क्तान्तेन क्षेपे समासविधानार्थं च "काकाद्यैश्च क्षेपे" इति सूत्र्यतामिति प्रष्टुराशयः; उत्तरयति-**घटेकृतमिति**-क्षेपाविवक्षायां तत्राहोरात्रांशभिन्नस्य क्तान्तेन समासोऽनिष्टः, स चैतत्सूत्राभावे सामान्येन क्तान्तेन सप्तम्यन्तस्य समासविधाने च दुर्वाह इति भावः । ननु 'अन्यजन्मनि कृतमन्यजन्मकृतम्' इत्यन्यत्रापि क्तान्तेन सप्तम्यन्तस्य समासो

दृश्यते, यथा च "अन्यजन्मकृतं कर्म, तद् दैवमिति कथ्यते" इत्यादौ, स कथं सङ्गच्छत इति शङ्कते-**कथम् 'अन्यजन्मकृतं कर्म'** इति, उत्तरयति-**"कारकं कृता" इति तृतीयासमासोऽयमिति**-अन्यजन्मनि कृतमन्यजन्मकृतमिति सप्तमीतत्पुरुषो न, अपि तु अन्यजन्मना कृतमन्यजन्मकृतमिति तृतीयासमासोऽयमिति भावः। पुनः पृच्छति-**अहोरात्रग्रहणं किमिति**-"तत्रांशम्" इत्येव सूत्र्यतामिति भावः, कस्याप्यंशवाचिनः क्तान्तेन समासे मासाद्यंशस्यापि समासः स्यादित्याह-**शुक्लपक्षे कृतमिति,** तस्यांशत्वं कथमित्याह-**पक्षो मासांश** इति। पुनः पृच्छति-**अंशग्रहणं किमिति**-"तत्राहोरात्रम्" इत्येव क्रियताम्, स्वावयवेऽपि स्वशब्दप्रवृत्तेर्दर्शनात् पूर्वाह्णकृतमित्यादेः सिद्धिः स्यादेवेति भावः, अव्याप्त्यभावेऽप्यतिव्याप्तिर्दोषः स्यादित्याह-**अहनि भुक्तमिति**-अत्र समासोऽनिष्टः, स चांशग्रहणाभावे स्यादेवेति भावः। प्रत्युदाहरणान्तरमप्याह-**एतत् तु ते दिवा वृत्तं, रात्रौ वृत्तं तु द्रक्ष्यसि।"** इति-'दिवा वृत्तम्' इत्यत्र विशेषोऽलक्ष्य इति 'रात्रौ वृत्तम्' इत्यपि प्रत्युदाजहार, अस्य वाक्यस्य प्रकरणं चेत्थं प्रतीयते-कश्चिद् कञ्चिद् दिवापि कष्टेन युक्तं भीषयन्नाह-एतत् तु ते दिवा वृत्तमिति, दिने रक्षायाः सौलभ्येऽपि यदि प्रकृतं वृत्तमभूत् तर्हि रात्रौ सर्वजनसंचारविहीने समये कीदृशं भविष्यतीत्यनुमेयं भवतेति भावः। नन्वीदृशस्थले समासोऽपि दृश्यत एवेत्याशङ्कते-**कथं रात्रिवृत्तं, सन्ध्यागर्जितमिति**-सन्ति चेदृशा बहुशः शिष्टप्रयोगाः, तत्र रात्रिवृत्तमित्यत्रांशत्वाभावस्तु स्पष्ट एव, सन्ध्यागर्जितमित्यत्र च सन्ध्याशब्दो न दिनावयववाचको न वा रात्र्यवयववाचकः, उभयोः सन्धिसमयत्वादिति तत्रापि न समासप्राप्तिरिति भावः, उत्तरयति-**बहुलाधिकारादिति**-समासोऽनुचितोऽपि बहुलकेन कथञ्चित् समाधेय इति भावः। **क्तेनेत्येवेति**-पृथग्योगात् क्षेप इत्यस्य निवृत्तावपि क्तेनेत्यनुवर्तत एवेति भावः, तथा चान्येन कृत्प्रत्ययान्तेन न समासः, तदाह-**तत्र भोक्ते**ति॥३. १. ९३.॥

## नाम्नि । ३ । १ । ९४ ॥

**त० प्र०—सप्तम्यन्तं नाम नाम्ना समस्यते, नाम्नि-संज्ञाविषये; समुदायश्चेत् संज्ञा भवति, स च समासस्तत्पुरुषसंज्ञो भवति । अरण्येतिलकाः, अरण्येमाषकाः, वनेकशेरुकाः, वनेवल्वजाः, कूपेपिशाचिकाः, वनेहरिद्रुकाः, पूर्वाह्णेस्फोटकाः, अपराह्णेस्फोटकाः, तथा-स्तूपेशाणः, मुकुटेकार्षापणः, हलेद्विपदिका, सप्तम्या अलुप्, नित्यसमासोऽयम्; नहि वाक्येन संज्ञा गम्यते ॥ ९४ ॥**

**श० म० न्यासानुसन्धानम्-नाम्नि । नाम्नी**ति व्याचष्टे-**नाम्नि संज्ञाविषये** इति-नाम संज्ञा, वैषयिकेऽधिकरणे च सप्तमीत्यर्थः, अनेन च पूर्वोत्तरपदात्मकः समुदायो विशेष्यत इत्याह-**समुदायश्चेत् संज्ञा भवतीति**-न पूर्वपदं नाप्युत्तरपदं, किन्तु तत्समुदायः संज्ञा कस्यचिन्नाम यदि भवेत् तदायं समास इत्यर्थः। उदाहरति-**अरण्येतिलकाः** इति समासोऽयम्, तिलः प्रकार एषामिति तिलकाः वृक्षविशेषाः, **अरण्येमाषकाः** इति समासोऽयम्, माषः प्रकार एषामिति माषकाः वृक्षविशेषाः, "कोऽण्वादेः" [७. २. ७६.] इत्युभयत्र कः, **वनेकशेरुकाः, वनेवल्वजाः** इति समासौ, कशेरुक-वल्वजशब्दौ वृक्षविशेषे तृणे च, **कूपेपिशाचिकाः** इति समासः, पिशाचिका भट्टारिका, वने हरिद्रकाः इति समासः, हरिद्रुर्वृक्षविशेषः, **पूर्वाह्णेस्फोटकाः, अपराह्णेस्फोटकाः** इति समासौ, स्फोटको गण्डो व्रणविशेषः; प्रसिद्धतिलादिभिन्नास्तत्सदृशा अरणतिलकादय एभिः शब्दैरभिधीयन्ते, एषु "अद्-व्यञ्जनात् सप्तम्या बहुलम्" [३. २. १८.] इति सप्तम्या अलुब् भवति।

एवं प्रकारार्थकतिलकादिशब्दघटितान् संज्ञारूपान् बहुवचने प्रसिद्धान् समासानुदाहृत्यार्थैकवचनान्तान् संज्ञारूपान् समासानुदाहर्तुं समुच्चिनोति-**तथे**ति, उदाहरति-**स्तूपेशाणः** इति समासः, स्तूपो राशिः, शाणः कर्षचतुर्भागः, स्तूपे स्तूपे शाणो दातव्यः, **मुकुटेकार्षापणः** इति समासः, मुकुटे मुकुटे कार्षापणो दातव्यः, **हलेद्विपदिका** इति समासः, हले हले द्वौ द्वौ पादौ ददातीति "संख्यादेः पादादिभ्य०" [७. २. २५२.] इत्यकल्, "यस्वरे पादः" [२. १. १०२] इति पदादेशो ल्त्त्वात् स्त्रीत्वं च, एते त्रयोऽपि समासाः प्राचां देशे कारस्य या संज्ञा तत्र वर्तन्ते, कारश्च राजलभ्यो रक्षानिर्वेशः, अत्र "प्राक्कारस्य व्यञ्जने" [३. २. १९.] इति सप्तम्या अलुबित्याह-**सप्तम्या अलुबिति**। "नित्यं प्रतिनाप्ये" [३. १. ३७.] इत्यत्र नित्यग्रहणादिह कश्चिद् विकल्पं मन्येतेत्यत आह-**नित्यसमासोऽयमिति**-यद्यपीह प्रकरणे विकल्पो विज्ञायते, तथापि नित्य एवायं समासः, तत्र हेतुमाह-**नहि वाक्येन संज्ञा गम्यते** इति-"द्वितीया खट्वा क्षेपे" [३. १. ५९.] इत्यत्रेव वाक्येन समासार्थस्य संज्ञाया अनवगमान्नित्य एवायं समासः, वाक्येन क्रियाकारकादिसम्बन्धसहकृता प्रतीतिर्भवति, न तु संज्ञारूपैकार्थोपस्थितिः; अरण्येतिलकादयो धारण्यादिषु भावानां तिलकादीनां संज्ञाः, रूढिशब्दा अपि भवन्त एते योगरूढयो नावयवार्थपरित्यागेन वर्तन्ते, यथा कृष्णसर्पो लोहितशालिरिति पूर्वपदार्थस्योत्तरपदार्थे प्रत्याधारभावोपपत्तेः सप्तमी, रूढित्वं च यत्र यत्रावय-

वार्थयोगस्तत्र तत्रावृत्तिर्नियतविषय एव समुदाय इति विज्ञायते ॥ ३. १. ९४ ॥

## कृत्येनावश्यके । ३ । १ । ९५ ॥

**त० प्र०—सप्तम्यन्तं नाम "य एचातः" [ ५. १. २८. ] इति कृत्यप्रत्ययान्तेन नाम्ना समस्यते, आवश्यके—अवश्यंभावे गम्यमाने; तत्पुरुषश्च समासो भवति । मासेऽवश्यं देयं-मासदेयम्, एवं संवत्सरदेयम्, पूर्वाह्णेगेयम्, प्रातरध्येयम्, ग्रामदेयम्, नगरदेयम् । कृदिति किम् ? मासे पित्र्यम् । य इति किम् ? मासे स्तुत्यः, मासे पाक्यम्; मासे दातव्या भिक्षा । संवत्सरकर्तव्यमिति तु बहुलाधिकारात् । आवश्यक इति किम् ? मासे देया भिक्षा ॥ ९५ ॥**

श० म० **न्यासानुसन्धानम्-कृत्येना०** । कृत्-कृत्संज्ञकः, यः-यप्रत्यय इति कृद्यः, तेन **कृद्येन** प्रत्ययाग्रहणे च तदन्तविज्ञानम्, अनेन च 'नाम्ना' इति विशेष्यते, कृद्यश्चानेकधा भवति, तथा हि-केवलो यः, 'घ्यण्' इत्यनुबन्धरहितो यः, तव्यानीययोरेकदेशभूतो यश्च, तत्र * निरनुबन्धग्रहणे न सानुबन्धस्य * इति घ्याणो न ग्रहणम्, * अर्थवद्ग्रहणे नानर्थकस्य * इत्येकदेशभूतस्यापि यस्य न ग्रहणम्, अवशिष्टः केवलो यप्रत्ययोऽत्र गृह्यते, यः "य एचातः" [ ५. १. २८. ] इति सूत्रेण विधीयते, 'अवश्यम्' इत्यव्ययं निश्चयार्थे, तस्य भाव इति "चोरादेः" [ ७. १. ७३. ] इति सूत्रेणाकञ्प्रत्यये मकारलोपे आद्यस्वरस्य वृद्धौ च-'आवश्यक' इति तथा च यः सूत्रार्थो निष्पन्नस्तमाह-**सप्तम्यन्तं नामे**त्यादिना । अथोदाहरणावसर इति विगृह्योदाहरति **मासेऽवश्यं देयमिति** विग्रहः, **मासे देयमिति** च समासः, अवश्यम्भावोऽत्र समासार्थो न तु वाक्यार्थः, नहि मासे देयमिति वाक्ये प्रयुक्तेऽवश्यमिति गम्यते यथा समासे, वाक्यस्यान्यत्रापि भावात्, तस्मादिह प्रकरणे विकल्पेऽपि नित्यसमास एवायम्, मासेऽवश्यमित्यवश्यं ग्रहणेन दानस्य समासगम्यावश्यकं दर्शयति, समासेनैव तद् गम्यत इति न समासेऽवश्यं शब्दप्रयोगः, दाधातोः "य एचातः" [ ५. १. २८. ] इति ये प्रत्यये आकारस्य एकारे च 'देय' इति, "तत्पुरुषे कृति" [ ३. २. २०. ] इति सप्तम्या अलुप् । अतिदिशति-**एवमिति, संवत्सरदेयमिति** समासः, संवत्सरेऽवश्यं देयमित्यस्वपदविग्रहः, अत्र संवत्सरे देयमिति पाठे प्राग्वत् सप्तम्या अलुप् संवत्सरदेयमिति पाठप्रामाण्ये तु अलुप्प्रकरणे बहुलाधिकारात् अलुब् न भवति, अर्थाल्लोपो भवत्येव, अत्र केन सप्तमीति विचारणायामनेके प्रकारा दृश्यन्ते, तथाहि-"यद्भावो भावलक्षणम्" [ २. २. १६०. ] इति सप्तमी, मासे गते देयमिति हि मासादिभावेन देयभावो लक्ष्यते, "क्रियामध्येऽध्वकाले पञ्चमी च" [ २. २. ११०. ] इति वा सप्तमी, दानग्रहणेऽधिकरणकालयोर्मध्ये हि मासादि, औपश्लेषिकं चेदमधिकरणम्, मासादौ स दानदिवसोऽनन्तरोभवंस्तदुपश्लिष्टो भवति; अथवोपचारान्मासाद्येकदेशे मास संवत्सरशब्दौ ज्ञेयौ, तथा चाधारे एव "सप्तम्यधिकरणे" [ २. २. ९५. ] इति सप्तमी, अन्यथोपचारं विना समग्रेऽपि मासे देयमिति यदा विवक्ष्यते तदा "कालाध्वनोर्व्याप्तौ" [ २. २. ४२. ] इति द्वितीया स्यात्, न तु सप्तमी । **पूर्वाह्णेगेयमिति** समासः, पूर्वाह्णेऽवश्यं गेयमिति च विग्रहः, "गैं शब्दे" इत्यतः, प्राग्वद् ये ऐकारस्याकारे तस्य च एकारे 'गेय' इति **प्रातरध्येयमिति** समासः, प्रातरवश्यमध्येयमिति च विग्रहः, अधिपूर्वात् "इङ्क् अध्ययने" इत्यतः "य एचातः" [ ५. १. २८. ] इति ये "नामिनो०" [ ४. ३. १. ] इति गुणे च 'अध्येय' इति, ननु च 'प्रातर्' इत्यव्ययात् "नाम्नः०" [ २. २. ३१. ] इति प्रथमायां कथं तस्य सप्तम्यन्ततयोच्यमानः समास इति चेत् ? उच्यते—सप्तम्यास्तदर्थोपलक्षणाददोषः **ग्रामदेयम्, नगरदेयम्,** इति समासौ, ग्रामेऽवश्यं देयं नगरेऽवश्यं देयमिति च विग्रहवाक्ये, "तत्पुरुषे कृति" [ ३. २. २०. ] इत्यत्र बहुलाधिकारात् सप्तम्या अलुब् न भवति, किन्तु "ऐकार्थ्ये" [ ३. २. ८. ] इति लुबेव भवतीत्यर्थः ।

पदकृत्यं पृच्छति-**कृदिति किमिति**-उत्तरयति-**मासे पित्र्यमिति,** पत्रे हितमिति "तस्मै हिते" [ ७. १. ३५. ] इति इति ये "ऋतोरस्तद्धिते" [ १. २. २६. ] इति ऋकारस्य रकारे 'पित्र्य' इति, अत्र तद्धितो यप्रत्ययो न तु कृत्, कृद्ग्रहणाभावेऽत्रापि समासः प्रसज्येत, स च नेष्ट इति तद्वारणाय कृद्ग्रहणं कर्तव्यमित्यर्थः, पित्रुद्देश्यककार्यमप्यावश्यकमेवेति नावश्यकाभावः शङ्कितुमुचित इति बोध्यम् । पुनः पृच्छति-**य इति किमिति**-"कृतावश्यके" इत्येतावन्मात्रमेवोच्यतां, यग्रहणं न कर्तव्यं, तावतापि लक्ष्याणां सिद्धिर्भविष्यतीति शङ्काशयः, प्रत्युदाहरणमुखेनोत्तरयति-**मासे स्तुत्यः** इति- "ष्टुंगक् स्तुतौ" अतः "ह-वृग्-स्तु०" [ ५. १. ४० ] इति क्यपि तागमे च 'स्तुत्य' इति, **मासे पाक्यमिति**- "डुपचींष् पाके" इत्यतः "ऋवर्णव्यञ्जनाद् घ्यण्" [ ५. १. १७. ] इति घ्यणि "क्तेऽनिटश्चजोः कगौ घिति" [ ४. १. १११. ] इति चकारस्य कत्वे 'पाक्य' इति, अत एव पाच्यमिति पाठो न साधुः, यद्यपि क्यप्-घ्यणोर्य एवावशिष्यते तथापि *निरनुबन्धग्रहणे न सानुबन्धस्य इति तद्वारणं सुलभम्, "कृतावश्यके" इत्येतावन्मात्रोक्तौ तु तद्विवक्षायामिहापि समासः प्रसज्येत, स च नेष्ट इति तद्वारणाय यग्रहणमिति

भावः, एवं-**मासे दातव्या भिक्षेति**-अत्र दाधातोः "तव्यानीयौ" [ ५. १. २७. ] इति तव्यप्रत्यये 'दातव्याः इति, अत्र यस्य निरर्थकत्वेन *अर्थवद्ग्रहणे नानर्थकस्य* इति न्यायात् न ग्रहणप्रसङ्गः, सूत्रे यग्रहणाभावेऽत्रापि समासः प्रसज्येतेति भावः। एषु विभक्त्यलुपा स्वरूपतो भेदाभावेऽप्यै-कपदस्य पदभेदस्य च विशेषस्य यथास्थिति रक्षार्थे तत्तत्पद-कृत्यमिति बोध्यम्, संवत्सरेऽवश्यं कर्तव्यमिति संवत्सरकर्तव्य-मिति क्वचिदावश्यकेऽन्यप्रत्ययान्तेनापि समासो दृश्यते, तस्य का गतिरित्याकाङ्क्षायामाह-**संवत्सरकर्तव्यमिति तु बहुलाधिकारादिति**। पुनः पृच्छति-**आवश्यक इति किमिति**, उत्तरयति-**मासे देया भिक्षेति**-भिक्षेति ग्रहणे-नावश्यंभावाभावमाह, नहि भिक्षावश्यं दातव्या भवति, यथा ऋणादीतीह समासो न भवति ॥ ३. १. ९५. ॥

## विशेषणं विशेष्येणैकार्थं कर्मधारयश्च । ३ । १ । ९६ ॥

त० प्र०—विशिष्यतेऽनेकप्रकारं वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यतेऽनेनेति विशेषणं, व्यवच्छेद्यं विशेष्यम्; भिन्न-प्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिरैकार्थ्यं सामाना-धिकरण्यमिति यावत्, तद्वदेकार्थम्। विशेषणवाचि नामैकार्थं विशेष्यवाचिना नाम्ना सह समस्यते, स च समासस्तत्पुरुष-संज्ञः कर्मधारयसंज्ञश्च भवति।

नीलं च तदुत्पलं च-नीलोत्पलम्, कृष्णाश्च-ते तिलाश्च कृष्णतिलाः, पुमांश्चासौ गौश्च पुंगवः, मोषिका चासौ गौश्च मोषिकगवी। विशेषण-विशेष्ययोः संबन्धिशब्दत्वादेकतरो-पादानेनैव द्वये लब्धे द्वयोरुपादानं परस्परमुभयोर्व्यवच्छेद्यव्य-वच्छेदकत्वे समासो यथा स्यादित्येवमर्थम्, तेनेह न भवति,-तक्षकः सर्पः, लोहितस्तक्षक इति, न ह्यसर्पोऽन्यवर्णो वा तक्षकोऽस्ति। कथं तर्हि 'आम्रवृक्षः, शिंशपावृक्षः, अस्तपर्वतः इत्यादौ समासः ? नह्यवृक्ष आम्रः शिंशपा वा भवति; नाम्रा-म्रादयः शब्दा वृक्षविशेषाणामेव वाचकाः, किं तर्हि ? फलादे-रपि तत्सहचरितमाधुर्यस्थैर्यादेर्गुणविशेषस्य च, एवं च तक्ष-काहिः शेषाः, हरित्यादयोऽपि भवन्ति। यदिवा, आम्राणां फलानां संबन्धी वृक्षः-आम्रवृक्षः, एवं-शिंशपावृक्षः; अस्तस्य पर्वतः-अस्तपर्वतः, एवम् उदयपर्वत इत्यादयः षष्ठीसमासा द्रष्टव्याः। यद्येवमुभयोर्विशेषणत्वे उभयोश्च विशेष्यत्वे सति विशेष्यस्यापि विशेषणत्वमित्युत्पलशब्दस्यापि नीलादिना समासप्रसङ्गः, तथा च "प्रथमोक्तं प्राक्" [ ३. १. १४८ ]. इति वचनादुत्पलनीलमित्यपि स्यात्, नैवम्-अविशेषेऽपि विशेषणविशेष्यभावस्य *प्रधानानुयाय्यप्रधानम्* इति न्यायादप्रधानस्यैव प्रधानेन समासः, प्राधान्यं च द्रव्यशब्दाना-मेव, द्रव्यस्यैव साक्षात् क्रियाभिसंबन्धात्; यद्यपि चोत्पला-दिशब्दा जातिशब्दास्तथाप्युत्पत्तेः प्रभृत्या विनाशाद् द्रव्येण जातेरभिसंबन्धाद् द्रव्यशब्दा उच्यन्ते; गुणक्रिययोस्तु तथा द्रव्येण संबन्धाभावान्न तन्निमित्ताः शब्दा द्रव्यशब्दा इति नीलोत्पलमित्याद्येव भवति, न तूत्पलनीलादीति। यस्तु गुणादिशब्दानामेव समासस्तत्रोभयोरपि पदयोरप्रधानत्वात् कामचारेण पूर्वापरनिपातः-खञ्जश्चासौ कुण्टश्च-खञ्जकुण्टः, एवं कुण्टखञ्जः, एवं शुक्लकृष्णः, कृष्णशुक्लः; एवं रोहित-पाण्डुः २, हरितबभ्रुः २; पूर्वा चासावुत्तरा च-पूर्वोत्तरा, एवम्-उत्तरपूर्वा; दक्षिणपूर्वा, पूर्वदक्षिणा-विदिक्; पाचक-पाठकः, पाठकपाचकः-पुरुषः। 'कृष्णसारङ्गः, कृष्णशबलः, कृष्णकल्माषः' इत्यादौ तु गुणशब्दत्वेऽपि सारङ्गादिशब्दानां समुदायवाचित्वात् प्राधान्यम्, कृष्णादिशब्दानां त्ववयव-वाचित्वेनाप्राधान्यमिति कृष्णादीनामेव पूर्वनिपातः। एकार्थ-मिति किम् ? वृद्धस्योक्षा-वृद्धोक्षा, कर्मधारये तु समासान्तः स्यात्। बहुलाधिकारात् क्वचित् समासो न भवति-रामो जामदग्न्यः, अर्जुनः कार्तवीर्यः, दीर्घश्चारायणः; क्वचिन्नित्यः,-कृष्णसर्पः, लोहितशालिः, गौरखरः, लोहिताहिः, नरसिंहः, पुरुषमृगः, करिमकरः, बकटिट्टिभः, नकुलसर्पः, पक्षि-मार्जारः, कुक्कुटसर्पः; जातिविशेषवाचित्वान्नित्यसमासा एते, नहि वाक्येन जातिर्गम्यते; जातिशब्दानां चावयवद्वारेण समु-दायेऽपि वृत्तेः सामानाधिकरण्यम्; भूयोऽवयवाभिधायिनश्च प्राधान्याद् विशेष्यत्वमितरस्य तु विशेषणत्वम्। चकारस्त-त्पुरुषकर्मधारयसंज्ञासमावेशार्थः। कर्मधारयप्रदेशाः-" कडा-रादयः कर्मधारये " [ ३. १. १५८. ] इत्यादयः ॥ ९६ ॥

**श० म० न्यासानुसन्धानम्-विशेषणं।** विशेषणं व्याख्याति-**विशिष्यते** इत्यादिना, **विशिष्यतेऽनेनेति विशेषणमि**त्यन्वयः, 'विशिष्यते' इत्यस्य कोऽर्थ इत्याह-**अनेकप्रकारं वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यते** इति-एकस्मिन् वस्तुनि द्रव्यादावनेके प्रकारा भवन्ति, यथा-उत्पलादौ, तद्धि नीलं पीतं श्वेतं रक्तं च भवति रूपेण, एव-माकारादिप्रकारैरपि तस्य भेदो भवति, तत्र प्रकृते किंप्रकारं वस्तु प्राह्यमित्यवधारणायान्यप्रकारनिरासाय च प्रकारवाचि पदमुपादीयते, यत् सामान्यप्रकारेण प्रवृत्तमनेकप्रकारवद् वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे स्थापयति तद् विशेषणमिति भावः। विशेष्यमपि सहैव व्याख्याति-**व्यवच्छेद्यं विशेष्यमिति**-विशेषणपदार्थस्य व्यवच्छेदकत्वरूपेणोक्तस्तस्य यत् प्रति व्यवच्छेदकत्वं तद् व्यवच्छेद्यं, व्यवच्छिद्यते-व्याव-

र्त्यते यदिति व्युत्पत्तेः; विशेष्यशब्दस्येत्थं व्युत्पत्तिः–व्यवच्छिद्यते विशिष्यते–प्रकारान्तरेभ्यो व्यावर्त्यते यत् तत् विशेष्यमिति। यदनेकप्रकारवद् वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे स्थाप्यते तद् विशेष्यमिति भावः। विपूर्वाद् "शिष्लृंप् विशेषणे" इत्यतो रुधादेर्विशिष्यतेऽनेनेति "करणा-ऽऽधारे" [५. ३. १२९.] इति करणेऽनटि–विशेषणमिति, न तु "शिषण् असर्वोपयोगे" इति युजादेः, विपूर्वोऽतिशये–विपूर्वः शिषिरतिशये युजादिः, इत्यतिशेते येन तद् विशेषणमित्यतिशय्यमानं विशेष्यं स्यात्, न चैतदिष्टं, नहि नीलोत्पलमित्यादौ नीलादिनोत्पलादि कमप्यर्थमतिशेते, किन्तु नीलादिनाऽन्यतो व्यवच्छिद्यते; न च विपूर्वस्य शिषेरतिशय एवार्थः, 'विपूर्वोऽतिशये' इति ह्यतिशये युजादित्वं विधीयते, न त्वतिशय एवार्थः। विपूर्वात् तस्मादेव च धातोः कर्मणि "ऋवर्ण-व्यञ्जनाद् घ्यण्" [५. १. १७.] इति घ्यणि विशेष्यमिति। विशेषण-विशेष्यशब्दयोर्निर्वचने जाते क्रमप्राप्तमेकार्थशब्दं व्याख्यातुमुपक्रमते– भिन्नप्रवृत्तिनिमित्तयोरित्यादि– प्रवृत्तिनिमित्तैक्ये सति नोभयशब्दप्रयोगः सम्भवति, यथा घटो घट इति भिन्नेति पदोपादानमावश्यकम्, भिन्नं प्रवृत्तेः–अर्थबोधार्थव्यापारस्याभिधायाः शक्तेरिति यावत्, निमित्तं–कारणं ययोरित्यर्थः, **एकस्मिन्** द्रव्यादिरूपे, **अर्थे** पदार्थे, **वृत्तिः** प्रवृत्तिः, **ऐकार्थ्यमि**ति सम्बन्धः, तदेव व्याख्याति–**सामानाधिकरण्यमि**ति–समानं साधारणम्, अधिकरणम्–अर्थो ययोस्तौ समानाधिकरणौ, तयोर्भावस्तथेति व्युत्पत्त्या समानाधिकरणशब्दस्याप्यैकार्थ्यवाचकत्वम्, शब्दस्याधिकरणं ह्यर्थः, अर्थे एव शब्दप्रयोगात्। अयमाशयः–नीलमुत्पलमित्यादौ पदद्वयमप्येकमेव द्रव्यमभिधत्ते, यन्नीलं तदुत्पलमेव यदुत्पलं तन्नीलमेव, नीलपदस्यापि नीलरूपवद्द्रव्यपरत्वात्; एवं चोभयोः सामानाधिकरण्यं स्पष्टमेव। ऐकार्थ्यशब्दव्युत्पत्तिद्वारैकार्थशब्दं निगमयति–**तद्वदेकार्थमि**ति। ननु यदि नीलोत्पलमित्यत्र नीलं चोत्पलं चैकमेव तर्हि कथं भेदप्रयुक्तो विशेषणविशेष्यभाव इति चेत्? उच्यते–सत्यप्यभेदे प्रवृत्तिनिमित्तकृतभेदोऽपि वर्तत एव अन्यथा नीलोत्पलादिशब्दानां पर्यायशब्दता प्रसज्येत, इति विशेषणविशेष्यभावोपपत्तिरबाधितैव।

नाम, नाम्ना, समासः, तत्पुरुषः' इत्यनुवर्तन्ते, तथा च यः सूत्रार्थः सम्पन्नस्तमाह– **विशेषणवाचि नामे**त्यादिना। अधुनोदाहरणावसर इति विगृह्योदाहरति–**नीलं च तदुत्पलं चे**ति विग्रहः, **नीलोत्पलमि**ति च समासः, नहीहान्यदेव नीलमन्यदेव चोत्पलं, यथाऽन्य एव गौरन्य एवाश्व इति, किन्तु यदेव नीलं तदेवोत्पलं यदेवोत्पलं तदेव नीलमिति नीलपदमुत्पलेनैकार्थम्; एवमपीह न पर्यायता यतोऽर्थभेदोऽस्ति, विशेषणं, तथाहि–उत्पलमिति नीलानीलरूपं सर्वभेदानुगुणं प्रतिभासते, रक्तस्याप्युत्पलस्य भावात्, तन्नीलमित्यनेनानीलाद् व्यवच्छिद्यते नीलमिति, विशेष्यं चोत्पलमिति एवं **कृष्णाश्च ते तिलाश्चेति** विग्रहः, **कृष्णतिलाः** इति च समासः; पुमांश्चासौ गौश्चेति विग्रहः, **पुङ्गवः** इति च समासः, अत्र तत्पुरुषसंज्ञासमावेशात् "गोस्तत्पुरुषात्" [७-३ १०५.] समासान्तेऽटि "ओदौतोऽवाव्" [१. २. २४.] इत्यावादेशे च पुङ्गव इति; **मेषिका चासौ गौश्चेति** विग्रहः **मेषिकगवी** इति च समासः, अत्र तत्पुरुषसंज्ञया प्राग्वदट् समासान्तः, अटष्टित्त्वात् "अनञः" [२. ४. २०.] इति ङ्याम् "अस्य ङ्या लुक्" [२. ४. ८६.] इत्यकारलोपे, कर्मधारयसंज्ञया च "पुंवत् कर्मधारये" [३. २. ५७.] इति पुंवद्भावे च मेषकगवी' इति, अल्पामेषी मेषिका।

अथ किमर्थं विशेषण-विशेष्ययोरुभयोरुपादानम्? अन्यतरस्यैवोपादानं क्रियताम्, सम्बन्धिशब्दत्वात् तयोरन्यतरोपादानेनैवेतरस्याप्यवगतिः स्यादेवेति चेत्, सत्यम्–ग्रन्थकार एवात्राह –**विशेषण-विशेष्ययोः सम्बन्धिशब्दत्वादेकतरोपादानेनैव द्वये लब्धे** इति– इदं शङ्काशकलम्, मातरि वर्तितव्यं, पितरि शुश्रूषितव्यम्' इत्युक्ते कर्तुराकाङ्क्षया 'पुत्रेण' इत्यनुक्तमपि गम्यते, मातृ-पित्रोः सम्बन्धित्वेन स्वनिरूपकेण सह नित्यसाकाङ्क्षतया पुत्रस्याक्षेपसम्भवात्, एवं विशेषणविशेष्यशब्दावपि सम्बन्धिशब्दौ तयोरेकतरोपादाने सत्यन्यतरस्याक्षेपेणैव लाभः सम्भवति, तथा च "विशेषणमेकार्थं कर्मधारयश्च" इत्येव "विशेष्येणैकार्थं कर्मधारयश्च" इत्येव वा सूत्र्यतां, किमधिकेनेति शङ्काशयो ज्ञेयः। समाधानदलमाह–**द्वयोरुपादानं परस्परमुभयोर्व्यवच्छेद्यव्यवच्छेदकत्वे समासो यथा स्यादित्येवमर्थमि**ति–अयमाशयः–यत्र पूर्वोत्तरपदे प्रत्येकं विशेषण-विशेष्यभूते भवतस्तत्रैव समासो भवतीति ज्ञापनार्थमुभयोरुपादानं, यथा नीलोत्पलमिति, अत्र नीलार्थो भ्रमरादिभ्यो व्यावर्त्योत्पलार्थेनोत्पले व्यवस्थाप्यते, उत्पलार्थोऽपि रक्तोत्पलादिभ्यो व्यावर्त्य नीलार्थेन व्यवस्थाप्यत इत्यस्ति प्रत्येकं विशेषणविशेष्यभावः।

नन्विहोभयोरपि विशेषण-विशेष्यभावनियमनस्य किं प्रयोजनमिति चेदत्राह–**तेन** उक्तनियमनेन, **इह** अनन्तरं वक्ष्यमाणे प्रयोगजाते, **न भवति,** प्रकृतसूत्रेण समासो न भवति, तदेवाह-**तक्षकः सर्पः, लोहितस्तक्षक इती**ति–"तक्षकस्तु लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः।" इति सर्पविशेषस्य तक्षक इति संज्ञा; यद्यपि तक्षकः सर्पस्य विशेषणं भवत्येव। तथाहि–सर्प इत्युक्ते सर्पसामान्यं प्रतीयते, न सर्पविशेषः, तक्षक इत्युक्ते तु सर्पविशेषोऽतक्षकाद् व्यावृत्तोऽवसीयते, तथापि कथितमेतत्–

यत्रैकैकस्योभयत्र भावस्तत्र समास इति, न च सर्पार्थस्य तक्षकः कदाचिद् विशेष्यो भवति, कथं न भवति ? तक्षकस्य सर्पत्वाव्यभिचारात्। ननु च तक्षकशब्दोऽस्ति नामधेयशब्दः, अस्ति च क्रियाशब्दः—तक्ष्णोतीति तक्षक इति, उभयोर्भिन्न एवार्थः, 5 तत्र तक्षकशब्दार्थस्यानेकप्रकारत्वेन प्रकारान्तरनिवृत्तये युज्यत एव सर्पस्य तक्षकोऽपि विशेष्यः; नैतदस्ति— न नामधेयस्य क्रियाशब्देन तुल्यमर्थाभिधानसामर्थ्यम्, अवयवार्थानुसारेण हि क्रियाशब्दोऽर्थं बोधयति, समुदायरूपेण तु नामधेयम्, अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति तस्यां क्रियाशब्दार्थ-10 विषयापेक्षा नोपजायत एव। लोहितस्तक्षक इत्यत्र भवति तक्षको विशेषणं, न तु विशेष्यं; तस्य लोहितत्वाव्यभिचारात्। यदि तक्षको न विशेष्यस्तर्हि लोहितोऽपि विशेषणं न स्यात्, विशेषणस्य विशेष्यापेक्षत्वात्, न च शक्यं तक्षकाद् यदर्थान्तरं घटादिकं विशेष्यं तदपेक्षया लोहितस्य विशेषणत्वं परिकल्पयि-15 तुम्, एवं हि लोहिताद् यदर्थान्तरं तीव्रविषादिकं विशेषणं तदपेक्षं तक्षकस्यापि विशेष्यत्वं प्रसज्येत, तस्माद् विस्पष्टार्थमुभयोर्ग्रहणमित्यपरे। अयं संक्षेपः'—तक्षकः सर्पः' इत्यत्र व्यावर्तकत्वेन तक्षकस्य विशेषणत्वे, सर्पस्य च व्यावर्त्यत्वेन विशेष्यत्वे सत्यपि, व्यावर्तकत्वाभावान्न सर्पस्य विशेषणत्वं, 20 नवा तक्षकस्य व्यावर्त्यत्वाभावाद् विशेष्यत्वं, यतो नासर्पस्तक्षको भवति; 'लोहितस्तक्षकः' इत्यत्र च व्यावर्तकत्वेन तक्षकस्य विशेषणत्वे, लोहितस्य च व्यावर्त्यत्वेन विशेष्यत्वे सत्यपि, व्यावर्तकत्वाभावान्न लोहितस्य विशेषणत्वं नवा तक्षकस्य व्यावर्त्यत्वाभावाद् विशेष्यत्वं, यतो नालोहितस्तक्षको भवतीति। 25 एतदेवाह—**नह्यसर्पोऽन्यवर्णो वा तक्षकोऽस्ती**ति। ततश्च प्रकृतसूत्रोपयोगिविशेषणविशेष्यभावाभावान्न समास इति सुस्थम्। इत्थं विशेषणविशेष्यशब्दयोरिह परस्परं व्यवच्छेदकव्यवच्छेद्यवाचकत्वे सिद्धान्तिते शङ्कते—**कथं तर्हि आम्रवृक्षः, शिंशपावृक्षः, अस्तपर्वत इत्यादौ समासः ?** इति—30 आम्रश्चासौ वृक्षश्च, शिंशपा चासौ वृक्षश्च, अस्तश्चासौ पर्वतश्च' इति वाक्येभ्यो नैते समासा भवितुमर्हन्ति, किं कारणमत आह—**नह्यवृक्ष आम्रः शिंशपा वा भवती**ति—एते नाम्रस्य शिंशपायाश्च सत्यपि विशेषणत्वेन विशेष्यत्वं व्यावर्त्यत्वाभावादित्यावेदितं भवति, अनया दिशा चास्तपर्वत इत्यत्रापि 35 घटना सुबोधेति वृत्तौ न विवृतम्। वृक्षो ह्याम्रत्वं व्यभिचरति, आम्रस्तु न वृक्षत्वम्, अतस्तत् प्रकारान्तरेभ्यः पलाशादिभ्यस्तं व्यवच्छिनत्तीत्याम्रस्तस्य विशेषणं भवति न तु विशेष्यम्, वृक्षस्तु विशेष्यः, आम्रार्थस्तु वृक्षत्वं न व्यभिचरतीति न तस्यासौ विशेषणं भवति, एवं शिंशपावृक्षोऽस्तपर्वत इत्यत्रापि ज्ञेयम्, तथा 40 च प्रकृते निरुक्तविशेषणविशेष्यभावाभावान्नानेन समासो भवितुमर्हतीति शङ्काशयः। समाधत्ते—**नात्राम्रादयः शब्द** इत्यादिना **अत्र** आम्रवृक्षः, शिंशपावृक्ष इत्यादिप्रयोगेषु, **आम्रादयः शब्द** आदिशब्दात् शिंशपादिशब्दपरिग्रहः, **वृक्षविशेषणामेव** केवलवृक्षरूपविशेषणामेव, **न वाचकाः** न बोधकाः, एवकारव्यवच्छेद्यं पृच्छति—**किं तर्ही**ति, उत्तरयति—**फलादेरपि** 45 शब्दानुशासनानुमतत्वेन फलस्य, फलस्यावयवोपलक्षणत्वेनादिशब्दात् मूलादेः संग्रहः, अपिशब्दाद् वृक्षस्यान्वेदनम्, **च** पुनः, **तत्सहचरितमाधुर्यस्थैर्यादेर्गुणविशेषस्य** आम्रास्वादः' इत्यादिप्रतीतिसिद्धस्य फलगतमाधुर्यादिरूपगुणविशेषस्य शिंशपास्थैर्यं सालस्य' [ शिंशपागतस्थैर्यसदृशस्थैर्यं सालस्य ] इत्यादिप्र- 50 तीतिप्रतीतस्य वृक्षगतस्थैर्यादिरूपविशेषगुणस्य च, वाचका इत्यनुषज्यते। इदमुक्तं भवति—यदाम्रादिशब्दानां विशेषे वृत्तिर्नावधार्यते तदा विशेषणसमासो भवति, तथाहि—आम्रादिशब्दाः फलस्य वृक्षस्य मूलस्य [ तत्सहचरितमाधुर्यादेः ] च वाचकाः सामान्यशब्दा इति तदर्थानां वृक्षत्वव्यभिचाराद् विशेष्यभावः, 55 वृक्षश्च विशेषणं भवति तदा भवति विशेषणसमासः; यदा तु कुतश्चित् प्रकरणादर्थाद् वा वृक्षाद्यर्था एवावसितवृत्तयो भवन्ति तदा न भवति विशेषणसमासः। ननु च वृक्षार्थावसितवृत्तित्वाद् वृक्षशब्दस्य तदा प्रयोग एव नोपपद्यते, उक्तार्थत्वात्, *उक्तार्थानामप्रयोगः* इति वचनात्, ततश्च समासाप्रसङ्ग एव, 60 तत् किमुभयग्रहणेन ? नैतदेवम्—क्वचिदुक्तार्थानामपि लोके प्रयोगो दृश्यते, यथा—अपूपौ द्वावानयेति। प्रकृतयुक्तिं पूर्वत्रापि संचारयन् सिंहावलोकनन्यायेनाह—**एवं च तक्षकाहिः शेषाहिरित्यादयोऽपि भवन्ती**ति—यथाम्रादिशब्दानामम्रगुणादिवाचकत्वं तथा तक्षकादिशब्दानामपि तक्षकगुणादि- 65 वाचकत्वमिति तुल्ययुक्त्याम्रवृक्षादिवत् तक्षकाहिरित्यादयोऽपि समासा निराबाधं भवन्त्येव, तक्षकश्चासावहिश्च, शेषश्चासावहिश्चेति विग्रहवाक्ये, "स च श्यामोऽथवा शुक्लः सितपङ्कजलाञ्छनः।" [ स शेषनागः ] इति शेष इति सर्पविशेषस्य संज्ञा। नन्वेवं तर्हि 'तक्षकः सर्पः, लोहितस्तक्षकः' इत्यत्रापि 70 तुल्ययुक्त्या समासः प्राप्नोतीति चेत् ? बाहुलकादत्र न भवतीति ज्ञेयम्, न चैवं तर्हि बाहुलकादेव निर्वाहे द्वयोरुपादानं विफलमिति वाच्यम्, 'विशेषणं विशेष्येण' इति द्वयोरुपादानं बाहुलकप्रपञ्चार्थमेवेति।

एवं सति द्वयोरुपादानबलादुभयोः प्रत्येकं विशेषणविशेष्य- 75 भाव एवानेन समासो नान्यथेति नियमो विलीयेत, अतो निरुक्तनियमपरिपालनाय हि प्रकारान्तरमाश्रयति- **यदिवे**त्यादिना, **यदिवा** अथवा, **आम्राणामि**ति समस्यमानं पूर्वपदं, तदर्थमाह— **फलानामि**ति, आम्रशब्दोऽत्र स्वफले वर्तते, न वृक्षे इत्यर्थः, सम्बन्धेऽत्र षष्ठीत्यावेदनायाह—**सम्बन्धी**ति, क 80

इत्याह–**वृक्ष** इति, विग्रहस्तु–आम्राणां वृक्ष इत्येव **आम्रवृक्ष** इति समासः; अतिदिशति–**एवमिति**, **शिंशपावृक्षः** इति समासः, शिंशपानां वृक्ष इति च विग्रहः, स्फुटार्थस्तु शिंशपानां सम्बन्धी वृक्ष इति । **अस्तस्य पर्वतः** इति विग्रहः,
5 **अस्तपर्वतः** इति च समासः, अस्तस्य–रवेस्तिरोधानस्य सम्बन्धी पर्वत इत्यर्थः, अतिदिशति–**एवमिति**, **उदयपर्वतः** इति समासः, उदयस्य पर्वत इति विग्रहः, उदयस्य–रवेः प्रथमदर्शनयोग्यीभवनस्य सम्बन्धी पर्वत इत्यर्थः । **षष्ठीसमासा द्रष्टव्या** इति–आम्रादिशब्दानामैकार्थ्याभावाद्नानेन समासाः,
10 अपि तु षष्ठ्यन्तत्वात् "षष्ठ्ययत्नाच्छेषे" [ ३.१.७६. ] इति षष्ठीतत्पुरुषसमासा ज्ञेया इत्यर्थः ।

अयमर्थो भाष्ये संक्षेपेण कैयटेन च विस्तरतो विचारितः, तच्चेत्थम्— "विशेषणं विशेष्येण बहुलम्" [ पा० सू० २. १. ५६. ] इति सूत्रे" कथं तर्हीमौ द्वौ प्रधानशब्दावेकस्मिन्नर्थे
15 युगपदवरुध्येते–वृक्षः शिंशपेति ? नैतयोरावश्यकः समावेशः, नह्यवृक्षः शिंशपाऽस्ति" इति भाष्यम् । अत्र कैयटः–"अयं भावः–यदा प्रथमत एव विशेष उपक्रम्यते–शिंशपेति तदा वृक्षविशेषस्यैव प्रक्रान्तत्वाद् विशेषस्य च सामान्याव्यभिचाराद् वृक्षस्य नैव प्रयोगेण भाव्यम्, यदा तु प्रथमं सामान्यमुप-
20 क्रम्यते–वृक्ष इति, तदा तद्विशेषणाय शिंशपाशब्द उपादीयमानो विशेषणमेव भवतीति । शिंशपावृक्ष इत्येव भाव्यम् । अत्र केचिदाहुः– शिंशपाया अपि फलव्यवच्छेदायोपादीयमानो वृक्षः किमिति विशेषणं न भवति ? ततश्च भवितव्यं वृक्षशिंशपेत्यपीति, तदयुक्तम्–वृक्षत्वस्य व्यापकत्वान्महाविषयत्वात् दूरात्
25 प्रथमतस्तस्यैवोपलम्भाद् विशेष्यत्वमेव, शिंशपात्वं तु स्वल्पविषयत्वात् पश्चाद्ग्रहणाच्च शुक्लादिगुणकल्पत्वाद् विशेषणमेवेति नास्ति प्रयोगानियमः । तथा च वृक्षविशेषस्य खदिरादेः प्रतिनिधिर्भवति, न तु वृक्षस्याभावे फलपुष्पयोरुपादानं क्रियत इति न्यायविद आहुः–**नह्यवृक्ष** इति–ननु
30 फलमस्त्येव, नैतदस्ति–वृक्षप्रतीत्यवधानेन फलप्रतीतेरुत्पादाद् बहिरङ्गत्वात्, वृक्षावसायस्य प्रागुत्पादादन्तरङ्गत्वात् ।" इति । अयमाशयः–पूर्वप्रक्रान्तभाष्यद्रव्यवाचकगुणक्रियावाचकपदयोः सहप्रयोगे द्रव्यवाचकपदस्यैव प्राधान्यमिति निर्णीतम्, ततश्च 'वृक्षः शिंशपा' इति प्रयोगे उभयोरेव द्रव्यवाचकत्वेन
35 प्राधान्याद् द्वयोः प्रधानशब्दयोरेकार्थवाचकत्वरूपं सामानाधिकरण्यं कथमिति शङ्का । तत्र द्वयोरेतयोः सह प्रयोगो नावश्यकः, यतः शिंशपा वृक्षभिन्नो न सम्भवतीत्युत्तरम् । तत्र कैयटेनैतदाशयो द्विधा भिन्नः, तन्मूलं च न केवलं गुणद्रव्यसमभिव्याहारे द्रव्यस्यैव प्राधान्यमित्येव नियमः, अपि
40 तु व्याप्यव्यापकसमभिव्याहारे व्यापकस्य प्राधान्यं [ विशेष्यत्व ] मित्यपि, वृक्षप्राधान्ये च हेतुद्वयं–प्रथमतो वृक्षत्वेनैवोपलम्भाद् बहुविषयत्वाच्चेति, बहुविषयत्वं च व्यापकत्वप्रयोजकमिति तस्य प्राधान्यम्, अत एव मीमांसादौ वृक्षविशेषस्य खदिरादेर्वृक्षस्याभावे तदीयप्रतिनिधित्वेन बिल्वादिर्विहितो न तु तदीय
45 एव फलपुष्पादिः, तस्यामुख्यत्वात् । तथा च फलं न वृक्षसमतया तत्पदार्थ इत्येव– 'नह्यवृक्षः शिंशपा' इति भाष्यस्य तात्पर्यम् । एवं च प्रथमतः शिंशपोपक्रमे वृक्षशब्दप्रयोगो नावश्यकः । यद्यपि फलार्थप्रत्ययस्य लुपा शिंशपादिशब्दः स्वीयफलेऽपि शास्त्रेणानुशिष्टो मुख्यतयैव प्रतिपादयतीति शक्यते वक्तुम्
50 तथापि "लुब्योगाप्रख्यानात्" [ पा० सू० १. २. ५४. ] इति पाणिनिवचनेन प्रत्ययलुपो विधानस्य स्वयमेव खण्डितत्वेन तत्र च हेतुतया योगार्थस्याप्रतीतेरेवोक्तत्वेन शिंशपादिशब्दानां सम्बन्धमूलकलक्षणैव वृक्षाद्यर्थे इति स्वीकार्यमिति फलार्थस्यामुख्यत्वमेव । न च वृक्षप्रतीतेः पूर्वोक्तयुक्त्यान्तरङ्गत्वेन व्यापक-
55 त्वेन च मुख्यत्वे सत्यपि निरूढलक्षणया फलार्थकत्वमिह मा ज्ञायीत्यर्थं वृक्षपदप्रयोगो भविष्यति, तत्रोभयोर्द्रव्यवाचकत्वेन विशेष्यत्वानियमात् पूर्वप्रयोगानियमो भविष्यत्येवेति वाच्यम्, नह्यवृक्षः शिंशपा प्रसिद्धोऽस्तीति भाष्याशयात् । एवं च फलरूपार्थस्याप्रसिद्धत्वात् प्रकरणादिकं विना तदुपस्थितेरभावेन तद्व्या-
60 वर्तकवृक्षादिविशेषणोपादानाभाव इति तात्पर्यम् । एवं च सामान्यविशेषवाचकपदसमभिव्याहारे सामान्यवाचकस्यैव विशेष्यत्वम्, यत्र तूभयोरपि परस्परापेक्षया सामान्यत्वं विशेष्यत्वं च तत्रानियम एव, यथा ब्राह्मणदेवदत्तो देवदत्तब्राह्मण इत्यादौ । तक्षकः सर्प इत्यादौ तु न तथा तक्षकत्वस्य सर्पत्वव्यभिचाराभा-
65 वात् तस्याव्यावर्तकत्वेन प्रकृतसूत्रे विशेषणं विशेष्यपदाभ्यां ग्रहीतुमशक्यत्वात्; यदि च "तक्षको नागवर्धक्योः" इति कोशात् तक्षकशब्दस्यापि सर्पत्वव्यभिचार इति कथ्यते, तदा प्रकृतसूत्रानुकूलविशेषणविशेष्यभावसत्त्वेऽपि यदि समासो नेष्टस्तर्हि बाहुल्केनैव समाधेयमिति प्रकरणसारांशः ।

70 अथ प्रकृतमनुसरामः । नीलमुत्पलमित्यत्र नीलमनीलादुत्पलं व्यावर्तयतीति विशेषणम्, उत्पलेन भृङ्गादिभ्यो व्यावर्त्यत इति विशेष्यं च भवति, एवमुत्पलं भृङ्गादिभ्यो नीलं व्यावर्तयतीति विशेषणं, नीलेन रक्तोत्पलादिभ्यो व्यावर्त्यत इति विशेष्यं च भवति, तथा च नीलमिति विशेषणं विशेष्यं भवति, उत्पलमपि
75 विशेषणं विशेष्यं च भवति, विशेष्यं प्रधानं भवति, विशेषणं तदनुयायित्वादप्रधानं भवतीति वस्तुस्थितिः । अत्रोभयोर्विशेष्यत्वविवक्षायां द्वयोः प्राधान्ये परस्परानुपकारित्वादसम्बन्धयोरेकत्र प्रयोगो न भवति, उभयोर्विशेषणत्वविवक्षायामप्राधान्येऽपि द्वयोः प्रधानापेक्षावतो नास्ति परस्परोपकारित्वमिति न स्यादे-
80 कत्र प्रयोगः, तस्मादेकत्र प्रधानं [ विशेष्या ] मपरमप्रधानं

[ विशेषणं ] इति मन्तव्यम् । तत्र नीलमित्यस्य विशेषणत्वे; उत्पलमित्यस्य च विशेष्यत्वे, सूत्रे विशेषणस्य प्रथमोक्तत्वात् प्रथमप्रयोगे यथा नीलोत्पलमिति नीलस्योत्पलेन समासो भवति तथोत्पलस्य विशेषणत्वे नीलस्य च विशेष्यत्वे उत्पलस्य नीलेन 5 समासे उत्पलनीलमित्यपि समासः प्रसज्येत, स च नेष्यत इत्याशङ्कते– **यद्येवमुभयोर्विशेषणत्वे** इत्यादिना, समाधत्ते– **नैवमि**त्यादिना, **अविशेषेऽपि विशेषणविशेष्यभावस्य** पूर्वोक्तरीत्या यथा नीले विशेषणविशेष्यभावस्तथोत्पलेऽपीति साम्येऽपीत्यर्थः, ***प्रधानानुयाय्यप्रधानम्*** इति न्या-10 **यात्** अयं न्यायो न्यायसिन्धौ व्याख्यातः, तमाश्रित्य, **अप्रधानस्यैव** नीलस्यैव, **प्रधानेन** उत्पलेन, समासो भवति, अयं भावः–उक्तन्यायानुकूलो विशेषणविशेष्यभावातिरिक्त एव प्रधानाप्रधानभावः, तेनोत्पलादिशब्दानां क्वचिद् विशेषणत्वेऽपि प्राधान्यस्य सत्त्वान्नीलादिशब्दानां तदनुयायित्वमिति 15 तस्य पूर्वप्रयोगः सिध्यतीति । प्राधान्यस्य नियामकं किमिति चेदत्राह– **प्राधान्यं च द्रव्यशब्दानामिति—** द्रव्याभिधायकाः शब्दा द्रव्यशब्दाः, ते चोत्पलादय एव न नीलादयः कुतस्तेषां प्राधान्यमित्याह– **द्रव्यस्यैव साक्षात् क्रियाभिसम्बन्धादि**ति—किमपि वाक्यं क्रियासम्बन्धप्रतिपादनार्थ-20 मेव प्रयुज्यते, अत एव क्रियाभिमुख्यविशेष्यकशाब्दबोधस्यैव वैयाकरणैः स्वीकारः, क्रिया च द्रव्याश्रयिण्येवेति गुणाद्यपेक्षया द्रव्यस्य प्राधान्यं स्पष्टम् । नीलादि अन्याश्रितत्वादप्रधानम्, उत्पलं तु तदाश्रयत्वात् प्रधानम्, उत्पलं हि द्रव्यरूपत्वात् क्रियासिद्धये साक्षादुपयुज्यमानं विवक्ष्यते नीलस्तु गुणत्वाद् 25 द्रव्यव्यवधानेन क्रियायामुपयोगादुत्पलस्य विशेषणं सम्पद्यत इति भावः । ननु शब्दानां चतुष्टयी प्रवृत्तिः– जातिशब्दा गुणशब्दाः क्रियाशब्दा द्रव्यशब्दाश्चेति, तत्रैकद्रव्यवाचकानां शब्दानामेव द्रव्यशब्दत्वम्, अनेकद्रव्यवाचकानां च तत्प्रवृत्तिनिमित्तभूतजातिवाचकत्वमेवेत्युत्पलादिशब्दानामद्रव्यवाचकत्वेन 30 जातिशब्दत्वमेवोचितमिति । कथमिह द्रव्यशब्देन व्यवहारः क्रियते ? इति शङ्कते–**यद्यपि चोत्पलादिशब्दा जातिशब्दाः** इति, उत्तरयति–**तथापी**त्यादिना, अयमाशयः– जातिप्रवृत्तिनिमित्तकत्वेन तेषां जातिशब्दत्वं नास्माभिः खण्ड्यते अपि तु तेषां जातिशब्दत्वेऽपि मुख्यतया 35 द्रव्यस्यैव प्रत्यायकत्वेन द्रव्यशब्दत्वमेव, चतुर्धा विभागे च द्रव्यशब्दानां पृथगाख्यानं केवलद्रव्यवाचित्वेनेति । जातिशब्दानामपि द्रव्यशब्दत्वं कथमित्यत्र हेतुमाह–**उत्पत्तेः प्रभृती**त्यादि, अयं भावः–'जननेन या प्राप्यते सा जातिः' इति जातिपदव्युत्पत्तौ द्रव्यमुत्पन्नमेव जात्या सम्बध्यते, यावद् 40 विनाशं च स सम्बन्धः स्वीक्रियते, एवं च द्रव्येण विना जातेरनुपलभ्यमानत्वाज्जातिद्वारा द्रव्याभिधायकानां शब्दानां द्रव्यशब्दत्वमेवेति । यद्यपि गुण-क्रिययोरपि द्रव्याश्रितत्वेन स्वरूपप्रतिपादनमुखेन द्रव्यप्रतिपादकत्वमेव, तथापि जातिवत् तयोर्द्रव्येण सह नियतसम्बन्धाभावाच्च द्रव्यशब्दत्वमित्याह–**गुण-क्रिययोस्तु तथा द्रव्येण सम्बन्धाभावादि**त्यादिना, 45 यथा जात्या सहोत्पत्तिप्रभृत्या विनाशाद् द्रव्यस्य सम्बन्धस्तथा गुण-क्रियाभ्यां नेत्यर्थः, एकस्यैव द्रव्यस्य पाकादिनाऽनेकरूपपरावृत्तिदर्शनाद् गमनागमनाद्यनेकक्रियासम्बन्धदर्शनाच्च । प्रकृतार्थमुपसंहरन्नाह–**इति नीलोत्पलमित्याद्येवे**ति–उत्पलादिशब्दानामुक्तरीत्या द्रव्यशब्दत्वेन नीलादिशब्दाप्राधान्यस्य निर्णीत- 50 त्वादुत्पलाद्यपेक्षया नीलादिशब्दानां विशेषणत्वमेवेति न प्राक् प्रयोगानियम इति भावः । एवं तर्हि क्वानियम इत्याह–**यस्तु गुणादिशब्दानामेव समासस्तत्रोभयोरपि पदयोरप्रधानत्वात् कामचारेण पूर्वापरनिपातः** इति–यत्रोभावपि गुणशब्दौ क्रियाशब्दौ द्रव्यशब्दौ वा [ एकव्यक्तिमात्र- 55 वाचकौ ] परस्परं समस्येते तत्रोभयोरपि समानत्वेन प्राधान्यस्य विवक्षाधीनत्वाद् यदा यद् विशेषणत्वेन विवक्ष्यते तदा तदप्रधानमिति तस्य प्राक् प्रयोगो भवतीत्यनियमस्तत्रेति भावः । तदेवोदाहरति–**खञ्जश्चासा**वित्यादिना, खञ्जश्चासौ कुण्टश्चेति विग्रहः, खञ्जः–पङ्गुलः, कुण्टः–हस्तहीनः, यः कुण्टः 60 खञ्जः स आनीयतामिति यदा विवक्षा तदा कुण्टार्थो विशेष्यते, खञ्जार्थो विशेषणमिति खञ्जशब्दस्य पूर्वनिपाते **खञ्जकुण्टः** इति समासः, यदा तु यः खञ्जः कुण्टः स आनीयतामिति विवक्षा तदा खञ्जार्थो विशेष्यते, कुण्टार्थो विशेषणमिति कुण्टशब्दस्य पूर्वनिपाते **कुण्टखञ्जः** इति समासः, एवमुत्तरत्रापि 65 ज्ञेयम् । **शुक्लकृष्णः** इति समासः शुक्लस्य विशेषणत्वविवक्षायाम्, कृष्णस्य विशेषणत्वविवक्षायां तु **कृष्णशुक्लः** इति समासः, शुक्लः–श्वेतः, कृष्णः–नीलः, अत्र शुक्लश्चासौ कृष्णश्चेति विग्रहः; अतिदिशति– **एवमि**ति, **रोहितपाण्डुः** इति समासो रोहितस्य विशेषणत्वविवक्षायाम्, पाण्डोर्विशेषणत्वविवक्षायां तु 70 द्विकाक्केन सूचितः **पाण्डुरोहितः** इति समासः, रोहितः–रक्तः, पाण्डुः– श्वेतः, केतकीधूलिसन्निभः पीतवर्णार्धः वर्णो वा, अत्र रोहितश्चासौ पाण्डुश्चेति विग्रहः, **हरितबभ्रुः** इति समासो हरितस्य विशेषणत्वविवक्षायाम् । बभ्रोर्विशेषणत्वविवक्षायां तु द्विकाक्केन सूचितो **बभ्रुहरितः** इति समासः, 75 हरितः–नीलपीतमिश्रवर्णो यद्वा पलाशवर्णः, बभ्रुः–पिङ्गलवर्णः, अत्र हरितश्चासौ बभ्रुश्चेति विग्रहः, एषु गुणशब्देषु पूर्वप्रयुक्तस्य विशेषणत्वं परप्रयुक्तस्य विशेष्यत्वं प्रतीयते, उभयोरेव समानत्वे द्वन्द्व एव स्यात् । **पूर्वा चासावुत्तरा चे**ति विग्रहः, तत्र पूर्वाया विशेषणत्वे–**पूर्वोत्तरे**ति समासः, एवमुत्तराया 80

विशेषणत्वे-**उत्तरपूर्वे**ति समासः, दिशां प्रत्येकमेकत्वेन जातिशब्दत्वं नास्ति, यदि रविसंयोगविशेष एव तत्प्रवृत्तिनिमित्तमिति मन्यते तदा गुणशब्दत्वमेव यदि च संख्यागुणाश्रयत्वाद् द्रव्यत्वं दिशामिति मन्यते तदा द्रव्यशब्दत्वमेव, तत्रैकव्यक्तिवृत्तितया पूर्वत्वादीनां जातित्वाभावेन केवलं द्रव्यत्वं, न तु जातिमद्द्रव्यत्वमिति तासामपि परस्परं समासे पूर्वनिपातानियम एव, एवं-**दक्षिणपूर्वा** इति समासो दक्षिणस्या विशेषणत्वे, तु **पूर्वदक्षिणा** इति समासः, सर्वत्र "सर्वादयोऽस्यादौ" [ ३. २. ६१. ] इति पुंवद्भावः, विदिश उभयरेखात्मकत्वात् तत्रोभयोः सामानाधिकरण्यम्, अतः समासेन विदिगेव दिशोरन्तरालमेवोच्यतेऽत आह-**विदिक्** इति-विदिगित्युपलक्षणं, तेन तत्सम्बन्धिन्यन्यत्रापि भवति-दक्षिणापराऽस्मिन् देशे वसति, दक्षिणपश्चाद् वसतीति।

ननु चात्र नायं विशेषणसमासो भवति "दिगधिकं संज्ञातद्धितोत्तरपदे" [ ३. १. ९८. ] इति दिशः समासः शिष्यते, निवृत्तिफलः सयोगः, विधिवदनेनेत्यत्रोदाहियते, पूर्वोत्तरादयश्च संज्ञाप्रकार एवामी दिगन्तराल एव न सर्वत्रावयवयोगिनीति न तेन निवृत्तिर्भवति। न च "पूर्वापरप्रथम०" [ ३. १. १०३. ] इति समासेनात्र भवितव्यम्, तत्रोत्तरपूर्वा दक्षिणपूर्वा दक्षिणापरा उत्तरापरा इति न स्यादिति मन्तव्यम्, बहुलाधिकारात्। तथा च "पश्चोऽपरस्य दिक्पूर्वस्य चाति" [ ७. २. १२४. ] इति "वोत्तरपदेऽर्धे" [ ७. २. १२५ ] इति च दक्षिणापरा दिक्, दक्षिणपश्चाद् रमणीयं दक्षिणापरार्धं दक्षिणपश्चार्धमिति दिशः परस्यापरस्य पश्चाद्भावः शिष्यते। अथैवं प्राची च सा उदीची च सेति विदिशि पूर्वोत्तरादीनामिव प्राच्यादीनां समासः कस्मान्न भवति? अनभिधानात्, अत एव बहुलमित्यधिक्रियते। पचतीति पाचकः, पठतीति पाठकः, क्रियाशब्दावेतौ, तत्र पाचक इत्यस्य विशेषणत्वे '**पाचकपाठकः**' इति समासः, पाठक इत्यस्य विशेषणत्वे तु '**पाठकपाचकः**' इति समासः। यत्र चोभयोर्गुणशब्दत्वेऽपि न पर्यायेण पूर्वनिपातः, किन्तु अमुकस्यैव तत्र कारणं दर्शयितुमुदाहरति- **कृष्णसारङ्ग** इति-समासोऽयम्, कृष्णश्चासौ सारङ्गश्चेति विग्रहः, **कृष्णशबलः** इति समासः, कृष्णश्चासौ शबलश्चेति विग्रहः **कृष्णकल्माषः** इति समासः, कृष्णश्चासौ कल्माषश्चेति विग्रहः; **इत्यादौ** इत्यादिसमासेषु, तुशब्दः पूर्वोक्तात् गुणशब्दयोः समासाद् विशेषं दर्शयितुम्, **गुणशब्दत्वेऽपि** समस्यमानयोरुभयोर्गुणशब्दत्वे सत्यपि, सारङ्गादिशब्दानां सारङ्गशबल-कल्माषादिशब्दानाम्, **समुदायवाचित्वात्** "अथ कर्बुरः। किर्मीर एतः शबलश्चित्र-कल्माष-चित्रलाः॥" इति वचनाद् वर्णसमुदायात्मकचित्ररूपवाचित्वात्, **प्राधान्य**विशेष्यत्वमित्यर्थः, कृष्णादिशब्दानां तु **अवयववाचित्वेन** वर्णसमुदायगतनीलादिप्रत्येकवाचित्वेन, **अप्राधान्यं** विशेषणत्वम्, **इति** एतस्मात् कारणात्, **कृष्णादीनामेव** कृष्णादिशब्दानामेव, **पूर्वनिपातः** समासे प्रागनिपातः, न तु सारङ्गादीनामिति भावः। यद्यपि चित्ररूपस्य नानेकरूपसमुदायत्वेन गुणत्वमेपि तु स्वतन्त्रमेव तस्य रूपान्तरभेदेन गुणत्वमिति नास्ति समुदायवाचकत्वं तथापि चित्ररूपातिरिक्तप्रतीयमाननानावर्णवाचिन एव ते इति मते नेदमुक्तम्।

अथ पदकृत्यं पृच्छति- **एकार्थमिति किमिति**—विशेषणविशेष्यभावे सामानाधिकरण्यरूपमैकार्थ्यं नियतमेवेति सूत्रोपात्तमेकार्थमिति पदं विफलमेवेति प्रश्नाशयः, उत्तरयति- **वृद्धस्योक्षा- वृद्धोक्षा** इति- विशेषणविशेष्यभावस्थले न केवलं सामानाधिकरण्यमपि तु वैयधिकरण्यमपि, तत्र वैयधिकरण्यस्थलेऽनेन समासाभावार्थमेकार्थमिति देयमेवेत्युत्तराशयः, अयं भावः- विशेषणं द्विविधं- समानाधिकरणं व्यधिकरणं चेति, समानाधिकरणं नीलो घट इति, व्यधिकरणं राज्ञः पुरुष इति, तत्र व्यधिकरणे विशेषणे 'वृद्धस्य उक्षा' इत्यत्रानेन समासो मा भूदित्येतदर्थमेकार्थमिति प्रदत्तम्, तथा च 'वृद्धोक्षा' इत्यत्र नानेन समासः, किन्तु "षष्ठ्ययत्नाच्छेषे" [ ३. १. ७६. ] इति षष्ठीसमासः। ननु तेन समासो भवतु वानेन वा कोऽत्र विशेष इत्याह- **कर्मधारये तु समासान्तः स्यादिति**- 'वृद्धस्योक्षा' इत्यतः कर्मधारयसमासे सति "जात-महद्-वृद्धादुक्ष्णः कर्मधारयात्" [ ७. ३. ९५. ] इति समासान्तेऽति सति वृद्धोक्षः' इति स्यात्, यथा जातोक्ष इति, तच्च नेष्यत इति भावः।

क्वचित् सत्यपि सर्वोपाधौ न समास इत्याह- **बहुलाधिकारात् क्वचित् समासो नेति**- "नाम नाम्नैकार्थ्ये समासो बहुलम्" [ ३. १. १८. ] इत्यतो बहुलमित्यधिकृतमिति तदिहाप्यनुवर्तते, बहुलं च चतुर्विधं, तदाह-

"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥"

इति, तत्रानेनाप्रवृत्तिमाह, तदेवोदाहरति- **रामो जामदग्न्यः** इति-जमदग्नेरपत्यं जामदग्न्यः, अत्र जामदग्न्य इति विशेषणं राम इति च विशेष्यम्, तद्धि संज्ञासामान्यं जामदग्न्य इत्यनेन दाशरथ्यादेर्व्यवच्छिद्यते, जामदग्न्य इति च राम इत्यनेन व्यवच्छिद्यते, रामादन्यस्यापि जमदग्न्यपत्यस्य भावात्, एवं परस्परं व्यवच्छेदकव्यवच्छेद्यत्वेऽपि बहुलबलान्न समासः; एवमुत्तरयोरपि ज्ञेयम्। **अर्जुनः कार्तवीर्यः** इति-कृतवीर्यस्यापत्यं कार्तवीर्यः, अर्जुनः- मध्यमः पाण्डुपुत्रः कृतवीर्यपुत्रो हैहयाधिपश्च कार्तवीर्यः- कृतवीर्यनृपात्मजाऽर्जुनस्तदन्यश्च; **दीर्घश्चारायणः**

इति-चरस्यापत्यं चारायणः, दीर्घः-आयतश्चरस्यापत्यं च, चारायणः- चरापत्यं दीर्घस्तदन्यश्च । बहुलबलात् क्वचिन्नित्यैव समासप्रवृत्तिरपीत्याह-**क्वचिन्नित्यः** इति, तदेवोदाहरति-**कृष्णसर्प** इति-समासोऽयं सर्पजातिविशेषस्य वाचकः, कृष्णवर्णयुक्तत्वात् कृष्णः, सर्पाकारयुक्तत्वात् सर्पः **लोहितशालिः** इति- समासोऽयं धान्यजातिविशेषस्य वाचकः, लोहितवर्णयुक्तत्वाल्लोहितः, शालिसदृशत्वाच्च शालिः, **गौरखरः** इति- समासोऽयं पशुजातिविशेषस्य वाचकः, गौरवर्णयुक्तत्वाद् गौरः, खरसदृशत्वाच्च खरः; **लोहिताहिः** इति-समासोऽयं सर्पजातिविशेषस्य वाचकः, लोहितवर्णयुक्तत्वाल्लोहितः, अहिसदृशत्वादहिः; **नरसिंहः** इति-समासोऽयं कृष्णावतारविशेषस्य वाचकः, देशभेदेन नराकारयुक्तत्वान्नरः, सिंहाकारयुक्तत्वात् सिंहः; **पुरुषमृगः** इति- समासोऽयं मृगजातिविशेषस्य वाचकः, पुरुषसदृशत्वात् पुरुषः, मृगाकारत्वान्मृगः; **करिमकरः** इति- कर्याकारयुक्तत्वात् करी, जलचरमकरजातित्वान्मकरः; समासोऽयं मकरजातिविशेषस्य वाचकः, **बकटिट्टिभः** इति- समासोऽयं पक्षिजातिविशेषस्य वाचकः, बकसदृशत्वाद् बकः, टिट्टिभजातीयत्वाच्च टिट्टिभः; **नकुलसर्पः** इति-समासोऽयं सर्पजातिविशेषस्य वाचकः, नकुलसदृशत्वान्नकुलः, सर्पजातीयत्वात् सर्पः, **पक्षिमार्जारः** इति- समासोऽयं मार्जारजातिविशेषस्य वाचकः, पक्षिसदृशत्वात् पक्षी, मार्जारजातीयत्वान्मार्जारः; **कुक्कुटसर्पः** इति-समासोऽयं सर्पजातिविशेषस्य वाचकः, वर्णेन रवेण च कुक्कुटसदृशत्वात् कुक्कुटः, सर्पजातीयत्वात् सर्प इति। कृष्णसर्पादौ नित्यसमासस्वीकारे किं बीजमिति चेदत्राह-**जातिविशेषवाचित्वादि**ति- कृष्णसर्पादयो हि शब्दा न कृष्णवर्णसर्पसामान्यबोधकाः, अपि तु सत्समुदायेन रूढ्या बोधस्य सर्पजातिविशेषस्य वाचकाः, तादृशी जातिश्च समुदायेनैव समस्तेन बोधयितुं शक्यते, न तु वाक्येनेत्याह-**न हि वाक्येन जातिर्गम्यते** इति-तस्या ह्यखण्डरूपत्वेन सखण्डवाक्येन बोधयितुमशक्यत्वमिति भावः । नन्वेवं कथमिहैकार्थत्वं द्वयोर्यावता विग्रहवाक्येऽपि न तयोः सह प्रयोगः ? किञ्च द्वयोर्मिलित्वैकजातिवाचकत्वेन विशेषणविशेष्यभावोऽपि दुरुपपाद एवेति कथं समासोऽपीत्यत आह- **जातिशब्दानां चावयवद्वारेण समुदायेऽपि वृत्तेः सामानाधिकरण्य**मिति, अयमाशयः- पूर्वमवयवश एव पदार्थोपस्थितिः पश्चात् सा शक्तिः समुदायपर्याप्ता भवति समासेन, तथा च या समुदाये शक्तिः साऽवयवद्वारैवायातेत्यवयवयोः सामानाधिकरण्यमस्तीत्यैकार्थ्यं भवति; अनयोः कस्य विशेष्यत्वं कस्य च विशेषणत्वमिति व्यवस्थायै प्राह-**भूयोऽवयवाभिधायिनश्च प्राधान्याद् विशेष्यत्वमितरस्य तु विशेषणत्वमिति**- तत्रावयवयोर्मध्ये यत् पदं भूयोऽवयववाचि तस्य प्राधान्येन विशेष्यत्वं, तदितरस्य च विशेषणत्वम्, तत्र कृष्णपदे केवलं रूपमेवोच्यत इति तस्याल्पावयववाचकत्वेन विशेषणत्वम्, सर्पशब्दश्च रूपातिरिक्तं सर्पमेवावयवजातमाहेति तस्य भूयोऽवयववाचकत्वेन विशेष्यत्वमिति व्यवस्थाया उपपादयितुं शक्यत्वमिति । वस्तुतस्तु स्थितस्य गतिश्चिन्तनीयेति शास्त्ररहस्यमादायैव सकलो व्यवहार उन्नेयः. तत्रेदृशेषु समासानित्यत्वे न वस्तुस्थितिः समाधातुं शक्यत इति नित्यत्वं समासस्यास्थेयम्, विग्रहस्तु समासार्थप्रदर्शनमात्रफल इति कृष्णसर्पाद्यर्थस्य स्वत एव प्रसिद्धतया न तदर्थं तत्प्रदर्शनमावश्यकमिति ।

तत्पुरुष इत्यनुवर्तते, अतः कर्मधारयः' इत्येतावन्मात्रोक्तावप्युभयोर्विधानं स्यादेवेति 'कर्मधारयश्च' इति चकारो विफल इत्याकाशङ्कायामाह- **चकारस्तत्पुरुषकर्मधारयसंज्ञासमावेशार्थ** इति-अनुवर्तते तत्पुरुषसंज्ञा, तयाऽस्याः कर्मधारयसंज्ञायाः समावेशो यथा स्यादित्येवमर्थं चकारः, उभयसंज्ञाफलं प्राग् दर्शितम्, किञ्च 'कर्मधारयश्च' इत्युभयमुत्तरत्रोपतिष्ठते स च शब्दानुवृत्तेः, असति तु चकारे 'तत्पुरुष' इति निवर्तेत विध्यन्तरोपादानात्, सति चकारे तूभयोर्विशिष्टविधानेन न निवर्त्यनिवर्तकभावः, सह प्रवृत्तिरेव स्यादित्यर्थः; यदि च चकारस्तत्पुरुष इत्यस्यानुकर्षणार्थ इत्युच्येत तदा चशब्दानुवृत्त्यभावेन *चानुकृष्टं नोत्तरत्र* इत्युत्तरत्र तत्पुरुष इति नानुवर्तेत इति विज्ञायेतेति । कर्मधारयसंज्ञाफलं दर्शयितुमाह- **कर्मधारयप्रदेशाः** इति- प्रदेशः प्रयोजनस्थानं, संज्ञया हि संज्ञिनः प्रदिश्यन्ते उच्चार्यन्तेऽत्रेति कृत्वा, **"कडारादयः कर्मधारये" इत्यादयः** इति "कडारादयः कर्मधारये" इत्यादिसूत्रेषु कर्मधारयसंज्ञाया उपयोग इत्यर्थः ॥ ३. १. ९६. ॥

## पूर्वकालैक-सर्वजरत्-पुराण-नव-केवलम् । ३ । १ । ९७ ॥

**त० प्र०** -- 'पूर्वकाल' इत्यर्थनिर्देशः पूर्वः कालो यस्यार्थस्य स-पूर्वकालः, तद्वाचि नामैकादीनि चैकार्थानि परेण नाम्ना सह समस्यन्ते, तत्पुरुषः कर्मधारयश्च समासो भवति; पूर्वकालः संबन्धिशब्दत्वादपरकालेन । पूर्वं स्नातः पश्चादनुलिप्तः-स्नातानुलिप्तः, एवं-लिप्तवासितः, कृष्टमतीकृता भूमिः, छिन्नप्ररूढो वृक्षः; एकशब्दः संख्या-ऽन्या-ऽसहाया-ऽद्वितीयेषु वर्तते, एका शाटी-एकशाटी, शाटशब्देन त्वनभिधानान्न भवति-एकः शाटः; एकर्षयः, एकचौरः, एकधनुर्धरः; सर्वशब्दो द्रव्या-वयव-प्रकार-गुणानां कार्त्स्न्ये वर्तते-सर्वशैलाः, सर्वरात्रः, सर्वान्नम्, सर्वशुक्लः; जरत्-जरद्गवः, जरद्राजः, जरद्वलिनः; पुराण-पुराणवैयाकरणः;

नव-गवोदकम्, नवोक्तिः; केवल-केवलमसहायं ज्ञानं-केवलज्ञानम्, केवलजरत्, केवलपुराणम् । एकार्थमित्येव-स्नात्वाऽनुलिप्तः, स्नात्वेत्यसत्त्ववाचिनो नानुलिप्तपदेनैकार्थ्यम्। पूर्वेणैव सिद्धे पुनर्वचनं स्पर्द्धे परमिति पूर्वनिपातस्य विषय-प्रदर्शनार्थं पूर्वा-ऽपरकालवाचिनोरद्रव्यशब्दत्वादनियमे प्राप्ते पूर्वकालवाचिन एव पूर्वनिपातनार्थं च ॥ ९७ ॥

---

**श० म० न्यासानुसन्धानम्- पूर्वकालैक०** । सूत्रे 'पूर्वकाल' इति समुदायोपादानं, नेह पूर्वशब्दः कालशब्द इति च विज्ञायते, "पूर्वापरप्रथम०" [ ३. १. १०३. ] इति सूत्रेण पूर्वशब्दस्य समासविधानात्, तत्राप्यर्थग्रहणमित्याह-**पूर्वकाल इत्यर्थनिर्देशः** इति-अर्थप्रधानो निर्देशोऽर्थनिर्देशः, एकादीनां तु *स्वं रूपं शब्दस्याशब्दसंज्ञा* इति परिभाषया स्वरूपग्रहणम्, एवमर्थ एव हि द्वैराश्येनैकादीनां द्वन्द्वं कृत्वा तेन 'पूर्वकाल' इत्यस्य द्वन्द्वः, यदि राश्येकत्वेन ग्रहणं स्यात् तदा द्वन्द्वभेदे न प्रयोजनं स्यात्; न चायमेक एव द्वन्द्वः, स्वराद्य-कारान्तत्वादेकशब्दस्य "लघ्वक्षरा० " [ ३. १. १६०. ] इति पूर्वनिपातप्रसङ्गात्; द्वन्द्वभेदे तु यद्यप्येकादेः केवलान्तस्योत्तर-पदस्य स्वराद्यदन्तत्वमक्षतमेव तथापि "लघ्वक्षरासखीदुत्स्वरा-द्यदल्पस्वरार्च्यमेकम्" [ ३. १. १६०. ] इति सूत्रे स्वराद्यद-न्तापेक्षयाऽल्पस्वरस्य परपठितत्वेनैकादिकेवलान्तोत्तरपदापेक्षया पूर्वकालशब्दस्याल्पस्वरत्वेन पूर्वकालशब्दस्यैव पूर्वनिपातो भवतीति भावः । पूर्वकाल इत्यत्र बहुव्रीहिसमास इत्यावेदना-याह- **पूर्वः कालो यस्यार्थस्य स पूर्वकालः** इति-तत्र तद्वाचिनि प्रतिपत्तिः, अर्थे कार्यासम्भवादित्याह-**तद्वाची**ति । पूर्वकाल इत्यपरकालापेक्षं, तेन तस्य समासोऽपरकालेन विज्ञायते, सम्बन्धिशब्दा हि प्रतियोगिनं सन्निधापयन्तो यदपेक्षः स्वार्थात्मलाभस्तं सन्निधापयन्ति, यथा पुत्रेण सहागत इति पुत्रः पितरमित्याह-**पूर्वकालः सम्बन्धिशब्दत्वादपर-कालेने**ति-पूर्वकालवाचि अपरकालवाचिना समस्यत इत्यर्थः ।

अर्थोदाहरणावसर इति विग्रहोदाहरति-**पूर्वं स्नातः पश्चादनुलिप्तः** इति विग्रहः, अनेन स्नातानुलिप्तार्थयोः पूर्वापरकालता दर्श्यते, स्नातश्च सः, अनुलिप्तश्च स इति सामानाधिकरण्यं च, अतः समासः-**स्नातानुलिप्तः** इति-वृत्तिस्वाभाव्यात् स्नानोत्तरमेव चन्दनादिसेवनरूपानुलेपनस्य प्रसिद्धत्वाच्च समासे पूर्वकालत्वस्यापरकालत्वस्य च पूर्वोत्तरपदा-र्थयोर्गम्यमानत्वात् तत्र पूर्वापरकालवाचिशब्दान्तराप्रवेशः, एवमुत्तरत्रापि । अतिदिशति-**एवमि**ति, **लिप्तवासितः** इति समासः, पूर्वं लिप्तः पश्चाद् वासित इति विग्रहः, **कृष्टमती-कृता इति समासः, भूमिरि**ति तस्य विशेष्यम्, पूर्वं कृष्टा पश्चान्मतीकृतेति विग्रहः, अत्र लघुन्यासः-"मतमस्या अस्तीति मतिनी क्षेत्रभूमिः, अमतिनी मतिनीकृतेति च्वौ पुंवद्भावे दीर्घे च-मतीकृता, अथवा-मतं लोष्टमर्दनं काष्ठं, तदस्यास्ति अभ्रा-दित्वादप्रत्ययः, ततोऽमता, मताकृतेति" । **छिन्नप्ररूढः** इति समासः, **वृक्षः** इति तस्य विशेष्यम्, पूर्वं छिन्नः पश्चात् प्ररूढ इति विग्रहः । अथैकशब्दोदाहरणप्रसङ्गे पूर्वं तावत् तदर्थमाह-**एकशब्दः संख्या-ऽन्या-सहाया-ऽद्विती-येषु वर्तत** इति-एतेनैकशब्दस्य चत्वारोऽर्था इति दर्शितम्, "एत्यद्वितीय इत्येकोऽसहायः संख्याप्रधानमसमानोऽन्यश्च" इति स्वोपज्ञोणादिगणविवृत्तिः, "एकोऽन्यः केवलः श्रेष्ठः, संख्या" इति स्वोपज्ञोऽनेकार्थसंग्रह, "एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु ।" इति मेदिनी, "एकं श्रेष्ठं विजानीयादन्य-केवलयोरपि ।" इति शाश्वतः, "एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायां च प्रयु-ज्यते ॥" इत्यपि क्वचित्, एवं सति चतुर्भ्योऽर्थेभ्यो न्यूनत्वे तद्भिन्नतरोऽधिकत्वे च तत्र समावेशोऽवसेयः । उक्तेषु चतुर्षु क्रमेणोदाहरति-**एका शाटीति** विग्रहः, **एकशाटी**ति संख्यायां समासः, तुल्यन्यायेन 'एकः शाटः' इत्यत्रापि संख्या-वाचिना एकशब्देन समासः प्राप्त एव, तदभावे हेतुमाह-**शाटशब्देनानभिधानान्न भवती**ति, **एकर्षयः** इति समासोऽन्यार्थे, एके च ते ऋषयश्चेति विग्रहः, **एकचौरः** इति समासोऽसहायार्थे, एकश्चासौ चौरश्चेति विग्रहः, **एक-धनुर्धरः** इति समासोऽद्वितीयार्थे, एकश्चासौ धनुर्धरश्चेति विग्रहः, अथ सर्वशब्दोदाहरणप्रसङ्गे पूर्वं तावत् तदर्थमाह-**सर्वशब्दो द्रव्या-ऽवयव-प्रकार-गुणानां कार्त्स्न्ये वर्तते** इति-सर्वेषां द्रव्याणामवयवानां प्रकाराणां गुणानां च साकल्ये सर्वशब्दो वर्तत इत्यर्थः, क्रमेणोदाहरति-**सर्वशैलाः** इति समासः, सर्वे च ते शैला इति विग्रहेण शैलद्रव्यव्यक्तीनां साकल्यं प्रतीयते; **सर्वरात्रः** इति समासः, सर्वा चासौ रात्रिश्चेति विग्रहेणैकस्या एव रात्रेर्यामचतुष्टयावयवसाकल्यं प्रतीयते; **सर्वान्नमि**ति समासः, सर्वं च तदन्नं चेति विग्रहे-णान्नप्रकारसाकल्यं प्रतीयते, **सर्वशुक्लः** इति समासः, सर्व-श्चासौ शुक्लश्चेति विग्रहेण शुक्लगुणस्य सर्वावयवव्याप्तिरूपं साकल्यं प्रतीयते । 'जरत्'शब्दमुदाहर्तुमवतारयति-**जरदि**ति, जरं-श्चासौ गौश्चेति विग्रहे **जरद्गवः** इति समासः, अत्र "गोस्तत्पु-रुषात्" [ ७. ३. १०५ ] इति समासान्तोऽट् भवति; जरंश्चासौ राजा चेति विग्रहे **जरद्राजः** इति समासः, अत्र "राजन्-सखेः" [ ७. ३. १०६ ] इति समासान्तोऽट् भवति; जरंश्चासौ वलिनश्चेति विग्रहे **जरद्वलिनः** समासः, वलिः-त्वक्संकोचोऽस्यास्तीति वलिनः' अभ्रादित्वान्नः । पुराणशब्दमु-

दाहर्तुमवतारयति-**पुराणेति**, पुराणश्चासौ वैयाकरण इति विग्रहे **पुराणवैयाकरणः** इति समासः। नवशब्दमुदाहर्तुमवतारयति-**नवेति**, नवं च तदुदकं चेति विग्रहे **नवोदकमिति** समासः, नवा चासावुक्तिश्चेति विग्रहे **नवोक्तिरिति** समासः। केवलशब्दमुदाहर्तुमवतारयति-**केवलेति, केवलमसहायं ज्ञानमिति** विग्रहः, **केवलज्ञानमिति** च समासः। केवलं च तद् जरच्चेति विग्रहे **केवलजरदिति** समासः, केवलं च तत् पुराणं चेति विग्रहे **केवलपुराणमिति** समासः, अत्र प्रथमोक्तत्वेऽपि जरत्पुराणशब्दयोर्न प्राक् प्रयोगः, किन्तु केवलशब्दस्यैवेत्यग्रे स्फुटीभविष्यति। एकार्थमित्यस्येहाप्यावश्यकत्वमित्याह-**एकार्थमित्येवेति**, तद्व्यावर्त्यमाह-**स्नात्वानुलिप्त** इति-स्नात्वेति पूर्वकालवाची भवति, किन्तु अनुलिप्तेन नैकार्थम्, अत एकार्थमिति वचनात् समासो न भवति, एकार्थत्वाभावमाह-**स्नात्वेत्यसत्त्ववाचिनो नानुलिप्तपदेनैकार्थ्यमिति**-स्नात्वेति पूर्वकालक्रियामाह, न द्रव्यम्, अनुलिप्तेति तु द्रव्यमाह, अतो भिन्नार्थाविमौ नैकार्थावित्यर्थः, समासाभावाच्चैकपदत्वाभावः। नन्विह स्नातानुलिप्त इत्यादौ स्नातार्थेन विशिष्टोऽनुलिप्तायर्थोऽवगम्यत इति पूर्वपदार्थो विशेषणमुत्तरपदार्थो विशेष्यः, अस्ति च सामानाधिकरण्यमिति "विशेषणं विशेष्येण०" [ ३. १. ९६ ] इति पूर्वेणैव किं न सिद्ध्यति?, यदि च स्नातानुलिप्तादि क्रान्तमिति "क्तं नञादिभिन्नैः" [ ३. १. १०५. ] इति वचनान्न सिध्येत् तदा पूर्वकालग्रहणमेव कर्तव्यमिति चेत्? अत्राह-**पूर्वेणैव सिद्धे** भवदुक्तरीत्याभिमतप्रयोगाणां सिद्धावपि, **पुनर्वचनं** प्रकृतसूत्रसूत्रणरूपं वचनं न निरर्थकमपि तु सार्थकं, कुतः? **स्पर्धे परमिति पूर्वनिपातस्य विषयप्रदर्शनार्थमिति**-स्नातानुलिप्त इत्यादौ यत्र पूर्वोत्तरपदे गुणक्रियाशब्दे तत्र पूर्वसूत्रेण समासे खञ्जकुण्टादिवदनियमेन निपातः स्यात्, अतः पूर्वकालादीनामन्येन समासे पूर्वकालादीनामेव प्रथमोक्तत्वात् पूर्वनिपातो यथा स्यात्, परेण परेण समासे परस्येति पूर्वप्रयोगव्यवस्थार्थं वचनमिदं सूत्रम्, यथा च गुणक्रियाशब्दार्थापेक्षया जात्यर्थस्य विशेष्यत्वविवक्षैव लोके, न विशेषणत्वविवक्षा, तथा पूर्वकालाद्यपेक्षयाऽन्यस्यापि, बहुलमित्यधिकारः शिष्टप्रयोगमनुसारयतीति पूर्वप्रयोगव्यवस्थाप्रतिपत्तिर्गरीयसीति प्रपञ्च आरभ्यते। प्रकृतसूत्राभावे एकादिशब्दानां क्वचित् द्रव्यशब्देन समासे पूर्वप्रयोगो नियतो भवति, किन्तु पूर्वकालवाचिनोऽपरकालवाचिनैव समासात् तयोश्च क्रियाशब्दत्वेनाद्रव्यशब्दत्वात् कुत्रापि पूर्वनिपातो न नियत इत्यावेदनायाह-**पूर्वापरकालवाचिनोरद्रव्यशब्दत्वादनियमे प्राप्ते पूर्वकालवाचिन एव पूर्वनिपातार्थं चेति**। स्वीकृते किल प्रकृते सूत्रे पूर्वकालादिशब्दानां समासे



प्रकृतसूत्रस्यैव प्रवृत्तिर्न पूर्वसूत्रस्य, सापि प्रवृत्तिरनवकाशबलाच्च स्पर्धे परमिति न्यायबलात्, प्रवृत्तौ च प्रथमोक्ततया पूर्वकालादिशब्दानां फलभूतः पूर्वनिपातो भवति। ननु च यदि न स्पर्धबलावलम्बनं तदा वृत्तिगता स्पर्धे परमित्युक्तिः कथं संगतेति चेत्? उच्यते-शब्दस्पर्धमाश्रित्य सा सुसंगतैव, तथाहि-प्रकृतसूत्रे ये शब्दा निहिताः सन्ति तेषां मिथः समासे सति सूत्रमध्ये यः शब्दोऽग्रे निहितोऽस्ति तस्य पूर्वं निपातो भवति, यश्च पूर्वं निर्दिष्टः स परतो भवति, स्पर्धे परमिति न्यायात्, यथा-केवलपुराणमित्यादिषु ॥ ३. १. ९७ ॥

## दिगधिकं संज्ञा-तद्धितोत्तरपदे । ३ । १ । ९८ ॥

त० प्र०—दिग्वाचि अधिकमित्येतच्च नामैकार्थं परेण नाम्ना सह समस्यते, संज्ञायां तद्धिते च प्रत्यये विषयभूते उत्तरपदे च परतः; स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। दक्षिणाः कोशलाः-दक्षिणकोशलाः; उत्तरकोशलाः, दक्षिणपञ्चालाः, उत्तरपञ्चालाः, एवंनामानो जनपदाः; पूर्वेषुकामशमी, अपरेषुकामशमी, पूर्वकृष्णमृत्तिकाः, अपरकृष्णमृत्तिकाः, एवंनामानो ग्रामाः, संज्ञायां नित्यसमासः, नहि वाक्येन संज्ञा गम्यते, पूर्वोत्तरविभागप्रदर्शनार्थं तु विग्रहवाक्यम्; तद्धिते-दक्षिणस्यां शालायां भवः-दाक्षिणशालः, एवम्-औत्तरशालः, पौर्वशालः, आपरशालः; अधिकं खल्वपि-अधिकया षष्ट्या क्रीतः, अधिकां षष्टिं भूतो भावी वा-अधिकषाष्टिकः, एवम्-अधिकसाप्ततिकः, अयमपि नित्यः समासः, नहि तद्धिते वाक्यमस्ति, उत्तरपदे-दक्षिणो गौर्धनमस्य-दक्षिणगवधनः, एवम्-उत्तरगवधनः, पूर्वगवीप्रियः, अपरगवीप्रियः, अधिकगवप्रियः, अधिकगवीप्रियः, एषु तत्पुरुषलक्षणः समासान्तः; उत्तरपदेऽपि नित्यं समासः, त्रयाणामेकार्थीभाव एवोत्तरपदसंभवात् तत्र च द्वयोर्व्यपेक्षाभावात्। संज्ञादिग्रहणं किम्? उत्तरा वृक्षाः। "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इत्येव सिद्धे नियमार्थं वचनम्-दिगधिकं संज्ञातद्धितोत्तरपद एव समस्यते नान्यत्रेति। दक्षिणा गावोऽस्य सन्ति-दक्षिणगुरित्यादौ सन्तीत्येतदनपेक्ष्यान्तरङ्गत्वेन बहुव्रीहिभावादुक्तार्थत्वेन मत्वर्थीयतद्धितविषयभाव एव नास्तीत्यनेन समासो न भवति ॥ ९८ ॥

**श० म० न्यासानुसन्धानम्-दिगधिकं०।** **दिगिति** दिशि वाचकं विज्ञायत इत्याह-**दिग्वाचीति**-एतदपि न दिश्येव वर्तमानं विज्ञायते, अपि तु तद्द्वारेण जन-

पदादौ वस्त्वन्तरेऽपि, दक्षिणकोशलादौ तथैव सम्भवात् । **अधिकमिति** तु स्वरूपग्रहणं, तदाह–**अधिकमित्येतच्चेति**। **संज्ञा-तद्धितोत्तरपदे** इति–संज्ञा च तद्धितश्च उत्तरपदं च संज्ञातद्धितोत्तरपदं तस्मिंस्तथा, इह सप्तम्याधारसामान्योपादा-5नेऽपि तत्र भेदो यथालक्ष्यं व्यवतिष्ठते, एकापि सप्तमी विषयभेदात् प्रकृतिभेदाद् वा भिद्यत इति सिद्धान्तात्, अत आह–**संज्ञायां तद्धिते च प्रत्यये विषयभूते उत्तरपदे च परतः** इति–'संज्ञातद्धितोत्तरपदे' इत्यत्र द्वन्द्वान्ते श्रुतायाः सप्तम्याः प्रत्येकं सम्बन्धे 'संज्ञायां तद्धिते उत्तरपदे च' 10इत्येवं क्रमेण सम्बन्धो भवति, तत्र संज्ञातद्धितयोः सप्तमी विषयार्था, उत्तरपदे च सप्तमी सामीप्यार्था विज्ञेया, संज्ञायतेऽनयेति संज्ञा, सा तदतदात्मिका सामान्यरूपस्य समासस्य, संज्ञाविशेषात्मकः साहचर्यात् संज्ञायत इति संज्ञार्थो वा, वैषयिकमधिकरणम्, अनन्यत्र भावो विषयः, यथा मत्स्यस्य 15विषयो जलमिति, तस्मै प्रभवतीति वैषयिकम्, संज्ञाया विषयत्वं तु समासात् पूर्वं संज्ञात्वाभावेऽपि भाविसंज्ञात्वसमाश्रयणात् । तद्धित इत्यस्य व्यक्त्यर्थं प्रत्यय इति, विषयभूते–समासार्थस्य तद्धितार्थो विषयभूतः, तत्सम्बद्धस्यैव तस्याभिधानात्, तच्चाभिधानं यत्र तद्धितो लुप्यते "द्विगोरनपत्ये यस्वरादेर्लु-20बद्विः" [ ६. १. २४. ] इत्यादिना तत्र समासेनैव तद्धितार्थस्याप्यभिधानम्, यत्र तु तद्धितो न लुप्यते तत्र सहाभिधानं भवति, समासश्च तद्धितार्थसम्बद्धं स्वमर्थमाह, तद्धितश्च समासार्थसम्बद्धं स्वमर्थं युगपदित्येष समासं प्रति तद्धितस्य विषयभावः, अथवा न विना तद्धितोत्पत्त्याऽस्य प्रयोगः, 25तद्धिते कर्तव्ये करिष्यत इति बुद्धावास्थितेऽयं समासः, कृते समासे ततस्तद्धित उत्पन्ने तस्य लोपेनालोपेन वा प्रयोग इत्येष विषयभावः । तद्धिते परे इति परार्था [ सामीप्यार्था ] सप्तमी तु न संगच्छते, समासनिमित्तो हि स [ तद्धितः ] सति हि समासे ततः सम्भवति, अन्यथा दक्षिणकाल इत्यादेरसिद्धेः, 30किञ्चान्योऽन्याश्रयोऽपि भवति– सति प्रत्यये तत्परत्वं सति समासे चैकपद्यात् समुदायात् तद्धितोत्पत्तिरिति तद्वारणाय विषयत्वार्थसप्तम्याः स्वीकारस्यावश्यकत्वम् । अत्र केचित्– "यदि स्वत एव 'तद्धिते परे' इति वचनात् समासार्थाद् वाक्यादपि तद्धितो विज्ञायेत, तद्धितेऽपि परे इति शक्यं 35विज्ञातुम्, न चैवं विज्ञायमाने दक्षिणा गावोऽदस्य सन्ति–दक्षिणगुः पञ्चगुरित्यत्र मतुः प्राप्नोति, अस्तीत्येतदनपेक्षतयाऽन्तरङ्गत्वाद् मतेर्बाधनेन बहुव्रीहिभावात्" इत्याहुः । यदि तद्धित इति तद्धितार्थेऽभिधेये इत्येवं विज्ञायेत तदा पाञ्चनापितिरित्यादौ तद्धितो दुर्लभः स्यात्, तदर्थस्य 40समासेनैवोक्तत्वात् । अयमाशयः– यदि तद्धितार्थेऽभिधेये समासः क्रियते तदा तेन समासेन तद्धितप्रत्ययार्थस्याभिहितत्वात् प्रकृत्यर्थातिरिक्तप्रत्ययार्थाभावात् पुनरवत्याद्यर्थप्रत्यायकोऽणादिप्रत्ययो न स्यात्, 'उक्तार्थानामप्रयोगः' इति न्यायात्, यद्यपि स्वार्थिकप्रत्ययस्थले प्रकृत्यर्थातिरिक्तार्थाभावेऽपि शास्त्रप्रामाण्यात् प्रत्ययो भवति, तथाप्यर्थविशेषवाचकप्रत्ययस्थले प्रकृत्यर्थातिरिक्त 45एव प्रत्ययार्थोऽपेक्षितः तत्र प्रत्ययार्थे समासस्यैव विधानात्, नास्ति च प्रकृत्यर्थातिरिक्त प्रत्ययार्थः, अत एव चित्रगुरित्यादौ बहुव्रीहिणोक्तत्वान्मत्वर्थीयप्रत्ययो न भवति, एवमत्रापि ।

अथोदाहरणावसर इति यथोद्देशन्यायेन पूर्वं तावत् संज्ञायां विगृह्योदाहरति–**दक्षिणाः कोशलाः** इति विग्रहः, **दक्षिण-50कोशलाः** इति च समासः, सत्यपि समुदायसंज्ञात्वेऽवयवार्थानुगमोऽप्यस्तीति दिग्वाची च दक्षिणशब्द इति भवति समासः, एवमुत्तरत्र; **उत्तरकोशलाः** इति समासः, उत्तराश्च ते कोशलाश्चेति विग्रहः; **दक्षिणपञ्चालाः** इति समासः, दक्षिणाश्च ते पञ्चालाश्चेति विग्रहः; **उत्तरपञ्चालाः** इति समासः, उत्त-55राश्च ते पञ्चालाश्चेति विग्रहः; केषामिमाः संज्ञा इत्याह–**एवंनामानो जनपदाः** इति **पूर्वेषुकामशमीति** समासः, पूर्वा चासौ इषुकामशमी चेति विग्रहः; **अपरेषुकामशमीति** समासः, अपरा चासौ इषुकामशमी चेति विग्रहः; **पूर्वकृष्णमृत्तिका** इति समासः, पूर्वा चासौ कृष्णमृत्तिका चेति विग्रहः, 60इतोत्तरत्र च क्वचिद् बहुवचनान्तः पाठः; **अपरकृष्णमृत्तिका** इति समासः, अपरा चासौ कृष्णमृत्तिका चेति विग्रहः; केषामिमाः संज्ञा इत्याह–**एवंनामानो ग्रामाः** इति । संज्ञात्वनिमित्तकमेवैषां नित्यसमासत्वमपीत्याह–**संज्ञायां नित्यसमासः** इति, तत्रापि हेतुमाह–**नहि वाक्येन संज्ञा गम्यते** इति–65 वाक्येन हि पदैः पृथगेव स्वार्थ उपस्थाप्यते, न तु समुदितरूपेणाखण्डत्वेन, संज्ञायाश्चाखण्डत्वेनैकार्थोपस्थितिजनकता प्रसिद्धा, तदर्थं समासस्य नित्यत्वमास्थेयमिति भावः । नन्वेवं तर्हि 'दक्षिणाः कोशलाः' इति विग्रहवाक्यं कथमुपन्यस्तम् 'अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा' इत्यभियुक्तोक्त्या 70तत्रेदृशवाक्येन विग्रहप्रदर्शनस्यानौचित्यादिति चेत् ? अत्राह–**पूर्वोत्तरपदविभागदर्शनार्थं तु विग्रहवाक्यमिति**– विविच्य गृह्यतेऽनेनेति विग्रहः, तादृशं च वाक्यं विग्रहवाक्यम्, इदमिह पूर्वपदमिदमुत्तरपदं समानाधिकरणम्, अनयोः समास इति मन्दधियामव्यामोहाय पूर्वोत्तरपदविभागप्रदर्शनार्थं विग्रह-75वाक्यप्रदर्शनं क्रियते ।

तद्धितविषये उदाहर्तुमवतारयति–**तद्धिते** इति, **दक्षिणस्यां शालायां भवः** इति विग्रहः, **दक्षिणशालः** इति च समासः, अत्र "दिक्पूर्वादनाम्नः" [ ६. ३. २३. ] इति तद्धिते णप्रत्यये विषयभूते पूर्वोत्तरपदयोः समासः, ततो 80

णप्रत्ययः, स यदि विभक्त्यन्तादुच्यमानः समासार्थमेव विभक्तिमाश्रित्य क्रियेत तदा "प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इत्युत्तरपदमेव तद्विभक्त्यन्तस्य प्रकृतिः स्यान्न समासः, तत्र प्रकृतेरादेरुच्यमाना वृद्धिरुत्तरपदस्यैव स्यान्न 5 समासस्यादेः, अतः समासाद् विभक्तिमुत्पाद्य क्रियते, तत्र समासस्तद्विभक्त्यन्तः प्रकृतिकार्यं समासस्यैव भवति, तत्र दक्षिणस्यां शालायां भव इति तद्धितार्थेन सह विग्रहप्रदर्शनं विना प्रत्ययेनास्य समासस्य प्रयोगाभावान्न समासेनानेन तद्धितविग्रहो भवति, दर्शनीयश्च तद्धितार्थः, तद्धितविषयभाव 10 दर्शनाय, ईदृश एव चास्यार्थो यत् सततं तद्धितार्थसम्बन्ध एवेति क्रियते । तद्धितविधौ विभक्तिनिर्देशो विभक्त्यर्थोपलक्षणः, समासश्चायं विभक्त्यर्थप्रधान इति समासाद् विभक्तिमुत्पाद्य तद्धितः क्रियते, एवमुत्तरत्रापि ज्ञेयम् । अतिदिशति- **एवमिति, औत्तरशालः** इति समासः, उत्तरस्यां शालायां 15 भव इति विग्रहः; **आपरशालः** इति समासः, अपरस्यां शालायां भव इति विग्रहः । दिग्वाचिशब्दमुदाहृत्याथाधिकशब्दमुपाहर्तुमवतारयति- **अधिकं खल्वपीति, अधिकया षष्ट्या क्रीतः** इति विग्रहः, तत्र "मूल्यैः क्रीते" [ ६. ४. १५० ] इतीकणि, **वा** अथवा **अधिकां षष्टिं भूतो 20 भावी**ति विग्रहः, तस्मिन् "तं भाविभूते" [ ६. ४. १०६. ] इतीकणि- **अधिकषाष्टिकः** इति समासः, अत्र "मानसंवत्सरस्या०" [ ७. ४. १९. ] इत्युत्तरपदवृद्धिः; अतिदिशति- **एवमिति, अधिकसाप्ततिकः** इति समासः, विग्रहस्तु- अधिकया सप्तत्या क्रीत इति, अधिकां सप्ततिं भूतो भावी 25 वेति वा । **अयमपि नित्यसमासः** इति-यस्तद्धिते समासः सोऽपीत्यर्थः, अपिशब्देन संज्ञासमासस्याम्रेडनम्, तत्र हेतुमाह- **नहि तद्धिते वाक्यमस्तीति**- तद्धितो हि विभक्त्यन्तादुत्पद्यते, न वाक्यं विभक्त्यन्तं यतस्तद्धितविषयं वाक्यं स्यात्, अतस्तद्धिते नित्य एव समासः, दक्षिणस्यां शालायां 30 भव इति विग्रहवाक्यं तु तद्धितप्रत्ययवैकल्पिकत्वनिमित्तं, न तु समासवैकल्पिकत्वमित्यर्थः ।

उत्तरपदे उदाहर्तुमवतारयति- **उत्तरपदे** इति, **दक्षिणो गौर्धनमस्ये**ति विग्रहः, **दक्षिणगवधनः** इति च समासः, अयं त्रिपदी बहुव्रीहिः, तत्र धनेत्युत्तरपदं, समासे ह्यन्त्यं पदमु- 35 त्तरं विज्ञायते, उत्तरं हि पदमुत्तरपदम्, तस्मिन् परतः दक्षिणगोशब्दयोस्तत्पुरुषसमासव्यपदेशः, तत्पुरुषत्वाच्च ततः "गोस्तत्पुरुषात्" [ ७. ३. १०५. ] इति समासान्तेऽटि ओकारस्यावादेशः, अत्रोत्तरपदस्य परत्वं गोशब्दापेक्षया दक्षिणगोसमुदायापेक्षया वा ज्ञेयम्, न तु दक्षिणापेक्षया, यद्यपि च त्रयाणां पदाना- 40 मन्यपदार्थे एकार्थीभावो न द्वयोः पदयोः पृथगस्ति, तथा च होतृ-पोतृ-नेष्टोद्गातार इति द्वयोर्द्वयोर्द्वन्द्व इति विवक्षान्तरे विज्ञायते, तथापि 'उत्तरपदे समासो भवति' इति वचनप्रामाण्यात् भवति, एवमुत्तरत्रापि । अतिदिशति- **एवमिति, उत्तरगवधनः** इति समासः, उत्तरो गौर्धनमस्येति विग्रहः, शेषं प्राग्वदवसेयम्, **पूर्वगवीप्रियः** इति समासः, पूर्वा गौः प्रियाऽस्येति विग्रहः, 45 इह पूर्वस्य पदद्वयस्य तत्पुरुषत्वात् समासान्तोऽट्, कर्मधारयत्वाच्च "पुंवत् कर्मधारये" [ ३. २. ५७. ] इति पूर्वाशब्दस्य पुंवद्भावः, गोशब्दस्य तु "नाप्प्रियादौ" [ ३. २. ५३. ] इति निषेधात् "परतः स्त्री पुंवत्०" [ ३. २. ४९ ] इति पुंवद्भावो न भवति, किन्तु स्त्रीत्वमेव, तथा च स्त्रित्वादटः समासान्तस्य च 50 टित्वात् "अणजे०" [ २. ४. २०. ] इति ङीः "प्रियः" [ ३. १. ५७. ] इति प्रियशब्दस्य पूर्वनिपातविकल्पनादेकदा पूर्वनिपातो न भवति, "गोश्चान्ते०" [ २. ४. ९६. ] इत्यन्ते ह्रस्वः, एवमुत्तरत्रापि, इह लघुन्यासकार एवमाह "पूर्वगवीप्रिय इति मतान्तरेणोदाहरणं, स्वमते अणाद्यन्तान्नाम्नो ङीरुक्तः, अत्र 55 तु पूर्वगवीप्रिय इत्येवंरूपस्य नामत्वे ङीर्न स्यात्" इति, किञ्च 'राजपुरुषः' इत्यत्र नामावयवस्यापि पूर्वावस्थागतनामत्वमादाय नलोपो विधीयत एव, तथा प्रकृतेऽपि नामत्वे काऽऽनिरित्यपरे **अधिकगवप्रियः** इति समासः, अधिको गौः प्रियोऽस्येति विग्रहः; **अधिकगवीप्रियः** इति समासः, अधिका गौः 60 प्रियाऽस्येति विग्रहः, शेषं प्राग्वत् । उत्तरपदे तत्पुरुषसमासविधानं विकलं बहुव्रीहिणैकपद्यसम्भवादिति शङ्कामपनुदति- **एषु तत्पुरुषलक्षणः समासान्त** इति, तथा च समासान्तविधानमेवोत्तरपदे तत्पुरुषसमासविधानफलमिति भावः । तत्रापि च समासस्य नित्यत्वमेवेत्याह- **उत्तरपदेऽपि नित्यसमासः** 65 इति, किं तत्र बीजमित्याह- **त्रयाणामेकार्थीभाव एवोत्तरपदसम्भवादिति**- उत्तरपदनिमित्तकसमासे हि पदत्रयस्य सत्तावश्यकी, यावच्चैकार्थीभावो न भवेत् तावत् पूर्वोत्तरपदादिव्यवहारानुपपत्तिरिति तदर्थं समुदाये एकार्थीभावस्वीकार आवश्यकः, समुदाये चैकार्थीभावसत्त्वे तदेकदेशे व्यपेक्षाश्रयणस्या- 70 सम्भव एवेत्याह- **तत्र व्यपेक्षाभावादिति,** अयमत्र भावः- त्रिपदे बहुव्रीहावुत्तरपदे परे द्वयोस्तत्पुरुषसमासः प्रकृतसूत्रेण विधीयते समासान्तविधानार्थम्, तत्र तत्पुरुषसमासगतपदयोः पृथग् विग्रहवाक्यं कल्पयितुं न शक्यते, तन्मात्रे व्यपेक्षारूपसामर्थ्यस्य कल्पयितुमशक्यत्वात्, समाससंज्ञायां कृतायां हि 75 उत्तरपदत्वं सम्भाव्यते, उत्तरपदशब्दस्य समासचरमावयवे रूढत्वात्, कृतायां च तस्यामेकार्थीभावस्य जातत्वेन तदन्तर्गतयोः पदयोर्व्यपेक्षाया विरुद्धत्वेनाश्रयितुमशक्यत्वम्, एकार्थीभावः व्यपेक्षयोः परस्परप्रतिक्षेपकत्वात्, व्यपेक्षा हि पृथगर्थानां पदानामाकाङ्क्षावशात् परस्परं सम्बन्धः, एकार्थीभावश्चैकोपस्थितिजनकत्वे पदानां पृथगर्थाभावः स्पष्ट एवेति । 80

पदकृत्यं पृच्छति–**संज्ञादिग्रहणं किमिति**–दिगधिकयोः प्राक्प्रयोगनियमार्थं "दिगधिकम्" इत्येव सूत्रं "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इत्यस्य बाधनार्थं विधीयतां, संज्ञादिग्रहणं विफलमिति प्रश्नाशयः । संज्ञादीनामभावे समासो नेष्ट इत्याशयेनोत्तरयति–**उत्तरा वृक्षाः** इति–संज्ञादिग्रहणाभावेऽत्रापि समासः स्यादित्यर्थः । नन्वत्रानेन समासो मा भूत्, अपि तु "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इत्यनेन भवतु नामेत्याह–**"विशेषणं विशेष्येण" इत्येव सिद्धे नियमार्थं वचनमिति ।** नियमस्वरूपमाह–**दिगधिकं संज्ञातद्धितोत्तरपद एव समस्यते नान्यत्रेतीति**–तथा च नियमसामर्थ्यादिह "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इत्यनेनापि समासो न भवतीत्यर्थः । कर्मधारयान्मत्वर्थीयो भवतु बहुव्रीहिर्वेत्याशङ्कां समाधातुमाह–**दक्षिणा गावोऽस्य सन्तीत्यादि**, अयमाशयः–मत्वर्थीयः प्रत्ययो बहिर्भूतमस्त्यर्थमपेक्षते इति बहिरङ्गः, बहुव्रीहिस्तु तदनपेक्षोऽन्तरङ्ग इति बहुव्रीहिरेव भवति, न तु तद्धितार्थे कर्मधारयं विधाय मत्वर्थीयप्रत्ययः * असिद्धं बहिरङ्गमन्तरङ्गे * इति न्यायात्, अत एव "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकरः' इति व्युत्पत्तिरभियुक्तानाम्, **अनेन समासो न भवतीति**–दक्षिणगुरित्यत्रानेन न समासः, किन्तु "एकार्थं चानेकं च" [ ३. १. २२. ] इत्यनेन बहुव्रीहिसमासः, "गोश्चान्ते ह्रस्वो०" [ २. ४. ९६. ] इत्यनेनान्ते ह्रस्वत्वं च भवति, यदि प्रकृतसूत्रेण समासः स्यात् प्राग्वदटि समासान्ते 'चित्रगव' इत्यकारान्तता प्रसज्येतेत्यर्थः ॥ ३. १. ९८. ॥

## संख्या समाहारे च द्विगुश्चानाम्न्यम् । ३ । १ । ९९ ॥

**त० प्र०–अनेकस्य कथञ्चिदेकत्वं समाहारः, संख्यावाचि नाम परेण नाम्ना सह समस्यते, संज्ञा–तद्धितयोर्विषयभूतयोरुत्तरपदे परे समाहारे चाभिधेये स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति, अयमेव चानाम्नि–असंज्ञायां द्विगुसंज्ञश्च भवति । संज्ञायाम्–पञ्चाम्राः, दशाम्राः पञ्चर्षयः, सप्तर्षयः, दशार्हाः, पञ्चवटाः, दशवटाः,** फलित एकः **पञ्चाम्रः,** पुष्पितौ द्वौ **पञ्चाम्रौ** उदितास्त्रयः **सप्तर्षयः; तद्धिते–द्वयोर्मात्रोरपत्यं–द्वैमातुरः, पाञ्चनापितिः, पञ्चसु कपालेषु संस्कृत ओदनः–पञ्चकपाल ओदनः, पञ्चभ्यो जनेभ्यो हितः–पञ्चजनीनः,** अध्यर्धेन कंसेन क्रीतः-**अध्यर्धकंसः, एवम्–अध्यर्धशूर्पः,** अर्धतृतीयैः **शूर्पैः** क्रीतः–**अर्धतृतीयशूर्पः, एवम्–अर्धपञ्चमशूर्पः, उत्तरपदे–पञ्च गावो धनमस्य–पञ्चगवधनः,** पञ्च नावः प्रिया यस्य स–**पञ्चनावप्रियः,** द्वे अहनी जातस्य–**द्व्यह्नजातः,** अध्यर्धा नौर्धनमस्य–**अध्यर्धनावधनः,** अर्धतृतीया नावो धनमस्य–**अर्धतृतीयानावधनः; समाहारे–पञ्चानां पूलानां समाहारः–पञ्चपूली, एवं दशपूली, पञ्चानां राज्ञां समाहारः–पञ्चराजी, एवं–दशराजी, पञ्चकुमारि, दशकुमारि, अध्यर्धानां पूलानां समाहारः–अध्यर्धपूली, अर्धपञ्चमपूली । समाहारे चेति किम् ? अष्टौ प्रवचनमातरः, "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इत्यादिनापि न भवति, नियमार्थत्वादस्य । एकस्य समाहारायोगादपूपेन समासे कथमेकापूपी ? एकस्याप्यनेकपर्यायोपनिपातिनोऽनेकत्वसंभवे समाहारोपपत्तेः । द्विगुश्चेति चकारः तत्पुरुषकर्मधारयसंज्ञासमावेशार्थः । अनाम्नीति किम् ? पञ्चर्षीणामिदं–पाञ्चर्षम्, एवं–दाशार्हम्, अत्र द्विगुत्वेऽनपत्यप्रत्ययस्य लुप् स्यात् । अयंग्रहणमुत्तरत्र द्विगुश्चेत्यस्यानुवृत्त्यर्थम् । द्विगुप्रदेशाः– "द्विगोः समाहारात्" [ २. ४. २२. ] इत्यादयः ॥ ९९ ॥**

---

**श० म० न्यासानुसन्धानम्–संख्या समाहारे०** समाहारशब्दः कर्मसाधनः, तथाहि–समाह्रियत इति समाहारः, कर्मणि घञ्, यथान्यत्र– को भवता लाभो लब्धः, को भवता दायो दत्त इति केचित् । तत्र एवं च, समाहृताः समाहारपदवाच्याः, तथा सति पञ्च पूलाः समाहृताः पञ्चपूली, दश पूलाः समाहृता दशपूलीत्यादौ समासार्थस्य बहुत्वाद् बहुवचनं प्रसज्येत, नैकवचनम्; तथा पञ्च कुमार्यः समाहृताः पञ्चकुमारी दशकुमारीत्यत्र "गोश्चान्ते ह्रस्वो०" [ २. ४. ९६. ] इति ह्रस्वोऽपि न स्यात्, समाहारोपसर्जनस्य कुमार्यर्थस्यैवाभिधानात् कुमार्यर्थस्य चागौणत्वात् ।

"पात्रादिवर्जितादन्तोत्तरपदसमाहारे ।
द्विगुरत्नावन्तान्तो वान्यस्तु सर्वो नपुंसकः" ॥ १ ॥

इति नपुंसकत्वमत्र नास्ति, पुंल्लिङ्गाविमौ, समाहारो बहुलमिति तत्रोच्यते, [ मतान्तरे स्त्रीपुंस्त्वस्यापि स्वीकारात् ] अतः "क्लीबे" [ २. ४. ९७. ] ह्रस्वः । अतः कर्मसाधनः समाहारशब्दो नात्राश्रयितुं शक्यः ।

एवं तर्हि भवसाधनोऽयं समाहारशब्दः– समाहरणं समाहार इति, तत्र समाहृतोपसर्जनस्य समाहारस्यैकस्याभिधानादेकवचनं ह्रस्वश्चेति सर्वमुपपद्यते । ननु चैवं विज्ञायमाने पञ्चानां खट्वानां समाहारः पञ्चखट्वेत्यत्र 'द्विगुरत्नावन्तान्तो वा' इति स्त्रीत्वे "गोश्चान्ते ह्रस्वः" [ २. ४. ९६. ] इति ह्रस्वेऽकारान्तो द्विगुरिति "द्विगोः समाहारात्" [ २. ४. २२. ] इति ङ्यां पञ्चखट्वीति स्यात्, सत्यम्– एवमिष्यते– पञ्चखट्वीति, न तु पञ्चखट्वेति, तस्माददोषः । तथापि 'पञ्चपूलीमानय' इति

चोदिते पूलानामानयनं नोपपद्यते, अचोदितत्वादर्थान्तरवत्, समाहारो ह्यत्र पूलोपसर्जन आनेयतया चोद्यते, न पूलाः, उच्यते– तद्धर्मे क्रियायोगितया चोदिते तत्र तदसम्भवे तद्धर्मिणि तत्प्रतिपत्तिर्भवति, जातिचोदनायां च गौरानीयतामिति व्यक्तौ प्रतीतिः। न च पूलेष्वानीयमानेषु समाहारो नानीतो भवति, तत्र पूलानयनं तत्समाहारानयन उपाय इत्यचोदितेऽपि तस्मिन् प्रवृत्तिर्जायते। दध्यानयनचोदनायां पात्रानयनवत्। न च समाहार-समाहारिणोरत्यन्तभेद एव समाहारचोदनायां पूला अचोदिता एव स्युः, अतो ममाप्यदोषः, स च समाहरणं समाहार इति न समाहर्तुर्देवदत्तादेर्व्यापारो विज्ञायते, अपि तु तत्कर्मव्यापारस्तत्फलरूपः, स हि समासेन प्रतीयते, न समाहर्तृव्यापारः, फलसाधनोभयव्यापारभागाभिधायी च समाहरति, पचत्यादिवत्, तं समाहारमेके प्राहुः। भिन्नरूपः स नैकप्रस्थान इति 'पञ्चपूली दशपूली' इत्यत्रौत्तराधर्यं समाहारः, उत्तराधरीभावेन हि पूलाः समाहृता इत्युच्यन्ते, 'पञ्चगवं दशगवम्' इत्यत्रार्जनम्, अर्जिता अपि हि समाहृता उच्यन्ते; कथं विक्षिप्तेषु पूलेषु चरन्तीषु गोषु? नहि तत्रौत्तराधर्यमर्जनं वास्ति, तत्र प्रत्यासन्नदेशता समाहारः, प्रत्यासन्नमपि हि देशं नीताः समाहृता उच्यन्ते। 'षण्णगरी दशग्रामी' इत्यत्रापि यदि मनुष्यविषयः प्रयोगः–आयाता षण्णगरी दशग्रामी वा सीमावधारणायेति प्रत्यासन्नदेशतैव समाहारः, सम्भवति हि प्रत्यासन्नदेशता। यदि तु तत्र ग्राम-नगरशब्दाभ्यां ससीमकाः सारण्यकाः, ग्रामनगराणि वा स्थावराण्युच्यन्ते तदा तेषां भवति किञ्चित् सादृश्यं रमणीयत्वमन्यद् वा; सन्निवेशविशेषादिः समाहारः। यद्यपि सम् एकत्वे, आङ् आभिमुख्ये, हरतिर्देशान्तरप्रापणे, इति भिन्नदेशानां परस्पराभिमुख्येनैकदेशप्रापणं समभ्याशीकरणं समाहारः, सादृश्यमपि भवति, सादृश्येऽपि हि हरतेर्वृत्तिः, यथा–मातुरनुहरति, पितुरनुहरतीति, अत्र हि मातुः सदृशः पितुः सदृश इति गम्यते, समाहार इति च समाहरत्यर्थमात्रं गृह्यते। अथवा नेदमियत्येवावतिष्ठते षण्णगरी दशग्रामीति पदान्तरेण ह्यत्र समवधातव्यम्, नहि पदमनपेक्ष्य पदान्तरसमवधानं व्यवतिष्ठते, साकाङ्क्षत्वात् तदर्थस्य, तत्र यत् तत् पदान्तरं सन्निधीयते–शोभनं रमणीयं मृद्राति भज्यते वेति तदर्थः समाहारः, तत्रापि ह्येकक्रियागुणयोगेनैवं भवति–समाहृता इमेऽर्थाः शोभना रमणीया वेत्यादीति। अपरे आहुः–क्रियया गुणेन वैकस्मिन् प्रत्यये निवेशनं समाहारः, स उक्तः सर्वत्रास्तीति। अन्ये आहुः–समाहार इति समुदाय उच्यते, समुदायश्च सहभावः। अपरोऽप्याह–समाहारो हि समासः, स च भिन्नानामेककालानां भवतीति समासेनैकत्वरूपेणाभिधानमात्रं समाहारः। पञ्च पूला इत्येतमेवार्थं समास आत्मधर्मेणैकत्वरूपेणाचष्ट इति केचित्। सर्वत्रानेकस्य कथञ्चिदन्तर्बहिर्वा मुख्यमौपचारिकं चैकत्वमस्ति, न चैकस्मिन्नर्थे सम्भवत्यनेकार्थकल्पना युक्तिमवलम्बते, न व्यतिरेकयोरेकस्मिन् भावादितरत्र चाभावात्, अतः स एव समाहारशब्दार्थो युक्तः, स एकस्तत्र वर्तिपदार्थस्य चाभाव इत्याह–**अनेकस्य कथञ्चिदेकत्वं समाहार** इति सूत्रे चकारद्वयोपादानेन वाक्यद्वयं विज्ञायते, तत्र प्रथमचकारेण पूर्वसूत्रस्थं **'संज्ञातद्धितोत्तरपदे'** इति समस्तं पदमनुकृष्यते, तदन्तं चैकवाक्यम्, **द्विगुश्चे**त्यादिद्वितीयवाक्यम्, तत्र **संख्यावाचि नामे**त्यादिना प्रथमं वाक्यं दर्शयति, तत्र समाहारः समासार्थो विज्ञायत इत्युक्तं–**समाहारे चाभिधेये** इति, द्वितीयवाक्यमाह–**अयमेव चानाम्नी**त्यादि।

सम्पन्ने सूत्रार्थे उदाहरणावसरः, तत्र यथोद्देशन्यायेन पूर्वं संज्ञायामुदाहर्तुमवतारयति–**संज्ञायामिति, पञ्चाम्रा** इति समासः, पञ्च च ते आम्राश्चेति विग्रहः, सन्निवेशादिविशिष्टानां पञ्चानामाम्राणामियं संज्ञा; **दशाम्राः** इति समासः, दश च ते आम्राश्चेति विग्रहः, सन्निवेशादिविशिष्टानां दशानामाम्राणामियं संज्ञा; **पञ्चर्षयः** इति समासः, पञ्च च ते ऋषयश्चेति विग्रहः, पञ्चानामृषिविशेषाणामियं संज्ञा; **सप्तर्षयः** इति समासः, सप्त च ते ऋषयश्चेति विग्रहः, सप्तानामृषिविशेषाणामियं संज्ञा, ते चेमे–

"मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः।
वशिष्ठश्च महातेजाः सप्तमः परिकीर्तितः॥ १॥" इति;

**दशार्हाः** इति समासः, दश च ते अर्हाश्चेति च विग्रहः, वसुदेवप्रभृतीनां दशानां क्षत्रियाणामियं संज्ञा; **पञ्चवटाः** इति समासः, पञ्च च ते वटाश्चेति विग्रहः, सन्निवेशादिविशिष्टानां पञ्चानां वटवृक्षाणामियं संज्ञा, **दशवटाः** इति समासः, दश च ते वटाश्चेति विग्रहः, सन्निवेशादिविशिष्टानां दशानां वटवृक्षाणामियं संज्ञा, एषु विग्रहप्रदर्शनं पूर्वापरपदविभागदर्शनार्थं, पञ्चाम्रादयः संज्ञाशब्दा एव, तथा च न तेन शब्देन ये केचिदाम्रवृक्षाः पञ्च ग्रहीतुं शक्यन्ते। दर्शितोदाहरणेषु पञ्चाम्रादिशब्दानां बहुवचनदर्शनादेकवचने नैतेषां प्रयोगः कदाचनेति कश्चिन्मन्येत, तमवबोधयितुमाह–**फलित एकः पञ्चाम्रः** इति-पञ्चत्वसंख्यावदाम्रसमुदायगतस्यैकस्यैव फलितत्वविवक्षायामयं प्रयोगः, समुदाये प्रवृत्तानां शब्दानामवयवेऽपि प्रवृत्तिदर्शनात्, यथा–'वृक्षाः, वनम्' इति प्रयोगावुद्भूतावयवभेदविवक्षयाऽनुद्भूतावयवभेदविवक्षया च साधुत्वं भजतस्तथैवेहापि 'पञ्चाम्राः' इत्युद्भूतावयवभेदविवक्षया बहुत्वम्, 'पञ्चाम्रः' इत्यनुद्भूतावयवभेदविवक्षयैकत्वमित्याशयेनायं प्रयोग इति केचिद् व्याचक्षते। परे तु पञ्चवादीनां संख्यानामुपलक्षणत्वं स्वीकृत्य पञ्चाम्रादिष्वेकत्वादि

समादधते। **पुष्पितौ द्वौ पञ्चाम्रौ** इति-अत्र पञ्चत्वसंख्यावदाम्रसमुदायगतयोर्द्वयोरेव पुष्पितत्वविवक्षायामयं प्रयोगः। **उदितास्त्रयः सप्तर्षयः** इति 'सप्तर्षि' इति सप्तानां नक्षत्रविशेषाणां संज्ञा, तत्र त्रयाणां नक्षत्राणामुदितत्वविवक्षायामयं प्रयोगः।

तद्धितार्थे उदाहर्तुमवतारयति-**तद्धिते** इति, **द्वयोर्मात्रोरपत्यमिति** विग्रहः, **द्वैमातुरः** इति च समासः, अत्र "संख्यासम्भद्रात् मातुर्मातुर् च" [ ६. १. ६६. ] इत्यण् प्रत्ययः, मातृशब्दस्य 'मातुर्' इत्यादेशश्च; **पञ्चनापितिरिति** समासः, पञ्चानां नापितानामपत्यमिति विग्रहे "अत इञ्" [ ६. १. ३१. ] इति सूत्रेण इञ् प्रत्ययः; **पञ्चसु कपालेषु संस्कृत** इति विग्रहः, **पञ्चकपालः** इति समासः, उभयत्र **ओदनः** इति भक्ष्यामित्यव्यक्तयर्थः, सप्तम्यन्तात् संस्कृते भक्ष्ये "संस्कृते भक्ष्ये" [ ६. २. १४० ] इति यथाविहितं प्रत्ययो भवति, "संस्कृते" [ ६. ४. ३. ] इति च संस्कृते इकण् विधीयते, तथा च प्रकृते इकण् प्रत्ययः, तस्य "द्विगोरनपत्ये यस्वरादेर्लुबद्विः" [ ६. १. २४. ] इति लुब् भवति; **पञ्चभ्यो जनेभ्यो हितः** इति विग्रहः, **पञ्चजनीनः** इति च समासः, अत्र पञ्च च ते जनाश्च पञ्चजनाः, ततः पञ्चजनेभ्यो हित इति "पञ्च-सर्व-विश्वाज्जनात् कर्मधारये" [ ७. १. ४१. ] इति ईनप्रत्ययः; **अध्यर्धेन कंसेन क्रीतः** इति विग्रहः, **अध्यर्धकंस** इति च समासः, अत्र "क-समासेऽध्यर्धः" [ १. १. ४१. ] इत्यध्यर्धशब्दस्य संख्याशब्दत्वम्, 'अध्यर्धेन' इत्यस्य अर्धसहितेनैकेनेत्यर्थः, कंसेन परिमाणविशेषेण, अत्र "कंसार्धात्" [ ६. ४. १३५. ] इति इकट् भवति, तस्य च "अनाम्न्यद्विः प्लुप्" [ ६. ४. १४१. ] इति लुब् भवति; अतिदिशति-**एवमिति अध्यर्धशूर्पः** इति समासः, अध्यर्धेन शूर्पेण क्रीत इति विग्रहः, "शूर्पाद् वाञ्" [ ६. ४. १३७. ] इति अञ्, तस्य "अनाम्न्यद्विः०" [ ६. ४. १४७. ] इति लुब् भवति; **अर्धतृतीयैः शूर्पैः क्रीतिः** इति विग्रहः, **अर्धतृतीयशूर्पः** इति च समासः, अत्र 'अर्धतृतीय' इत्यस्य "अर्धपूर्वपदः पूरणः" [ १. ४. ४२. ] इति संख्याशब्दत्वम्, प्राग्वदञ् तस्य लोपश्च; अतिदिशति-**एवमिति, अर्धपञ्चमशूर्पः** इति समासः, अर्धपञ्चमैः शूर्पैः क्रीत इति विग्रहः, प्रागिवेहापि संख्याशब्दत्वमञ् तल्लोपश्च। अर्धं तृतीयं येषु ते अर्धतृतीयाः, अर्धं पञ्चमं येषु ते अर्धपञ्चमाः, अर्धसहितौ द्वौ, अर्धसहिताश्चत्वार इत्यर्थः। उत्तरपदे परे उदाहर्तुमवतारयति-**उत्तरपदे** इति, **पञ्च गावो धनमस्येति** विग्रहः, **पञ्चगवधनः** इति च समासः, अत्र पूर्वं त्रयाणां पदानां बहुव्रीहिः, पश्चाद् धनशब्दे उत्तरपदे परतः पूर्वयोः पदयोस्तत्पुरुषः, तस्मिन् सति "गोस्तत्पुरुषात्" [ ७. ३. १०५. ] इति समासान्तेऽटि ततोऽवादेशो भवति; **पञ्च नावः प्रिया यस्य स** इति विग्रहः, **पञ्चनावप्रियः** इति च समासः, अत्रापि त्रयाणां बहुव्रीहौ पूर्वयोस्तत्पुरुषसंज्ञा कर्मधारयसंज्ञा द्विगुसंज्ञा च, तत्र द्विगुसंज्ञया "नावः" [ ७. ३. १०४. ] इति समासान्तेऽटि आवादेशः, मतान्तरेऽपि बाहुलकात् 'बाधन्ते स्वार्थिकाः क्वचित्' इत्यतो वा ङीर्न, स्वमते त्वणाद्यन्तादन्ताम्नो विहितेति न प्राप्नोत्येव, मतान्तरे हि पूर्वगवीप्रिय इत्यत्र ङीर्दृश्यते इति प्रागुक्तमेव लघुन्यासाभिप्रायेण; **द्वे अहनी जातस्येति** विग्रहः, **द्व्यहजातः** इति च समासः, अत्र त्रयाणां पदानां "कालो द्विगौ च मेयैः" [ ३. १. ५७. ] इति तत्पुरुषे, पूर्वयोश्च प्रकृतसूत्रेण समासे तत्पुरुषसंज्ञायां च सत्यां "सर्वांशसंख्याव्ययात्" [ ७. ३. ११८. ] समासान्तोऽट्, 'अहन्' शब्दस्य च 'अह्न' इत्यादेशः; **अध्यर्धा नौर्धनमस्येति** विग्रहः, **अध्यर्धनावधन** इति च समासः, अत्र प्रागिवाध्यर्धशब्दस्य लिङ्गविशिष्टपरिभाषया संख्याशब्दत्वमट् समासान्त आवादेशश्च, कर्मधारयसंज्ञया "पुंवत् कर्मधारये" [ ३. २. ५७. ] इति पुंवद्भावो विशेषः, एवमुत्तरस्मिन्नप्युदाहरणे ज्ञेयम्; **अर्धतृतीया नावो धनमस्येति** विग्रहः, **अर्धतृतीयनावः** इति च समासः। त्रिमासजात इत्याद्यर्थमुत्तरग्रहणं कर्तव्यमेव, अन्यथा द्विगुविषयाभावात् "कालो द्विगौ च मेयैः" इति समासाप्रवृत्तिः स्यादतो न वाच्यं-तद्धितविषयेऽप्येषु समासो भविष्यतीति।

अथ समाहारे उदाहर्तुमवतारयति-**समाहारे** इति, **पञ्चानां पूलानां समाहारः** इति विग्रहः, **पञ्चपूलीति** च समासः, अत्र-

"पात्रादिवर्जितादन्तोत्तरपदः समाहारे।
द्विगुरन्नावन्तान्तो वाऽन्यस्तु सर्वो नपुंसकः॥ १॥"

इति लिङ्गानुशासनवचनादत्र स्त्रीत्वम्, कारिकार्थश्चायम्-पात्रादिगणवर्जितमकारान्तमुत्तरपदं यस्य स तथाविधो द्विगुः समाहारे वर्तमानः स्त्रीलिङ्गः, अन्नन्तमावन्तं च यदुत्तरपदं तदन्तो द्विगुः समाहारे वर्तमानो वा स्त्रीलिङ्गः, उक्तस्त्रीत्वादन्यः पुनर्द्विगुसमाहारे वर्तमानः सर्वो नपुंसक इति। प्रकृते स्त्रीत्वाच "द्विगोः समाहाराद्" [ २. ४. ३२. ] इति ङीप्रत्ययः, **पञ्चानां राज्ञां समाहारः** इति विग्रहः, **पञ्चराजीति** समासः, अत्र हि "द्विगोरन्नह्नोऽट्" [ ७. ३. ९९. ] इति समासान्तेऽटि "नोऽपदस्य तद्धिते" [ ७. ४. ६१. ] इत्यन्त्यस्वरादिलोपे, अन्नन्तस्य विकल्पेन स्त्रीत्वानुशासनात् स्त्रीत्वपक्षे "द्विगोः समाहारात्" [ २. ४. ३२. ] इति ङ्याम्-**पञ्चराजीति** समासः, स्त्रीत्वाभावपक्षे नपुंसकत्वे सति पञ्चराजमिति च

समासः; अतिदिशति-**एवमिति, दशराजीति** समाहारः, दशानां राज्ञां समाहार इति विग्रहः, शेषं प्राग्वत्; अतिदिशति-**एवमिति,** पञ्चकुमारि इति समासः, पञ्चानां कुमारीणां समाहार इति विग्रहः; **दशकुमारि** इति समासः, दशानां कुमारीणां समाहार इति च विग्रहः, उभयत्र नपुंसकत्वानुशासनात् "क्लीबे" [ २. ४. ९७. ] इति ह्रस्वः; **अध्यर्धानां पूलानां समाहारः** इति विग्रहः, **अध्यर्धपूलीति** च समासः, अत्र प्राग्वदध्यर्धशब्दस्य संख्याशब्दत्वम्, **अर्धपञ्चमपूलीति** समासः, अर्धपञ्चमानां पूलानां समाहार इति विग्रहः, उभयत्र स्त्रीत्वङीप्रत्ययादिकं प्राग्वदवसेयमिति । समाहारः समूह इति 'पञ्चपूली' इत्यादौ समूहार्थे तद्धितप्रत्ययोत्पत्तिः कुतो नेति न शङ्कनीयम्, समाहारे समासविधानेन तेनैव [ समासेनैव ] समूहार्थस्योक्तत्वेन पुनस्तदर्थे तद्धितप्रत्ययोत्पत्तेरयोगात् * उक्तार्थानामप्रयोगः * इति न्यायात् । न च तद्धितार्थे एव समासो विधेयः, समाहारग्रहणं च न कार्यमिति वाच्यम्, पञ्चगवमित्यादौ समासान्तप्रत्ययानुत्पत्तेः, तत्प्रकरणे 'अलुकः' इत्युक्तत्वात्, द्विगोश्च विहितस्यानपत्यार्थस्य स्वरादेः प्रत्ययस्य "द्विगोरनपत्ये०" [ ६. १. २४. ] लुब्विधानात् । किञ्च पञ्चपूलीत्यादौ "परिमाणात् तद्धितलुकि०" [ २. ४. २३. ] इति नियमान्ङीर्न स्यात्, तथा 'पञ्चकुमारि इत्यादौ "ङ्यादेर्गौणस्य०" [ २. ४. ८५. ] इति ङ्यादेर्लोपः स्यात् ।

पदकृत्यं पृच्छति-**समाहारे चेति किमिति**-पूर्वसूत्रार्थमात्रे संख्यावाचिनोऽनाम्नि द्विगुसंज्ञार्थं "संख्या द्विगुश्चानाम्न्ययम्" इत्येव सूत्रं क्रियताम्, 'समाहारे च' इत्यस्य ग्रहणं मास्तु, तावताप्युदाहृतानां सिद्धिरिति प्रश्नाशयः, यत्र न समाहारविवक्षा तत्रापि समासो मा भूदित्येतदर्थं 'समाहारे च' इत्यावश्यकत्वमित्याशयेन प्रत्युदाहरणमुखेनोत्तरयति-**अष्टौ प्रवचनमातरः** इति-अत्र समाहारस्याविवक्षायामपि समासः प्रसज्येतेत्यर्थः, ईर्यासमितिर्भाषासमितिरेषणासमितिर्भण्डमात्रादाननिक्षेपसमितिः पारिष्ठापनासमितिरिति पञ्च समितयः, मनोगुप्तिर्वचनगुप्तिः कायगुप्तिरिति तिस्रो गुप्तयः, इमा अष्टौ प्रवचनमातर इति जिनप्रवचने परिभाष्यते । ननु मास्त्वनेन समासोऽत्र, किन्तु "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इत्यनेन समासः कुतो नेति चेत्? अत्राह-**"विशेषणं विशेष्येण०" इत्यादिनापि न भवतीति,** कुतः? इत्याह-**नियमार्थत्वादस्येति**-नियमाकारश्च-संख्यावाचिनः समाहार-संज्ञा-तद्धितोत्तरपद एव समासो भवति, नान्यत्रेति । संख्यावाचकत्वस्यैकशब्देऽपि सत्त्वात् तस्यापि समाहारे समासो भवति, तत्रानुपपत्तिप्रदर्शनपूर्वमुपपत्तिकथनार्थं प्रक्रमते-**एकस्य समाहारायोगादपूपेन समासे कथमेकापूपीति**-'अनेकस्य कथञ्चिदेकत्वं समाहारः' इति प्रागभिहितमित्येकस्यैकत्वकथनमनुचितमिति समाहारस्तत्र न सम्भवतीति कथं समाहारे समासः? तदभावे च द्विगुत्वाभावाद् स्त्रीत्वादनापत्तिरपीति प्रश्नाशयः, उत्तरयति-**एकस्याप्यनेकपर्यायोपनिपातिनोऽनेकत्वसम्भवे समाहारोपपत्तेरिति** पर्यायार्थिकनये एकस्मिन्नपि द्रव्येऽनेके पर्यायाः प्रतिक्षणमुत्पद्यन्ते विलीयन्ते च । यदुक्तम्—

"अनादिनिधने द्रव्ये, स्वपर्यायाः प्रतिक्षणम् ।
उन्मज्जन्ति निमज्जन्ति, कूलकल्लोलवज्जले ॥"

इति पर्यायाणां च सहभाविपर्याय-क्रमभाविपर्यायभेदेन द्वैविध्यम्, पुनश्च स्वभाव-विभावाभ्यां द्रव्य-गुणाभ्यां च चातुर्विध्यम्, एवं रीत्या सूक्ष्मेक्षणायामेकस्यापि बहवो भेदाः पर्यायभेदेन सूपपादा एवेति तत्तत्पर्यायविशिष्टस्य तस्यैकस्यैवानेकत्वमुपपन्नं, ततश्च समाहारोऽप्युपपद्यत एवेति भावः । ननु 'द्विगुरनाम्न्ययम्' इत्येवोच्यताम्, तत्पुरुष-कर्मधारयशब्दौ च प्रकृताविवेति चकारो व्यर्थः, तदनुकर्षणार्थस्तु न वक्तुं शक्यते, तथा सति तयोरग्रेऽनुवृत्तिर्न स्यात्, * चानुकृष्टं नोत्तरत्र * इति न्यायादिति शङ्कायामाह-**द्विगुश्चेति चकारस्तत्पुरुषकर्मधारयसंज्ञासमावेशार्थः** इति, अयमाशयः-चकाराभावेऽनेन विहितस्य समासस्य द्विगुसंज्ञा विशिष्य विहितेति सा तत्पुरुषकर्मधारयसंज्ञे बाधेतेति पञ्चगवमित्यादौ तत्पुरुषत्वप्रयुक्तः समासान्तो न स्यादिति । पुनः पृच्छति-**अनाम्नीति किमिति**-'अनाम्नि' इत्यंशो द्विगुसंज्ञयैव सम्बध्यते, तथा च प्रकृतसूत्रेण कृतेऽपि समासे नाम्नि-संज्ञायां द्विगुसंज्ञामात्रं निषिध्यते, 'अनाम्नि' इत्यस्यानुपादाने संज्ञायामपि द्विगुसंज्ञा स्यात्, ननु भवतु नाम का हानिरिति प्रश्नाशयः; संज्ञायां द्विगुसंज्ञाविधाने तत्र द्विगुसंज्ञाप्रयुक्तोऽनपत्यार्थतद्धितप्रत्ययस्य लोपः स्यात्, स च नेष्यत इत्याशयेनोत्तरयति-**पञ्चर्षीणामिदमिति** विग्रहः, **पाञ्चर्षमिति** च तद्धितवृत्तिः, एवं-**दाशार्हमिति** तद्धितवृत्तिः, दशार्हाणामिदमिति च विग्रहः; 'पञ्चर्षि, दशार्ह' इति संज्ञाशब्दौ, तयोर्नामत्वाद् द्विगुसंज्ञा न भवति, ननु भवतु नाम का हानिरित्याह-**अत्र द्विगुत्वेऽनपत्यप्रत्ययस्य लुप् स्यादिति,** अत्र-'पाञ्चर्षम्, दाशार्हम्' इति प्रयोगे, द्विगुत्वे-'पञ्चर्षि, दशार्ह' इत्येतयोर्द्विगुसंज्ञायां सत्याम्, अनपत्यप्रत्ययस्य ततः परस्ताद् विहितस्य "तस्येदम्" [ ६. ३. १६०. ] इत्यण्प्रत्ययस्य लुप् स्यात्-द्विगोरनपत्ये०" [ ६. १. २६. ] इत्यनेन लुप् स्यात्, तद्वारणार्थम् 'अनाम्नि' इत्यावश्यकमित्यर्थः । अयमत्र सारांशः-यत्र कस्यचिन्नाम भवति तत्र द्विगुसंज्ञावारणार्थमनाम्नीति, प्रकृते च पञ्चर्षि-दशार्हशब्दयोर्नामत्वान्न द्विगुसंज्ञा

नवा तत्प्रयुक्तो लोपश्चेति । सूत्रे 'अयम्' इति गृह्यते, तदभावेऽपि सन्निधानादेव 'द्विगुश्च' इत्यस्यैव 'अनाम्नि' इत्यनेन सम्बन्धः स्यादिति 'अयं' ग्रहणं विफलमित्याशङ्कायामुत्तरयति–**अयंग्रहणमुत्तरत्र 'द्विगुश्च' इत्यस्याननुवृत्त्यर्थम्**इति–अयं ग्रहणाभावे द्विगुश्चेत्यस्यैतत्सूत्रमात्रविहितसमाससम्बन्धित्वं न प्रतीयेतेति कर्मधारयश्चेति निर्दिष्टकर्मधारयादिसंज्ञावद् द्विगुसंज्ञाप्युत्तरत्र सम्बध्येत, तन्मा भूदित्येतदर्थमेवायंग्रहणमावश्यकमिति भावः । द्विगुसंज्ञायाः फलमाह–**द्विगुप्रदेशाः** इति, अयमाशयः–संज्ञा हि विधिसूत्रोपकाराय विधीयते, न तस्याः स्वतः प्रयोगसाधुत्वप्रयोजकत्वम्, ततश्च द्विगुसंज्ञाया अपि प्रदेशरूपविधिदेशोपयोगित्वमेव, स च देशः "द्विगोः समाहारात्" [ २. ४. २२. ] इत्यादिरेवेति ॥ ३. १. ९९. ॥

## निन्द्यं कुत्सनैरपापाद्यैः । ३ । १ । १०० ॥

**त० प्र०**–निन्द्यवाचि नामैकार्थं पापादिवर्जितैः कुत्सनैः–निन्दाहेतुभिः सह समस्यते, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । वैयाकरणश्चासौ खसूची च–**वैयाकरणखसूची**, यः शब्दं पृष्टः सन् निष्प्रतिभत्वात् खं सूचयति स एवमुच्यते, **वैयाकरणखसूचिरित्यन्ये**; **याज्ञिककितवः**, अयाज्ययाजनात् तृष्णापरः; **मीमांसकदुर्दुरूटः**, दुर्दुरूटो नास्तिकः; **क्षत्रियभीरुः**, **भिक्षुविटः**, **मुनिखेटः**, **ब्राह्मणचेलः**, **ब्राह्मणब्रुवः**, **राक्षसहतकः**, **ब्राह्मणजाल्मः**, **तापसापसदः**, **काण्डीरकाण्ड[ स्पृ ]पृष्टः**, **ग्राम्यघृष्टः**, **मुनिधूर्तः**, **कविचौरः**, **आरक्षितस्करः**, **पाषण्डिचाण्डालः** । निन्द्यमिति किम् ? वैयाकरणश्चौरः, प्रत्यासत्तेर्निन्द्यशब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते; न चात्र चौर्येण वैयाकरणत्वं कुत्स्यते, किं तर्हि ? तदाश्रयो द्रव्यं, वैयाकरणत्वं तदुपलक्षणमात्रम्, तेनात्र विशेषणसमासो भवति–**चौरवैयाकरणः** । कुत्सनैरिति किम् ? कुत्सितो ब्राह्मणः, बहुलाधिकाराद् विशेषणसमासोऽप्यत्र न भवति, भवतीत्यन्ये–**कुत्सितब्राह्मणः** अपापाद्यैरिति किम् ? पापवैयाकरणः खलवैयाकरणः, क्षणकवैयाकरणः, प्रवृत्तिनिमित्तमेव कुत्स्यते; एवं–पापकुलालः, क्षणकनापितः, हतविधिः, दग्धदैवम्, दुष्टामात्यः, क्षुद्रतापस इत्यादि । विशेष्यस्य पूर्वनिपातार्थं वचनम् । बहुवचनं प्रयोगानुसरणार्थम् ॥ १०० ॥

**श० म० न्यासानुसन्धानम्**–निन्द्यं० । इह **निन्द्यम्**इति शब्दस्वरूपं न गृह्यते, किन्तु योग्यतावशाद् निन्द्यते इति कर्मणि ध्यणि निन्द्यं वस्तु विज्ञायते, तत्रार्थे कार्यासम्भवात् तद्वाचकशब्दे प्रतिपत्तिरत आह–**निन्द्यवाचि नामे**ति, ध्यण् कृत्यान्तर्गतः, कृत्याश्च कालसामान्ये विहिता इति वर्तमानार्थत्वमपि तेषामित्याशयेन निन्द्यमानानीति पूर्वे वैयाकरणाः । **कुत्सनैरि**त्यत्रापि 'कुत्सन' इति शब्दस्वरूपं न गृह्यते, 'अपापाद्यैः' इति विशेषणायोगात्, किन्तु कुत्स्यते निन्द्यतेऽनेनेति करणेऽनटि कुत्सनं निन्दाकारणभूतं वस्तु विज्ञायते, अत्रापि चार्थे कार्यासम्भवात् तद्वाचिनि शब्दे प्रतिपत्तिः, हेतुकरणयोश्च क्वचिदेकत्वमपीत्याशयेनाह–**निन्दाहेतुभिरि**ति, बहुवचनं प्रयोगानुसरणार्थमित्यग्रे वक्ष्यति, पापादयोऽपि शब्दा निन्दाहेतुभूता एवेति तेषां विशेषणसमासस्यैवेष्टत्वेनेह च तद्बाधात् तेषां व्यावर्तनायोक्तम्–**पापादिवर्जितैरि**ति ।

अथोदाहरणावसर इति विगृह्योदाहरति–**वैयाकरणश्चासौ खसूची चे**ति विग्रहः, **वैयाकरणखसूची**ति समासः, प्रयोगार्थं ग्राहयति–**यः शब्दं पृष्ट** इत्यादिना, वैयाकरणस्य शब्दज्ञत्वेन तं प्रति शब्दविषयकप्रश्नस्यैवौचित्यात्–शब्दं पृष्टः सन् इत्युक्तम्, 'खसूची' इत्यस्य खं सूचयतीत्यर्थकत्वेन खसूचनहेतुमाह–**निष्प्रतिभत्वादि**ति, शब्दव्युत्पादनप्रतिभाशून्यत्वात् प्रश्नं विस्मारयितुं प्रष्टुर्ध्यानस्यान्यत्राकर्षणार्थमहो विमलं नभ इत्यादिकथनमेवात्र खसूचनमिष्टम्, वैयाकरणश्च प्रतिभाविकलत्वान्निन्द्यः, व्याकरणमधीते वेत्ति वेति वैयाकरणः, यद्यपीह व्याकरणाध्येतुरेव व्याकरणवेदितुरेव वा निन्दा गम्यते, तथापि तदाश्रितत्वात् तत्प्रवृत्तिनिमित्तभूतस्य व्याकरणस्यापि निन्दितत्वं प्रतीयते, तथा च 'शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते' इति कैयटादिव्याख्यानमपि सङ्गतं भवति, वस्तुतस्तु व्याकरणं तदध्ययनं न निन्द्यमागमाङ्गत्वेन प्रशस्तत्वात् । तथापि तस्य प्रतिभानाभावेन निष्फलत्वात् निन्द्यते । मतान्तरमाह–**वैयाकरणखसूचिरित्यन्ये** इति–पाणिनीयमते 'खसूचिन्' स्थाने 'खसूचि'शब्दः, सूचयतेः "स्वरेभ्य इः" [ उणा० ६०६. ] इत्यनेन इप्रत्यये सूचिशब्दः, वैयाकरणश्चासौ खसूचिश्चेतीह विग्रहः । **याज्ञिककितवः** इति समासः, कितवो द्यूतकारः, कितव इव कितवः, याज्ञिकश्चासौ कितवश्चेति विग्रहः, प्रयोगार्थं ग्राहयते–**अयाज्ययाजनात् तृष्णापरः** इति–अयाज्यानां–यज्ञविधापनेऽनुचितानां शूद्रादीनां, याजनाद्–यज्ञविधापनात्, तृष्णापरः–धनलालसालम्पटः, याज्ञिककितवो ज्ञेयः, यथाहि–कितवः किं तवास्तीति धनवत्तामात्रमपेक्षमाणो द्यूते प्रवर्तते न तु तस्य जात्यादिकमपेक्षते, तथा याज्ञिकोऽपि याजने प्रवर्तमानो यस्तृष्णया याजनानर्हस्य धनवत्तामात्रमपेक्षते न तु तस्य यागार्हतां स याज्ञिककितव इत्युच्यते । अयाज्ययाजने कारणान्तराभावात् तृष्णैव तन्निदानम्, अयाज्ययाजनरूपैव च निन्दा याज्ञिकत्वरूपप्रवृत्तिनिमित्ते भासते । **मीमांसकदुर्दुरूढः** इति समासः, मीमांसकश्चासौ दुर्दुरूढ-

श्चेति विग्रहः, दुर्दुरूढशब्दस्यार्थमाह–**दुर्दुरूढो नास्तिकः** इति, अत्र प्रकाशकादिरेवमाह–दुर्दुरूढशब्दो दुष्टकर्मणि रूढ इति, मीमांसको मीमांसाध्ययनफलमनवाप्य नास्तिको जात इति प्रतीयत इति केचित्, मीमांसा हि मुख्यतो धर्मविचारशास्त्रं, तदधीयानोऽपि योऽन्यथाकारी स एवमुच्यत इत्यपरे, अत्र नास्तिकत्वं निन्दाहेतुभूतम्; क्वचित् दुर्दुरूढस्थाने दुर्दुरूढ इति पाठ उपलभ्यते, तत्र दुर्पूर्वात् दृणातेः "दुरो-दृः कूटश्च दुर्च" [ उणा० १५६. ] इति कीति ऊटप्रत्यये दुरादेशे च दुर्दुरूढो दुर्मुखः, यो मीमांसामधीत्यान्यथा जानानो दुराक्षेपं करोति स एवमुच्यते, एतादृशश्च नास्तिकोऽपि भवति। अस्य दुर्दुरूढशब्दस्य पृषोदरादिपाठात् टस्थाने ढकारे दुर्दुरूढशब्दः साध्यः सम्भवता प्रकारान्तरेण वा। **क्षत्रियभीरु**रिति समासः, क्षत्रियश्चासौ भीरुश्चेति विग्रहः, भीरुत्वेन क्षत्रियत्वं निन्द्यते क्षत्रियस्य वीरत्वौचित्यात्। **भिक्षुविटः** इति समासः, भिक्षुश्चासौ विटश्चेति विग्रहः, विट इव विटः, विटो वेश्यालम्पटः, भिक्षोश्च तत्त्वमनुचितमिति निन्दाहेतुः। **मुनिखेटः** इति समासः, मुनिश्चासौ खेटश्चेति विग्रहः, खेट इव खेटः, खेटो मृगयालम्पटः, यद्वा खेटोऽधमतायुक्तः, मुनेश्च तत्त्वमनुचितमिति निन्दाहेतुः। **ब्राह्मणचेल** इति समासः, ब्राह्मणश्चासौ चेलश्चेति विग्रहः, चेलोऽधमतायुक्तः, ब्राह्मणस्य च तत्त्वमनुचितमिति निन्दाहेतुः। **ब्राह्मणब्रुवः** इति समासः, ब्राह्मणश्चासौ ब्रुवश्चेति विग्रहः, ब्रुवोऽधमतायुक्तः, ब्राह्मणस्य च तत्त्वमनुचितमिति निन्दाहेतुः। **राक्षसहतकः** इति समासः, राक्षसश्चासौ हतकश्चेति विग्रहः, हत इव नष्टप्रायत्वात् के हतकः कातरो निराशः प्रतिबद्धो वा, यद्वा हतकोऽधमो राक्षसधर्मविकलः, राक्षसस्य हतकत्वमनुचितमिति निन्दाहेतुः, **ब्राह्मणजाल्मः** इति समासः, ब्राह्मणश्चासौ जाल्मश्चेति विग्रहः, जाल्मोऽसमीक्ष्यकारी पामरः क्रूरो वा, ब्राह्मणस्य जाल्मत्वमनुचितमिति तत्त्वं निन्दाहेतुः। **तापसापशदः** इति समासः, तापसश्चासावपशदश्चेति विग्रहः, अपशदोऽधमतायुक्तः, तापसस्य चाधमता नोचितेति तत्त्वं निन्दाहेतुः। **काण्डीरकाण्डपृष्ठः** इति समासः, काण्डं शरः, काण्डानि सन्त्यस्येति "काण्डाण्डभाण्डादीरः" [ ७. २. ३८. ] इति ईरे काण्डीरः बाणवानित्यर्थः, काण्डानि पृष्ठेऽस्येति काण्डपृष्ठः शस्त्रजीवीत्यर्थः, काण्डीरश्चासौ काण्डपृष्ठश्चेति विग्रहः, अत्र बाणधरस्य बाणधरत्वमाजीविकायै न तु शौर्यप्रदर्शनायेति निन्दा प्रतीयते। **ग्राम्यधृष्टः** इति समासः, ग्रामे भवो ग्राम्यः, धृष्टो निर्लज्जः प्रगल्भो वा, प्रागल्भ्यं च नागरस्य धर्मः, ग्राम्यस्य च स निन्दाहेतुरेव। **मुनिधूर्तः** इति समासः, मुनिश्चासौ धूर्तश्चेति विग्रहः, धूर्तो वञ्चकः, मुनेश्च वञ्चकत्वमनुचितमिति तस्य तत्त्वं निन्दाहेतुः। कविश्च चौरः इति समासः, कविश्चासौ चौरश्चेति विग्रहः, कवेश्चौरित्वमनुचितमिति तस्य तत्त्वं निन्दाहेतुः, **आरक्षितस्कारः** इति समासः, आङ्पूर्वाद् रक्षतेर्ग्रहादित्वात् कर्तरि णिनि आरक्षीति, तस्करश्चौरः, आरक्षी चासौ तस्करश्चेति विग्रहः, य एव रक्षकत्वेन विज्ञातः स एव चौरः, तेन तस्य रक्षकत्वं निन्द्यते। **पाषण्डिचाण्डालः** इति समासः, पाषण्डी चासौ चाण्डालश्चेति विग्रहः, धर्मकर्मादिना परवञ्चनो 'पाषण्ड पाखण्ड' इति शब्दद्वयं, परवञ्चके च 'पाषण्डिन् पाखण्डिन्' इति शब्दद्वयं लोके प्रसिद्धिं गतम्, क्वचित् कोशादौ च धर्मखण्डने धर्मखण्डके च दृश्यते, तथाप्यर्थान्तरेऽपि वृत्तिरस्तीति प्रतीयते, यथा तिलकमञ्जरीमहाकाव्येऽयोध्यावर्णनावसरे महाकविधनपालेनोक्तम्, 'विततप्रभावर्षिभिराभरणपाषाणखण्डैरिव पाखण्डैः', इति, अत्र टीकाकारैः 'पाषण्डैः– जैनादिदर्शनैः' पाखण्डैः–पापखण्डनकारिभिः' इति व्याख्यातमस्ति, तत्र पापं खण्डयतीति पृषोदरादित्वात् पलोपे–पाखण्डीति, पाति दुरितेभ्यो रक्षतीति पा धर्मः, तस्य षण्डः–भजनं दानं वा "षान भक्तौ" इत्यतः षणूयी दाने" इत्यतो वा "पञ्चमाड्डः" [ उणा० १६८. ]इति डः, बाहुलकात् षत्वाभावः सस्य षत्वं वा, पाषण्डोऽस्यास्तीति पाषण्डीति साधनिका, तथा च पाषण्डी पाखण्डीति च धर्मसेवी धर्मदायी पापखण्डनकृत् वा मुनिरित्यर्थः फलति, स च प्रकृते उपयुक्तो भवतीत्याभाति; एक एव शब्दो मिथोविपरीतेऽप्यर्थद्वये वर्तते, यथा रिष्टशब्दोऽशुभे शुभे च, आरात्शब्दो दूरेऽन्तिके च; "चडुङ् कोपे" चण्डते इति "ऋ-कृ-मृ०"[ उणा०४७५. ]इत्याले–चण्डालः, चण्डमुग्रं कर्म अलति पर्याप्नोतीति, चण्डमालं मृषाऽस्येति वा चण्डालः, स एव प्रज्ञाद्यणि चाण्डालः, चाण्डाल इव चाण्डालः, मुनेश्चाण्डालत्वमनुचितमिति तस्य तत्त्वं निन्दाहेतुः।

अथ पदकृत्यं पृच्छति–**निन्द्यमिति किमिति**–कुत्सनवाचिनैकार्थ्यादेव पूर्वपदार्थस्य निन्द्यत्वं लभ्यत एवेति निन्द्यमिति कथनं विफलमिति प्रश्नाशयः, प्रत्युदाहरणमुखेनोत्तरयति–**वैयाकरणश्चौरः** इति–निन्द्यत्वाभावादत्र नानेन समास इत्युत्तराशयः, कथमिह न निन्द्यत्वं, चौर्यस्य निन्द्यत्वे विवादाभावादिति चेत्? अत्राह–**प्रत्यासत्तेर्निन्द्यशब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते** इति–प्रत्यासत्तिः सान्निध्यं ततः, वैयाकरणखसूचीत्यत्र निन्द्यशब्दो वैयाकरणः, तस्य सन्निहितं प्रवृत्तिनिमित्तं वैयाकरणत्वं तत् कुत्स्यते, तत् पुनः व्याकरणाध्येतृत्वसम्बन्धो व्याकरणवेदितृत्वसम्बन्धो वा, तेन हि प्रवृत्तिनिमित्तेन वैयाकरणशब्दः पुरुषे प्रयुज्यते; वैयाकरणश्चौर इत्यत्र तु न तथात्वमित्याह–**नात्र चौर्येण वैयाकरणत्वं कुत्स्यते** इति–यस्माच्चौरोऽपि सम्यग् व्याकरणमधीते वेत्ति वा, तस्मान्नात्र वैयाकरणत्वं प्रवृत्तिनिमित्तं कुत्स्यते, पृच्छति–**किं तर्हीति**, उत्तरयति–**तदाश्रयो द्रव्यमिति**–यत्र तद् वैयाकरणत्वं स कुत्स्यत इत्यर्थः। ननु यथा वैयाकरणखसूचीत्यादौ विशेषणवृत्तिखसूचित्वं विशेष्यवृत्तिवैयाकरणत्वं

कुत्सयति, तथेहापि विशेषणवृत्तिचौर्यं विशेष्यवृत्तिवैयाकरणत्वं कुतो न निन्दयति, विशेष्यविशेषणभावसाम्यादिति चेत् ? अत्राह– **वैयाकरणत्वं तदुपलक्षणमात्रमिति** । वैयाकरणत्वं तु तस्योपलक्षणमेव–केवलं योऽसौ वैयाकरणः स चौरः, यथा यः कम्पते सोऽश्वत्थ इति, अत्र कम्पनमश्वत्थस्योपलक्षणम् । चौरत्वदशायां व्याकरणाध्ययनस्य व्याकरणविज्ञानस्य वा विद्यमानत्वेनाविवक्षितत्वाद् विशेषणत्वायोगादुपलक्षणमात्रं तत्, उपलक्षणं हि कार्यानन्वयि व्यावर्तकं, विशेषणं तु कार्यान्वयि व्यावर्तकम्, "विशेषणं विशेष्येण" [ ३. १. ९६. ] इति सूत्रे विशेषणपदं च व्यावर्तकमात्रपरम्, अतः 'तेनात्र विशेषणसमासो भवति' इति वृत्तिवाक्येन सह न विरोधः, अन्यथा वैयाकरणत्वस्योपलक्षणत्वे तदाश्रयस्य वैयाकरणस्य चौरं प्रति विशेषणत्वं कथं स्यादिति केषाञ्चिदुक्तिः परास्ता वेदितव्या । वस्तुतस्तु वैयाकरणत्वस्य वैयाकरणांशे उपलक्षणत्वेऽपि चौरत्वस्य तद्व्यक्तित्वावच्छिन्नं प्रति विशेषणत्वे क्षतिविरहेण तदाशङ्कैव निर्मूलेति विज्ञेयम् ।

केचित्तु विशेषणोपलक्षणयोर्लक्षणे इत्थमाहुः-विद्यमानं सद् व्यावर्तकं विशेषणम्, अविद्यमानं सत् परिचायकमुपलक्षणमिति । तथा च काकानां व्यावर्तकत्वसमानाधिकरणविद्यमानतादशायां–काकवन्तो देवदत्तस्य गृहाः; अविद्यमानत्वसमानाधिकरणपरिचायकतादशायां–काकैर्देवदत्तस्य गृहा इति प्रयोगव्यवस्था भवति, अत एव काशिकायामुपलक्षणतृतीया; 'कुरुणा क्षेत्रम्, गुरुणा टीका' इत्युदाहरणे दत्ते, तच्च 'अविद्यमानस्य कुरोः क्षेत्रम्, अविद्यमानस्य गुरोष्टीका' इति व्याख्यातवन्तः प्रकाशकारादयः । अयमत्राशयः–यदा देवदत्तगृहे काका आसन् पश्चादुदडीयन्त तदा काकावस्थानजनितोत्तृणवत्त्वं गृहेषूपलक्षितम्, तत्र काकानां स्वावस्थानजन्योत्तृणवत्त्वसम्बन्धेनोपलक्षणतृतीयावाच्यभूतेन गृहेष्वन्वयात् काकैः–काकावस्थानजनितोत्तृणवन्तो–देवदत्तस्य गृहा इति बोधादविद्यमानत्वेऽपि पूर्वोक्तसम्बन्धेन देवदत्तीयगृहपरिचायकत्वं काकानामबाधितमेव । तत्र काकोपस्थितिसत्तायां तु संयोगेन साक्षात्सम्बन्धेनैव काकानां गृहेष्वन्वयात् काकाः सन्त्येषु गृहेष्विति विद्यमानत्वलक्षणास्त्यर्थस्य सत्त्वेन मत्वर्थीयप्रत्ययस्य प्राप्तिरिति काकवन्तो देवदत्तस्य गृहा इत्युचितमेव । तथा च साक्षात्सम्बद्धं विशेषणं परम्परया सम्बद्धमुपलक्षणमिति स्थितम्, तथा चोक्तम्–

"व्यावर्तनीयमधितिष्ठति यद्धि साक्षा-
देतद् विशेषणमतो विपरीतमन्यत् ।
दण्डी पुमानिति विशेषणमत्र दण्डः,
पुंसो न जातिरनुदण्डमसौ च तस्य ॥१॥" इति ।

अयमर्थः– दण्डी पुमानित्युक्ते दण्डस्य साक्षात् पुंसा व्यावर्तनीयेन सम्बन्धाद् विशेषणत्वम्, अनुदण्डः-दण्डानुगता जातिस्तु दण्डद्वारा पुंसि सम्बद्धदण्डत्वजातिर्न पुंसो विशेषणमपि तु दण्डस्यैवेति । अत्रत्यो विचारोऽन्यत्र प्रपञ्चितः, इह विस्तरभयान्नोच्यते ।

प्रकृतमनुसरामः–'वैयाकरणश्चौरः' इह वाक्ये चौरत्वस्य तद्व्यक्तिकुत्साद्योतकत्वेन तद्गतवैयाकरणत्वं न कुत्स्यते, तत्त्वं च तस्य शब्दसाधनाक्षमत्वबोधकेनैव शब्देन निन्द्यते, शब्दसाधनक्षमोऽपि दुर्गतः सदसद्विवेकहीनः कदाचिच्चौर्यमाचरतीति न वैयाकरणत्वं तद्विशेषणतया प्रकृतकार्योपयोगि । तथा च विशेषणसमासबाधकोऽयं समासो न भवति, तत्र चौरत्वं तु वैयाकरणत्वस्य विशेषणभूतमेव, वैयाकरणो नामासौ चौरोऽस्त्येवेति विशेषणसमासे बाधकाभावः, तथा च चौरवैयाकरण इति प्रयोगः साधुः, प्रकृतसमासप्रवृत्तौ च वैयाकरणचौर इति प्रयोगः स्यात्, प्रवृत्तिनिमित्तनिन्दाविरहात् स नेष्ट इति निन्द्यमिति वक्तव्यमेवेति । पुनः पृच्छति–**कुत्सनैरिति किमिति**–निन्द्यस्य निन्दाहेतुभिरेव सहैकार्थ्यमिति तैरेव समासो भविष्यति, विफलं कुत्सनैरिति प्रश्नाशयः,प्रत्युदाहरणमुखेनोत्तरयति–**कुत्सितो ब्राह्मणः** इति–अत्र कुत्सितशब्दस्य निन्दाविषयवाचकत्वेऽपि निन्दाहेतुत्वाभावात् तेन सह ब्राह्मणशब्दस्य समासो न भवति, कुत्सनग्रहणाभावे तु निन्द्यस्य येन केनापि समासे ब्राह्मणस्य निन्द्यत्वेन समासः स्यादेवेति भावः । नन्वनेन समासाभावेऽपि "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इति विशेषणसमासः कुतो नेहेति चेत् ? अत्राह–**बहुलाधिकाराद् विशेषणसमासोऽप्यत्र न भवतीति** । अत्र मतान्तरमाह **भवतीत्यन्ये** इति–प्रकृते विशेषणसमासो भवतीत्यन्ये वैयाकरणा मन्यन्ते, तदाकारमाह–**कुत्सितब्राह्मणः** इति । पापादीनां स्वतो निन्द्यत्वेन निन्दाहेतुत्वाभावात् तैः सह समासप्राप्तिरेव नेत्याशयेन शङ्कते–**अपापाद्यैरिति किमिति**, पापमस्यास्तीति मत्वर्थीये "अभ्रादिभ्यः" [ ७. २. ४६. ] इत्यप्रत्यये पापादिशब्दः पापाचारिणि पुरुषे वर्तत इति तस्य निन्दाहेतुत्वमस्त्येवेत्यत आह–**पापवैयाकरणः** इति–पापश्चासौ वैयाकरणश्चेति विग्रहः, अत्र च विशेषणसमास एव, न त्वनेन समासः, तेन निन्द्यस्य वैयाकरणस्य विशेष्यस्याप्रथमोक्तत्वान्न प्राग् निपातः, अपापाद्यैरित्यस्याभावे तु प्रकृतसूत्रेण समासे विशेष्यस्य प्रथमोक्तत्वात् प्राग् निपाते वैयाकरणपाप इत्येव प्रयोगः स्यादिति भावः । एवम्–**अणकवैयाकरणः** इति–विशेषणसमासोऽयम्, अणकश्चासौ वैयाकरणश्चेति विग्रहः, अणकशब्दः गर्ह्ये वर्तते, "कुपूय-कुत्सिताऽवद्य-खेट-गर्ह्या-ऽणकाः समाः" इत्यमरः, शेषं प्राग्विवावसेयम्; न च पापादिशब्दास्तद्व्यक्तिनिन्दाहेतव एव, न तु प्रवृत्तिनिमित्तनिन्दाहेतव इति नानेन समासप्राप्तिरिति चेत् ? अत्राह–**प्रवृत्तिनिमित्तमेव कुत्स्यते** इति–वैयाकरणत्वाद्येव पापादिशब्दैः कुत्स्यते, अधीतस्यानाभ्यसनरूपं हि पापं तेषु विद्यत इति व्याकरणाध्ययनरूपं वैयाकरणत्वमेव निन्द्यत इति

भावः। अतिदिशति-**एवमिति, पापकुलालः** इति विशेषणसमासः, पापश्चासौ कुलालश्चेति विग्रहः; **अणकनापितः** इति विशेषणसमासः, अणकश्चासौ नापितश्चेति विग्रहः; **हतविधिरिति** विशेषणसमासः, हतश्चासौ विधिश्चेति 5 विग्रहः; **दग्धदैवमिति** विशेषणसमासः, दग्धं च तद् दैवं चेति विग्रहः, दुष्टामात्यः इति विशेषणसमासः, दुष्टश्चासावमात्यश्चेति विग्रहः, क्वचिद् बहुवचनान्तपाठः; **क्षुद्रतापसः** इति विशेषणसमासः, क्षुद्रश्चासौ तापसश्चेति विग्रहः। निदर्शितेषु पापवैयाकरणादिषु समासेषु पूर्वनिपाते कामचारो विशेष्यविशेषण- 10 भावस्य विवक्षाधीनत्वात्, तथा चायमर्थो वैयाकरणस्य विशेषणत्वविवक्षायां-वैयाकरणपापः, वैयाकरणाणक इत्यपि भवति, शेषेषु जातिशब्देषु पापादेरेव विशेषणत्वमिति तस्यैव प्राग्निपातः। "विशेषणं विशेष्येण०" [३. १. ९६.] इत्यनेनैव सर्वोऽपि प्रकृतसमासः सेत्स्यतीति विफलं प्रकृतसूत्रमित्या- 15 शङ्कायामाह-**विशेषस्य पूर्वनिपातार्थं वचनमिति**-वैयाकरणखसूचीत्यादौ विशेष्यं वैयाकरणादिस्तस्य विशेषणसमासे परनिपातः स्यादिति तदभावार्थं सूत्रमिति भावः। कुत्सनैरिति बहुवचनस्य वैयर्थ्यमाशङ्क्याह-**बहुवचनं प्रयोगानुसरणार्थमिति**-यादृशानां शब्दानां निन्दाहेतुत्वेन 20 प्रयोगः प्रसिद्धस्तेषां संग्रहार्थमिति भावः ॥ ३. १. १०० ॥

## उपमानं सामान्यैः । ३ । १ । १०१ ॥

**त० प्र०**-उपमीयतेऽनेनेत्युपमानम्, उपमानोपमेययोः साधारणो धर्मः सामान्यम्, उपमानवाचि नामैकार्थं सामान्यवाचिभिर्नामभिः सह समस्यते, स च समासस्तत्पु- 25 रुषसंज्ञः कर्मधारयसंज्ञश्च भवति। शस्त्रीव शस्त्री, शस्त्री चासौ श्यामा च-शस्त्रीश्यामा शस्त्रीव श्यामेत्यर्थः; एवं-न्यग्रोधपरिमण्डला, शरकाण्डगौरी, शुकहरिणी, कुमुदश्येनी, तडित्पिशङ्गी, तित्तिरिकल्माषी, कुम्भकपाललोहिनी, मृगीव मृगी, सा चासौ चपला च-मृगचपला; एवं-हंसगद्गदा, 30 काकवन्ध्या; अत्र शस्त्र्यादयः शब्दाः श्यामादयश्च श्यामादिकं गुणमुपादाय यदोपमेये वर्तन्ते तदैकार्था भवन्ति, एवं च पुंवद्भावोऽपि सिद्धो भवति। उपमानमिति किम्? देवदत्ता श्यामा। सामान्यैरिति किम्? अग्निर्माणवकः, गौर्वाहीकः, फालास्तण्डुलाः, पर्वता बलाहकाः। 35 "विशेषणं विशेष्येण०" [३. १. ९६] इत्येव समासे उपमानोपमेययोः साधारणधर्मप्रतीत्यन्यथानुपपत्त्यैव पूर्वनिपाते च सिद्धे उपमानं सामान्यैरेवेति नियमार्थं वचनम्, तेनाग्निर्माणवक इत्यादौ विशेषणसमासोऽपि न भवति ॥१०१॥

**श० म० न्यासानुसन्धानम्-उपमानं०।** सूत्रार्थं व्याचिख्यासुः पूर्वं तावदुपमानशब्दं व्याचष्टे-**उपमीयतेऽनेनेत्युपमानमिति**-उपपूर्वको माधातुः सादृश्येन हेतुना परि- 40 च्छेदार्थे वर्तते, ततः करणेऽनटि-**उपमानमिति,** तथा च येन वस्तुना वस्त्वन्तरं सादृश्येन परिच्छिद्यते तदुपमानमित्यर्थः फलति, यथा-'गौरिव गवयः' इत्यत्र गौरुपमानं तेन हि सादृश्येन गवयः परिच्छिद्यते-यादृशो गौस्तादृशो गवय इत्यर्थः 45 प्रतीयते, इह हि गौः करणं, सादृश्यं हेतुः वाक्यप्रयोक्ता परिच्छेदकर्ता, स हि गोः सादृश्येन गवयं परिच्छिनत्ति। सामान्यशब्दं व्याचष्टे-**उपमानोपमेययोः साधारणधर्मः सामान्यमिति**-सामान्यमनेकसाधारणं भवति, इह चोपमानस्य श्रुतत्वात् तस्य चोपमेयापेक्षत्वादुपमानोपमेययोरेव साधारणो धर्मः 50 सामान्यं विज्ञायत इत्यर्थः, यथा चन्द्र इव मनोज्ञं मुखमित्यादौ मनोज्ञत्वादिः, स हि यथा चन्द्रे वर्तते तथा मुखेऽपि, अत एव सामान्यम्, **सामान्यैरिति** बहुवचननिर्देशः स्वरूपविधेर्निरासार्थः, तेन सामान्यशब्देन तदर्थो ग्राह्यः, तदनुरोधादुपमानमित्यत्राप्यर्थो ग्राह्यः, अर्थे च कार्यासम्भवात् तद्वाचिनि शब्दे 55 प्रतिपत्तिः, एकार्थमितीहानुवर्तते, तदनुरोधात् सामान्यधर्मविशिष्टोपमेयवाचिना समासो विज्ञायते, तथा च योऽर्थो निष्पन्नस्तमाह-**उपमानवाचि नामे**त्यादि।

अत्र शिष्यबुद्धिवैशद्याय भाष्यादिगतः कश्चिद् विचारविशेषः प्रदर्श्यते-ननूपमानत्वं नाम सामान्यधर्महेतुकपरिच्छेदकरणत्वं 60 तद्वति तस्य रूढत्वात्; एवं तद्गतभूयोधर्मपरिच्छेदकर्मत्वमुपमेयत्वम्, तयोरुपमानोपमानोपमेययोर्मिथः साकाङ्क्षत्वम्, अथानयोः परस्परमभेदो वा भेदो वा? 'रावण इव रावणः, चन्द्र इव मुखम्' इत्युभयत्रापि इवशब्ददर्शनात्, तत्र यदि सर्वथाऽभेदे उपमानोमेयभावस्तदा तद्गतभूयोधर्मपरिच्छेदकर्मत्वरूपोपमेयत्वासम्भवः, 65 अतः सर्वथा भेदेऽपि नोपमानोपमेयभाव इति चेत्? उच्यते-शब्दोपात्तप्रातिस्विकधर्मेण भेदः, सामान्यधर्मेण चाभेदः, यथा 'शस्त्रीव श्यामा' इत्यत्र शस्त्रीत्वेन भेदः, श्यामत्वेन चाभेदः, तथा च भेदाभेदोभयसत्त्व एवोपमानोपमेयभाव इति भावः। ननु गुणानामाश्रयभेदाद् भेदेन शस्त्रीनिष्ठश्यामगुणो भिन्नो देव- 70 दत्तानिष्ठश्यामगुणश्च भिन्न एवेति कथं स सामान्यमिति चेत्? उच्यते-यद्यपि प्रत्याधारं श्यामादिगुणो भिन्न एव तथापि गुणत्वव्याप्यजातित्वेन तस्यैक्यमेवेति प्रतिव्यक्तिश्यामगुणस्यैव भेदो न तु श्यामत्वजातेः, अत एव घन इव श्यामं इत्यादावुपमालङ्कारः, गौरिव गौरित्यादौ 75

"गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव ॥"

इत्यादौ चानन्वयालङ्कार इत्यालङ्कारिकाणां प्रक्रिया । नन्वेवं सति यत्र किञ्चित् सामान्यं कश्चिच्च विशेषस्तत्रोपमानोपमेयभावो भवतीति फलितम्, वक्तव्यश्चायमर्थः, विना कथनेन कथं प्रतिपत्तुं शक्येतेति चेत् ? उच्यते–न वक्तव्यो निरुक्तिबलादेव तल्लाभात्, तथाहि–उपमानपदे तत्पुरुषसमासो न त्वव्ययीभावः, 'उपमानैः' इत्यादिशिष्टप्रयोगानुपपत्तेः, तथा च मानस्य समीपेऽवस्थितम्, अर्थात् मानात् किञ्चिन्न्यूनमुपमानम्, मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते–अनिर्ज्ञातमर्थं ज्ञास्यामीति, लोके च मानं प्रस्थादि इयत्तयाऽनिर्ज्ञातस्य व्रीह्यादेः साकल्येन ज्ञानार्थमुपादीयते–प्रस्थो व्रीहिरिति, अत्र हि प्रस्थरूपं मानं स्वगतैः कैश्चिदेव धर्मैर्व्रीहिं न परिच्छिनत्ति, किन्तु साकल्येन प्रस्थात्मना, 'गौरिव गवयः' इत्यादौ तूपमानं गवादि स्वगतैः सास्नेतरधर्मैरेव कैश्चिल्लाङ्गूलककुदादिभिर्गवयं परिच्छिनत्ति, न तु साकल्येन गवात्मनेत्यनिर्ज्ञातज्ञापकत्वरूपस्य मानसाम्यस्य सत्त्वेऽपि साकल्येन तथात्वाभावादुपमानत्वं गवादेः, गवादिकं नात्यन्तमभेदेन भेदेन वा परिच्छेद्यं गवयादिकं परिच्छिनत्ति, किन्तु भेदाभेदाभ्यामेव, सर्वत्रोपमानोपमेयस्थले भेदाभेदस्वीकारात्, तत् मानस्य समीपे अर्थान्मानात् किञ्चिन्न्यूनम्, मानं हि मेयं भेदेनाभेदेन वा परिच्छिनत्ति, 'प्रस्थो व्रीहिः' इत्यभेदेन 'प्रस्थोऽस्य व्रीहेः परिमाणम्' इति च भेदेन, न तु भेदाभेदाभ्यां युगपत्, अत एव मानस्य समीपे यदवस्थितं तदुपमानमिति । नन्वेवं तर्ह्यनेनैव हेतुना यस्य गवयो निर्ज्ञातो गौरनिर्ज्ञातः स्यात्, तेन कर्तव्यं स्यात्–गवय इव गौरिति चेत् ? बाढं कर्तव्यं न नो विरोधः अपेक्षानिमित्तकः पितापुत्रादिव्यवहारवदुपमानोपमेयभाव इति न कश्चिद् दोष इति भावः । 'शस्त्रीश्यामा' इत्यस्योदाहरणम्, अत्र 'देवदत्ता' इत्यादि विशेष्यमध्याहार्यम्, शस्त्री-श्यामाशब्दाविह समस्येते, तत्र शस्त्रीशब्दः स्वसदृशार्थे लाक्षणिकः, श्यामाशब्दश्च श्यामत्वगुणयुक्तां देवदत्तामाहेति वस्तुस्थितिः, सा च शब्देन न प्रतिपाद्यते, अतोऽत्र विचारणा भवति–शस्त्रीशब्दः स्वार्थमाह, श्यामाशब्दोऽपि श्यामत्वगुणविशिष्टां शस्त्रीमेवाहेति यदाश्रीयते तदा देवदत्तायाः समासेनानभिधानात् 'शस्त्रीश्यामा देवदत्ता' इति सामानाधिकरण्यं न प्राप्नोति, यदि च श्यामाशब्दः श्यामत्वगुणविशिष्टां देवदत्तामाह, शस्त्रीशब्दश्च स्वार्थमाह तदा वैयधिकरण्यमिति समासाप्रसङ्गः, ऐकार्थ्याभावात्, सूत्रारम्भसामर्थ्यात् समासस्वीकारे तु 'मृगीव चपला मृगचपला' इति "पुंवत् कर्मधारये" [ ३. २. ५६. ] इति पुंवद्भावो न प्राप्नोति। अथान्यपदार्थे समासाभावेऽपि यथाश्वकर्णादि पदं स्वभावत एव जातिविशेषस्य वाचकं तथा शस्त्रीश्यामादिपदमपि शस्त्रीसदृशश्यामत्वगुण–विशिष्टोपमेयवाचकमिति चेत् ? एवं सति 'शस्त्रीश्यामो देवदत्तः' इति न सिध्यति, श्यामाशब्देन स्त्रीलिङ्गेन समासे तस्य च गुणवचनस्य शस्त्रीवाचकत्वेनाश्रयलिङ्गानुविधायित्वेन 'शस्त्रीश्यामः' इति पुंलिङ्गरूपं न स्यात्; समासेनोपमेयं वाच्यमिति तत् प्रधानम्, श्यामाशब्दश्चाप्रधानम्, अप्रधानं च गौणं भवतीति गौणत्वाद् निष्कौशाम्बिः' इत्यादिवद् ह्रस्वत्वे 'शस्त्रीश्यामः' इति रूपं सिध्येदिति चेत् ? एवं सति 'तित्तिरकल्माषी, कुम्भकपाललोहिनी' इत्यत्र समासात् प्राक् स्त्रीत्वं नास्ति, उपमानस्य पुंलिङ्गत्वात्, समासे सति चोपमेयपरत्वात् स्त्रीत्वप्रयुक्तो ङीर्भवति, तत्र मुख्यस्यैव ङीविधानात् स न प्राप्नुयात् । एवं तर्हि शस्त्र्यामेव शस्त्रीशब्दो वर्तते, देवदत्तायां श्यामाशब्दः, इत्थं च श्यामाशब्दस्योपमानानुविधायित्वाभावात् 'शस्त्रीवत् श्यामः' इति विग्रहे न गौणत्वप्रयुक्तह्रस्वत्वाविधानमावश्यकमित्यगौणत्वेऽपि न दोषः, तित्तिरकल्माषीत्यादावपि तित्तिरवत् कल्माषीति विग्रहाद् दोषाभावः । नन्वेवं सति श्यामाशब्दस्य देवदत्ताभिधाने चरितार्थत्वाच्छस्त्रीगतो गुणो न निर्दिष्ट इति केन गुणेन शस्त्रीसादृश्यं देवदत्ताया इति न निश्चीयते, यदुत–शस्त्रीवत् श्यामा सा, अथवा शस्त्रीवत् तीक्ष्णा सा आहोस्वित् सूक्ष्माऽथवा पृथुरिति चेत् ? उच्यते–अनिर्दिष्टोऽपि गुणो यदि वृद्धव्यवहाराद्युपमाने प्रतीयते चन्द्रमुखीत्यादौ प्रियदर्शनता, तत्रोपमेये श्रुतः श्यामत्वादिः सन्निधानादुपमानं कथं न स्प्रक्ष्यति ?। शस्त्र्यामेव शस्त्रीशब्दो देवदत्तायां च श्यामाशब्द इति पक्षमाश्रित्य शङ्का–एकार्थमिति वर्तते, व्यधिकरणत्वात् समासो न प्राप्नोति, समाधानम्–सूत्रारम्भसामर्थ्यात् समासो भविष्यति; शङ्का–मृगीव चपला मृगचपलेति सामानाधिकरण्यलक्षणः पुंवद्भावो न स्यात्, समाधानाद् अस्त्रीपूर्वपदस्य विवक्षितत्वात् मृगक्षीरादिवत् मृगचपलेति भविष्यति, यद्यप्यन्यत् स्त्रियाश्चापत्यमन्यच्च पुंसस्तथापि पुंवद्भावेन स्त्रीप्रत्यये निवृत्ते नास्ति स्त्रीत्वलक्षणविशेषावगतिः, प्रकरणवशात् तु स्त्रीत्वप्रतिपत्तौ जातिमात्रोपादानेऽपि तत्प्रतीतिर्भविष्यति, सा च बहिरङ्गत्वात् स्त्रीप्रत्ययोत्पत्तिनिमित्तं न भवति । अत्र प्रतिपत्तिगौरवात् प्रकारान्तरेण समाधानम्, शस्त्रीशब्दोऽपि सादृश्यात् देवदत्तामाह श्यामाशब्दोऽपि गुणिपरत्वात् तामेवेति भवत्युभयोः सामानाधिकरण्यमिति भवति समासः, अन्यथा 'शस्त्रीव श्यामा देवदत्ता' इति विग्रहे यथा शस्त्री श्यामा तद्वद् इयं देवदत्ता इति विग्रहे च श्यामाशब्दस्योभयत्रान्वयाय द्विरपेक्षा कर्तव्या स्यात् । तथाहि–यदा श्यामाशब्दो देवदत्तायामेव विद्यते शस्त्रीशब्दः स्वार्थमाह, तदानेकगुणसम्भवे शस्त्रीगततीक्ष्णत्वादिगुणान्तरव्यवच्छेदाय श्यामात्वमित्युपमाननिमित्तं प्रतिपादयितुं श्यामेति पदं तत्र [ शस्त्रीव श्यामा देवदत्तेत्यत्र ] अपेक्षणीयम्, एकदोपात्तेन श्यामाशब्देनोभयत्र श्यामात्वप्रकारकबोधो न स्यात्, अयमर्थो दशमोल्लासे काव्यप्रकाशे तट्टीकायां च लिङ्गभेदादिरूपोपमादूषणप्रस्तावे विशदतया

विवेचितः, उपमानतावच्छेदकारोपेणाभेदान्वयादेवोपमानोपमेययोः समानविभक्तिकत्वनियमः । यथा शस्त्री श्यामा तद्वदियं देवदत्तेत्यादौ यदा शस्त्रीश्यामाशब्दौ द्वावपि शस्त्र्यामेव वर्तेते तदा देवदत्तागतश्यामत्वप्रतिपादनाय श्यामेत्येतदपेक्षणीयं स्यात्, न चेह शब्दस्यावृत्तिः स्वाभाविक्यस्ति येनोभयगतं श्यामत्वं प्रतिपादयेत् । इत्थं च देवदत्तायामेव शस्त्रीशब्दः श्यामाशब्दश्च वर्तेत इति सिद्धान्तिते पुनराशङ्का–शस्त्रीसादृश्यादेव देवदत्तायां शस्त्रीशब्दो वर्तेत इति स्वीकार्यम्, तथा सति केन गुणेन इयमिति न स्पष्टीभवति, तस्यां हि तीक्ष्णत्वादयोऽपि सन्त्येवेति समाधानम्–अनिर्दिश्यमानस्यापि गुणस्य लोके भवति संप्रत्ययः, तद्यथा–चन्द्रमुखी देवदत्तेति, बहवश्चन्द्रे गुणाः, या चासौ प्रियदर्शनता सा गम्यते । ननु 'शस्त्रीश्यामा देवदत्ता' इत्यत्र शस्त्रीशब्दसंनिधौ श्यामाशब्दः प्रयुज्यमानः शस्त्रीगतं श्यामत्वगुणं प्रतिपादयति, न च शस्त्रीस्थो गुणो देवदत्तादावाश्रयान्तरे वर्तेत इति सामान्यवाचित्वाभावात् समासो न प्राप्नोतीति चेत्? उच्यते–शस्त्रीशब्दोपादानसामर्थ्यात् श्यामगुणसन्निधानाच्च यादृशं शस्त्रीश्यामत्वमन्यविलक्षणं तादृशं देवदत्ताया इति सम्प्रत्ययादुभयसाधारणं श्यामत्वं भवति सामान्यमिति न कश्चिद् दोषः, तत्र सादृश्यं सामान्यमुच्यते गुणो वा द्विवृत्तिर्भिन्नोऽभिन्नत्वेन विवक्षितः सामान्यम्, शब्दान्तरसम्बन्धे हि सर्वः शब्दो विशेषवाचित्वात् सामान्यवचनो न भवतीति सामान्यग्रहणसामर्थ्यात् शब्दान्तराभिसम्बन्धात् समासरूपात् प्राग् यः शब्दः सामान्यवचनः स गृह्यते, केवलश्यामाशब्दः श्यामगुणविशिष्टं स्त्रीत्वयुक्तं द्रव्यमाहेति साम्प्रतिकाभावे भूतपूर्वगत्याश्रयणात् सिद्धमिष्टमिति । एतच्च सर्वमग्रे स्वल्पैरेव वचोभिराचार्येण संगृहीतम्–**अत्र शस्त्र्यादयः शब्दा** इत्यादिना वृत्तौ ।

अथ प्रकृतमनुसरामः । उदाहर्तुमना विग्रहं दर्शयितुं शस्त्रीशब्दस्य स्वसदृशपरत्वमित्याह–**शस्त्रीव शस्त्रीति**–तथा चेवशब्दप्रयोगं विनापि शब्दशक्तिस्वाभाव्यादिरशस्त्रीसादृश्यं श्यामायां–श्यामत्वगुणविशिष्टायां देवदत्तायां प्रतीयते, **शस्त्री चासौ श्यामा चे**ति विग्रहः, **शस्त्रीश्यामे**ति समासः, समासार्थमाह–**शस्त्रीव श्यामेत्यर्थः** इति, शस्त्रीशब्दोऽत्र लक्षणया शस्त्रीसदृशायां देवदत्तायां वर्तते, श्यामाशब्दोऽपि श्यामत्वगुणविशिष्टायां देवदत्तायां वर्तेत इति सामानाधिकरण्यमैकार्थ्यं भवति, शस्त्रीशब्दस्य भूतपूर्वगत्योपमानपरत्वं निर्वाह्यम् । सादृश्यं च तद्भिन्नत्वे सति तद्गतधर्मवत्त्वम्, एवं च सादृश्यप्रतियोग्यनुयोगिनोः साधारणधर्मवत्त्वं लब्धम्, स चेह साधारणधर्म उत्तरपदोपस्थाप्य एव गृह्यते सन्निहितत्वात्, तथा च शस्त्रीगतश्यामत्वसदृशश्यामत्ववतीति बोधपर्यवसानम् । अतिदिशति–**एवमिति**, **न्यग्रोधपरिमण्डले**ति समासः, अत्रापि न्यग्रोध इव न्यग्रोध इति कृत्वा न्यग्रोधश्चासौ परिमण्डला चेति विग्रहः, न्यग् रोहति न्यग्रोधः "वीरुन्न्यग्रोधौ" [ ४. १. १२१. ] इति घत्वे साधुः, न्यक् तिर्यग् मार्गे मूले रुणद्धि वा, वटवृक्ष इत्यर्थः, तद्वत् परितो मण्डलाकारेति शब्दार्थः, अयं च शब्दः परिभाषितो लक्षणकारैः, तथाहि–

"स्तनौ सुकठिनौ यस्या, नितम्बे च विशालता ।
मध्ये क्षीणा भवेद्या सा, न्यग्रोधपरिमण्डला" ॥१॥ इति ।

**शरकाण्डगौरी**ति समासः, शरकाण्डः–तृणविशेषस्तम्बो गौरवर्णो मुञ्जेषीकारूपः, तद्वद् गौरी–गौरवर्णेति उपमेयपरः शब्दः, गौरशब्दादिह गौरादित्वाद् ङीः । **शुकहरिणी**ति समासः, शुक इव शुकः, स चासौ हरिणी–हरितवर्णेति विग्रहः, "श्येतैतहरित०" [ २. ४. ३६. ] इति हरितशब्दात् स्त्रियां ङीः, तकारस्य च नादेशः, ततो नस्य णत्वे–हरिणीति । **कुमुदश्येनी**ति समासः, कुमुदमिव कुमुदं, कुमुदं चासौ श्येनी शुक्लवर्णेति विग्रहः, श्येनशब्दात् प्राग्वत् ङी–नकारादेशौ ज्ञेयौ । **तडित्पिशङ्गी**ति समासः, तडिदिव तडित्, सा चासौ पिशङ्गी–पिङ्गलवर्णेति विग्रहः, पिशङ्गशब्दाद्गौरादित्वाद् ङीः । **तित्तिरिकल्माषी**ति समासः, तित्तिरिः पक्षिविशेषः, स इव तित्तिरिः, तित्तिरिश्चासौ कल्माषी–कर्बुरवर्णेति विग्रहः, गौरादित्वाद् ङीः । **कुम्भकपाललोहिनी**ति समासः, कुम्भकपालः–घटखण्डः, स इव कुम्भकपालः, स चासौ लोहिनी–रक्तवर्णेति विग्रहः, रोहितशब्दात् "श्येतैत०" [ २. ४. ३६. ] इति ङीनकारादेशौ ऋफिडादित्वाच्च लत्वे लोहिनीति । पुंवद्भावरूपफलविशेषप्रदर्शनाय सविग्रहोदाहरणप्रदर्शने पूर्वं पूर्वपदार्थत्वं तस्य स्त्रीत्वं च दर्शयति–**मृगीव मृगी**ति, **सा चासौ चपला चे**ति विग्रहः, **मृगचपला** इति च समासः, अत्र हि "पुंवत् कर्मधारये" [ ३. २. ५७. ] इति मृगीशब्दस्य पुंवद्भावः । अतिदिशति–**एवमिति**, **हंसगद्गदे**ति समासः, गदति–अव्यक्तं वदतीति "कनिगदिमनेः ससूपे" [ उणा० ८ ] इत्प्रत्यये स्वरूपद्वित्वे आपि च गद्गदा, हंसीव हंसी, सा चासौ गद्गदा चेति विग्रहः, प्राग्वत् पुंवद्भावः । **काकवन्ध्ये**ति समासः, वन्ध्या–निःसन्ततिः काकीव काकी, सा चासौ वन्ध्या चेति विग्रहः, प्राग्वत् पुंवद्भावः ।

नन्विह 'एकार्थम्' इत्यधिकारादुपमानस्य तु वैयधिकरण्येन तत्त्वाभावात् 'शस्त्रीश्यामा' इत्यादयः समासा नानेन भवितुमर्हन्ति, एवं "पुंवत् कर्मधारये" [ ३. २. ५१. ] इत्यत्र 'क्यैकार्थे' इत्यधिकारात् सामान्यस्य च वैयधिकरण्येन तत्त्वाभावात् 'मृगचपला' इत्यादौ पुंवद्भावोऽपि न भवितुमर्हतीत्याशङ्कायामाह–**अत्र शस्त्र्यादयः शब्दा** इत्यादि–शस्त्र्यादय इत्यत्रादिपदादुदाहरणान्तरस्थानां न्यग्रोधादिशब्दानां ग्रहणं, श्यामादिकमित्यत्रादिपदादुदाहरणान्तरस्थानां परिमण्डलादीनां च ग्रहणम्, शस्त्रीशब्दोऽपि स्वगतश्यामगुणयोगाद् देवदत्तायामुप-

मेयायां वर्तते, श्यामाशब्दोऽपि तस्यामेवेत्युभयोरेकार्थवाचित्वा-देकार्थं भवति, 'यदोपमेये वर्तन्ते', इत्युक्त्या भूतपूर्वगत्योपमानत्वमावेदितं भवति, **एवं च** उभयोरेकार्थत्वे स्वीकृते च, **पुंवद्भावोऽपि सिद्धो भवति**—प्रकृतसूत्रेण समासे सति 'पुंवत् कर्मधारये" [ ३. २. ५७ ] इति सूत्रेण मृगचपलादिषु, पुंवद्भावो निराबाधं सिध्यतीत्यर्थः ।

पदकृत्यं पृच्छति-**उपमानमिति किमिति**-सामान्यवाचिन उपमानेन सहैवैकार्थ्यमिति तेनैव समासो भविष्यतीति प्रश्नाशयः, उत्तरयति-**देवदत्ता श्यामेति**-अत्र हि देवदत्तमुद्दिश्य श्यामात्वं विधीयत इति समासो नेष्टः, उद्देश्यविधेयवाचकत्वे समासाभावात्, श्यामत्वस्य सामान्यवाचित्वमन्यत्र दृष्टमादाय तत्प्राप्तिरिति तद्वारणायोपमानमित्यावश्यकमिति भावः । पुनः पृच्छति-**सामान्यैरिति किमिति**-उपमानवाचिनः सामान्यवाचिनैवैकार्थ्यमित्यभिमानेन प्रश्नः, प्रत्युदाहरणद्वारोत्तरयति-**अग्निर्माणवक** इति-माणवको बालकः, अग्निशब्दो लक्षणयाग्निसदृशपदः, सादृश्यमूलकोऽभेदाध्यवसायः, अत्र माणवकशब्दस्य मेयवाचित्वेऽपि सामान्यधर्मवाचकत्वाभावान्न समासः, एवमुत्तरत्रापि, **गौर्वाहीकः** इति गोशब्दोऽत्र गोसदृशे वर्तते, सादृश्यं च जाड्येन, वाहीको मनुष्यजातिविशेषवाचकः, ( जाट इति प्रसिद्धः ) शेषं प्राग्वत् । **फालास्तंदुलाः** इति फालशब्दो हलमुखगतलोहविशेषे भूमिदारणसाधने, स चेह स्वसदृशे वर्तते, सादृश्यं च तैक्ष्ण्यादिना, शेषं प्राग्वत् । **पर्वता बलाहकाः** इति बलाहको मेघः, पर्वतशब्दः स्वसदृशे वर्तते, सादृश्यं चोच्चैस्तरत्वादिना, शेषं प्राग्वत् । ननु 'सामान्यैः' इति वचनादनेन मा भवतु समासः, विशेषणसमासस्तु केन निवार्यतामिति चेत् ? अत्राह-**विशेषणं विशेष्येणेत्येवे**त्यादि, अयमाशयः-शस्त्री श्यामेत्यादावपि श्यामायाः शस्त्रीं प्रति विशेषणत्वस्यापि सम्भवादसमासः "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इत्यनेनैव सिद्ध एव, न च तेन समासे श्यामशस्त्रीति स्यात्, श्यामाशब्दस्य गुणवाचकत्वेन विशेषणत्वध्रौव्यादिति तद्वारणाय सूत्रमिदमावश्यकमिति वाच्यम्, उपमानोपमेययोः साधारणधर्मप्रतीतेर्विवक्षितत्वात् श्यामशस्त्रीति प्रयोगे तदभावात्,

"अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
धुनोति दृष्टवैमत्यं सैव सर्वबलाधिका ॥ १ ॥"

इति श्रीहर्षोक्तरीत्या "प्रथमोक्तं प्राक्" [ ३.१.१४८. ] इति शास्त्रबाधेन पूर्वनिपातसिद्धेः । एवं च सिद्धे सति लक्षणस्य विध्यर्थत्वासम्भवेन नियमार्थत्वमेव स्यात्, नियमाकारश्च-उपमानस्य समासश्चेत् सामान्यवाचकैरेवेति, एवं चाग्निर्माणवक इत्यादावग्न्यादीनामुपमानत्वेन माणवकादीनां च सामान्यवाचकत्वाभावेन समासो न भवतीति ॥ ३. १. १०१. ॥

## उपमेयं व्याघ्राद्यैः साम्यानुक्तौ । ३ । १ । १०२ ॥

**त० प्र०**-उपमेयवाचि नामैकार्थं सामर्थ्यादुपमानवाचिभिर्व्याघ्राद्यैर्नामभिः सह समस्यते, साम्यानुक्तौ-न चेदुपमानोपमेययोः साधारणधर्मवाची शब्दः प्रयुज्यते; स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । व्याघ्र इव व्याघ्रः, पुरुषः स चासौ व्याघ्रश्च-पुरुषव्याघ्रः, एवं-पुरुषसिंहः, पुरुषवृषभः, वृषभसिंहः, राज्ञी चासौ व्याघ्री च-राजव्याघ्री, शुनी चासौ सिंही च-श्वसिंही; अत्रापि कर्मधारयात् पुंवद्भावः । साम्यानुक्ताविति किम् ? पुरुषव्याघ्रः शूर इति मा भूत्, इदमेव च प्रतिषेधवचनं ज्ञापकम्-प्रधानस्य सापेक्षत्वेऽपि समासो भवति, तेन राजपुरुषो दर्शनीय इत्यादि सिद्धम् । व्याघ्र, सिंह, ऋषभ, वृषभ, महिष, चन्दन, वृक, वराह, हस्तिन्, कुञ्जर, रुरु, पृषत, पुण्डरीक, पलाविका, कुञ्जा १५ । बहुवचनमाकृतिगणार्थम्, तेन-वाग्वज्रः, मुखपद्मं, पाणिपल्लवं, करकिसलयं, वदनेन्दुः, पार्थिवचन्द्रः, वानरश्वा, कुचकुम्भः, स्तनकलशादयोऽपि भवन्ति । उपमानं सामान्यैरेवेत्यवधारणेन विशेषणसमासे प्रतिषिद्धे समासविधानार्थं वचनम् ॥ १०२ ॥

**श० म० न्यासानुसन्धानम्-उपमेयं०** । **उपमेयमिति** न स्वरूपग्रहणं, किन्तु अर्थपरम्, अर्थे च कार्यासम्भवात् तद्वाचिनि प्रतिपत्तिः, अनेनानुवर्तमानं 'नाम' इति विशिष्यत इत्याह-**उपमेयवाचि नामैकार्थमिति** । यद्यपि सूत्रे 'उपमानैः' इति नोपात्तं, तथाप्युपमेयमुपमानसाकाङ्क्षमित्युपमेयशब्दः सम्बन्धिशब्दादादुपमानत्वं व्याघ्रादीनां गमयति, तेन विशेषानभिधानेऽपि सामर्थ्यादुपमानैस्तैः समासो विज्ञायत इत्याह-**सामर्थ्यादुपमानवाचिभिर्व्याघ्रादिभिर्नामभिरि**ति । **न चेदुपमानोपमेययोः साधारणधर्मवाची शब्दः प्रयुज्यते** इति-उपमानोपमेययोः साधारणधर्मः शौर्यादिसामान्यं, यदि तद्वाची शब्दो न प्रयुज्यते, एवं सति समासो भवति, नान्यथा । अयमाशयः-उपमानोपमेयभावस्थले सामान्यधर्मप्रतीतिरावश्यक्येव, तथा चानुक्तेऽपि साधारणधर्मे तत्प्रतीतिरस्तु, किन्तु यत्रोपमानगतगुणान्तरव्यवच्छेदाय कश्चिद् विशेषगुणं प्रतिपादयितुं शब्दप्रयोगस्तत्र समासो न भवति, 'साम्यानुक्तौ" इति विशेष्योक्तत्वात् ।

अथोदाहरणावसरे विग्रहं दर्शयितुं व्याघ्रशब्दस्योपमानवाचकस्य स्वसदृशपरत्वं प्रतिपादयति-**व्याघ्र इव व्याघ्रः पुरुषः** इति **स चासौ पुरुषश्चे**ति विग्रहः, **पुरुषव्याघ्रः** इति

समासः, व्याघ्रसदृशः पुरुष इत्यर्थः, सादृश्यं च शौर्यादिना अत्रो-भयोः पदयोरुपमेयपरत्वमेव, उपमानवाचकस्यापि व्याघ्रपदस्य स्वसदृशतयोपमेयपरत्वात्, उपमानत्वं तु भूतपूर्वगत्या निर्वाह्यम्, एवं चैकार्थ्यमपीति समासो भवति, एवमुत्तरत्रापि ज्ञेयम्,
5 अतिदिशति-**एवमिति, पुरुषसिंहः** इति समासः, सिंह इव सिंहः, स चासौ पुरुषश्चेति विग्रहः, सिंहसदृशः पुरुष इत्यर्थः, सादृश्यं च शौर्येण, **पुरुषवृषभः** इति समासः, वृषभ इव वृषभः, स चासौ पुरुषश्चेति विग्रहः, वृषभसदृशः पुरुष इत्यर्थः, सादृश्यं चाङ्गीकृतोद्वहनसामर्थ्येन । **वृषभसिंहः** इति समासः, सिंह
10 इव सिंहः, स चासौ वृषभश्चेति विग्रहः, सिंहसदृशो वृषभ इत्यर्थः, सादृश्यं च शौर्यादिना । अथ पुंवद्भावरूपफलविशेषाकलितमुदाहरणमाह-**राज्ञी चासौ व्याघ्री चेति** विग्रहः, **राजव्याघ्रीति** च समासः, व्याघ्रीसदृशी राज्ञीत्यर्थः, सादृश्यं च शौर्यादिना, **शुनी चासौ सिंही चेति** विग्रहः, **श्वसिंहीति** च समासः,
15 **अत्रापि कर्मधारयात् पुंवद्भावः** । इति अत्रापि-'राजव्याघ्री श्वसिंही' इत्युदाहरणयुगलेऽपि, अपिना पुरुषव्याघ्रादीनां कर्मधारयात्-कर्मधारयसंज्ञातः, पुंवद्भावः-"पुंवत् कर्मधारये" [ ] इति पुंवद्भावः सिध्यति, कर्मधारयपदमैकार्थ्योपलक्षकम् ।

20 पदकृत्यं पृच्छति-**साम्यानुक्ताविति किमिति** साम्यस्य समासेऽन्तर्भूतत्वात् तद्वाचिनां शब्दानां प्रयोग एव न सम्भवतीति किं प्रतिषेधेनेति प्रश्नाशयः, उत्तरयति-**पुरुषव्याघ्रः शूर इति मा भूदिति**-साधारणधर्मः सामान्यं हि समासेऽन्तर्भूतं न तु तद्विशेषः, तत्रासति प्रतिषेधे विशिष्टसाधारणधर्म-
25 वाचिनः प्रयोगः स्यादेव, स मा भूदिति प्रतिषेधः कर्तव्यः, तथा च तत्र पुरुषो व्याघ्र इव शूर इति व्यस्तप्रयोग एवोचित इति भावः, पुरुषो व्याघ्र इवेति विग्रहेऽपि यद्यपि शूरत्वे प्रतीयत एव तथापि शब्दानुपस्थितत्वात् तत्र समास इष्टः, शब्दोपात्तत्वे तु नेति व्यवस्था । नन्विह 'साम्यानुक्तौ' इत्यस्याभावेऽपि समासो
30 न स्यादेव, व्याघ्रादिपदानां सामान्यशब्दप्रयोगे सति तदपेक्षत्वेन सापेक्षमसमर्थवद् भवति* इति न्यायात् सामर्थ्याभावादिति चेत्? अत्राह-**इदमेव च प्रतिषेधवचनं ज्ञापकम्-प्रधानस्य सापेक्षत्वेऽपि समासो भवतीति**, अयमाशयः-साम्यस्य शब्दोपात्तत्वे तेन शब्देन सह व्याघ्रादीनां सापेक्षत्वादेव साम-
35 र्थ्याभावे सिद्धे प्रतिषेधो व्यर्थः सन् प्रधानस्य सापेक्षत्वेऽपि समासः शास्त्रकृतामिष्ट इति ज्ञापयति । ननु स्वमात्रसार्थक्याय ज्ञापनं नोचितं, फलान्तरसत्त्व एव हि तदौचित्यं भवतीति चेत्? अत्राह-तेन **राजपुरुषो दर्शनीय इत्यादि सिद्धमिति**-आदौ व्यर्थं पश्चाद् वाक्यान्तरकल्पना स्वांशे चारितार्थ्यं फल-
40 मन्यत्रेति व्यर्थस्थलीया रीतिः, व्यर्थीभावो ज्ञापनं चोक्तम्, पुरुष-व्याघ्र इत्यत्रोपमेयत्वात् पुरुषः प्रधानः, उपमानं तु व्याघ्रादि तदर्थत्वादप्रधानमिति पुरुषस्य शूरादिशब्दप्रयोगे सापेक्षत्वेऽपि प्राप्तः समासः 'साम्यानुक्तौ' इत्यनेन निवर्त्यत इति स्वांशे चारितार्थ्यम्, फलं च राजपुरुषो दर्शनीय इत्यादौ, अत्र प्रधानस्य पुरुषस्य दर्शनीयपदसापेक्षत्वेऽपि समासः सिद्धः, अन्यथा [ ज्ञाप- 45 नाभावे ] 'सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो न' इति वचनात् स न स्यात् ।

के व्याघ्रादय इत्याकाङ्क्षायां नामग्राहं व्याघ्रादिगणमाह—**व्याघ्र, सिंह** इत्यादिना, पलतेरचि तस्याविका **पलाविका** पक्षिणी, कुञ्चतीति कुङ्, ततः स्त्रियामजादित्वादापि **कुङ्चा** 50 क्रौञ्चपक्षिणीत्यर्थः । 'व्याघ्राद्यैः' इति बहुवचनेन फलान्तरं साधयति-**बहुवचनमाकृतिगणार्थमिति, तेन** व्याघ्रादेराकृतिगणत्वेन, गणपठितातिरिक्तानामपि शब्दानामुपमेयेन समासो भवतीति वाग्वज्र इत्यादयोऽपि समासा भवन्तीत्यर्थः, तदेवाह-**वाग्वज्र** इति-समासोऽयं, विग्रहस्तु-वज्र इव वज्रः, 55 स चासौ वाक् चेति; **मुखपद्ममिति** समासः, पद्ममिव पद्मं, तच्च तन्मुखं चेति विग्रहः; **पाणिपल्लवमिति** समासः, पल्लवमिव पल्लवं, तच्चासौ पाणिश्चेति विग्रहः; **करकिसलयमिति** समासः, किसलयमिव किसलयं, तच्चासौ करश्चेति विग्रहः; **वदनेन्दुरिति** समासः, इन्दुरिवेन्दुः, स च तद् वदनं चेति 60 विग्रहः; **पार्थिवचन्द्रः** इति समासः, चन्द्र इव चन्द्रः, स चासौ पार्थिवश्चेति विग्रहः; **वानरश्वा** इति समासः, श्वा इव श्वा, स चासौ वानरश्चेति विग्रहः; **कुचकुम्भः** इति समासः, कुम्भ इव कुम्भः, स चासौ कुचश्चेति विग्रहः, **स्तनकलशः** इति समासः, कलश इव कलशः, स चासौ 65 स्तनश्चेति विग्रहः । ननु पुरुषश्चासौ व्याघ्रश्चेति विग्रहे स्वसदृशपरव्याघ्रादिशब्देन पुरुषादीनां विशेषणसमास एव स्यादिति किमर्थमिदं सूत्रमिति चेत्? अत्राह—**'उपमानं सामान्यैरेव' इत्यवधारणेन विशेषणसमासे प्रतिषिद्धे समासविधानार्थं वचनमिति,** अयमाशयः—पूर्वसूत्रस्य 70 नियमार्थत्वमुपपादितम्, तत्र नियमाकारश्च 'उपमानं सामान्यैरेव समस्यते' इति प्रदर्शितः, तथा चेहोपमानभूतानां व्याघ्रादिशब्दानामुपमेयेन सह विशेषणसमासोऽपि न स्यादिति समस्तप्रयोगासिद्धौ सूत्रस्यावश्यकत्वम् । किञ्च विशेषणसमासेऽत्र विशेष्यविशेषणयोरुभयोरपि द्रव्यवाचकत्वेन विशेष्यविशेषण- 75 भावस्य च विवक्षाधीनत्वात् कदाचित् पुरुषस्य कदाचिद् व्याघ्रस्य च पूर्वप्रयोगः स्यादिति पूर्वप्रयोगनियमार्थमपि सूत्रस्यावश्यकत्वम्, अन्यथा खञ्जकुब्जवदनियमः स्यात्, स्पष्टं चेदं तत्त्वबोधिन्यादौ । पातञ्जलमहाभाष्यव्याख्यारम्भे कैयटेनाभिहितं— 80

"भाष्याब्धिः क्वातिगम्भीरः, क्वाहं मन्दमतिस्ततः ।
छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम्" इति

पद्ये 'अतिगम्भीर' इति सामान्यवाचकपदोपादानेऽपि भाषाब्धिरिति समासो नोचित इति नव्याः; इह गाम्भीर्येण सादृश्यं न विवक्षितं, किन्तु विततदुरवगाहत्वादिनेति तस्य शब्दानुक्तत्वेन समास उचित एवेति दीक्षितः; परे तु नेहोपमेयसमासः किन्तु भाष्यमेवाब्धिरीतिरूपकालङ्कारविवक्षया मयूरव्यंसकादित्वात् समास इत्याहुः, स्थितस्य गतेरवश्यचिन्तनीयत्वादिति ॥ ३. १. १०२. ॥

## पूर्वा-ऽपर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यम-वीरम् । ३ । १ । १०३ ॥

त० प्र०—पूर्वादीनि नामान्येकार्थानि परेण नाम्ना सह समस्यन्ते, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । पूर्वश्चासौ पुरुषश्च—पूर्वपुरुषः, एवम्—अपरपुरुषः, प्रथमपुरुषः, चरमपुरुषः, जघन्यपुरुषः, समानपुरुषः, मध्यपुरुषः, मध्यमपुरुषः, वीरपुरुषः । "विशेषणं विशेष्येणै०" [ ३. १. ९६. ] इत्यादिनैव सिद्धे 'स्पर्धे परम्' इति पूर्वनिपातस्य विषयप्रदर्शनार्थमद्रव्यवाचिनोरनियमेन पूर्वापरभावप्रसक्तौ पूर्वनिपातनियमार्थं च वचनम्, तेन पूर्वजरन्, वीरपूर्वः; पूर्वपटुः । कथमेकवीर इत्यादौ वीरादेः परस्य स्पर्धे पूर्वनिपातो न भवति ? बहुलाधिकारात् ॥ १०३ ॥

श० म० न्यासानुसन्धानम्—पूर्वापर० पूर्वादीनां समाहारः । सुगमः सूत्रार्थः । **पूर्वश्चासौ पुरुषश्चेति** विग्रहः, **पूर्वपुरुषः** इति समासः । पूर्वादिशब्दानां केषाञ्चिद् दिग्वाचकत्वमप्यस्ति, दिग्वाचकानां च संज्ञातद्धितोत्तरपदेष्वेव समास इति पुराभिहितं, तथापि विशिष्येह गृहीतानां संज्ञातिरिक्तस्थलेष्वपि समास इति लभ्यते । अतिदिशति—**एवमिति, अपरपुरुषः** इति समासः, अपरश्चासौ पुरुषश्चेति विग्रहः, **प्रथमपुरुषः** इति समासः, प्रथमश्चासौ पुरुषश्चेति विग्रहः; **चरमपुरुषः** इति समासः, चरमश्चासौ पुरुषश्चेति विग्रहः; **जघन्यपुरुषः** इति समासः, जघन्यश्चासौ पुरुषश्चेति विग्रहः; **समानपुरुषः** इति समासः, समानश्चासौ पुरुषश्चेति विग्रहः, **मध्यपुरुषः** इति समासः, मध्यश्चासौ पुरुषश्चेति विग्रहः, **मध्यमपुरुषः** इति समासः, मध्यमश्चासौ पुरुषश्चेति विग्रहः; **वीरपुरुषः** इति समासः, वीरश्चासौ पुरुषश्चेति विग्रहः ।

इह पठ्यमानाः शब्दाः प्रायो विशेषणान्येव, तेषां च "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इत्येव समासः सिद्ध एवेति पुनरनेन समासविधानस्य वैयर्थ्यमाशङ्क्य निषेधति—**विशेषणं विशेष्येणेत्येव सिद्धे** इत्यादिना, **स्पर्धे परमिति पूर्वनिपातस्य विषयप्रदर्शनार्थमिति** यत्र सूत्रोपात्तानामेव मध्ये द्वयोः परस्परं समासस्तत्र परपठितस्य पूर्वनिपातो यथा स्यादित्येवमर्थमित्यर्थः । तदेव स्पष्टयति—**अद्रव्यवाचिनोरनियमेन पूर्वापरभावप्रसक्तौ पूर्वनिपातनियमार्थवचनमिति**, अयमाशयः—द्रव्यवाचकं प्रत्यद्रव्यवाचकस्य विशेषणत्वमेवेति तस्यैव पूर्वनिपातः, किन्तु यत्रोभावप्यद्रव्यवाचकौ तत्रानियमेन पर्यायेणोभयोः पूर्वनिपातापत्तौ एकरूपप्रयोगव्यवस्था न स्यादिति पूर्वादीनामेव पूर्वनिपातः, तत्रापि यः परत्वेनेह सूत्रे पठितस्तस्यैव पूर्वनिपातो यथा स्यादित्येवमर्थमपि, अन्यथोभयोर्विशेषणत्वेन सूत्रपठितत्वेन वा प्रथमोक्तत्वात् कस्य पूर्वनिपात इति नियमो न स्यात्, पाठे कृते च परत्वेन पूर्वनिपातव्यवस्था सिध्यति । **पूर्वजरन्** इति—अत्रैकः प्रकृतसूत्रपठितः, अपरश्च "पूर्वकालैकसर्वजरत्०" [ ३. १. ९७. ] इति पूर्वसूत्रपठितः, तत्रैतत्सूत्रपठितस्यैव पूर्वनिपातः परत्वात्, "विशेषणं०" [ ३. १. ९६. ] इति सूत्रापेक्षं हि तत्र परत्वं ग्राह्यम्, एतदपेक्ष्यं तु पूर्वत्वमेव । **वीरपूर्वः** इति—अत्रोभयोरेतत्सूत्रपठितयोः समासे वीरशब्दस्य सूत्रे परतया पाठात् तस्यैव पूर्वनिपातः । **पूर्वपटुरिति**—अत्रोभयोर्विशेषणत्वसम्भवः पूर्वशब्दस्य दिग्वाचित्वेन पटुशब्दस्य च गुणवाचित्वेन; पूर्वनिपातनियमार्थत्वे तु प्रकृतसूत्रस्याश्रीयमाणे पूर्वशब्दस्य सूत्रोपात्तत्वेन तस्यैव पूर्वनिपातः । **कथमेकवीर इत्यादौ वीरादेः परस्य स्पर्धे पूर्वनिपातो न भवति?** इति, अयमाशयः—इह वीरशब्दः पठितः "पूर्वकालैक०" [ ३. १. ९१. ] इति सूत्रे चैकशब्दः, तस्य पूर्वत्वादेतत्सूत्रपठितवीरशब्दस्यैव पूर्वनिपातो युक्तः पूर्वोक्तरीत्येति स कुतो न भवतीति प्रश्नाशयः, उत्तरयति—**बहुलाधिकारादिति**—बहुलमित्येतस्याधिकृतत्वेनैतत् सूत्रमत्र न प्रवर्तते, ततश्च पूर्वसूत्रेण समासे एकशब्दस्यैव पूर्वप्रयोग उचित इति भावः । केचित् तु नात्रायं समासोऽपि तु एकेषु मुख्येषु वीरयते इत्येकवीर इति साधयन्ति, तदपि बाहुलकत्वादिति न कोऽपि विशेषः । न च विशेषणसमासेनैव पूर्वादीनां सर्वेषां समासः स्यादेव, पूर्वनिपातनियमोऽपि बाहुलकादेव प्राप्त इति विशेष्यैषां समासविधायकानि सूत्राणि व्यर्थानीति शङ्कनीयम्, बहुलवचनमात्रेण न सर्वे प्रतिपत्तारो यथोचितं लक्ष्याणि ज्ञातुं शक्नुवन्ति, ये किल सूक्ष्मबुद्धयस्ते ज्ञास्यन्त्यपि, किन्तु मन्दबुद्धीनां कृते प्रपञ्च आवश्यकः, तथा च सामान्यं व्यापकं लक्षणमारभ्यते उदाहरणभूयस्त्वेन, सर्वथा विशिष्य सूत्रकरणे गौरवप्रसङ्गात्; मन्दमतिविनेयावबोधाय च क्वचित् प्रपञ्चोऽपि समाश्रीयते ॥ ३. १. १०३. ॥

## श्रेण्यादि कृताद्यैश्च्व्यर्थे । ३ । १ । १०४ ॥

**त० प्र०**–श्रेण्यादि नामैकार्थं कृताद्यैर्नामभिः सह समस्यते, च्व्यर्थे गम्यमाने, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । अश्रेणयः श्रेणयः कृताः–श्रेणिकृताः पुरुषाः, अनूका ऊकाः कृताः–ऊककृताः, राशिस्थानीकृता इत्यर्थः, एवं–पूगकृताः, श्रेणिमताः, श्रेणिमिताः, श्रेणिभूताः । च्व्यर्थे इति किम्? श्रेणयः कृताः, किंचित् निगृहीता अनुगृहीता वेत्यर्थः, च्व्यन्तानां च्व्यर्थस्य च्विनैवोक्तत्वान्नानेन समासः, च्व्यर्थे हि समासेनाभिधेयेऽयं समासो भवति, गत्यादिसूत्रेण तु नित्यसमासो भवत्येव–श्रेणीकृताः, ऊकीकृताः । श्रेणि, ऊक, पूग, कुन्दुम, कन्दुम, राशि, निचय, विशिष्ट, निर्धन, कृपण, इन्द्र, देव, मुण्ड, भूत, श्रमण, वदान्य, अध्यायक, अध्यापक, ब्रह्मण, क्षत्रिय, पटु, पण्डित, कुशल, चपल, निपुण इति श्रेण्यादिः । कृत, मत, मित, भूत, उप्त, उक्त, समाज्ञात, समाख्यात समाम्नात, संभावित, अवधारित, अवकल्पित, निराकृत, उपकृत, अपाकृत, कलित, उदाहृत, उदीरित, उदित, दृष्ट, विश्रुत, विहित, निरूपित, आसीन, आस्थित, अवबद्ध इति कृतादयः । बहुवचनमाकृतिगणार्थम् । यत्र सामर्थ्यं नास्ति तत्रेतिशब्दाध्याहारो द्रष्टव्यः–अनिर्धना निर्धना इत्युपकृताः, अचपलाश्चपला इत्यपाकृता; अभूता भूता इति निराकृताः । श्रेणिकृता इत्यादौ क्रियाकारकसंबन्धमात्रं न विशेषणविशेष्यभाव इति वचनम् ॥ १०४ ॥

**श० म० न्यासानुसन्धानम्–श्रेण्यादि०** । 'नाम, नाम्ना, एकार्थं, समासः, तत्पुरुषः, कर्मधारयश्च' इत्यनुवर्तन्ते, तत्र '**श्रेण्यादि**' इत्यनेन नाम विशेष्यते' अत आह–**श्रेण्यादि नामैकार्थमि**ति, '**कृताद्यैः**' इत्यनेन 'नाम्ना' इति विशेष्यते, अत आह–**कृताद्यैर्नामभिः सहे**ति–अर्थवशाद् वचनविपरिणामाद् बहुवचनम्, '**च्व्यर्थे**' इत्येतद् व्याचष्टे–**च्व्यर्थे गम्यमाने** इति–च्विप्रत्ययः, तदर्थः–अभूततद्भावः, पूर्वमतथाभूतस्य तथाभवनमिति यावत्, सोऽयं च्व्यर्थो हि च्विप्रत्यये कृते ज्ञायत एव, तथापि तादृशो न ग्राह्यः, किन्तु तमन्तरा गम्यमानः, तस्मिन् सति समासोऽयं भवति, च्विप्रत्यये कृते तु गतिसंज्ञत्वान्नित्यमेव समासः स्यादित्यग्रे वक्ष्यति, तथा च यत्र च्विप्रत्ययार्थः समासेनैव बोधनीयस्तत्रैवायं समासो वेदितव्य इत्यर्थः ।

एकशिल्पोपजीविनामेकपण्योपजीविनां वा सङ्घः श्रेणिः, **अश्रेणयः श्रेणयः कृताः** इति–इदं लौकिकं विग्रहवाक्यम्, वस्तुतः श्रेणयः पूर्वं नासन् किन्तु सम्प्रत्येव तथाभूताः सम्पादिता इत्यर्थः, अत्र श्रेणयः कृता इत्येव समासोपयोगि वाक्यम्, 'अश्रेणयः' इत्यस्य निवेशः समासस्य च्व्यर्थताप्रदर्शनाय, **श्रेणिकृताः** इति समासः, तस्य **पुरुषाः** इति च विशेष्यम्, अत्र च्व्यर्थस्य समासेनैवोक्तत्वादुक्तार्थानामप्रयोग इति निषेधात् समासात् पश्चान्न च्विप्रत्यय इति न तन्निमित्तो दीर्घः । **अनूका ऊकाः कृताः** इति विग्रहः, **ऊककृताः** इति समासः, तदर्थमाह–**राशिस्थानीकृता** इत्यर्थः इति, राशिबहिर्भूताः पदार्था राशिव्यपदेशनिमित्तं सन्निवेशविशेषमापादिता इति भावः, राशिस्थानीकृता इत्यत्र तु अराशिस्थाना राशिस्थानाः कृता इति च्विप्रत्यये ऊर्यादिसूत्रेण गतिसंज्ञया नित्यसमासः, च्विनिमित्तकं दीर्घत्वं च ज्ञेयम् । अतिदिशति–**एवमि**ति **पूगकृताः** इति समासः,अपूगा पूगाः कृता इति च विग्रहः, अर्थस्तु प्राग्वदवसेयः । **श्रेणिमताः** इति समासः, अश्रेणयः श्रेणयो मता इति विग्रहः; **श्रेणिमिताः** इति समासः, अश्रेणयः श्रेणयो मिता इति विग्रहः; **श्रेणिभूताः** इति समासः, अश्रेणयः श्रेणयो भूता इति विग्रहः ।

पदकृत्यं पृच्छति–**च्व्यर्थे इति किमि**ति, यत्र न च्व्यर्थविवक्षा तत्र समासो न भवतीत्याशयेन प्रत्युदाहरणमुखेनोत्तरयति–**श्रेणयः कृताः** इति, नन्ववश्यमिह च्व्यर्थः प्रतीयेत, अकृतस्यैव करणं भवतीति प्रसिद्धेरिति चेत्? अत्राह–**किञ्चिन्निगृहीता अनुगृहीता वेत्यर्थः** इति–श्रेणिस्वरूपोपलक्षितानामेव श्रेणिस्वरूपादन्यत् क्रियमाणमनेन दर्शयति, न च तत्कृतौ श्रेणिस्वरूपेऽभूततद्भावोऽस्तीति च्व्यर्थाभावः, निगृहीताः दण्डिताः अनुगृहीताः–उपकृताः सत्कृता वा, कृतशब्दस्य निगृहीतादिशब्दानामर्थेषु वृत्तिर्न सम्भवतीत्येतच्च नाशङ्कनीयम्, करोतेः क्रियासामान्यवाचित्वादनेकार्थत्वाद् वा धातूनाम् । ननु पूर्वं च्विप्रत्यये विहितेऽपि च्व्यर्थस्य सत्वेन तत्रानेन समासः कुतो नेति चेत्? अत्राह–**च्व्यन्तानां च्व्यर्थस्य च्विनैवोक्तत्वान्नानेन समासः** इति–च्व्यर्थाभिधानार्थमेवानेन समासः क्रियते, स चेदर्थः साक्षाच्चिनैवोक्तः किंनिमित्तमादाय समासः प्रवर्तेतेति निमित्ताभावान्न भवति समासोऽनेनेति भावः । किं तर्हि तत्र सर्वथा समासाभाव एवेति चेत्? अत्राह–**गत्यादिसूत्रेण तु नित्यसमासो भवत्येवे**ति–च्विप्रत्यये सति ऊर्यादिसूत्रेण गतिसंज्ञया "गतिक्वन्यस्तत्पुरुषः" [३. १. ४२.] इति सूत्रेण नित्यमेव समासो भवतीति भावः । समासाकारं दर्शयति–**श्रेणीकृताः, ऊकीकृताः** इति–अत्र प्रथमे "दीर्घश्च्वि०" [४. ३ १०८.] इति दीर्घः, द्वितीये तु "इश्चावर्णस्य०" [४. ३. १११.] इति सूत्रेण ईकारः ।

के श्रेण्यादयः शब्दा इत्याकाङ्क्षायां नामग्राहं श्रेण्यादिगणमाह–**श्रेणि, ऊक** इत्यादिना, "श्रिग् सेवायाम्" अतः "का-वा०" [उणा० ६३४.] इति णिप्रत्यये गुणे च '**श्रेणि**' इति, आलौ कारुसंहतौ च वर्तते; "अव रक्षणादिषु" अतः

"विचि०" [उणा० २२] इति किति के "मव्यवि०" [४. १. १०९.] इत्युपान्त्येन वकारस्य ऊटि च 'ऊक' इति कुन्दुमे च वर्तते; "पूङ्श् पवने" अतः "पू-मुदि०" [उणा० ९३.] इति किति गे 'पूग' इति संघाते क्रमुके च; "कुकि आदाने" अस्य "कुन्दुम" 5 [उणा० ३५२.] इति निपातनात् 'कुन्दुम' इति निचये गन्धद्रव्ये च वर्तते; "कदु रोदनाह्वानयोः" अतः "भृ मृ०" [उणा० ७१६] इत्युप्रत्यये 'कन्दु' इति पाकस्थाने सूत्रोते च क्रीडने वर्तते, कन्दुं मिमीते इति के 'कन्दुम' इति कान्दविके वर्तते; "अशौटि व्याप्तौ" अतः "अशो०" [उणा० ६२२.] इति 10 णिति इप्रत्यये आदौ रेफे च 'राशि' इति समूहे नक्षत्रपादनवकरूपे मेषादौ च वर्तते; निपूर्वात् "चिंग्ट् चयने", इत्यतः "युवर्ण०" [५.३.२८.] इत्यलि 'निचय' इति समूहे वर्तते; विपूर्वात् "शिष्लृंप् विशेषणे" इत्यतः क्ते 'विशिष्ट' इति युक्ते विलक्षणे विशेषणयुक्ते च वर्तते; निर्गतं धनमस्मादिति 'निर्धन' 15 इति; "कृपौङ् सामर्थ्ये" अतः "कृगॄ०" [उणा० १८८.] इति किति अणे 'कृपण' इति कदर्ये वर्तते; "इदु परमैश्वर्ये" अतः "भी०वृधि०" [उणा० ३८७.] इति रे 'इन्द्र' इति शक्रे वर्तते; "दिवूच् क्रीडादिषु" अतो लिहाद्यचि 'देव' इति सुरे नृपे मेघे हृषीके च वर्तते, "मुणत् प्रतिज्ञाने" अतः "कु-गु०" 20 [उणा० १७०] इति किड्ठे 'मुण्ड' इति परिवापितकेशे वर्तते; "भू सत्तायाम्" अतः-"क्षी-रि०" [उणा० २०१.] इति किति ते 'भूत' इति ग्रहे पृथिव्यादौ च, अथवा भवति स्मेति 'भूत' इति; "श्रमूच् खेदतपसोः" अतः श्राम्यति तपसेति नन्द्यादित्वादने 'श्रमण' इति निर्ग्रन्थे निन्द्यजीविनि च वर्तते; 25 "वद व्यक्तायां वाचि" अतः "वदि०" [उणा० ३८१.] इत्यान्ये 'वदान्य' इति दानशीले गुणवति चारुभाषिणि च वर्तते; अधिपूर्वात् "इंङ्क् अध्ययने" अतोऽध्येतीति णके 'अध्यायक' इति, तत एव णौ अध्यापयतीति णके 'अध्यापक' इति; ब्रह्मणोऽपत्यमिति "ङ-सोऽपत्ये" [६. १. 30 २८.] इत्यणि 'ब्राह्मण' इति, "जातौ" [७. ४. ५८.] इत्यत्र 'अनपत्य एव' इति नियमात् "अचर्मणोऽमनो०" [७. ४. ५९] इत्यन्त्यस्वरादिलोपो न भवति, ब्रह्म अणतीति "कर्मणोऽण्" [५. १. ७२.] इत्यणि पृषोदरादित्वादकारलोपे दीर्घत्वे च 'ब्राह्मण' इति; क्षत्रस्यापत्यमिति "क्षत्रादियः" 35 [६. १. ९३.] इतीये 'क्षत्रिय' इति; "पट गतौ" अतः "भृ-मृ०" [उणा० ७१६.] इत्युप्रत्यये 'पटु' इति दक्षे वर्तते; पण्डतं जानातीति 'पण्डितः' पण्डा बुद्धिः संजाताऽस्येति वा तारकादित्वादिते 'पण्डित' इति; कुशान् लातीति कुशलः, ते हि व्युत्पन्नैरादातुं शक्याः, कुश्यति वा "तृपि- 40 वपि०" [उणा० ४६८.] इत्यलकि 'कुशल' इति मेधाविनि आरोग्ये च वर्तते; "चप सान्त्वने" अतः "मृदि०" [उणा० ४६५.] इत्यले 'चपल' इत्यस्थिरे वर्तते; "पुणत् शुभे" शुभं शुभविषया क्रिया, नियतं पुणतीति "नाम्युपान्त्य०" [५. १. ५४.] इति के 'निपुण' इति पण्डिते वर्तते; इतिशब्दः समाप्तिद्योतकः, तथा च श्रेण्यादिगणः 45 समाप्त इत्यर्थः।

के कृतादय इत्याकाङ्क्षायां कृतादीनाह- **कृत, मत** इत्यादिना, इमे कृतादयः सर्वे क्तप्रत्ययान्ताः, केवलमासीनशब्दे विशेषः-"आसिक् उपवेशने आस्ते इत्यानशि "आसीनः" [४. ४. ११५.] इति निपात्यते, "आसीन उपविष्टः स्यात्" 50 इति। ननु गणपाठाविशेषे यथा 'श्रेण्यादि' इत्येकवचनान्तं निर्दिष्टं तथा 'कृताद्येन' 'कृतादिना' इति वैकवचनान्तमेव वक्तव्यं स्यात्, किमिह "कृताद्यैः" इति बहुवचनमुपादीयत इति चेत्? अत्राह-**बहुवचनमाकृतिगणार्थमि**ति, अयमर्थः-श्रेण्यादयस्तु साकल्येन पठ्यन्ते, ते चैकवचनान्तेनापि गणनि- 55 र्देशेन ग्राह्या एव, कृतादयश्च न साकल्येन पठ्यन्ते, ते चाकृत्यैव गणनीया इति सूचयितुं बहुवचननिर्देश इति। ननु तर्हि किमर्थं गणपाठः प्रदर्श्यते वृत्ताविति चेत्? सत्यम्-प्रकारप्रदर्शनार्थत्वात् पाठस्य सार्थक्यात्। उक्तश्चायमर्थो महाभाष्य-कैयटादिग्रन्थेष्वपि, तथाहि-"श्रेण्यादयः कृतादिभिः" [पा०सू० २.१.५९] 60 इति सूत्रे महाभाष्ये-'श्रेण्यादयः पठ्यन्ते, कृतादिराकृतिगणः' इत्युक्तम्, तत्र कैयटः-'अत एवादिशब्दो व्यवस्थावाची, कृतादिरित्यत्रादिशब्दः प्रकारवाची, प्रयोगदर्शनाच्चोदाहरणस्थानीयाः कतिपये वृत्तिकारैः प्रदर्शिताः' इति। कृतादीनामवकल्पितान्तानां साक्षात् श्रेण्यादिभिः सामानाधिकरण्यप्रतीतेस्तत्र सामर्थ्यसत्त्वात् 65 समासप्रवृत्तौ निराबाधायामपि 'उपकृत, अपाकृत' प्रभृतिशब्दानां च्व्यर्थे विवक्षिते तैः सह सामानाधिकरण्याप्रतीतेः कथं सामर्थ्यमित्याशङ्कायामाह-**यत्र सामर्थ्यं नास्ति तत्रेतिशब्दाध्याहारो द्रष्टव्यः** इति-इतिशब्दद्वारैव तत्र सामर्थ्यप्रतीतिरिति भावः, तदेव स्पष्टयति-**अनिर्धना निर्धना इत्युपकृता** इति 70 वस्तुतो निर्धनत्वाभावेऽपि निर्धनबुद्ध्योपकृता इति भावः, इदं विग्रहवाक्यं, समासस्तु निर्धनोपकृता इति, एवमुत्तरत्रापि। तत्र समासस्वरूपं-चपलापाकृताः, भूतनिराकृताः इति च। विशेषणसमासस्याप्राप्त्या प्रकृतसूत्रस्यापूर्वविध्यर्थत्वमाह-**श्रेणिकृता इत्यादौ क्रियाकारकसम्बन्धमात्रं न विशेषणविशेष्यभाव इति वचनमि**ति-श्रेण्यादेः कृतादिभिर्न विशेषणविशे- 75 ष्यभावः, अश्रेण्यादिनैव तथासम्बन्धप्रतीतेः, कृतादिभिस्तु क्रियाकारकभाव एवेति भावः। यद्यपि तत्रापि क्रियां प्रति कारकस्योपसर्जनत्वेनाप्रधानत्वेन विशेषणविशेष्यभावः प्रतीयत एव, तथापि न सामानाधिकरण्यप्रतीतिरित्यैकार्थ्याभावान्न 80

विशेषणसमासप्राप्तिरिति विशिष्य समासवचनावश्यकत्वमिति तत्त्वम् ॥ ३.१.१०४॥

## क्तं नञादिभिन्नैः । ३ । १ । १०५ ॥

**त० प्र०**-नञादयो नञ्प्रकाराः, तैरेव भिन्नैर्नामभिः सह क्तान्तं नामैकार्थं सामर्थ्यादनञ् समस्यते, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। कृतं च तदकृतं च-कृताकृतम्, एवं-भुक्ताभुक्तम्, अशितानशितम्। इटः क्तावयवत्वाद्विकारस्य त्वेकदेशविकृतानन्यत्वान्न भेदकत्वम्, तेन क्लिष्टाक्लिशितम्, पूतापवितम्, शाताशितम्, छाताच्छितम्; आदिग्रहणात् कृतापकृतम् भुक्तविभुक्तम् पीतावपीतम्। क्तमिति किम्? कर्तव्यमकर्तव्यं च। नञादिभिन्नैरिति किम्? कृतं प्रकृतम्। कृताकृतादिषु हीषदसमासिद्योतकस्य नञः प्रयोगात् तदादयोऽपीषदसमासिद्योतिन एवापादयो गृह्यन्ते। नञादिभिरेव भिन्नैरित्यवधारणं किम्? कृतं चाविहितं चेति प्रकृतिभेदे, कृतं चाकर्तव्यं चेति प्रत्ययभेदे, गतश्च प्राप्तोऽगतश्चाज्ञात इत्यर्थभेदे, सिद्धं चाभुक्तं चेति प्रकृत्यर्थयोर्भेदे च मा भूत्। अवयवधर्मेण समुदायव्यपदेशात् कृताकृतादिष्वैकार्थ्यम्। "विशेषणं विशेष्येणै०" [ ३. १. ९६. ] इत्येव समाससिद्धः, किंतु क्रियाशब्दत्वादनियमेन पूर्वापरनिपाते प्राप्ते पूर्वनिपातनियमार्थं वचनम्, तेनाकृतकृतम्, अनशिताशितमित्यादि न भवति ॥ १०५ ॥

**श० म० न्यासानुसन्धानम्**-क्तं नञा०। क्तमित्यस्य विशेषणविशेषसम्पत्तये पूर्वं **नञादिभिन्नैरि**ति व्याख्येयम्, नञ् आदिर्यस्य स नञादिः, लाघवादेकवचनमाश्रीयते, नञादिना भिन्नैरिति विग्रहः, अत्र येषामादौ नञ् तेषां बहुत्वेन विशदतया तत्प्रतीतये बहुवचनान्ततया व्याख्याति-**नञादयः** इति, नहि नञादयः पठ्यन्ते इत्यादिशब्दः प्रकारवाची, न तु व्यवस्था [ प्रभृति ] वाचीत्याह-**नञ्प्रकाराः** इति-यथा नञ् ईषदसमाप्तिद्योतकस्तथा ये ईषदसमाप्तिद्योतकास्ते नञ्प्रकाराः, प्रकारशब्दस्य भेदसादृश्योभयपरत्वात्। **तैरेव भिन्नैरि**ति-नञादिभिन्नैरित्यत्र विनाप्येवकारेण तदर्थावगतिः सावधारणे आधिक्ये भिन्नशब्दस्य वर्तमानत्वात्, अयमाशयः-भिन्नशब्दस्येह, विशिष्टशब्दार्थपरत्वम्, अयं विशिष्टशब्दोऽस्त्येव सावधारण आधिक्ये, यथा-देवदत्तयज्ञदत्तावाढ्यावभिरूपौ, प्रेक्षावन्तौ, देवदत्तस्तु यज्ञदत्तात् स्वाध्यायेन विशिष्टः स्वाध्यायेनैवाधिक इति गम्यते, अन्ये तु गुणाः समाना एव भवन्ति। अस्ति च निरवधारण आधिक्ये वर्तमानः, यथा-देवदत्तयज्ञदत्तावाढ्यावभिरूपौ प्रेक्षावन्तौ, देवदत्तस्तु यज्ञदत्तात् स्वाध्यायेन विशिष्टः, स्वाध्यायेनाधिक इति गम्यते, अन्ये तु गुणाः समाना भूयांसो वा, ते न विवक्षिता भवन्ति। यद्यपि चाभिन्नरूपमेव वाक्यद्वयमेतत् तथापि प्रकरणादेव कुतश्चिदर्थभेदो गम्यते, यथाऽऽराच्छब्दे दूरान्तिकार्थभेदः, तत्र यदि निरवधारण आधिक्ये वर्तमानो भिन्नशब्दो गृह्येत तदा सिद्धं च तदभुक्तं चेत्यत्रापि स्यात्, अस्त्यत्र नञाधिकं क्तान्तम्, तस्मात् सावधारण आधिक्ये वर्तमानं भिन्नशब्दं परिगृह्याह-**तैरेव भिन्नै**रिति, न प्रकृत्या प्रत्ययेन शब्दान्तरेणार्थेन चेत्यर्थः। क्तमिति प्रत्ययः, प्रत्यये तदन्तविज्ञानं, तदन्तं च 'नाम' इत्यस्य विशेषणमत आह-**क्तान्तं नामे**ति, **एकार्थमि**ति वर्तत एव, कीदृशमिदं क्तान्तं नामेत्याह-**सामर्थ्याद् अनञ्** इति-अविद्यमानो नञ् यस्मिन् क्तान्ते तद् अनञ्, नञ्मात्रभेदवन्तो हि नञ्रहितास्ते शब्दा एव भवितुं समर्थाः, अन्येषु स्वरूपस्यापि भेदादिति भावः, एतच्च 'तैरेव' इत्यनेनापि स्फुटीकृतम्।

अथोदाहरणावसर इति विगृह्योदाहरति-**कृतं च तदकृतं चेति** विग्रहः, **कृताकृतमि**ति च समासः। ननु कथं पुनरेकमेव वस्तु कृतं स्यादकृतं चेति चेत्? उच्यते-अवयवधर्मेण समुदायस्य तथाव्यपदेशाददोषः, कृतभागसम्बन्धात् कृतम्, अकृतभागसम्बन्धात् तदेवाकृतमित्युच्यते, अथवा यदर्थं कृतं तत्रासामर्थ्यादकृतम्, यथा पुत्रकार्यासामर्थ्यात् पुत्रोऽप्यपुत्र इति। अतिदिशति-**एवमि**ति, **भुक्ताभुक्तमि**ति समासः, भुक्तं च तदभुक्तं चेति विग्रहः, एकमपि भुक्तभागसम्बन्धाद् भुक्तम्, अभुक्तभागसम्बन्धाच्चाभुक्तम्, अथवा यदर्थं भुक्तं तत्रासामर्थ्यादभुक्तमिति। **अशितानशितमि**ति समासः, अशितं च तदनशितं चेति विग्रहः, शेषं प्राग्वत्। यत्र क्तस्यादौ विकल्पेनेड् भवति, तत्र रूपवैलक्षण्येऽपि प्रकृतिभागस्य साम्यात् समासो भवत्येवेत्याह-**इटः क्तावयवत्वादि**ति-इट् हि आगमः, आगमाश्च तद्गुणीभूतास्तद्ग्रहणेनैव गृह्यन्त इति क्तप्रत्ययेनैव तस्यापि ग्रहणं, तदतिरिक्तश्च प्रकृतिभाग एक एवेति न तत्र भेद इति भावः; न केवलमिट एवाधिक्यं, किन्तु तत्सदसद्भावप्रयुक्तविकारस्यापि न भेदकत्वमित्याह-**विकारस्य त्वेकदेशविकृतस्यानन्यत्वान्न भेदकत्वमि**ति-एकदेशविकृतमनन्यवत् * इति न्यायसहकारान्न विकारस्य भेदजनकत्वमित्यर्थः, तदनुरूपमुदाहर्तुमाह-**तेनेति, क्लिष्टाक्लिशितमि**ति समासः, क्लिष्टं च तदक्लिशितं चेति विग्रहः, **पूतापवितमि**ति समासः, पूतं च तदपवितं चेति विग्रहः, "क्लिशिच् उपतापे" "पूङ् पवने" आभ्यां परस्य क्तस्यादौ "पूङ्-क्लिशिभ्यो न वा" [ ४. ४. ४५. ] इतीटो विकल्पनाद् विकल्पेन इट् भवति, यदा भवति तदा 'क्लिशित' इति, न तथा 'अक्लिशित' इति, यदा न भवति तदा शस्य षत्वे तस्य च टत्वे 'क्लिष्ट' इति, एवं

पूधातोरपि यदा नैट् तदा 'पूत' इति, यदा चेट् तदा "न डीङ्-शीङ्-पूङ्०" [४. ३. २७.] इति कित्त्वाभावाद् गुणे 'पवित' इति, न तथा 'अपवित' इति, अनयोः षत्वगुणादिकृतविकारभेदेऽपि समासो भवति। इडतिरिक्तविकारभेदस्यापि 5 भेदाप्रयोजकत्वमुदाहरति-**शाताशितमि**ति समासः, शातं च तदशितं चेति विग्रहः, **छाताच्छितमि**ति समासः, छातं च तदच्छितं चेति विग्रहः, "शोंच् तक्षणे" "छोंच् छेदने" अनयोः "आत् सन्ध्यक्षरस्य" [४. २. १.] इत्यात्वे 'शा छा' इति दशायां क्ते परे "छा-शोर्वा" [४. ४. १२.] इत्याका-10 रस्येत्वविधानादेकत्र विकारकृतो रूपभेदः सन्नपि पूर्वोक्तन्यायबलान्न भेदः। 'नञादि' इत्यत्रादिशब्दोपादानस्य फलमाह-**आदिग्रहणादि**ति-आदिशब्दोपादानेन 'अप वि अव' प्रभृतीनां संग्रहो भवतीत्यर्थः, तथा च तद्घटितान् उदाहरति-**कृतापकृतमि**ति समासः, कृतं च तदपकृतं चेति विग्रहः, तदेकदे-15 शस्येष्टस्य करणात् कृतम्, अपकृतं च तदेकदेशस्यानभिमतस्य करणात्। **भुक्तविभुक्तमि**ति समासः, भुक्तं च तद् विभुक्तं चेति विग्रहः, भुक्तं त्वभ्यवहृतत्वाद् विभुक्तं चाशोभनत्वात्, विशब्दोऽत्राशोभनत्वं प्रतिपादयति विरूपवत्; अथवा भुक्तं च तदेकदेशस्याभ्यवहृतत्वाद् विभुक्तं च तदेकदेशस्य विशेषेणाभ्य-20 वहृतत्वाद् भुक्तविभुक्तम्। **पीतावपीतमि**ति समासः, पीतं च तदवपीतं चेति विग्रहः, शेषं प्राग्वत्, एष्वपादीनां नञ्वदीषदसमाप्तिद्योतकत्वेन तद्योगेऽपि तैरेव भेद इत्युक्तेर्न विघात इति भावः।

पदकृत्यं पृच्छति-**कमिति किमि**ति-तथा च नाममात्रं नञादिमात्रभिन्नेन नाम्ना समस्यत इत्यर्थः स्वीकार्य इति भावः। 25 तथा सति दोषः स्यादित्यावेदयितुं प्रत्युदाहरति-**कर्तव्यमकर्तव्यमि**ति-नञ ईषदसमाप्तिद्योतकतासम्भवाभिप्रायेणेदं कृदन्तप्रत्युदाहरणम्, अन्यथा तु घटोऽघट इत्याद्यपि प्रत्युदाहर्तुं शक्यत एव, अत्र नानेन समासः, विशेषणादिसमासस्तु स्यादेव, एवं च पूर्वप्रयोगनियमाभावमात्रेण भेदः। पुनः पृच्छति-30 **नञादिभिन्नैरिति किमि**ति-प्रकारवाचिन आदिशब्दस्य ग्रहणं किमित्यभिप्रायः, प्रत्युदाहरति-**कृतं प्रकृतमि**ति-यद्यपि नञादिपदेन नञ्प्रकाराणां क्रियासु यत्किञ्चिदर्थद्योतकानामव्ययानां ग्रहणमिति वर्णयितुं शक्यते, तथापि न तेन प्रकारेण सादृश्यं ग्राह्यम्, अपि तु-ईषदसमाप्तिद्योतकत्वरूपेण, प्रशब्दश्च 35 न तदर्थद्योतकोऽपि तु प्रकृष्टार्थद्योतक इति क्रियायाः प्रकर्षमेवाह न त्वीषदसमाप्तिमिति स नेह गृह्यते, प्रकारस्य तेनैव रूपेण ग्रहणं चाचार्यादिव्याख्यानमूलकमेव, तदेतदाह-**कृताकृतादिषु ही**त्यादि, अयमिहाशयः-'प्रयुक्तानामिदमन्वाख्यानम्' इति तत्र तत्राचार्यैः स्वीकृतत्वात् कृताकृतादिप्रयोगमनुसृत्यैव प्रकृतं 40 सूत्रमन्वाख्यानम्, तत्र च [ कृताकृतादिषु ] ईषदसमाप्तिद्योतकस्यैव नञः प्रयोगः, अन्यथा कृतस्याकृतेन वैयधिकरण्यात् सामानाधिकरण्यरूपमैकार्थ्यं न स्यात्, तथा च यादृशार्थद्योतकोऽत्र नञ् तादृशार्थद्योतका एवान्येऽप्यपादयो निपाता गृह्यन्ते नान्ये इति प्रादीनां नेह ग्रहणमिति। 'तैरेव' इत्यवधारणस्य भिन्नशब्दार्थलभ्यस्य किमर्थमाश्रयणमिति शङ्कते-**नञादिभिरेव भिन्नैरित्यवधारणं किमि**ति, 45 अवधारणाभावे यत्र प्रकृतिभेदो यत्र प्रत्ययभेदो यथार्थभेदो यत्र च प्रकृत्यर्थोभयभेदस्तत्रापि क्तान्तानां नञादिभिन्नैः समासः प्रसज्येत, स च नेष्ट इति समाधातुं क्रमेणाह-**कृतं चाविहितं चेति प्रकृतिभेदे** इति एकत्र कृधातुः प्रकृतिः, अपरत्र धाधातुः प्रकृतिः, "कृत् 50 सगतिकारकस्य" [ ७. ४. ] इति विहितेत्यस्य क्तान्तत्वमस्ति, समासो मा भूदिति सर्वत्रान्वयो ज्ञेयः; **कृतं चाकर्तव्यं चेति प्रत्ययभेदे** इति -एकत्र क्तप्रत्ययोऽपरत्र तव्यप्रत्यय इति प्रत्ययभेदः; **गतश्च प्राप्तोऽगतश्चाप्राप्त इत्यर्थभेदे** इति-गतश्चागतश्चेति प्रत्युदाहरणाकारः, तत्र कथमर्थभेद इत्याकाङ्क्षाया-55 मुक्तं-गत इत्यस्यार्थः प्राप्त इति, अगत इत्यस्यार्थः-अज्ञात इति गत्यर्थानां ज्ञानार्थत्वात्, तथा चैकत्र प्राप्तिरर्थोऽपरत्र ज्ञानमिति स्फुटमर्थभेदः; **सिद्धं चाभुक्तं चेति प्रकृत्यर्थयोर्भेदे चे**ति-एकत्र 'सिध्' इति प्रकृतिः, अपरत्र 'भुज्' इति प्रकृतिरिति स्पष्टं प्रकृतिभेदः, एवमेकत्र निष्पत्तिरर्थः, अपरत्र भोजनमर्थः, 60 तथा एकत्र कर्तरि क्तोऽपरत्र कर्मणीत्यर्थभेदोऽपि समस्ति; एषा सर्वापि व्यावृत्तिरवधारणार्थकभिन्नपदलभ्या।

कृतत्वाकृतत्वयोरेकत्र समावेशासम्भवात् सामानाधिकरण्याभावादैकार्थ्याभावेन कथं समास इत्याशङ्कायामाह-**अवयवधर्मेण समुदायव्यपदेशात् कृताकृतादिष्वैकार्थ्य-** 65 **मि**ति एकं किमपि वस्तु केनचिदवयवावच्छेदेन कृतं केनचिदवयवावच्छेदेन चाकृतमिति संयोगादिवदत्र कृतत्वादीनामप्यव्याप्यवृत्तित्वम्, तथा च यथा संयोगतदभावयोरवयवभेदेन वैयधिकरण्येऽपि वृक्षत्वरूपसमुदायधर्मेण सामानाधिकरण्यं तथा प्रकृतेऽपि समुदायस्य प्रत्येकावयवव्यासज्यवृत्तित्वादवयवे समु- 70 दायव्यवहारः कर्तुं शक्य इत्यवयवशो वृत्तिमतोः कृतत्वाकृतत्वयोः समुदायवृत्तित्वमपीति सामानाधिकरण्यरूपमैकार्थ्यमुपपन्नमिति।

नन्वेवमैकार्थ्यस्योपपन्नत्वात् कृताकृतमित्यादि विशेषणसमासेनैव सिद्धमिति किमर्थमिदं सूत्रमित्याशङ्क्य समाधत्ते-**"विशेषणं विशेष्येण०" इत्येव समासः सिद्धः, किन्तु क्रिया-** 75 **शब्दत्वादनियमेन पूर्वापरनिपाते प्राप्ते पूर्वनिपातनियमार्थं वचनमि**ति, अयमाशयः-द्रव्यगुणादिवाचकपदयोः परस्परसमभिव्याहारे विशेषणविशेष्यभावनैयत्येऽपि क्रियाशब्दानां कृताकृतादीनां तस्यानैयत्येन कदाचिदकृतादिरूपनञ्विशिष्टपदानामेव विशेषणत्वविवक्षायां पूर्वप्रयोगनियमो न स्यादिति 80

तन्नियमाय सूत्रमिदमावश्यकमिति । तत्फलमाह-**तेनाकृतकृतम्, अनशिताशितमित्यादि न भवतीति** ॥ ३. १. १०५. ॥

## सेट् नानिटा । ३ । १ । १०६ ॥

**त० प्र०—सेट् क्तान्तं नाम नञादिभिन्नेनानिटा नाम्ना न समस्यते, पूर्वस्यापवादः । क्लिशितमक्लिष्टम्, पवितमपूतम्** । इड्ग्रहणमर्थभेदाहेतोर्विकारस्य उपलक्षणम्, तेन शिताशातम्, छिताच्छातमित्यादि न भवति । कथं विन्ना वित्तं ? त्राणात्रातम् ? "क्तादेशोऽपि" [२. १. ६१] इति परे समासे नत्वस्यासत्त्वाद् भविष्यति । शेडिति किम् ? कृताकृतम्, शाताशातम्, छाताच्छातम् । अनिटेति किम् ? अशितानशितेन जीवति, शिताशितम्, छिताच्छितम् ॥१०६॥

**श० म० न्यासानुसन्धानम्-सेट्०** । सूत्रार्थः सुगमः **पूर्वस्यापवाद** इति-पूर्वसूत्रे 'इटः क्तावयवत्वाद् विकारस्य त्वेकदेशविकृतानन्यत्वान्न भेदकत्वम्' इति व्याख्यातम्, तथा च यथाऽनिट् सेटा समस्यते तथैव सेट् अनिटाऽपि समस्येतैव तुल्यन्यायादिति तन्निषेधकृदिदं सूत्रं तदपवाद एवेति भावः । **क्लिशितमक्लिष्टम् पवितमपूतमि**ति-अत्र सेट् अनिटा न समस्यते, अनेन निषेधात्, अनिट् तु सेटा समस्यत एव पूर्वसूत्रेण, सेट् अनिटा यदि समस्येत तदा प्रथमोक्तत्वात्सेटः प्राग्निपाते क्लिशिताक्लिष्टमिति समासस्वरूपं स्यात् तच्च नेष्यत इति भावः । इड्विशिष्टस्यानिटा समासाभाववत् तदन्यविकारविशिष्टस्याविकृतेनापि समासो नेष्ट इति तदर्थं संगृह्णाति-**इड्ग्रहणमर्थभेदाहेतोर्विकारस्योपलक्षणमि**ति-यथेटि सत्यसति वा नार्थभेदस्तथैव येन विकारेण सताऽसता वा नार्थो भिद्यते सोऽपीट् साम्यादिहेट् पदेनोपलक्षणीयो व्याख्यानादिति भावः, तत्फलमाह-**तेन शिताशातम्, छिताच्छातमित्यादि न भवती**ति-इत्वरूपविकारविशिष्टस्य तद्रहितेनानिटा समासाभावोऽत्रावेदितः, अयं भावः-पूर्वभाग एव सविकारोऽविकारेण न समस्यते, उत्तरपदमुभयपदे वा सविकारे समस्येते एव, तथैव लक्ष्यदर्शनात् । पूर्वभागस्याविकृतस्यैवात्र समासनिषेधोद्देश्यत्वादाशङ्कते-**कथं विन्नावित्तम्, त्राणात्रातमिति**-"विदिंप् विचारणे" विद्, विद्यते स्मेति, "त्रैङ् पालने" त्रै, "आत् सन्ध्यक्षरस्य" [४. २. १.] इत्यात्वे त्रा, त्रायते स्मेति च क्ते "ऋ-ह्री-घ्रा-ध्रा-त्रोन्द-नुद-विन्तेर्वा" [४. २. ७६.] इति तस्य विकल्पेन नकारो भवति, यत्र नकारस्तत्र "विन्न, त्राण, इति स्वरूपम्, यत्र तु न नकारस्तत्र 'वित्त, त्रात' इति स्वरूपम्, विन्नं च तदवित्तं च विन्नावित्तम्, त्राणं च तदत्रातं च त्राणात्रातमिति, अत्र पूर्वपदस्य सविकारत्वात् कथं समास इति शङ्काशयः, समाधत्ते-**'क्तादेशोऽपि' इति परे समासे न त्वस्यासत्त्वाद् भविष्यतीति**-समासविधायकशास्त्रदृष्ट्या नत्वं नास्त्येवेति न वैरूप्यं पूर्वोत्तरपदयोरिति भावः, विन्नमित्यत्र "रदादमूर्छ०" [४. २. ६९.] इति दस्य नकारः ।

पदकृत्यं पृच्छति-**सेडिति किमि**ति, तदभावेऽनिटोत्तरपदेन सह समासाभाव इत्येव सूत्रार्थः स्यादिति कृताकृतादिमुख्यप्रयोग एव न सिध्येदित्याह-कृताकृतमित्यादि । पुनः पृच्छति-**अनिटेति किमि**ति, उत्तरयति-**अशितानशितेन जीव**तीत्यादि-'अनिटा' इत्यस्यानुपादाने सेट् पूर्वपदं न समस्यत इत्येवार्थः स्यादिति 'अशितानशितेन जीवति' इत्यादिप्रसिद्धप्रयोगेऽपि समासो न स्यात्, तत्रोत्तरपदस्येव पूर्वपदस्यापि सेट्त्वात्, इट्ग्रहणस्य चार्थभेदाहेतोर्विकारस्योपलक्षणत्वमिति शिताशितमित्यादिप्रयोगे उभयपदविकारभाजि समासो न स्यात्, अनिटेति कथिते चोभयपदस्य सेट्त्वेन सविकारत्वेन वा न दोषावतारः ॥ ३. १. १०६. ॥

## सन्महत्परमोत्तमोत्कृष्टं पूजायाम् । ३ । १ । १०७ ॥

**त० प्र०—सदादीनि नामान्येकार्थानि पूजायां गम्यमानायां सामर्थ्यात् पूज्यमानवचनैर्नामभिः सह समस्यन्ते, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । संश्चासौ पुरुषश्च-सत्पुरुषः, एवं-महापुरुषः, परमपुरुषः, उत्तमपुरुषः; उत्कृष्टपुरुषः । पूजायामिति किम् ? सन् घटः, विद्यमान इत्यर्थः, उत्कृष्टो गौः, कर्दमादुद्धृत इत्यर्थः । कथं 'महाजनः, महोदधिः' इति ? वैपुल्यं ह्यत्र गम्यते न पूजा, बहुलाधिकाराद् भविष्यति । पूजायामेवेति नियमार्थं वचनं पूर्वनिपातव्यवस्थार्थं च, तेन 'सच्छुक्लः' इत्यादौ खञ्जकुण्टादिवद्नियमेन पूर्वनिपातो न भवति, 'परमजरन्, महावीरः-' परममहान्' इत्यादौ च *स्पर्धे परम्* इति न्यायेन यथा परं पूर्वनिपातश्च सिद्धो भवति ॥ १०७ ॥**

**श० म० न्यासानुसन्धानम्-सन्महत्०** । "असक् भुवि" अतोऽस्तीति शतरि सन् विद्यमानः, अन्ये त्वसत्कल्पा इत्यर्थविवक्षायां तूत्तम इत्यर्थः, "मह पूजायाम्" मह्यत इति 'द्रुहि-वृहि०' [उणा० ८८४.] इति कर्तृप्रत्यये महान् पूजितो, विस्तीर्णश्च, "पृश् पालनपूरणयोः" अतः "स्-पृ०" [उणा० ३४७.] इत्यमे परमः परोऽग्रेसरः प्रधानश्च, अतिशयेनोद्गत उत्तमः "प्रकृष्टे तमप्" [७.३.५.] इत्युद्गतार्थवृत्तेरुच्छब्दात् तमप् उत्ताम्यतीत्यचि वा-उत्तमः श्रेष्ठ उन्नततमश्च, उत्कृष्ट

उत्कर्षं गतः, ऊर्ध्वं कृताकर्षणो वा, सदादीनां समाहारः । **पूजायामि**ति व्याख्याति-**पूजायां गम्यमानायामि**ति; पूज्योपादानसामर्थ्यलब्धमर्थमाह-**सामर्थ्यात् पूज्यवचनै**रिति पूजायां गम्यमानायां सदादीनि पूजनवचनानि, तेन समासे च सदादिभिः पूज्योत्तरपदार्थस्य गम्यत इत्यर्थः । पूजासमासार्थस्तेन नित्य एवायं विधिरिति केचित्, सदादीनि समासमन्तरापि पूजनवचनानि पूजां गमयन्तीति विकल्पित एवायं विधिरित्यपरे ।

विगृह्योदाहरति-**संश्चासौ पुरुषश्चे**ति विग्रहः, सन् शोभन इत्यर्थः, **सत्पुरुषः** इति च समासः; अतिदिशति-**एवमि**ति महापुरुषः इति समासः; महांश्चासौ पुरुषश्चेति विग्रहः; "जातीयैकार्थे० "[ ३. २. ७०. ] इति डाः; **परमपुरुषः** इति समासः; परमश्चासौ पुरुषश्चेति विग्रहः; 'परमो न' इति विग्रहे अपरमः; इति भवति, यतोऽयं योगो विशेषणं समासस्य बाधको न तत्पुरुषस्य; **उत्तमपुरुषः** इति समासः; उत्तमश्चासौ पुरुषश्चेति विग्रहः; **उत्कृष्टपुरुषः** इति समासः, उत्कृष्टश्चासौ पुरुषश्चेति विग्रहः ।

अत्र सदादयः सर्वेऽपि शब्दाः पूजायामन्यत्र च प्रयुज्यन्ते, तत्र यत्रैषां पूजायामेव प्रयोगस्तत्रैव समासविधानार्थं पूजायामिति सूत्रे समुपात्तं, तथा च विद्यमानार्थकस्य सच्छब्दस्य, वैपुल्यार्थकस्य महच्छब्दस्य, चरमार्थकस्य परमशब्दस्य, उच्चतमार्थकस्योत्तमशब्दस्य, उद्धृतार्थकस्योत्कृष्टशब्दस्य च नानेन समासः; तदेतत् प्रत्युदाहरणमुखेन स्फोरयितुं पृच्छति-**पूजायामि**ति **किमि**ति, **सन् घटः** इति प्रत्युदाहरणं, **विद्यमानः** इति तदर्थः, **उत्कृष्टो गौः** इति प्रत्युदाहरणं, **कर्दमादुद्धृतः** इति तदर्थः, अत्र सच्छब्दोऽस्तित्ववचनः, उत्कृष्टशब्दश्चोद्धृतवचन इति नात्र पूजा गम्यत इति समासो न भवतीत्यर्थः । यद्येवं क्वचित् पूजाविरहेऽपि समास उपलभ्यते, तस्य का गतिरित्याशङ्कते-**कथं महाजनः, महोदधिः? वैपुल्यमत्र गम्यते न पूजेति**-महांश्चासौ जनश्चेति विग्रहे जनस्य न पूजा गम्यते, अपि तु तस्याकारमहत्त्वादिकमेवावगम्यते, ततः कथं समास इत्याशयः प्रष्टुः, अस्तु वात्र कथञ्चित् पूजावगतिः महोदधिरित्यत्र महापापमित्यादौ च कथमपि न पूजावगतिः स्वीकर्तुं शक्यत इति तेषु कथं समास इति प्रश्नः, अत्र मतद्वयं-केचिदाहुरयं पूजाशब्द एव, उपचारेण पूजाविरहे प्रयोग इति; अपरे बहुलाधिकारादपूजायामपि क्वचिद् भवतीति; तत्र द्वितीयमतमाश्रित्याह-**बहुलाधिकाराद् भविष्यती**ति-तथा च क्वचित् पूजाविरहेऽपि लक्ष्यानुरोधात् प्रवृत्तिरिति भावः । ननु विशेषणसमासेनैव सूत्रं गतार्थं सदादीनां सदा विशेषणत्वस्यैव सम्भवादिति चेत्? अत्राह-**पूजायामेवेति नियमार्थं वचनमि**ति-सन्महत्परमोत्कृष्टं पूजायामेव समस्यते नान्यत्रेति पूजायां नियमार्थमिदं वचनमारभ्यते, तेन सन् [ विद्यमानः ] जीव इत्यादौ समासो न भवति, फलान्तरमाह-**पूर्वनिपातव्यवस्थार्थं चे**ति, तामेव व्यवस्थां स्पष्टयति-**तेन सच्छुक्ल इत्यादौ खञ्जकुण्टादिवदनियमेन पूर्वनिपातो न भवती**ति-अत्रोभयोर्गुणवाचकतया विशेषणसमासे खञ्जकुण्टादिवत् पूर्वनिपातनियमो न स्यात्- कदाचित् सच्छब्दस्य कदाचिच्च शुक्लशब्दस्य पूर्वनिपातः स्यात्, अनेन समासे तु सच्छब्दस्यैव व्यवस्थितः पूर्वनिपातो भवतीत्यर्थः; **'परमजरन्'** इति **'महावीर'** इति च क्रमेण "पूर्वकालैकसर्वजरत्०" [ ३.१.९७. ] इत्यनेन "पूर्वापरप्रथमचरम०" [ ३.१.१०३. ] इत्यनेन च समासः प्रतिपदोक्ततया विहितोऽपि प्रकृतसूत्रोद्देश्यपरममहतोरेव पूर्वापेक्षया परयोः प्राबल्यादनेन बाधितो न भवति, अनेन च समासे सति परममहतोरेव पूर्वनिपातो भवतीति व्यवस्था; किञ्च न केवलं सूत्रान्तरापेक्षया पूर्वत्वपरत्वकृतो बाध्यबाधकभावस्तदनुकूला च पूर्वनिपातव्यवस्था, किन्त्वेकसूत्रस्थपाठापेक्षयापीति स्फोरयति-**यथापरमि**ति, तथा च परममहतोरेकसूत्रपठितयोरपि परस्परं समासे पाठापेक्षया परमशब्दस्य परत्वेन तस्यैव पूर्वनिपातात् 'परममहान्' इति भवति ॥ ३.१.१०७. ॥

---

## वृन्दारक-नाग-कुञ्जरैः । ३ । १ । १०८ ॥

**त० प्र०**—पूजायां गम्यमानायामेभिर्नामभिः सामर्थ्यात् पूज्यमानवचनं नामैकार्थं समस्यते, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । वृन्दारक इव—वृन्दारकः, गौश्चासौ वृन्दारकश्च—गोवृन्दारकः, एवम्-अश्ववृन्दारकः, गोनागः, अश्वनागः, गोकुञ्जरः, अश्वकुञ्जरः । वृन्दारकादीनां जातिशब्दत्वेऽपि उपमानात् पूजावगतिः । पूजायामित्येव—शोभना सीमा स्फटा यस्य स—सुसीमो नागः, नात्र नागशब्दः पूजां गमयति किंतु जातिमात्रम्, देवदत्तो नाग इव मूर्ख इत्यत्र तूपमानेनापि निन्दैव गम्यते । व्याघ्रादेराकृतिगणत्वात् " उपमेयं व्याघ्राद्यैः साम्यानुक्तौ " [ ३. १. १०२ ] इत्येव सिद्धे पूजायामेवेति नियमार्थं साम्योक्तावपि विधानार्थं च वचनम्, तेन गोनागो बलवानित्यादि सिद्धम् ॥ १०८ ॥

---

**श० म० न्यासानुसन्धानम्**-वृन्दारक० । पूजायामित्यनुवर्ततेऽत आह-**पूजायां गम्यमानायामि**ति, पूजाया गम्यमानत्वमिह वृन्दारकादिनेति तदन्तरं तदाह-**एभिर्नामभि**रिति, यदि वृन्दारकादयः शब्दाः स्वेन सह समस्यमानस्य पदस्य पूजार्थं गमयति तदा तस्य पूज्यवचनत्वमपि साम-

र्थ्यादायातमित्याह-**पूज्यमानवचनं नामे**ति । ननु वृन्दारकादयो हि देवादिजातिशब्दाः, न ते सदादिवत् पूजनवचना इति तैः समासे कथं पूजावगतिः, किं समासस्यैवैष महिमा यदपूर्वोऽर्थः पूजा गम्यत इति चेत् ? उच्यते-स्वप्रवृत्तिनिमित्तैकार्थसमवायिनमन्यं कञ्चित् पूजनं गुणमुपलक्षयन्तो यदा ते विषयान्तरे प्रयुज्यन्ते तदा तस्य विषयान्तरस्य पूर्वपदार्थस्य पूजा गम्यते, यथा सिंहोऽयं देवदत्त इति शौर्योपलक्षणे, अयं भावः- वृन्दारकशब्दो देववाची, स च गवादिना सामानाधिकरण्यमलभमानस्तात्पर्यानुपपत्तिमूलकलक्षणया स्वसदृशार्थपरः तथा च वृन्दारकसदृशो गौरित्यर्थो गोवृन्दारकः, इति समासस्य, तामेवार्थान्तरे तत्तुल्यवृत्तिं दर्शयन्नुदाहरति-**वृन्दारक इव वृन्दारकः** इति-अनेन स्वसदृशपरत्वमात्रेदितम्, **गौश्चासौ वृन्दारकश्चे**ति विग्रहः, **गोवृन्दारकः** इति च समासः, यथा सर्वप्राणिषु देवाः श्रेष्ठास्तथा गोष्वयं श्रेष्ठः पूज्य इत्यर्थः, अत्र वृन्दारकशब्दो वृन्दारकगतं पूज्यत्वं गुणमाश्रित्य गवि वर्तते, अतो गोः प्रशंसा पूजा गम्यत इत्यर्थः । अतिदिशति-**एवमि**ति, **अश्ववृन्दारकः** इति समासः, वृन्दारक इव वृन्दारक इति कृत्वा अश्वश्चासौ वृन्दारकश्चेति विग्रहः कार्यः । **गोनागः** इति समासः, नागो हस्ती, नाग इव नागः, नागश्चासौ गौश्चेति विग्रहः, नाग इव बलवानित्येवमुच्यते । एवम्-**अश्वनागः** इति समासः, नागश्चासावश्वश्चेति विग्रहः, शेषं प्राग्वत् । गोकुञ्जरः इति समासः, कुञ्जरो हस्ती, कुञ्जर इव कुञ्जरः, गौश्चासौ कुञ्जरश्चेति विग्रहः । **अश्वकुञ्जरः** इति समासः, अश्वश्चासौ कुञ्जरश्चेति विग्रहः, शेषं प्राग्वत् ।

वृन्दारकादिशब्दानामनेकव्यक्तिवृत्तिवृन्दारकत्वादि[देवत्वादि] रूपजात्यादिप्रवृत्तिनिमित्तकत्वेन जातिशब्दत्वात् पूजावचनत्वं कथमित्याशङ्कायामाह-**वृन्दारकादीनां जातिशब्दत्वेऽपि उपमानात् पूजावगतिरि**ति-अयमाशयः-अन्यत्रैते शब्दा जातिप्रवृत्तिनिमित्ता अपि प्रकृतप्रयोगेषु स्वगतगुणप्रतिपादनपरा एवेति गुणशब्दत्वेन तेषां पूजार्थावगतिकारणत्वं नायुक्तम्, यथा गौर्वाहीक इत्यत्र गोगतजाड्यमान्द्यादिधर्मस्योपमावशेन वाहीके प्रतिपादनाद् गोशब्दस्येह जाड्यादिप्रवृत्तिनिमित्तकत्वं तथा प्रकृतेऽपि वृन्दारकगतपूज्यत्वप्रतिपादनमुखेनैव वृन्दारकादिशब्दानां प्रवृत्तिरिति पूजार्थाभिधायकत्वमक्षतमिति ।

ननु पूजायामित्यस्यानुवृत्तिमन्तरापीह पूजार्थातिरिक्तार्थप्रतीत्यभावात् पूजावगतिः स्यादेवेति तदनुवृत्तिर्विफलेत्याशङ्कायामाह-**पूजायामित्येवेति,** तत्फलमाह-**शोभना सीमा स्फटा यस्य स इति विग्रहः, सुसीमः इति च** "एकार्थं चा०" [ ३.१.२२. ] इति बहुव्रीहिः, सीमार्थो नात्र प्रसिद्ध इत्युक्तं-स्फटेति, स्फटा फणेत्यर्थः, **सुसीमो नागः** इति-नागशब्दोऽत्र मुख्ये एवार्थे वर्तते, नागः सर्पः, **देवदत्तो नाग इव मूर्खः** इति-हस्तीव मूर्ख इत्यर्थः, पूजायामिति वचनादत्र पूजा नास्तीति समासो न भवति; ननु पूजायामिति वचनान्मा भूदिह समासो देवदत्तो नाग इव मूर्ख इति, अत्र हि निन्दा गम्यते, न पूजा, तदेव दर्शयितुं मूर्ख इत्युपादीयते; इह कथं समासाभावः सुसीमो नाग इति, अत्र हि सुसीमत्वेन शोभनफणतया नागस्य पूजा प्रशंसा गम्यत इत्युक्तम्-**नात्र नागशब्दः पूजां गमयतीति**-'पूजायाम्' इत्यनुवृत्तेन वृन्दारकनागकुञ्जरा हि विशेष्यन्ते-पूजायां ये वृन्दारकनागकुञ्जराः, ये पूजां गमयन्ति, तैः सह समास इति, ततस्तैरन्यस्य पूजायां गम्यमानायां समासः, इह तु सुसीमो नाग इति सुसीम इति पूजनवचनः, येन धर्मेण तमाचष्टे तेन नागस्य पूजा, तेन नागेन नान्यस्येति समासो न भवति, पृच्छति-**किन्त्विति**-यदि नागशब्दो न पूजां गमयति तर्हि किं गमयतीति प्रश्नः, उत्तरयति-**जातिमात्रमिति**-सुसीमव्यक्तिगतं जातिमात्रं परिचाययतीत्यर्थः, इह नागविशेषस्य सुसीमेति संज्ञेति संज्ञापरिच्छेदकत्वान्नागशब्दस्य न पूजावाचकत्वमिति समासो न भवति, 'पूजायाम्' इत्यस्याभावे तु स्यादेव समास इति भावः । अत्र केचिदेवमाहुः-ननु च 'विशेषणं विशेष्येण' इत्यनुवर्तते, न च नागादन्यः सुसीमोऽस्ति, संज्ञा चैषा नागस्यैव, एवं तर्हि प्रत्युदाहरणादिमियं वृत्तिकृता दर्शिता, इदं त्वत्र प्रत्युदाहरणम्-देवदत्तो नागो यस्मान्मूर्ख इति । अस्यायमाशयः-प्रकृतकर्मधारयप्रकरणे विशेषणविशेष्यभावमादायैव समासप्रवृत्तिः, तत्र विशेषणसमासेन सिद्धे प्रकृतविशेषसूत्राणां विशेष्यस्य पूर्वनिपातार्थमेव पाठः, तत्र पूज्यमानस्य विशेष्यत्वमावश्यकम्, प्रकृते च सुसीमस्यैव विशेष्यत्वमन्वेष्टव्यम्, तस्यैव प्रथमान्तनामपदेनेह जिघृक्ष्यमाणत्वात्, न च तस्य विशेष्यत्वं सम्भवति नागविशेषसंज्ञाभूतस्य तस्य नागापेक्षया न्यूनवृत्तित्वेन व्यावर्तकत्वेन व्यावर्त्यत्वाभावात् । तथा चेदं प्रत्युदाहरणं न युक्तमिति प्रत्युदाहरणान्तरमुपात्तमिति । अत्रेदं कथ्यते-यथा सुसीमपदस्य नागविशेषसंज्ञात्वं तथा यौगिकशक्त्या शोभना सीमा मर्यादा यस्येत्यर्थेन ग्रामादिविशेषपरत्वमपि सम्भवत्येवेति सुसीमशब्दस्य नागापेक्षयान्यव्यक्तिवृत्तित्वव्यावर्तनाय नागशब्द उपात्त इति तस्य व्यावर्तकत्वेन विशेषणत्वं, सुसीमस्य च व्यावर्त्यत्वेन विशेष्यत्वमिति कल्पयितुं शक्यत्वान्न प्रत्युदाहरणासंगतिः, प्रत्युदाहरणान्तरं तु पूजाविरहस्य दार्ढ्याय दत्तमिति नारुचिमात्रं तत्र हेतुः । किञ्च पूर्वत्रोपमानोपमेयभावाभावः, उत्तरत्र [ देवदत्तो नाग इव मूर्ख इत्यत्र ] सत्यप्युपमानोपमेयभावे न पूजावगतिरिति विशेषप्रदर्शनार्थमेव प्रत्युदाहरणान्तरमिति ध्येयम् ।

ननु प्रकृतसमासेषु विशेषणविशेष्यभावो वर्तत एवेति विशेषणसमासेनैव तेषां सिद्धिरिति न शङ्कनीयम् "विशेषणं विशेष्येण०" [ ३.१.९६. ] इत्यनेन समासे सति प्रथमोक्तत्वाद् वृन्दारकादेर्विशेषणस्य पूर्वनिपातः स्यात्, न तु तद्विशेष्यस्येति विशेष्यस्य पूर्वनिपातार्थत्वादस्य योगस्य । ननु विशेष्यस्य पूर्वनिपातार्थमेव प्रकृतसूत्रमिति मन्यते तदा "उपमेयं व्याघ्राद्यैः०" [ ३.१.१०२. ] इति सूत्रेणैव सिध्यति, तत्र व्याघ्रादि विशेषणं तृतीयोक्तं, प्रथमोक्तं तद्विशेष्यमेवेति तस्य प्राग्निपातात् । न च व्याघ्रादौ वृन्दारकादयो न पठ्यन्ते इति शङ्कनीयम्, आकृतिगणो ह्यसावत आह–**व्याघ्रादेराकृतिगणत्वादिति**–ततस्तत्र पाठाभावेऽपि वृन्दारकादीनां संग्रहसम्भव इति, तथा च प्रकृतसूत्रं विफलमित्याशङ्कायां समाधत्ते–**पूजायामेवेति नियमार्थमिति**–पूजायामेव वृन्दारकादिभिः समासो यथा स्यात्, अन्यत्र मा भूदित्येतदर्थं वचनमित्यर्थः, तेन देवदत्तो नाग इवेति निन्दायां समासो न भवति । किञ्च व्याघ्रादित्वात् समासस्तत्रैव भवति यत्र साम्यानुक्तिः, प्रकृतसूत्रेण तु साम्योक्तावपीष्यते समासोऽत आह–**साम्योक्तावपि विधानार्थं वचनमिति**; तेन गौ नागो बलवानित्यत्र साम्योक्तावपि समासः, तथा च प्रकृतसूत्रं फलयुगलसद्भावान्न विफलमपि तु सफलमेवेति भावः । कुञ्जरशब्दस्येहोपादानाद् वृन्दारकादिवद् व्याघ्रादिगणगतत्वं सिद्धम्, इहोपात्तानां च पूजायामेव समासः, स चानेनैव सिद्ध इति व्याघ्रादिगणे यः कुञ्जरशब्दः साक्षात् पठितः स विचारणीय इति केचन; अत्रेदमाभाति–उक्तदिशा व्याघ्रादिगणगतत्वे सिद्धेऽपि व्याघ्रादौ यः साक्षात् पाठः स ज्ञापयति–कुञ्जरशब्दस्यापूजायामपि समासो भवतीति न चेह पाठोऽपार्थक इति कल्पनीयं, पूजानियमरूपफलविरहेऽपि साम्योक्तौ समासविधानफलकत्वात्, तथा च पूजायां साम्यस्योक्तावनुक्तौ वाऽनेन समासः, अपूजायां साम्यानुक्तावेव "उपमेयं व्याघ्राद्यैः" [ ३.१.१०२. ] इत्यनेन समास इति विवेकः ॥ ३.१.१०८. ॥

## कतर-कतमौ जातिप्रश्ने । ३ । १ । १०९ ॥

**त० प्र०—**कतर-कतमावित्येतावेकार्थौ जातिप्रश्ने गम्यमाने सामर्थ्याज्जातिवाचिना नाम्ना सह समस्येते, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । कतरश्चासौ कठश्च–कतरकठः, एवं कतरकालापः कतमकठः, कतमकालापः, कतरगार्ग्यः; कतमगार्ग्यः । जातिप्रश्न इति किम् ? गुण-क्रिया-द्रव्यप्रश्ने न भवति–कतरः शुक्लः, कतमः शुक्लः, कतरो गन्ता, कतमो गन्ता, कतरः कुण्डली, कतमः कुण्डली । "विशेषणं विशेष्येण०" [ ३. १. ९६ ] इत्येव सिद्धे जातिप्रश्न एवेति नियमार्थं वचनम् ॥ १०९ ॥

**श०म०न्यासानुसन्धानम्–कतर० । कतर–कतमावेकार्थौ** इति–अन्यत्र द्वयोरेकस्मिन् निर्धार्ये डतरो भवति, बहूनामेकस्मिन् निर्धार्ये डतमो भवतीति कतर–कतमयोर्भिन्नार्थत्वं, किन्तु "बहूनां प्रश्ने डतमश्च वा" [ ७.३.५४. ] इत्यनेन प्रश्नपूर्वके निर्धार्येऽर्थे डतमो डतरश्च पाक्षिकाविति, तत्र कतरकतमशब्दयोरेकार्थत्वम् । तत्र प्रश्नस्यानेकविषयत्वसम्भवेनेह विशिष्टविषयत्वमाह–**जातिप्रश्ने** इति । केचित् तु डतम-डतरविधायकसूत्रेऽपि 'जातिप्रश्ने' इति पठन्ति, परं तद् भाष्यकृता खण्डितम्, स्वमते तु पठितमेव न । अजातिवाचिन्युत्तरपदे जातिप्रश्नो न गम्यत इति जातिवाच्येवोत्तरपदं ग्राह्यमत आह–**सामर्थ्याज्जातिवाचिनेति**–जातिप्रश्नवाचकयोरेतयोर्जातिवाचिनाम्नैव सह व्यपेक्षारूपमेकार्थीभावरूपं वा सामर्थ्यं भवितुमर्हतीति जातिप्रश्नपदसामर्थ्यादेव जातिवाचिनाम्नैवानयोः समास इति लभ्यत इति भावः ।

**कतरश्चासौ कठश्चेति** विग्रहः, **कतरकठः** इति च समासः, कठेन प्रोक्तमधीत इति कठः, भवतां मध्ये कतरः कठोक्तशाखाध्यायीति प्रयोगार्थः, कठशब्दात् "तेन प्रोक्ते" [ ६.३.१८१. ] इत्यण् "कठादिभ्यो वेदे लुप्" [ ६. ३. १८३, ] इति तस्य लोपः, कठं वेत्त्यधीते वेति "तद्वेत्त्यधीते" [ ६. २. ११७.] इति अण्, तस्य "प्रोक्तात्" [६. २. १२९.] इति लुप् एवं प्रक्रियां गमितेन कठशब्देन कठोक्तशाखाध्येता कथ्यते । **कतरकालापः** इति समासः, 'कतरश्चासौ' कालापश्चेति विग्रहः कलापिना प्रोक्तं ब्राह्मणमधीत इत्यर्थे कलापिशब्दात् प्रोक्तार्थेऽण्, ततोऽध्येत्रणः पूर्ववल्लुपि कालाप इति कलापिप्रोक्तशाखाध्यायीत्यर्थः, भवतां मध्ये कतरः कलापिप्रोक्तशाखाध्यायीति प्रयोगार्थः, अनयोः "गोत्रं च चरणैः सह" इति वचनाच्चरणलक्षजातित्वं तद्विषयप्रश्नेऽयं समासः, **कतमकठः** इति समासः, कतमश्चासौ कठश्चेति विग्रहः, एवं **कतमकालापः** इति समासः, कतमश्चासौ कालापश्चेति विग्रहः, सर्वं प्राग्विवावसेयं, केवलं कतरशब्दस्थाने कतमशब्द इत्येतावानेव विशेषः । **कतरगार्ग्यः** इति समासः, कतरश्चासौ गार्ग्य इति विग्रहः, कतमगार्ग्यः इति समासः, कतमश्चासौ गार्ग्यश्चेति विग्रहः, गर्गस्य वृद्धमपत्यमिति "गर्गादेर्यञ्" [ ६. १. ४२. ] इति वृद्धापत्ये यञ्, अपत्यप्रत्ययान्तत्वेनात्र गोत्रलक्षणजातित्वमुक्तवचनात्, तद्विषयप्रश्नेऽयं समासः, केषाञ्चित् सम्बन्धिशब्दानां क्रियाशब्दानां चार्थस्यासत्यपि जातित्वे जातिनिबन्धनं शास्त्रे कार्यमिष्टं, तदर्थं तत्रापि जातित्वं "गोत्रं च चरणैः सह" इति वचनेन परिभाष्यते, द्विविधमिह गोत्रं–प्रवराध्यायपठितमपत्यप्रत्ययाभिधेयं च, यदाह–अनन्तरापत्यं वृद्धापत्यं युवापत्यं च गोत्रमिति, इदमेवात्र गृह्यते, अस्यैव परिभाषितत्वात्, तदभिधायिनोऽपत्यप्रत्ययान्ता

अप्यभेदोपचारात्, ते चापत्यप्रत्ययवत् सम्बन्धद्वारेणापत्ये प्रवृत्ता अपि सम्बन्धिशब्दाः। चरणशब्दाश्च, कठादयः क्रियाशब्दाः; कठादिप्रोक्ताध्ययनाय यथास्वं व्रतचरणक्रियानिमित्तत्वेनाध्येतृषु प्रवृत्तत्वात्, तदर्थस्य लोके जातित्वेनाप्रसिद्धस्यापि 5 जातिकार्यप्रसाधनाय वाचनिकं जातित्वमभ्युपेयत इति भावः।

पदकृत्यं पृच्छति-**जातिप्रश्न इति किमिति**-सर्वशब्दानां **मीमांसक**मते जातिवाचकत्वात् प्रायः सर्वत्र जातिप्रश्न एवेति 'जातिप्रश्ने' इत्यस्याव्यावर्तकत्वेन तदुपादानं व्यर्थमिति प्रश्नाशयः उत्तरयति-**गुण-क्रिया-द्रव्यप्रश्ने न भवतीति**, अयमाशयः-10 सर्वेषां शब्दानां जातिवाचकत्वमिति मतं न वैयाकरणैरुपेयते, गुण-क्रियादिविशेषवाचकशब्दानां जातिवाचकशब्देभ्यो भेदस्य प्रतीयमानस्य जागरूकत्वात् अतश्च यत्र गुणक्रियादिविषयः प्रश्नस्तत्र मा भूदित्येतदर्थं 'जातिप्रश्ने' इत्यस्यावश्यकत्वमेव। चतुष्टयी हि शब्दानां प्रवृत्तिः-जातिशब्दा गुणशब्दाः क्रियाशब्दा 15 यदृच्छाशब्दाश्चेति महाभाष्यकृदादिभिरुक्तत्वात्, शब्दानां गुणादिप्रवृत्तिनिमित्तकत्वमवश्यं स्वीकार्यम्। तदनुगुणान्येव प्रत्युदाहरणान्याह-**कतरः शुक्ल** इत्यादिना, **कतरः शुक्लः, कतमः शुक्लः** इति गुणप्रश्नः, **कतरो गन्ता, कतमो गन्ता** इति क्रियाप्रश्नः, **कतरः कुण्डली, कतमः कुण्डली**ति 20 द्रव्यप्रश्नः, ज्योत्स्नादण्प्राप्तौ शिखादित्वादिनि कुण्डलीति, एषु समासो नेष्टः, 'जातिप्रश्ने' इत्यस्याभावे हि स स्यादेवेति भावः। नन्विहानेन समासो मा भूत्, विशेषणसमासः कुतो नेत्यत आह-**विशेषणं विशेष्येणे**त्यादि, अयमाशयः-कतरकठ इत्यादावपि विशेषणसमासेनैव सिद्धेऽपि 25 सूत्रारम्भसामर्थ्येन कतर-कतमशब्दौ जातिप्रश्न एव समस्येते नान्यत्रेति नियमादन्यत्र विशेषणसमासोऽपि नेति॥ ३. १. १०९

## किं क्षेपे। ३। १। ११०॥

**त० प्र०**—क्षेपो निन्दा, तस्मिन् गम्यमाने किमित्येतन्नामैकार्थमर्थात् क्षिप्यमाणवाचिना नाम्ना सह समस्यते, स च 30 समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। को राजा-किंराजा यो न रक्षति, एवं-किंगौः, यो न वहति, किंसखा, योऽभिद्रुह्यति, स किंवैयाकरणः, यः, शब्दं न ब्रूते, सर्वत्र तत्कार्याकरणात् क्षेपो गम्यते; तथा कुत्सितो नरोऽश्वमुखत्वात्-किंनरः, एवं किंपुरुषः, कुत्सितः शुकः किञ्चिन्नील-35 त्वात्-किंशुकः पलाशः, एवं किञ्जल्कः, किंकिरातमित्यादि "न किमः क्षेपे" [ ७. ३. ७० ] इति समासान्तप्रतिषेधः। क्षेपे इति किम्? को राजा मथुरायाम्। "विशेषणं विशेष्येणै०" [ ३. १. ९६. ] इत्येव सिद्धे क्षेपे एवेति नियमार्थं वचनम्॥ ११०॥



**श० म० न्यासानुसन्धानम्**-**किं०**। क्षेपशब्दस्य 40 क्रियाशब्दत्वात् क्षेपणं क्षेप इति विग्रहेऽन्यार्थत्वस्यापि सम्भवादिह ग्राह्यं विशिष्टमर्थमाह-**क्षेपो निन्दे**ति-निन्दा दोषोद्घोषणम्, किंशब्दस्य प्रश्ने वितर्के निषेधे निन्दायां च प्रयोगादनेकार्थत्वेन यत्रानेन निन्दोच्यते तत्र समास इति बोध्यम्। किमः क्षेपे वर्तमानत्वे ह्युत्तरपदं क्षिप्यमाणवचनं भवतीत्याह-**अर्थात्** 45 **क्षिप्यमाणवाचिने**ति। समासेन निन्दा गम्यत इति नित्यसमासोऽयमिति केचित्, अपरे तु विनापि समासं किमा निन्दा गम्यते, यथा 'कान् कान् पश्य' इत्यत्रैकः 'किम्' प्रश्ने, अन्यस्तु क्षेपे, अतो विकल्पेन समास इति।

अथ विगृह्योदाहरति-**को राजा** इति विग्रहः, **किं राजा** इति 50 च समासः, अत्र निन्दाहेतुमाह-**यो न रक्षती**ति-रक्षिता हि राजा भवति, तदभावे स किंराजेति क्षिप्यते, प्रजानां रक्षणं राज्ञः कर्तव्यं, तदनाचरणात् तस्य कुत्सितत्वमिति भावः,

> "अदण्ड्यान् दण्डयन् राजा, दण्ड्यांश्चैवाप्यदण्डयन्।
> अयशो महदाप्नोति, नरकं चाधिगच्छति॥" 55

इत्यादिभिर्मनुना राज्ञः कुत्साकारणस्य कथनात्, येषां मते नित्योऽयं समासस्तत्र कुत्सितो राजेति विग्रहवाक्यम्। अतिदिशति-**एवमि**ति, **किं गौः** इति समासः, को गौरिति विग्रहः, अत्र क्षेपहेतुमाह-**यो न वहती**ति-गौर्नाम भारवहनार्थः, तदभावे स किं गौरिति क्षिप्यते, **किं सखा** इति समासः, कः सखेति 60 विग्रहः, अत्र क्षेपहेतुमाह-**योऽभिद्रुह्यती**ति-सखा हि नामोपकर्ता भवति योऽभिद्रुह्यति जिघांसति स किंसखेति क्षिप्यते; स **किंवैयाकरणः** इति समासः, को वैयाकरण इति विग्रहः, अत्र क्षेपहेतुमाह-**यः शब्दं न ब्रूते** इति-व्याकरणं नाम शब्दानुशासनं शास्त्रं, तदध्ययनपरिज्ञानेऽपशब्दपरिहारेण साधुशब्द-65 प्रयोगार्थं तत्र यो वैयाकरणो व्याकरणस्य बोद्धा सन् साधुं शब्दं न ब्रूते न प्रयुङ्क्ते, अपशब्दं प्रयुङ्क्ते स किंवैयाकरण इति क्षिप्यते। दर्शितं क्षेपप्रकारं संक्षिप्य दर्शयति-**सर्वत्र तत्कार्याकरणात् क्षेपो गम्यत** इति-राजादे रक्षणादि कार्यं तदभावात् क्षेपावगतिरित्यर्थः, न केवलं स्वकार्याकरणमेव निन्दाहेतुरेतत्समासविषये, अपि 70 तु हेत्वन्तरमपीत्याह-**तथे**त्यादि, **कुत्सितो नर** इति विग्रहः, **किन्नरः** इति समासः, **अश्वमुखत्वादि**ति निन्दाहेतुः, किन्नर इति देवयोनिविशेषस्य संज्ञा; अतिदिशति-**एवमि**ति **किंपुरुषः** इति समासः, कुत्सितः पुरुष इति विग्रहः, अश्वमुखत्वादिति निन्दाहेतुः, किंपुरुषशब्दः किन्नरपर्यायः; **कुत्सितः शुक** 75 इति विग्रहः, **किंशुकः** इति समासः, **किञ्चिन्नीलत्वादि**ति निन्दाहेतुः, **पलाशः** इति तदर्थः; अतिदिशति-**एवमि**ति, **किञ्जल्कः** इति समासः, जल्कः चूर्णः, कुत्सितो जल्कः किञ्जल्कः,

अयं केसरे पुष्परेणौ नागकेसरे पद्ममध्यस्थे कोशाकारे च वर्तते, अयमुणादिनापि व्युत्पादितः; **किङ्किरातमिति** समासः, कुत्सितं किरातमिति विग्रहः, किरातं काञ्चनारवृक्षस्य पुष्पमिति लघुन्यासः, 'किंकिरातः कुरण्टकः' इत्यभिधानचिन्तामणिः, अय-
5 मप्युणादिना व्युत्पादितः। 'किंराजा, किंसखा' इत्यत्र "राजन्सखेः" [ ७. ३. १०६. ] इत्यनेत 'किंगौः' इत्यत्र "गोस्तत्पुरुषात्" [ ७. ३. १०५. ] इत्यनेन च समासान्तोऽट् कथं न विहित इत्याशङ्कायामाह–**"न किमः क्षेपे" इति समासान्तप्रतिषेधः।**
10 पदकृत्यं पृच्छति–**क्षेपे इति किमिति** किं शब्दः क्षेपे वर्तत एवेति क्षेपग्रहणं निरर्थकमिति प्रश्नाशयः, यथा क्षेपे तथा प्रश्नेऽपि वर्तते, तत्र प्रश्ने मा भूदित्येतदर्थं 'क्षेपे' इत्यावश्यकमेवेत्याशयेन प्रत्युदाहरणमुखेनोत्तरयति–**को राजा मथुरायामिति**–अत्र प्रश्ने न क्षेपे इति समासो न भवति। अत्रापि
15 वचनफलमाह–**विशेषणं विशेष्येणेत्यादि**॥ ३. १. ११०.॥

## पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्-बष्कयिणी-प्रवक्तृ-श्रोत्रिया-ऽध्यायकधूर्तप्रशंसारूढै-र्जातिः। ३। १। १११॥

20 **त० प्र०**—जातिवाचि नामैकार्थं पोटादिभिर्नामभिः प्रशंसारूढैश्च सह समस्यते, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। इभ्या च सा पोटा च-इभ्यपोटा, आर्यपोटा, पुरुषवेषधारिणी स्त्री पोटा, गर्भ एव दास्यं प्राप्ता वा, उभयव्यञ्जना वा, भुजिष्यदासी वा; इभ्या चासौ युवतिश्च–
25 इभ्ययुवतिः, नागयुवतिः वृन्दारकयुवतिः; अग्निश्चासौ स्तोकं च–अग्निस्तोकम्, विषस्तोकम्; दधि च तत् कतिपयं च-दधिकतिपयम्, तक्रकतिपयम्; गौश्चासौ गृष्टिश्चेति–गोगृष्टिः, अजगृष्टिः, गृष्टिः- सकृत् प्रसूता; गौश्चासौ धेनुश्च–गोधेनुः, अजधेनुः, धेनुः-नवप्रसूता; गोवशा, अजवशा, वशा–
30 वन्ध्या; गोवेहत्, अजवेहत्, वेहद् गर्भघातिनी; गोवष्कयिणी, अजवष्कयिणी, बष्कयेण–वृद्धवत्सेन या दुह्यते सा–बष्कयिणी; कठप्रवक्ता, कालापप्रवक्ता, प्रवक्ता–उपाध्यायः; कठश्रोत्रियः, कालापश्रोत्रियः, श्रोत्रियः– छन्दोऽध्यायी; कठाध्यायकः, कालापाध्यायकः, अध्यायकः–, अध्येता;
35 मृगधूर्तः, गार्ग्यधूर्तः, "निन्द्यं कुत्सनैः०" [ ३. १. १०० ] इत्यत्र शब्दप्रवृत्तिनिमित्तकुत्सायां समास उक्तः, इह तु तदाश्रयकुत्सायां समासो यथा स्यादिति धूर्तग्रहणम्। प्रशंसायां रूढा मतल्लिकादय आविष्टलिङ्गास्तैः समासः,– गौश्चासौ मतल्लिका च–गोमतल्लिका, एवम्–अश्वमतल्लिका; गोमचर्चिका; गोप्रकाण्डम्, पुरुषोद्घः, गोकुमारी, अश्वकुमारी, 40 गोतल्लजकः, कुमारतल्लजकः, तातपादाः, आर्यमिश्राः, केशपाशः, केशहस्तः, अंसभित्तिः, वक्षःस्थलम्, कपोलपाली, उरःकपाटः, स्तनतटम्; रूढग्रहणादिह न भवति,–गौः रमणीया, गौः शोभना। जातिरिति किम्? देवदत्ता पोटा, कालाक्षी वशा, चैत्रः प्रवक्ता; मैत्रो मतल्लिका। विशेष्यस्य 45 जातेः पूर्वनिपातार्थं वचनम्॥ १११॥

**श० म० न्यासानुसन्धानम्-पोटा०**। रूढशब्दो न पोटादिभिः सम्बध्यते, तत्सम्बन्धे हि तत्पर्यायाणामपि ग्रहणं स्यात्, तच्चानिष्टम्, अतः प्रशंसाशब्देनैव सम्बध्यत इति पोटादीन् स्वरूपेणोच्चार्याह–**पोटादिभिर्नामभिरिति, प्रशंसा-** 50 **रूढैश्चेति**- प्रशंसायां रूढा इति तत्पुरुषः, ततः पोटादीनां द्वन्द्वः। अथ विगृह्योदाहरति–**इभ्या च सा पोटा चेति** विग्रहः, **इभ्यपोटा** इति च समासः, "इभ्यो धनवतीभ्यां तु करेण्वां सल्लकीतरौ" इत्यनेकार्थसंग्रहवचनाद् यदि इभ्या करेणुस्तदा स्थौल्यगुणयोगेन मानुष्यां प्रयोगाद् 'इभ्या' इति जातिः, 55 यद्वा जातिमदभिधानेऽपि न तत्र जात्यभावः, इभं हस्तिनमर्हतीति दण्डादित्वाद् ये इभ्या, एवं च जातित्वात् समासः, "पुंवत् कर्मधारये" [ ३.२ ५७, ] इति पुंवद्भावः; एवम्–**आर्या** च सा पोटा चेति विग्रहे **'आर्यपोटा,** इति समासः, अत्र 'आर्या'-शब्दस्थाने 'अर्या' इति पाठः सम्यगाभाति, अर्यशब्दश्च 60 "स्वामिवैश्येऽर्यः" [ ५.१.३३. ] इति साधुः, तथा च 'अर्य'-शब्दस्य वैश्यजातिवचनत्वात् समासः, उभयत्र पोटाशब्दो वर्तते, तदर्थमाह–**पुरुषवेषधारिणी**त्यादिपोटाशब्दस्यार्थचतुष्टयं–**१ पुरुषवेषधारिणी स्त्री पोटा, २ गर्भ एव दास्यं प्राप्ता** स्त्री पोटा, या मातृगर्भस्थितैव धनिकेन भोगार्थं क्रीता सेत्यर्थः, 65 ३ **उभयव्यञ्जना** स्त्री पोटा, स्त्रीपुरुषोभयलक्षणेत्यर्थः, ४ **भुजिष्यदासी** वा पोटा, भुजिष्या भोगार्थं स्वीकृत दासीत्यर्थः, "पोटा तु स्त्री नृलक्षणा" इति कोषे 'स्त्री नृलक्षणा'इति पदस्य बहुधा व्याख्यानसम्भवात् स्त्री च ना चेति स्त्रीनरौ, तयोर्लक्षणं यस्या इति विग्रहे स्त्रीपुरुषोभयचिह्नयुक्तेत्यर्थः, 70 तमादायोक्तमुभयव्यञ्जनेति स्त्रीति विशेष्यं पृथक्कृत्य त्रा–पुंसा समानं लक्षणं यस्या इति विग्रहमाश्रित्य पुरुषवेषधारिणीत्युक्तम्। **इभ्या चासौ युवतिश्चे**ति विग्रहः, **इभ्ययुवतिरि**ति समासः, इभ्याशब्दो व्याख्यातः, युवतिः, प्राप्तयौवना। **नागयुवतिरि**ति समासः, गजवाची नागवाची नागशब्दः 75 स्थौल्यगुणयोगात् सादृश्येनान्यत्र स्त्रियां प्रयुज्यत इत्यङ्गीकारे नागी चासौ युवतिश्चेति विग्रहः, सर्पवाचिनो नागशब्दस्य दैर्घ्यगुणयोगादन्यत्र स्त्रियां प्रयोगे नागा चासौ युवतिश्चेति

विग्रहः, सादृश्याप्रतिपत्तौ तु सर्वत्र नागा चासौ युवतिश्चेति विग्रहः, । **वृन्दारकयुवतिरि**ति समासः, वृन्दारिका चासौ युवतिश्चेति विग्रहः, 'नागयुवतिः, वृन्दारकयुवतिः' इत्यत्रास्मिन्नसति पूजायां "वृन्दारकनागकुञ्जरैः" [ ३. १. १०८. ] इति 5 प्राप्नोति, सत्यस्मिन परत्वादयमेव विधिः, अपूजायां त्वयमेव प्राप्नोति न पूर्वो विधिः । **अग्निश्चासौ स्तोकं चे**ति विग्रहः, **अग्निस्तोकमि**ति च समासः, अत्र **लघुन्यासः**–"स्तोचनं भावे घञि न्यङ्क्वादित्वात् कत्वे स्तोकः, सोऽस्यास्तीत्यभ्राद्यप्रत्यये स्तोकम्, भिन्नलिङ्गयोरपि सामाधिकरण्यं 'वरं विरोधः' 10 इतिवत् सामान्यविशेषभावेनायं प्रयोगः, तेनाग्निस्तोक इत्यपि" इति, केचित् त्विहाग्निस्तोक इत्येव पाठं मन्यन्ते, शाकटायनवृत्त्यादिषु चाग्निस्तोकमित्येव पाठः । एवं–**विषस्तोकमि**ति समासः, विषं च तत् स्तोकं चेति विग्रहः । **दधि च तत् कतिपयं चे**ति विग्रहः, **दधिकतिपयमि**ति समासः । **तक्रक-** 15 **तिपयमि**ति समासः,तत्र च तत् कतिपयं चेति विग्रहः, स्तोककतिपयशब्दावल्पार्थौ । **गौश्चासौ गृष्टिश्चे**ति विग्रहः,**गोगृष्टिरि**ति च समासः, **अजगृष्टिरि**ति समासः, अजा चासौ गृष्टिश्चेति विग्रहः, गृष्टिशब्दार्थमाह–**गृष्टिः सकृत् प्रसूते**ति–सकृत् एकवारम् । **गौश्चासौ धेनुश्चे**ति विग्रहः, **गोधेनुरि**ति च 20 समासः, **अजधेनुरि**ति समासः, अजा चासौ धेनुश्चेति विग्रहः, धेनुशब्दार्थमाह–**धेनुर्नवप्रसूते**ति । **गोवशा** इति समासः, गौश्चासौ वशा चेति विग्रहः, **अजवशा** इति समासः, अजा चासौ वशा चेति विग्रहः, वशाशब्दार्थमाह–**वशा वन्ध्ये**ति । **गोवेहदि**ति समासः, गौश्चासौ वेहच्चेति विग्रहः, 25 **अजवेहदि**ति समासः, अजा चासौ वेहच्चेति विग्रहः, वेहच्छब्दार्थमाह–**वेहत् गर्भघातिनी**ति–विहन्ति गर्भमिति "संश्चद् वेहत्०" [ उणा०८८२. ] इति निपातनाद् वेहत् । **गोबष्कयणी**ति समासः, गौश्चासौ बष्कयणी चेति विग्रहः, **अजबष्कयणी**ति समासः, अजा चासौ बष्कयणी चेति विग्रहः, 30 बष्कयणीशब्दार्थमाह–**बष्कयेण वृद्धवत्सेन या दुह्यते सा बष्कयणी**ति–वृद्धशब्दोऽत्र नावस्थाविशेषपरः, किन्तु प्रौढत्वपरः, या हि बहुदिनप्रसूता, अजातवत्सान्तरा स्वभावविशेषात् तद्वत्ससाहाय्येन दुह्यते तत्रैवायं प्रयोगः, उक्तार्थे पाठद्वयं दृश्यते–'बष्कयणी, बष्कयिणी' इति, 'बष्कयस्त्वेकहा- 35 यनो वत्सः' इति शाकटायनः, तेन नीयत इति बष्कयणीति, बष्कयः प्रौढवत्सोऽस्त्यस्या बष्कयिणीति साधना। **कठप्रवक्ता** इति समासः, कठश्चासौ प्रवक्ता चेति विग्रहः **कालापप्रवक्ता** इति समासः, कालापश्चासौ प्रवक्ता चेति विग्रहः, प्रवक्तृशब्दार्थमाह–**प्रवक्ता उपाध्याय** इति । **कठश्रोत्रियः** इति 40 समासः, कठश्चासौ श्रोत्रियश्चेति विग्रहः, **कालापश्रोत्रियः** इति समासः, कालापश्चासौ श्रोत्रियश्चेति विग्रहः, श्रोत्रियशब्दार्थमाह–**श्रोत्रियश्छन्दोऽध्यायी**ति । **कठाध्यायकः** इति समासः, कठश्चासावध्यायकश्चेति विग्रहः, **कालापाध्यायकः** इति समासः, कालापश्चासावध्यायकश्चेति विग्रहः, अध्यायकशब्दार्थमाह–**अध्यायकोऽध्येते**ति, क्वचिदिह सूत्रे- 45 ऽध्यापक इति पाठः, तन्मतेऽध्यापयिता विशेषणं, स्वमते त्वध्येतेति । **मृगधूर्तः** इति समासः, मृगश्चासौ धूर्तश्चेति विग्रहः, "धूर्तस्तु वञ्चकः" इति कोशात् मृगेण सह सामानाधिकरण्यम्, **गार्ग्यधूर्तः** इति समासः, गार्ग्यश्चासौ धूर्तश्चेति विग्रहः, गार्ग्यस्य गोत्रलक्षणजातित्वं कठकालापयोश्च चरणलक्षणजातित्व- 50 मिति तु पुराभिहितमेव, "जनयति कुमुदभ्रान्ति धूर्तबको बालमत्स्यानाम्" इत्यादिकविप्रयोगास्तु तेषां निरङ्कुशत्वमूलका एव, अन्यथा बकधूर्त इत्येव प्रयोग उचितः । "निन्द्यं कुत्सनैः०" [ ३.१.१०७ ] इति सूत्रेणैव समासे विशेष्यस्य च पूर्वनिपाते सिद्धेऽत्र धूर्तशब्दोपादानवैयर्थ्यमाशङ्क्याह–**निन्द्यं कुत्सनै-** 55 **रि**त्यादिना, उक्तं हि तत्र सूत्रे बृहद्वृत्तौ–"प्रत्यासत्तेर्निन्द्यशब्दप्रवृत्तिनिमित्तकुत्सायामेवायं समास इष्यते" इति, यथा क्षत्रियभीरुरित्यादौ भीरुपदसान्निध्यात् क्षत्रियत्वं निन्द्यते, इह च मृगादिरूपः प्रवृत्तिनिमित्ताश्रय एव निन्द्यते, तथा च नात्र धूर्तग्रहणस्य वैयर्थ्यम् । **प्रशंसारूढैरि**ति पदं व्याख्याति– 60 **प्रशंसायां रूढा मतल्लिकादय आविष्टलिङ्गास्तैः समासः** इति–अनेनैतदाचष्टे–त्रिप्रकाराः प्रशंसाशब्दा भवन्ति, केचिज्जातिशब्दाः परार्थे प्रयुज्यमानाः प्रशंसां गमयन्ति, यथा सिंहो माणवक इति; केचिद् गुणशब्दा गुणगुणिसम्बन्धेन प्रशंसावचना भवन्ति, यथा रमणीयो ग्रामः, 65 शोभनः वाचक इति; केचिद् रूढिशब्दा मतल्लिकादयः, तेषां प्रशंसैव शब्दार्थः ।

> "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।
> सिंहशार्दूलनागाद्यास्तल्लजश्च मतल्लिकाः ॥
> मचर्चिका प्रकाण्डोद्धौ प्रशस्यार्थप्रकाशकाः ।" 70

इत्यभिधानचिन्तामणिकथितेभ्योऽप्यत्राधिकाः कुमारीप्रमुखा ज्ञेयाः, त इहान्त्या गृह्यन्ते, न पूर्वद्वयम् इति; **आविष्टलिङ्गा** इति–आविष्टं नैयत्येन स्वान्तर्भूतं लिङ्गं येषां तथाभूताः, विशेष्यान्तरसमवधानेऽप्यपरित्यक्तस्वलिङ्गा इति यावत्, त्रिलिङ्गत्वेऽपि द्रव्यस्य नियतं स्वलिङ्गमेव दधानाः सामानाधिकरण्यमनु- 75 भवन्त इत्यर्थः, ये आविष्टलिङ्गा धर्मान्तरानुपादानेन प्रशंसामेव गमयन्ति मतल्लिकादयस्ते प्रशंसारूढा उच्यन्त इति भावः । 'आविष्टलिङ्गाः' इत्यस्योपलक्षणत्वाद् नियतवचना अपि ज्ञेयाः, यथा 'तातपादाः' इत्यादौ पादशब्दः, तत्र च तातश्च ते

पादाश्चेति विग्रहः। प्रशंसारूढान् विगृह्योदाहरति-**गौश्चासौ मतल्लिका चेति** विग्रहः, **गोमतल्लिका** इति समासः, शोभनोऽभिरूपो दर्शनीयो गौरित्यर्थः, इमे गोमतल्लिकादयो नित्यसमासाः परमार्थप्रदर्शनार्थमलौकिकं वाक्यं क्रियते, नहि वाक्येन पूजा गम्यत इति लघुन्यासः, मया लक्ष्म्या तल्लातीति "कुशिक०" [ उणा० ४५. ] इति निपातनात् मतल्लिकेति। अतिदिशति-**एवमिति, अश्वमतल्लिका** इति समासः, शेषं प्राग्वत्, **गोमचर्चिका** इति समासः, मां लक्ष्मीं चर्चयतीति णके ह्रस्वत्वे च मचर्चिका इति; **गोप्रकाण्डमिति** समासः, प्रकृष्ट-तया कण्यत इति "कण्यणि०" [ उणा० १६९. ] इति णिति डे प्रकाण्डमिति; **पुरुषोद्धः** इति समासः, उद्ध इति हन्तेः "निघोद्ध०" [ ५. ३. ३६. ] इति निपातनात्; **गोकुमारीति** समासः, प्रशस्तवचनोऽत्र कुमारीशब्द इति वयोऽभा-वाद् गौरादित्वाद् ङीः; एवमश्व**कुमारी**त्यत्रापि; **गोतल्लजकः** इति समासः, तल्ले आख्यातसरसि जात इति "सप्तम्याः" [ ५. १. १६९. ] इति तल्लजः, तस्य तुल्ये के तल्लजक इति, यदा द्विरुक्तो जकारस्तदा लज्जते इति कर्तरि णके लज्जक, स लज्जकोऽस्य तल्लज्जकः; एवं-**कुमारतल्लजकः** इति समासः; **तातपादाः** इति समासः, तातश्च ते पादाश्चेति विग्रहः; **आर्यमिश्राः** इति समासः, आर्यश्च ते मिश्राश्चेति विग्रहः, कुमारशब्दस्य अनुगतसंस्थानव्यंग्यसामान्य-वाचित्वात्, तातशब्दस्य पितृसामान्यवाचकत्वाद् गुरुजन-सामान्यवाचकत्वादनुकम्प्यसामान्यवाचकत्वाद् वा, आर्य-शब्दस्य श्रेष्ठकुलोत्पन्नादिसामान्यवाचकत्वात्, अर्थादनेकद्रव्य-वाचकत्वासकृदाख्यातनिर्ग्राह्या सर्वलिङ्गत्वाज्जातिवचनत्वमवसे-यम्; **केशपाशः** इति **केशहस्तः** इति च समासः, केशात् परः पाशशब्दो हस्तशब्दश्च केशभूयस्त्वं वदति, तेन च प्रशंसा गम्यते; **अंसभित्तिरिति** समासः, अंसः स्कंधः, तस्य प्रशंसां भित्तिशब्दः स्वगतौन्नत्यादिगुणसादृश्येन बोधयति, **वक्षःस्थलमिति** समासः, स्थलशब्दः स्वगतविस्तीर्णतादिगुण-सादृश्येन वक्षसः प्रशंसां गमयति; **कपोलपालीति** समासः, कपोलो गल्लः, पाली सेतुः, पालीशब्दः स्वगतौन्नत्यविशेषादि-गुणसादृश्येन कपोलस्य प्रशंसां गमयति; **उरःकपाटः** इति समासः, कपाटः कवाडः, स च स्वगतदार्ढ्यादिगुणसादृश्ये-नोरसः प्रशंसां गमयति; **स्तनतटमिति** समासः, तटशब्दः समुच्छ्र्यादिगुणसादृश्येन स्तनस्य प्रशंसां गमयति, एवं 'मत-ल्लिका, मचर्चिका, प्रकाण्ड, उद्ध, कुमारी, तल्लजक, पाद, मिश्र, पाश, हस्त, भित्ति, स्थल, पाली, कपाट, तट' इति पञ्चदश प्रशंसारूढाः शब्दा उदाहृताः, एषु कुमारीप्रमुखाः शब्दा अन्यत्रान्यस्मिन्नर्थे प्रयुज्यमाना अपि प्रकृते प्रशंसामात्रबोधका ज्ञेयाः, तत्र स्ववाच्यगतगुणघटितजातिवचनेनैव सह समासे एषां प्रशंसारूढत्वं, न तु येन केनापि जातिवचनेन समासे, यथा कपोलपालीत्यत्र पालीशब्दस्य कपोलेन, न तु गवादिना समासे, तथा च तेषां प्रशंसामात्रबोधकत्वं, न तूपमानत्वमिति विज्ञायते; ये तु केवलं प्रशंसामेव सर्वत्राहुः, तेषां तु येन केनापि जातिवचनेन समासे प्रशंसारूढत्वमिति भावनीयम्। 'प्रशस्तैः' इत्येवोच्यतां रूढग्रहणेन किं प्रयोजनमित्यारेकायामाह-**रूढग्रहणादिह न भवतीति**, तथाहि-**गौ रमणीया, गौः शोभना** इति-शोभन-रमणीयशब्दौ शोभनत्वं-रमणी-यत्वं च गुणमुपादाय प्रशंसां गमयतः, न तु प्रशंसामेव मतल्लिकादिवदिति रूढग्रहणादिह न भवति, असति रूढग्रहणे प्रशंसाशब्दमात्रेण समास इतीहापि स्यात्। अयमाशयः-रूढग्रहणाद् यौगिकानां प्रशस्त-शोभन-रमणीयादीनां, प्रशस्त-विशेषवचनानां शुचि-मृद्वादीनां, गौण्या वृत्त्या प्रशंसापराणां 'सिंहो माणवक' इत्यादीनां न परिग्रह इति तैः समासो न भवति। पृच्छति-**जातिरिति किमिति**, प्रत्युदाहरणमुखे-नोत्तरयति-**देवदत्ते**त्यादि-**'देवदत्ता'** इति कस्याश्चित् संज्ञा, **'कालाक्षी'** इति-काले अक्षिणी यस्या इति कालाक्षी काचिद्, **वशा** वन्ध्या, **चैत्र** इति **मैत्र** इति च व्यक्तिविशेषस्य संज्ञा, अत्रैषामेकैकव्यक्तिपरत्वान्न जातित्वमिति 'जातिः' इति वचनात् समासो न भवतीत्यर्थः। ननु चेह 'इभ्यपोटा' इत्यादावस्ति विशेष्यविशेषणभावस्तत्र किं "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इति न सिध्यति? इति चेदत्राह-**विशेष्यस्य जातेः पूर्वनिपातार्थं वचनमिति**-विशेषणसमासे सति नीलोत्पलादौ नीलादिवत् 'इभ्यपोटा' इत्यादौ पोटादीनां गुणवचनानां पूर्वनिपातः स्यात्, न जातेः, जातिर्हि विशेष्यत्वेनैव विवक्ष्यते, अतो जातेः पोटादिभ्यः पूर्वनिपातो यथा स्यादिति वचनमिति ॥ ३. १. १११. ॥

---

## चतुष्पाद् गर्भिण्या। ३। १। ११२॥

**त० प्र०**—चत्वारः पादा यस्याः सा चतुष्पाद् गवा-दिजातिः, तद्वाचि नामैकार्थं गर्भिण्या—गर्भिणीति नाम्ना सह समस्यते, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। गौश्चासौ गर्भिणी च—गोगर्भिणी, एवम्—अजगर्भिणी, अश्वगर्भिणी; महिषगर्भिणी। चतुष्पादिति किम्? ब्राह्मणी गर्भिणी। जातिरित्येव—कालाक्षी गर्भिणी, स्वस्तिमती गर्भिणी, संज्ञाशब्दाविमौ। जातेर्विशेष्यस्य पूर्वनिपातार्थं वचनम्॥ ११२॥

**श० म० न्यासानुसन्धानम्-चतुष्पाद्०** । चतुष्पाच्छब्दस्य प्रसिद्धार्थत्वेऽपि कदाचिदन्यार्थसम्भावना स्यादिति तन्निरासाय व्याचष्टे-**चत्वारः पादा यस्याः सा** इति विग्रहः, **चतुष्पाद्** इति "एकार्थं चा०" [ ३. १. २२ ] 5 इति समासः, "सुसंख्यात्" [ ७. ३. १५० ] इति पादशब्दस्य 'पाद्' इत्यादेशः "निर्दुर्बहिराविष्प्रादुश्चतुराम्" [ २. ३. ९. ] इति चतुरो रस्य षः, **गवादिजातिरिति** समासविशेष्यम् । 'चतुष्पाद्' इत्यस्य पुंस्त्रियो रूपाविशेषेऽपि अनुवर्तमानस्य 'जातिः' इत्यस्य सम्बन्धार्थं गर्भिण्या सह सामानाधिकरण्यार्थं 10 च स्त्रीलिङ्गतया विगृह्योदाहरति-**गौश्चासौ गर्भिणी चे**ति विग्रहः, **गोगर्भिणी**ति च समासः, अतिदिशति- **एवमिति अजगर्भिणी**ति समासः, अजा चासौ गर्भिणी चेति विग्रहः, **अश्वगर्भिणी**ति समासः, अश्वा चासौ गर्भिणी चेति विग्रहः, **महिषगर्भिणी**ति समासः, महिषी चासौ गर्भिणी चेति 15 विग्रहः, एषु गौरश्वा महिषी च चतुष्पाज्जातिरिति समासः, "पुंवत् कर्मधारये" [ ३. २. ५७ ] इति पुंवद्भावश्च ।

पदकृत्यं पृच्छति-**चतुष्पादिति किमि**ति प्रत्युदाहरणमुखेनोत्तरयति-'**ब्राह्मणीगर्भिणी**ति-ब्राह्मणीति जातिर्भवति न चतुष्पादिति 'चतुष्पाद्' इति वचनान्न भवति समासः, 20 यद्यत्र समासः स्यात् किं स्यात् । पुंवद्भावेन ब्राह्मणगर्भिणीति स्यात्, तच्च नेष्यते । अनुवर्तमानस्य 'जातिः' इत्यस्य व्यावर्त्यं पृच्छति-**जातिरित्येवे**ति, उत्तरयति-**कालाक्षी गर्भिणी, स्वस्तिमती गर्भिणीति**-अत्र कालाक्षीशब्दः स्वस्तिमतीशब्दश्च न जातिवचन इति समासो न भवति, 25 कथमनयोर्न जातित्वमित्याकाङ्क्षायामाह-**संज्ञाशब्दाविमौ** इति-कस्याश्चित् स्त्रीगव्याः 'कालाक्षी' इति, कस्याश्चिच्च 'स्वस्तिमती' इति नाम, न जातिवचनावित्यर्थः । एषु प्रत्युदाहरणेषु विशेषणसमासस्तु स्यादेव, किन्तु तथा सति गर्भिणी ब्राह्मणीत्यादिप्रयोगेऽपि रूपे विशेषाभावः, गर्भिणीशब्दस्य नियतलिङ्गत्वेन 30 न पुंवद्भावः । विशेषणसमासेन गतार्थत्वमाशङ्क्याह-**जातेर्विशेष्यस्य पूर्वनिपातार्थं वचनमि**ति ॥ ३. १. ११२. ॥

## युवा खलति-पलित-जरद्-वलिनैः । ३ । १ । ११३ ॥

**त० प्र०**—युवन्नित्येतन्नामैकार्थं खलत्यादिभिर्नामभिः 35 सह समस्यते, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । युवा चासौ खलतिश्च-युवखलतिः, एवं-युवपलितः, युवजरन्; युववलिनः, वलयोऽस्य सन्ति वलिनः, अङ्गादित्वान्नः । *नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्* इति युवतिश्चासौ खलतिश्च-युवखलतिः, एवं-युवपलिता, युवजरती, युववलिना । युवशब्दस्य विशेष्यत्वात् परनिपाते प्राप्ते 40 द्वयोर्वा गुणवचनत्वात् खञ्जकुण्टादिवदनियमे पूर्वनिपातार्थं वचनम् ॥ ११३ ॥

**श० म० न्यासानुसन्धानम्-युवा०** । सूत्रार्थः सुगमः । **युवा चासौ खलतिश्चे**ति विग्रहः । **युवखलतिरिति** च समासः; अतिदिशति-**एवमिति, युवपलितः** इति 45 समासः, युवा चासौ पलितश्चेति विग्रहः; **युवजरन्** इति समासः, युवा चासौ जरंश्चेति विग्रहः । ननु युवा चेत् कथं जरन् भवति ? जरन् वा कथं युवा ? न ह्यनयोः सामानाधिकरण्यमुपपद्यते, न च पूर्वं युवा भूत्वा पश्चाज्जरन्निति युक्तमव्यावर्तकत्वेन विशेषणत्वायोगादिति चेत् ? उच्यते-अन्यतरस्य 50 गुणनिबन्धनत्वाददोषः, तथाहि-यूनि विनयातिशयं विवक्षन्तस्तत्र जरच्छब्दं प्रयुञ्जते, विनयातिक्रमं च जरति तत्र युवशब्दम्, यद्वा यूनि जरद्धर्मस्यालस्यादेः पलितत्वादेव रोगवशादुपलभ्यमानत्वे तत्र जरच्छब्दं जरति वा स्वास्थ्याधिक्यादुत्साहशरीरसौष्ठवादियुवधर्मोपलब्धौ तत्र युवशब्दं प्रयुञ्जत इति सामा- 55 नाधिकरण्यसम्भवात्; वस्तुतो युवापि सन्नालस्यादियुक्तत्वाज्जरन्निवेति सादृश्ये पर्यवसानं बोध्यम् । **युववलिनः** इति समासः, युवा चासौ वलिनश्चेति विग्रहः, वलिनशब्दं साधयति-**वलयोऽस्य सन्ति-वलिनः,** कुतोऽत्र न प्रत्यय इत्याह-**अङ्गादित्वान्नः** इति । केचिदिह जरतीति स्त्रीलिङ्ग- 60 मधीयते, तेषां 'युवजरन्' इति न सिध्यति, पुंलिङ्गोपादाने तु पुंसि स्त्रियां च सिध्यति यथान्वत्रेत्याह-***नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्*** इति-नामत्वरूपव्यापकधर्मेण, युवत्वखलतित्वरूपव्याप्यधर्मेण नामरूपधर्मिविषयकबोधजनकत्वप्रकारकतात्पर्यविषयीभूतशब्दग्रहणे लिङ्गबोधक- 65 प्रत्ययविशिष्टस्य, अपिशब्दात् तद्रहितस्य-लिङ्गबोधकप्रत्ययरहितस्य च ग्रहणमिति प्रकृतन्यायार्थः । एवं च तन्न्यायसहकारेण युवतिशब्दोऽपि गृह्यते, तत्सामानाधिकरण्यानुरोधेन च खलत्यादयोऽपि स्त्रीत्वविशिष्टाः स्त्रीबोधकप्रत्ययविशिष्टाश्च गृह्यन्ते, तेषामपि प्रकृतसूत्रे ग्रहणे प्रकृतन्यायविषय- 70 त्वानपायाच्च, तदेवाह-**इति**-उक्तन्यायरूपहेतुनाऽनन्तरं वक्ष्यमाणाः स्त्रीप्रत्ययविशिष्टानामपि समासाः सिध्यन्तीत्यर्थः, **युवतिश्चासौ खलतिश्चे**ति विग्रहः, **युवखलतिरिति** च समासः, खलतिशब्दात् "इतोऽक्त्यर्थात्" [ २. ४. ३२ ] इति विकल्पेन स्त्रियां ङीविधानात् वैकल्पिकं 'खलती' इत्यपि 75 रूपं गृह्यते, अतिदिशति-**एवमिति, युवपलिता** इति समासः, युवतिश्चासौ पलिता चेति विग्रहः; **युवजरती** इति

समासः, युवतिश्चासौ जरती चेति विग्रहः; **युववलिना** इति
समासः, युवतिश्चासौ वलिना चेति विग्रहः । इह पूर्वोत्तर-
पदयोरुभयोर्गुणवाचकत्वमिति विशेष्यत्वानियमे यून एव विशे-
षणत्वविवक्षायां विशेषणसमासेऽपि तस्यैव पूर्वनिपाते सिद्धे
5 सूत्रवैयर्थ्यमाशङ्क्याह-**युवशब्दस्य विशेष्यत्वाद् पर-
निपाते प्राप्ते, द्वयोर्वा गुणवचनत्वात् खञ्जकुण्टा-
दिवदनियमे पूर्वनिपातार्थं वचन**मिति, अयमाशयः–
विशेष्यविशेषणभावस्य विवक्षाधीनत्वेन यून एव प्राधान्येन
विवक्षितत्वाद् विशेष्यत्वम्, अस्तु वोभयोर्गुणवचनत्वेन विशे-
10 षणत्वानियमः, तथापि तस्यैव पूर्वनिपात इति नियमस्य प्रकृत-
सूत्रं विनाऽप्राप्तत्वात् तदर्थमेवेदं सूत्रमिति ॥ ३. १. ११३. ॥

## कृत्यतुल्याख्यमजात्या । ३ । १ । ११४ ॥

**त० प्र०**—कृत्यप्रत्ययान्तं तुल्याख्यं च–तुल्यपर्यायं
नामैकार्थमजात्या-अजातिवाचिना नाम्ना सह समस्यते, स च
15 समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । भोज्यं च
तदुष्णं च–भोज्योष्णम्, एवं–भोज्यलवणम्, पानीयशीतम्,
पानीयोष्णं जलम्, हरणीयपूर्णो घटः, पेयाम्लम्; भृत्य-
भरणीयः, एकोऽत्र कृत्योऽर्हार्थेऽपरश्च शक्यार्थे; स्तुत्यपटुः
पुरुषः; तुल्याख्य–तुल्यश्वेतः, तुल्यसन्, तुल्यमहान्, सदृश-
20 श्वेतः; सदृशमहान् । अजात्येति किम्? भोज्य ओदनः, तुल्यो
वैश्यः; सदृशी कन्या वोढव्या । कथं शीतपानीयम्?
पानीयशब्दोऽयमौणादिको जलवाची, तस्यायं विशेषण-
समासः । जात्या समासस्याजातेः पूर्वत्वस्य च प्रतिषेधार्थं
वचनम् ॥ ११४ ॥

25 **श० म० न्यासानुसन्धानम्**-कृत्य० । 'घ्यण् तव्य
अनीय य क्यप्' इति प्रत्ययाः कृत्याः, प्रत्ययग्रहणे च तदन्तवि-
ज्ञानमित्याह–**कृत्यप्रत्ययान्त**मिति, तुल्याख्यशब्दं व्याख्याति-
**तुल्याख्यं च तुल्यपर्याय**मिति–तुल्यमर्थमाचष्ट इति
तुल्याख्यं "मूलविभुजादयः" [५. १. १४४.] इति कः,
30 तुल्यस्याख्याभिधास्यास्तीति वा तुल्याख्यम्, आख्याग्रहणं
पर्यायार्थम्, अन्यथा *स्वं रूपं०* इति न्यायेन तुल्यशब्द एव
विज्ञायेत; यद्यपि कृत्यशब्देन स्वरूपं न गृह्यते, किन्तु तदर्थः–
कृत्यसंज्ञकाः प्रत्यया इति, तत्साहचर्याच्च तुल्य इत्यर्थस्य ग्रहणं
युक्तं, तत्रार्थे कार्यासम्भवात् तद्वाचिनामेव ग्रहणं भविष्यति,
35 तथापि यस्य तुल्यता पदार्थस्तस्य तुल्यसदृशादेः शब्दस्य
परिग्रहो यथा स्यादित्येवमर्थमाख्याग्रहणम्, अन्यथेहापि स्यात्–
अग्निर्माणवकः, गौर्वाहीक इति अत्रापि हि तुल्यता प्रतीयते,
परार्थे हि प्रयुज्यमानाः शब्दाः सादृश्यं गमयन्ति, न त्वत्र
तुल्यता पदार्थः, पदान्तरसम्बन्धे ह्यत्र तुल्यताप्रतिपत्तिः,
अथैवं मन्येत–अन्तरङ्गत्वात् तुल्यतापदार्थप्रतिपत्तिरिति, एवं 40
सत्याख्याग्रहणमपाकर्तुं शक्यं, स्पष्टप्रतिपत्तये तत् क्रियत इति
विज्ञेयम् ।

विगृह्योदाहरति–**भोज्यं च तदुष्णं** चेति विग्रहः,
**भोज्योष्ण**मिति च समासः, भोक्तुं शक्यं भोजनार्हं
वोष्णमित्यर्थः, "भुजंप् पालनाभ्यवहारयोः" इत्यतः "ऋवर्ण- 45
व्यञ्जनाद् घ्यण्" [५. १. १७.] इति घ्यण्, उष्णमिति
गुणो न जातिरतः समासः, अतिदिशति–**एव**मिति,
**भोज्यलवण**मिति समासः, भोज्यं च तल्लवणं चेति विग्रहः,
शेषं प्राग्वत् । **पानीयशीत**मिति समासः, पानीयं च तत्
शीतं चेति विग्रहः, **पानीयोष्ण**मिति समासः, पानीयं च तद् 50
उष्णं चेति विग्रहः, **जल**मिति विशेष्यमुभयत्रापि योज्यम्,
"पां पाने" अतः "तव्यानीयौ" [५. १. २६.] इत्यनीयप्रत्यये
पानीयमिति, पातुं योग्यं पानार्हं वेति तदर्थः, हरणीयपूर्णः इति
समासः, हरणीयश्चासौ पूर्णश्चेति विग्रहः, "हृंग् हरणे" इत्यतो-
ऽनीयः, **घटः** इति विशेष्यम्, पूर्ण इति क्रियाशब्दः, हर्तुं 55
शक्यो हरणार्हो वा हरणीयः, शेषं प्राग्वत्, पूर्वत्र जलमिति,
अत्र घट इति च 'पानीय'शब्दस्य 'पूर्ण'शब्दस्य च जाति-
शब्दाशङ्कां संज्ञाशब्दाशङ्कां चापाकरोति–**पेयाम्ल**मिति
समासः, पेयं च तद् अम्लं चेति विग्रहः पातुं शक्यं पानार्हं
वा पेयम्, "पां पाने" इत्यतः "य एच्चातः" [५. १. २८.] 60
इति ये एकारे च पेयमिति । **भृत्यभरणीयः** इति समासः,
भृत्यश्चासौ भरणीयश्चेति विग्रहः, "डुभृंग् पोषणे च" इत्यतः
"भृगोऽसंज्ञायाम्" [५. १. ४५.] इति क्यपि 'भृत्य'
इति "तव्यानीयौ" [५. १. २७.] इत्यनीये 'भरणीय' इति
तुल्यार्थाविमाविति कथं समास इत्याशङ्कामपाकर्तुमाह–**एकोऽत्र** 65
**कृत्योऽर्हार्थेऽपरश्च शक्यार्थे** इति–भृत्य इत्यत्रार्हार्थे
भरणीय इत्यत्र शक्यार्थे, यद्वा भृत्य इत्यत्र शक्यार्थे भरणीय
इत्यत्र चार्हार्थे इति विवक्षाभेदादर्थभेदे द्वयोः प्रयोगो विशेषण-
विशेष्यभावश्चेति समासः । एवं कृत्यप्रत्ययान्तानां साम्येन पर्या-
येणोभयोरपि पूर्वनिपातः सम्भाव्यत एव, विवक्षावशादुद्देश्य- 70
विधेयभावव्यत्याससंभवात् **स्तुत्यपटु**रिति समासः, स्तुत्य-
श्चासौ पटुश्चेति विग्रहः, स्तोतुं शक्यः स्तवनार्हो वेत्यर्थः,
स्तौतेः "दृ-वृग्-स्तु०" [५. १. ४०] इति क्यपि 'स्तुत्य'
इति । कृत्यानां शक्यार्थमर्हार्थत्वं च "शक्तार्हे कृत्याश्च"
[५. ४. ३५.] इति ज्ञेयम् । तुल्यपर्यायानुदाहर्तुमवतारयति– 75
**तुल्याख्ये**ति, **तुल्यश्वेत** इति समासः, तुल्यश्चासौ श्वेतश्चेति
विग्रहः, **तुल्यसन्** इति समासः, तुल्यश्चासौ संश्चेति च
विग्रहः, **तुल्यमहा**निति समासः, तुल्यश्चासौ महांश्चेति

विग्रहः, **सदृशश्वेतः** इति समासः, सदृशश्चासौ श्वेतश्चेति च विग्रहः, **सदृशमहानिति** समासः, सदृशश्चासौ महांश्चेति विग्रहः। 'तुल्यसन्, तुल्यमहान्, सदृशमहान्' इत्यत्र "सन्महत्०" [ ३. १. १०७ ] इति पूर्वोक्तसूत्रविषयतासत्त्वेऽपि परत्वादनेनैव समास इति बोध्यम् । "तस्य सत्कुलशालिनः" इति भट्टिप्रयोगे सच्छब्दस्य कथं पूर्वनिपातः, अनेन परत्वात् समासे 'कुल्यसच्छालिनः' इत्यौचित्यादिति चेत्? सतां कुल्यं सत्कुल्यमिति षष्ठीसमासाश्रयणात्, एवं यत्र तत्र प्रयुज्यमाने 'परमपूज्य' इत्यादिविशेषणेऽपि षष्ठीसमास एवोचितः, कर्मधारयसमासे त्वस्य प्रवृत्त्या पूज्यपरम इति स्यात् ।

पदकृत्यं पृच्छति-**अजात्येति किमिति**, प्रत्युदाहरणमुखेनोत्तरयति-**भोज्य ओदनः, तुल्यो वैश्यः** इति अत्राजात्येति वचनात् ओदनशब्दो वैश्यशब्दश्च जातिवचन इति समासो न भवति, एवं-**सदृशी कन्या वोढव्येति**-अत्रापि कन्यात्वस्यानुगतसंस्थानव्यङ्ग्यत्वेन जातित्वात् समासो न भवति । अनेन समासाभावेऽपि विशेषणसमासोऽत्र स्यादित्यपि न, शङ्कनीयम्, अजात्या इति प्रतिषेधस्य बलवत्त्वात् 'अजात्या' इति यद्यपि पर्युदासस्तथापि सूत्रस्य वैयर्थ्यसम्भावनया प्रसज्यप्रतिषेधोऽपि समाश्रीयते, तथा चेहैतेन समासाभावे विशेषणसमासोऽपि न भवति, वक्ष्यति चैतदग्रे । शङ्कते-**कथं शीतपानीयमिति**-शीतपानीयमिति प्रयुज्यते, तत् कथं पानीयशीतमित्युदाहृतम्, अथवा पानीयशब्दस्य कृत्यप्रत्ययान्ततयाऽनेन समासे तस्यैव पूर्वप्रयोग उचित इति कथं शीतशब्दस्य पूर्वप्रयोग इति शङ्काशयः, उत्तरयति-**पानीयशब्दोऽयं जलवाची, तस्यायं विशेषणसमासः** इति-पानीयमिति जातिवचनश्चास्ति यो जलपर्यायवचनः, क्रियावचनश्च, तत्र क्रियावचनस्यानेन समासः, यो जातिवाची सोऽव्युत्पन्नः, न कृत्यान्तस्तदर्थाभावात्, विशिष्टार्था हि कृत्याः, तत्र नास्य समासस्य प्राप्तिरस्ति, कृत्यान्तत्वे वा बाहुलकात् तथा प्रयोगो ज्ञेयः । ननु भोज्योष्णमित्यादि "विशेषणं विशेष्येण०" [ ३. १. ९६ ] इत्यनेनैव सेत्स्यतीति किमर्थमिदं सूत्रमित्याशङ्कायामाह-**जात्या समासस्याजातेः पूर्वत्वस्य च प्रतिषेधार्थं वचनमिति**-यदीदं नारभ्येत तदा "विशेषणं०" [ ३. १. ९६. ] इति सूत्रेण 'भोज्य ओदनः, तुल्यो वैश्यः, सदृशी कन्या वोढव्या' इत्यत्रापि समासः स्यात्, अतो जात्या-जातिशब्देन सह कृत्यतुल्याख्यस्य समासो मा भूदित्येवमर्थं वचनम्, तथाऽजातिवचनेन समासेऽजातिवचनस्य पूर्वनिपातो मा भूदित्येवमर्थं च वचनम्, तथाहि-भोज्योष्णमित्यादौ उष्णादयः शब्दा गुणवचनाः, तत्रासत्यस्मिन् योगे विशेषणसमासे सति तेषां पूर्वनिपातः स्यात्, स मा भूदित्यारम्भः, 'तुल्यमहान्' इत्यादौ "सन्महत्०" [ ३. १. १०७. ] इत्यनेन समासः प्राप्नोति तथापि परत्वादनेनैव भवति, तुल्याख्यस्यावकाशः-तुल्यश्वेत इति, तस्य चातुल्याख्यायामवकाशः-महापुरुष इति । अयं भावः-विशेषणसमासेन भोज्योष्णादीनां सदृशश्वेतादीनां च सिद्धौ सत्यामपि प्रकृतसूत्रारम्भेण कृत्यतुल्याख्यानां विशेषणसमासश्चेत् अजात्यैव, अजात्यापि कृत्यप्रत्ययान्तस्य तुल्यार्थस्य च समासे कृत्यप्रत्ययान्तस्यैव पूर्वनिपातश्चेति नियमद्वयं लभ्यत इति ॥ ३. १. ११४. ॥

## कुमारः श्रमणादिना । ३ । १ । ११५ ॥

त० प्र०--'कुमार' इत्येतन्नामैकार्थं श्रमणादिना नाम्ना सह समस्यते, स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। कुमारी चासौ श्रमणा च-कुमारश्रमणा, एवं-कुमारप्रव्रजिता; कुमारश्चासावध्यायकश्च-कुमाराध्यायकः, कुमारी चासावध्यायिका च-कुमाराध्यायिका, एवं कुमाराभिरूपकः; कुमाराभिरूपिका। श्रमणा, प्रव्रजिता, कुलटा, गर्भिणी, तापसी, बन्धकी, दासी, एते सप्त स्त्रीलिङ्गा एव; अध्यायक, अभिरूपक, पटु, मृदु, पण्डित, कुशल, चपल, निपुण, येऽत्र स्त्रीलिङ्गास्तैः सह स्त्रीलिङ्ग एव कुमारशब्दः समस्यते शेषैस्तूभयलिङ्गः; *नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्* इति हि न्यायः श्रमणादीनां स्त्रीलिङ्गानां पाठात्; पुंलिङ्गैः पूर्वनिपाते कामचारः-कुमारश्रमणः, तापसकुमारः । कुमारशब्दस्य पूर्वनिपातनियमार्थं वचनम् ।

इह केचित् "पूर्वकालैकसर्वजरत्पुराणनवकेवलपूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरपूजार्थसन्महत्परमोत्तमोत्कृष्टा" इति "वृन्दारकनागकुञ्जरैः" इति, "युवा खलतिपलितजरद्वलिनैः" इति "कृत्यतुल्याख्यमजात्या" इति, "कुमारः श्रमणादिना" इति पञ्चसूत्रीं विरचय्य तत्रामेव प्रथमान्तानां समावेशे परसूत्रनिर्दिष्टमेव प्रथमान्तं पूर्वं निपतति, तृतीयान्तानां समावेशे परसूत्रनिर्दिष्टमेव तृतीयान्तं परं निपतति, एकसूत्रोक्तानां तु प्रथमान्तानां तृतीयान्तानां च समावेशे पूर्वापरनिपाते कामचार इतीच्छन्ति; प्रथमान्तसमावेशे-तुल्ययुवा, सदृशयुवा, कुमारपरमः, कुमारपरमा-कुमारसन्, कुमारसती, एवं-महज्जघन्यप्रथमचरममध्यमध्यमादयोऽपि कुमारयुवा, कुमारतुल्यः, कुमारतुल्या; तृतीयान्तसमावेशे-वृन्दारकपलितः, वृन्दारकवलिनः, नागजरन्, वृन्दारकश्रमणा, खलतिश्रमणा, वृन्दारकप्रव्रजिता, खलतिप्रव्रजिता, जरत्कुलटा; जरत्तापसी इत्यादि; श्रमणादीनां पुंलिङ्गत्वे त्वनियमः, तेन वृन्दारकश्रमणः, श्रमणवृन्दारकः; नागतापसः, तापसनागः; कुञ्जरदासः, दासकुञ्जरः; तथा-

श्रमणखलतिः, खलतिश्रमणः; पलिततापसः, तापसपलित इत्यादि । अध्यायकादयस्तु लिङ्गान्तरेऽपि परनिपातना एव-वृन्दारकाध्यायकः, वृन्दारकाध्यायिका; खलत्यध्यायकः-खलत्यध्यायिका; पलिताभिरूपकः, पलिताभिरूपिकाः, एक, सूत्रोक्तानां प्रथमान्तानां समावेशे-प्रथमवीरः, वीरप्रथमः; चरमजघन्यः, जघन्यचरम इत्यादि, तुल्यभोज्यः, भोज्यतुल्य इत्यादि; एकसूत्रे तृतीयान्तानां समावेशे-खलतिपलितः, पलितखलतिः; जरद्वलिनः, वलिनजरन् इत्यादि ॥ ११५ ॥

---

**श० म० न्यासानुसन्धानम्-कुमारः०** । सूत्रार्थः सुगमः । विगृह्योदाहरति-**कुमारी चासौ श्रमणा** चेति विग्रहः, **कुमारश्रमणा** इति च समासः, अत्र "पुंवत् कर्मधारये" [३. २. ५७.] इति पुंवद्भावः, श्रमणशब्दो यतिविशेषे कोमलाङ्ग्यां श्रमकर्तरि च प्रयुज्यते, इह च प्रव्रजितादिभिः सह पाठात् यतिविशेषार्थ एव ग्रहीतव्य इति प्रतिपत्तव्यम्, श्रमं नयतीति डे "पूर्वपदस्थात्०" [२. ३. ६४.] इति संज्ञायां णत्वम्, यद्वा श्राम्यति तपसेति नन्द्यादित्वादनः । अतिदिशति-**एवमिति, कुमारप्रव्रजिते**ति समासः, कुमारी चासौ प्रव्रजिता चेति विग्रहः, श्रमणादिषु ये स्त्रीलिङ्गे पठितास्तेषां स्त्रीलिङ्गेन विग्रह-समासौ, ये तु सामान्येन पठितास्तेषामुभयलिङ्गेन विग्रह-समासौ, श्रमणा-प्रव्रजिता-शब्दयोः स्त्रीलिङ्गे पाठ इति तथैव विग्रहसमासौ दर्शितौ; अध्यायकादिशब्दस्तु सामान्येन पठित इति तस्योभयलिङ्गेन विग्रह-समासौ दर्शयति-**कुमारश्चासावध्यायकश्चे**ति विग्रहः, **कुमाराध्यायकः** इति च समासः, **कुमारी चासावध्यायिका चे**ति विग्रहः, **कुमाराध्यायिके**ति च समासः, अतिदिशति-**एवमिति, कुमाराभिरूपकः** इति समासः, कुमारश्चासावभिरूपकश्चेति विग्रहः, **कुमाराभिरूपिके**ति समासः, कुमारी चासावभिरूपिका चेति विग्रहः ।

श्रमणादिगणे पञ्चदश शब्दाः पठिताः सन्ति, तत्र सप्त स्त्रीलिङ्गे, अष्टौ च सामान्येन तदेव क्रमेण दर्शयति-**१ श्रमणा २ प्रव्रजिता ३ कुलटा ४ गर्भिणी ५ तापसी ६ बन्धकी ७ दासी, एते सप्त स्त्रीलिङ्गा एवे**ति; **१ अध्यायक २ अभिरूपक ३ पटु ४ मृदु ५ पण्डित ६ कुशल ७ चपल ८ निपुण** इति । ननु सूत्रे 'कुमारः' इति पुंसा निर्देश इति कुमारी चासौ श्रमणा चेति विग्रहः सूत्रनिर्देशविरुद्ध इत्याशङ्कायामाह-**येऽत्र स्त्रीलिङ्गास्तैः सह स्त्रीलिङ्ग एव कुमारशब्दः समस्यते** इति-स्त्रीलिङ्गेनोत्तरपदेन स्त्रीलिङ्गस्यैव कुमारशब्दस्य सामानाधिकरण्यसम्भवादिति, **शेषैस्तूभयलिङ्ग** इति-सामान्येन निर्दिष्टैस्तु विवक्षानुसारेणोभयलिङ्गः कुमारशब्दः समस्यत इत्यर्थः । नन्वेवं तेन सहैकार्थ्यं सामानाधिकरण्यमस्तु, किन्तु सूत्रे पुंलिङ्गस्यैव निर्देशात् कथं स्त्रीलिङ्गेन समास इति चेत्? अत्राह-***नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् इति हि न्यायः** इति-प्रदर्शितश्चैतन्न्यायार्थः पूर्वतरसूत्रे । एतन्न्यायस्य च ज्ञापकोऽयमेव निर्देश इति सूचयन्नाह-**श्रमणादीनां स्त्रीलिङ्गानां पाठादि**ति-'पाठात्' इति पञ्चमी ज्ञापकत्वरूपहेतौ । ननु तुल्यन्यायाद् यथा श्रमणादिभिः स्त्रीलिङ्गैः सामानाधिकरण्याय कुमारशब्दः स्त्रीलिङ्गो गृह्यते, तथा पुंलिङ्गकुमारशब्देन सामानाधिकरण्याय पुंलिङ्गैस्तापसादिशब्दैरप्यनेन समासे तेषां पश्चात् प्रयोग एव नैयत्येनोचित इति तापसश्चासौ कुमारश्चेति विग्रहे कुमारतापस इत्येव रूपं नियतं स्यात्, न तु तापसकुमार इति चेत्? अत्राह-**पुंलिङ्गैः पूर्वनिपाते कामचारः, कुमारश्रमणः, तापसकुमारः** इति, अयमाशयः-पुंलिङ्गनिर्देशे न प्रयत्नविशेषापेक्षा तस्य नामसाधारणरूपत्वात्, स्त्रीलिङ्गनिर्देशे च प्रयत्नविशेषेण तादृशानामेव ग्रहणस्येष्टत्वनिर्धारणात्, ततश्च पुंलिङ्गानां श्रमणादीनां श्रमणादिगणबहिर्भूतत्वमेवेति तत्रास्य सूत्रस्याप्रवृत्त्या विशेषणसमास एव, विशेषणत्वस्य च विवक्षाधीनत्वेन तद्वशादेव पूर्वनिपातव्यवस्थोचितेति । विशेषणसमासेन गतार्थत्वमाशङ्क्याह-**कुमारशब्दस्य पूर्वनिपातार्थं वचनमि**ति-श्रमणादीनां क्रियाशब्दत्वेन कुमारापेक्षया तेषामेव विशेषणत्वौचित्याद् विशेषणसमासे तेषामेव पूर्वनिपातः स्यात्, अस्तु वा कुमारशब्दस्यापि वयोरूपगुणवाचकत्वेन विशेषणत्वं तथापि तस्यैव विशेषणत्वमिति नियमाभावेन न नैयत्येन पूर्वनिपातः स्यादिति तस्यैव पूर्वनिपातो यथा स्यादित्येतदर्थमेवानेन विशिष्य समासो विधीयत इति भावः ।

अत्र मतान्तरस्थं सूत्रपाठं तत्कृतव्यवस्थां च शिष्यबुद्धिवैशद्यार्थं प्रदर्शयति-**इह केचिदि**त्यादिना-**इह** कर्मधारयप्रकरणे, **केचित्** केचनाचार्याः, न सर्वे, अस्य **'इच्छन्ति'** इति क्रियायामन्वयः, **कामचार** इत्यन्तं कर्म, तच्च **'इति'** शब्देनोक्तमिति न द्वितीया । स्वमते "पूर्वकालैक०" इत्यादित्रिसूत्री "वृन्दारकनाग०" इत्यादिचतुःसूत्री च विच्छिद्य सन्निविष्टा, तां ते सह पठन्ति, तत्र त्रिसूत्रीमेकरूपेण चतुःसूत्रीं च यथास्थितामेव पठन्ति, तत्र च प्रातिस्विकसमासे यथोक्तैव व्यवस्था, परस्परसमावेशे च व्यवस्थान्तरमाह-**तस्यामेवे**त्यादिना-एवकारेण स्वमतानुसारिपाठे मध्यपतितानां पोटायुवतीत्यादीनां व्यवच्छेदः, केचित् तु 'तस्यामेव' इत्येव शब्दोऽप्यर्थ इत्याहुः, तथा च स्वमतपाठेऽप्येवमेव व्यवस्थेति भावः, स्वमतेऽपि "स्पर्धे" [७. ४. १०९] इति परि-

भाषयैव व्यवस्थायाः पूर्वमुक्तत्वात्। **प्रथमान्तानां समावेश** इति-पञ्चसूत्र्यां प्रथमान्ततया निर्दिष्टशब्दानामेकत्र समावेशे प्रवेशे सतीत्यर्थः, **परसूत्रनिर्दिष्टमेव प्रथमान्तमिति**-"प्रथमोक्तं प्राक्" [३. १. १४८] इति सूत्रैकवाक्यापन्नया "स्पर्धे" [७. ४. १०९] इति परिभाषया परमेव प्रथमोक्तं प्राक् प्रयुज्यत इति भावः। तृतीयान्तविषयेऽपि व्यवस्थामाह-**तृतीयान्तानां समावेश** इति-एतच्च सूत्राननुगुणं तृतीयोक्तस्य परप्रयोगविधायकसूत्राभावात्, प्रथमोक्तस्य पूर्वप्रयोगविधानादेव पारिशेष्यात् तृतीयान्तस्य परप्रयोगात्, **वृन्दारकपलित** इत्यादौ तु "विशेषणं विशेष्येण०" [३. १. ९६.] इति समासे तदनुकूलाया एव व्यवस्थाया औचित्येन निर्दिष्टरूपाणां सिद्धिसम्भवाच्च, वृन्दारकस्य द्रव्यवाचित्वेऽपि सदृशलाक्षणिकत्वेन विशेषणत्वसम्भवाच्च। **श्रमणादीनां पुंलिङ्गत्वे त्वनियम** इति-तेषां स्त्रीलिङ्गानामेव गणे पाठात् पुंलिङ्गत्वे शास्त्रव्यापाराभावेन विशेषणविशेष्यभावविवक्षाधीन एव पूर्वनिपात इत्यनियमः स्पष्ट एवेति भावः। न केवलं प्रथमान्तानां पूर्वप्रयोगानियम एव, अपि तु तृतीयान्तानां परप्रयोगानियमोऽपीत्याह-**तथा श्रमणखलतिरित्यादि**। ये च पुंलिङ्गा एव गणे पठितास्तेषु नामग्रहणन्यायप्रवृत्त्या स्त्रीलिङ्गत्वेऽपि शास्त्रव्यापारसत्त्वेन तृतीयान्तपरप्रयोगनियमो भवत्येवेत्याह-**अध्यायकादयस्त्विति**-इयं च व्यवस्था विभिन्नसूत्रोक्तानामेकत्रोपनिपातरूपसमावेशस्थलविषयिणी। यत्र चैकसूत्रोक्तानां समावेशस्तद्विषये व्यवस्थामाह-**एकसूत्रोक्तानां प्रथमान्तानामिति**। **प्रथमवीरः, वीरप्रथमः** इति-तत्र न परत्वमूलिका पूर्वनिपातव्यवस्था, किन्तु कामचार एवेति तथैव प्रयोगप्रदर्शनम्। एवं तृतीयान्तविषयेऽपीत्याह-**एकसूत्रे तृतीयान्तानां समावेशे** इति। इयं च व्यवस्था क्वचित् स्वसम्मता क्वचिच्चासम्मतेति तटस्थभावेनैवोक्ता, न तु स्वीकृत्येति केचिदित्युक्त्यादावेव प्रदर्शितम् ॥ ३. १. ११५. ॥

## मयूरव्यंसकेत्यादयः । ३ । १ । ११६ ॥

त० प्र०—मयूरव्यंसकादयस्तत्पुरुषसमासा निपात्यन्ते। विगतावंसावस्य व्यंसस्तत्तुल्यो व्यंसकः, व्यंसयति वा छलयति व्यंसकः, व्यंसकश्चासौ मयूरश्च-मयूरव्यंसकः, एवं-छात्रव्यंसकः, मुण्डश्चासौ कम्बोजश्च कम्बोजमुण्डः, एवं-यवनमुण्डः; व्यंसिका चासौ मयूरी च-मयूरव्यंसिका, कर्मधारयलक्षणः पुंवद्भावः; एतेषु विशेष्यस्य पूर्वनिपातो निपातनात्।

'एहीडादयोऽन्यपदार्थे'-एहि ईडे ! खि ! इति जल्पो यस्मिन् कर्मणि काले वा तत्-एहीडं वर्तते, एहि यवैरिति



जल्पो यत्र कर्मणि काले वा तदेहियवं वर्तते, एतौ निपातनान्नपुंसकौ, एहि वाणिजेति जल्पो यस्यां क्रियायां सा-एहिवाणिजा, एवं-प्रेहिवाणिजा, अपेहिवाणिजा; एहिस्वागता, अपेहिस्वागता; एहिद्वितीया, अपेहिद्वितीया; एहिप्रघसा, अपेहिप्रघसा; एहिविघसा, अपेहिविघसा; एहिप्रकसा, अपेहिप्रकसा। प्रोह कटमिति जल्पो यस्यां सा-प्रोहकटा क्रिया, एवं-प्रोहकर्दमा, प्रोहकपर्दा। उद्धम चूडे उद्धम चूडामिति वा जल्पो यस्यां सा-उद्धमचूडा क्रिया, आहर चेलमिति यस्यां सा-आहरचेला क्रिया, एवम्-आहरवसना, आहरवितता; कृन्धि विचक्षणेति कृन्धि विचक्षणमिति वा यस्यां सा-कृन्धिविचक्षणा क्रिया, भिन्धि लवणमिति यस्यां सा-भिन्धिलवणा, एवं-पचलवणा, उद्धरोत्सृजेति जल्पो यस्यां सा-उद्धरोत्सृजा, एवम्-उद्धरावसृजा, उद्धमविधमा, उद्वपनिवपा, उत्पतनिपता, उत्पचनिपचा। कृन्धि विक्षिणीहीति कृन्धि विक्षिणु इति वा यस्यां सा-कृन्धिविक्षिणा। उन्मृजाऽवमृजेति यस्यां सा-उन्मृजावमृजा अत एव निपातनादिहैव च मृजेर्हौ शो भवति।

'आख्यातमाख्यातेन सातत्ये'-अश्नीत पिबतेति सातत्येनोच्यते यस्यां सा-अश्नीतपिबता, अश्नीतपचता, एवं-खादतमोदता, पचतभृजता; लुनीतपुनीता, खादाचामा, आहरनिवपा, आवपनिष्किरा, पचप्रकूला, इह द्वितीयेति यस्यां क्रियायां सा-इहद्वितीया, एवम्-इहपञ्चमी, अद्यद्वितीया, अद्यपञ्चमी; एहि रे याहि रे इति यस्यां क्रियायां सा-एहिरेयाहिरा, एवम्-एहिरेगच्छरा; अहो अहं पुरुष इति यस्यां क्रियायां सा-आहोपुरुषिका, अहं पूर्व इति यस्य सा-अहंपूर्विका, एवम्-अहंप्रथमिका, अहमहमिति यस्यां सा-अहमहमिका; विकृतं च प्रकृतं च यस्यां सा-विचप्रका, निश्चितं च प्रचितं च यस्यां सा-निश्चप्रचा; या इच्छा यस्यां सा यदृच्छा, एषु सर्वेषु क्रियैवान्यपदार्थः।

"ह्यन्तं स्वकर्मणा बहुलमाभीक्ष्ण्ये कर्तरि समासाभिधेये"-जहि जोडमित्यभीक्ष्णं य आह स उच्यते-जहिजोडः, एवम्-उज्जहिजोडः, जहिस्तम्बः, उज्जहिस्तम्बः, कुरुकटः; बहुलवचनान्न च भवति-पचौदनमित्यभीक्ष्णमाह।

स्नात्वा कालीभूतः,-स्नात्वाकालकः, एवं-पीत्वास्थिरकः, भुक्त्वासुहितः, प्रोष्य विप्रयुक्तो भूत्वा पापीयान् स्नेहो भवति स-प्रोष्यपापीयान्, उत्पत्याकाशे भूत्वा या पाकला पाण्डुर्भवति सा-उत्पत्यपाकला, निपत्य भूमौ निपतिता रोहिणी या रक्ता भवति सा-निपत्यरोहिणी, निषद्य निषण्णा सती श्यामा जाता-निषद्यश्यामा; निषण्णा श्यामा जाता-निषण्णश्यामा, उदक् चावाक् च, उच्चितं चावचितं चेति वा-उच्चावचम्,

उच्चैश्च नीचैश्च, उच्चितं च निचितं चेति वा–उच्चनीचम्, आचितं चोपचितं च–आचोपचम्, आचितं च अवचितं च–आचोवचम्, आचितं च पराचितं च, अर्वाक् च परस्ताच्चेति वा–आचपराचम्, निश्चितं च प्रचितं च–निश्चप्रचम्, निष्कुषितं च निस्त्वचं च–निश्चत्वचम्; न भवति किंचन न कचिदुपयुज्यत इति–अकिंचनम्, नास्य कुतोऽपि भयमस्तीति–अकुतोभयम् ।

"गतप्रत्यागतादयः"–गतं च तत् प्रत्यागतं च–गतप्रत्यागतम्, एवं–यातानुयातम्, महान् क्रयः अल्पः क्रयिका, क्रयावयवयोगात् क्रयः, क्रयिकावयवयोगात् क्रयिका, क्रयश्चासौ क्रयिका च–क्रयक्रयिका समुदायः, एवं–पुटापुटिका, फलाफलिका, मानोन्मानिका, एषु व्यवस्थितपूर्वोत्तरपदः समासः ।

"शाकपार्थिवादयः"–शाकप्रियः शाकभोजी शाकप्रधानो वा पार्थिवः–पृथोरपत्यं–शाकपार्थिवः, पृथिव्या ईश्वरः–पार्थिव इति वा, तेन शाकपार्थिवः; कुतपवस्त्रः सौश्रुतः, सुश्रुतोऽपत्यं सौश्रुतः, कुतपसौश्रुतः; अजापण्यस्तौल्वलिः–अजातौल्वलिः, यष्टिप्रहरणो यो मौद्गल्यः–यष्टिमौद्गल्यः, एवं–परशुरामः; घृतप्रधाना रोटिः घृतरोटिः, एवम्–ओदनपाणिनिः, आणिमाण्डव्यः, बलाकाकौशिकः, विदर्भीकौण्डिन्यः, सहस्रबाहुरर्जुनः–सहस्रार्जुनः, त्र्यवयवा विद्या–त्रिविद्या, एकाधिका दश–एकादश, एवं–द्वादश, षोडश, एकविंशतिः, द्वात्रिंशतिः, एकशतम्, द्विशतम्; दध्युपसिक्त ओदनो–दध्योदनः, एवं–घृतौदनः; गुडमिश्रा धानाः–गुडधानाः एवं–तिलपृथुकाः; अश्वयुक्तो रथः–अश्वरथः; एवं–गजरथः; घृतपूर्णो घटः–घृतघटः; अत्र शाकपार्थिवादिषु प्रियादेरुत्तरपदस्य लोपः । तृतीयो भागः–त्रिभागः, तृतीयभागः; त्र्यंशः, तृतीयांशः; षड्भागः, षष्ठभागः; षडंशः, षष्ठांशः; त्रिदिवं, तृतीयदिवम्, त्रिविष्टपं, तृतीयविष्टपमित्यादिषु पूरणप्रत्ययस्य वा लुग् भवति । तथा सर्वेषां श्वेततरः–सर्वश्वेतः, एवं–सर्वमहान्, अत्र गुणेन तरबन्तेन निर्धारणषष्ठीसमासस्तरब्लोपश्च ।

एवमविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः, यच्चेह लक्षणेनानुपपन्नं तत् सर्वं निपातनात्सिद्धम् । इतिशब्दः स्वरूपावधारणार्थः, तेन परमो मयूरव्यंसक इति समासान्तरं न भवति, उत्तरपदेन भवत्येवेत्यन्ये–मयूरव्यंसकप्रिय इत्यादि । बहुवचनमाकृतिगणार्थम्, तेन–विस्पष्टं पटुः–विस्पष्टपटुः, पुना राजा–पुनाराजः, एवं–पुनर्गवः; पादाभ्यां ह्रियत इति–पादहारकः, गले चोप्यत इति–गलेचोपकः, सायंदोहः, प्रातर्दोहः, पुनर्दोहः, सायमाशः, प्रातराश इत्यादयो द्रष्टव्याः ॥ ११६ ॥

**श० म० न्यासानुसन्धानम्** । **मयूर०** । अत्र पूर्वोत्तरपदयोः प्रथमान्त–तृतीयान्ततयाऽकथनात् सिद्धप्रयोगा एवामी साधुत्वेनानुमन्यन्त इत्यास्थीयते, तदाह–**मयूरव्यंसकादयस्तत्पुरुषसमासा निपात्यन्ते** इति, तथा च लक्षणाप्राप्तमपि कार्यमिहानुज्ञाप्यते इति भावः । व्यंसकशब्दं व्युत्पादयति–**विगतावंसावस्य व्यंस** इति बहुव्रीहिः, **तत्तुल्य** इति "तस्य तुल्ये कः संज्ञाप्रतिकृत्योः" [ ७. १. १०८. ] इति के– **व्यंसक** इति, एषा च व्युत्पत्तिः, न तु प्रवृत्तिनिमित्तव्यपदेशः, धूर्तत्वं हि व्यंसकशब्दस्य प्रवृत्तिनिमित्तम्, अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तमिति सकलतान्त्रिकसम्मतेः, अथ प्रवृत्तिनिमित्तानुगुणामेव व्युत्पत्तिमाह–**व्यंसयति वा छलयति–व्यंसकः** इति–यद्यपि स्वमते "अंशण समाघाते" इति तथापि 'चन्द्रो दन्त्यान्तमाह' इति वचनेन स्वस्याप्यभिरुचिस्तत्रेत्युक्तम्– व्यंसयतीति, उपसर्गवशादिह च्छलार्थत्वमित्युक्तम्–छलयतीति, वाशब्दः प्रकारान्तरदर्शनार्थः, व्यंसक इत्यत्र णकप्रत्ययः **व्यंसकश्चासौ मयूरश्चेति** विग्रहः, अत्र व्यंसकशब्दस्य पूर्वं प्रयोगस्तस्य विशेषणत्वख्यापनार्थः, गुणशब्दत्वेन तस्य विशेषणत्वस्यैवौचित्यात्, एवं च तस्यैव पूर्वनिपाते प्राप्ते मयूरस्य विशेष्यस्य पूर्वनिपातार्थं **मयूरव्यंसक** इति समासस्य गणे पाठः । कैयटादयस्तु 'मयूर इव व्यंसक' इति विगृह्योपमानसमासस्यापवादार्थं गणे पाठ इत्याहुः, यद्यप्युपमानसमासेऽपि मयूरस्यैव पूर्वनिपातो भविष्यतीति विशिष्य निपातनाश्रयणे न किमपि फलं प्रतिभाति, तथापि तन्मते उपमानसमासे पूर्वपदप्रकृतिस्वरत्वमनेन समासे च समासान्तोदात्तत्वमिति स्वरे विशेषस्य सत्त्वम्; स्वमते च स्वरे विशेषस्यानाद्रियमाणत्वाद् रूपे च विशेषाभावस्योक्तत्वादुपमानसमासबाधे न किञ्चित् फलमिति विशेषणसमासस्यापवादत्वमास्थेयम्, तथा चोभयोस्तन्त्रयोः प्रयोगैक्येऽप्यर्थभेद इत्यायाति । अतिदिशति–**एवमिति**, **छात्रव्यंसकः** इति समासः, व्यंसकश्चासौ छात्रश्चेति विग्रहः । **मुण्डश्चासौ कम्बोजश्चेति** विग्रहः, **कम्बोजमुण्डः** इति च समासः, अतिदिशति–**एवमिति यवनमुण्डः** इति समासः, मुण्डश्चासौ यवनश्चेति विग्रहः । कम्बोजशब्दो हस्तिभेदे शङ्खभेदे "पञ्चनदं समारभ्य म्लेच्छाद् दक्षिणपूर्वतः कम्बोजदेशः" इत्युक्तदेशे च वर्तते, यवनशब्दो देशभेदे तद्देशस्थजने वेगादौ च वर्तते, मुण्डनं मुण्डः सोऽस्यास्तीत्यभ्राद्यः, यद्वा "मुणत् प्रतिज्ञाने" अतः "कु गु०" [ उणा० १७० ] इति किड्डे मुण्डः परिवापितकेशः कम्बोजयवनशब्दाभ्यामपत्ये "राष्ट्रक्षत्रियात्" [ ६. १. ११४ ] इत्यत्र "शकादिभ्यो द्रेः [ ६. १. १२०. ] इति लोपः, एवं चानयोर्गोत्रलक्षणजातित्वमित्यत्रापि गुण-

शब्दस्य पूर्वनिपाते प्राप्ते जातिशब्दस्य पूर्वनिपातार्थोऽयमारम्भः । **व्यंसिका चासौ मयूरी चेति** विग्रहः, **मयूरव्यंसिका** इति च समासः, कथमत्र पुंवद्भाव इत्याह–**कर्मधारयलक्षणः पुंवद्भावः** इति–"पुंवत् कर्मधारये" [ ३.२.५७. ] इति 5 पुंवद्भाव इत्यर्थः । उदाहृतेषु निपातने यत् फलं तद् दर्शयति– **एषु विशेष्यस्य पूर्वनिपातन**मिति ।

अथ गणसूत्रद्वारा प्रयोगविशेषानाचष्टे–"**एहीडादयोऽन्यपदार्थे**" इति–अन्यपदार्थे बहुव्रीहिर्भवति, न तत्पुरुषः, एवं नाम्नोः समासो भवति, न तु आख्यातनाम्नोरिति तत्र 10 तत्पुरुषसमाससिद्ध्यर्थं गणे पाठ इति भावः । **एहि ईडे ! स्त्रि ! इति जल्पो यस्मिन् कर्मणि काले वा तत्** इति विग्रहः, आङ्पूर्वस्य "इंण्क् गतौ" इत्यस्य पञ्चम्या हिप्रत्यये–'एहि' इति, आगच्छेति तदर्थः, "ईडिक् स्तुतौ" इत्यतः "म्लेच्छीडेर्ह्स्वश्च" [ उणा० ३. ] इत्यप्रत्यये स्त्रियामपि 'ईडा' इति, 15 स्त्रीति तदर्थः, 'इडा' इत्यपि भवति; क्वचित् तथैव पाठः, इडाशब्दसमानार्थ इलाशब्दः, यथा महती इला महेलेति, तदामन्त्रणे इडे ! इति ईडे ! इति वा, ईडाशब्दोऽत्र स्त्रियां वर्तते इति प्रदर्शनाय 'ईडे !' इत्यस्य पर्यायतमोक्तं 'स्त्रि' इति, इतिशब्दोऽभेदार्थकः, जल्पो वचनम्, **एहीड**मिति समासः, 20 **एहीडं वर्तते** इति प्रयोगः । केचित् तु 'ईडे' इति "ईडिक् स्तुतौ" इत्यस्य वर्तमाना प्रथमपुरुषैकवचनं मन्यन्ते, तथा च तन्मते पदद्वयमप्याख्यातमेव, डकारादेकारस्याकारादेशश्च । **एहि यवैरिति यत्र कर्मणि काले वा तत्** इति विग्रहः, **एहियव**मिति समासः, **एहियवं** वर्तते इति च प्रयोगः । 25 परे 'एहि यौमि' इति विग्रहं कुर्वन्ति, यौमीत्यस्य च यवादेश इत्याहुः । 'एहीडम्, एहियवम्' इत्यनयोर्विग्रहवाक्ये 'यस्मिन् काले' इति पुंलिङ्गतयान्यपदार्थं प्रदर्श्य 'एहीडम्, एहियवम्' इति नपुंसकतया प्रयोगप्रदर्शनमयुक्तमित्याशङ्कायामाह–**एतौ निपातनान्नपुंसकाविति**–लोके नपुंसकतयैव प्रयुक्तत्वेन 30 गणेऽपि तथैव पठितौ, यतश्च गणे नपुंसकतयैव पठितौ तत एव नपुंसकत्वेनैवैतयोर्निपातनमिति प्रतीयते, लिङ्गं च शब्दानां लोकाश्रयमेव, तदुक्तं भाष्येऽपि लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति । **एहि वाणिज ! इति जल्पो यस्यां क्रियायां सा** इति विग्रहः, वणिगेव वाणिजः, प्रज्ञादित्वादण्, **एहिवा-** 35 **णिजा !** इति च समासः, अतिदिशति–**एवमिति**, **प्रेहिवाणिजा** इति समासः, प्रेहि वाणिज ! इति जल्पो यस्यां क्रियायां सेति विग्रहः, प्रेहि–प्रयाणं कुरु । **अपेहिवाणिजा** इति समासः, अपेहि वाणिज ! इति जल्पो यस्यां क्रियायामिति विग्रहः, अपेहि–अपसर, 'प्रेहि' इति प्रपूर्वस्य 'अपेहि' 40 इत्यपपूर्वस्य "इंण्क् गतौ" इत्यस्य हिप्रत्यये रूपम् । **एहि-स्वागता** इति समासः, एहि स्वागतमिति जल्पो यस्यां क्रियायां सेति, एहि स्वागत ! इति जल्पो यस्यां क्रियायां सेति वा विग्रहः, स्वाङ्पूर्वाद् गमेर्भावे क्ते स्वागतमिति, आङ्पूर्वाद् गमेर्भावे क्ते–आगतम्, शोभनमागतमागमनं यस्य स स्वागतः, **अपेहिस्वागता** इति समासः, अपेहि स्वागतमिति जल्पो 45 यस्यां क्रियायां सेति विग्रहः । **एहिद्वितीया** इति समासः, एहि द्वितीय ! इति जल्पो यस्यां क्रियायां सेति विग्रहः, एहि द्वितीयेनेति जल्पो यस्यां क्रियायां सेति वा विग्रहः, **अपेहि-द्वितीया** इति समासः, अपेहि द्वितीय ! इति जल्पो यस्यां क्रियायां सेति विग्रहः । **एहिप्रघसा** इति समासः, एहि 50 प्रघस ! इति जल्पो यस्यां क्रियायां सेति विग्रहः, **अपेहिप्रघसा** इति समासः, अपेहि प्रघस ! इति जल्पो यस्यां सेति विग्रहः, **एहिविघसा** इति समासः, एहि विघस ! इति जल्पो यस्यां क्रियायां सेति, **अपेहिविघसा** इति समासः, अपेहि विघस ! इति जल्पो यस्यां क्रियायां सेति, प्रपूर्वात् "अदंक् 55 भक्षणे" इत्यतः प्राप्तीत्यचि "घस्लृ सनद्यतनीघञचलि" [ ४.४.११. ] इत्यदो घसादेशे प्रघस इति, एवं विपूर्वस्य विघस इति । **एहिप्रकसा** इति समासः, एहि प्रकस ! इति जल्पो यस्यां क्रियायां सेति विग्रहः, **अपेहिप्रकसा** इति समासः, अपेहि प्रकस इति जल्पो यस्यां क्रियायां सेति विग्रहः, 60 प्रकसतीति प्रपूर्वात् "कस गतौ" इत्यतोऽचि 'प्रकस' इति ।

यथा सम्बोधनान्तेन विग्रहस्तथा कर्मद्वितीयान्तेनापीति तथा विगृह्योदाहरति–**प्रोह कटकमिति जल्पो यस्यां सेति** विग्रहः, **प्रोहकटा** इति समासः, अतिदिशति–**एवमिति**, **प्रोहकर्दमा** इति समासः, प्रोह कर्दममिति जल्पो 65 यस्यां सेति विग्रहः, **प्रोहकपर्दा** इति समासः, प्रोह कपर्दमिति जल्पो यस्यां सेति विग्रहः, प्रपूर्वस्य "ऊहि तर्के" इत्यस्य "उपसर्गादस्योहो वा" [ ३. ३. २५. ] इत्यात्मनेपदविकल्पनात् परस्मैपदे पञ्चम्या हिप्रत्यये 'प्रोह' इति, अथवा प्रपूर्वात् "उहृ अर्दने" इत्यस्माद् हौ 'प्रोह' इति । **उद्धम चूडे ! उद्धम** 70 **चूडामिति वा जल्पो यस्यां सेति** विग्रहः, **उद्धमचूडा** इति समासः, उत्पूर्वात् "ध्मां शब्दा-ऽग्निसंयोगयोः" अतो हौ "श्रौति०" [ ४. २. १०८. ] इति धमादेशे 'उद्धम' इति । **आहर चेलमिति यस्यां सेति** विग्रहः, **आहरचेलेति** समासः, आङ्पूर्वस्य हरतेर्हौ 'आहर' इति, अतिदिशति– 75 **एवमिति**, **आहरवसना** इति समासः, आहर वसनमिति यस्यां सेति विग्रहः । **आहरवितता** इति समासः, आहर विततमिति यस्यां सेति विग्रहः, **कृन्धि विचक्षण ! इति विचक्षणमिति वा यस्यां सेति** विग्रहः, **कृन्धिविचक्षणा** इति च समासः, **भिन्धि लवणमिति यस्यां सेति** विग्रहः, 80

**भिन्धिलवणा** इति च समासः, "कृतैत् छेदने" इत्यस्य हौ 'कृन्धि' इति, "भिदृंपी विदारणे" इत्यस्य च हौ 'भिन्धि' इति, अतिदिशति-**एवमिति, पचलवणे**ति समासः, पच लवणमिति यस्यां सेति विग्रहः, पचतेर्हौ 'पच' इति । **उद्धर** 5 **उत्सृज इति जल्पो यस्यां से**ति विग्रहः, **उद्धरोत्सृजा** इति च समासः, उत्पूर्वात् "धृंग् धारणे" इत्यस्य हौ 'उद्धर' इति कोष्ठादेर्बहिष्कुरु, उत्पूर्वात् "सृजंत् विसर्गे" इत्यस्य हौ 'उत्सृज' इति, देहीत्यर्थः, अत्रोभयमप्याख्यातमेव, आख्यातयोः क्रियासातत्ये समासस्य वक्ष्यमाणत्वादसातत्यार्थोऽयमिहारम्भः, 10 बहुव्रीहौ कच्प्रत्ययप्रसङ्गः स्यात्, एवमग्रेऽपि । अतिदिशति-**एवमिति, उद्धरावसृजे**ति समासः, उद्धर अवसृज इति जल्पो यस्यां सेति विग्रहः । **उद्धमविधमे**ति समासः, उद्धम विधम इति जल्पो यस्यां सेति विग्रहः । **उद्वपनिवपे**ति समासः, उद्वप निवप इति जल्पो यस्यां सेति विग्रहः, उत्पूर्वाद् 15 विपूर्वाच्च वपतेर्हौ 'उद्वप, निवप' इति । **उत्पतनिपते**ति समासः, उत्पत निपत इति जल्पो यस्यां सेति विग्रहः, उत्पूर्वात् निपूर्वाच्च पततेर्हौ 'उत्पत, निपत' इति **उत्पचनिपचे**ति समासः, उत्पच निपच इति जल्पो यस्यां सेति विग्रहः, उत्पूर्वात् निपूर्वाच्च पचतेर्हौ 'उत्पच, निपच' इति । 20 **कृन्धि विक्षिणीहि इति, कृन्धि विक्षणु इति वा यस्यां से**ति विग्रहः, **कृन्धिविक्षणा** इति च समासः, "कृतैत् छेदने" इत्यस्य हौ कृन्द्धि, दकारस्य "धुटो धुटि स्वे वा" [ १. ३. ४८. ] इति लोपे 'कृन्धि' इति, विग्रहवाक्ये विक्षिणीहि' इति स्थाने 'विक्षिणु' इति पाठः, अत एव 'समासे 25 सति निपातनात् 'इ उ' इत्यवयवयोरकारः, ततः स्त्रीलिङ्गत्वादाप्' इति लघुन्यासोऽपि संगच्छते, 'विक्षिणीहि' इति पाठाभ्युपगमे तु 'हि' इत्यस्यापि लोपनिपातनं स्वीकार्यं स्यात्, विपूर्वस्य "क्षिषूश् हिंसायाम्" इति क्षिधातोर्हौ 'विक्षिणीहि' इति भवति, विपूर्वाभ्यां "क्षणुग् क्षिणूयी हिंसायाम्" इत्येताभ्यां हौ 30 क्रमेण विक्षणु विक्षिणु इति रूपं भवति । **उन्मृज अवमृज** इति यस्यां सेति विग्रहः, **उन्मृजावमृजा** इति च समासः, "मृजौक् शुद्धौ" उत्पूर्वादवपूर्वाच्चातो हौ शे च 'उन्मृज, अवमृज' इति; अत्र मृजेरदादौ पाठात् कथं तुदादिविहित श इति जिज्ञासायामाह-अत **एव निपातनादिहैव च** 35 **मृजेर्हौ शो भवती**ति-निपातनमपि न सार्वत्रिकमपि तु प्रकृतप्रयोगविषय एवेति 'इहैव' इति पदेनोक्तम् ।

गणसूत्रान्तरमाह-" **आख्यातमाख्यातेन सातत्ये** " इति-**शाकटायनस्य** सूत्रमिदम् । सातत्यमविच्छेदेन प्रवर्तमानत्वं, तच्चेह सामीप्यादाख्यातार्थक्रियाया एवेति लभ्यते, 40 'अन्यपदार्थे' इति पूर्वसूत्रादनुवर्तते, अत एव विग्रहवाक्ये यस्यामिति क्रियोपस्थापकस्त्रीलिङ्गसप्तम्यन्तयत्पदप्रयोगः करिष्यते । **अश्नीत पिबत इति सातत्येनोच्यते यस्यां से**ति विग्रहः, **अश्नीतपिबता** इति समासः, "अशश् भोजने" इत्यस्य 'अश्नीत' इति "पां पाने" इत्यस्य पिबत 'इति' पञ्चम्या मध्यमपुरुषबहुवचने ते रूपम् । **अश्नीतपचता** 45 इति समासः, अश्नीत पचत इति सातत्येनोच्यते यस्यां सेति विग्रहः, पचतेः पञ्चम्या मध्यमपुरुषबहुवचने ते 'पचत' इति रूपम् । अतिदिशति-**एवमिति, खादतमोदता** इति समासः, खादत मोदत इति सातत्येनोच्यते यस्यां सेति विग्रहः, "खाद भक्षणे" इत्यस्य 'खादत' इति "मुदि हर्षे" इत्यस्य 'मोदत' इति 50 प्राग्वत् ते रूपम्, आत्मनेपदस्यानित्यत्वात् 'मुद्' धातोः परस्मैपदम्, "मुदण् संसर्गे" इत्यस्य विकल्पणिजन्तस्य वा 'मोदत' इति **पचतभृज्जता** इति समासः, पचत भृजत इति सातत्येनोच्यते यस्यां सेति विग्रहः, "भ्रस्जींत् पाके" इत्यस्य प्राग्वत् ते 'भृज्जत' इति रूपम् । **लुनीतपुनीता** इति समासः, 55 लुनीत पुनीत इति सातत्येनोच्यते यस्यां सेति विग्रहः, "लूग्श् छेदने" इत्यस्य 'लुनीत' इति "पूग्श् पवने" इत्यस्य 'पुनीत' इति ते रूपम्, **खादाचामा** इति समासः, खाद आचाम इति सातत्येनोच्यते यस्यां सेति विग्रहः, "खाद भक्षणे" इत्यस्य 'खाद' इति "चमू अदने" आङ्पूर्वस्यास्य 60 'आचाम' इति हौ रूपम्, "ष्ठिवूक्लम्वाचमः" [ ४. २. ११०. ] इति परत्र दीर्घत्वं ज्ञेयम् । **आहरनिवपा** इति समासः, आहर निवप इति सातत्येनोच्यते यस्यां सेति विग्रहः । **आवपनिष्किरा** इति समासः, आवप निष्किर इति सातत्येनोच्यते यस्यां सेति विग्रहः, "कृत् विक्षेपे" निपूर्वस्यास्य हौ 'निष्किर' इति रूपम् । 65 **पचप्रकूला** इति समासः, "कूल आवरणे" प्रपूर्वस्यास्य हौ 'प्रकूल' इति रूपम् ।

**इह द्वितीया इति यस्यां क्रियायां से**ति विग्रहः, **इहद्वितीया** इति च समासः, अतिदिशति-**एवमिति, इहपञ्चमी** इति समासः, इह पञ्चमी यस्यां क्रियायां सेति विग्रहः, 70 निपातनात् ह्रस्वत्वाभावः । **अद्यद्वितीया** इति समासः, अद्य द्वितीयेति यस्यां क्रियायां सेति विग्रहः, **अद्यपञ्चमी**ति समासः, अद्य पञ्चमीति यस्यां क्रियायां सेति विग्रहः, **एहि रे याहि रे इति यस्यां क्रियायां से**ति विग्रहः, **एहिरे याहिरा** इति समासः, अतिदिशति-**एवमिति, एहिरे गच्छरा** इति 75 समासः, एहि रे गच्छ रे इति यस्यां क्रियायां सेति विग्रहः, उभयत्रान्त्यैकारस्याकारो निपातनात्, ततः स्त्रियामाप् । **अहो अहं पुरुष इति यस्यां क्रियायां सा** इति विग्रहः, **आहोपुरुषिका** इति च समासः, अत्र निपातनाच्चौरादित्वाद् वाऽकञ्, अहोपुरुष आत्मसम्भावित्वात् तस्य 80

भावः क्रिया वा 'आहोपुरुषिका' उच्यते । **अहं पूर्वं इति यस्यां सेति**, विग्रहः, **अहंपूर्विका** इति च समासः, अहं-शब्दो विभक्त्यन्तप्रतिरूपको निपातः, अहं पूर्वम्–अहं पूर्व-महं पूर्वं प्रवर्ते इत्यर्थः, निपातनादकन्यपि वृद्ध्यभावः, अति-5 दिशति–**एवमिति, अहंप्रथमिके**ति समासः, अहं प्रथम इति यस्यां सेति विग्रहः, **अहमहमिति यस्यां सा** इति विग्रहः, **अहमहमिका** इति च समासः, शेषं पूर्ववज्ज्ञेयम् ।

**विकृतं प्रकृतं च यस्यां से**ति विग्रहः, **विचप्रका** इति च समासः, एकत्र कृतस्य चादेशोऽपरत्र कादेशश्च निपातनात् ।

10 **निश्चितं च प्रचितं च यस्यां से**ति विग्रहः, **निश्चप्रचा** इति च समासः, अत्र निपातनात् 'श्चित' इत्यस्य श्चादेशः 'चित' इत्यस्य च चादेशः । **या इच्छा यस्यां से**ति विग्रहः, **यदृच्छे**ति च समासः । उक्तसमासेषु क्रियारूप एवान्यपदार्थो ग्राह्य इत्याह–**एषु सर्वेषु क्रियैवान्य-15 पदार्थः इति** ।

गणसूत्रान्तरमाह–**"ह्यन्तं स्वकर्मणा बहुलमाभीक्ष्ण्ये कर्तरि समासाभिधेये** इति–पञ्चमीमध्यमपुरुषैकवचनो हिप्रत्ययः, तदन्तमाख्यातं स्वकर्मणा बहुलं समस्यते, आभीक्ष्ण्ये गम्यमाने, समासेन चेत् कर्ता चाभिधीयत इत्यर्थः । **जहि 20 जोडमित्यभीक्ष्णं य आह स** इति विग्रहः, **जहिजोडः** इति च समासः, **उज्जहिजोडः** इति समासः, उज्जहि जोड-मित्यभीक्ष्णं य आह स इति विग्रहः, **जहिस्तम्बः** इति, **उज्जहिस्तम्बः** इति च समासः, जहि उज्जहि स्तम्बमित्यभीक्ष्णं य आह स इति विग्रहः, "हनंक् हिंसा-गत्योः" इत्यस्य केवलस्य 25 'जहि' उत्पूर्वस्य च 'उज्जहि' इति, अत्र ह्यन्तस्यास्य "शाससह-नः०" [४. २. ८४] इति 'जहि' इत्यादेशः, "जुडण् प्रेरणे" अतोऽचि जोडो दास इति केचित् । अपरे तृपान्त्यलक्षणः जोड इति कस्यचित् संज्ञा इति केचित् । **कुरुकटः** इति समासः, कुरु कटमित्यभीक्ष्णं य आह स इति विग्रहः, ह्यन्तस्य करोतेः 30 'कुरु' इति । ननु यदि ह्यन्तमात्रस्य समासस्तर्हि 'पचोद-नमित्यभीक्ष्णं य आह इत्यत्रापि समासेन नाव्यमित्याशङ्का-यामाह–**बहुलवचनान्न भवतीति** । **स्नात्वा काली-भूतः** इति विग्रहः, **स्नात्वाकालकः** इति च समासः, यः किलाधिककृष्णवर्णः स धूलिधूसरितो रूपपरावृत्तिमापन्नः 35 स्नानेन पुनः कालतामापद्यत इति तत्रोदाहरणमिदम् कालशब्दात् "कालात्" [७. ३. १९.] इति को भवति । **पीत्वास्थिरकः** इति समासः, पीत्वा स्थिरीभूत इति च विग्रहः, अत्र गणे निपातनादेव कः । **भुक्त्वासुहितः** इति समासः, भुक्त्वा सुहितः–तृप्त इति च विग्रहः, यो 40 यत्किञ्चिदशित्वा तृप्तो भवति स एवमुच्यते । **प्रोष्य–वियुक्तो भूत्वा पापीयान् निःस्नेहो भवति स** इति–'प्रोष्य पापीयान्' इति विग्रहः प्रोष्यशब्दस्यार्थप्रदर्शनम्–वियुक्तो भूत्वेति, पापीयान्शब्दस्यार्थप्रदर्शनम्–निःस्नेहो भवतीति, **प्रोष्यपापीयानि**ति च समासः, प्रपूर्वाद् वसतेः क्त्वा, तस्य यप्, वस्योकारे सस्य षत्वे च 'प्रोष्या इति । 45 **उत्पत्यआकाशे भूत्वा या पाकला 'पाण्डुर्भवति से**ति–उत्पत्य पाकला इति विग्रहः, उत्पत्यशब्दस्यार्थप्रदर्श-नम्–आकाशे भूत्वेति, पाकलाशब्दस्यार्थप्रदर्शनम्–पाण्डुरिति, **उत्पत्यपाकला** इति समासः, उत्पत्यपाकला लताविशेषः, प्रपूर्वात् कलेरच्, निपातनाद् रकारलोपः । **निपत्य–भूमौ 50 निपतिता रोहिणी–या रक्ता भवति से**ति–निपत्य रोहिणीति विग्रहः, निपत्यशब्दस्यार्थप्रदर्शनम्–भूमौ निपतितेति, रोहिणीशब्दस्यार्थप्रदर्शनम्–या रक्ता भवतीति, निपत्यरोहिणीति च समासः, **निषद्य–निषण्णा सती श्यामा जाते**-ति–निषद्यशब्दार्थप्रदर्शनं–निषण्णा सतीति **निषद्यश्यामे**ति 55 समासः । स्नात्वाकालकादिषु निषद्यश्यामान्ते युक्तवान्तस्या-व्ययत्वेन "अव्ययं प्रवृद्धादिभिः" [३. १. ४८] इति नियमात् समासाप्राप्तौ निपातनम् । एवं स्नात्वाकालकादिषु ह्यपरकालक्रियाविरहेऽपि क्त्वा निपात्यते, क्त्वाप्रत्ययो हि "प्राक्काले" [५. ४. ४७.] इति विधीयमानो न विना 60 परकालेन प्राक्कालिका सम्भवतीति परकालक्रियाविरहे न सिध्यति, अतः समासवत् सोऽपि निपातनेनैव साध्यः, न ह्यत्रप्राक्कालैक-कर्तृकाः क्रियाः—स्नात्वा कालीभूत इत्यादि विग्रहवाक्यस्था उत्तरकालिकां भवनादिक्रियामाश्रित्य वा साधुत्वम्, ते स्नात्वा कालकं पश्यति, पीत्वा स्थिरकं पश्यतीति केचन । **निषण्णा 65 श्यामा जाते**ति विग्रहः, **निषण्णश्यामे**ति च समासः, अत्र विशेषणसमासे सति पूर्वनिपातानियमः स्यात् ।

अथादेशविशेषरूपाण्युदाहरति–**उदक् चावाक् चे**ति विग्रहः, **उच्चावचमि**ति च समासः, अत्र पूर्वपदस्य 'उच्च' इति, उत्तरपदस्य च 'अवच' इत्यादेशनिपातनम् । **उच्चैश्च 70 नीचैश्च, उच्चितं च निचितं चेति वा** इति द्विधा विग्रहः, **उच्चनीचमि**ति च समासः, अत्र पूर्वपदस्य 'उच्च' इति, उत्तरपदस्य च 'नीच' इत्यादेशनिपातनम् । **आचितं चोपचितं चे**ति विग्रहः, **आचोपचमि**ति च समासः, अत्र पूर्वपदस्य 'आच' इति, उत्तरपदस्य च 'उपच' इत्यादेशनिपात-75 नम् । आचितं चावचितं चेति विग्रहः, **आचोवचमि**ति च समासः, अत्र पूर्वोत्तरपदयोः क्रमेण आच उवच इत्यादेश-निपातनम् । **आचितं च पराचितं च, अर्वाक् च परस्ताच्चेति** चेति द्विधा विग्रहः, **आचापराचमि**ति च समासः, अत्र पूर्वोत्तरपदयोः क्रमेण आच पराच इत्यादेश- 80

निपातनम् । **निश्चितं च प्रचितं चेति** विग्रहः, **निश्चप्रचमिति** च समासः, अत्र पूर्वोत्तरपदयोः क्रमेण निश्च प्रच इत्यादेशनिपातनम् । **निष्कुषितं च निरस्त्वचं चेति** विग्रहः, त्वचशब्दोऽकारान्तोऽप्यस्ति, **निश्चत्वचमिति** च समासः, अत्र पूर्वोत्तरपदयोः क्रमेण निश्च त्वच इत्यादेशनिपातनम् । **'न कचिदुपयुज्यते'** इत्यर्थके **'न भवति किञ्चन'** इति वाक्ये-**अकिञ्चनमिति** समासः, निष्प्रयोजनमिति तदर्थः; **नास्य कुतोऽपि भयमस्तीति** वाक्ये-**अकुतोभयमिति** समासः नञ् नाम्ना समस्यते, अत्र समुदायस्यानामत्वात् नञ्समासाप्रवृत्तावनेन समासनिपातनमिति ।

अथ गणसूत्रान्तरमाह—**गतप्रत्यागतादयः** इति-गतप्रत्यागतादयश्च शब्दा मयूरव्यंसकादयो वेदितव्याः । **गतं च प्रत्यागतं चेति** विग्रहः, **गतप्रत्यागतमिति** च समासः, एकदेशस्य गतत्वमपरस्य प्रत्यागतत्वमिह ज्ञेयम्, यद्वा यदेव गतं तदेव प्रत्यागतम्, पूर्वापरकालविवक्षा नास्ति, अतिदिशति-**एवमिति, यातानुयातमिति** समासः, यातं चानुयातं चेति विग्रहश्च । क्रयश्च स क्रयिका च सेति क्रयक्रयिका इति विज्ञायते, तत्र यथेमावुपपद्येते तथाह-**महान् क्रयः** इत्यादिना, **महान् क्रयः** इति-स इहाल्पार्थकक्रयिकाशब्दसान्निध्यात् क्रयशब्देनोच्यत इत्यर्थः, **अल्पः क्रयिकेति**-अल्पो यः क्रयः स क्रयिकाशब्देनोच्यते, क्रयशब्दादल्पार्थे कः, तदन्तःस्वाभाव्यादेव स्त्रियां वर्तत इत्याप्, इत्थं च भिन्नार्थतायामुभयप्रयोगः, पर्यायार्थतायामन्यतरेण कृतत्वादितरस्याप्रयोगः, यथा चानयोः सामानाधिकरण्यं भवति तथाह-**क्रयावयवयोगात् क्रयः, क्रयिकावयवयोगात् क्रयिकेति**-क्रयक्रयिका समुदायो यस्तत्रावयवेषु वृत्ताः शब्दाः समुदायेष्वपि वर्तन्त इति क्रयक्रयिकाशब्दयोर्वृत्तिरस्तीति सामानाधिकरण्योपपत्तिः, अत आह-**क्रयश्चासौ क्रयिका चेति**-अयं च विग्रहः, **क्रयाक्रयिका** इति च समासः, अनेन किमुच्यत इति स्पष्टयति-**समुदायः** इति, निपातनात् पूर्वपदस्य दीर्घत्वम् । अतिदिशति-**एवमिति, पुटापुटिका** इति समासः समुदायः, पुटश्चासौ पुटिका चेति च विग्रहः महान् पुटः, अल्पः पुटिका, शेषं प्राग्वत् । **फलाफलिका** इति समासः, समुदायः, फलं च तत् फलिका चेति विग्रहः, महत् फलम्, अल्पं फलिका, शेषं प्राग्वत् । **मनोन्मानिका** इति समासः, समुदायः, मानं तत् मानिका चेति च विग्रहः, महत् मानम्, अल्पं मानिका, शेषं प्राग्वत् । अपरे त्वेवमाहुः-अल्पः क्रमः क्रयः, महान् क्रयः क्रयिकेति क्रयाक्रयिकेति भवतीति । अन्ये पुनरेवमाहुः-अल्पः क्रयः, महान् क्रयः, तयोः समासे ततः स्वार्थिके के समासः स्त्रीलिङ्ग इति तत आप्, एवं पुटापुटिकाद्यपि । गतप्रत्यागतादौ विशेषणसमासे पूर्वपदत्वानियमः स्यात्, इष्यते च गतस्यैव पूर्वपदत्वम्, तदर्थमिहैतदुपादानम्, तदाह-**एषु व्यवस्थितपूर्वोत्तरपदः** समासः इति-"क्तं नञादिभिन्नैः" [३. १. १०५.] इत्यत्रेषदसमाप्तिद्योतिनो नञादयो विज्ञायन्त इति न तेन समासो विज्ञायते । ननु विशेषणसमासे सति क्रयाक्रयिकादिषु दीर्घत्वं कथं भवेदिति चेत्? एवं तर्हि दीर्घविधिष्वेव पठ्येरन्, कथमिह समासतया निपातनमतः पूर्वोत्तरपदव्यवस्थार्थमिह निपातनम्, तदन्तर्गततया दीर्घत्वादिकमपि ज्ञेयम् ।

गणसूत्रान्तरमाह-"**शाकपार्थिवादयः**" इति-एते च मयूरव्यंसकादयो वेदितव्याः । 'शाकपार्थिवादयः' इत्यत्र 'एषु व्यवस्थितपूर्वोत्तरपदः समासः', इत्यस्यान्वयं कुर्वन्ति केचन, व्यवस्था-उत्तरपदलोपरूपा जाता यत्र तद् व्यवस्थितं, तादृशं पूर्वपदम्, उत्तरपदं च प्रातिस्विकरूपेण व्यवस्थितम्, नहि शाकब्राह्मणादयः स्वमत्या प्रयोक्तुं शक्यन्ते इति व्याख्यान्ति च । अथ शाकपार्थिवसमासे त्रिधा विग्रहो भवति, पार्थिवशब्दश्च द्विधा सिध्यतीत्याह-**शाकप्रियः** इत्यादिना, शाकं प्रियं यस्य स शाकप्रियः, शाकप्रियश्चासौ पार्थिवश्चेति शाकपार्थिवः, अत्र निपातनात् प्रियशब्दस्योत्तरपदस्य लोपः, शाकं भुङ्क्ते इति शाकभोजी, स चासौ पर्थिवश्चेति शाकपार्थिवः, अत्रापि भोजीत्युत्तरपदस्य लोपः, शाकं प्रधानमस्य शाकप्रधानः, स चासौ पार्थिवश्चेति शाकपार्थिवः, उत्तरपदस्य प्रधानस्य लोपः, पृथोरपत्यमिति पृथुशब्दादपत्यार्थेऽणि-पार्थिवः, यद्वा पृथिव्यां ईश्वर इति पृथिवीशब्दात् "पृथिवीसर्वभूमे०" [६.४.१५६.] इत्यञि पार्थिवः । **कुतपवस्त्रः सौश्रुतः** इति विग्रहः, कुतिः सौत्रः, ततः "भुजिकुति" [उणा० ३०५.] इति किति अपे-कुतपश्छागलोम्नां कम्बल आस्तरणं श्राद्धकालश्च स वस्त्रं यस्य स कुतपवस्त्रः, "कुतपं मृगाजिनम्, गोरोममयं, केचित् कम्बलं कुतपं विदुः' तद् वस्त्रं यस्य इति लघुन्यासः, केचित् तु कुतपस्थाने कुतुपशब्दं वदन्ति, सौश्रुतशब्दसाधनामाह-**सुश्रुतोऽपत्यं सौश्रुतः** इति, उत्तरपदस्य वस्त्रस्य लोपे **कुतपसौश्रुतः** इति समासः, **अजापण्यः तौल्वलिरिति** विग्रहः, अजा पण्यं यस्य सोऽजापण्यः, तुल्वलस्यापत्यं तौल्वलिः, पण्यशब्दलोपे **अजातौल्वलिरिति** समासः, पण्यशब्दस्थाने पुण्यशब्दं पठन्ति केचित्, अजतौल्वलिरिति पुंवद्भाव इत्येके, तत्र "पुंवत् कर्मधारये" [३. २. ५७.] इति पुंवद्भावः स्त्रीलिङ्गे उत्तरपदे उच्यमानो दुर्लभः, स यदीष्यते मृगक्षीरादित्वेन वेदितव्यः, "ङ्यापो बहुलं०" [२.४.९९.] इति वा ह्रस्वः । **यष्टिप्रहरणो यो मौद्गल्यः** इति विग्रहः, यष्टिः

प्रहरणं यस्य स यष्टिप्रहरणः, मुद्गलस्यापत्यं मौद्गल्यः, अत्र प्रहरणशब्दलोपे-**यष्टिमौद्गल्यः** इति च समासः । अतिदिशति-**एवमिति, परशुरामः** इति समासः, परशुप्रहरणो यो राम इति विग्रहः, **घृतप्रधाना रोटिरि**ति विग्रहः, घृतं प्रधानं 5 यस्यां सा तथा, **घृतरोटिरि**ति समासः, अत्र प्रधानशब्दलोपः । अतिदिशति-**एवमिति, ओदनपाणिनिरि**ति समासः, ओदनप्रियः पाणिनिरिति विग्रहः, प्रियशब्दलोपोऽत्र । **आणिमाण्डव्यः** इति समासः, आणिप्रियो माण्डव्य इति विग्रहः, "अणिराणिवदक्षाग्रकीला-ऽश्रि-सीमसु द्वयोः ।" इति मेदिनी, 10 आणिः प्रिया यस्य स आणिप्रियः, मण्डोरपत्यं माण्डव्यः, अत्र प्रियशब्दलोपः । **बलाकाकौशिकः** इति समासः, बलाकाप्रियः कौशिक इति विग्रहः, कुशिकस्यापत्यं कौशिकः, बलाका प्रिया यस्य स बलाकाप्रियः, अत्र प्रियशब्दलोपः । **विदर्भीकौण्डिन्यः** इति समासः, विदर्भशब्दाद् गौरादित्वात् ङी-15 प्रत्ययः, कुण्डिनीशब्दे ग्रहादित्वात् णिनि ङ्यामपत्ये गर्गादियञि "कौण्डिन्यागस्त्ययोः०" [ ६. १. १२७. ] इति निर्देशात् पुंवद्भावाभावे सिद्धं-कौण्डिन्य इति, विदर्भीप्रियः कौण्डिन्य इति विग्रहः, प्रियशब्दलोपोऽत्र । **सहस्रबाहुरर्जुनः** इति विग्रहः, सहस्रं बाहवो यस्य स सहस्रबाहुः, **सहस्रार्जुनः** 20 इति समासः, अत्र बाहुशब्दलोपः । **त्र्यवयवा विद्ये**ति विग्रहः, त्रयोऽवयवा यस्याः सा त्र्यवयवा, **त्रिविद्ये**ति समासः । **एकाधिका दशे**ति विग्रहः, एकेनाधिका एकाधिकाः, **एकादशे**ति समासः, एकादश०" [ ३. २. ९१ ] इति निपातनादेकशब्दान्तस्य दीर्घत्वम्, इहाधिकशब्दलोपः । 25 अतिदिशति-**एवमिति, द्वादशे**ति समासः, द्वाभ्यामधिका द्व्यधिकाः, ते च ते द्वादशेति विग्रहः, "द्वित्र्यष्टाना०" [ ३. २. ९२. ] इति द्विशब्दस्य द्वादेशः, अत्राप्यधिकशब्दलोपः । **षोडशे**ति समासः, षड्भिरधिकाः षडधिकाः, ते च ते दश चेति विग्रहः "एकादश षोडश०" [ ३. २. ९१. ] इति 30 निपातनादुभयोः पदयोः 'षोडशन्' इति, अत्राप्यधिकशब्दलोपः । **एकविंशतिरि**ति समासः, एकेनाधिका एकाधिका, सा चासौ विंशतिश्चेति विग्रहः, अत्राप्यधिकशब्दलोपः । **द्वाविंशतिरि**ति समासः, द्व्यधिका चासौ विंशतिश्चेति विग्रहः, प्राग्वद् द्वादेशोऽधिकशब्दलोपश्च । **एकशतमि**ति समासः, एकाधिकं 35 शतमिति विग्रहः, प्राग्वदधिकशब्दलोपः । **द्विशतमि**ति समासः, द्व्यधिकं शतमिति विग्रहः, प्राग्वदधिकशब्दलोपः 'प्राक् शतात्' इति वचनान्न द्वादेशः । **दध्युपसिक्त ओदन**, इति विग्रहः, दध्ना उपसिक्तो दध्युपसिक्तः, **दध्योदन** इति च समासः, उपसिक्तशब्दलोपः । अतिदिशति-**एवमिति**, 40 **घृतोदनः** इति समासः, घृतोपसिक्त ओदन इति विग्रहः, घृतेनोपसिक्तो घृतोपसिक्तः, उपसिक्तशब्दलोपः । **गुडमिश्रा धानाः** इति विग्रहः, **गुडधानाः** इति च समासः, गुडेन मिश्रा गुडमिश्राः, मिश्रशब्दलोपः । अतिदिशति-**एवमिति, तिलपृथुकाः** इति समासः, तिलमिश्राः पृथुका इति विग्रहः, तिलैर्मिश्रास्तिलमिश्राः, मिश्रशब्दलोपः । **अश्वयुक्तो रथः** 45 इति विग्रहः, **अश्वरथः** इति च समासः, अश्वाभ्यां युक्तोऽश्वयुक्तः, युक्तशब्दलोपः । अतिदिशति-**एवमिति, गजरथः** इति समासः, गजयुक्तो रथ इति विग्रहः, गजेन युक्तो गजयुक्तः, युक्तशब्दलोपः **घृतपूर्णो घटः** इति विग्रहः, **घृतघट** इति च समासः, घृतेन पूर्णो घृतपूर्णः, पूर्णशब्दलोपः । 50 शाकपार्थिवादिषु घृतघटान्तेषु विग्रहवाक्यगतं प्रियादिपदं क्व गतमित्याकाङ्क्षायामाह-**अत्र शाकपार्थिवादिषु प्रियादेरुत्तरपदस्य लोपः** इति । क्वचित् पूर्वपदे पूरणप्रत्ययमात्रस्य विकल्पेन लोपो भवति, तदुदाहरति-**तृतीयो भागः** इति विग्रहः, त्रयाणां पूरण इति तृतीयः, **त्रिभागः** इति समासः, 55 अत्र पूरणप्रत्ययलोपः, लोपस्य पाक्षिकत्वात्तदभावे-**तृतीयभागः** इति च समासः । एवं-तृतीयोंऽश इति विग्रहे-**त्र्यंशः** इति लोपपक्षे, लोपाभावे च **तृतीयांशः** इति समासो भवति । षष्ठो भाग इति विग्रहे-**षड्भागः** इति लोपपक्षे, लोपाभावे च **षष्ठभागः** इति च समासः, षण्णां पूरण इति षष्ठः । 60 षष्ठोंऽश इति विग्रहे-**षडंशः** इति लोपपक्षे, लोपाभावे **षष्ठांशः** इति च समासः । दीव्यन्त्यस्मिन्निति घञर्थे "स्थादिभ्यः कः" [ ५. ३. ८२. ] इति कप्रत्यये दिवमिति सिध्यति, तृतीयं दिवं लोक इति विग्रहे-**त्रिदिवमि**ति लोपपक्षे, लोपाभावे च **तृतीयदिवमि**ति च समासः । तृतीयं विष्टपमिति विग्रहे- 65 **तृविष्टपमि**ति लोपपक्षे, **तृतीयविष्टपमि**ति च लोपाभावे समासः, स्वर्ग इति तदर्थः, "भूर्भुवः स्वः" इति श्रुतेः, त्रिविष्टपमिति प्राच्याः, ते हि प्रायेण पवौ शसौ च व्यत्यस्य पठन्ति । त्रिभागादिसमासेषु किं निपातितमित्याकाङ्क्षायामाह-**पूरणप्रत्ययस्य वा लुग् भवती**ति । षष्ठीसमासो हि यदा 70 शेषे षष्ठी भवति तदा भवति, यत्र निर्धारणे षष्ठी तत्र न शेष इति न भवति, क्वचिच्च निर्धारणेऽपि समासो दृश्यते, एवमुत्तरपदे तरप्प्रत्ययस्य लोपोऽपि तत्र दृश्यते, तत् समुच्चेतुमाह-**तथे**ति, **सर्वेषां श्वेततरः** इति विग्रहः, **सर्वश्वेतः** इति च समासः, अतिदिशति-**एवमि**ति, **सर्वमहान्** इति 75 समासः, सर्वेषां महत्तरः इति च विग्रहः, किमिहोभयत्र निपातितमित्याकाङ्क्षायामाह-**अत्र** 'सर्वश्वेतः, सर्वमहान्' इति प्रयोगद्वये, **गुणेन** गुणवाचकेन श्वेतशब्देन महच्छब्देन च, **तरवन्तेन** तरप्प्रत्ययान्तेन 'श्वेततर, महत्तर' इत्यनेन सह, **निर्धारणषष्ठीसमासः**, निर्धारणे या षष्ठी तदन्तस्य 80

समासः, **तरब्लोपश्च** श्वेतपदोत्तरस्य महत्तरशब्दोत्तरस्य च तरप्प्रत्ययस्य लोपः । अयमर्थः–सर्वे श्वेता । अयं च श्वेतः, तत्रायमतिशयेनेति श्वेततरः, सर्वे महान्तोऽयं च महान्, तत्रायमतिशयेन महानिति महत्तरः, अत्र "द्वयोर्विभज्ये च तरप्" [ ७. ३. ६. ] इति तरप् प्रत्ययः, सर्वेषां श्वेततरः सर्वेषां महत्तर इत्यत्र "सप्तमी चाविभागे निर्धारणे" [ २. २. १०९. ] इति निर्धारणे षष्ठी, ततोऽनेन समासस्तरब्लोपश्च भवतीति । **एवमविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः** इति–यादृशतत्पुरुषविधानार्थं लक्षणानि न विहितानि तादृशः सर्वोऽपि तत्पुरुषोऽत्र गणे द्रष्टव्य इत्यर्थः । किं समासमात्रे गणपाठप्रयोजनमुतान्यदपीत्याह–**यच्चेह लक्षणेनानुपपन्नं तत् सर्वं निपातनात् सिद्धमिति**–अन्यदपि यत् कार्यं गणपठितशब्देषु लक्षणान्तरेणाप्राप्तं तत् सर्वमत्र निपातनीयमिति भावः, निपात्यन्ते गम्यन्तेऽनुरूपाण्यविहितान्यपि लक्षणान्यस्मिन्निति निपातनं–सूत्रे लक्ष्यस्य स्वरूपेणोपादानमिति लघुन्यासः । "मयूरव्यंसकादयः" इत्येवोच्यतां, किमर्थमितिशब्दः पठ्यत इत्याशङ्कायामाह–**इतिशब्दः स्वरूपावधारणार्थः** इति–मयूरव्यंसकादयो यथा गणे पठितास्तथैव प्रयोक्तव्याः, न तु समासान्तरे पूर्वोत्तरपदतया प्रवेशः कार्य इति नियमार्थ इति भावः । तत्फलं दर्शयितुमाह–**तेने**ति उक्तनियमार्थत्वेन, तत्फलमाह–**परमो मयूरव्यंसक इति समासान्तरं न भवती**ति–पूजाविवक्षायां परमो मयूरव्यंसक इति वाक्ये "सन्महत्परमोत्कृष्टं पूजायाम्" [ ३. १. १०७. ] इति समासो न भवतीत्यर्थः । स्वमते समासमात्रस्यानिष्टमुक्त्वा मतान्तरे एषामुत्तरपदतयैव प्रयोगाभावः, पूर्वपदतया प्रयोगस्तु स्वीक्रियत इत्याह–**उत्तरपदेन भवत्येवेत्यन्ये** इति तदाकारमाह–**मयूरव्यंसकप्रियः** इति–मयूरव्यंसकस्य प्रिय इति षष्ठीसमासोऽयम्, मयूरव्यंसकः प्रियो यस्येति बहुव्रीहिर्वा, तत्र तत्पुरुष एवेह विवक्षित इति सम्भाव्यते, "प्रियः" [ ३. १. १५७. ] इति प्रियशब्दस्य बहुव्रीहौ विकल्पेन प्राग्निपातविधानात् कदाचित् प्रियशब्दस्यापि पूर्वनिपातः स्यादिति प्रियमयूरव्यंसक इत्यपि सम्भाव्यते, परं स चानिष्टः । अनुक्तानामपि संग्रह इहेष्ट इति पूर्वमपि सूचितम्, तत्र प्रमाणमाह–**बहुवचनमाकृतिगणार्थ**मिति, तेन संग्राह्यान् कांश्चित् प्रसिद्धान् प्रयोगानाह–**विस्पष्टं पटुरि**ति विग्रहः, **विस्पष्टपटुरि**ति च समासः, अयं "नाम नाम्नैकार्थ्ये समासो बहुलम्" [ ३. १. १८. ] इत्यत्रापि दर्शितः, यथाकृतिगणबलादयं समासस्तथा बहुलवचनबलादपि, 'द्विर्बद्धं सुबद्धं भवती'ति हि न्यायः, पूर्वेण सामान्यतः समाससंज्ञा, अनेन तत्पुरुषसंज्ञा समासान्तरेऽप्रवेशश्च, न च सूत्रे प्रयत्नविशेषाश्रयणम् । **पुना राजा** इति विग्रहः, **पुनाराजः** इति समासः, तत्पुरुषत्वादत्राट् समासान्तः, अतिदिशति–**एवमि**ति, **पुनर्गवः** इति समासः, पुनर्गौरिति विग्रहः, तत्पुरुषत्वादत्राट् समासान्तः । **पादाभ्यां ह्रियते** इति विग्रहः, **पादहारक** इति च समासः, **गले चोप्यते** इति विग्रहः, **गलेचोपकः** इति च समासः, "तत्पुरुषे कृति" [ ३. २. २०. ] इति सप्तम्या अलुप्, उभयत्र "बहुलम्" [ ५. १. २. ] इति कर्मण्यपि णकः । सायं दुह्यते–**सायंदोहः**, प्रातर्दुह्यते–**प्रातर्दोहः**, पुनर्दुह्यते–**पुनर्दोहः**, सायमश्यते–**सायमाशः**, प्रातरश्यते–**प्रातराशः**, सर्वत्र घञ् ॥ ३. १. ११६. ॥

## चार्थे द्वन्द्वः सहोक्तौ । ३ । १ । ११७ ॥

**त० प्र०**—नाम नाम्ना सह सहोक्तिविषये चार्थे वर्तमानं समस्यते, स च समासो द्वन्द्वसंज्ञो भवति । प्लक्षश्च न्यग्रोधश्च–प्लक्षन्यग्रोधौ, एवं–धवाश्वकर्णौ, वाक् च त्वक् च–वाक्त्वचम्, छत्रोपानहम् । नाम नाम्नेत्यनुवर्तमानेऽपि "लघ्वक्षरा०" [ ३. १. १६०. ] दिसूत्रे एकग्रहणाद् बहूनामपि द्वन्द्वो भवति–धवश्च खदिरश्च पलाशश्च–धवखदिरपलाशाः, एवं–होतृपोतृनेष्टोद्गातारः, द्वयोर्द्वयोर्द्वन्द्वे हि होतापोतानेष्टोद्गातारः इत्येव स्यात्, पीठच्छत्रोपानहम् । चार्थ इति किम्? वीप्सासहोक्तौ मा भूत्–ग्रामो ग्रामो रमणीयः । सहोक्ताविति किम्? प्लक्षश्च न्यग्रोधश्च वीक्ष्यताम्, वाक् च त्वक् च गृह्यताम्, खञ्जश्चासौ कुण्टश्च–खञ्जकुण्टः ।

इह समुच्चयाऽन्वाचयेतरेतरयोग-समाहारभेदाच्चत्वारश्चार्थाः, तत्रैकमर्थं प्रति द्व्यादीनां क्रिया-कारक-द्रव्य-गुणानां तुल्यबलानामविरोधिनामनियतक्रम-यौगपद्यानामात्मरूपभेदेन चीयमानता समुच्चयः, यथा–चैत्रः पचति पठति च, चैत्रो मैत्रश्च पठति, राज्ञो गौश्चाश्वश्च, राज्ञो ब्राह्मणस्य च गौः, शुक्लश्चायं कृष्णश्च, नीलं च तदुत्पलं चेति, चशब्दमन्तरेणापि चार्थ संभवति, यथा —

> "अहरहर्नयमानो गामश्वं पुरुषं पशुम् ।
> वैवस्वतो न तृप्यति सुराया इव दुर्मदी" ॥१॥ [ ]

गुण–प्रधानभावमात्रविशिष्टः समुच्चय एवान्वाचयः, यथा–बटो भिक्षामट गां चानय, स हि भिक्षां तावदटति यदि च गां पश्यति तामप्यानयति । द्रव्याणामेव परस्परसव्यपेक्षाणामुद्भूतावयवभेदः समूह इतरेतरयोगः, यथा–चैत्रश्च मैत्रश्च घटं कुर्वाते, चैत्रमैत्रौ घटं कुर्वाते, चैत्रश्च मैत्रश्च दत्तश्च पटं कुर्वन्ति, चैत्रमैत्रदत्ताः पटं कुर्वन्ति, अत्रावयवानामुद्भू-

तस्मात् संख्यानिबन्धनं द्विवचनं बहुवचनं च भवति । स एव तिरोहितावयवभेदः संहतिप्रधानः समाहारः, धवश्च खदिरश्च पलाशश्च तिष्ठति–धवखदिरपलाशं तिष्ठति, अत्र तु समूहस्य प्राधान्यात् तस्य चैकत्वादेकवचनमेव भवति; एषु चाद्ययोः सहोक्त्यभावात् समासो न भवति, उत्तरयोस्तु चार्थयोः सहोक्तेर्विद्यमानत्वात् समासो भवति ।

का पुनरियं सहोक्तिः ? यद् वर्तिपदैः प्रत्येकं पदार्थानां युगपदभिधानं सा सहोक्तिः । प्लक्षन्यग्रोधावित्यत्र हि प्लक्षोऽपि द्व्यर्थः, न्यग्रोधोऽपि द्व्यर्थः, प्लक्षश्च न्यग्रोधश्चेति वाक्येऽपि चकारेणायमेवार्थः कथ्यते । उत्तरपदेन समुदायेन वा यद् वर्तिपदार्थानां युगपदभिधानं सा सहोक्तिरित्यन्ये । वर्तिपदार्थानामेव सह क्रियादिसंबन्धस्य यद् वाक्येनाभिधानं सा सहोक्तिरित्यपरे । 'एकविंशतिः, द्वाविंशतिः,' इत्यादिः संख्याद्वन्द्वः समुदायसंख्यैकत्वानुरोधेन विंशत्यादिवत् संख्येयमाचष्ट इतीतरेतरयोगेऽप्येकवचनान्तो भवति, समाहारेऽपि च "आ शताद्द्वन्द्वे०" [लिङ्गानुशासने] इति लक्षणात् स्त्रीलिङ्गो भवति । संख्याद्वन्द्वादन्यत्र तु 'एको देवदत्ताय दीयतां विंशतिश्चैत्रायेति–एकविंशती अनयोर्देहि, एवं–त्रिंशच्चत्वारिंशतौ; षष्टिसप्तत्यशीतयः' इत्यादौ द्विवचन–बहुवचनान्तता । द्वन्द्वप्रदेशाः–"द्वन्द्वे वा" [ १. ४. ११. ] इत्यादयः ॥ ११७ ॥

**श० म० न्यासानुसन्धानम्–चार्थे** । चार्थः सहोक्तिश्चाग्रे व्याख्यास्यते । **'सहोक्तौ'** इत्यत्र विषयसप्तमी, 'नाम नाम्ना' इत्यनुवर्तते, 'तत्पुरुषः' इति तु निवर्तते विध्यन्तरोपादानात् । **प्लक्षश्च न्यग्रोधश्चे**ति विग्रहः, **प्लक्ष–न्यग्रोधौ** इति च समासः, अतिदिशति–**एवमि**ति, **धवा-ऽश्वकर्णौ** इति समासः, धवश्चाश्वकर्णश्चेति विग्रहः । **वाक् च त्वक् चे**ति वाक् च त्वक् चेत्यनयोः समाहार इति विग्रहे-**वाक्त्वचमि**ति समासः, एवं–छत्रं च उपानहौ चेत्येषां समाहार इति विग्रहे–**छत्रोपानहमि**ति समासः, उभयत्र "चवर्ग–द–ष–हः समाहारे" [ ७. ३. ९८. ] इत्यत् समासान्तः । "एकार्थं चानेकं च" [ ३. १. २२ ] इत्यत्र "अनेकम्' इति पदोपादानात् 'नाम नाम्ना' इत्यत्रैकत्रैकत्वं विवक्षितमिति विज्ञायते, तथा चैकं नामापरेण नाम्ना समस्यते इति फलति तथैवोदाहृतम्, अथ बहूनामपि नाम्नां द्वन्द्व इति साधयितुमुपक्रमते–**नाम नाम्नेत्यनुवर्तमानेऽपी**त्यादिना, अयमाशयः–"लघ्वक्षरासखीदुत्स्वराद्यल्पस्वरार्च्यमेकम्" [ ३. १. १६० ] इति सूत्रेण द्वन्द्वे लघ्वक्षरादिरूपस्यैकस्य प्राक्प्रयोगो विधीयते, तत्र यदि द्वयोरेव द्वन्द्वो नियतः स्यात् तर्हि विनापि 'एवम्' इति कथनेनैकस्यैव प्राक् प्रयोगः स्यादेवेति व्यर्थमेकग्रहणमनेकस्य पूर्वनिपातप्रसक्तिं वारयन् बहूनामपि द्वन्द्व इति सूचयति, नामपदे वा शब्दाधिकारपक्षेऽत्र जातिपदार्थतामाश्रित्य बहूनां नाम्नां समासः साधयितुं शक्य इत्यन्यदेतत् । तथैव विगृह्योदाहरति–**धवश्च खदिरश्च पलाशश्चे**ति विग्रहः, **धव-खदिरपलाशाः** इति च समासः । अतिदिशति–**एवमिति, होतृ-पोतृ-नेष्टोद्गातारः** इति समासः, होता च पोता च नेष्टा च उद्गाता चेति विग्रहः, "आ द्वन्द्वे" [ ३. २. ३९. ] इत्यनेन विद्यायोनिसम्बन्धनिमित्तानामृदन्तानां यो द्वन्द्वस्तस्मिन् सति उत्तरपदे पूर्वपदस्याकारान्तादेशो भवति, प्रकृते पूर्वस्य तृतीयपदस्यैवात्वं भवति, न प्रथमयोः, तृतीयेनोत्तरपदस्य व्यवधानात्, प्रथमापेक्षया द्वितीयस्य द्वितीयापेक्षया तृतीयस्योत्तरपदत्वं नाशङ्कनीयम्, उत्तरपदशब्दस्य समासचरमावयवे रूढत्वात्; नन्वेवं पूर्वपदमपि समासप्रथमावयवे रूढमित्युत्तरपदेन पूर्वपदाक्षेपाद् यत्रोत्तरपदाव्यवहितं पूर्वपदं स्यात् तत्रैवात्वं स्यात्, न तु त्रिपदे चतुष्पदे वा समासे इति चेत् ? न–पूर्वपदाक्षेपे मानाभावात् आक्षिप्तस्य शाब्दबोधे भानाभावाच्च, 'ऋत्यादौ पूर्वपदस्यात् स्यात्' इत्यर्थकथनं तूत्तरपदापेक्षिकं पूर्वत्वमादायैव, न तु रूढं पदत्वमाश्रित्य तादृशस्यार्थस्य शब्देनोपस्थितेरभावात्, उत्तरपदेन पूर्वपदाक्षेपाभावे मानं तु तादृशाचार्यव्यवहार एव । त्रयाणामपि पदानामात्वं यद् दृश्यते तदुपायमाह–**द्वयोर्द्वयोर्द्वन्द्वे हि होता-पोता-नेष्टोद्गातार इत्येव स्यादि**ति, अयमाशयः–होता च पोता चेति विगृह्य होता-पोताराविति, नेष्टा च उद्गाता चेति विगृह्य नेष्टोद्गातारविति, ततो होतापोतारौ च नेष्टोद्गातारौ चेति विगृह्य होता-पोता-नेष्टोद्गातार इति त्रयाणामपि क्रमिकं पूर्वपदत्वमुत्तरपदाव्यवहितपूर्वत्वं च सम्पाद्य सम्भाव्यते प्रत्येकमात्वविधानमिति । उद्गातार इत्यत्र मतान्तरापेक्षयाऽऽरादेशः । **पीठछत्रोपानहमि**ति समासः, पीठं च छत्रं च उपानहौ चेत्येषां समाहार इति विग्रह;, प्रागिवात् समासान्तः ।

अत्रेदमवधेयम्–'नाम नाम्ना' इति सामान्येन निर्देशेऽपि प्रथमान्तानामेव द्वन्द्वसमासो न तु परिनिष्ठितविभक्त्यन्तात्, चैत्रेण च मैत्रेण मैत्रेण च कृतमिति व्यस्तेऽवयवकर्तृत्वस्यैव प्रतीतिः, चैत्रमैत्राभ्यां कृतमिति कृतसमासवाक्येन समुदायकर्तृत्वस्येति वैचित्र्यसम्भवात् । समासविग्रहयोः समानार्थत्वाभावेन चैत्रेण च मैत्रेण च कृतमिति वाक्यस्य चैत्रमैत्राभ्यां कृतमिति समस्तप्रयोगार्थत्वाभावात्, परिनिष्ठितविभक्त्या विग्रहे वाक्यसमासयोः पृथगर्थता यत्र भवति तत्र प्रथमोपस्थितप्रथमान्तेन सामान्यतस्तयोः सहोक्तिविवक्षायां समासं विधाय-पश्चात् समुदायादेव परिनिष्ठितविभक्तिरानेयेति भावः ।

पदकृत्यं पृच्छति-**चार्थ इति किमिति**-यत्र सहोक्तिस्तत्र चार्थोऽवश्यमेव स्यादिति 'सहोक्तौ' इति पदं यदि स्थाप्यते तदा 'चार्थे' इति नावश्यकमिति प्रश्नाशयः, उत्तरयति-**वीप्सा-सहोक्तौ मा भूदिति**-न केवलं चार्थे एव सहोक्तिः, अपि तु वीप्सायामपि, तत्र समासो मा भूदित्येतदर्थं 'चार्थे' इति पदस्यावश्यकत्वमित्युत्तराशयः केत्याह-**ग्रामो ग्रामो रमणीयः** इति-अत्र ग्रामयोः समुच्चयादिमध्ये कोऽपि चार्थो न विवक्षित इति समासो नेष्टः, 'सहोक्तौ' इत्येतन्मात्रेण तु नात्र वारणसम्भव इति 'चार्थे' इत्यस्यावश्यकत्वमिति भावः। पुनः पृच्छति-**सहोक्ताविति किमिति** 'चार्थे' इत्येवोच्यतां, न 'सहोक्तौ' इति, सति चार्थे सहोक्तेरवश्यं भावादिति प्रश्नाशयः, प्रत्युदाहरणमुखेनोत्तरयति-**प्लक्षश्च न्यग्रोधश्च वीक्ष्यतामिति**-अत्रोभयोः पृथगेव वीक्षणक्रियया सह सम्बन्ध इति न सहोक्तिः, अस्ति च चार्थः समुच्चयवाचिनश्चकारस्य प्रयुक्तत्वात्, एवं वाक् च गृह्यतामित्यत्रापि द्वयोः पृथगेव ग्रहणक्रियया सह सम्बन्ध इति सहोक्तिः, प्राग्वदस्ति चार्थः। सहोक्तावितरेतरयोगे च 'तिष्ठतः' इत्यादिक्रियायां कर्तृद्वयप्रतीत्या तयोर्जिज्ञासायां च प्लक्षश्च न्यग्रोधश्चेति द्वयोरपि तत्र सहैव कर्तृत्वप्रतीतिः, समाहारे तु समुदायत्वेनेत्यन्यदेतत्। कर्मधारयसमासेऽपि चार्थोऽस्ति न तु सहोक्तिः, सहोक्तिर्हि यत्र द्वयोर्धर्मयोर्धर्मिणोर्वा भिन्नयोः समानतया प्राधान्यं विवक्ष्यते तत्रैव, कर्मधारये तु विशेष्यस्यैव प्राधान्यमिति न सहोक्तिरिति न समास इत्याह-**खञ्जश्चासौ कुण्टश्चेति**, कर्मधारयस्तु भवत्येवेत्याह-**खञ्जकुण्टः** इति।

चार्थमुद्दिश्य द्वन्द्वसमासो विधीयते, उद्देश्ये निर्ज्ञाते विधेयं सुज्ञानं भवतीति चार्थान् विभज्य दर्शयति-**इह समुच्चये**त्यादिना, इह-व्याकरणे प्रकृतसूत्रे वा, समुच्चयादयश्चत्वारश्चार्था इत्यर्थः, तत्र प्रत्येकं लक्षणमुदाहरणं चाह-**तत्रैकमर्थं प्रती**त्यादिना, **तत्र** चतुर्षु चार्थेषु मध्ये, **एकम्**, **अर्थं** क्रियाकारकादिरूपं प्रति, **द्व्यादीनाम्** आदिपदात् त्रयाणां चतुर्णां तदधिकानां च संग्रहः, द्व्यादीनामित्यस्य 'आत्मरूपभेदेन चीयमानता समुच्चयः, इत्यत्रान्वयः, द्व्यादीनामिति संख्याप्रकारेणोक्त्वा संख्येयविशेषानाह-**क्रिया-कारक-द्रव्यगुणानामिति**-एकत्र कारकेऽनेकक्रियाणाम् एकत्र क्रियायामनेककारकाणाम्, एकत्र द्रव्येऽनेककारकाणाम्, एकत्र कारकेऽनेकद्रव्याणाम्, एकत्र धर्मिण्यनेकधर्माणां वा, **आत्मरूपभेदेन** आत्मनो रूपं स्वप्रवृत्तिनिमित्तं, तद्भेदेन तद्वैलक्षण्येन, न तु घट-कलशादीनां तदैक्येन, **चीयमानता** ढौकनम्, समुच्चयः। क्रियादीनां कथम्भूतानां समुच्चय इष्ट इति विशेषणैः प्रतिपादयति-**तुल्यबलानामिति**-समुच्चये हि नैकतरस्य प्राधान्यं प्रत्याययितुं शक्यत इति द्वयोस्त्रयाणां चतुरादीनां वा समुच्चीयमानानां तुल्यबलता आवश्यकी; तुल्यबलता च विरोधे सत्यपि सम्भाव्यते, न च विरुद्धानां समुच्चीयमानता सम्भवति सहावस्थानाभावादत आह-**अविरोधिनामिति**-यथा शीतोष्णादिशब्दप्रतिपाद्या अर्थाः परस्परप्रतिक्षेपका भवन्ति, इति ते न समुच्चेतुं शक्यन्ते तादृशा ये न भवन्तीति भावः; किञ्च, **अनियतक्रम-यौगपद्यानामिति**-न नियतः क्रमो यौगपद्यं वा येषामिति भावः, यथा बाल्य-यौवनादयो नियतक्रमा बाल्यानन्तरमेव यौवनस्योद्भवात्, यथा च शब्द-रूप-रस-गन्धस्पर्शा नियतयौगपद्याः, एकत्र पृथिव्यादौ पञ्चानामपि युगपदवस्थानसद्भावात्, एवम्भूता ये न भवन्ति, तेषामेव स्वरूपभेदेन प्रवृत्तिनिमित्तभेदेन समुच्चीयमानता समुच्चयपदार्थ इति समुदितोऽर्थः।

क्रिया-कारक-द्रव्य-गुणानां समुच्चयं क्रमश उदाहरति-**यथा-चैत्रः पचति च पठति चेति**- अत्रैकस्मिन् कारके कर्तृरूपे पाक-पाठक्रिययोः समुच्चयः। **चैत्रो मैत्रश्च पठतीति**- अत्रैकस्यां पाठक्रियायां कर्तृकारकयोः समुच्चयः। **राज्ञो गौश्चाश्वश्चेति**-अत्रैकस्मिन् सम्बन्धिनि राज्ञि द्रव्ये द्रव्यद्वयस्य कारकरूपस्य गोरश्वस्य च समुच्चयः। **राज्ञो ब्राह्मणस्य च गौरिति**-अत्रैकस्मिन् गवि स्वे द्रव्ये स्वामिद्वयस्य समुच्चयः। **शुक्लश्चायं कृष्णश्चेति**-अत्रैकस्मिन् द्रव्ये शुक्ल-कृष्णयोर्गुणयोः समुच्चयः। एकस्मिन् धर्मिणि धर्मद्वयसमावेशोऽपि समुच्चय इति विशेषमुदाहरणमुखेनाह-**नीलं च तदुत्पलं चेति**-अत्रैकस्मिन् धर्मिणि उत्पले नीलत्वोत्पलत्वयोर्धर्मयोः समावेशरूपः समुच्चयः। अस्य चार्थत्वेन कथनाच्चशब्दसद्भाव एव प्रतीतिरिति नेत्याह-**चशब्दमन्तरेणापि चार्थः सम्भवतीति**-विनापि चकारं परस्परसमभिव्याहारबलादेव चार्थस्य प्रतीतिः सम्भवतीति भावः। स्वोक्तार्थे प्राच्यप्रयोगं प्रमाणत्वेनोदाहरति-**यथा-"अहरहरि**त्यादि-श्मशानात् प्रतिनिवृत्तैः शवानुगामिभिः पठनीयोऽयं मन्त्रः, **गामश्वं पुरुषं पशुमिति**-पुरुषपदेन मनुष्यः, पशुपदेन च गवाश्वमनुजभिन्नाः सर्वे जन्तव उपलक्षिताः, तथा च सर्वान् प्राणिनो**ऽहरहः** प्रतिदिनमेव **नयमानो** निजलोकं प्रतीति शेषः, **वैवस्वतो** यमः, **न तृप्यति** न विरतेच्छो भवति, क इव? **दुर्मदीव** दुःखेन यो माद्यति बहुतरसुरासेवनेनापि यस्य मदो न सम्पद्यते स यथा सुराया न तृप्यति तथा यमोऽपि गवादीन् नयमानो न तृप्यतीति भावः। तथा चात्र तस्य स्वाभाविके कर्मणि शोको न कर्तव्य इति शोकापमोदकं वाक्यमिदम्। अत्र नयनक्रियायामेकस्यां गवादीनां बहूनां समुच्चीयमानतया समुच्चयार्थप्रतीतिसद्भावोऽस्त्येव, न च चकारः पठ्यते, तथा च चं विनापि तदर्थप्रतीतिर्भवतीति सिद्धम्।

अथ द्वितीयं चार्थं परिचाययति-**गुण-प्रधानभावमात्र-विशिष्टः समुच्चय एवान्वाचयः** इति-अन्वाचयेऽपि समुच्चयसमानतैव, केवलं तत्र सर्वेषां समुच्चीयमानानां तुल्य-बलत्वम्, इह च गुणप्रधानभावः, एकस्य प्राधान्यमपरस्य चाप्राधान्यमित्येव विशेष इति भावः। तत्रोदाहरति-**यथा-बटो! भिक्षामट गां चानये**ति, अत्रैकस्य प्राधान्यमपरस्य चाप्राधान्यं कथमित्याह-**स हि भिक्षां तावदटती**ति-प्रकृते बटोर्भिक्षाटनमुद्देश्यतया प्रधानं, गवानयनं चानुषङ्गि-कम्, तस्यानुषङ्गिकत्वमेवाह **यदि गां पश्यति तामप्या-नयती**ति-नहि तदर्थं सचेष्ट इति भावः।

अथ तृतीयं चार्थमाह-**द्रव्याणामेवे**ति-एवकारेण क्रिया-कारक-गुणानां व्यावृत्तिः, **परस्परसव्यपेक्षाणामि**ति-एकां क्रियां प्रति यानि द्रव्याणि एकमपरमपेक्ष्यैव कर्तृत्वादिना सम्बध्यन्ते तादृशानामिति भावः, एतावन्मात्रविवक्षायां समा-हारेऽप्यतिव्याप्तिः स्यात्, तत्रापि तादृशसमूहत्वसत्त्वादिति समूहमेव विशिनष्टि-**उद्भूतावयवभेदः** इति-समूहो हि द्विविधः—उद्भूतावयवभेदोऽनुद्भूतावयवभेदश्च, यत्र समूह-स्थितानामवयवानां स्वगतो भेदः प्रातिस्विकं तद्व्यक्तित्वमुद्भूतं विविच्य ग्रहीतुं योग्यं स उद्भूतावयवभेदः, यथा-'शाखाः' इति, अत्र शाखासमुदायस्य वृक्षत्वेन वृक्षरूपसमुदायस्थितावयवानां शाखानां भेद उद्भूत इति शाखासु बहुत्वं भवति, तत्रैव चावयव-भेदस्यानुद्भूतत्वे वृक्ष इत्येकत्वमेव प्रतीयते, स चायमनुद्भूता-वयवभेदः शाखासमूहो वृक्षशब्देनोच्यते। एवं चेतरेतरयोगे समासे सत्यपि प्रत्येकावयवभेदस्योद्भूतत्वेन यथास्वं द्वित्व-बहु-त्वादिप्रतीतिः, तथा चोदाहरति-यथा-**चैत्रश्च मैत्रश्च कटं कुर्वाते, चैत्रमैत्रौ कटं कुर्वाते** इति-इह वाक्य-समासयो-रुभयत्रेतरेतरयोगः, अत्रैकस्यां घटक्रियायां चैत्रस्य मैत्रस्य च परस्परमपेक्ष्यैव सम्बन्धः, स च समूहरूपेणैव युज्यते, क्रियाया एकत्वेन प्रत्येकं पृथगन्वयासम्भवात्। द्वयोरितरेतरयोगमुदाहृत्य बहूनामाह-**चैत्रश्च मैत्रश्च दत्तश्च कटं कुर्वन्ति, चैत्र-मैत्रदत्ताः पटं कुर्वन्ती**ति-अत्रापि पटक्रियायामेकस्यां सर्वेषां परस्परापेक्षः सम्बन्धः। अत्र कथं द्वित्व-बहुत्वादि यावता समूहस्यैकत्वमित्यत आह-**अत्रावयवानामुद्भूत-त्वात् तत्तत्संख्यानिबन्धनं द्विवचनं बहुवचनं च भवती**ति-प्रत्येकं चैत्रमैत्रौ चैत्रमैत्रदत्ताश्च समुदायावयवभूता विविच्य कर्तृत्वादिना प्रतीयन्ते इति तेषां संख्यापि प्रतीयते इति प्रतीयमानसंख्याहेतुकं द्वित्व-बहुत्वादीत्यर्थः।

चतुर्थं चार्थं परिचाययति-**स एव तिरोहितावयव-भेदः संहतिप्रधानः समाहारः** इति-स एव-इतरेतर-योग एव, समाहारः-समाहारो भवतीत्यन्वयः, कीदृशः सन्नि-त्याह-तिरोहितावयवभेदः-तिरोहितो विविच्याप्रतीयमानोऽवय-वानां भेदः प्रातिस्विकं रूपं यत्र तादृशः, अत एव संहतिप्रधानः-संहतिः-समुदाय एव प्रधानं कर्तृत्वादिना प्रतीयमानं यत्र तादृश इत्यर्थः। तदेव विग्रहसमासवाक्याभ्यां दर्शयति-**धवश्च खदिरश्च पलाशश्च तिष्ठति धवखदिरपलाशं तिष्ठती**ति-अत्र समूहप्राधान्यख्यापनार्थं तिष्ठतीत्येकवचनम्, अत्र द्वित्वादीनामभावे हेतुमाह-**अत्र समूहस्य प्राधान्यात् तस्य चैकत्वादेकवचनमेव भवती**ति-धवश्च खदिरश्च पलाशश्चेत्येतेषां समूहस्तिष्ठतीति विवक्षायामेव धवखदिरपलाशं तिष्ठतीति प्रयुज्यते इति तादृशविवक्षायां समूहस्यैव प्राधान्यं, न तु प्रत्येकं धवखदिरपलाशानामिति तेषां प्रातिस्विकरूपस्या-प्राधान्येन तद्गतसंख्या न प्रतीयत इति समूहस्यैव प्रतीतेस्तद्गतै-कत्वसंख्यैव प्रयुज्यत इति भावः।

इत्थं चार्थांश्चतुरो व्याख्याय प्रकृतसूत्रोपयोगिनं चार्थं पार्थ-क्येन ग्राहयितुमपक्रमते-**एषु चाद्ययोः समासो न भव-ती**ति-एषु चतुर्षु चार्थेषु मध्ये प्रथमयोः समुच्चयान्वाचययो श्चार्थयोः समासो न भवति, कुत इति चेत्? अत्राह-**सहो-क्त्यभावादिति**। ननु सामर्थ्याभावादित्येव वाच्यम्, यतोऽत्र समुच्चयेऽन्वाचये च परस्परनिरपेक्षाणामेवैकत्रान्वयो गम्यते, तथाहि-चैत्रो मैत्रश्च पठतीत्यादौ च शब्दबलादुभयोः पृथगेव स्वातन्त्र्येण क्रियायामन्वयः, अन्वाचयेऽप्येवमेव, तथा च सामर्थ्याभावात् "समर्थः पदविधिः" [ ७. ४. ११२. ] इति परिभाषाविरोधादेव न समासः स्यादिति तदर्थं सहोक्ति-ग्रहणमनावश्यकमिति चेत्? न-एकक्रियान्वयित्वरूपसामर्थ्यस्य तत्र सत्त्वात् सामर्थ्याभावप्रयुक्तप्रवृत्तिविधानासम्भवात्, तस्मात् सहोक्त्यभावादेवात्र समासाभाव इति स्वीकरणीयम्।

इत्थं सहोक्तिं प्रस्तुत्य तां लक्षयितुं शङ्कते-**का पुनरियं सहोक्तिरि**ति-सामर्थ्यातिरिक्ता सहोक्तिरियं का या द्वन्द्व-प्रवृत्तौ निमित्ततया स्वीक्रियते इति शङ्कार्थः, लक्षयति-**यद् वर्तिपदै**रित्यादिना, **वर्तिपदैः** समासघटकपदैः, प्रत्येकं **पदा-र्थानां** स्वस्वाभिधेयानां, यद् **युगपद्** एककालावच्छेदेन, **अभिधानं** प्रतिपादनं, सा सहोक्तिरित्यन्वयः। द्वन्द्वे प्रत्येकं पदानि समुदायार्थमेवाचक्षते, तत्रैकेनैव पदार्थानां बोधसम्भवे पदान्तरं तात्पर्यावबोधसहायकमेव, विवेचयिष्यते चैतदग्रे।

अत्रेदं शङ्क्यते-इत्थं सहोक्तिस्वीकारे 'पट्वी-मृद्व्यौ' इत्यत्र पुंवद्भावप्रसङ्गः, तत्र प्रत्येकमर्थद्वयस्याभिधानादेकार्थवाचित्वरूपं सामानाधिकरण्यमस्तीति पुंवद्भावः प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः। किञ्च परस्परविरुद्धार्थवाचकानां द्वन्द्वे पूर्वोक्ता सहो-क्तिर्न सम्भवति, यथा-शीतोष्णे, सुखदुःखे, जननमरणे, इति;

अत्र विरुद्धानां शीतोष्णादीनां सहावस्थानं न सम्भवति, ततश्च तेषां युगपदनुभवो न घटते, तदभावाच्च सहोक्त्यभावः सुतरामिति कथं तत्र समासः, यतः शीताभावे एवोष्णम्, उष्णाभावे एव शीतम्, तथा सुखप्रतिघातेनैव दुःखम्, दुःखप्रतिघातेनैव 5 सुखम्, एवं जननविरुद्धं मरणं मरणविरुद्धं च जननमिति। यद्यपि आरात्-पुरादयो निपाताः समीपदूर-चिरातीतभविष्यदासन्नादिविरुद्धार्थवाचकाः सन्ति, किन्तु ते युगपदुभयार्थं नाभिदधत इत्यदोषः। इत्थं सहोक्तौ समासस्वीकारे दोषद्वये प्रसक्ते प्रतिविधानं वक्तव्यम्, तच्च "चार्थे द्वन्द्वः" [पा. सू. 10 २. २. २९.] इति सूत्रे भाष्ये यथा दर्शितं तथा सभावार्थं दर्श्यते–"यत् तावदुच्यते" 'तत्र पुंवद्भावप्रतिषेधः' इति, इदं तावदयं प्रष्टव्यः–अथेह पुंवद्भावः कस्मान्न भवति–दर्शनीया माता दर्शनीया मातेति? अथ मतमेतत्–प्राक् समासाद् यत्र सामानाधिकरण्यं तत्र पुंवद्भावो भवतीति, इहापि न दोषो 15 भवति। यदप्युच्यते–'विप्रतिषिद्धेषु चानुपपत्तिः' इति, सर्वे एव शब्दा विप्रतिषिद्धाः। इहापि प्लक्षन्यग्रोधाविति, प्लक्षशब्दः प्रयुज्यमानः प्लक्षार्थं संप्रत्याययति, न्यग्रोधार्थं निवर्तयति, न्यग्रोधशब्दः प्रयुज्यमानो न्यग्रोधार्थं सम्प्रत्याययति, प्लक्षार्थं निवर्तयति। अथात्र चेद् युक्ता युगपदधिकरणवचनता दृश्यते, 20 इहापि युक्ता दृश्यताम्" इति।

अयमाशयः–सामान्येन समानाधिकरणस्य पूर्वपदस्य पुंवद्भाव इत्याश्रयणे दर्शनीया या माता दर्शनीया मातेति षष्ठीसमासे वृत्तावेकार्थीभावेन दर्शनीयाशब्दस्य मात्रर्थवाचकत्वेन सामानाधिकरण्यमस्तीति पुंवद्भावः कुतो न भवति, यतः सामानाधि- 25 करण्यं नाम विशेष्यतयैकद्रव्योपस्थापकत्वम्, अत्रापि चैकार्थीभावेन पूर्वपदस्य पृथक् स्वार्थानुपस्थापकत्वेनोत्तरपदेन सह सामानाधिकरण्यमस्त्येव। अथैतद्दोषपरिजिहीर्षया यदेवमुच्यते यत् वृत्तौ तु सर्वत्र सामानाधिकरण्यमुपपद्यत एवेति वाक्यविषयं सामानाधिकरण्यमाश्रीयते, इह च दर्शनीया या मातेति 30 वाक्ये नास्त्युभयोः सामानाधिकरण्यमिति दोषाभाव इति, तदात्रापि न दोषः, अत्र हि लौकिकं वाक्यं वड्वा च मृद्वी चेति तत्र नोभयोः सामानाधिकरण्यम्, अलौकिकं च वाक्यं [सहोक्तेरीदृशार्थबोधकत्वपक्षे] पट्व्यौ च मृद्व्यौ चेति, तत्र च वृत्तिसमानार्थकत्वमेवेति वाक्यविषयसामानाधिकरण्याभावाद् दोषा- 35 भाव इति। अथ द्वितीयदोषपरिहारमाह भाष्ये–यदप्युच्यते इति, तस्यायमाशयः–विप्रतिषिद्धत्वं नाम परस्परनिवर्तकत्वम्, सर्वे एव शब्दा उच्चार्यमाणा अन्यशब्दार्थनिवर्तका एव, प्लक्षार्थेऽवगतेऽर्थादेव न्यग्रोधार्थो निवर्तत इति प्लक्षन्यग्रोधयोरपि समासो न स्यात्। अथात्र समासायैकशब्दाभिधेयत्वमुभयोरा- 40 श्रीयते तर्हि शीतोष्णे इत्यादावपि द्वन्द्वसमासस्यैकसंज्ञाबलादेकार्थत्वं सहोक्तिश्च स्वीक्रियतामिति। सा चेयं सहोक्तिर्महाभाष्ये युगपदधिकरणवचनता कथ्यते, एकैकेन समासघटकेन पदेन [शब्देन] अधिकरणमभिधेयं द्वन्द्वसमासवाच्यं समुदायरूपं यत्रोच्यते सेति तदर्थः।

अथ पुनरस्याः सहोक्तेर्युगपदधिकरणवचनताया अनुपपत्तिं 45 शङ्कते–एवमपि "शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानम्" [वा०], शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानं प्राप्नोति, अतः किम्? युगपदधिकरणवचनताया अनुपपत्तिः, प्लक्ष-न्यग्रोधौ प्लक्ष-न्यग्रोधा इति। यथैव हि शब्दानां पौर्वापर्यं तद्वदर्थानामपि भवितव्यम्" इति। 50

अयमाशयः–यथा शब्दानामुच्चारणे पौर्वापर्यं तथार्थबोधेऽपि पौर्वापर्यं प्रतीयते, यथा वृद्धिगुणौ, गुणवृद्धी इति, पूर्वं वृद्धिशब्दोच्चारणे तदर्थः पूर्वमेव बुद्धावधिरोहति गुणार्थश्च पश्चात्, विपरीते च विपरीतमित्येकैकेन शब्देन युगपदेवार्थोऽभिधीयते इति नोपपद्यते। 55

अथानुपपत्तिबीजे दोषमाह–"शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानं चेद् द्विवचनबहुवचनानुपपत्तिः" [वा०], शब्दपौर्वापर्यादर्थपौर्वापर्याभिधानं चेद् द्विवचनबहुवचनयोरनुपपत्तिः–प्लक्ष–न्यग्रोधौ प्लक्ष–न्यग्रोधा इति। प्लक्षशब्दः सार्थको निवृत्तो न्यग्रोधशब्द उपस्थितः, एक एकार्थस्तस्यैकार्थत्वादेक- 60 वचनं प्राप्नोति।" इति।

अयमाशयः–यस्मिन् काले योऽर्थः प्रतीयते तदनुसारमेव वचनेन भवितव्यम्, यदि भवता शब्दपौर्वापर्येणार्थपौर्वापर्यं स्वीक्रियते तर्हि प्लक्षन्यग्रोधावुभावप्येकार्थौ, प्लक्षशब्द उच्चारितः, अर्थेन सह च निवृत्तः साम्प्रतं च न्यग्रोधशब्द उच्चार्यते 65 स चैकार्थ इत्येकवचनमेव प्राप्नोति, न तु द्विवचन–बहुवचने इति प्लक्ष-न्यग्रोधौ प्लक्ष-न्यग्रोधा इति द्विवचन-बहुवचनान्तप्रयोगो न प्राप्नोति तस्माद् द्विवचन-बहुवचनान्तप्रयोगानुपपत्त्या प्लक्षन्यग्रोधावित्यादावेकैकोऽनेकार्थाभिधायीति मन्तव्यम्, विनिगमनाविरहादुभयोरप्यनेकार्थत्वस्यौचित्यात्। 70

पुनरपि युगपदधिकरणवचनताया अनुपपत्तिं दूषयति–"समुदायात् सिद्धम्" [वा०], समुदायात् सिद्धमेतत्, किमेतत् समुदायात् सिद्धमिति? द्विवचनबहुवचनताऽप्रसिद्धिरिति चोदितम्, तस्यायं परिहारः।" इति।

द्वन्द्वेन समुदायरूपोऽर्थोऽभिधीयत इति द्विवचनबहुवचन- 75 सिद्धिरित्यर्थः, द्वन्द्वरूपसमुदायेनोद्भूतावयवभेदः समूहरूपोऽर्थः प्लक्षादिशब्दक्रमोच्चारणेन यद्यपि क्रमेण बुध्यते, तथापि द्वन्द्वरूपैकनामजन्यबोधविषयतायाः द्वयोः सत्त्वेन द्विवचनाद्युपपत्तौ युगपद्वचने मानाभाव इति भावः।

पुनरपि द्विवचनाद्यनुपपत्तिमाह-"समुदायात् सिद्धमिति चेन्नैकार्थत्वात् समुदायस्य" [ वा० ], समुदायात् सिद्धमिति चेत्? तन्न, किं कारणम्? एकार्थत्वात् समुदायस्य, एकार्था हि समुदाया भवन्ति, तद्यथा-शतं यूथं वनमिति ।" इति ।

5 अयमर्थः-द्वन्द्वेन समुदायरूपोऽर्थोऽभिधीयते, समुदाये च द्वयोः सत्त्वेन द्विवचनोपपत्तिः साधिता, सा न घटते, समुदायो हि सर्वदैवैकार्थमाह, यथा शतादिशब्दः समुदायवाची ह्येकमेवार्थमाहेत्येकवचनमेव स्यान्न द्विवचनबहुवचनादीति ।

अत्र समाधानमाह-"नैकार्थ्यम्" [ वा० ], नायमेकार्थः,

10 किं तर्हि? द्व्यर्थो बह्वर्थश्च, प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थः ।" इति ।

अयमाशयः-इतरेतरयोगे उद्भूतावयवभेदस्य समुदायस्याभिधेयत्वेन द्वयोरपि संख्या प्रत्येकं प्रतीयते इति प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थ इति द्विवचनाद्युपपत्तिः सम्भवति ।

15 अत्र दोषमाह-"यदि तर्हि प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थः "तयोरनेकार्थत्वाद् बहुवचनप्रसङ्गः" [ वा० ], तयोरनेकार्थत्वाद् बहुषु बहुवचनमिति बहुवचनं प्राप्नोति ।" इति ।

यदि युगपदाधिकरणवचनवादिमतानुसारेण प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थः स्वीक्रियते तर्हि तयोरनेकार्थत्वाद् बहु-

20 वचनप्रसङ्ग इति समुदितार्थः ।

अथ समाधत्ते-"तयोरनेकार्थत्वाद् बहुवचनप्रसङ्ग इति चेत्? तन्न, किं कारणम्? बहुत्वाभावात्, नात्र बहुत्वमस्ति ।" इति, स्पष्टम् ।

पुनराक्षिपति-"किमुच्यते बहुत्वाभावादिति, यदा इदानी-

25 मेवोक्तं-प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थः ।" इति । अथ समाधत्ते-याभ्यामेवात्रैको द्व्यर्थस्ताभ्यामेवापरोऽपि ।" इति ।

अयमाशयः-नात्र चत्वारोऽर्थाः, किन्तु द्वावेवार्थौ, द्वाभ्यामपि प्रत्येकमुच्येते, इति द्वित्वमेव भवति, न बहुत्वमिति ।

अथ पुनर्युगपदधिकरणवचनतानुपपत्तिमाह-यद्येवम् "अन्य-

30 वाचकेनान्यानुपपत्तिः" [ वा० ], अन्यवाचकेन शब्देनान्यस्य वचनं नोपपद्यते ।" इति ।

अयमर्थः-लौकिकात् प्रयोगात् शब्दानामर्थस्यावधारणम्, तत्र यथा पटशब्दो घटार्थं न प्रत्याययति, तथा प्लक्ष-न्यग्रोधशब्दौ परस्परार्थस्य प्रत्यायकौ न युक्तौ ।

35 समाधानमाह-"अन्यवाचकेनान्यस्य वचनानुपपत्तिरिति चेत्? प्लक्षस्य न्यग्रोधत्वात् न्यग्रोधस्य च प्लक्षत्वात् स्वशब्देनाभिधानम्" [ वा० ], अन्यवाचकेनान्यस्य वचनानुपपत्तिरिति चेत्? एवमुच्यते-तन्न, किं कारणम्? प्लक्षस्य न्यग्रोधत्वात् न्यग्रोधस्य प्लक्षत्वाच्च स्वशब्देनाभिधानं भविष्यति, प्लक्षोऽपि

40 न्यग्रोधो न्यग्रोधोऽपि प्लक्षः ।" इति ।

अयमाशयः-प्लक्षशब्दस्य न्यग्रोधार्थत्वात्, न्यग्रोधशब्दस्य प्लक्षाभिधायित्वात् स्वार्थस्यैवाभिधानेन नास्त्यर्थान्तराभिधानम्, लोकप्रसिद्ध्या त्वर्थान्तराभिधायित्वमुच्यते, वृत्तिविषये त्वेकैकस्य द्वावर्थाविति स्वार्थावेव तौ भवतः, एवं प्लक्षोऽपि न्यग्रोधशब्दवाच्यो न्यग्रोधोऽपि प्लक्षशब्दवाच्य इति । 45

अथाक्षिपति-कथं पुनः प्लक्षोऽपि न्यग्रोधः, न्यग्रोधोऽपि प्लक्षः? यावता 'कारणाद् द्रव्ये शब्दनिवेशः ।" इति ।

अयमाशयः-शब्दार्थावसायहेतुभूतलोकव्यवहाररूपकारणादेव ते ते शब्दास्तेषु तेषु द्रव्येषु वाचकत्वेन निविष्टाः, न च लोकव्यवहारे प्लक्षशब्दस्य न्यग्रोधार्थाभिधायित्वं प्रसिद्धम्, 50 तथा च पूर्वोक्तार्थकथनं निर्मूलमिति ।

अत्रैकदेशी समाधत्ते-"कारणाद् द्रव्ये शब्दनिवेश इति चेत्? तुल्यकारणत्वात् सिद्धम्" [ वा० ], कारणाद् द्रव्ये शब्दनिवेश इति चेदेवमुच्यते, तन्न-तुल्यकारणत्वात् सिद्धम्, तुल्यं हि कारणम्, यदि तावत् प्रक्षरतीति व्युत्पत्त्या प्लक्षः 55 स्यात्, न्यग्रोधेऽप्येतद् भवति । तथा यदि न्यग् रोहतीति न्यग्रोधः, प्लक्षेऽप्येतद् भवति ।" इति ।

अयमर्थः-अयमेकदेशी शब्दप्रवृत्तिनिमित्तमेव शब्दप्रयोगस्य कारणमिति पूर्वोक्तवार्तिकाशयं मत्वा प्रक्षरणं प्लक्षशब्दप्रयोगनिमित्तं, तच्च विस्तरेणावस्थानरूपमेव, अस्ति च तत् न्यग्रोधे- 60 ऽपि; एवं न्यग्रोहणं न्यग्रोधशब्दप्रवृत्तिनिमित्तं, तच्चाधःशाखावस्थापनमेव, दृश्यते च तत् प्लक्षेऽपीति प्रयोगकारणस्योभयोः परस्परं सत्त्वादुभयोरुभयार्थत्वमिति ।

पूर्वपक्षी स्वाशयं स्फोरयति-"दर्शनं वै हेतुः" [ वा० ], न च न्यग्रोधे प्लक्षशब्दो दृश्यते ।" इति । 65

अयमाशयः-तुल्यकारणत्वादित्यत्र कारणशब्देन दर्शनं लोकव्यवहारोऽभिप्रेतः, न च लोकव्यवहारे न्यग्रोधार्थे प्लक्षशब्दस्य प्रयोगो दृश्यते ।

सिद्धान्ती समाधत्ते-"दर्शनं हेतुरिति चेत् तुल्यम्" [ वा० ], दर्शनं हेतुरिति चेत्? तुल्यमेतद् भवति, प्लक्षेऽपि न्यग्रोधशब्दो 70 दृश्यते न्यग्रोधेऽपि प्लक्षशब्दः, तुल्यं हि कारणम् ।" इति ।

अयमाशयः-प्लक्ष-न्यग्रोधौ दृश्येतामिति प्रयोगरूपलोकव्यवहारे उभयोरेकक्रियान्वयाद् द्विवचनदर्शनाच्चोभयोरेवोभयार्थत्वं दृश्यत इति तुल्यो लोकव्यवहार उभयत्र ।

अथाक्षिपति-"न वै लोके एष संप्रत्ययो भवति, नहि प्लक्ष 75 आनीयतामित्युक्ते न्यग्रोध आनीयते ।" इति, स्पष्टम् ।

समाधत्ते-"तद्विषयं च" [ वा० ], तद्विषयं चैतद् द्रष्टव्यं, प्लक्षस्य न्यग्रोधत्वम्, किंविषयम्? द्वन्द्वविषयम् ।" इति ।

अयमाशयः-द्वन्द्वावयवभूतानामेव प्लक्षादिशब्दानामनेकार्थाभिधानसमर्थत्वं, न केवलानामिति । 80

अथाक्षिपति–"युक्तं पुनर्यन्नियतविषया नाम शब्दाः स्युः" इति किं शब्दानां विषयवशान्नियतार्थत्वं युक्तम्? इत्याशङ्का। उत्तरयति–"बाढं युक्तम्" इति, तदेव साधयति–"अन्यत्रापि तद्विषयदर्शनात्" [वा०] अन्यत्रापि हि नियतविषयाः शब्दा 5 दृश्यन्ते, तद्यथा–समाने रक्ते वर्णे गौर्लोहित इति भवति, अश्वः शोण इति, समाने च काले वर्णे गौः कृष्ण इति भवति, अश्वो हेम इति, समाने च शुक्ले वर्णे गौः श्वेत इति भवति, अश्वः कर्क इति।" इति।

अयं भावः–लोहितादिवर्णेषु गवाश्वयोः समानेष्वपि अश्वाद- 10 न्यत्र शोणादयो न वर्तन्ते, तथा द्वन्द्वादन्यत्र प्लक्षादयो न्यग्रोधार्था न भवन्तीति।

पुनराक्षिपति–"यदि तर्हि प्लक्षोऽपि न्यग्रोधः, न्यग्रोधोऽपि प्लक्षः 'एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः' [वा०], एकेनोक्तत्वात् तस्यार्थस्यापरस्य प्रयोगो नोपपद्यते, प्लक्षेण न्यग्रोधस्य 15 न्यग्रोधप्रयोगः।" इति।

एकेन प्लक्षशब्देनैव न्यग्रोधार्थस्योक्तत्वात् न्यग्रोधस्य प्रयोगो नोपपद्यते 'उक्तार्थानामप्रयोगः' इति न्यायादिति भावः। ननु द्वन्द्वविषय एवैकैकेनानेकार्थाभिधानमित्युक्तम्, एकस्य प्रयोगे च द्वन्द्व एव न स्यादिति तद्विषयताभावादिदं कथनमयुक्तमिति 20 चेत्? न–परस्परसन्निधानेन यदा द्वयोरप्युभयार्थबोधनसामर्थ्यमाहितं तदान्यतराभावेऽपि सामर्थ्यहानाभावः, यथा निवृत्तेऽपि वह्निसंयोगे वह्निसंयोगसम्पादितपाकरूपनिवृत्त्यभाव इत्याशयात्।

अथ समाधत्ते–"एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तत्वात् प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः" [वा०], 25 एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेत्? तन्न, किं कारणम्? अनुक्तत्वात् प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः, अनुक्तः प्लक्षेण न्यग्रोधार्थ इति कृत्वा न्यग्रोधशब्दः प्रयुज्यते, कथमनुक्तः? यावता इदानीमेवोक्तं प्लक्षोऽपि न्यग्रोधो न्यग्रोधोऽपि प्लक्ष इति, सहभूतावेतावन्योन्यस्यार्थमाहतुः, न पृथग्भूतौ।" इति।

30 अयमाशयः–न केवलेन प्लक्षशब्देन न्यग्रोधार्थबोधः, अपि तु न्यग्रोधशब्दसहकृतेनैव, यथा भारोद्वहनलमयोर्द्वयोरपि तद्भारोद्वहनसामर्थ्यं तुल्यं सहभूतयोरेव, न पृथग्भूतयोस्तद्वत्, एवं चैकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति नोचिता शङ्केति।

पुनः पृच्छति–"किं पुनः कारणं? सहभूतावेतावन्योन्य- 35 स्यार्थमाहतुर्न पृथग्भूतौ?" इति, समाधत्ते–"अभिधानं पुनः स्वाभाविकम्" [वा०], स्वाभाविकमभिधानम्, अथवेह कौचित् प्राथमकल्पिकौ प्लक्षन्यग्रोधौ, कौचित् क्रियया वा गुणेन वा, प्लक्ष इवायं प्लक्षो न्यग्रोध इवायं न्यग्रोध इति, तत्र प्लक्षावित्युक्ते सन्देहः स्यात्–किमिमौ प्लक्षावेव, आहोस्वित् प्लक्ष-न्यग्रोधौ, 40 तत्रासन्देहार्थं न्यग्रोधशब्दः प्रयुज्यते।" इति।

अयमर्थः–अयं वृत्तिस्वभावो यत् सहभूतावेव–सहोच्चारितावेव प्लक्षन्यग्रोधशब्दावन्योन्यस्य वाचकौ न पृथग् भूतौ। अथवा प्लक्ष एको मुख्योऽपरस्तद्गुणारोपनिमित्तो गौणो न्यग्रोधादिः, तत्र प्लक्षाविति कथिते मुख्ययोरेव प्लक्षयोर्ग्रहणं स्याच्च प्लक्ष-न्यग्रोधयोरिति निःसंदिग्धोभयार्थप्रतीत्यर्थमेवोभयोः शब्दयोः 45 प्रयोग इति सहोक्तिपक्षो निर्दोष इति सारः।

तदेतत् सर्वमभिप्रेत्याह–**प्लक्षन्यग्रोधावित्यत्र हि प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थः** इति। नन्वेवं वृत्तावेव परस्परार्थाभिधानरूपा सहोक्तिः स्याच्च वाक्ये इत्यत आह–**प्लक्षश्च न्यग्रोधश्चेति वाक्येऽपि चकारेणाय- 50 मेवार्थः कथ्यते** इति–अयमेवार्थः-सहोक्तिरूप एवार्थः।

सहोक्तिमेव मतान्तरेणान्यथा व्याचष्टे–**उत्तरपदेनेति**–द्वन्द्व-तत्पुरुषयोरुत्तरपदमेव समुदायार्थवाचकं पूर्वपदं तु तात्पर्यग्राहकमिति मतेनोत्तरपदेनेति; अन्यत्र समासे तथास्वीकारेऽपि द्वन्द्वे समुदायस्यैव वाचकत्वमिति मतेनाह–**समुदायेन** वेति– 55 एतच्च जहत्स्वार्थाविषयम्, तत्र हि पदयोर्नार्थः, अपि तु समुदायस्यैवेति पूर्वं निरूपितत्वात्। पयः पयो जरयतीत्यादिप्रयोगे द्वन्द्वैकशेषयोरभावायाह–**वर्तिपदार्थानामेवे**त्यादि–समस्यमानतया सम्भावितानां पदानां येऽर्थास्तेषामेव सह क्रियादिसम्बन्ध इति, क्रियादिना सह सम्बन्ध इति भावः, 60 सह सम्बन्धश्चैकजातीयसम्बन्ध एव, एवं च पयः पयो जरयतीत्यादावेकस्य पयसः क्रियायां कर्तृत्वेनान्वयोऽपरस्य कर्मत्वेनेतीहैकजातीयसम्बन्धाभावान्न सहोक्तिरिति न समासः, एवमजां ग्रामं नयतीत्यादौ मुख्यकर्मगौणकर्मणोरपि न द्वन्द्वः, एकजातीयसम्बन्धेन क्रियायामन्वयाभावादेव, एकस्येप्सितकर्मत्वमपरस्य 65 चाधारतया कर्मत्वमिति सम्बन्धभेदस्य स्पष्टत्वेन सहोक्त्यभावात्। समाहारेऽपि संघातस्य सहैव क्रियादिना सम्बन्ध इति सहोक्तिरस्त्येव।

ननु 'एकविंशतिः, द्वाविंशतिः' इत्यादिप्रयोगा दृश्यन्ते, तत्रैकविंशतिरिति कोऽयं समास इति चेत्? उच्यते–एकाधिका 70 विंशतिरेकविंशतिरिति शाकपार्थिवादित्वात् तत्पुरुषः, अत एव मयूरव्यंसकादावुदाहृतः। अथवा प्रकृतसूत्रेण एकश्च विंशतिश्चेति द्वन्द्वसमासः; ननु किमयं समाहारविवक्षायामितरेतरयोगविवक्षायां वा? किञ्चातः? यदि एकश्च विंशतिश्चेत्यनयोः समाहार इति समाहारविवक्षा तदा "द्वन्द्वैकत्वा-ऽव्ययीभावौ" [लिङ्गा- 75 नुशासने नपुंसकलिङ्गप्रकरणे–९] इति वचनान्नपुंसकलिङ्गेन भवितव्यम्, यथान्यत्र–सुख-दुःखमिति; यदि चेतरेतरयोगविवक्षा तदा द्विवचनादिना भवितव्यम्, यथान्यत्र–प्लक्ष-न्यग्रोधौ, धव-खदिर-पलाश इति, तथा चोभयथापि 'एकविंशतिः' इत्यादिप्रयोगानुपपत्तिरेव दोषः। 80

अत्रोच्यते–"विंशत्या शताद् द्वन्द्वे सा चैक्ये द्वन्द्व-मेययोः ।"
[ स्त्रीलिङ्ग–६ ] इति लिङ्गानुशासनबलादुभयथाप्यदोषः ।

तदर्थश्चायम्–विंशतिरित्येवमादिका संख्या संख्येये संख्याने
च वर्तमाना स्त्रीलिङ्गा, इयं विंशतिर्घटाः, इयं विंशतिर्घटानाम्,
विंशत्या घटैर्घटानां वा । आ शताद् द्वन्द्वे–द्वन्द्वे समासे
वर्तमाना विंशत्याद्या संख्या, आशतात्–शताद् अर्वाग् नव-
नवतिपर्यन्ता स्त्रीलिङ्गा, समाहारद्वन्द्वार्थं वचनम्, इतरेतरयोगे
तु "परलिङ्गो द्वन्द्वोऽशी" [ परलिङ्ग–१ ] इति लिङ्गानुशासन-
वचनात् परवल्लिङ्गतयैव स्त्रीत्वसिद्धेः, एकश्च विंशतिश्च इयमेक-
विंशतिः, एकविंशत्या, द्वन्द्वैकत्वेति नपुंसकत्वापवादो योगः ।
सा चैक्ये द्वन्द्व-मेययोः–सा विंशत्याद्या संख्या द्वन्द्वे समासे मेये
च संख्येये च वर्तमाना ऐक्ये एकत्वे एव प्रयोक्तव्या, इतरे-
तरद्वन्द्वार्थं वचनम्, समाहारे हि सिद्धमैक्यम्, एकश्च विंशतिश्च
एकविंशतिर्घटाघटानां वा; संख्येये खल्वपि–विंशतिर्घटाः,
विंशत्या घटैः । द्वन्द्वमेययोरिति किम्? द्वे विंशती घटानाम्,
तिस्रो विंशतयो गवाम्, विंशत्यादेः संख्यास्थानस्यैव द्वित्व-
बहुत्वविवक्षायां द्विवचन-बहुवचने । सा चेति प्रसिद्धसंख्या-
परामर्शात् तत्प्रत्यासत्त्या प्रसिद्धसंख्या रूपद्वन्द्वपरिग्रह इतीह न
भवति–एकश्चैत्राय दीयतां विंशतिर्मैत्रायेति एकविंशती आभ्यां
दीयतामिति द्विवचनमेव भवति । द्वन्द्वे द्वित्व-बहुत्वयोः, मेये तु
बहुत्वापवादो योगः ।

तथा च 'एकविंशतिः' इत्यादौ समाहारेऽपि वचनविशेषात्
स्त्रीलिङ्गमेव भवति, न तु नपुंसकत्वप्रसङ्गः; एवमितरेतरयोगेऽपि
वचनविशेषादेकवचनमेव भवति, न तु द्विवचन-बहुवचन-
प्रसङ्ग इति भावः । एतद् विचारजातं संक्षेपतो दर्शयति–
**एकविंशतिरि**त्यादिना । एकविंशत्यादौ चतुर्धा द्वन्द्वो भवति–
१ संख्यार्थयोरेकशब्दविंशतिशब्दयोः समाहारे द्वन्द्वः, तत्रैक-
वचनं स्त्रीलिङ्गं च; २ संख्यार्थयोरेव तयोरितरेतरयोगे द्वन्द्वः,
अत्राप्येकवचनं स्त्रीलिङ्गं च; ३ संख्येयार्थयोस्तयोरितरेतरयोगे
द्वन्द्वः, अत्र द्विवचनादि स्त्रीलिङ्गं च; ४ एतयोरेव समा-
हारे द्वन्द्वः, अत्रैकवचनं स्त्रीलिङ्गं चेति लघुन्यासः, अपरे तु–
एकवचनं नपुंसकलिङ्गं चेति । ननु प्रथमप्रकारे–संख्याद्वन्द्वे
समाहारेऽवयवानामनुद्भूतत्वात्–पार्थक्येनाप्रतीयमानत्वात् स-
मुदायस्य प्राधान्यादेकत्वाच्च भवतु नाम तत्रैकवचनम्, द्वितीय-
प्रकारे–संख्याद्वन्द्वे इतरेतरयोगेऽवयवानामुद्भूतत्वात्–पार्थक्येन
प्रतीयमानत्वादनेकत्वाच्च द्विवचनादिनैव भवितव्यमिति कथमेक-
वचनं गीयत इत्याशङ्कायामाह–**'एकविंशतिः, द्वाविंशतिः'
इत्यादिसंख्याद्वन्द्वः** इति–यतोऽयं संख्याद्वन्द्वस्ततः, **इत-
रेतरयोगेऽपि** अपिना समाहारे च, एकवचनान्तो भवति,
संख्याद्वन्द्वः संख्यागतमेकत्वमनुसरति, संख्येयद्वन्द्वश्च संख्येय-
गतां द्वित्वादिसंख्यामनुसरति, समाहारे तूभयत्रापि समुदाय-
गतमेकत्वमनुसरतीति गूढाभिसन्धिः, एकवचनान्तत्वे हेतुमाह–
**समुदायसंख्यैकत्वानुरोधेन विंशत्यादिवत् संख्येय,
माचष्ट इतीति**–यथा 'विंशतिर्घटाः' इत्यत्र विंशतिशब्दः
संख्येयान् विंशतित्वसंख्यासहितान् घटान् आचष्टे, तत्र घटानां
बहुत्वेऽपि न तत्संख्यामपि तु विंशतित्वसंख्यागतमेकत्वमनुसरति–
तत एकवचनान्तो भवति, तथा 'एकविंशतिर्घटाः' इत्यत्रैक-
विंशतिशब्दः संख्येयान् एकविंशतित्वसंख्यासहितान् घटान्
आचष्टे, तत्र घटानां बहुत्वेऽपि न तत्संख्यामनुसरति, किन्तु
एकत्व–विंशतित्वयोर्यः समुदाय एकविंशतित्वसंख्यात्मकः,
तद्गतमेकत्वमनुसृत्यैव संख्येयानाचष्टे, **इति** एतस्मात् कारणात्
एकवचनान्तो भवति । ननु 'एकविंशतिः' इत्यादौ संख्याद्वन्द्वे
समाहारे एकवचनमस्तु, किन्तु "द्वन्द्वैकत्व०" इति नपुंसकलिङ्गेन
भवितव्यमिति कथं स्त्रीलिङ्गतेत्याशङ्कायामाह–**समाहारेऽपि
च "आशताद् द्वन्द्वे" इति लक्षणात् स्त्रीलिङ्गो
भवतीति**–"द्वन्द्वैकत्व०" इति सामान्यवचनं प्रबाध्य "आ
शताद् द्वन्द्वे" इति विशेषवचनं स्त्रीलिङ्गत्वं विदधातीत्यर्थः ।
एतावतेदमपि ज्ञापितं भवति–यदुत, एकविंशतिशब्दो यदा
संख्येयमाचष्टे तदापि एकवचनार्थं स्त्रीलिङ्गार्थं च संख्याद्वन्द्वो
विधेयः, अन्यथा संख्येयद्वन्द्वे इतरेतरयोगे द्विवचनादिप्रसङ्गः,
समाहारे च नपुंसकत्वप्रसङ्गः, संख्यार्थे निष्पन्नोऽपि द्वन्द्वो
विंशत्यादिवत् संख्येयमभिधास्यतीति ।

अथ तृतीयप्रकारे–संख्येयद्वन्द्वे इतरेतरयोगे विशेषं दर्शयति–
**संख्याद्वन्द्वादन्यत्रे**ति–संख्येयद्वन्द्वे इत्यर्थः, एकश्च विंशति-
श्चेति विग्रहः, शेषं संख्येयपरत्वज्ञापनार्थम्, एकः–प्रकरणादि-
गम्य एकसंख्याकः कार्षापणादिः, विंशतिः–प्रकरणादिगम्या
विंशतिसंख्याकाः कार्षापणादयः, देवदत्तायेति सम्प्रदाने चतुर्थी,
एवं–मैत्रायेत्यत्रापि, देहीति सम्प्रदानत्वाभिव्यक्तये, **एक-
विंशती** इति समासः, अत्र संख्येयद्वन्द्वत्वात् संख्याद्वन्द्वादुच्य-
मानमेकत्वं न भवति, किन्तु संख्येयार्थकस्यैकशब्दस्य विंशति-
शब्दस्य च प्रत्येकमेकत्वमिति मिलित्वा द्वयोर्द्वित्वमिति द्विवचनमेव
भवति, **एकविंशती अनयोर्देही**ति विग्रहवाक्यप्रयोगसमा-
र्थकप्रयोगः, अत्र 'अनयोः' इत्यस्य स्थाने 'आभ्याम्' इति पाठः
सम्यगाभाति, यद्यपि दानार्थकधातुयोगे 'घ्रतः पृष्ठं ददाति'
इत्यादौ सम्प्रदानत्वाभावाद् षष्ठी दृश्यते, तथापि प्रकृते विग्रह-
वाक्ये चतुर्थ्यन्तप्रयोगात् स्वोपज्ञलिङ्गानुशासनवृत्तौ 'आभ्याम्'
इति पाठदर्शनाच्च चतुर्थ्यन्तपाठ आदरणीयः । अतिदिशति–
**एवमिति, त्रिंशच्चत्वारिंशतौ** इति समासः, त्रिंशद् देवदत्ताय
दीयतां चत्वारिंशच्च चैत्रायेति त्रिंशच्चत्वारिंशतौ आभ्यां देहीति
प्रयोगः, **षष्टिसप्तत्यशीतयः** इति समासः, षष्टिर्देवदत्ताय

धीयतां सप्ततिर्मैत्रायाशीतिर्जिनदत्तायेति षष्टिसप्तत्यशीतीरेभ्यो देहीति प्रयोगः, **द्विवचनबहुवचनान्तता** प्रथमे द्वितीये च द्विवचनान्तता, तृतीये बहुवचनान्ततेत्यर्थः ।

अथ चतुर्थप्रकारे–संख्येयद्वन्द्वे समाहारे वृत्तौ किमपि नोक्तम्, 5 समाहारे कथं क्लीवत्वमितरेतरयोगे च कथमेकवचनमिति शङ्कानिरासमात्रप्रवृत्तत्वात् प्रकृतप्रकरणस्य । संख्येयार्थे–एकश्च विंशतिश्चेत्यनयोः समाहार इति–'एकविंशति' इति विग्रहसमासौ, अत्र "द्वन्द्वैकत्व" इति नपुंसकत्वम्, "आ शताद् द्वन्द्वे" इति विशेषवचनं तु संख्याद्वन्द्वमनुसरतीति तूक्तपूर्वम्, लघुन्यास- 10 कृतात्रापि स्त्रीलिङ्गमुक्तं, तत्संगमना सुधीभिरन्वेष्या ।

द्वन्द्वसमासस्य पृथक् संज्ञायाः प्रयोजनमाह–**द्वन्द्वप्रदेशाः** इत्यादिना, द्वन्द्वमुद्दिश्य कार्यविधायकसूत्राणीत्यर्थः, तथा च तत्तत्कार्यविशेषसिद्ध्यर्थं पृथक् संज्ञाकरणमावश्यकमिति भावः । ३. १. ११७. ॥

## 15 समानामर्थेनैकः शेषः । ३ । १ । ११८ ॥

**त० प्र०**—अर्थेन समानां–समानार्थानां शब्दानां सहोक्तौ गम्यमानायामेकः शिष्यते, अर्थादन्ये निवर्तन्ते, तत्र विशेषानुपादानात् पर्यायेण शेषो भवति; बहुवचनमतन्त्रम्, तेन द्वयोरप्येकः शिष्यते । वक्रश्च कुटिलश्च–वक्रौ कुटिलौ वा, 20 वक्रदण्डश्च कुटिलदण्डश्च–वक्रदण्डौ कुटिलदण्डाविति वा, एवं–लोहिताक्षौ रक्ताक्षाविति वा, सितश्च शुक्लश्च श्वेतश्च–सिताः शुक्लाः श्वेता वा । अर्थेन समानामिति किम् ? प्लक्षन्यग्रोधौ, धवखदिरपलाशाः । सहोक्ताविस्येव–वक्रश्च कुटिलश्च । द्वन्द्वापवादो योगः ॥ ११८ ॥

25 **श० म० न्यासानुसन्धानम्–समा०** । समशब्दः सर्वादौ पठितः, तस्य षष्ठीबहुवचने समेषामिति रूपं भवति, प्रकृते नायं सर्वादिः, सर्वमादीयतेऽनेनेति सर्वादिरिति सर्वार्थकस्यैव सर्वादिगणपठितत्वनिर्णयात् प्रकृते समानार्थत्वेन सर्वार्थत्वाभावान्न सर्वादिकार्यमित्याह–**समानामिति**–अत्र निर्धारणे 30 समुदायसमुदायिभावसम्बन्धे वा षष्ठी, न स्थान्यादेशभावरूपसम्बन्धे षष्ठी [ स्थानषष्ठी ], तथा सति अर्थेन समानां स्थाने एकः शिष्यते आदिश्यत इत्येक आदेशो भवति' इत्यर्थः स्यात्, एवं सति 'बिसं च बिसं च' इत्यर्थे एकस्यादेशरूपतया तत्सम्बन्धिसकारस्य कृतस्थतया "नाम्यन्तस्था०" [ २. ३. १५. ] 35 इति षत्वे 'बिषे' इत्यनिष्टरूपमापद्येत, निर्धारणषष्ठ्यां च स्वीकृतायां तेषां मध्ये एक एव शिष्यते इत्यर्थलाभात् नात्रापूर्वविधिरिति सकारो न कृतो नवा कृतस्थ इति षत्वाप्राप्तौ 'बिसे' इतीष्टं सिध्यति । समत्वं नाम समानत्वम्, तच्चेह द्विधा–स्वरूपतोऽर्थतश्च, तत्रार्थतः समत्वमिह ग्राह्यमित्यावेदनायाह–**अर्थेन**, तथा च व्याख्याति–**अर्थेन समानां**–समा- 40 र्थानां शब्दानामिति, सहोक्ताविस्यनुवर्तत इत्याह–**सहोक्तौ गम्यमानायामिति**–द्वन्द्वापवादतयैव तल्लाभः । **'एकः शेषः'** इत्यस्य वाच्यमर्थापत्तिलभ्यं चार्थमाह–**एकः शिष्यते, अर्थादन्ये निवर्तन्ते** इति । अत्र चैकग्रहणाभावेऽपि शिष्यत इति शेष इत्यर्थकशेषपदे एकत्वविवक्षयैकस्यैव शेषः स्यादित्येक- 45 ग्रहणं व्यर्थमिति नाशङ्कनीयम्, 'सूत्रे लिङ्गवचनमतन्त्रम्' इति सिद्धान्तात्, स्पष्टप्रतिपत्तये वा तदावश्यकत्वात् । "सरूपाणामेकशेष एकविभक्तौ" [ पा० सू० १. २. ६४. ] इति सूत्रे महाभाष्ये चैकग्रहणस्य सार्थक्यमित्थं प्रतिपादितम्–"अथैकग्रहणं किमर्थम् ? सरूपाणां शेष एकविभक्ताविती यत्युच्यमाने 50 द्विबह्वोरपि शेषः प्रसज्येत । एकग्रहणे पुनः क्रियमाणे न दोषो भवति ।" इति ।

अयमर्थः–शेषणं शेष इति भावसाधनः, शिष्यते शेष इति कर्मसाधनश्च शेषशब्दः, तत्र प्रथमपक्षे प्राथम्यादेकस्यैव शेषो भविष्यतीत्येकग्रहणमनर्थकम्, कर्मसाधनपक्षेऽपि शेषपदे एक- 55 त्वसंख्याया विवक्षणादेक एव शिष्यमाणः स्यादिति व्यर्थमेकग्रहणमिति । पूर्वपक्षे इतरनिवृत्तिविशिष्टमवस्थानं शेषशब्देन विधेयम्, तत्रैकस्य द्वयोर्वेत्याकाङ्क्षायां विनिगमकाभावेन प्रथमोपस्थितत्वादेकस्यैव भविष्यति, न तु द्वयोर्बहूनां वेति तदभिप्रायः । द्वितीयपक्षे च समानां सम्बन्धी शिष्यत इत्यर्थः, शेषपदेनाक्षिप्ते 60 सम्बन्धिपदे चाक्षेपकसामानाधिकरण्यायैकवचनान्ते तत्रैकत्वविवक्षेति तदभिप्रायः । उत्तरग्रन्थाशयस्तु "आद्युदात्तश्च" [ पा० सू० ३. १. ३. ] इति सूत्रे आदिग्रहणेनेह शास्त्रे प्राथम्यन्यायापेक्षया व्याप्तिन्यायस्य प्राबल्यं बोध्यते, तथा च शेषशब्दस्येतरनिवृत्तिमदवस्थानमर्थः, तत्र यद्यपि स्थितेः सिद्ध- 65 त्वात् निवृत्तावेव शास्त्रव्यापारः, तथापि शब्दतोऽवस्थान एव विधेयतावगमात् व्याप्तिन्यायेन द्विबहूनामेवावस्थानं स्यात्, एकस्य निवृत्तिः, इत्येकस्यावस्थानलाभायैकग्रहणमावश्यकमिति समाधानग्रन्थाशयः । अत्र शेष इति पदे कर्मसाधनत्वपक्षे, एकत्वस्य विवक्षयैकस्यैव शेषः स्यादिति पूर्वपक्षिण आशयमाश्रित्य 70 समाहितं "कैयटेन–कर्मसाधनपक्षे संस्कार्यत्वात् प्राधान्यात् संख्याया अविवक्षा स्यात्, यथा–'गृहं संमार्ष्टि' इति । तदाशयमनुसन्धानेन लघुन्यासकारेणोक्तम्–"शेषस्य विधीयमानत्वेन प्राधान्यात् प्रधाने च संख्याया अविवक्षणाद् द्वयोस्त्रयाणां वा शेषप्रसक्तेस्तत्रापि शेषप्रक्रियागौरवापत्तथा एकस्यैव 75 शेषस्य विधीयमानत्वेन प्राधान्यात् प्रधाने च संख्याया अपि सम्प्रत्ययार्थमेकग्रहणं सुखार्थं वा ।" इति । परं तु नैतद् युक्तम्,

प्रधाने एव संख्याया विवक्षा भवति, तत्रैव 'ग्रहं मार्ष्टि' इति दृष्टान्ततयोपयुक्तम्, तत्र हि ग्रहो नाम यज्ञपात्रम्, अनेन वाक्येन संमार्जनं विधीयते, ग्रहस्य चानुवाद्यतयाऽप्राधान्यम्, तेन तत्र संख्याया विवक्षा न भवति, अतोऽनेकपात्राणामपि संमार्जनं भवति । तथा च तत्रत्यकैयटे 'संस्कार्यत्वादप्राधान्यात्' इति पाठः कल्पनीयः, समुपलभ्यते च क्वचित् तथैव पाठः । उद्द्योतकृता चेममेव पाठं कल्पयित्वा समुपलभ्य वा इत्थं स्वाशयो वर्णितः–"सरूपाणामिति षष्ठ्या विधेयबोधकशेषपदेन सामानाधिकरण्यान्वययोग्यः सम्बन्धी आक्षिप्यते, स चैकवचनान्त एव यद्यपि तथापि तस्य विधेयेन शिष्यमाणत्वेन संस्क्रियमाणत्वेनानुवाद्यत्वादेकत्वाविवक्षेति तात्पर्यम् ।" इति । अस्यायमाशयः–एकग्रहणाभावे 'समानां सम्बन्धी शेषः' इति वाक्ये शिष्यमाणं विधेयम्, सम्बन्धी चानुवाद्यः, स च यद्यपि विधेयसमर्पकशेषपदाक्षिप्तस्तथापि संस्क्रियमाणत्वेनानुवाद्य एवेति तत्र न वचनविवक्षा भवितुमर्हतीत्येकस्यैव शेषत्वविधानायात्रैकग्रहणमावश्यकमिति ।

यद्यपि जातिपक्षे एकेनैव शब्देनानेकार्थप्रतीतिः सम्भवतीति तत्र पक्षे सूत्रमिदमनावश्यकम्, व्यक्तिपक्षे च प्रतिव्यक्तिशब्दप्रयोगे प्राप्ते एकस्यैव शब्दस्य प्रयोगायावश्यकत्वप्रतिपादनसम्भवेऽपि वृथा सूत्रसत्त्वे एकेनैव शब्देनानेकार्थप्रतीतिस्तथा तदभावेऽपि सम्भवत्येव, नहि सूत्रेणापूर्वा शक्तिस्तत्रोत्पाद्यते, अपि तु स्वाभाविक्येव शक्तिः साधुतयाऽनुशिष्यते, तथापि स्वाभाविकशक्त्यनुवादाय सूत्रस्यावश्यकत्वमेव, विवेचयिष्यते चैतदग्रिमसूत्रव्याख्यायां विस्तरेण । अत्रैकस्य शेषविधानेऽपि बहुषु समानार्थेषु शब्देषु कस्यैकस्य शेष इत्यत्र विनिगमकाभावेन पर्यायेण सर्वेषामपि शेषो भवतीत्याह–**विशेषानुपादानात् पर्यायेण शेषो भवतीति** । समानामित्यत्र बहुवचनेन यत्र बहवो भवेयुस्तत्रैवैकस्य शेषः स्यादित्याशङ्कायामाह–**बहुवचनमतन्त्रमिति**–अतन्त्रमित्यस्याविवक्षितमित्यर्थः, तथा च द्वयोरप्येकः शिष्यत इति लभ्यत इत्याह–**तेन द्वयोरप्येकः शिष्यते** इति ।

अथ विगृह्योदाहरति–**वक्रश्च कुटिलश्चे**ति विग्रहः, पर्यायेणैकशेषो भवतीति द्विधैकशेषमाह–**वक्रौ कुटिलौ वे**ति, समस्तपदानामप्येकशेषो भवतीत्यावेदनाय सविग्रहं दृष्टान्तान्तरमाह–**वक्रदण्डश्च कुटिलदण्डश्चे**ति विग्रहः, **वक्रदण्डौ कुटिलदण्डाविति वे**ति चैकशेषस्वरूपम्, वक्रश्चासौ दण्डश्च वक्रो दण्डो यस्येति वा वक्रदण्डः, एवं कुटिलदण्ड इत्यत्रापि । अतिदिशति–**एवमिति**, **लोहिताक्षौ रक्ताक्षाविति वे**ति एकशेषस्वरूपम्, लोहिताक्षश्च रक्ताक्षश्चेति विग्रहः, लोहिते अक्षिणी यस्य स लोहिताक्षः "सक्थ्यक्ष्णः स्वाङ्गे" [७. ३. १२६.] इति समासान्तष्टः, एवं रक्ताक्ष इत्यत्रापि । द्वयोरेकशेषमुदाहृत्याथ सविग्रहं बहूनामेकशेषमुदाहरति–**सितश्च शुक्लश्च श्वेतश्चे**ति विग्रहः, **सिताः शुक्लाः श्वेता वे**ति एकशेषस्वरूपम् ।

अग्रिमसूत्रेण स्वरूपाणामेकशेषस्य विधीयमानत्वेन प्रकृतसूत्रे समानामिति कथनेन व्याख्यानतोऽर्थेनैव समानामिति लभ्येतैवेति 'अर्थेन' इति पदं व्यर्थमित्याशङ्क्याह–**अर्थेन समानामिति किमि**ति, प्रत्युदाहरणमुखेनोत्तरयति–**प्लक्ष-न्यग्रोधौ** इति–अत्र समासात् पूर्वं योऽर्थो लोके प्रसिद्धः स एव समाश्रीयते, प्रकृतसूत्रे 'अर्थेन' इति पदोपादानसामर्थ्यात्, अन्यथा पूर्वसूत्रप्रतिपादितरीत्या द्वन्द्वे उभयोरप्युभयार्थवाचकत्वेन समानार्थत्वं स्यादेवेति प्रत्युदाहरणासंगतिः स्यात्, समासात् पूर्वं प्रसिद्धमर्थमादाय च भिन्नार्थत्वेन प्रकृतसूत्राप्रवृत्त्या द्वन्द्वः सिध्यति । वस्तुतस्तु अग्रिमसूत्रस्य रूपेण समानां विषये प्रवृत्त्यर्थं प्रकृतसूत्रे 'अर्थेन समानाम्' इति कथनमावश्यकमेवेति प्रश्नोऽयं निराधार एव, तथापि 'तुष्यतु दुर्जनः' इति न्यायेन समाधानान्तरमेवोक्तम् । द्वयोर्द्वन्द्वं प्रत्युदाहृत्य बहूनां द्वन्द्वं प्रत्युदाहरति–**धव-खदिर-पलाशाः** इति । अत्रेदं बोध्यम्–अर्थेन समानामिति किमिति प्रश्नस्य क आशयः–किं विशेषणांशमात्रे प्रश्न उत विशिष्टे पदद्वये ?, विशेषणांशमात्रे इति चेत् ? तर्हि समानामित्येतावदुक्तौ केन रूपेण साम्यं जिघृक्षितमिति सन्देहे सूत्रार्थ एवानिर्णीतः स्यादिति लक्ष्यसंस्कार एव न स्यात्, सर्वथा साम्यस्यासम्भवात् । पदद्वयविषये प्रश्ने सति 'सहोक्तावेकः शेषः' इत्येतावन्मात्रार्थत्वे सर्वत्र द्वन्द्वे एकशेष एव स्यादिति द्वन्द्वस्य निर्विषयत्वापत्तिरिति । **सहोक्तावित्येवे**ति–अन्यथा द्वन्द्वतो विषयविभागेन द्वन्द्वापवादत्वमिष्टमस्य न सिध्येत् । किञ्चान्यत्राप्येतत्प्रवृत्तौ समुच्चये वक्रश्च कुटिलश्चेत्यत्रापि प्रवृत्तिः स्यादित्याह–**वक्रश्च कुटिलश्चे**ति । **द्वन्द्वापवादो योग** इति ।

एकशेषस्थले षट्प्रकारा विप्रतिपत्तयः– १ किं प्रत्येकमेव विभक्तौ परतः, एकं नाम शिष्यतेऽन्यानि नामानि लुप्यन्ते [ विभक्तयश्च सर्वा एवावतिष्ठन्ते तत्र शास्त्रव्यापाराभावात् ]? । २ किं वा सविभक्तिकानामेव नाम्नामेकस्य सविभक्तिकस्य शेषोऽन्येषां सविभक्तिकानामेव निवृत्तिः ? । ३ अथवा वृक्षश्च वृक्षश्चेति विगृह्य द्वन्द्वे कृते विभक्तिलुपि च एकस्य शेषोऽन्येषां निवृत्तिः ? । ४ उतानागतायामेव विभक्तौ नाम्नामेकशेषस्ततः स्यादिः ? । ५ उताहो द्वन्द्वप्राप्त्यवस्थायामेवैकशेषः ? । ६ आहोस्विद् नामसमुदायस्यैवार्थवत्त्वान्नामसंज्ञायां ततो द्विवचनादौ कृते प्रत्येकमपि नामत्वस्याक्षतत्वेनैकशेषः ? । तत्र नाद्यः पक्षः–निवर्तमाननामसम्बन्धिविभक्तीनामपि विद्यमानत्वेना-

नेकविभक्तिश्रवणप्रसङ्गात् । न द्वितीयः-तत्र निवर्तमानानां विभक्त्या सह निवृत्तावपि शिष्यमाणस्य निवर्तमानार्थबोधकत्वेन द्वित्वादिसंख्यायोगेऽपि शिष्यमाणविभक्तिश्रवणमेव स्यात्, सत्यां विभक्तौ विभक्त्यन्तरस्यानुत्पादाद् विभक्त्यन्तरस्य नाम-5 त्वाभावेन विभक्तिविधायकसूत्रे च नाम्न एव प्रकृतित्वेनाश्रयणात्। एवं न तृतीयः-द्वन्द्वे कृते तत्र समासान्तप्रत्ययप्रवृत्त्यापत्तेः, तथा च ऋक् च ऋक् चेति विग्रहे द्वन्द्वे तत एकशेषे समासान्ते कृते आपि 'ऋचे' इति रूपं स्यान्न तु 'ऋचौ' इति। न चतुर्थः-एकशेषस्य पदविधित्वावश्यकत्वेन नाममात्रस्य पदत्वा-10 भावेन "समर्थः पदविधिः"[७.४.१२२.] इति परिभाषया च सामर्थ्यस्यापेक्षितत्वेनापदस्य च प्रयोगानर्हत्वेन तत्र सामर्थ्याभावात्। नापि पञ्चमः-तत्रापि पक्षे सविभक्तिकत्वेन शिष्यमाणे एकवचनप्रसङ्गस्य सत्त्वादेव। नापि षष्ठः-नाम्नोऽर्थवत्त्वेऽपि नामसमुदायस्य लोके प्रयोगानर्हत्वेनार्थवत्त्वाभावात्, अर्थवत्त्वं 15 च एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधजनकत्वेन प्रसिद्धत्वम्, तच्च नामसमुदाये न दृष्टम्, समासादौ तथादृष्टत्वेऽपि तत्रानुशासनबलादेवार्थवत्त्वकल्पनादिति न कोऽपि पक्षः साधीयानिति कस्यामवस्थायामेकशेष इति चेत्? अत्रोच्यते-अन्तिमपक्षत्रये दोषाभावात्, न च चतुर्थे 20 पदविधित्वाभावप्रसङ्गः, एकशेषस्य पदविधित्वे मानाभावात्, न च पञ्चमे शिष्यमाणे एकवचनप्रसङ्गः, द्विवचनाद्यन्तानामेवैकशेषात्, तथा च वृक्षौ च वृक्षौ च-वृक्षौ, वृक्षाश्च वृक्षाश्च वृक्षाश्च-वृक्षा इति स्थितावेकशेषोऽत्र पक्षे। न च षष्ठे नामसमुदायेऽप्यर्थवत्त्वाभावः, तत्र मानाभावात्। इत्थं च पञ्चम-25 पक्षमाश्रित्यैव द्वन्द्वापवादत्वकथनमिति स एव पक्ष इहाचार्याणां सम्मतः, अन्येषु पक्षेष्वन्ये दोषास्तत्परिहाराश्च सम्भवन्ति, तेऽग्रिमसूत्रव्याख्यायां महाभाष्यादिरीत्या विवेचयिष्यन्त इतीह नोच्यन्ते ॥ ३. १. ११८. ॥

## स्यादावसंख्येयः । ३ । १ । ११९ ॥

30 **त० प्र०**—**सरूपार्थं वचनम्, सर्वस्मिन् स्यादौ विभक्तौ समानां-तुल्यरूपाणां सहोक्तौ गम्यमानायामेकः शिष्यते, असंख्येयः-संख्येयवाचि शब्दरूपं वर्जयित्वा। अक्षश्च-शकटाक्षः, अक्षश्च-देवनाक्षः, अक्षश्च-विभीतकाक्षः-अक्षाः, एवं-पादाः, माषाः, श्येनी च श्येनी च-श्येन्यौ, एवं-हरि-35 ण्यौ, रोहिण्यौ; वृक्षश्च वृक्षश्च-वृक्षौ, वृक्षश्च वृक्षश्च वृक्षश्च-वृक्षाः। स्यादाविति किम्? माता च-जननी, माता च धान्यस्य-मातृमातारौ, याता च-देवरजाया, याता च-गन्ता यातृयातारौ, अत्र ह्येकत्र 'मातरौ, यातरौ' इति, अन्यत्र 'मातारौ, यातारौ' इत्याकारे रूपं भिद्यते। अन्ये तु "यस्मिन् स्यादौ ये शब्दास्तुल्यरूपा भवन्ति तस्मिन् स्यादौ तेषां** 40 **स्याद्यन्तरे विरूपाणामप्येकशेषो भवति, तेन 'मातृभ्यां, मातृभिः, मातृभ्यः, मात्रोः, मातॄणां, मातृषु' इत्याद्यपि भवति" इत्याहुः। अपरे-तु "अत्रापि बहुवचने ताभिस्तैरित्याद्यनुप्रयोगवैषम्यान्न भवितव्यमेकशेषेण, द्विवचनेन तु ताभ्यां तयोरित्यनुप्रयोगसाम्याद् भवितव्यमेव" इत्याहुः।** 45 **असंख्येय इति किम्? एकश्च एकश्च, द्वौ च द्वौ च, चत्वारश्च चत्वारश्च, द्वन्द्वोऽपि न भवत्यनभिधानात्। संख्येय इति कर्मनिर्देशात् संख्यानवाचिनो भवत्येव-विंशतिश्च विंशतिश्च-विंशती, नवतिश्च नवतिश्च नवतिश्च-नवतयः। द्वन्द्वापवादोऽयं विधिः; तेनाकृतद्वन्द्वानामेवैकशेषे वाक् च वाक् च-** 50 **वाचावित्यादि सिद्धम्, अन्यथा द्वन्द्वे कृते परत्वात् समासान्ते कृते वैरूप्यादेकशेषो न स्यात् ॥ ११९. ॥**

**श० म० न्यासानुसन्धानम्-स्यादा०।** अर्थेन समानामिति चेदनुवर्तेत तदास्य वैयर्थ्यमेव स्यात्, अर्थेन समानां सरूपाणामपि पूर्वेणैव सिद्धेरिति 'अर्थेन' इति नानुवर्तते, तथा 55 च समानामित्येतावन्मात्रमनुवृत्तम्; तत्रार्थेन समानां पूर्वेण सिद्धिरिति, अर्थेन रूपेण च समानां, केवलेन रूपेणापि समानां भिन्नार्थानामपीह ग्रहणमित्याह-**सरूपार्थं वचनमिति**। नाम्नामेवेहोद्देश्यत्वेन तेभ्यः स्यादिविभक्तेरेवोत्पत्त्या 'स्यादौ' इति पदमव्यावर्तकं स्यादिति तत्सामर्थ्याल्लब्धमर्थमाह-**सर्व-** 60 **स्मिन् स्यादौ विभक्ताविति**-क्वचिदेकत्र स्यादौ सरूपाणां व्यावर्तनाय तदिति भावः, एतच्च प्रत्युदाहरणावसरे स्फुटीभविष्यति। संख्यावाचकैकशब्दादावप्यस्य प्रवर्तनेनैकशब्देनैवानेकसंख्याबोधनेच्छायामेकशेषापत्तावनिष्टं प्रसज्येतेति तन्नैकशेषाप्रवृत्त्यर्थमसंख्येय इति पदमित्याह-**संख्येयवाचिशब्द-** 65 **स्वरूपं वर्जयित्वेति**।

"अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रिये।
बिभीतकेऽक्षः कर्षे च शकट-व्यवहारयोः॥"

[शाश्वतः]

इत्यक्षशब्दस्य भिन्नार्थत्वेऽपि सरूपत्वेन एकशेषो भवती- 70 त्याह-**अक्षश्च शकटाक्ष** इत्यादिना, अक्षश्चाक्षश्चाक्षश्चेत्येव विग्रहः, अर्थप्रदर्शनायापरोऽशः, **अक्षाः** इत्येकशेषः, अतिदिशति-**एवमिति**, **पादाः** इत्येकशेषः, पादश्च पादश्च पादश्चेति विग्रहः,

"पादो भासि तुरीयांशे गिरेः प्रत्यन्तपर्वते।"
"पादा-ऽङ्घ्रिचरणा जन्तोरङ्गे मूले च भूरुहाम्।" 75

[ शाश्वतः ]

इति पादशब्दस्यानेकार्थत्वम्। **माषाः** इत्येकशेषः, माषश्च माषश्च माषश्चेति विग्रहः।

"माषो माने धान्यभेदे मूर्खे त्वग्दोषभिद्यपि ।"

[ अनेकार्थसंग्रहः। ]

इति माषशब्दस्यानेकार्थत्वम् । **श्येनी च श्येनी चेति** विग्रहः, **श्येन्यौ** इति चैकशेषः, श्वेतवर्णा स्त्री श्येनी, श्येनी च श्येनपक्षिणीति भिन्नार्थत्वम्। अतिदिशति-**एवमिति**, **हरिण्यौ** इत्येकशेषः, हरितवर्णा स्त्री हरिणी, हरिणी च हरिणस्त्रीति भिन्नार्थत्वम् । **रोहिण्यौ** इत्येकशेषः, रक्तवर्णा स्त्री रोहिणी, रोहिणी च नक्षत्रविशेष इति भिन्नार्थत्वम् । समानार्थानामपि सरूपाणामनेनैवैकशेषः परत्वादित्याह-**वृक्षश्च वृक्षश्चेति** विग्रहः, **वृक्षौ** इत्येकशेषः, **वृक्षश्च वृक्षश्च वृक्षश्चेति** विग्रहः, **वृक्षाः** इत्येकशेषः ।

पदकृत्यं प्रदर्शयितुं शङ्कते-**स्यादाविति किमिति**, 'स्यादौ' इत्यस्य 'सर्वस्मिन् स्यादौ' इत्यर्थपरत्वेन व्याख्यातत्वात् क्वचित् स्यादौ सरूपाणां ग्रहणं न भवति, तदभावे च तेषामपि ग्रहणे सति तत्राप्येकशेषः स्यादित्याह-**माता च जननी माता च धान्यस्येति** विग्रहः, एकस्य मातृशब्दस्य जननीत्यर्थः, अपरस्य च मानकर्तेति भिन्नार्थत्वम्, अनयोर्भ्यामादौ सारूप्येऽप्यौजसादौ वैरूप्यान्नैकशेषः, किन्तु द्वन्द्वसमास एवेत्याह-**मातृमातारौ** इति, एवं-**याता च देवरजाया याता च** गन्तेति विग्रहः, **यातृ-यातारौ** इति च द्वन्द्वः, 'स्यादौ' इत्यनेन कथं वारणं भवतीत्याह-**अत्र ह्येकत्रे**त्यादि, जननीवाचिनि मातृशब्दे देवर-जायावाचिनि च यातृशब्दे औपरे "अर्डौ च" [ १. ४. ३९. ] इत्यरादेशे 'मातरौ यातरौ' इति रूपम्, परिच्छेत्तृवाचिनि मातृशब्दे गन्तृवाचिनि यातृशब्दे च औपरे "तृ-स्वसृ०" [ १. ४. ३८. ] इत्यारादेशे 'मातारौ यातारौ' इति रूपं भवतीति वैरूप्यसद्भावात् तयोः परस्परमेकशेषो न भवति । ननूभयत्र तृप्रत्ययसद्भावात् कथं रूपभेद इति चेदुच्यते-"तृ-स्वसृ०" [ १. ४. ३८. ] इति सूत्रे तृशब्देन तृजन्त-तृन्नन्तयोरुभयोरपि ग्रहणस्येष्टत्वेन नप्त्रादीनामपि तेनैव सिद्धे पृथक् तेषां ग्रहणं व्यर्थं सत् ज्ञापयति-उणादिनिष्पन्नानामेषामेव तृजन्त-तृन्नन्तानां ग्रहणं नान्येषामिति जननी-देवरजायावाचिनोर्मातृ-यातृशब्दयोरिह ग्रहणं न भवति, परिच्छेत्तृ-गन्तृवाचिनोस्तु ग्रहणं भवत्येवेति तयोरारादेशे सति वैरूप्यं स्यादेवेति । मतान्तराण्याह-**अन्ये त्वि**त्यादिना ।

पातञ्जलमहाभाष्ये नाम्नामेकशेषो विभक्त्यन्तानां वेति पक्षयोर्विचारे प्रस्तुते मातृशब्दयोः सारूप्येण तयोरेकशेष स्यादिति पूर्वपक्षिणाशङ्किते न केवलं नामावस्थायामेवैतयोः सारूप्यमपि तु क्वचिद् विभक्त्यन्तावस्थायामपीति तत्रैकशेषस्यावारणीयत्वेनान्यत्रापि पक्षे [ विभक्त्यन्तानामेकशेषपक्षेऽपि ] तयोः प्रतिषेधो वक्तव्यः स्यादिति, तयोरेकशेषस्तत्र तत्रेष्ट एवेति भाष्याशयमाश्रयतामिदं मतम् । मुख्यपक्षमाह-**अपरे त्वत्रापी**ति-मातृभिरित्येकशेषप्रयोगस्यानुप्रयोगैक्येन भाव्यम्, तत्रैकस्य मातृशब्दस्य स्त्रीलिङ्गत्वेनापरस्य पुंलिङ्गत्वेन चैकत्र ताभिरन्यत्र तैरित्यनुप्रयोग उचित इति वैषम्यं स्यादिति तयोर्यत्र विभक्तावैकरूप्यं तत्रैकशेषस्येष्टत्वमुचितमिति विभक्त्यन्तानामेकशेषपक्षेऽत्र नैकशेष इति नाम्नामेवैकशेषपक्षेऽयं दोष उक्त इति प्रकृतभाष्याशयादिति । तथा च यत्रानुप्रयोगसाम्यं तत्रैवैकशेष इति बहुवचने एकशेषाभावेऽपि द्विवचने भ्यामादावेकशेष उचित एवेति, तदाह-**द्विवचने तु ताभ्यामि**त्यादिना । नागेशेन तु प्रकृतभाष्याशयवर्णनपरकैयटग्रन्थव्याख्यावसरे 'प्रकरणादिना प्रतीतिसम्भवाच्चिन्त्यमेतत्' इत्युक्तम्, तस्यायमाशयः-योऽयमनुप्रयोगसाम्यमेकशेषहेतुरुक्तः स प्रकृते न बाधकः, यतः प्रकरणादिना पुंस्त्व-स्त्रीत्वनिर्णये सिद्धे यथा स्त्री-पुंलिङ्गयोर्मातृशब्दयोरेकशेषस्तथाऽनुप्रयुज्यमानयोस्तच्छब्दयोरपीति, तयोरेकशेषे पुंलिङ्गानुसारमेव लिङ्ग-वचनव्यवस्था-संभवे तस्य बाधकत्वे बीजाभावात्, तथा च नाम्नामेकशेषपक्षे सर्वत्र स्यादौ मातृ-मात्रोरेकशेषः स्यादिति तद्वारणाय प्रतिषेध आवश्यक इत्येव भाष्याशयः। पश्चादुभयोर्विभिन्नार्थत्वेन सहोक्त्यसंभवादिकारणेन तयोरेकशेषाभाव इति समाधानमिति त्वन्यत् । **असंख्येय इति किमि**ति-अनेकशब्दार्थस्य द्व्यादिशब्दैरुक्तत्वान्न तत्रैकशेषप्राप्तिरिति प्रश्नकर्तुराशयः, उत्तरयति-**एकश्च एकश्चे**त्यादिना, द्वि-चतुःशब्दादिभ्योऽनेकार्थाभिधाने घटादिशब्देभ्य इव न स्यादित्यवश्यमेकशेषेणानेकार्थत्वं वक्तव्यमित्येकादिशब्दानामप्येकशेषप्रसङ्ग इति तद्वारणाय 'असंख्येय' इति पदमावश्यकमिति समाधानकर्तुराशयः । "त्यदादिः" [ ३. १. ६५ १२०. ] इत्यग्रिमसूत्रेणापि तत्र नैकशेषः, 'निषेधाश्च बलीयांसः' इति न्यायेन 'असंख्येय' इति पदस्य 'संख्येयो न शिष्यते' इति निषेधपरत्वेन तत्सूत्रविषयेऽपि तस्य प्रवृत्तेर्दुर्वारत्वात् ।

महाभाष्ये तु प्रकारान्तरेण तत्रैकशेषो वारितः "सरूपाणामेकशेष एकविभक्तौ" [ पा० सू० १. २. ६४. ] इति सूत्रे । अयं हि तत्रत्यभाष्याशयः-यत्रैकः शब्दोऽनेकमर्थमभिधातुं शक्नोति तत्रैवैकशेषो नान्यत्र प्रयुक्तानामन्वाख्यानात्, एकाविति चोक्तावसहायावित्यादिरर्थो गम्यते न तु द्वाविति, अर्थसम्प्रत्यायकत्वाभावादेव तत्र नैकशेषः । किञ्चैकशेषविशिष्टैनैकशब्देन योऽर्थः प्रत्याययितुमिष्टः सोऽर्थोऽन्येन द्वावित्यादिशब्देनासंदिग्धरूपेण प्रत्याय्यत एवेति न तत्रैकशेषः, अपि च द्वन्द्ववारणार्थमत्रानभिधानस्यावश्यमाश्रयणीयतया तेनैवैकशेषवारणमपि स्यादेवेति व्यर्थमेव तद्वारणाय यत्नान्तरकरणमपि ।

अत्रान्यः प्रत्यवतिष्ठते–भवताऽत्रैकशेषवारणार्थं हेतुद्वयमुक्तम्–एकशेषविशिष्टेनार्थानवगतिः, अन्यपदेन तदर्थस्य स्पष्टप्रतिपत्तिश्चेति तत्र प्रथमपरिहारो न युक्तः, यतो यत्रार्थानवगतिस्तत्राप्येकशेषो भवत्येव, यथा–गार्ग्यश्च गार्ग्यायणश्चेति गार्ग्याविति, अत्र हि "वृद्धो यूना तन्मात्रभेदे" [ ३. १. १२४. ] इत्येकशेषो भवति, न च स्पष्टं तत्र गार्ग्यस्य गार्ग्यायणस्य च प्रतीतिः, गार्ग्ययोरेव द्वयोर्झटिति बुद्धावारोहात्, प्रकरणादिवशाच्च सन्देहनिवृत्तिपूर्वकं गार्ग्यस्य गार्ग्यायणस्य प्रतीतिः; ननु वचनसामर्थ्यात् [ वृद्धो यूनेति शास्त्रारम्भबलात् ] सन्देहेऽप्येकशेषः स्यात्, इह च न किमपि वचनं विशिष्योपलभ्यते येन सन्देहे सत्यप्येकशेषप्रवृत्तिः स्यादिति चेत्? न–अक्षश्चाक्षश्चाक्षश्चेति विग्रहे भिन्नार्थकाक्षशब्दानामप्येकशेषस्य संदिग्धविषयेऽपि प्रवृत्तेरङ्गीकारादिहापि तत्प्रवृत्तेर्दुर्वारत्वमिति तद्वारणाय किमपि वचनमेवारम्भणीयम्। किञ्च द्वितीयो हेतुरुक्तोऽन्येन पदेनासन्दिग्धतया तदर्थप्रतिपादनमिति सोऽपि न युक्तः, यतश्चत्वारिंशच्छब्देन प्रतिपादितेऽप्यर्थे विंशतिश्च विंशतिश्च–'विंशती' इत्येकशेषः क्रियत एवेति। अत्रोत्तरम्–तर्हि नायं हेतुसमुच्चयोऽपि तु विशिष्ट एक एव हेतुः, तथा च वाचकशब्दान्तरसत्ताविशिष्टार्थासम्प्रत्ययेनैकादि-दशान्तानां संख्यावाचकशब्दानामेकशेषो न भवति, विंशत्यादीनां तु कृतैकशेषादर्थसम्प्रत्ययसत्त्वे विशिष्टहेत्वभावादेकशेषो भवत्येवेति भावः। स्वमते चैकादीनां संख्येयपरतया तत्रैकशेषनिवृत्त्यर्थं स्पष्टतया 'असंख्येय' इति पदमेव निवेशितम्, विंशत्यादीनां च संख्यावाचकतया निषेधाभावादेकशेषो भवत्येवेति 'व्याख्यानाद् वरं करणम्' इति न्यायानुकूलः पन्थाः। नन्वेकश्चैकश्चेत्यर्थे एकशेषोऽनेन वारितश्चेद् द्वन्द्वसमास एव तत्र स्यादिति चेत्? अत्राह–**द्वन्द्वोऽपि न भवत्यनभिधाना**दिति–एकशब्दस्य द्वन्द्वे सति न द्व्यादिरर्थोऽभिधीयतेऽपि त्वेकस्यैव पौनःपुन्यादिप्रतिपादनाय द्वित्वं क्रियत एकैकेन कृतमित्यादौ विंशती इत्यादिसाधनायाह–**संख्येय इति कर्मनिर्देशा**दिति–संख्येय इत्यस्य संख्यानकर्मीभूत इत्यर्थाद् यत्र संख्येयस्य प्राधान्यं तत्रैवैकशेषनिषेधः, यत्र तु संख्याया एव प्राधान्यं तत्र न निषेधः, विंशत्याद्याश्चोभयनिष्ठा अपि स्वां संख्यां लिङ्गं च न जहतीति न संख्येयप्रधाना इति तत्र नानेनैकशेषनिषेध इति भावः। **द्वन्द्वापवादोऽयं विधि**रिति–पूर्वसूत्रव्याख्यावसरे षट् पक्षा एकशेषविषये प्रतिपादिताः, तेषु पक्षत्रयस्य सम्भावना च दर्शिता, तत्र च पक्षत्रये द्वन्द्वप्राप्तिसत्त्व एवैकशेषप्रवृत्तिरिति द्वन्द्वापवादत्वं भवतीति भावः। न च द्वन्द्वः क्रियतां पश्चादेकशेषो भविष्यतीत्युभयोः प्रवृत्तिसम्भवात् कथं बाध्य-बाधकभाव इति वाच्यम्, सत्यपि सम्भवे बाध्यबाधकभावस्य स्वीकारात्, द्वन्द्वनिमित्तकसमासान्तप्रत्ययप्रवृत्त्याऽनिष्टरूपापत्तेश्चेत्याह–**तेनाकृतद्वन्द्वानामेवे**ति, **तेन** द्वन्द्वापवादत्वस्वीकारेणेत्यर्थः, इतरेतरयोगवत् समाहारद्वन्द्वोऽपि न तत्र [ सरूपाणां समाहारे ], तथा च द्वन्द्वात् पूर्वमेवैकशेषे "चवर्ग-द्-ष्-हः समाहारे" [ ७. ३. ९८. ] इत्यत्प्रत्ययाभावे **वाचावि**त्यादि सिध्यति, वैपरीत्ये दोषमाह–**अन्यथे**ति। ननु क्रियतां द्वन्द्वः, द्वन्द्वप्रवृत्त्यनन्तरमेकशेषे सति द्वन्द्वरूपविनाशात् समासान्ताभावे न रूपे भेद इति चेत्? अत्र प्राह–**परत्वात् समासान्ते** इति–तथा च पूर्वोत्तरपदयोर्वैरूप्ये सति सरूपत्वनिबन्धन एकशेषो न स्यात्; पूर्वसूत्रेण भविष्यतीति चेत्? तथापि रूपभेदस्य दुर्वारत्वात्। वाचावित्यादौ समाहारद्वन्द्वविषयेऽप्येकशेषे वाक्शब्दाद् द्विवचनमेव, कुतः? "क्लीबमन्येनैकं च वा" [ ३. १. १२८. ] इत्यत्र समाहारेतरेतरविवक्षया विकल्पेनैकत्वे सिद्धेऽप्येकग्रहणात्, तेन विशेषाभावे सर्वत्रैकशेषे द्विवचनाद्येव भवति।

केचित् तु–"प्रथमेन पुरुषेण सहोक्तौ मध्यमः पुरुषः शिष्यते, यथा–पचति च पचसि च–पचथः, इति; प्रथममध्यमाभ्यां सहोक्तावुत्तमः शिष्यते, यथा–पचसि च पचामि च–पचावः; पचति च पचसि च पचामि च–पचामः, इति; अत्र क्रिययोः क्रियाणां वा सरूपस्यैकार्थत्वस्य वाऽभावेनैकशेषाप्राप्तेरेकशेषो वक्तव्यः" इत्याहुः, परं तु महाभाष्यकृता तन्मतमनूद्योपेक्षितम्, यतश्च स च त्वं चेति विग्रहे त्यदादित्वनिमित्तके परत्वादेकशेषे युवामित्येव प्रयोग उचित इति तदनुसारेण 'पचथः' इत्यस्या एव क्रियाया औचित्यम्, प्रकरणादिवशाच्चार्थप्रतीतिः; एवं स च त्वं चाहं चेति–वयमिति रूपम्, तत्र पचाम इत्यस्या एव क्रियाया औचित्यमिति विनापि क्रियाणां परस्परमेकशेषेण कार्यसिद्धौ तदर्थमेकशेषकथनस्य नावश्यकत्वमिति व्याकरणप्रक्रियाज्ञानशून्यस्यैवायं प्रश्न इत्युपेक्षार्ह एवेति भाष्याशयः।

अथेदमाशङ्क्यते–एकशेषविधानात् पूर्वं 'प्रत्यर्थं शब्दनिवेशः' इति सिद्धान्तेन एकैकः शब्दोऽनेकार्थाभिधायी, सहविवक्षायां तु एकशेषेण निवृत्तेषु शब्दान्तरेषु शिष्यमाणः शब्दः स्वीये एकस्मिन्नेवार्थे वर्ततेति तत्रैकवचनमेव स्यान्न द्विवचन-बहुवचने, तथा च द्विवचन-बहुवचनोत्पत्त्यर्थं यत्नो विधेयः, यदि च शिष्यमाणेनैकेनापि स्वभावत एवानेकोऽर्थः कथ्यते तर्हि कोऽर्थ एकशेषारम्भेण, तं विनाप्येकेन शब्देनानेकार्थाभिधानसम्भवात्; अथ वचनबलादेवैकस्यानेकार्थत्वमित्युच्यते, तर्हि तत्रैकोऽयं द्व्यर्थो बह्वर्थश्च भवतीत्यपि वचनमाश्रयणीयं द्विवचन-बहुवचनोत्पत्त्यर्थम्।

अत्रोच्यते–एकशेषारम्भसामर्थ्यादेवायमर्थः सिध्यति, यत् शिष्यमाणः शब्दोऽनेकार्थाभिधायीति, एकेन हि शब्देनाने-

कार्थाभिधानार्थमेवैकशेषः क्रियते, एकार्थाभिधानायानेकशब्दप्रयोगप्रसङ्ग एव नेति किमर्थं तत्रैकशेषः क्रियते, तद्वाचिनः शब्दस्य प्रयोगं विना तदर्थावगतिर्न दृश्यते, यत्र च तद्वाचकशब्दं विनापि तदर्थावगतिर्भवति तत्र किमपि कारणं स्वीकार्यमेव, यथा 'अग्निचित् सोमसुत्' इत्यादौ कारकवचनादिवाचकशब्दं विना तदर्थस्य बोधो जायते, तत्र च लोपानुशासनमेव कारणम्, एवमिहापि चैकशेषानुशासनबलादेवैकेनापि शब्देनानेकार्थस्यावगतिर्भविष्यतीति न तदर्थं वचनान्तरमाश्रयणीयमिति, शिष्यमाणस्यैव लुप्यमानार्थबोधकत्वमवसेयम् ।

अत्रेदमाशङ्क्यते–लोके एकशेषमजानन्तोऽपि वृक्ष इत्युक्ते एकं वृक्षं, वृक्षावित्युक्ते वृक्षद्वयं, वृक्षा इत्युक्ते बहून् वृक्षान् प्रतिपद्यन्त एवेति लोकरीत्यैव शास्त्रेऽपि कार्यं सेत्स्यत्येवेति न तदर्थमेकशेषविधानमावश्यकमिति, 'अग्निचित्, सोमसुत्' इत्यादौ प्रत्ययं विधाय तल्लोपविधानं च प्रत्ययलक्षणकार्यार्थमिति न तदिह दृष्टान्तयोग्यम्, एकशेषेण कार्यान्तरस्यासाध्यत्वात् । यदि च प्रत्यर्थं शब्दस्य निवेशदर्शनादनेकार्थाभिधानायैकशब्दप्रयोगप्राप्तौ तन्निवृत्त्यर्थमेकशेष आरभ्यत इति कथ्येत, तदपि न; 'प्रत्यर्थं शब्दनिवेशः' इत्यत्र हि द्विवचन-बहुवचनान्ताभ्यामपि विग्रहस्य कर्तुं शक्यत्वेनार्थावर्थौ अर्थानर्थान् वा प्रति यत् तदपि प्रत्यर्थमेवेति स्वीकारादेकेनाप्यनेकार्थाभिधानसम्भवात् । एवं च व्यक्तिपक्षेऽप्येकेनैव शब्देनानेकार्थाभिधानसम्भावनायां सत्यामेकशेषारम्भो निष्फलः । न च द्वन्द्वबाधनार्थं स आरम्भणीय इति वाच्यम्, एकेनैवानेकार्थाभिधाने तदप्राप्तेः; घटघटावित्यादिरूपेण द्वन्द्वः स्यादित्यपि न, अनभिधानादेव तद्वारणसम्भवात् । यदि च शब्देन जातिरेवाभिधीयते सा चैकैवेकेनापि शब्देनानेकार्थाभिधानं सम्भवति तत उत्पद्यमाना विभक्तिश्च द्वित्वादिकं प्रत्याययिष्यतीति तत्र पक्षे एकशेषारम्भो वृथैव । जातेश्चैकत्वं सर्वव्यक्तिषु समानबुद्धिजननादवसीयते । गुणप्रमाणादिभिन्नेष्वपि गोपिण्डेषु गौर्गौरित्येकाकारप्रत्ययोत्पत्तेस्तत्कारणीभूतेन सामान्येनावश्यमेकेन भवितव्यम्, सैव च [जाति]शब्देनाभिधीयतेऽविशेषेण तादृशद्रव्याणां तेन शब्देनाभिधानात्, जातावभिधीयमानायां वाह-दोहादीनि कार्याणि द्रव्यद्वारा उपपद्यन्ते, जाति-द्रव्ययोश्चाभेदोपचाराद् गौः शुक्ल इत्यादौ सामानाधिकरण्यमुपपद्यते । अयं भावः–शुक्ल-नील-पीतादिगुणपरिमाणादिभिन्नेष्वपि गोद्रव्येष्वनुस्यूतैकाकारप्रतीत्या जातिसिद्धौ तत्रैव शक्तिग्रहः, शब्दाच्च तस्या एव बोधः । व्यक्तीनामानन्त्यात् तासु न शक्तिग्रहो न वा तासां वाच्यत्वम्, तासां विशेषरूपत्वेन विशेषावगतिप्रसङ्गात्, गौरित्युक्ते यथाऽऽकृति-रूपादिकं सामान्येन शाब्दबोधे भासते तथा तद्गतशुक्लत्वादिविशेषोऽपि भासेत, न च भासतेऽतः सामान्यमेवाभिधीयते शब्देन । जातेः शक्यत्वे तु तदाश्रयत्वेन सामान्याकृति-रूपादेरेव ग्रहणमिति न दोषः । यद्यपि बालस्य प्रथमतः शक्तिग्रहो व्यक्तिविशेषे एव, तथाप्यावापोद्वापन्यायेन व्यक्त्यन्तरेऽप्यानयनादिकार्यं दृष्ट्वा पूर्वजातविशेषविषयकशक्तिग्रहस्य जात्याश्रयमात्रे व्यवस्थितिर्भवति, अत एव चैकत्रैव व्यक्तावुपदेशाद् व्यक्त्यन्तरे तदुपदेशं विनापि ज्ञानम्, न च देश-काल-वयोऽवस्थादिभेदे प्रतीतिभेदः, सर्वस्मिन् देशे काले वयसि वा गौरित्येव प्रतीतेः । जातिपक्षाभिप्रायेणैव च विधिनिषेधशास्त्राणि प्रवृत्तानि । अयमाशयः–सर्वासां गोव्यक्तौ 'गौः' इत्येकाकारप्रतीतिर्जातिनिबन्धनैव, न सादृश्यैकार्थक्रियाकारित्वादिनिमित्ता भ्रान्ता प्रत्यभिज्ञा, किन्त्वभिन्नविषयनिमित्ता, 'न ब्राह्मणं हन्यात्' इत्यादिस्मृतिकाराणामपि निश्चितप्रमाणभावस्मरणवशनिबद्धवचनानां जात्याश्रयेण प्रवर्तनात्, एवम्भूतनिषेध-विध्यादिवचनानां तज्जातीयपदार्थमात्रे व्यापारादेकव्यक्तौ प्रयोगेण न चरितार्थत्वम् । ननु क एको ब्राह्मणो न हन्तव्य इत्यस्य विनिगमकाभावेन सर्व एव ब्राह्मणस्तस्य विषयो भवतीति वाच्यम्, वाक्यश्रवणकाले य एव प्रथमं तद्बुद्धावुपारूढस्तस्यैव तद्विषयतोपपत्तेः । एकस्या जातेरनेकव्यक्तिषु युगपत् समवस्थानासम्भवान्न तस्या एकत्वमिति चेत्? न–आदित्यप्रतिबिम्बवदेकस्या अप्यनेकाधिकरणसम्बन्धसम्भवात् । यद्यपि दृष्टान्तदार्ष्टान्तिकवैषम्यं प्रतिभाति, तथाहि–नैको द्रष्टा युगपदादित्यमनेकाधिकरणस्थं पश्यति, जातिं तु एक एव युगपदेवानेकव्यक्तिसम्बद्धामुपलभत इति, तथापीन्द्रप्रकाशवद् भविष्यति, यथैक एवेन्द्रो युगपदनेकैर्वेन्द्रशब्देनासमाहूतस्तदङ्गं भवति तथा जातिरपि युगपदनेकव्यक्तिसम्बद्धोपलप्स्यते–एकेनेति, एकशेषवादिनापि चैकस्यैव शब्दस्य युगपदनेकार्थसम्बन्धस्य स्वीक्रियमाणत्वात्, एकेनैव शब्देन तज्जातीयसकलद्रव्यावगतये च जातिरेव शब्देनोच्यत इत्यपि स्वीकार्यमेव । यद्यपि जातिपक्षे–एकेनैव शब्देन सकलद्रव्यावगतिस्वीकारे सर्वत्र सकलद्रव्योपस्थितौ शास्त्रविहितकर्मण एकत्र विधानेन साङ्गत्वं स्यात्, शास्त्रार्थस्याकृतत्वादिति दोष आपतितो भवति, तथापि प्रत्येकं वाक्यपरिसमाप्तिपक्षं स्वीकृत्यैकस्मिन्नपि द्रव्ये कर्मप्रवृत्तौ शास्त्रसार्थक्यमुपपादनीयम् । एवं चात्र पक्षे एकशेषारम्भस्य नावश्यकत्वमिति प्राप्ते प्रतिविधानम्–द्विवचन-बहुवचनोपपत्त्यर्थं तत्रापि पक्षे तत्स्वीकारस्यावश्यकत्वात् । व्यक्तिपक्षे च यद्यप्येकशेषारम्भस्यावश्यकत्वरूपं गौरवमस्ति, तथापि न तत्र द्विवचनाद्यनुपपत्तिरित्युभयपक्षसाम्यमेवेति प्रतिपाद्य, आकृतेर्जातेः सर्वत्र साम्येन वर्तनात् तस्या एव शब्देनाभिधाने लिङ्गवचनानुपपत्तिरिति व्यक्तिपक्ष एव समाश्रयणीय इत्याक्षिप्य, अन्ते जातिपक्ष एव सिद्धान्तितः, लिङ्ग-वचनव्यवस्थोपपत्तिश्च गुणविवक्षया

यद्यपि नोपपादयितुं शक्यते तथापि स्वसिद्धान्तेनैव तन्निर्णयः कार्य इत्युपपादितम्, तथाहि-लिङ्गविषये स्वसिद्धान्तः "संस्त्यान-प्रसवौ लिङ्गम्" इति वार्तिकेन प्रतिपादितः, तथा यथा व्यक्तिवादिनैकस्मिन्नभिधेये एकवचनं, द्वयोर्द्विवचनं, बहुषु बहुवचनमित्याश्रीयते तथा जातिवादिनापि समाश्रयितुं शक्यत एवेति स्फुटीकृत्य प्रतिपादितमिति विशेषावगतये तत एव द्रष्टव्यम्, व्यक्तिवादजातिवादोपपत्तयश्च शाब्ददीपिकादिग्रन्थे विस्तरशो विवेचिता एव, इह च प्रकरणवशादेव दिङ्मात्रं दर्शितो जातिवादः । अत्र पूर्वत्र च सूत्रे निर्धारणषष्ठीवोध्यसम्बन्ध-परिष्कारादिकं नवीना विवेचयन्ति, स च न प्रकृतसूत्रस्य मुख्यो विषय इति तदवसरे एव विवेचयिष्यत इत्यलं पल्लवितेन ॥ ३. १. ११९. ॥

## त्यदादिः । ३ । १ । १२० ॥

त० प्र०—त्यदादिनान्येन च सहोक्तौ त्यदादिरेवैकः शिष्यते । स च चैत्रश्च—तौ, यश्च मैत्रश्च—यौ, अयं च चैत्रश्च—इमौ, कश्च मैत्रश्च—कौ । *स्पर्धे परम्* इति त्यदादीनां मिथः सहोक्तौ यद्यत्पाठे परं तत् तदेवैकं शिष्यते—, स च यश्च—यौ, यश्च एष च—एतौ, एष च अयं च—एतौ, स च त्वं च—युवाम्, त्वं च भवांश्च—भवन्तौ, भवांश्च अहं च—आवाम्, अहं च कश्च—कौ, अहं च स च त्वं च—वयम् । बहुलाधिकारात् क्वचित् पूर्वमपि—स च यश्च—तौ, अयं च एष च—इमौ; त्वं च भवांश्च—युवाम् । त्यदादेः कृतैकशेषस्य स्त्री-पुं-नपुंसकलिङ्गानां युगपत् प्रयोगायोगात् पर्यायप्राप्तौ शिष्यमाणलिङ्गप्राप्तौ वा 'स्त्री-पुं-नपुंसकानां सह वचने स्यात् परम्' इति यथा-परमेव लिङ्गं भवति—सा च चैत्रश्च—तौ, स च देवदत्ता च—तौ, अत्र स्त्री-पुंसलिङ्गयोः परं पुंलिङ्गमेव भवति; सा च कुण्डे च—तानि, अत्र स्त्री-नपुंसकयोः परं नपुंसकमेव भवति, स च कुण्डं च—ते, तच्च चैत्रश्च—ते, अत्र पुं-नपुंसकयोः परं नपुंसकमेव भवति। कथं स च कुक्कुटः सा च मयूरी—ते कुक्कुट-मयूर्यौ ? उच्यते,—"परलिङ्गो द्वन्द्वोऽशी" [ लिङ्गानुशासने ] इति समासार्थस्य लिङ्गातिदेशात् तद्विशेषणस्य त्यदादेरपि तल्लिङ्गतैव न्याय्येति ॥ १२० ॥

**श० म० न्यासानुसन्धानम्-त्यदा०** । सहोक्ताविल्यनुवर्तते, सा च शब्दार्थमहिम्ना यौगपद्योच्चारणार्था, यौगपद्येनोच्चारणं च द्वयोर्बहूनां वा भवति, तत्र त्यदादिरेकः शिष्यमाण एव, अन्यश्च तत्सहयोगी कोऽपि समन्वेषणीयः, स च स्ववर्गीयोऽन्यवर्गीयो वेत्यत्र विनिगमकाभावादुभयं गृह्यते, तदाह-**त्यदादिनाऽन्येन चेति** । त्यदादिश्च सर्वाद्यन्तर्गणः, स च सर्वार्थवाचक इत्येकेनैव तेनोभयोरर्थयोर्लाभसम्भव इति न तेन सहान्येषां प्रयोगसम्भव इति चेत्? न—तस्य सामान्यतः सर्ववाचकत्वेऽपि विशेषतस्तेन तेन चैत्रत्वादिना रूपेण बोधाय तद्वाचकशब्दप्रयोगसम्भावनायां तेन सह द्वन्द्वो मा भूदित्येतदर्थमेकशेषस्यान्येनापि सहेष्यमाणत्वात् । अयमाशयः—यत्रैकस्तच्छब्दः प्रक्रान्तमैत्रवाची, द्वितीयश्च तादृशचैत्रवाची, तत्र स च स चेति विग्रहे 'तौ' इत्यादि रूपं यद्यपि पूर्वसूत्रेणापि सिद्धमेव तथापि यत्र गोबलीवर्दन्यायेनैकस्य तत्त्वेनापरस्य च चैत्रत्वेन बुबोधयिषा तत्र 'तच्चैत्रौ' इत्यादिद्वन्द्वबाधनाय सूत्रमिदमावश्यकमिति स च स चेति विग्रहेऽपि परत्वात् प्रवर्तेत एवेति । त्यदादेस्त्यदादिनैकशेषे बहुविशेषस्य वक्ष्यमाणत्वात् सूचीकटाहन्यायेन पूर्वं त्यदादेरन्येन सहैकशेषस्यैवोदाहरणमाह— **स च चैत्रश्चेति** विग्रहः, **तौ** इति चैकशेषः, स चेति चैत्रादन्यः कोऽपि पूर्वज्ञातः प्रतिनिर्दिश्यते, चैत्रश्चेत्यत्रापि ततोऽन्यः, अन्यथा तयोरेकनिर्देशे च शब्दद्वयानुपपत्तेः, तद्धि तयोः पदयोरर्थभेदे तयोरर्थयोः क्वचित् क्रियागुणादिप्रतिपत्तावितरेतरसद्वितीयतायां भवति, तयोः सहोक्तौ त्यदादेः शेषः । एवं **यश्च मैत्रश्चेति** विग्रहः, **यौ** इति चैकशेषः, **अयं च मैत्रश्चेति** विग्रहः, **इमौ** इति चैकशेषः, **कश्च मैत्रश्चेति** विग्रहः, **कौ** इति चैकशेषः । इह त्यदादेस्त्यदादिना सहवचने त्यदादेः शेषे तत्र विशेषानुपादानेऽपि नानियमेन त्यदादेः शेषो भवति, अपि तु नियमेन गणपाठे परस्यैव शब्दपरप्रतिषेधादित्याह-**स्पर्धे परमिति** "स्पर्धे" [ ७. ४. ११९. ] इति परिभाषासूत्रेण, **त्यदादीनां** त्यत्प्रभृतिसर्वादिगणपठितशब्दानाम्, **मिथः सहोक्तौ** परस्परेण सहवचने इत्यर्थः । यद्यपि शास्त्रयोरेव स्पर्धे सति पूर्वशास्त्रापेक्षया परशास्त्रस्य बलवत्त्वबोधिकेयं परिभाषा, तथापि पाठापेक्षया पूर्वत्वपरत्वेऽपि लक्ष्यानुरोधात् प्रकृतपरिभाषा स्वीक्रियत इत्यनेनावसीयते । **स च यश्चेति** विग्रहः, **यौ** इत्येकशेषः, अत्र तच्छब्दापेक्षया यच्छब्दस्य सर्वादिगणे परपाठ इति यच्छब्दस्यैव शेषः, अयं त्यदादिपाठः—'त्यद्, तद्, यद्, अदस्, इदम्, एतद्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्' इति, **यश्च एष चेति** विग्रहः, **एतौ** इति चैकशेषः, **एष च अयं चेति** विग्रहः, **एतौ** इति चैकशेषः, **स च त्वं चेति** विग्रहः, **युवामिति** चैकशेषः, **त्वं च भवांश्चेति** विग्रहः, **भवन्तौ** इति चैकशेषः, **भवांश्चाहं चेति** विग्रहः **आवामिति** चैकशेषः, अत्रास्मदपेक्षया भवतः परपाठात् तस्यैव शेषे 'भवन्तौ' इत्येवोदाहर्तुं युक्तं, तथाप्यस्मद आत्मनिर्देशकत्वेन सर्वापेक्षया शिष्यमाणत्वमुचितमित्यावामित्युदाहृतम्, 'भवन्तौ' इत्येह दर्शनीयम्, आवामिति तु परत्र 'क्वचित् पूर्वमपि' इत्यस्योदाहरणप्रसङ्गे

दर्शनीयमिति केचन। परैकशेषप्रयोगानुदाहृत्य पूर्वैकशेषस्यापि प्रयुज्यमानत्वात् तदुदाहर्तुमुपपत्तिं दर्शयति–**बहुलाधिकारात् क्वचित् पूर्वमपी**ति–न केवलं तावत् स्पर्धे यत् परं तदेव शिष्यते, किन्तु क्वचित् पूर्वमपीत्यर्थः, यद्यपि स्पर्धे 5 परमित्यत्र परशब्दस्येष्टवाचित्वेन यत्र यद् इष्टं तदेव तत्र बलवदिति लभ्यते, तेन च लक्ष्यानुरोधात् क्वचित् पूर्वशास्त्रप्रवृत्तिः क्वचिच्च परशास्त्रप्रवृत्तिरित्यपि पन्था विद्यते, न तत्र बहुलाश्रयणमावश्यकं, तथापि साधकाभ्युच्चयाय तदपि समाश्रितमिति ध्येयम्। पूर्वैकशेषमुदाहरति–**स च यश्चे**ति 10 विग्रहः, **तौ** इति चैकशेषः, **अयं च एष चे**ति विग्रहः, **इमौ** इति चैकशेषः, **त्वं च भवांश्चे**ति विग्रहः, **युवामि**ति चैकशेषः।

स्यादेतत्–यत्र समानलिङ्गानामेकः शिष्यते तत्र शिष्यमाणलिङ्गे न भेदः, यत्र च भिन्नलिङ्गानामेकशेषस्तत्र लिङ्गनिर्णयार्थ- 15 माह–**त्यदादेः कृतैकशेषस्ये**त्यादि, स्त्री-पुं-नपुंसकलिङ्गानां यत्रैकः शिष्यते, यथा स्त्री-पुंलिङ्गयोः–सा च चैत्रश्चेति विग्रहे चैत्रस्य त्यदाद्यन्यत्वेन तस्यैकशेषाभावे तच्छब्दस्यैव शेषे तस्य च स्त्रीलिङ्गतया 'ते' इति प्राप्तं शिष्यमाणलिङ्गयोगात्; अथवा पर्यायेण 'तौ, ते' इति प्राप्तं विनिगमकाभावात्; उतोभय- 20 लिङ्गता प्राप्ता, सा च युगपत् प्रयोक्तुं न शक्यते इति किमिहोचितमित्याशङ्कायां लिङ्गेषु स्त्री-पुं-नपुंसकेति क्रममाश्रित्य परमेव लिङ्गमास्थेयमिति समाधत्ते, एतच्च स्वलिङ्गानुशासनवचनेन प्रमाणयति–"**स्त्री पुं-नपुंसकानां सहवचने स्यात् परं [ लिङ्गम् ]।**" इति, **यथापरमेव लिङ्गं भवती**ति- 25 तल्लिङ्गं त्यदादिसम्बन्धि भवतु, अन्यसम्बन्धि वा, न तत्राग्रहः, किन्तु परमाश्रित्यैव लिङ्गं भवतीत्यर्थः।

उक्तलिङ्गानुशासनवचनस्यायमर्थः–स्त्री-पुं-नपुंसकलिङ्गानां सहवचने परं पुंलिङ्गं नपुंसकलिङ्गं वा भवति, स्त्री-पुंसयोः सहवचने पुंलिङ्गं भवति–सा च घटश्च–तौ, स च शाटी च– 30 तौ। स्त्री-नपुंसकयोर्नपुंसकम्–सा च वस्त्रं च–ते, तच्च शाटी च–ते। पुं-नपुंसकयोर्नपुंसकं च–स च वस्त्रं च–ते, तच्च पटश्च–ते। स्त्री-पुं-नपुंसकानां नपुंसकम्–सा च पटश्च वस्त्रं च–तानि, स च शाटी च–वस्त्रं च–तानि। युगपत् सर्वलिङ्गोपादानायोगे सति पर्याये शिष्यमाणलिङ्गे वा प्रसक्ते नियमार्थं 35 वचनम्। एतच्चाद्वन्द्वतत्पुरुषविशेषणानां वेदितव्यम्, द्वन्द्वतत्पुरुषविशेषणानां तु विशेष्यलिङ्गतैव, स च कुक्कुटः सा च मयूरी कुक्कुट-मयूर्यौ ते, अर्धं च पिप्पल्यास्तदर्धपिप्पली च सा च स्वाङ्ग्यौ। यद्यप्येतदस्ति भेदेनोपक्रम्य समुदितयोरभिधानम्, यथा–त्वं चाहं च वृत्रहन्नुभौ संयुध्यावहे इति। समुदितौ च 40 प्रक्रम्य भेदेनाभिधानं, यथा–प्लक्ष-न्यग्रोधावानय तं च तं चेति। तथापीह त्यदादीनामेकशेषे समुदितयोरेव विवक्षा कर्तव्या–अर्धपिप्पल्यौ ते इति, न तु भेदेन प्रक्रमितव्यमिति बहुविदः, ततश्च सा च सा चेत्येव विग्रह इति न्यायप्राप्तमेव लिङ्गम्। प्रदर्शितव्यवस्थापुरस्सरं सविग्रहं शेषमाह–**सा च चैत्रश्चे**त्यादिना। क्वचिदस्य व्यभिचारो दृश्यते स कथमित्याशङ्कते–**कथं** 45 **स कुक्कुटः सा च मयूरी–ते कुक्कुट-मयूर्यौ** इति–अत्र परं लिङ्गं यदि स्यात् तदा पुंलिङ्गत्वमेव स्यादिति तौ कुक्कुट-मयूर्याविव्येव स्यादित्याशङ्कार्थः, समाधत्ते–**उच्यते-परलिङ्गो द्वन्द्वोऽशी**त्यादिना–

"परलिङ्गो द्वन्द्वोऽशी" इति लिङ्गानुशासनकारिकायाः प्रथ- 50 मपादः [ ८. १. ], तदर्थश्च–द्वन्द्वसमासो द्वन्द्वस्यैव यत् परमुत्तरपदं तत्समानलिङ्गो भवति। स च समाहारादन्यो भिन्नलिङ्गवर्तिपदो वचनं प्रयोजयति, समाहारे हि नपुंसक उक्तः, समानलिङ्गवर्तिपदोऽपि सिद्धलिङ्ग एव। इमौ मयूरी-कुक्कुटौ, इमे कुक्कुट-मयूर्यौ, इमे न्यग्रोध-शिंशपे, इमौ शिंशपा-न्यग्रोधौ। तथा 55 च द्वन्द्वस्य परपदलिङ्गत्वे निर्णीते तद्विशेषणभूतत्यदादौ विशेष्यपारतन्त्र्यविधया परलिङ्गत्वमेवोचितं न तु भिन्नलिङ्गत्वं परस्परमनन्वयापत्तेः। अंशीति–अंशितत्पुरुषः समासः परलिङ्गो भवति। अर्धं पिप्पल्या अर्धपिप्पलीयम्, अर्धखट्वेयम् "समेंऽशेऽर्धं नवा" [ ३. १. ५४. ] इत्यंशिसमासः, अर्धो जरत्या अर्धजरतीयम् 60 "जरत्यादिभिः" [ ३. १. ५५. ] इति समासः, द्वितीयं भिक्षाया द्वितीयभिक्षा, एवं तृतीयभिक्षा। "द्वि-त्रि०" [ ३. १. ५६. ] इति समासः, पूर्वाह्ण-पूर्वरात्रादीनाम् 'अह्न०' इति च पुंस्त्वमेव। प्रकृते च–तच्चार्धं पिप्पल्याः सा चार्धपिप्पलीति विग्रहपरं लिङ्गं [ नपुंसकं ] न भवति, किन्तु परपदलिङ्गमेव, 65 अंशिवाचकसमासे परलिङ्गतायाः सत्त्वेन तद्विशेषणे तत्सत्त्वस्यौचित्यात्, तदाह–**त्यदादेरपि तल्लिङ्गतैव न्याय्ये**ति ॥ ३. १. १२०. ॥

## भ्रातृ-पुत्राः स्वसृ-दुहितृभिः। ३। १। १२१॥ 70

**त० प्र०**—बहुवचनं पर्यायार्थम्,–स्वस्रर्थेन सहोक्तौ भ्रात्रर्थः शब्दो दुहित्रर्थेन सहोक्तौ पुत्रार्थ एकः शिष्यते। भ्राता च स्वसा च–भ्रातरौ, सोदर्यश्च स्वसा च–सोदर्यौ, भ्राता च भगिनी च–भ्रातरौ, पुत्रश्च दुहिता च–पुत्रौ, सुतश्च दुहिता च–सुतौ; पुत्रश्च सुता च–पुत्रौ ॥ १२१ ॥ 75

**श० म० न्यासानुसन्धानम्**-**भ्रातृ०**। ननु भ्रातृ-पुत्रौ द्वावर्थौ, तथा स्वसा दुहितेति च, तत्र द्विवचनेन भवितव्यमित्यत आह–**बहुवचनं पर्यायार्थमि**ति–यदि बहुवचनं न

क्रियेत तदा यथा "पिता मात्रा वा" [ ३. १. १२२. ] इत्यत्रोच्चरितरूपपरिग्रहो न तदर्थानां शब्दान्तराणां, तथेहापि विज्ञायेत, बहुवचने तु द्वयोर्बहुत्वायोगाद् भ्रातरश्च पुत्राश्च भ्रातृपुत्रा इति बहुत्वप्रतिपत्तौ तदर्थाः शब्दा एवं निर्दिश्यन्त इति तत्पर्याय-5 शब्दप्रतिपत्तिर्भवति, अतः पर्यायार्थं बहुवचनमुपादीयते, यदि तु शब्दस्य स्वरूपमप्यभिधेयमर्थोऽपि, तत्र लक्ष्यानुसारेण "पिता मात्रा वा" इत्यत्र स्वरूपनिर्देशः, इहार्थनिर्देशः, तत्रार्थे कार्यासम्भवात् तदर्थकशब्दप्रतिपत्तिरिति प्रतीयते, ततो बहुवचनं लघु मन्यते । तथा च भ्रात्राद्यर्थकः सर्वोऽपि शब्द इह 10 गृह्यते, यथासंख्यन्यायेन च योऽर्थो निष्पन्नस्तमाह-**स्वस्रर्थेन सहोक्तौ भ्रात्रर्थः शब्द** इत्यादिना । **भ्राता च स्वसा** चेति विग्रहः, **भ्रातरौ** इति चैकशेषः । स्त्री-पुं-नपुंसकानां सहवचने परं लिङ्गमिति लिङ्गं पुंलिङ्गमेव भवति—भ्रातरौ शोभनाविति, न तु स्वस्रादिलिङ्गं स्त्रीत्वम्, तत्र भ्रातरा-15 विति भ्राता च भ्राता च-भ्रातरौ, भ्राता च स्वसा च भ्रातरौ च-भ्रातरौ, इत्युभयथाप्युपपत्तावर्थप्रकरणादिना विशेषावगतिः । **सोदर्यश्च स्वसा** चेति विग्रहः, **सोदर्यौ** इति चैकशेषः, समाने उदरे जात इति "सोदर्यसमानोदर्यौ" [ ६. ३. ११२. ] इति निपातनात् समानस्य सभावे ये च सोदर्यः, भ्राता तु स्यात् 20 सहोदरः "समानोदर्यसोदर्यसगर्भसहजा अपि । सोदरश्च०" इति भ्रातृपर्यायाः । **भ्राता च भगिनी** चेति विग्रहः, **भ्रातरौ** इति चैकशेषः, "जामिस्तु भगिनी स्वसा" इति स्वसृपर्यायाः । **पुत्रश्च दुहिता** चेति विग्रहः, **पुत्रौ** इति चैकशेषः, **सुतश्च दुहिता** चेति विग्रहः, **सुतौ** इति चैकशेषः, 25 "नन्दनः पुनः । उद्वहोऽङ्गात्मजः सूनुस्तनयो दारकः सुतः । पुत्रः०" इति पुत्रपर्यायाः, "दुहितरि स्त्रीत्वे [ नन्दनादयः शब्दाः स्त्रीत्वे वर्तमानाः ]" शेषश्चात्र "पुत्र्यां धीदा समर्धुका देहसंचारिणी चापि" इति दुहितृपर्यायाः ।

भाष्यकृता च प्रकृतसूत्रमग्रिमं च सूत्रद्वयं प्रत्याख्यातम् । 30 तस्यायमाशयः-"पुरुषः स्त्रिया" [ ३. १. १२६. ] इति सूत्रेणैवैषु एकशेषो भविष्यति । न च तन्मात्रभेदाभावः किन्तु रूपभेदोऽपि, सर्वत्र प्रवृत्तिनिमित्तैक्याश्रयणात्, बिभर्ति कुलमिति भ्रातेति कुलधारणरूपस्य भ्रातृशब्दप्रवृत्तिनिमित्तस्य स्वसर्यपि सम्भवात्, पितृपावनरूपस्य पितृप्रीणनरूपस्य वा 35 पुत्रशब्दप्रवृत्तिनिमित्तस्य दुहितर्यपि सम्भवाच्च प्रवृत्तिनिमित्तैक्यमिति स्त्रीत्व-पुंस्त्वमात्रकृत एव विशेषः । यदि च लोके भ्राता आनीयतामित्युक्ते स्वसा नानीयते इति स्वसरि भ्रातृव्यवहारो न दृष्ट इति तयोर्भेद इति शङ्क्यते, तदा भ्रातरावानेतव्याविल्युक्ते भ्रातृवत् स्वसुरप्यानयनदर्शनात् भ्रातृशब्दवाच्यत्वं 40 स्वसुरस्तीत्यपि मन्तव्यम्, नहि शब्देऽविद्यमाना शक्तिः शास्त्रेणोत्पाद्यते, अपि तु विद्यमानैव साऽनुशिष्यते, तथा च भ्रातराविल्यस्य भ्राता च भ्रात्री चेत्येवार्थ इति "पुरुषः स्त्रिया" [ ३. १. १२६. ] इत्येव सिद्धमिति नार्थ एतादृशेन सूत्रेणेति तत्रत्यभाष्यसन्दर्भाशयः । न चैवं भ्रातृस्वसाराविति द्वन्द्व आपद्येतेति वाच्यम्, अनभिधानात्, मातापितरौ श्वश्रू-श्वशुरा-45 विति च द्वन्द्व इष्यत एव, पितरौ श्वशुरौ चेत्यपि भवति । स्वमते चैषु प्रकृतीनामेव भेदो न स्त्रीत्व-पुंस्त्वमात्रकृतो भेद इत्याश्रित्य सूत्राण्यारभ्यन्ते, अन्यैरपि च तथास्वीकृत्यैव सूत्राण्यारब्धानि । अत एव हंसश्च वरटा चेति विग्रहे हंस-वरटे इत्येवेति "पुरुषः स्त्रिया" [ ३. १. १२६. ] इति सूत्रव्याख्या-50 वसरे वक्ष्यते ।

अत्र **प्रभाचन्द्रः**-"यदीदं नारभ्येत भ्रात्रादिशब्दः पृथक् स्वस्रादावदृष्टप्रयोगः, तत्र सहोक्तौ भ्रात्रादेः स्वस्रादिना द्वन्द्वेन भवितव्यम्, यथा प्लक्षादेर्न्यग्रोधादिना प्लक्ष-न्यग्रोधाविति, नैकप्रयोगेण दृश्यमानश्च सहोक्तौ स्वस्रादिविषयो भ्रात्रादिरसाधुरिति 55 मन्येत, सहोक्तिवदसहोक्तावपि वा स्वस्रादिविषयः कल्प्येत, स्वस्रादिरपि वा भ्रात्रादिवत् भ्रात्रादिविषयः सहोक्तावेव स्वस्रादिविषयो भ्रात्रादिः साधुः, तथादर्शनात्, यथादर्शनं ह्यर्थकल्पनं न्याय्यमिति प्रतिपत्तावपि द्वन्द्वः प्राप्नोति, तस्याप्यदर्शनान्निवृत्तिरिति प्रतिपत्तौ प्रतिपत्तिगौरवम्, अतोऽनेनैकशेषः" 60 इत्याह ॥ ३. १. १२१. ॥

## पिता मात्रा वा । ३ । १ । १२२ ॥

**त० प्र०—मातृशब्देन सहोक्तौ पितृशब्द एकः शिष्यते** वा । पिता च माता च-पितरौ, **पक्षे—मातापितरौ, मातुरर्च्यत्वात् पूर्वनिपातः** ॥ १२२ ॥ 65

**श० म० न्यासानुसन्धानम्-पिता०** । **पिता च माता** चेति विग्रहः, **पितरौ** इति चैकशेषः, पितृ-मातृशब्दौ भिन्नार्थौ, तथाहि-'पिता' इत्युक्ते न माता गम्यते, तत्र प्लक्ष-न्यग्रोधादिवत् सहोक्तौ द्वन्द्वेनैव भवितव्यम्, नैकशेषेणेति यो मन्यते तं प्रत्ययमेकशेषः; 'पितरौ' इत्युक्ते पितृद्वयसम्बन्धासम्भवात् 70 मातापि गम्यत एवेति पितृधर्मस्य रक्षणादेर्मातर्यारोपान्मातर्यपि प्रयुज्यते इति यो मन्यते तं प्रति नास्य सूत्रस्यावश्यकता, पितृशब्दः सामान्यसूत्रेणैवैकशेषः, भिन्नावेवेमौ शब्दाविति मन्यमानस्याचार्यस्यैकेनोभयार्थबोधनायैकशेषविधानमावश्यकम् । तत्र पितृशब्दसाहचर्यान्माता जनन्येव गृह्यते सम्बन्धिशब्दत्वात्, न तु 75 मानकर्ता । एकशेषाभावे द्वन्द्वमाह-**मातापितरौ** इति-"आ द्वन्द्वे" [ ३. २. ३९. ] इति पूर्वस्याकारान्तादेशः, "लघ्वक्षरा०" [ ३. १. १६०. ] इत्यर्च्यत्वान्मातृशब्दस्य पूर्वनिपातः, मातुरपि

पिता पतित्वेनाभ्यर्हित इति तस्यैव पूर्वप्रयोग उचितो न तु मातुः रित्याशङ्कायामाह-**मातुरर्च्यत्वादिति**, अयमाशयः-मातुः कृते पिता पतित्वेनार्च्यः, किन्तु पुत्रस्य कृते तु मातैव पितुरपेक्षयाऽभ्यर्हिता "पितुर्दशगुणा माता गौरवेणातिरिच्यते" इति स्मरणात्, अतिकष्टसहनपूर्वकपुत्रोत्पत्तितत्पालनादिरूपोपकारबाहुल्याच्च प्रत्यक्षेणापि तदभ्यर्हितत्वदर्शनात् तस्या एव पूर्वनिपात उचितः । अथ भिन्नार्थयोः कृते एकशेषे कथमेकेन शब्देन विनैकेन प्रवृत्तिनिमित्तेनानेकस्यार्थस्योपादानं, न ह्यनेकं प्रवृत्तिनिमित्तमेकेन शब्देन युगपदुपादीयते, उच्यते-दृश्यते एतदिह, नहि दृष्टेऽनुपपन्नं नाम; अथाप्येकेन निमित्तेनार्थः साहचर्यादिना निमित्तेनाध्यारोपिततद्भावः, व्युत्पत्तिकर्मणि वाऽऽश्रीयमाणं क्रियादिसामान्यं-पातीति पितेति, अक्षादिषु सोऽयमित्यभिसम्बन्धादाश्रिततद्भावं, शब्दसामान्यं वा यत्किञ्चिद् यथायोगं निमित्तं भविष्यति ॥ ३. १. १२२. ॥

## श्वशुरः श्वश्र्वा वा । ३ । १ । १२३ ॥

**त० प्र०**—श्वश्रूशब्देन सहोक्तौ श्वशुरशब्द एको वा शिष्यते । श्वशुरश्च श्वश्रूश्च-श्वशुरौ, श्वश्रूश्वशुरौ । द्विवचनं जातौ धवयोगे च वर्तमानयोः श्वश्र्वोः परिग्रहार्थम्, तेन-जातौ तन्मात्रभेदे "पुरुषः स्त्रिया" [ ३. १. १२६. ] इति नित्यविधिर्न भवति ॥ १२३ ॥

**श० म० न्यासानुसन्धानम्-श्वशुरः०** । **श्वशुरश्च श्वश्रूश्चेति** विग्रहः, **श्वशुरौ** इति चैकशेषः, पक्षे **श्वश्रू-श्वशुरौ** इति द्वन्द्वः । एकेन श्वशुरशब्देनैकस्य श्वश्रूशब्दस्यैव सहोक्तिरिह समाश्रीयमाणेति श्वश्रूशब्दस्य द्विवचनान्तत्वेन निर्देशो व्यर्थ इत्याशङ्कायामाह-**द्विवचनं च जातौ धवयोगे च वर्तमानयोः श्वश्र्वोः परिग्रहार्थमिति**-अत एव पूर्वेण योगविभागः, "पितृ-श्वशुरौ मातृ-श्वश्रूभ्याम्" इत्येकयोगे हि द्विवचनं श्वश्रूशब्दद्वयपरिग्रहार्थमिति विज्ञातुं न शक्यमिति । अयं भावः-श्वश्रूशब्दो द्विविधः-श्वशुरत्वजातिनिबन्धनः, श्वशुरपत्नीत्वनिबन्धनश्च; तयोरुभयोरपि "नारी सखी पङ्गु श्वश्रू" [ २. ४. ७६. ] इति सूत्रेणैव सिद्धिरिति तत्सूत्रस्थबृहद्वृत्त्यादिग्रन्थतो विज्ञायते, एकवचनोपन्यासे चैकस्यैव तस्य ग्रहणं स्यान्नोभयोरिति तद्वारणाय द्विवचनमिति । यद्यप्येकवचननिर्देशेऽपि विनिगमकाभावादेकसूत्रनिष्पाद्यत्वाच्चोभयोरपि ग्रहणं स्यादिति द्विवचननिर्देशो वृथैव प्रतिभाति, तथापि द्वयोर्ग्रहणाय व्याख्यानादिकमाश्रयणीयं स्यादिति व्याख्यानाद् वरं करणमिति न्यायानुगुण्येनोभयोर्ग्रहणाय द्विवचनेन निर्देशः कृत इत्यवधेयम् ।

केचित् तु गौणमुख्यन्यायेन मुख्यस्य जातिप्रवृत्तिनिमित्तस्यैव ग्रहणं स्यात्, न तु गौणस्य धवयोगनिमित्तस्येति तन्न्यायबाधनार्थमेव द्विवचनप्रयोगावश्यकत्वमिति कथयन्ति, तन्न-तस्य न्यायस्य पदकार्ये एव प्रवृत्तिर्न तु नामकार्ये इति तन्न्यायव्याख्यावसरेऽस्माभिर्न्यायसिन्धौ प्रतिपादितत्वादिह नामकार्ये तत्प्रवृत्त्यभावात्, जातिप्रवृत्तिनिमित्तस्यैव मुख्यत्वमित्यत्र मानाभावाच्च । या हि श्वशुरसम्बन्धं विनापि स्वत एव श्वश्रूः सैव श्वशुरत्वजातिनिमित्ता, यथा-श्वशुरभगिन्यादिः; तस्या मुख्यत्वं किंवा या श्वशुरस्य पत्नी तस्या इति कोऽत्रधारयतु । श्वशुरस्य श्वश्र्वाश्चैकप्रवृत्तिनिमित्तकत्वं व्याचक्षाणेन भाष्यकृता च श्वशुरत्वप्रवृत्तिनिमित्तकत्वमेव श्वश्रूशब्दस्यापि स्वीकृतमिति तन्मते धवयोगनिमित्तायाः श्वश्रूत्वमेवेति न, तन्मते द्वयोः संग्रहाय द्विवचनमावश्यकम् । किञ्च, पाणिनीये "श्वशुरः श्वश्र्वा" [ पृ० सु० १. २. ७१. ] इति सूत्रे एकवचनमेव कृतम् । नवीनास्तु धवयोग एव श्वश्रूशब्दप्रवृत्तिनिमित्तं, भाष्यं तु श्वश्र्वां श्वशुरत्वमारोप्य नेयमिति कथयन्ति, तन्मतेऽपि न श्वश्रूशब्दद्वैविध्यमिति न द्विवचनस्यावश्यकत्वम् । स्वमते च तदावश्यकत्वं व्याख्यातमेव । किञ्चान्यदपि प्रयोजनमाह-**तेन जाताविल्यादिना**-धवयोगे तु न तन्मात्रभेदोऽपि तु प्रवृत्तिनिमित्तभेदोऽपि जातौ तु प्रवृत्तिनिमित्तैक्यात् स्त्रीप्रत्ययमात्रकृत एव भेद इति "पुरुषः स्त्रिया" [ ३. १. १२६. ] इत्यस्य प्राप्तिरस्ति, तदर्थं च प्रयत्नाभावे [ द्विवचनाभावे ] परत्वात् तस्य प्रवृत्तौ 'श्वशुरौ' इत्येकमेव रूपं स्यान्न तु पाक्षिकं 'श्वश्रूश्वशुरौ' इति भावः । तथा चोभयोरप्युभयरूपसिद्ध्यर्थं द्विवचननिर्देश आवश्यक इति फलितम् ॥ ३. १. १२३. ॥

## वृद्धो यूना तन्मात्रभेदे । ३ । १ । १२४ ॥

**त० प्र०**—वृद्धः पौत्रादिर्युवा जीवद्वंश्यादिः, **वृद्धस्य यूना सहोक्तौ वृद्धवाच्येकः शिष्यते, तन्मात्र एव चेद् भेदो विशेषो भवति, न चेत् प्रकृतिभेदोऽर्थभेदो वान्यो भवतीत्यर्थः । गार्ग्यश्च गार्ग्यायणश्च-गार्ग्यौ, वात्स्यश्च वात्स्यायनश्च-वात्स्यौ, दाक्षिश्च दाक्षायणश्च-दाक्षी, औपगवश्च औपगविश्च-औपगवौ । वृद्ध इति किम्? गर्गश्च गार्ग्यायणश्च-गर्ग-गार्ग्यायणौ । यूनेति किम्? गार्ग्यश्च गर्गश्च-गार्ग्य-गर्गौ । तन्मात्रभेद इति किम्? गार्ग्य-वात्स्यायनौ, अत्र प्रकृतिरन्या, भागवित्ति-भागवित्तिकौ; अत्र कुत्सा सौवीरदेशत्वं चान्योऽर्थः ॥ १२४ ॥**

**श० म० न्यासानुसन्धानम्-वृद्धो०** । वृद्ध-युवशब्दयोरिह न लोकप्रसिद्धार्थपरत्वमपि तु शास्त्रपरिभाषितार्थपरत्वं *कृत्रिमाऽकृत्रिमयोः कृत्रिमस्यैव* इति न्यायादित्याशयेन

व्याचष्टे-**वृद्धः पौत्रादिरिति**-"पौत्रादि वृद्धम्"[६. १. २.]
इति सूत्रेण परमप्रकृतेः पौत्रादेर्वृद्धसंज्ञा विधीयते, स एव पौत्रा-
दिरिह वृद्धत्वेन ग्राह्यः; एवं-**युवा जीवद्वंश्यादिरिति**-"वंश्य-
ज्यायोभ्रात्रोर्जीवति प्रपौत्राद्यस्त्री युवा" [६. १. ३.] इति
सूत्रपरिभाषितमेव युवसंज्ञकमपत्यमिह युवशब्देन ग्राह्यं, न तु
वयोविशेषविशिष्टः । यद्यपि तत्र वृद्धमिति क्लीबत्वविशिष्टा संज्ञा
विहिता, इह च पुंलिङ्गनिर्देशः, तथापि तत्रापत्यशब्दापेक्षं
क्लीबत्वमिह तु तदर्थापेक्षं पुंस्त्वम्, अर्थो हि तस्य पुमपत्यं
स्त्र्यपत्यं च, तत्र प्राधान्यात् परत्वाच्च पुंलिङ्गस्यैव निर्देश इति
बोध्यम् । '**तन्मात्रभेदे**' इति मूलं व्याचष्टे-**तन्मात्र एव
चेद् भेदो विशेषो भवतीति**-तत्पदेन वृद्ध-यूनोः परामर्शेऽपि
तयोरर्थपरत्वाश्रयणाद् वृद्धार्थ-युवार्थप्रत्ययस्य परामर्शो व्याख्या-
नात्, तथा च वृद्धार्थयुवार्थप्रत्ययमात्रकृत एव तयोः-वृद्ध-युव-
प्रत्ययान्तयोर्भेदश्चेत् तदैकशेषो भवतीति, अवधारणव्यावर्त्यमाह-
**न चेत् प्रकृतिभेदोऽर्थभेदो वाऽन्यो भवतीत्यर्थः**
इति-प्रकृतिभेदेऽर्थभेदे वैकशेषो न भवतीति भावः । **गार्ग्यश्च
गार्ग्यायणश्चे**ति विग्रहः, **गार्ग्यौ** इति चैकशेषः, गर्गस्य
वृद्धापत्यं गार्ग्यः, "गर्गादेर्यञ्" [६.१.४२.] इति यञ्; तस्य
युवापत्यं गार्ग्यायणः, "यञिञः" [६.१.५४.] इत्यायनण्;
गार्ग्यश्च गार्ग्यश्चेति विग्रहेऽपि 'गार्ग्यौ' इत्येव रूपं, तथापि
व्याख्यानात् प्रकरणाद् वा क्व वृद्ध-यूनोर्ग्रहणं क्व वृद्धयो-
रेवेत्यवसेयम् । इह च प्रत्ययद्वयमात्रकृत एव भेदो न तु प्रकृति-
कृतोऽपीति भवत्येकशेषः, एवं 'वात्स्यौ' इत्यादौ ज्ञेयम् ।
**वात्स्यश्च वात्स्यायनश्चे**ति विग्रहः, **वात्स्यौ** इति चैकशेषः,
वत्सस्य वृद्धापत्यं वात्स्यः, प्राग्वद् यञ्, तस्यापत्यं युवेति
वात्स्यायनः, प्राग्वद् आयनण्, **दाक्षिश्च दाक्षायणश्चे**ति
विग्रहः, **दाक्षी** इति चैकशेषः, दक्षस्य वृद्धापत्यं दाक्षिः, "अत
इञ्" [६.१.३१.] इति इञ्, तस्य युवापत्यं दाक्षायणः,
प्राग्वद् आयनण्; **औपगवश्च औपगविश्चे**ति विग्रहः,
**औपगवौ** इति चैकशेषः, उपगोर्वृद्धापत्यमौपगवः "ङसोऽप-
त्ये" [६.१.२८.] इत्यण्, तस्य युवापत्यमौपगविः, "अत
इञ्" [६.१.३१.] इति इञ् ।

पदकृत्यं पृच्छति-**वृद्ध इति किमि**ति-अयमाशयः-
द्वयोर्बहूनां वा सहोक्तिः, तत्र यूनेत्येतावन्मात्रोक्तौ *कृत्रिम०*-
न्यायाद् युवप्रत्ययान्तस्य ग्रहणे निश्चिते वृद्ध इत्यस्याभावेऽप्यपत्या-
र्थस्य द्विधैव प्रसिद्ध्याऽन्यो वृद्ध एव ग्रहीष्यत इति तेन सहोक्ता-
वेकशेषो भविष्यतीति वृद्धग्रहणं वृथैवेति । प्रत्युदाहरणमुखेनो-
त्तरयति-**गर्गश्च गार्ग्यायणश्च-गर्ग-गार्ग्यायणौ** इति,
अयमाशयः-नावश्यं वृद्ध-यूनोरेव सहोक्तिः, परमपुरुषस्यापि
यूना सह कथनसम्भवात्, तत्र यदा परमपुरुषस्य यूना सहोक्ति-
स्तदानेनैकशेषो मा भूदित्येतदर्थं वृद्धग्रहणमावश्यकमिति । पुनः
पृच्छति-**यूनेति किमिति**-पूर्ववद् वृद्धस्य यूनैव सहोक्ति-
सम्भवाभिप्रायेण प्रश्नः, तथैव परमपुरुषेण सहोक्तेरपि सम्भ-
वाभिप्रायेणोत्तरयति-**गार्ग्यश्च गर्गश्च-गार्ग्य-गर्गौ** इति,
अत्र परमपुरुषस्य गर्गस्यैवार्च्यत्वात् पूर्वनिपाते कर्तव्ये 'गार्ग्य-
गर्गौ' इति परनिपातनिर्देशः प्रकृते सहार्थयोगित्वेन तस्या-
प्राधान्यविवक्षाद्योतनार्थः, क्वचिद् 'गर्ग-गार्ग्यौ' इत्यपि पठ्यते ।
पुनः पृच्छति-**तन्मात्रभेद इति किमि**ति-अयं च प्रश्नो
विभज्य व्याख्येयः-तन्मात्रकृतभेदग्रहणं, तत्कृतभेदमात्रग्रहणं
च किमर्थमिति, तत्र प्रथमप्रश्ने समाधत्ते-**गार्ग्य-वात्स्यायनौ**
इति-अत्र न केवलं वृद्धयुवप्रत्ययकृत एव भेदोऽपि तु प्रकृति-
भेदोऽपीति न भवत्येकशेषः, तदभावे च वृद्धस्य यूना सहोक्ति-
सत्त्वात् स्यादेवैकशेष इति भावः । द्वितीयप्रश्नार्थमुदाहरति-
**भागवित्ति-भागवित्तिकौ** इति-भागवित्तस्य वृद्धमपत्यं
भागवित्तिः, तस्य सौवीरस्य युवापत्यं निन्दितो भागवित्तिकः,
"भागवित्ति०" [६.१.१०५.] इति इकण्, इञ् तु प्राग्वत् ।
अत्र कुतो न भवतीत्याह-**अत्र कुत्सा सौवीरदेशत्वं
चान्योऽर्थ** इति-अत्र न केवलं वृद्धापत्य-युवापत्यप्रत्ययमात्र-
कृतो भेदोऽपि त्वर्थकृतोऽपीति न भवति ह्येकशेषः, तन्मात्रभेद-
ग्रहणाभावे चेहापि स्यादिति भावः । ३ । १ । २४ ॥

## स्त्री पुंवच्च । ३ । १ । १२५ ॥

त० प्र०—वृद्धस्त्रीवाची शब्दो युववाचिना सहोक्तावेकः
शिष्यते, पुंवत्-पुंलिङ्गा चेयं भवति, स्त्र्यर्थः पुमर्थो भवती-
त्यर्थः; तन्मात्रभेदे । गार्गी च गार्ग्यायणश्च-गार्ग्यौ, वात्सी
च वात्स्यायनश्च-वात्स्यौ, दाक्षी च दाक्षायणश्च-दाक्षी ।
गार्गी च गार्ग्यायणौ च-गर्गाः, अत्र पुंवद्भावाद् ङीनिवृत्तौ
यञो लुप्, गर्गानिति "शसोऽता सश्च नः पुंसि" [१. ४.
४९.] इति नत्वं च, इमौ गार्ग्यावित्यनुप्रयोगस्यापि
पुंस्त्वम् ॥ १२५ ॥

श० म० **न्यासानुसन्धानम्-स्त्री०** । 'वृद्धो यूना'
इति सूत्रं सर्वमनुवर्तते, तत्र स्त्रीति प्रथमान्तं वृद्ध इति प्रथमा-
न्तेनान्वेतीति तदनुकूलमर्थमाह-**वृद्धस्त्रीवाची**त्यादि, स्त्रिया
एव शेष इति स्त्रीलिङ्गताप्राप्तौ तस्य लिङ्गपरिवर्तनमपि विधेयमि-
त्याह-**पुंवत् पुंलिङ्गा चेयं भवतीति**, एतदेव विशदयति-
**स्त्र्यर्थः पुमर्थो भवतीत्यर्थः** इति-स्त्रीलक्षणोऽर्थो यस्य
शब्दस्य स पुमर्थः, यद्वा शब्दस्येति वृत्तावध्याहार्यं, तस्य
सम्बन्धी स्त्रीलक्षणोऽर्थः पुमर्थः, अर्थग्रहणाच्च विशेषणानामपि
पुंस्त्वं सिद्धं, शब्दस्यैव पुंस्त्वे विशेषणानां न स्यात् । **गार्गी**

**च गार्ग्यायणश्चेति** विग्रहः, एकशेषस्तु—**गार्ग्यौ** इति—यद्यपि स्त्रीलिङ्गत्वे सत्यपि गार्गीशब्दस्य द्विवचने गार्ग्याविति रूपं स्यादेव, किन्तु शोभनौ गार्ग्यौ इत्यनुप्रयोगे विशेषः। **वात्सी च वात्स्यायनश्चेति** विग्रहः, **वात्स्यौ** इति चैकशेषः, शोभनौ वात्स्यौ इत्यनुप्रयोगे पुंस्त्वाभिव्यक्तिः, गर्गस्य वृद्धमपत्यं स्त्री गार्गी, वत्सस्य वृद्धमपत्यं स्त्री वात्सी, उभयत्र "गर्गादेर्यञ्" [६. १. ४२.] इति यञ्, "अवर्णेवर्णस्य" [१. ४. ६८.] इत्यलोपः, "यञो डायन् च वा" [२. ४. ६७.] इति ङीः, "व्यञ्जनात् तद्धितस्य" [२. ४. ८८.] इति यलोपः। **दाक्षी च दाक्षायणश्चेति** विग्रहः, **दाक्षी** इति चैकशेषः, दक्षस्य वृद्धमपत्यं स्त्री दाक्षी, "अत इञ्" [६. १. ३१.] इति इञ् "नुर्जातेः" [२. ४. ७२.] इति ङीः पुंवद्भावे ङीनिवृत्तौ 'दाक्षि' इति प्रकृतिः, तस्य पुंसि द्विवचने—दाक्षी इति, यदि पुंवद्भावो न स्यात् तदा स्त्रियां दाक्ष्यौ इति स्यात्। पुंवद्भावफलस्य स्पष्टावगतये बहुवचने उदाहरति—**गार्गी च गार्ग्यायणौ चेति** विग्रहः, **गर्गाः** इति चैकशेषः, पुंवद्भावनिमित्तमिह किं फलं जातमित्याह—**अत्र पुंवद्भावात् ङीनिवृत्तौ यञो लुबिति**—स्त्रीत्वनिमित्तो ङीः पुंवद्भावे सति निवर्तते, "यञञोऽश्या०" [६. १. १२६.] इति यञो लुबपि स्त्रियां न भवतीति पुंवद्भावनिमित्तैव सा। किञ्च द्वितीयाबहुवचने सस्य नत्वमपि तत्फलमेवेत्याह—**"शसोऽता सश्च नः पुंसि" [१. ४. ४९.] इति नत्वं च**, तेन गर्गानिति सिद्धम्। किञ्च प्रधानस्य तस्य पुंवद्भावे कृते तदधीनस्यानुप्रयुज्यमानस्य पदस्यापि पुंलिङ्गत्वमेव भवतीत्याह—**इमौ गार्ग्या**वित्यादि।

ननु पुंवद्भावविधानमनर्थकम्, स्त्री-पुंसयोरेकशेषे परत्वात् पुंलिङ्गस्य "स्त्री-पुं-नपुंसकानां सहवचने स्यात् परं लिङ्गम्" इति वचनेनैव सिद्धिः, युवप्रत्ययान्तस्य स्त्री-नपुंसकलिङ्गत्वे स्त्रीत्वं नपुंसकत्वं वा स्यात्, तद्वारणार्थं पुंवद्भावविधानमित्यपि न कथनीयम्, स्त्रियां युवसंज्ञाभावात्, नपुंसकस्याप्यपत्यप्रत्ययान्तस्य प्रयोगाभावाच्चेति चेत्? न—स्त्री-पुं-नपुंसकानामिति वचनस्य त्यदाद्येकशेषमात्रविषयत्वाद् मतान्तरे चापत्यप्रत्ययान्तस्य क्लीबत्वस्यापि सम्मतत्वात् तद्वारणार्थमपि [ परत्वात् क्लीबलिङ्गतावारणार्थमपि ] पुंवद्भावविधानस्यावश्यकत्वादिति ॥ ३. १. १२५. ॥

## पुरुषः स्त्रिया । ३ । १ । १२६ ॥

**त० प्र०—पुरुषशब्दोऽयं प्राणिनि पुंसि रूढः, स्त्रीवाचिना शब्देन सहोक्तौ पुरुषवाची शब्द एकः शिष्यते; तन्मात्रभेदे—स्त्रीपुरुषमात्रभेदश्चेद् भवति। ब्राह्मणश्च ब्राह्मणी च—ब्राह्मणौ, कुक्कुटश्च कुक्कुटी च—कुक्कुटौ, मयूरश्च मयूरी च—मयूरौ, कारकश्च कारिका च—कारकौ, गोमांश्च गोमती च—गोमन्तौ, पटुश्च पट्वी च—पटू, गौश्चायं गौश्चेयम्—इमौ गावौ। पुरुष इति किम्? तीरं नद-नदीपतेः, घट-घटीशरावोदञ्चनानि। तन्मात्रभेदे इत्येव—हंसश्च वरटा च—हंस-वरटे, अश्व-वडवौ, पुरुष-योषितौ, द्रुणी-कच्छपौ, ऋश्यश्च रोहिच्च—ऋश्य-रोहितौ, क्षेमधृतयश्च क्षत्रियास्तनुकेश्यश्च** तत्स्त्रियः-क्षेमधृति-तनुकेश्यः अङ्गारकाश्च शकुनयः कालिकाश्च तत्स्त्रियः—कालिकाऽङ्गारकाः एषु प्रकृतिभेदः; गणक-गणक्यौ, **इन्द्रेन्द्राण्यौ, भव-भवान्यौ, एषु धवयोगलक्षणोऽर्थभेदः; कुक्कुट-मयूर्यौ, अजा-बर्करौ, अश्वा-किशोरौ, कलभ-हस्तिन्यौ, गो-वत्सौ, एषु प्रकृत्यर्थयोर्भेदः। कथं ब्राह्मणवत्सा च ब्राह्मणीवत्सश्च—ब्राह्मणवत्सा—ब्राह्मणीवत्सौ, न ह्यत्र स्त्री-पुरुषमात्रभेदादन्यो भेदोऽस्ति? सत्यम्—तदित्यनेन प्रधानस्त्रीपुरुषौ परामृश्येते, तेन प्रधानस्त्रीपुरुषमात्रकृत एव भेदे भवति, अत्र तु विशेषणीभूताप्रधानस्त्री-पुरुषकृतोऽपि भेदोऽस्तीति न भवति। अन्ये तु तन्मात्रभेदादधिके प्रकृतिभेदे एवैकशेषं नेच्छन्ति, अर्थभेदे त्विच्छन्त्येव-इन्द्रश्च इन्द्राणी च-इन्द्रौ, तथा—वरुणाविन्द्रौ भवौ शर्वौ रुद्रौ मृडाविति, एवं पूर्वसूत्रेऽपि—भागवित्तिश्च भागवित्तिकश्च—भागवित्ती ॥ १२६ ॥**

**श० म० न्यासानुसन्धानम्-पुरुषः०**। अत्र पुरुष-स्त्रीशब्दयोः स्वरूपपरत्वं मा ज्ञायि, किन्तु तत्तल्लिङ्गकप्राणिपरत्वं प्रतीयतामित्याशयेन व्याचष्टे-**पुरुषशब्दोऽयं प्राणिनि पुंसि रूढः** इति—केवलं पुंलिङ्गार्थत्वेऽप्राणिन्यपि पुंलिङ्ग-स्त्रीलिङ्गदर्शनात् तयोरप्येकशेषः स्यादिति 'प्राणिनि' इत्युक्तम्, तथा च तत्साहचर्यात् स्त्रीशब्दोऽपि स्त्रीत्वविशिष्टे प्राणिनि रूढ इति ज्ञेयम्, तादृशस्य पुंसस्तादृश्याः स्त्रिया एव प्रकृतोपयोगिसहोक्तिसम्भवात्। तन्मात्रभेद इति पदमनुवर्तते, तदिह प्रकृतोपयोगितया व्याख्यायते-**स्त्री-पुरुषमात्रभेदश्चेदिति**—स्त्रीत्व-पुंस्त्वमात्रकृत एव यदि भेदो न तु शब्दस्वरूपकृत इति भावः। यद्यपि जातिमात्रविवक्षायां स्त्रियामपि ब्राह्मणशब्दप्रयोगसम्भवात् "समानामर्थेन०" [३. १. ११८.] इति सूत्रेण ब्राह्मणावित्यादि प्रयोगसिद्धिसम्भवस्तथापि यदा पुंस्त्व-स्त्रीत्वरूपविशेषोऽपि विवक्षितस्तदा ब्राह्मणश्च ब्राह्मणी चेत्यर्थे द्वन्द्वबाधनार्थमेकशेषविधानमावश्यकमिति सविग्रहमुदाहरति—**ब्राह्मणश्च ब्राह्मणी चेति** विग्रहः, **ब्राह्मणौ** इति चैकशेषः। मनुष्यभिन्ने प्राणिनि प्रयोगमुदाहरति-**कुक्कुटश्च कुक्कुटी चेति** विग्रहः, **कुक्कुटौ** इत्येकशेषः। स्त्रीत्वनिमित्तकप्रत्ययातिरिक्तोऽपि यदि भेदः स्त्रीत्वमात्रनिमित्तकः

स्यात्, स नैकशेषबाधक इत्यावेदयितुमुदाहरति–**कारकश्च कारिका चेति** विग्रहः, **कारकौ** इति चैकशेषः, करोतीति कारकः पुंसि स्त्रियां त्वापि "अस्यायत्०" [२. ४. १११.] इत्यकारस्येकारः, अत्रेकारो यद्यपि स्त्रीप्रत्ययो नास्ति तथापि तन्मात्रनिमित्तक इति भवत्येकशेषः। **गोमांश्च गोमती चेति** विग्रहः, **गोमन्तौ** इति चैकशेषः, अत्रापि रूपे स्त्रीत्व-पुंस्त्वकृत एव विशेषो न प्रकृतिभेदकृत इति भवत्येकशेषः। **पटुश्च पट्वी चेति** विग्रहः, **पटू** इति चैकशेषः, अत्र पट्वीत्यत्र वकारादेशोऽपि स्त्रीप्रत्ययनिमित्तक एवेति भवत्येकशेषः। न केवलं स्वरूपगम्य एव भेदे सूत्रं प्रवर्तते, अपि तु स्वरूपैक्ये सत्यपि पदान्तरगम्ये विशेषेऽनेनैवैकशेषो भवतीत्युदाहरति–**गौश्चायं गौश्चेयमि**ति विग्रहः, **गावौ** इति चैकशेषः, **इमौ गावौ** इति प्रयोगः पुंस्त्वज्ञापनाय, अत्रायमियंपदाभ्यामेव पुंस्त्व-स्त्रीत्वरूपविशेषप्रतीतिः, स्वरूपस्य साम्येऽपि पदत्वादनेनैवैकशेष इति भावः।

पुरुष इत्यस्यानुपादानेऽपि 'स्त्रिया' इति कथनेनैव तत्प्रतियोगितया पुरुष एव गृह्येतेति पुरुष इति कथनं व्यर्थमित्याशङ्कते–**पुरुष इति किमि**ति, स्वमते पुरुषपदस्य प्राणिनि पुंसि रूढत्वाश्रयणात् तदभावे प्राणिभिन्नेऽपि पुंसि सूत्रप्रवृत्त्यैकशेषः स्यादिति तद्वारणार्थं पुरुषग्रहणमावश्यकमित्याह–**तीरं नद-नदीपतेः** इति–इदं पूर्वप्रयुक्तवाक्यमिति प्रामाणिकत्वख्यापनार्थमेव वाक्योदाहरणम्, अत्र हि नदश्च नदी चेति द्वन्द्व एव भवति न तु प्रकृतसूत्रैकशेषः, तथा सति नदपतेरित्येव प्रयोगः स्यादिति भावः, "नदी-देश-पुरां विलिङ्गानाम्" [३. १. १४२.] इति सूत्रे नदीपदस्य नदीविशेषपरत्वेन व्याख्यानादिह नदीसामान्यवाचकपदयोर्द्वन्द्वस्य नैकार्थत्वमिति नद-नदीपतेरिति क्लीबतया न प्रयोग इति बोध्यम्। द्वितीयमप्यप्राणिविषये एकशेषाभावस्थलं दर्शयति–**घट-घटीशरावोदञ्चनानी**ति–घटश्च घटी च शरावोदञ्चनं चेति चतुर्णामिह सहोक्तिः, "घटो घटी कलशः, दुर्गस्य" इति लिङ्गानुशासनवृत्तिः, शरावोदञ्चनयोरत्र सहोक्तिप्रदर्शनं क्वचित् प्रसिद्धप्रयोगपरिग्रहार्थमेव, तत्र चतुर्णां द्वन्द्वे न द्वयोः सहोक्तिरिति तदभावादेवेह नैकशेषप्राप्तिरिति नेदं प्रत्युदाहरणमुचितमिति न भ्रमितव्यम्, बहूनां सहोक्तावपि तदेकदेशभूतयोर्द्वयोरपि सहोक्तेरनपायात्, तथा चैकशेषे सति घटशरावोदञ्चनानीत्येव प्रयोगः स्यात्।

प्रकरणप्राप्तं 'तन्मात्रभेदे' इतीहाप्यावश्यकमेवेत्याह–**तन्मात्रभेद इत्येवे**ति, तद्व्यावर्त्यलक्ष्याण्याह–**हंसश्च वरटा चेति** विग्रहः, **हंस-वरटे** इति च द्वन्द्वः, 'तन्मात्रभेदे' इत्यस्य हि प्रकृत्यतिरिक्तस्त्रीप्रत्ययमात्रकृत एव भेदश्चेद् भवेदित्यर्थः; यत्र च प्रवृत्तिनिमित्तभेदाभावेऽपि प्रकृतिभेदस्तत्र न तन्मात्रभेद इति प्रकृते "हंसस्य योषिद् वरटा" इति कोशाद् वरटाशब्दस्यापि हंसत्वजातिरेव प्रवृत्तिनिमित्तं यद्यपि तथापि प्रकृतिभेदान्न भवत्येकशेषः। **अश्व-वडवौ** इति द्वन्द्वः, अश्वश्च वडवा चेति विग्रहः, अत्र परवल्लिङ्गताप्राप्तौ "यश्च स्यादसमाहारे द्वन्द्वोऽश्व-वडवाविति" इति पुंल्लिङ्गत्वम्, द्विवचनमतन्त्रं, तेनेमेऽश्व-वडवाः, "अश्ववडवपूर्वापराधरोत्तराः" [३. १. १३३.] इति ह्रस्वत्वम्, यद्यप्यश्व-वडवयोरेकमेव प्रवृत्तिनिमित्तं तथापि प्रकृतिभेद इति नैकशेषः। **पुरुष-योषितौ** इति द्वन्द्वः, पुंस्त्वविशिष्टः प्राणी [ आत्मा ] पुरुषः, स्त्रीत्वविशिष्टः प्राणी [ आत्मा ] योषिदिति पुरुष-योषितोः प्राणित्वमेव प्रवृत्तिनिमित्तमिति तदैक्येऽपि प्रकृतिभेदादेव नैकशेषः। **द्रुणी-कच्छपौ** इति द्वन्द्वः, द्रुणी च कच्छपश्चेति विग्रहः, अत्रापि प्रकृतिभेद एव न तु प्रवृत्तिनिमित्तभेदः, कच्छपजातीयैव स्त्री द्रुणीत्युच्यते। **ऋश्यश्च रोहिच्चेति** विग्रहः, **ऋश्य-रोहितौ** इति च द्वन्द्वः, ऋश्यो मृगो रोहित् मृगी, शेषं प्राग्वत्। **क्षेमधृतयश्च क्षत्रियाः, तनुकेश्यश्च तत्स्त्रियः** इति विग्रहः, **क्षेमधृति-तनुकेश्य** इति च द्वन्द्वः; **अङ्गारकाः शकुनयः कालिकाश्च तत्स्त्रियः** इति विग्रहः, **कालिकाङ्गारकाः** इति च द्वन्द्वः, पूर्वत्र क्षत्रियत्वरूपमिह च शकुनित्वरूपं प्रवृत्तिनिमित्तमेकमिति तदैक्येऽपि प्रकृतिभेदान्नैकशेषः। उक्तेषु सर्वोपसंहारेणाह–**एषु प्रकृतिभेद** इति। **गणक-गणक्यौ** इति द्वन्द्वः, गणकश्च गणकी चेति विग्रहः, गणयतीति गणको निमित्तवित्, गणकत्वविशिष्टा स्त्र्यापि गणिका, गणकस्य पत्नीति धवयोगे ङ्यां गणकी, **इन्द्रेन्द्राण्यौ** इति द्वन्द्वः, इन्द्रश्चेन्द्राणी चेति विग्रहः, इन्द्रो देवाधिपः, स पुमानेवेति इन्द्रत्वविशिष्टा स्त्री न सम्भवति, किन्तु इन्द्रस्य भार्येति धवयोगे "वरुणेन्द्र०" [२. ४. ६२.] इति ङ्याम् 'आन्' इत्यन्तादेशे च–इन्द्राणीति, **भव-भवान्यौ** इति द्वन्द्वः, भवश्च भवानी चेति विग्रहः, भवः शङ्करः, स पुमानिति भवत्वविशिष्टा स्त्री न सम्भवति, किन्तु भवस्य पत्नीति धवयोगे प्राग्वत् ङ्याम् आनि च भवानी, एषु किंकृतो भेदो येनैकशेषो न भवतीत्याह–**एषु धवयोगलक्षणोऽर्थभेदः** इति–प्रकृतिसाम्येऽपि धवयोगलक्षणार्थभेदान्न तन्मात्रभेद इत्येकशेषो न भवतीत्यर्थः। **कुक्कुट-मयूर्यौ** इति द्वन्द्वः, कुक्कुटश्च मयूरी चेति विग्रहः; **अजा-बर्करौ** इति द्वन्द्वः, अजा च बर्करश्चेति विग्रहः, अजा छागिका, युवाजो बर्करः; **अश्वा-किशोरौ** इति द्वन्द्वः, अश्वा च किशोरश्चेति विग्रहः, अश्वा वडवा, अल्पवया अश्वः किशोरः; **कलभ-हस्तिन्यौ** इति द्वन्द्वः, कलभश्च हस्तिनी चेति विग्रहः, त्रिंशदब्दको गजः कलभः; **गोवत्सौ** इति

द्वन्द्वः, गौश्च वत्सश्चेति विग्रहः, वत्सो गोशिशुः, एषु किंकृतो भेदो येनैकशेषो न भवतीत्याह-**एषु प्रकृत्यर्थयोर्भेदः** इति-अत्र हि द्विवचनं प्रकृतावर्थे च प्रत्येकं सम्बन्धविवक्षया, न तु शब्दद्वयसम्बन्धिवाच्यार्थगतसंख्याविवक्षया। अथ क्वचित् स्त्रीप्रत्ययमात्रकृतभेदेऽपि नैकशेषस्तत्र किं कारणमित्याशङ्कते-**कथं ब्राह्मणवत्सा च ब्राह्मणीवत्सश्च-ब्राह्मणवत्सा-ब्राह्मणीवत्सौ?** इति, शङ्काबीजमाह-**नह्यत्र स्त्री पुरुषमात्रभेदादन्यो भेदोऽस्तीति**-पूर्वपदे यौ ब्राह्मण-ब्राह्मणीशब्दौ तावपि स्त्रीप्रत्ययमात्रभिन्नौ, उत्तरपदे च वत्सा-वत्सशब्दौ तावपि तथैवेति भेदकान्तराभावाद् भवितव्यमेकशेषेणेति तदाशयः, शङ्कां स्वीकृत्योत्तरयति-**सत्यमित्या**दिना-'तन्मात्रभेदे' इत्यत्र तदिति सर्वनाम, सर्वनाम्नां च प्रधानपरामर्शित्वमुत्सर्गः, तेन प्रधानं यः पुरुषः, प्रधानं या च स्त्री तन्मात्रकृतो भेदो यत्र तत्रैवानेनैकशेषः, प्रकृते च वत्सयोर्विशेषणभूतौ ब्राह्मण-ब्राह्मणीशब्दावप्रधानमिति तत्कृतभेदसत्त्वेन नैकशेषप्राप्तिरिति भावः, यदि च ब्राह्मणवत्सश्च ब्राह्मणवत्सा चेति विग्रहस्तदा भवत्येवैकशेषः, तत्राप्रधानं ब्राह्मणः पुंलिङ्ग एवेति न तत्कृतो भेदः, तदेव स्पष्टमवगमयति-**अत्र तु विशेषणीभूते**त्यादिना। मतान्तरमाह-**अन्ये तु तन्मात्रभेदादि**त्यादिना, तन्मतेनोदाहरति-**इन्द्रश्च इन्द्राणी चे**ति विग्रहः, **इन्द्रौ** इति चैकशेषः, **वरुणौ** इत्येकशेषः, वरुणश्च वरुणानी चेति विग्रहः, **इन्द्रौ** इत्येकशेषः, इन्द्रश्च, इन्द्रमाचक्षाणस्य भार्या इन्द्राणी चेति विग्रह आभाति पुनरुपादानात्, **भवौ** इत्येकशेषः, भवश्च भवानी चेति विग्रहः, **शर्वौ** इत्येकशेषः, शर्वश्च शर्वाणी चेति विग्रहः, **रुद्रौ** इत्येकशेषः, रुद्रश्च रुद्राणी चेति विग्रहः, **मृडौ** इत्येकशेषः, मृडश्च मृडानी चेति विग्रहः, एषु धवयोगकृतोऽपि भेदः। न केवलमिहैवैतन्मतमपि तु पूर्वसूत्रेऽपि, तदाह-**पूर्वसूत्रेऽपीति**, तत्रोदाहरति-**भागवित्तिश्च भागवित्तिकश्चे**ति विग्रहः, **भागवित्ती** इत्येकशेषः, अत्र कुत्सा सौवीरदेशत्वं चान्योऽर्थः॥ ३. १. १२६.॥

## ग्राम्याशिशुद्विशफसंघे स्त्री प्रायः। ३। १। १२७॥

**त० प्र०—ग्राम्या अशिशवो ये द्विशफा-द्विखुरा अर्थात् पशवः, तेषां संघे स्त्रीपुरुषाणां सहोक्तौ प्रायः स्त्रीवाच्येकः शिष्यते, स्त्रीपुरुषमात्रभेदश्चेद् भवति; पूर्वेण पुरुषशेषे प्राप्ते स्त्रीशेषार्थं वचनम्। गावश्च स्त्रियः गावश्च पुरुषाः-इमा गावः, अजाश्चेमे अजाश्चेमाः-इमा अजाः, एवं-मेष्य इमाः, महिष्य इमाः। ग्राम्येति किम्? आरण्यानां मा भूत्-रुरवश्चेमे रुरवश्चेमाः-इमे रुरवः, पृषताश्च पृषत्यश्च-पृषता इमे। अशिशुग्रहणं किम्? वत्साश्चेमा वत्साश्चेमे-इमे वत्साः, बर्कर्यश्च बर्कराश्च-बर्कराः। द्विशफेति किम्? अश्वाश्चेमे अश्वाश्चेमाः-इमेऽश्वाः, गर्दभाश्च गर्दभ्यश्च-गर्दभाः, मनुष्यश्चेमा मनुष्याश्चेमे-इमे मनुष्याः, पक्षिण्यश्च पक्षिणश्च-पक्षिणः। संघग्रहणं किम्? गौश्चायं गौश्चेयम्-इमौ गावौ, एवम्-एतावजौ। प्राय इति किम्? उष्ट्राश्च उष्ट्र्यश्च-उष्ट्राः, छागाश्च छाग्यश्च-छागाः; व्यावृत्तौ सर्वत्र पूर्वेण पुरुषशेष एव भवति। तन्मात्रभेद इत्येव-गो-बलीवर्दम्। अजाऽविकम्॥ १२७॥**

**श० म० न्यासानुसन्धानम्-ग्राम्या०।** **ग्राम्या** इति ग्रामे भवा इति "ग्रामादीनञ् च" [ ६.३.९. ] इति ये ग्राम्याः, ग्राम्यग्रहणमारण्यानां व्यावृत्त्यर्थम्, द्वौ शफौ खुरौ येषां ते-**द्विशफाः**, खुरसम्बन्धश्च पशूनामेव, न ह्यन्यस्यावयवः खुरः सम्भवतीत्यन्यपदार्थतया पशव एव विज्ञायन्त इत्याह-**अर्थात् पशव** इति, अन्ये एतद्विषयकसूत्रे पशुग्रहणं कुर्वन्ति, किन्तु द्विशफशब्देनैवार्थतः पशव आक्षिप्यन्ते शफस्य तेष्वेव प्रसिद्धेरिति तद्ग्रहणं वृथैवेति ध्वनयति। **संघे** इति-संख्याविशेषविवक्षारहितसमूहविवक्षायामिति भावः। **प्रायः** इति बाहुल्येन तथा प्रयोगस्य सूचकं, तेन क्वचिन्न स्त्रीशेष इति नाव्याप्तिः सूत्रस्य। एषु स्त्रीप्रत्ययमात्रकृतभेदसत्त्वात् पूर्वेण सिद्धेऽपि सूत्रमिदं किमर्थमित्याशङ्कायामाह-**पूर्वेण पुरुषशेषे प्राप्ते स्त्रीशेषार्थं वचन**मिति-"पुरुषः स्त्रिया" [३. १. १२६.] इति हि पूर्वसूत्रं पुरुषस्यैव शेषमनुशास्ति, प्रकृते च स्त्रियाः शेषो विधेय इति न तेन सूत्रेण गतार्थत्वमस्य, इत्थं च तदपवादोऽयं योग इति भावः। **गावश्च स्त्रियो, गावश्च पुरुषाः** इति विग्रहः, गोशब्दो वृषभे पुंसि धेन्वां च स्त्रियां वर्तते, तत्र प्रथमः स्त्रियां द्वितीयश्च पुंसीति स्पष्टावगतये प्रथमे स्त्रिय इत्यस्य द्वितीये पुरुषा इत्यस्यानुप्रयोगः, समूहरूपेण स्थिता गाव इति भावः, **इमा गावः** इति-गावः इत्येकशेषः, स च स्त्रिया इति ज्ञापनाय इमा इत्यनुप्रयोगः। **अजाश्चेमे अजाश्चेमाः** इति विग्रहः, अजशब्दस्य अजाशब्दस्य बहुवचने 'अजाः' इति समानं रूपं भवतीति न तत्र स्त्री-पुरुषविवेको भवतीति प्रथमः पुंसि इति ज्ञापनाय 'इमे' इति, द्वितीयः स्त्रियामिति ज्ञापनाय 'इमाः' इत्यनुप्रयोगः, **इमा अजाः** इति-'अजाः' इत्येकशेषः, स च स्त्रिया इति ज्ञापनाय 'इमाः' इत्यनुप्रयोगः। अतिदिशति-**एवमिति**, **मेष्यः** इत्येकशेषः, **इमाः** इति स्त्रीशेषज्ञापनायानुप्रयोगः, मेषाश्चेमे मेष्यश्चेमा इति विग्रहः, **महिष्यः** इत्येकशेषः, **इमा**

इति स्त्रीशेषज्ञापनायानुप्रयोगः, महिषाश्चेमे महिष्यश्चेमा इति विग्रहः। उदाहृताः सर्वे गवाद्याः पशवो ग्राम एव भवन्ति, यद्यपि क्वचिदरण्येऽपि तेषां सम्भवस्तथापि बाहुल्येन प्रसिद्धा एते ग्रामेष्वेव स्वस्वकार्यसाधनार्थं मनुजैः पाल्यन्ते।

5 पदकृत्यं पृच्छति-**ग्राम्येति किमिति**-प्रायः संघो ग्राम्याणामेव पशूनां प्रसिद्धः संघसाधकमानवसम्बन्धादित्यभिप्रायेण प्रश्नः, न केवलं ग्राम्याणामेव संघः, आरण्या अपि स्वभावादेव संघीभूताश्चरन्तीति तेषु मा भूदेकशेष इत्येतदर्थं ग्राम्येति वक्तव्यमित्याशयेनोत्तरयति-**आरण्यानां मा भूदि**ति, प्रत्यु-

10 दाहरति-**रुरवश्चेमे रुरवश्चेमाः** इति विग्रहः, रुरवो मृगविशेषाः, **इमे रुरव** इति-रुरव इति पूर्वेणैकशेषः, स च पुंस इति ज्ञापनाय इमे इत्यनुप्रयोगः; **पृषताश्च पृषत्यश्चे**ति विग्रहः, **पृषताः** इति पूर्वेणैकशेषः, **इमे** इति पुंशेषज्ञापनायानुप्रयोगः, पृषता मृगविशेषाः, नोक्ता मृगविशेषा ग्राम्याः,

15 ग्रामेऽनुपलभ्यमानत्वाद् मानवप्रयोजनानिर्वाहकत्वेन तैः पाल्यमानत्वाभावात्। **अशिशुग्रहणं किमि**ति-शिशूनां प्रायो मातृसहचारित्वात् पृथक् संघीभवनाभावान्न तेष्वतिप्रसक्तिरिति मत्वा प्रश्नः, शिशवो हि न स्तनन्धया इह विवक्षिता अपि त्वप्राप्तयौवनाः, अत एव पाणिनीयतन्त्रेऽशिशुस्थानेऽतरुण-

20 शब्दः पठ्यते, तथा च मात्रपेक्षारहिता द्विहायनादयो वत्साः संघीभूय चरन्त्येवेति तेषु सूत्राप्रवृत्त्यर्थमशिशुग्रहणमावश्यकमेवेत्याह-**वत्साश्चेमा वत्साश्चेमे** इति-वत्सशब्दो गोशिशुवाची न तु गोसामान्यवाचीह, **बर्कर्यश्च बर्कराश्चे**ति-बर्करशब्दोऽजशिशुवाची, न तु छागसामान्यवाचीति नानेन

25 स्त्रीशेषः, किन्तु पूर्वेण पुंशेषे-**इमे वत्साः, बर्करा** इति। **द्विशफेति किमि**ति-ग्राम्याणां गवादीनां प्रायो द्विशफत्वस्यैव दृष्टत्वात् प्रश्नः न केवलं गवादयो ग्राम्या द्विशफाः, अश्वोऽपि ग्राम्यः, स चैकशफ एव, तत्र मा भूदित्येतदर्थं द्विशफग्रहणमावश्यकमित्याशयेनोत्तरयति-**अश्वाश्चेमे**

30 इत्यादिना, न केवलं द्विशफग्रहणमेकशफानां व्यावृत्त्यर्थमपि तु पशुसंघाक्षेपार्थमपि, तथा च तदभावे शफहीनेषु मनुष्य-पक्षिष्वपि संघीभूतेषु सूत्रं प्रवर्तयिष्यत इत्याह-**मनुष्यश्चेमा** इत्यादि, तथा चैषु सर्वत्र पूर्वसूत्रेण पुरुषशेष इति भावः। **संघग्रहणं किमि**ति-प्रायोग्रहणाद् बाहुल्याभिप्रायकात् संघ एव भविष्य-

35 तीत्यभिमानेन प्रश्नः, प्रायोग्रहणं हि संघेऽपि क्वचित् तदभावार्थमिति संघाभिन्नस्य व्यावृत्तिस्तेन न स्यादिति संघ एव विधानार्थं संघग्रहणमावश्यकमित्याशयेनोत्तरयति-**गौश्चायमि**त्यादिना, ननु द्वयोरपि संघीभवनसम्भवात् कथं संघग्रहणेन तद्व्यावृत्तिरिति चेत्? न-सहोक्त्यैव द्वयोः समुदायस्यावरतो लाभसम्भवात्

40 संघग्रहेण बहूनामेव समुदाय इष्ट इति तदभावे तादृशप्रतीत्यभावाद् द्वयोर्वारणमसम्भवि, संघग्रहणे तु बहूनां समुदायाभावान्न द्वयोः सहोक्त्यावनेन स्त्रीशेषो भवति किन्तु पुरुषशेष एव स्यादित्याशयात्। **प्राय इति किमि**ति-सूत्रोक्तपशुषु ह्येकशेषस्यैव दर्शनात् प्रायोग्रहणमनर्थकमित्यभिमानेन प्रश्नः, उष्ट्रादीनामपि संघीभवनात् तेषु च पुंसामेव बाहुल्यात् पुरुषशेषस्यैव प्रसिद्धत्वात् 45 तत्र सूत्राप्रवृत्त्यर्थं प्रायोग्रहणमावश्यकमित्याशयेन समाधत्ते-**उष्ट्र्यश्च उष्ट्राश्च-उष्ट्राः** इति, उष्ट्राणां ग्राम्यत्वे विसंवदतां कैयटादीनां मतेन प्रत्युदाहरणान्तरमाह-**छाग्यश्च-छागाश्च-छागाः** इति, वस्तुतस्तु उष्ट्रा अपि देशविशेषे ग्रामेष्वेव समुपलभ्यन्ते, भारवाहाद्यर्थं मनुजैः पाल्यन्ते चेति तेषामपि ग्राम्यत्वं 50 निर्विवादमेव, प्रायोग्रहणस्य प्रयोजनदार्ढ्यार्थमेव प्रत्युदाहरणान्तरमिति बोध्यम्। व्यावृत्तिस्थलानां बहुत्वेन तद्विषयेऽभिमतमेकशेषं प्रान्ते दर्शयति-**व्यावृत्तौ सर्वत्र पूर्वेण पुरुषशेष एव भवती**ति। तन्मात्रभेदानुवृत्तेरप्यावश्यकत्वमित्याह-**तन्मात्रभेद इत्येवे**ति, व्यावर्त्यं दर्शयति-**गोबलीवर्दमि**ति-गावश्च 55 बलीवर्दाश्चेति विग्रहः, अत्र बलीवर्दशब्देन गवां पुरुषा उच्यन्ते इति नार्थभेदोऽस्ति, प्रकृतिरन्येति न भवति, प्रकृतिरिति प्रत्ययादन्यः शब्दभाग उच्यते, एकशेषाभावे "पशुव्यञ्जनानाम्" [३. १. १३२.] इति सूत्रेणैकार्थो द्वन्द्व एव, नन्विह कथं द्वन्द्वः? गाव इति सामान्यशब्दोऽयम्, अनेन हि स्त्रीगव्यः पुंगवाश्च 60 सामान्येनोच्यन्ते, बलीवर्दाश्च पुङ्गवाः, तत्र गोशब्देनैव बलीवर्दार्थस्य गतत्वान्न बलीवर्दशब्दः प्रयोगमर्हतीति चेत्? उच्यते-पर्यायशब्दानामिव सामान्य-विशेषशब्दानां द्वन्द्वोपपत्तेः, तथाहि-त्रिविधो गोशब्दः-स्त्रीविषयः, पुरुषविषयः, सामान्यविषयश्चेति, स्त्रीविषयो यथा, इमा गावो दुह्यन्त इति, पुरुषविषयो यथा इमे 65 गावो भारं वहन्तीति, सामान्यविषयो यथा इमा गावो नाश्वा इति, तत्र यः स्त्रीविषयस्तस्यायं प्रयोग इति द्वन्द्वोपपत्तिः, विशेषविवक्षायामेव च द्वन्द्वप्राप्तौ तदपवाद एकशेष आरभ्यते, प्रकृते प्रकृतिलिङ्गोभयभेदसत्त्वान्न केनाप्येकशेषः, एवमुत्तरप्रत्युदाहरणेऽपि ज्ञेयम्। एवम्-अजा अजस्त्रियः, अविका अजपुरुषा इति 70 विग्रहे नानेनैकशेषः, किन्तु "गवाश्वादिः" [३. १. १४४.] इत्येकार्थो द्वन्द्व एव भवति-**अजाविकमि**ति, तथा चेदृशलक्ष्यसिद्ध्यर्थमिहापि तन्मात्रभेद इत्यस्यानुवर्तनमावश्यकमिति भावः।

पाणिनीयतन्त्रे चैतत् स्थानीयं "ग्राम्यपशुसंघेष्वतरुणेषु स्त्री" [१. २. ७३.] इति सूत्रं भाष्ये प्रत्याख्यातम्, अयं च तत्रत्य- 75 ग्रन्थस्याशयः-स्त्री-पुंसात्मकसंघस्य स्त्रीशब्देनाभिधानं यथा स्यादित्येतदर्थमेवेदं सूत्रमारभ्यते, तच्च नोचितं संघस्योभयात्मकत्वाभावात्। 'गोष्वजेषु महिषेषु' एवमादिषु ग्रामपशुषु ह्येतद् दृश्यते यत् पुंगावः पुमजादयश्च वाहाय विक्रयाय च स्त्रीभ्य उत्कालिता भवन्ति, ततश्च स्त्रिय एवाधिक्येन संघीभूय वहन्ति; 80

यद्यपि स्त्रीगोष्वपि कश्चिद् वृषभः प्रजननार्थं स्थाप्यते, स च गोष्वेव मिश्रीभूय चरति, तथापि स्त्रीणामेव तत्राधिक्यान्मल्लग्रामादिवत् स्त्रीत्वेनैव तत्र व्यपदेशो युक्त इति स्त्रीप्रयोग एव भविष्यतीति नार्थोऽनेन सूत्रेण ग्राम्येष्वेव यथा स्यादारण्यकेष्वि-
5 त्येतदर्थं सूत्रस्यावश्यकत्वमिति न वक्तव्यम्, आरण्येषु पुंसामेव प्राधान्यात् तत्र पुंल्लिङ्गप्रयोगस्य न्यायत एव प्राप्तत्वात्। ग्राम्या हि वाहाय विक्रयाय च पुमांसः पृथक्कृता भवन्ति, आरण्यानां ग्रहीतुमशक्यत्वेन वाहादिप्रयोजनाभावेन च पृथक्करणासंभवात् पुरुषाः स्त्रियश्च संघीभूता एव चरन्तीति तेषु पुंसामेव प्राधान्य-
10 मक्षतमिति पुरुषशेष एव तत्र स्वभावाद् भविष्यति। पशुष्वेवायं स्त्र्येकशेष इत्येतदर्थं सूत्रमित्यपि न वक्तव्यम्, यतो ब्राह्मणा इमे इत्यादयः प्रयोगा अपि स्वभावत एव भविष्यन्ति, मनुजेषु पशुषु वा प्रसह्य पुरुषाणां वाहादिप्रयोजनाय पृथक्करणस्याशक्यतयोभयात्मकसंघे पुंसां प्राधान्यात् तेषामेव शेषः स्यात्। संघे एव
15 यथा स्यात्, द्वयोर्मा भूदित्येतदर्थमपि सूत्रमनावश्यकमेव, द्वयोर्हि एकः पुमानपरा स्त्रीति निश्चितत्वेन पूर्वसूत्रेण पुरुषस्य शेषः स्वभावत एव सिद्ध इति निश्चितेऽर्थे विपरीतप्रयोगासम्भवादेव तदर्थं सूत्रस्यानावश्यकत्वात्। अशिशुष्वेव स्त्रीशेषार्थं सूत्रमित्यपि निर्मूलमेव, शिशूनामपि वाहाद्यर्थं पृथक्करणाभावात् स्त्रीमिश्रित-
20 त्वात् प्राधान्याच्च पुंसामेव शेष इति निश्चयात्। इत्थं च विनापि सूत्रं स्वभावादेव लक्ष्याणां सिद्धतया सूत्रमदृष्टार्थमेवेति तन्मतम्। स्वमते चैतावद्व्याख्यानगम्यस्यार्थस्य मन्दैर्दुरवबोधतया 'व्याख्यानाद् वरं करणम्' इति न्यायेन स्पष्टप्रतिपत्तये वा सूत्रमारब्धमिति तत्त्वम् ॥ ३. १. १२७. ॥

25 **क्लीबमन्येनैकं च वा । ३ । १ । १२८ ॥**

**त० प्र०–क्लीबं–नपुंसकं नाम, अन्येनाक्लीबेन सहोक्तावेकं शिष्यते, तन्मात्रभेदे–क्लीबाक्लीबमात्र एव चेद् भेदो भवति, तच्च शिष्यमाणमेकमेकार्थं वा भवति; अर्थस्यैकत्वे तद्विशेषणानामपि तथाभावः । शुक्लं च वस्त्रं शुक्लश्च कम्बलः–तदिदं**
30 **शुक्लम्, ते इमे शुक्ले वा; शुक्लं च वस्त्रं शुक्ला च शाटी–तदिदं शुक्लं, ते इमे शुक्ले वा; शुक्लं च वस्त्रं शुक्लश्च कम्बलः शुक्ला च शाटी–तदिदं शुक्लं, तानीमानि शुक्लानि वा । क्लीबग्रहणं किम्? स्त्रीपुंसयोरपि शेषः स्यात् । अन्येनेति किम्? शुक्लं च शुक्लं च-शुक्ले, शुक्लं च शुक्लं च शुक्लं च–इमानि शुक्लानि,**
35 **"स्यादावसंख्येयः" [ ३. १. ११९. ] इत्येकशेषः, अनेन त्वेकशेषे विकल्पेनैकार्थत्वं प्रसज्येत । तन्मात्रभेद इत्येव? महद्धिमं हिमानी, हिमं च हिमानी च–हिमहिमान्यौ, महदरण्यम् अरण्यानी, अरण्यं च अरण्यानी च–अरण्यारण्यान्यौ, अक्षाश्च देवनादयः, अक्षाणि चेन्द्रियाणि–अक्षाक्षाणि, पद्मश्च नागः, पद्मा च लक्ष्मीः, पद्मं च जलजं–पद्मपद्मापद्मानि, एषु** 40
**प्रवृत्तिनिमित्तलक्षणार्थभेदोऽप्यस्तीति नैकशेषः ॥ १२८ ॥**

**श० म० न्यासानुसन्धानम्–क्लीब० । एकं शिष्यते** इति–"समानामर्थेनैकः शेषः" [ ३. १. ११८. ] इत्यतोऽनुवृत्तम् 'एकः' इति 'क्लीबम्' इति विशेष्यपारतन्त्र्येणात्र क्लीबतया विपरिणमत इत्येकं शिष्यत इत्येव व्याख्यातम्। 45
प्रकृतसूत्रस्थमेकमिति स्वार्थपरमित्याह–**तच्च शिष्यमाणमेकमेकार्थमिति**–द्वयोर्द्विवचनं बहुषु बहुवचनं च प्राप्तमित्येकवचनविधानार्थमेकार्थत्वमिह विधीयते । ननु द्विधा सहोक्तिरितरेतरयोगरूपा समाहाररूपा च, तत्र समाहाररूपायाः सहोक्तेर्विवक्षायां स्वभावत एवैकवचनं सेत्स्यत्येवेति किमेकत्व- 50
विधानेनेति चेत्? न–एकशेषविषये सहोक्तिसत्त्वेऽपि समाहारविवक्षाया अभावस्यानेन ज्ञापनात्, अन्यथाऽन्यत्राप्येकशेषविषये एकवचनप्रयोग आपद्येत, वस्तुतस्तु सहोक्तिरूपविषयैक्यसत्त्वेऽप्येकशेषविषये इतरेतरयोगस्य समाहारस्य वा प्रतीतौ मानाभाव इत्येके । अपरे त्वेवमाहुः–प्रकृतसूत्रेणैकशेषे 'एकं च 55
वा' इत्यस्योपादाने 'शुक्लं शुक्ले' इत्यादि रूपद्वयं प्रयोजनं, तच्चान्यथासिद्धं, समाहारेतरेतरयोगविवक्षया विकल्पेनैकत्वसिद्धेः, तच्च व्यर्थीभूय ज्ञापयति–समाहारद्वन्द्वविषयेऽप्येकशेषे वचनविधौ नैव समाहारविवक्षा किन्त्वितरेतरयोगविवक्षैव, तेन सर्वत्रैकशेषे यथायोगं द्विवचनादि सिद्ध्यति, उत्सर्गसमानदेशा अपवादाः, 60
द्वन्द्वापवादश्चैकशेषः, द्वन्द्वश्च समाहारेतरेतरयोगान्यतरविवक्षायामेवेति द्वन्द्वविषयतासम्पत्तयेऽन्यतरविवक्षा तु समाश्रयितव्यैवैकशेषविधाने इति । एकशेषार्थस्य विशेष्यस्यैकत्वे विहिते तत्पारतन्त्र्येण तद्विशेषणसर्वनामादेरप्येकत्वमेव भवतीत्याह–**अर्थस्यैकत्वे तद्विशेषणानामपि तथाभाव** इति। 65

विगृह्योदाहरति–**शुक्लं च वस्त्रमित्यादिना, शुक्लं च शुक्लश्चेति तच्च स चेति** च विग्रहौ, **'शुक्लं, तत्, शुक्ले, ते'** इत्येकशेषाः, वस्त्र-कम्बलयोरुपादानं विशेष्यपरिज्ञानार्थमेव, न तु एकशेषे सति वस्त्रत्वेन कम्बलत्वेन वा प्रतीतिरस्ति, किन्तु शुक्लरूपवत्त्वेनैव । द्वयोरेकत्वमुदाहृत्य बहूनामेकत्वमुदा- 70
हरति–**शुक्लं च शुक्लश्च शुक्लानि चेति, तच्च स च सा चेति** च विग्रहौ, **'शुक्लम्, तत्, शुक्लानि, तानि'** इत्येकशेषाः, इदं चायं चेयं चेति–इदम्, इमानि ।

पदकृत्यं पृच्छति–**क्लीबग्रहणं किमिति**–पूर्वं पुरुष-स्त्रियोरेकशेषः क्रमशो विहित एव, परिशेषादेकमिति विशेषणसाम- 75
र्थ्याच्च क्लीबस्यैवैकशेषः स्यादेवेति क्लीबग्रहणं व्यर्थमिति प्रश्नाशयः, क्लीबग्रहणाभावे तस्य विशेषणमहिम्नाक्षेपेऽपि शब्दानुपस्थितत्वेन पृथग् वाक्यार्थकल्पनं न स्यात्, तथा च 'अन्येन सहोक्तौ

शिष्यमाणं नपुंसकमेकार्थं भवति' इत्येकमेव वाक्यं स्यादिति क्लीबैकशेषस्य विशिष्य विधायकपूर्ववाक्याभावेन कदाचित् स्त्री-पुंसयोरप्येकशेषः स्यादित्याह-**स्त्री-पुंसयोरपि शेषः स्यादि**ति। सहोक्तिरेकस्मिन् दुर्घटेति नियमतोऽन्येनैव सहोक्तौ भविष्यत्येवेत्यन्येनेति व्यर्थमित्याशङ्कते-**अन्येनेति किमि**ति, अन्येनेत्यस्य द्वितीयेनेति नार्थः किन्तु स्वभिन्नलिङ्गेनेति समानलिङ्गयोः समानलिङ्गानां वा सहोक्तौ नानेनैकशेषः, असति चान्येनेति पदाभावे क्लीबस्य क्लीबेन सहोक्तावपि सूत्रं प्रवर्तयिष्यते, तच्चानिष्टमित्याह-**शुक्लं च शुक्लं च-शुक्ले, शुक्लं च शुक्लं च शुक्लं च इमानि शुक्लानी**ति, ननु भवताप्येकशेषः प्रयुक्तस्तर्हि किमियं व्यावृत्तिर्दत्तेति चेत्? अत्राह-"**स्यादावसंख्येयः**" **इत्येकशेषः** इति। ननु 'अन्येन' इति पदाभावेऽनेनैव यद्येकशेषः स्यात् तदा का हानिरिति चेत्? अत्राह-**अनेन त्वेकशेषे विकल्पेनैकार्थत्वं प्रसज्येते**ति-शुक्लं शुक्ले, शुक्लं शुक्लानि, इत्येवं रूपद्वयं स्यादिति भावः। तन्मात्रभेद इत्यस्यानुवृत्तिरिहाप्यावश्यिकैवेत्याह-**तन्मात्रभेद इत्येवे**ति, तद्व्यावर्त्यमाह-**महद्धिममि-त्यादि**ना, महद् हिममित्यर्थे हिमानी, महद् अरण्यमित्यर्थे अरण्यानीति भवति, उभयत्र "यव-यवना-ऽरण्यहिमाद् दोष-लिप्युरु-महत्त्वे" [ २. ४. ६५. ] इति ङी आन् चान्तः, **हिमं च हिमानी चे**ति विग्रहः, **हिम-हिमान्यौ** इति च द्वन्द्वः, एवम्-**अरण्यं च अरण्यानी चे**ति विग्रहः, **अरण्या-ऽरण्यान्यौ** इति च द्वन्द्वः; अत्र यद्यपि महत्त्वं क्लीबान्यस्त्रीलिङ्गनिमित्तमेव भेदप्रयोजकमिति तन्मात्रभेदादधिकस्य भेदस्याभाव इति वक्तुं शक्यते, तथापि प्रवृत्तिनिमित्तगतस्य महत्त्वस्योपाधिभूतस्योपधेयस्त्रीत्वविशिष्टारण्यभेदप्रयोजकत्वमस्त्येवान्यथा तस्योपाधित्वमेव न स्यात्। अत्र प्रवृत्तिनिमित्तभेदे विवदतां संतोषाय व्यावर्त्यान्तरमाह-**अक्षाश्च देवनादयः, अक्षाणि चेन्द्रियाणि-अक्षा-ऽक्षाणि** इति-अक्षाश्च अक्षाणि चेति विग्रहः, अत्रार्थप्रदर्शनाय देवनादय इत्याद्युक्तम्, अक्षा-ऽक्षाणीति च द्वन्द्वः, एवमुत्तरत्रापि घटना कार्या, पद्मशब्दो नागे लक्ष्म्यां जलजे [ कमले ] च वर्तत इति तद्घटितं विग्रहमाह-**पद्मश्च नाग** इत्यादिना, **पद्म-पद्मा-पद्मानी**ति च द्वन्द्वः। व्यावृत्तिस्थलेषु प्रवृत्तिनिमित्तरूपार्थभेदोऽप्यस्तीति न क्लीबत्वतदितरत्वमात्रभेद इत्याह-**एषु प्रवृत्तिनिमित्तलक्षणार्थभेदोऽप्यस्तीति नैकशेषः** इति-प्रवृत्तिनिमित्तमेव लक्षणं स्वरूपं यस्य तादृशश्चासावर्थभेदः सोऽप्यस्तीति नैकशेष इष्टः, तन्मात्रभेद इत्यस्यानाश्रयणे च स्यादेवेति भावः।

पाणिनीये तन्त्रे चैतत् सूत्रसमानविषयं "नपुंसकमनपुंसकेनैकवचान्यतरस्याम्" [ १. २. ६९. ] इति सूत्रं प्रत्याख्यातं भाष्ये, तदाशयश्चायम्-शुक्ला च शुक्लं चेत्यादिविग्रहे सकलविभक्तौ रूपसाम्याभावादेकशेषाप्राप्तौ क्लीबस्यैकशेषार्थमेकत्वविधानार्थं च सूत्रमिदमारभ्यते। तत्र प्राधान्यादेव नपुंसकस्यैव शेषो भविष्यति, अनिश्चितेऽर्थे गुणसन्देहे च नपुंसकस्यैव प्रयोगदर्शनात्, सत्त्व-रजस्तमसां साम्यावस्थारूपस्थितेश्च सर्वेस्थित्यपेक्षया प्राधान्यात् तस्यैव च क्लीबत्वप्रयोजकत्वात् क्लीबलिङ्गस्यैव प्रयोगो भविष्यति। अनिर्ज्ञातेऽर्थे स्त्री-पुंसान्यतरनिर्णयेऽपि क्लीबस्यैव प्रयोगो भवति, यथा किं जातमिति, प्रायेण स्त्री-पुंसयोरेवोत्पत्तिर्दृश्यते तथापि क्लीबेनैव सर्वसामान्येन प्रश्नः क्रियते। किञ्च दूरस्थमव्यक्तरूपं किमपि वस्तु दृष्ट्वा लोका वदन्ति महिषीरूपमित्यादि, न हि महिषीवेति, तथा च रूपपदप्रयोगेण तत्र नपुंसकत्वमानीयते सामान्यताबोधनार्थम्। इति नपुंसकस्य सर्वापेक्षया प्राधान्यमिति प्रधाने कार्यसम्प्रत्ययस्य न्याय्यत्वात् तस्यैव प्रयोगः स्वभावत एव भविष्यतीति नार्थः सूत्रेण। एकार्थत्वविधानार्थमपि नावश्यकं सूत्रम्, आकृतिवाचित्वादेकवचनं भविष्यति, यदाऽऽकृतिगतसंख्या विवक्षा तदैकवचनं, यदा चाकृत्याश्रयद्रव्यगतसंख्याविवक्षा तदा द्विवचनादीति सूत्रं विनापि सर्वप्रयोजनसिद्धेर्नार्थोऽनेन सूत्रेणेति। स्वमते च न्यायसिद्धस्यैवार्थस्याऽमन्दबुद्धिवैशद्यसाधनाय सूत्रस्यावश्यकत्वं ज्ञात्वा न प्रत्याख्यानरीतिर्दर्शितेत्यास्तां विस्तरः ॥ ३. २. १२८. ॥

## पुष्यार्थाद् भे पुनर्वसुः । ३ । १ । १२९ ॥

**त० प्र०—एकशेषो निवृत्तः, एकमित्यनुवर्तते, पुष्यार्थाच्छब्दाद् भे-नक्षत्रे वर्तमानात् परो भ एव वर्तमानः पुनर्वसुशब्दः सहोक्तौ गम्यमानायां सामर्थ्याद् द्व्यर्थः सन्नेकः-एकार्थो भवति। उदितौ पुष्य-पुनर्वसू, अर्थग्रहणं पर्यायार्थम्-तिष्य-पुनर्वसू, सिध्यपुनर्वसू; समाहारे तु पुष्यपुनर्वसु। पुष्यार्थादिति किम्? आर्द्रा-पुनर्वसवः। पुनर्वसुरिति किम्? पुष्यमघाः। भ इति किम्? पुष्यपुनर्वसवो माणवकाः। सहोक्तावित्येव-पुष्यः पुनर्वसू येषां ते-पुष्य-पुनर्वसवो मुग्धाः ॥ १२९ ॥**

**श० म० न्यासानुसन्धानम्-पुष्यार्थात्०।** प्रकरणभेदस्य सूत्रकृताऽनुल्लेखात् तस्य च तदाशयेन तत्परिपाठ्यैवावसेयत्वात् तदवगमयति-**एकशेषो निवृत्तः** इति-प्रकृतसूत्रविधेयार्थेन सह सम्बन्धासम्भवादित्यभिप्रायः, न तु भिन्नसूत्रकरणादिति तन्निवृत्तिहेतुकथनं युक्तम्, पूर्वस्य विकल्पविधित्वेनास्य च नित्यविधित्वेन पृथग्योगकरणस्यावश्यकत्वात्। न च तत्रैव प्रकृतसूत्रस्थपदैः सह नित्यमित्यपि पठनीयमिति नित्यत्वसिद्धिरिति वाच्यम्, नित्यग्रहणरूपगौरवपराहतत्वादि-

त्यास्तां तावत् प्रकरणभेदेन पूर्वसूत्रेण सर्वथाऽसम्बन्ध एवेति प्रतीतिसम्भावनायामाह–**एकमित्यनुवर्तते** इति–एकशेष-प्रकरणमात्रभेदो न तु सर्वथाऽसम्बन्धः, एकार्थत्वस्यैवानेनापि विधेयत्वात्, तथा च *क्वचिदेकदेशोऽप्यनुवर्तते*इति न्यायेन 5 'एकम्' इत्येतावदेव प्रकृतसूत्रेऽपेक्ष्यते । **पुष्यार्थादि**ति–पुष्यः, अर्थोऽभिधेयं यस्य स पुष्यार्थः, अन्यपदार्थशब्द एवान्यस्य सम्भवात् शब्दादिति विज्ञायते, सूत्रस्थं 'भे' इति पदं *देहलीदीपक*न्यायेन तन्त्रेण चोभयत्र सम्बध्यते, भशब्दश्च नक्षत्रवाचीत्याह–**पुष्यार्थाद् भे-नक्षत्रे वर्तमानात्**, पर-10 दिग्योगे पञ्चमी, पुनर्वसुशब्दवाच्यार्थस्य ततः परत्वासम्भवादाह–**परो भ एव वर्तमानः पुनर्वसुशब्दः** इति, **सहोक्तौ गम्यमानायामि**ति–पुष्यार्थपुनर्वस्वोरेव, **द्व्यर्थः सन्नेक एकार्थो भवतीति**–द्व्यर्थः सन् इत्यनेनैकत्वविधेरर्थवत्तां दर्शयति, यदि पुनर्वसुशब्दोऽनेकार्थः स्यात् तदायमेकत्वविधि-रर्थवान् स्यात्, यदि त्वयं पुष्यार्थवदेकार्थ एव किमनेनैकत्व-15 विधिना सिद्धत्वादेकत्वस्य यद्यप्ययमन्यत्र द्व्यर्थः, द्वन्द्वे एकार्थः, सम्भवति च द्वयोस्तारकाभेदे द्वित्वेऽपि नक्षत्रतयैकत्वं–द्वे तारके, एकं नक्षत्रमिति । न चैवं सति द्वन्द्वे वाक्यवद् द्व्यर्थ-तापि भवति, नापि प्रत्युदाहरणेष्वेकत्वम्, यथादर्शनमभिधान-शक्त्यभ्युपगमादिति प्रतिपत्तिर्दुष्करा भवति, **उदितौ पुष्य-20 पुनर्वसू** इति–पुष्यश्च पुनर्वसू चेति विग्रहः, पुष्य एकः पुनर्वसू द्वौ, तत्र पुनर्वस्वर्थस्यैकत्वे द्व्यर्थ एव द्वन्द्व इति द्वन्द्वात् तद्विशेषणाच्च द्विवचनं, यदीदं न स्यात् तदा बह्वर्थो द्वन्द्व इति बहुवचनं स्यात् । समाहारे एकत्वा-ऽनेकत्वयोर्नास्ति विशेष इति तदत्रानुदाहरणम् । अर्थग्रहणं किमर्थमित्यत आह–**अर्थ-25 ग्रहणं पर्यायार्थमि**ति–आर्द्रादिनिवृत्त्यर्थं पुष्यादिष्वुच्यमाने स्वरूपप्रतिपत्त्याऽऽर्द्रादिवत् पुष्यपर्यायस्यापि तिष्यादेर्निवृत्तिः स्यात्, अतस्तत्परिग्रहार्थमर्थग्रहणम्, कार्ययोगिनि प्रत्यासन्ने शब्दे स्थिते विनार्थग्रहणेन लक्ष्यानुसरणात् सम्प्रदायाद् वाऽर्थ-निर्देशोऽयमिति प्रतिपत्तिर्गरीयसी । तिष्य-सिध्यशब्दौ पुष्यपर्या-30 याविति तद्घटितमुदाहरणयुगलमाह–**तिष्यपुनर्वसू, सिध्य-पुनर्वसू** इति–तिष्यश्च पुनर्वसू च, सिध्यश्च पुनर्वसू चेति विग्रहः । इतरेतरयोग एव द्विवचनसम्भावनया समाहारे प्रकृतसूत्रप्रवृत्त्यप्रवृत्त्योर्विशेषाभावेऽपि पक्षान्तरलभ्यप्रयोगप्रद-र्शनार्थमेवाह–**समाहारे तु पुष्यपुनर्वसु** इति–प्रकृतसूत्रो-35 दाहरणे इतरेतरयोग एव द्वन्द्वः, समाहारे तु समाहारस्यैकत्वा-दिहैकवचनमेव श्रूयत इति भावः । न चात्रैकार्थत्वविधायक-सूत्राभावात् कथमेकवचनमिति वाच्यम्, "अप्राणिपश्वादेः" [३. १. १३६.] इति सूत्रेण जातिनिबन्धनैकवद्भाव-सम्भवात् ।

"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । 40
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥"

इत्युदयनोक्तरीत्या कथं तयोर्जातिवाचकत्वम् ? एकस्याप्य-वस्थाभेदेनानेकत्वकल्पना तु न प्रकृतप्रकरणस्थजातिनियामिका भविष्यति, तथा सति जातिग्रहणस्याव्यावर्तकत्वापत्तेः, अत्र पाणिनीयाः–प्रतिमन्वन्तरे भिन्नान्येव नक्षत्राणि पूर्वप्रसिद्धनाम-45 कान्येवोत्पद्यन्त इति स्वीकारात् तेषां चानेकत्वान्न दोषः, न च नक्षत्राणां प्राणित्वेन अप्राणीति पर्युदासः प्राप्नोतीति वाच्यम्, नक्षत्राणां प्राणित्वस्यास्वीकारात् "अथवा नात्र भवन्तः प्राणिनः, प्राणा एवात्र भवन्तः" इति भाष्याच्च । अयमर्थः–प्राणिनां नक्षत्राधीनस्थितिकत्वात् प्राणित्वं नास्ति, किन्तु प्राण-50 रूपत्वमेवेत्यप्राणिशब्देन न तेषां पर्युदासः । अथवा येषु द्वन्द्वे-ष्वेकार्थत्वं विधीयते तत्र नियमेनैकवद्भावः, यत्र च न विधीयते तत्र स्वभावत एवेतरेतरयोग-समाहाराविति नास्ति तत्र वचन-विशेषसाहाय्यापेक्षेति समाहारो निर्बाध इति ।

पदकृत्यं पृच्छति–**पुष्यार्थादिति किमि**ति–तथा च 'भे 55 वर्तमानात् परो भ एव वर्तमानः पुनर्वसुशब्दः' इत्येवार्थः कार्य इति प्रश्नाशयः । अन्यस्मात् परस्य तस्यैकत्वं नेष्टमित्याह–**आर्द्रा-पुनर्वसवः** इति–आर्द्रा च पुनर्वसू चेति विग्रहः, अत्रार्द्राशब्दो न पुष्यार्थोऽतस्ततः परस्य पुनर्वसुशब्दस्य नैकत्वमपि तु द्वित्वमेवावतिष्ठत इति बहुवचनम् । पुनः 60 पृच्छति–**पुनर्वसुरिति किमि**ति–तथा च 'पुष्यार्थात् परो भ एव वर्तमानो यः कोऽपि शब्दः स एकवद् भवति' इत्यर्थ आश्रयणीय इति भावः, व्यावर्त्यमाह–**पुष्य-मघाः** इति–पुष्यश्च मघाश्चेति विग्रहः, अत्र पुनर्वसुरिति वचनात् मघानां नैकत्वम्, अयमाशयः–न केवलं पुनर्वसुशब्दस्यैवानेकार्थत्वमपि 65 तु मघाशब्दस्यापि, "मघासु मुनयो गताः" इत्यादिप्रयोगदर्श-नात् "मघा अप्कृत्तिका बहौ" इति लिङ्गानुशासनाच्च मघा-शब्दः बहुत्वे स्त्रियां चास्थेयः, एवं च पुनर्वसुग्रहणाभावे पुष्यमघे इति प्रसज्येतेति, **भ इति किमि**ति–पुष्यस्य पुनर्वस्वोश्च भत्वे नक्षत्रत्वेनैव प्रसिद्धिः, यश्च कश्चिन्नामधेयोऽन्यः 70 स तदुपचारादेवेति गौणत्वं तत्र पुष्य-पुनर्वस्वोरिति *गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्ययः* इति न्यायान्नक्षत्रार्थकयोरेव तयोरिह ग्रहणं स्यादेवेति 'भे' इति कथनं व्यर्थमिति प्रश्नाशया प्रत्युदाहरणमुखेनोत्तरयति–**पुष्य-पुनर्वसवो माणवका** इति–पुष्येण चन्द्रयुक्तेन युक्तः कालः पुष्यः, पुनर्वसुभ्यां 75 चन्द्रयुक्ताभ्यां युक्तः कालः पुनर्वसुः "चन्द्रयुक्तात् काले, लुप् त्वप्रयुक्ते" [६. २. ६.] इति सूत्रेण अण्, 'लुप् त्वप्रयुक्ते' इत्यंशेन च तस्य लोपः, एवं कालवृत्तिभ्यां–पुष्ये जातः पुष्यः,

पुनर्वस्वोर्जातौ पुनर्वसू "भर्तु-सन्ध्यादेरण्" [ ६. ३. ८९. ] इत्यनेन पुनरपि अण्, तस्य च "बहुलाऽनुराधा-पुष्यार्थ-पुनर्वसु०" [ ६. ३. १०७. ] इति लोपः, एवमेकस्मिन् माणवके वर्तमानस्य पुष्यशब्दस्य द्वयोर्माणवकयोर्वर्तमानस्य पुनर्वसुशब्दस्य च द्वन्द्वः, एतत्संख्ययोर्द्वन्द्वकरणम्, अन्यथैकत्वविधेर्भावाभावयोरविशेषात्, तथा च पुष्यश्च माणवकः पुनर्वसू च माणवकौ पुष्य-पुनर्वसवो माणवका इति ज्ञेयम् । एवं प्रसाधनेऽपि नानयोर्गौणत्वं शास्त्रेण तत्र यौगिकत्वस्यानुशासनादुपचाराभावात्, तथा चात्रापि पुनर्वस्वोरेकत्वं मा भूदित्येतदर्थं 'भे' इति वक्तव्यं, तदुक्तौ च नात्र नक्षत्रपरत्वं तेषाम्, अपि तु तन्नक्षत्रयुक्तकालजातमाणवकपरत्वमिति न भवत्येकार्थम्, यत्र हि पुष्यार्थात् परः पुनर्वसुशब्दः ससमासोऽवश्यं सहोक्तावेव स्यात्, अन्यत्र तथा पूर्वापरभावासम्भवादित्याशयेन पृच्छति- **सहोक्ताविति किमिति**, तदभावेऽपि तयोः पूर्वापरभावसम्भवोऽन्यसमुदायेऽपीत्याशयेनोत्तरयति-**पुष्यः पुनर्वसू येषां ते पुष्यपुनर्वसवो मुग्धाः** इति, अत्रत्यो ग्रन्थो बहुभिर्बहुधा व्याख्यातः, तत्र च परस्परं सामञ्जस्यं न प्रतीयते, पाणिनीयमहाभाष्येऽप्यस्मिन् प्रश्ने प्रतिवचनमिदमेव दृश्यते, तच्च भाष्यं कैयटेनेत्थं व्याख्यातम्-"अवयवेन विग्रहः समुदायः समासार्थः" इति, तस्यायमाशयः-पुष्यपुनर्वसव एव मोहविषयीभूताः पुष्यपुनर्वसव उच्यन्ते, तेषां मोहविषयत्वे कारणं यत् पुष्यः पुनर्वसू विज्ञायते, पुनर्वसू वा पुष्यो विज्ञायेते, अत एव मोहविषयत्वमेषाम्, तथा च त एवान्यपदार्थः । एवं च मुग्धा इत्याधारे क्तः, यदि च कर्तरि क्त आश्रीयते तदा पुरुषा इति विशेष्यं स्यात्, तथा च पुष्यपुनर्वसुगता संख्या न समुदाये भवितुमर्हतीति सहोक्तिग्रहणाभावेऽपि नेह दोष इत्याधारे एव क्त इति स्वीकरणीयम्, एवं च पुष्यपुनर्वसुसमुदाय एवान्यपदार्थोऽपीति तस्य स्वगता [ वर्तिपदार्थनिष्ठा ] संख्यैवोचितेति पुनर्वसुशब्दस्यानेकार्थत्वे द्विवचनमेव स्यात्, सहोक्तिग्रहणे कृते तु द्वयोः सहोक्त्यभावेन न भवति सूत्रप्रवृत्तिरिति प्रकृतविषये प्रभाचन्द्रो विवेचयतीत्थम्-पुष्यः पुनर्वसू एषामित्यादि, पुष्यः कथं पुनर्वसू इत्यत उच्यते उन्मुग्धा इति, उन्मोहात् पुष्यस्य पुनर्वसुत्वं न तु तत्त्वत इत्यविरोधः, उन्मुग्धा इति विपर्यासेन प्रतिपत्तारः पुरुषा उच्यन्ते, कर्तरि क्तः । ननु चैवं प्रतिपत्ताविदं पुरुषबहुत्वे वर्तते इति न पुनर्वस्वर्थस्यैकत्वेऽप्युपपद्यत एव, भवत्वनेकत्वम्; एवं तर्हि अवयवेन विग्रहः समुदायः समासार्थ इत्यन्यपदार्थत्वेन ते त्रय एव तारकाविशेषा विपर्यासेन ज्ञायमाना उन्मोहविषया उच्यन्ते, उन्मुग्धा इत्यधिकरणे क्तः, अत्र बहुव्रीहावन्यपदार्थ उच्यते, तद्विशेषणं वर्तिपदार्थः, न च तत्र सहोक्तिरस्ति, सहोक्तिरिति हि प्राधान्येनाभिधानमुच्यते, तद् द्वन्द्वैकशेषयोरेव न वृत्त्यन्तरे । न चैवं समाहारे द्वन्द्वो न प्राप्नोति, वर्तिपदार्थयोरेव समाहारात्मकत्वात्, 'द्वन्द्वो वा' इत्यादिकाद् वा लिङ्गाद् भवतीति ॥ ३. १. १२९. ॥

## विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः । ३ । १ । १३० ॥

**त० प्र०**—द्रव्यं गुणाद्याश्रयः, विरोधिवाचिनां शब्दानां द्रव्यमप्रतिपादयतां द्वन्द्वो वा एकः-एकार्थो भवति, स चेद् द्वन्द्वः स्वैः सजातीयैरेवारभ्यते । सुख-दुःखम्, सुख-दुःखे; शीतोष्णम्, शीतोष्णे; जनन-मरणम्, जनन-मरणे; लाभाऽलाभम्, लाभाऽलाभौ; संयोगविभागम्, संयोग-विभागौ । विरोधिनामिति किम्? रूप-रस-गन्ध-स्पर्शाः, काम-क्रोधौ । अद्रव्याणामिति किम्? सुखदुःखाविमौ ग्रामौ, शीतोष्णे उदके । स्वैरिति किम्? बुद्धि-सुख-दुःखानि । समाहारे चार्थे एकत्वस्येतरेतरयोगे चानेकत्वस्य सिद्धत्वाद् विकल्पे सिद्धे सर्वमिदं विकल्पानुक्रमणं नियमार्थम्-विरोधिनामेवाद्रव्याणामेव स्वैरेवेति, तथा च प्रत्युदाहरणे इतरेतरयोग एव भवति॥१३०॥

**श० म० न्यासानुसन्धानम्—विरोधि०** । द्रव्यपदार्थस्य तत्तद्दर्शनकारैरनेकधा दर्शितत्वात् प्रकृते द्रव्यशब्देन किं ग्राह्यमित्याकाङ्क्षायामाह-**द्रव्यं गुणाद्याश्रयः** इति-आदिशब्देन क्रियादिपरिग्रहः, तथा च गुणादीनामधिकरणमिह द्रव्यशब्देन ग्राह्यमिति भावः । वैशेषिकादिपरिभाषितद्रव्यपरिग्रहे 'सुख-दुःखौ ग्रामौ, सुख-दुःखे वने, सुख-दुःखे सेने' इत्यादौ प्रतिषेधो न स्यात्, नहि तेषां ग्रामादि द्रव्यमपि तु संख्या संयोगविशेषो वा गुणः । 'इदं तदित्यादिना व्यपदेश्यम्' इत्यादिलक्षणलक्षितस्य वैयाकरणसमयप्रसिद्धस्य द्रव्यस्य ग्रहणे सुखःदुःखादीनां द्रव्यत्वप्रसङ्गः । न द्रव्याणामद्रव्याणामिति न स्वरूपग्रहणमपि त्वर्थपरो निर्देशः, अर्थानां च द्वन्द्वाभावात् तद्वाचकशब्दे सम्प्रत्ययः, एवं विरोधिनामित्यत्रापि, तथा च योऽर्थो निष्पन्नस्तमाह-**विरोधिनां शब्दानां द्रव्यमप्रतिपादयतामिति**-विरोधोऽस्त्येषामिति विरोधिनः, विरोधश्चात्र सहावस्थानरूप एव, अचेतनेषु विरोधान्तरस्य दर्शयितुमशक्यत्वात्, तथा च विरोधिनः सहावस्थानासहाः पदार्थाः, तद्वाचिनो ये शब्दास्ते चेद् द्रव्यवाचिनो न भवेयुस्तदैतत्सूत्रोद्देश्यकोटिप्रविष्टाः स्युः, **द्वन्द्वः** द्वन्द्वसमासः, **वा** विकल्पेन **एक**शब्दश्च एकत्वविशिष्टवाचक इत्याह-**एकः-एकार्थो भवतीति**-एकवचनान्तो भवतीति भावः, स्वैरित्यस्यार्थघटनामाह-**स चेद् द्वन्द्वः स्वैः-सजातीयैरेवारभ्यते** इति-वर्तिपदानि यदि गुणत्वादिरूपेण सजातीयविरोधिपदार्थवाचकानि स्युरिति तात्पर्यम् ।

उदाहरति-**सुख-दुःखम्, सुख-दुःखे** इति-सुखं च दुःखं चेति विग्रहः, अत्र सुख-दुःखयोः सहानवस्थानलक्षणो विरोधः प्रसिद्ध एव, गुणत्वं चोभयोः समानमिति भवति प्रकृतसूत्रलक्ष्यत्वम्। **शीतोष्णं, शीतोष्णे** इति-शीतं चोष्णं चेति 5 विग्रहः, अत्रापि सहानवस्थानलक्षणो विरोधो गुणत्वं च समानम्। गुणविरोधस्थलमुदाहृत्य क्रियाविरोधस्थलमुदाहरति-**जननमरणम्, जननमरणे** इति-जननं च मरणं चेति विग्रहः, जननं शरीरधारणं मरणं च शरीरत्याग इत्युभयोरेकत्रावस्थानविरहः स्पष्ट एव। **लाभा-ऽलाभम्, लाभाऽलाभौ** इति-10 लाभश्चालाभश्चेति विग्रहः, लाभोऽभिमतवस्तुप्राप्तिः, अलाभश्च तदप्राप्तिरिति प्राप्त्यप्राप्त्योर्विरोधः, क्रियात्वं च समानमेव, **संयोग-विभागम्, संयोग-विभागौ** इति-संयोगश्च विभागश्चेति विग्रहः, संयोगः संयोजनक्रिया विभागो विभजनक्रिया, अनयोः सहावस्थाने विरोधः क्रियात्वं च समानमिति।

15 पदकृत्यं पृच्छति-**विरोधिनामिति किमिति**-अनेकगुणानामनेकक्रियाणां चैकत्रैकस्मिन् काले स्थितिसम्भव एव नेति सहानवस्थानलक्षणो विरोधस्तेषु न व्यभिचारीति व्यभिचाराभावाद् विशेषणस्य 'विरोधिनाम्' इत्यस्य वैयर्थ्यं "सम्भव-व्यभिचाराभ्यां स्याद् विशेषणमर्थवत्।" इति 20 न्यायादिति प्रश्नाशयः; न सर्वेषां गुणानामेकदैकत्रावस्थितिर्विरुद्धा, एकस्मिन्नपि नारङ्गादिफले रूप-रस-गन्ध-स्पर्शानां गुणानां सहावस्थानमस्तीति विरोधिनामिति पदाभावे तेषामपि द्वन्द्वो विकल्पेनैकवत् स्यादिति कदाचित् समाहारस्यापि प्रयोगः स्यात्, इष्यते तु केवलमितरेतरयोग एवेत्याशयेन प्रत्युदाहरण-25 मुखेनोत्तरयति-**रूप-रस-गन्ध-स्पर्शाः** इति-रूपं च रसश्च गन्धश्च स्पर्शश्चेति विग्रहः; **काम-क्रोधौ** इति-कामश्च क्रोधश्चेति विग्रहः, काम-क्रोधयोरपि सहावस्थानमस्ति, क्रुद्धोऽपि कामं स्वेच्छामाचरति।

द्रव्याणां सहानवस्थानरूपो विरोधो नास्ति, छायातपावित्यत्र 30 यद्यपि केषाञ्चिन्मते द्वयोर्द्रव्यत्वं सहानवस्थानं चास्ति, परं तन्न सर्वसम्मतम्, यत आतपाभावरूपायाश्छायाया नैयायिकैर्द्रव्यत्वानङ्गीकारात्; आलोकस्य तु तेजोद्रव्यत्वमेव गुणक्रियाद्याश्रयत्वप्रतीतेः, न तु तेजोद्रव्यसूर्यादिगुणत्वम्, सूर्यादितेजःसमुदायपदार्थानामेव विनिर्गता अवयवा आतपादिशब्दवाच्या 35 इति प्रतीयमानत्वात्। न च तेजोऽवयवनिर्गमे क्रमशस्तेषां क्षयापत्तिरिति वाच्यम्, वस्तुस्वाभाव्यात् तत्रावयवान्तरोपचयस्यापि स्वीकारात्। तथा च द्रव्ययोर्विरोधस्य न सर्वसम्मतं 'छायातपौ' इति दृष्टान्तमिति। 'अद्रव्याणाम्' इति पदाभावेऽपि द्रव्याणां द्वन्द्वस्यानेनैकत्वप्राप्तिरेव नेत्यव्यावर्तकत्वादद्रव्याणामिति 40 नेहोपादेयमित्याशङ्कते-**अद्रव्याणामिति किमिति**; केवलद्रव्यवाचकानां विरोधिनां सहोक्त्यसम्भवेऽपि गुण-क्रियोपसर्जनद्रव्यवाचिनां तादृशानां विरोधः सहोक्तिश्च सम्भवतीति तद्व्यावर्तनायाद्रव्याणामित्यस्यावश्यकत्वमित्यभिप्रायेण व्यावर्त्यं दर्शयति-**सुख-दुःखाविमौ ग्रामौ** इति-"सुख दुःखण् तक्रियायाम्" सुखनं दुःखनं च तत्क्रिया, सुखयतीत्यचि सुखः, दुःखयतीत्यचि 45 दुःखः, सुखश्च दुःखश्चेति विग्रहः, सुख-दुःखशब्दयोरिह तत्क्रियाश्रये द्रव्ये वृत्तिरिति क्रियोपसर्जनद्रव्यवाचकत्वेन स्वरूपतश्च विरोधित्वेन तयोर्द्वन्द्वोऽप्येकवत् स्यात् तद्व्यावर्तनायाद्रव्याणामित्यावश्यकमिति भावः; "सुख-दुःखौ शीतोष्णौ उपचाराद् द्रव्ये वर्तेते" इति लघुन्यासः, अयमर्थः-उपचारो 50 ह्यतस्मिन् तदिति प्रत्ययः, अर्थान्तरे निवेशनमिति यावत्, स च सहचरणादिनिमित्तादनेकधा भिद्यते, यदाहुः-"सहचरण-स्थानतादर्थ्य-वृत्त-मान-धरण-सामीप्य-योग-साधना-ऽऽधिपत्येभ्यो ब्राह्मण-मञ्च-कट-राज-सक्तु-चन्दन-गङ्गा-शाटका-ऽन्न-पुरुषेष्वतद्भावेऽपि तद्वदुपचारः" इति, यथा साधनाद् अन्नं प्राणा 55 आयुर्घृतं तथा प्रकृते सुखदुःखसाधनत्वाद् ग्रामावपि सुख-दुःखौ, अत्र सुख-दुःखशब्दयोर्गुणोपसर्जनद्रव्ये वृत्तिः, गुणवृत्तित्वे [ गुणिवृत्तित्वे ] त्वमीषामाश्रयलिङ्गतैव-सुख-दुःखाविमौ ग्रामौ" इति लिङ्गानुशासनवृत्तिः। एवं-**शीतोष्णे उदके** इति-उदकयोः शीतोष्णगुणवत्त्वेन ताभ्यां शब्दाभ्यां व्यवहारः, तथा 60 च शीतोष्णशब्दौ शीतोष्णगुणाश्रये द्रव्ये एवोदके वर्तेते इति द्रव्यपरत्वं विरोधित्वं च स्पष्टमिति तदपि व्यावर्त्यमनेन। विरोधिभिरेकजातीयैरित्यर्थकं स्वैरिति पदं व्यर्थमिति शङ्कते-**स्वैरिति किमिति**, एकजातीयाः पदार्था विरोधिनोऽविरोधिनश्च यत्र सहोच्यन्ते तत्रैकवद्भावाप्रवृत्त्यर्थं तदावश्यकत्वादिति 65 समाधत्ते-**बुद्धि-सुख-दुःखानी**ति-बुद्धिश्च सुखं च दुःखं चेति विग्रहः, अत्र गुणत्वेन साजात्यं, सुख-दुःखयोर्विरोधित्वेऽपि बुद्ध्या अविरोधिन्या अपि ताभ्यां सह कथनात् तद्व्यावृत्त्यर्थमावश्यकं स्वैरिति पदमिति भावः। ननु प्रकृतसूत्रं पाक्षिकं समाहारद्वन्द्वं विधत्ते, तच्च स्वभावत एव सिद्धं, सर्वत्र विवक्षा-70 वशात् समाहारस्येतरेतरयोगस्य च सम्भवादिति व्यर्थमेव वैकल्पिकसमाहारविधायकं प्रकरणमिदमिति शङ्कां नियमार्थत्वेन समाधत्ते-**समाहारे चार्थे** इत्यादिना, समाहारे समुदितरूपेणावयवगतसंख्याया अविवक्षया एकत्वं स्वाभाविकम्, इतरेतरयोगे च वर्तिपदार्थगतसंख्याया विवक्षयाऽनेकत्वमपि 75 सिद्धमेवेति व्यर्थं सद् विकल्पप्रकरणं नियमार्थं विज्ञायते, नियमाकारश्चेत्थम्-विरोधिनामेवाद्रव्याणामेव स्वैरेव द्वन्द्व एकवत्, अन्यैश्चानेकवदेवेति, तथा चाविरोधिनां रूप-रस-गन्ध-स्पर्शानां, विरोधिनां द्रव्याणां शीतोष्णादीनां, विरोधिनामविरोधिनां च बुद्धि-सुख-दुःखादीनां द्वन्द्वोऽनेकवदेव, न तत्र पाक्षिकोऽपि 80

समाहार इति सिध्यति, तदाह-**तथा च प्रत्युदाहरणे इतरेतरयोग एव भवतीति** ॥ ३. १. १३०. ॥

## अश्ववडव-पूर्वापरा-ऽधरोत्तराः । ३ । १ । १३१ ॥

त० प्र०—अश्व-वडवेति पूर्वापरेति अधरोत्तरेति त्रयो द्वन्द्वा एकार्था वा भवन्ति स्वैः । अश्वश्च वडवा च-अश्ववडवम् अश्ववडवौ, अश्ववडवेति निर्देशादेवेतरेतरयोगे ह्रस्वत्वं निपात्यते; पूर्वापरम्, पूर्वापरे; अधरोत्तरम्, अधरोत्तरे; पशुविकल्पेनैव सिद्धेऽश्ववडवग्रहणं तत्पर्यायनिवृत्त्यर्थं-हय-वडवे। स्वैरित्येव ? अजा-ऽश्व-वडवाः । न्यायादेव विकल्पे सिद्धे पूर्वापरादिग्रहणं पदान्तरनिवृत्त्यर्थम्, तेन 'पूर्व-पश्चिमौ, दक्षिणा-ऽपरौ; अधर-मध्यमौ, उत्तर-दक्षिणौ' इत्यत्र विकल्पो न भवति ॥ १३१ ॥

श० म० **न्यासानुसन्धानम्-अश्ववडव०** । अश्व-वडवश्च पूर्वापरश्च अधरोत्तरश्चेति-अश्ववडव-पूर्वापरा-ऽधरोत्तराः, एतत्सम्बन्धे द्वन्द्व इत्येकवचनान्तमपि बहुवचनान्ततया विपरिणमते-द्वन्द्वा इति, तदाह-**'अश्ववडव' इति 'पूर्वापर' इति अधरोत्तर' इति त्रयो द्वन्द्वाः** इति, एकमित्यपि तथैव विज्ञायत इत्याह-**एकार्थाः** इति, **स्वैः** इति-सूत्रनिर्दिष्टानामेव तैरेव सहेत्यर्थः प्रकृते ज्ञेयः । **अश्वश्च वडवा चेति** विग्रहः, **अश्ववडवम्**, इत्येकार्थो द्वन्द्वः, **अश्ववडवौ** इति चानेकार्थः, अश्वशब्दो हि पुंसि वर्तते, वडवाशब्दः स्त्रियाम्, यदि त्वश्वशब्दः सामान्ये वर्तेत तदा सामान्यविशेषवाचिनां न द्वन्द्व इति द्वन्द्वो न स्यात्, तत्रैकार्थद्वन्द्वे "द्वन्द्वैकत्वा-ऽव्ययीभावौ" इति लिङ्गानुशासनवचनान्नपुंसकत्वे "क्लीबे" [२. ४. ९७.] इति ह्रस्वत्वे च-अश्ववडवमिति; अनेकत्वे इतरेतरयोगे च-अश्ववडवाविति; नन्वितरेतरयोगे "परलिङ्गो द्वन्द्वोऽशी" इति लिङ्गानुशासनवचनात् परस्य वडवाशब्दस्य स्त्रीलिङ्गत्वे-अश्ववडवे इति भवितव्यं, तत् कथमुच्यतेऽश्ववडवाविति चेत्? अत्राह-**अश्ववडवेति निर्देशादेवेतरेतरयोगे ह्रस्वत्वं निपात्यते** इति, अयमाशयः-अश्ववडवादीनां स्वरूपेणोल्लेख आनुपूर्वी निपातार्थः, तत्र पूर्वापरादिष्वेकार्थत्वविधानादधिकं किमपि निपात्यं नास्ति, यद्धि लक्षणेनाप्राप्तं तदेव निपातनबलाल्लभ्यते, तथा चाश्ववडवशब्दे ह्रस्वत्वमेव निपात्यमित्याश्रीयते, तस्यापि समाहारे दर्शितदिशा नपुंसकत्वादेव लब्धतया पाक्षिकेतरेतरयोग एव तत्प्रयोजनम्, एवं च तत्र नपुंसकत्वाभावेऽपि ह्रस्वत्वेऽकारान्त एव समासः, तत्रापि "यश्च स्यादसमाहारे द्वन्द्वोऽश्ववडवाविति ।" इति लिङ्गानुशासनवचनात् पुंस्त्वमेवेति 'इमौ अश्ववडवौ' इति भवति, न तु 'इमे अश्ववडवौ' इति । एवं-पूर्वं चापरं चेति विग्रहे-पूर्वापरम्, पूर्वापरे, इति क्रमेणैकार्थोऽनेकार्थश्च द्वन्द्वः; अधरं चोत्तरं चेति विग्रहे-**अधरोत्तरम्, अधरोत्तरे** इति क्रमेणैकार्थोऽनेकार्थश्च द्वन्द्वः, इतरेतरयोगेऽपि 'पूर्वापरे, अधरोत्तरे' इति नपुंसकनिर्देशः सामान्ये नपुंसकस्यैव न्याय्यत्वात्, पूर्वादीनां सर्वनामत्वेन सर्वलिङ्गसम्भवात् सामान्यलिङ्गप्रयोग एवोचित इति यावत्, अत एव लिङ्गानुशासने प्रोच्यते-"गायत्र्यादयण् स्वार्थेऽव्यक्तम्," अव्यक्तं सामान्यं नपुंसकं भवतीत्यर्थः । अश्व-वडवयोः पशुत्वेन तदीयद्वन्द्वस्य "पशुव्यञ्जनानाम्" इत्यग्रिमसूत्रेणैव विकल्पे सिद्धे विशिष्येह ग्रहणमनर्थकमित्याशङ्क्य तस्यान्यार्थसाधकत्वमित्याह-**पशुविकल्पेनैव सिद्धे** इति, **अश्ववडवग्रहणं तत्पर्यायनिवृत्त्यर्थमि**ति-अश्ववडवार्थकशब्दानां द्वन्द्वे यद्येकत्वं स्यात् तर्हि अश्व-वडवयोरेवेति नियमाकाराश्रयणमिति भावः, तथा च तत्पर्यायाणां प्राप्तोऽपि पाक्षिकः समाहारो न भवतीत्येव, तत्फलमित्याह-**हय-वडवे** इति-हयश्च वडवा चेति विग्रहः । अत्रत्यस्य स्वैरित्यस्य 'सूत्रनिर्दिष्टानामेव तैरेव सह' इत्यर्थो दर्शितः, तथा चान्येन सह यदि तावपि [ पूर्वोत्तरपदत्वेन प्रकृतसूत्रे निर्दिष्टावपि शब्दौ ] स्यातां तथापि नैकत्वमित्याह-**अजाश्ववडवा** इति-अत्राजैव स्वभिन्ना, अत्र स्वत्वं सह निर्दिष्टत्वरूपं, पशुत्वादिना तद्ग्रहणेऽव्यावर्तकत्वापत्तेः । स्वैरेवेत्येतावन्मात्रफलकं सूत्रमित्याह-**न्यायादेव विकल्पे सिद्धे** इति, **पूर्वापरादिग्रहणं पदान्तरनिवृत्त्यर्थमि**ति-पदान्तरेण सहैषां समासे एकत्वनिवृत्त्यर्थमिति भावः, तेन पूर्वापरादीनामन्येन सह समासे इतरेतरयोग एव भवति, न समाहारः, तदाह-**विकल्पो न भवती**ति-नित्यमेवेतरेतरयोग इति भावः । वैकल्पिकत्वविधायकप्रकरणस्यैवैतादृशार्थज्ञापकपरत्वस्य पूर्वसूत्रे स्पष्टमुक्तत्वेऽपि विस्पष्टार्थमेवेह पुनरुल्लेखः ॥ ३. १. १३१. ॥

## पशुव्यञ्जनानाम् । ३ । १ । १३२ ॥

त० प्र०—पशूनां व्यञ्जनानां च स्वैर्द्वन्द्व एक एकार्थो वा भवति । गौश्च महिषश्च-गो-महिषम्-गोमहिषौ; अश्व-बलीवर्दम्, अश्व-बलीवर्दौ; वृष्णि-स्तभम्, वृष्णिस्तभौ; महाजोरभ्रम्, महाजोरभ्रौ । व्यञ्जन-दधि-घृतम्-दधि-घृते; शाकसूपम्, शाकसूपौ । अश्वमहिषमित्यत्र तु परत्वात् "नित्यवैरस्य" [३. १. १४१.] इति नित्यमेकत्वविधिः । स्वैरित्येव ? गो-नरौ, दधि-वारिणी, दध्युदे ॥ १३२ ॥

श० म० **न्यासानुसन्धानम्-पशु०** । पशवोऽत्र ग्राम्या गवादयो ग्राह्या न त्वारण्या कुरङ्गादयः, उत्तरत्र मृग-

ग्रहणात्, तत्र "आरण्याः पशवो मृगाः" इति मृगग्रहणेना-
रण्यपशूनां ग्रहणादिति भावः, व्यञ्जनं च येनान्नस्य रसो
व्यज्यतेऽभिव्यक्तीक्रियते, अन्नं रुचिमापद्यते तद् दधिघृतादि
शाक-सूपादि च। पशवश्च व्यञ्जनानि च पशुव्यञ्जनानि तेषां
पशुव्यञ्जनानामितीतरेतरद्वन्द्वः, अत आह-**पशूनां व्यञ्जनानां
चेति**-तद्वाचकशब्दानामित्यर्थः, **स्वैर्द्वन्द्व एक एकार्थो वा
भवतीति**-यत्र पशवो व्यञ्जनानि वा स्वैः सह द्वन्द्वसमास-
घटकानि स्युः स द्वन्द्वो विकल्पेनैकवदित्यर्थः। तत्र संघविवक्षायां
समाहारेऽन्यत्रेतरेतरयोगे च प्राप्ते पूर्ववदिदमपि सूत्रं नियमार्थ-
मेव-पशूनां व्यञ्जनानां च स्वैरेव द्वन्द्वो विकल्पेनैकवदिति।
**गौश्च महिषश्चेति** विग्रहः, **गोमहिषं गोमहिषौ** इति
द्विधा द्वन्द्वः; **अश्वबलीवर्दम्, अश्वबलीवर्दौ** इति द्विधा
द्वन्द्वः, अश्वश्च बलीवर्दश्चेति विग्रहः; **वृष्णिस्तभं वृष्णिस्तभौ**
इति द्विधा द्वन्द्वः, वृष्णिश्च स्तभश्चेति विग्रहः, वृष्णिः-वृषः,
स्तभः-अजः; **महाजोरभ्रं महाजोरभ्रौ** इति द्विधा द्वन्द्वः,
महाजश्च उरभ्रश्चेति विग्रहः, महाजः-प्रजननसमर्थश्छागः,
उरभ्रः-मेषः। व्यञ्जनार्थकद्वन्द्वमुदाहर्तुमवतारयति-**व्यञ्जनेति**,
उदाहरति-**दधिघृतं दधिघृते** इति द्विधा द्वन्द्वः, दधि च घृतं
चेति विग्रहः; **शाकसूपं शाकसूपौ** इति द्विधा द्वन्द्वः, शाकं
च सूपश्चेति विग्रहः। अश्व-महिषयोरपि पशुत्वात् तयोर्द्वन्द्व-
स्याप्यनेनैव वैकल्पिकमेकत्वं स्यादित्याशङ्कायामाह-**अश्वमहि-
षमित्यत्र तु परत्वात् "नित्यवैरस्य" इति नित्य-
मेकत्वविधिरिति**-उभयोः प्राप्तौ "स्पर्धे" [ ७. ४. ११९. ]
इति परसूत्रस्य प्रवृत्तिनियमनमिति भावः। पशु-व्यञ्जनानां
द्वन्द्वो यदि स्वैः सहैव स्यात् तदैवैकवदित्याह-**स्वैरित्येवेति**,
**गोनरौ** इति-गौश्च नरश्चेति विग्रहः, अत्र गौः पशुः, नरस्तु
तद्भिन्नः; **दधि-वारिणी** इति-दधि च वारि चेति विग्रहः,
अत्र दधि व्यञ्जनं वारि तद्भिन्नम्, परस्परमेतयोः पशु-व्यञ्ज-
नयोरपि समासे नैकत्वं स्वत्वाभावात्, स्वत्वं हि सजातीयत्वं,
तदिह पशुत्वेन व्यञ्जनत्वेन च, न तु सूत्रपठितत्वेनेत्याह-
**दध्युष्ट्रौ** इति-दधि चोष्ट्रश्चेति विग्रहः, दधि व्यञ्जनमुष्ट्रः पशुः।
पशु-व्यञ्जनयोर्द्वित्वेऽपि बहुवचनेन निर्देशः सेनाङ्गपशुष्वपि
बहुत्वविवक्षायां द्वन्द्वेऽस्यैव प्रवृत्तिर्यथा स्यादित्येतदर्थम्, तेन
हस्तिनश्चाश्वाश्चेति विग्रहे-हस्त्यश्वं हस्त्यश्वा इत्येव भवति, न
तु परमपि सेनाङ्गलक्षणमेकत्वम्: "पशुव्यञ्जनानि" [ २. १.
८९. ] इति शाकटायनसूत्रे प्रभाचन्द्रः प्राह-ननु "पशुव्यञ्ज-
नम्" इति लघुनापि निर्देशेनोदाहृतं सिध्यतीत्यत आह-
बहुवचनमित्यादि, बहुवचनाद् बहूनां वचनानां बहूनामपि
पशुव्यञ्जनद्वन्द्वानामयं विधिर्विज्ञायते, तेषां च बहूनां
बहुवचनादयं विधिर्येषां बहुवचनमन्तरेण न प्राप्नोति। केषां च
न प्राप्नोति? येषां विध्यन्तरं-बाधकमस्ति, केषां च विध्यन्तरं
बाधकमस्ति, पशूनाम्, तेषां हि सेनाङ्गत्वे "सेनाङ्गक्षुद्रजन्तु°"
इति नित्यो विधिः प्राप्नोति, अतश्चेदं बहुवचनं पशुद्वन्द्वे सेना-
ङ्गानां यदेकत्वं नित्यं तद्बाधनार्थं विज्ञायते, तदुदाहरति-
हस्त्यश्वमित्यादि, अत्र हस्तिनश्चाश्वाश्च पशव इत्ययमपि विधिः
प्राप्नोति, बहवः सेनाङ्गं चेति "सेनाङ्गक्षुद्रजन्तु०" इति च
प्राप्नोति, उभयं चान्यत्र सावकाशम्, गोमहिषमित्यादावयं
विधिः सावकाशः, अश्वरथमित्यादौ सेनाङ्गविधिः, तत्रोभयप्राप्तौ
परत्वात् सेनाङ्गविधिः स्यात्, बहुवचनात् परं तं बाधित्वाऽय-
मेव विकल्पः।

अथ यथेदं बहुवचनं सेनाङ्गैकत्वं बाधते तथा नित्यवैरैकत्व-
मपि कस्मान्न बाधते, एतद्धि बाधकबाधनार्थं सत् सेनाङ्गैकत्ववद्
नित्यवैरैकत्वमपि बाधितुमर्हति विशेषाभावात्, अत्रोच्यते-सेनाङ्गे
पशौ सेनाङ्गैकत्वमारातीयं बाधित्वा बहुवचनं सावकाशं,
नित्यवैरैकत्वमप्यपशुद्वन्द्वे देवासुरमित्यादौ, नित्यवैरपशुद्वन्द्वे तु
'अश्वमहिषम्' इत्यत्रोभयप्राप्तौ परत्वात् "नित्यवैरावैरे" इति
नित्य एवैकत्वविधिर्भवति, न विकल्प इति ॥ ३. १. १३२. ॥

## तरु-तृण-धान्य-मृग-पक्षिणां बहुत्वे । ३ । १ । १३३ ॥

**त० प्र०—एतेषां बहुत्वे वर्तमानानां प्रत्येकं स्वैर्द्वन्द्व एकः-
एकार्थो वा भवति। तरु-प्लक्षाश्च न्यग्रोधाश्च-प्लक्ष-न्यग्रोधम्,
प्लक्ष-न्यग्रोधाः, एवं धवा-ऽश्वकर्णम्, धवा-ऽश्वकर्णाः, तृण-
कुश-काशम्, कुशकाशाः; मुञ्ज-वल्वजम्, मुञ्ज-वल्वजाः;
धान्य-तिल-माषम्, तिल-माषाः; व्रीहि-यवम्, व्रीहि-यवाः;
मृग-रुरु-पृषताः; ऋश्यैणम्, ऋश्यैणाः; पक्षिन् हंस-
चक्रवाकम्, हंस-चक्रवाकाः; तित्तिरि-कपिञ्जलम्, तित्तिरि-
कपिञ्जलाः; एकस्यापि पदस्य बहुत्वे भवति-प्लक्षश्च न्यग्रोधाश्च-
प्लक्ष-न्यग्रोधम्, प्लक्ष-न्यग्रोधाः; प्लक्षौ च न्यग्रोधाश्च प्लक्ष-
न्यग्रोधम्, प्लक्ष-न्यग्रोधा इत्यादि। बहुत्व इति किम्? प्लक्षश्च
न्यग्रोधश्च-प्लक्ष-न्यग्रोधौ, प्लक्षौ च न्यग्रोधौ च, प्लक्षश्च
न्यग्रोधौ चेति वा-प्लक्ष-न्यग्रोधाः। स्वैरित्येव? प्लक्ष-यवाः,
गो-पृषताः। आरण्याः पशवो मृगा इति मृगाणामपि पशुत्वात्
पशुविकल्पेनैव सिद्धे मृगाणामिहोपादानम् अमृगैरबहुत्वे
चैकत्वाभावार्थम् ॥ १३२ ॥**

**श० म० न्यासानुसन्धानम्-तरु-तृण०।** अत्र
तर्वादौ विशेषाणामेव ग्रहणं न सामान्यस्य, तथा हि-तर्वादि-
शब्दैः प्रत्येकं द्वन्द्वो विशिष्यते-तरूणां द्वन्द्वः, तृणानां द्वन्द्व
इत्यादिरूपेण। न चैको बहुवचनान्तस्तरुशब्दो वृक्षशब्दस्तृण-

शब्दादिर्वा द्वन्द्वः सहोक्त्यभावात् । न च द्वयोस्तर्वादिशब्दयोः सह प्रयोगः, "स्यादावसंख्येयः" [ ३. १. ११९. ] इत्येकशेषात्, नापि वृक्षादिपर्यायैः सह तस्य द्वन्द्वः "समानामर्थेनैकशेषः" [ ३. १. ११८. ] इत्येकशेषात्, नापि तरवश्च धवाश्चेति सामान्य-विशेषयोः, तादृशप्रयोगानभिधानात्, तरुत्वेनैव धवानामपि ग्रहणे तेषां पृथग्योगवैयर्थ्याच्च तत्र द्वन्द्वाभावात्, परिशेषाद् विशेषाणामेव द्वन्द्वः फलति । तदाह-**प्लक्षाश्च न्यग्रोधाश्चे**ति-प्लक्षः पर्कटी वृक्षः, न्यग्रोधो वटः, धवाश्वकर्णौ स्वनामख्यातौ वृक्षौ, बहुत्वाभावे एकवचनद्विवचनाभ्यां विग्रहे चेतरेतरयोग एवेति वक्ष्यत्यग्रे । तृणेष्वपि विशेषानेवोदाहरति-**कुशकाशमि**त्यादिना । यद्यपि वृत्तौ संख्याविशेषो न प्रतिभासते, ततश्च बहुवचनान्तानां द्विवचनैकवचनान्तानां वा समासे न विशेषावगतिः, तथापि बहुवचनान्तानामेकवद्भावविधानरूपलिङ्गादेतेषु बहुत्वप्रतीतिः प्रत्येकं लभ्यते इति बोध्यम् । सूत्रे बहुत्वे इति सामान्येनोक्तत्वाद् वर्तिपदार्थयोर्मध्ये एकस्यापि बहुत्वे एकवद्भावो भवतीत्याह-**एकस्यापि पदस्य बहुत्वे भवतीति**-पदस्य बहुत्वं नाम तदर्थगतबहुत्वार्थकत्वम्, अत्र च यद्यपि समस्तयोः पदयोः कतरदेकवचनान्तं कतरच्च बहुवचनान्तमिति दुर्विज्ञेयं, तथाप्याचार्यवचसेदं प्रतीयते यत् प्रकरणादिनैकस्यैकत्वावगतावपि परस्य बहुत्वे सति भवत्येकवद्भाव इति तद्वचनमेवेह गमकम् । **बहुत्वे इति किमि**ति-समासे सति बहुत्वस्य प्रतीत्यभावात् तदाग्रहो वृथैवेति प्रष्टुराशयः । **प्लक्षश्च न्यग्रोधश्चे**ति-एकवद्भावादेव तत्र बहुत्वप्रतीतिरिति समाधातुराशयः, तथा च यत्रैकवद्भावो न दृश्यते तत्रैकवचन-द्विवचनाभ्यां विग्रहोऽवसेय इति भावः । **प्लक्षौ च न्यग्रोधौ चे**ति-यद्यपि द्विवचनान्तेन विग्रहे समुदायस्य बहुत्वमायाति तथापि बहुत्वग्रहणसामर्थ्याद् वर्तिपदगतं बहुत्वमेवैकत्वनिबन्धनमित्यवगम्यत इत्येकस्यापि बहुत्वं विनाऽनेकवद्भावप्रतीतिरिति बोध्यम् । स्वैरेवेत्येतदिहाप्यनुवृत्तमेव, तथा च तरूणां तरुभिरेव, तृणानां तृणैरेवेत्यादिक्रमेण नियमो लभ्यते, एवं च तरु-तृणादीनां परस्परद्वन्द्वे न भवत्येकत्वमित्याह-**स्वैरित्येव ? प्लक्ष-यवाः** इत्यादि । मृगाणामपि लोमवल्लाङ्गूलविशिष्टत्वेन पशुत्वमस्त्येवेति "पशुव्यञ्जनानाम्" इति पूर्वसूत्रेणैव बहुप्रकृतिद्वन्द्वस्याप्येकवद्भावे सिद्धेऽत्र सूत्रे तेषां ग्रहणं व्यर्थमित्याशङ्क्य समाधत्ते-**'आरण्याः पशवो मृगाः'** इति-मृगाणां पशुत्वं हि तल्लक्षणलक्षितया सिद्धमेव, केवलं त आरण्या इत्येव विशेषः, तत्र पूर्वत्र सूत्रे ग्राम्याणामेव ग्रहणमित्यत्र विनिगमकाभावेन तेनैवैषामपि सिद्धे विशिष्येह पाठो व्यर्थः सन् मृगाणां मृगैरेव बहुप्रकृतिरेव च द्वन्द्व एकवदिति नियमयति, तथा च मृगभिन्नैरेकद्विवचनान्तैश्च सहोक्तौ नास्य सूत्रस्य प्रवृत्तिरिति भावः, नियमाभावे च पूर्वसूत्रेणातथाभूतस्थलेऽपि एकत्वं स्यादेवेति तद्व्यावृत्तिरेवैतत्सूत्रे मृगग्रहणफलम् । पूर्वसूत्रे ग्राम्याणामेव पशूनां ग्रहणमित्युक्तिश्च लक्ष्योपलब्धिनिबन्धना, न तत्रान्यत् किमपि मूलमित्याशयः ॥ ३. १. १३३. ॥

## सेनाङ्ग-क्षुद्र-जन्तूनाम् । ३ । १ । १३४ ॥

**त० प्र०**—सेनाङ्गानां क्षुद्रजन्तूनां च बहुत्वे वर्तमानानां स्वैर्द्वन्द्व एकः-एकार्थो नित्यं भवति, पृथग्योगाद् वेति निवृत्तम् । सेनाङ्ग-अश्वाश्च रथाश्च-अश्व-रथकम्, रथिकाऽश्वारोहम्, हस्त्यश्वम्; केचित्तु सेनाङ्गानां पशूनां पशुलक्षणं विकल्पमिच्छन्ति-हस्त्यश्वम्, हस्त्यश्वाः । क्षुद्रजन्तवोऽल्पकायाः प्राणिन आनकुलमिह स्मर्यन्ते, यूका-लिक्षम्, यूका-मत्कुणम्, दंश-मशकम्; शतपद्यश्चोत्पादकाश्च-शतपद्युत्पादकम्; कीटपिपीलिकम् । बहुत्व इत्येव ? सादि-निषादिनौ, अश्व-रथौ यूका-लिक्षे । स्वैरित्येव ? हस्ति-मशकाः ॥ १३४ ॥

**श० म० न्यासानुसन्धानम्-सेनाङ्ग०** । सेनाङ्गानि सेनासमवेतानि हस्त्यश्वादीनि तदारोहकाश्च सैनिकाः, तेषामपि बहुप्रकृतिक एव द्वन्द्व एकवत्; एवं क्षुद्रजन्तूनामपि । ननु पूर्वसूत्र एवैते पठनार्हाः, किमिति पृथग्योगेनैकार्थस्य विधानमित्याशङ्कायामाह-**पृथग्योगाद् वेति निवृत्तमिति**-विना विशेषं पृथग्योगकरणस्य वैयर्थ्यं स्पष्टमेवेति पृथग्योगोऽस्य योगस्य नित्यविधित्वं प्रत्याययति, तथा च सेनाङ्गेषु क्षुद्रजन्तुषु च द्वन्द्वसमासान्तर्गतेषु बहुवचनान्तेषु सत्सु तेषां द्वन्द्वस्य नित्यमेवैकत्वमिति लभ्यते । सेनाङ्गानां द्वन्द्वमुदाहरति-**अश्वाश्च रथाश्चे**ति-एकैकमश्वादयः सेनाबहिर्भूता अपि वैयक्तिकोपयोगाय प्रयुज्यन्ते, किन्तु बहूनां सेनाङ्गत्वमेव; **अश्वरथमि**ति-अश्वशब्दस्य स्वराद्यदन्तत्वात् पूर्वनिपातः । रथिकाश्चाश्वारोहाश्चेति विग्रहे चाल्पस्वरत्वाद् रथिकस्यैव पूर्वनिपात इति-**रथिकाश्वारोहमि**ति, सेनाङ्गानि सामान्यतो द्विधा-आरोह्याणि आरोहकाणि चेति, स्वैरिति पदानुवृत्त्या स्वत्वमिह न सेनाङ्गत्वेन, अपि तु तद्व्याप्यभूतेनारोह्यारोहकत्वादिरूपेण, आचार्यैस्तथैवोदाहरणात्, तथा च हस्तिनश्चाश्वारोहाश्चेति हस्त्यश्वारोहा इत्येव भवति, न तु हस्त्यश्वारोहमिति विज्ञेयम् । आरोह्येष्वपि सेनाङ्गेषु द्विधाऽवान्तरविभागः, यथा पशवो हस्त्यादयः, तदितराश्च रथादयः, तत्र पशूनां द्वन्द्वे मतभेदात् स्वमतेनोदाहृत्य मतान्तरमाह-**हस्त्यश्वम्** । **केचित् तु पशूनां पशुलक्षणं विकल्पमिच्छन्तीति**-एतन्मतं बहुवचनेन तत्र संगृहीतमिति प्रागुक्तमेव । अयमाशयः-पाणिनीये नित्यविधौ "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" [ २. ४. २. ]

इति सूत्रे विकल्पविधौ "विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्" [ २. ४. १२. ] इति सूत्रस्थे "बहुप्रकृतिः फलसेनावनस्पतिमृगशकुन्तक्षुद्रजन्तुधान्यतृणानाम्" इति वार्तिके च, सेनाङ्गसेनाशब्दौ पठ्येते, तत्र 5 महाभाष्यादिप्रयोगपर्यालोचनया द्विधा विषयविभागः कृतो नागेशादिभिः, तथा च सूत्रे सेनाङ्गशब्देन रथाद्यारूढानामेव ग्रहणम्, "येन विधिस्तदन्तस्य" [ १. १. ७२. ] इति सूत्रे 'संग्रामं हस्त्यश्वपदातिभिः' इति भाष्यप्रयोगे बहुवचनोपन्यासात्, "बहुप्रकृतिः फलसेना०" इत्युक्तवार्तिके च हस्त्यश्वरथा- 10 द्य आरोह्या एव गृह्यन्ते इति तेषां विकल्पेनैकत्वम् । दीक्षितादयस्तु "विभाषा वृक्षमृग०" [ २. ४. १२. ] इति सूत्रे पशुग्रहणं हस्त्यश्वादिषु प्राण्यङ्गत्वान्नित्ये प्राप्ते विकल्पार्थमित्याहुः, तेन सेनाङ्गपशुषु विकल्पः, तदङ्गारोहेषु च नित्यमिति विभागो लभ्यते, स एवेह केचिदित्यादिनाऽनूद्यते ।

15 अथ क्षुद्रजन्तुद्वन्द्वमुदाहर्तुं पूर्वं क्षुद्रजन्तुपरिभाषणमावश्यकम्, तत्र क्षुद्रत्वं च जन्तूनामल्पपरिमाणवत्त्वमेव, जन्तुपदस्वारस्येन तथैव लाभात् । यद्यपि–अङ्गहीने शीलहीने कृपणेऽपि च क्षुद्रशब्दः प्रयुज्यते, तथापीहाल्पपरिमाणत्वमेव क्षुद्रत्वं ग्राह्यम् । दृश्यते चाल्पपरिमाणेऽपि क्षुद्रशब्दप्रयोगः–'क्षुद्रा- 20 स्तन्दुलाः' इत्यादौ, तदपि चाल्पपरिमाणत्वमनवस्थितमेवेति स्मृत्यादौ क्षुद्रजन्तवः परिभाषिताः, तथा च स्मृतिद्वयवाक्यद्वयमुपलभ्यते–

"क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः ।
शतं वा प्रसृतिर्येषां केचिदानकुलादिति ॥"

25 इत्येकम्, अन्यच्च–

"क्षुद्रजन्तुरकाङ्कालो येषां स्वं नास्ति शोणितम् ।
नाञ्जलिर्यत्सहस्रेण केचिदानकुलादिति ॥" इति ।

तत्र "अस्थिहीनो जीवः क्षुद्रजन्तुः, अथवा योऽल्पपरिमाणः, उताहो अर्धाञ्जलौ [ चुलकाकारे हस्ते ] ये शतं मान्ति ते 30 क्षुद्रजन्तवः, केचन नकुलपर्यन्तं–अल्पकायकीटाद्यारभ्य यावन्नकुलमुपचयावसानं ये जन्तवस्ते क्षुद्रजन्तवः" इति प्रथमस्मृत्यर्थः । "काङ्कालेनास्थिपञ्जरेण रहितो जन्तुः क्षुद्रजन्तुः, अथवा येषां स्वकीयं शोणितं नास्ति, यथा–जलौकसो यूका लिक्षाश्च, ते क्षुद्रजन्तवः, येषां जन्तूनां सहस्रेणापि अञ्जलिर्न 35 पूर्यते ते क्षुद्रजन्तवः, केषाञ्चिन्मते नकुलमुपचयावधिं कृत्वा क्षुद्रजन्तवः" इति द्वितीयस्मृत्यर्थः । एषु पूर्वपूर्वलक्षणे दोषमुद्भाव्य 'आनकुलाद्' इति मतमेव स्थिरीकृतमाचार्येणेत्यत उक्तम्–**क्षुद्रजन्तवोऽल्पकायाः प्राणिन आनकुलमिह स्मर्यन्ते** इति, तथा चोभयोः स्मृत्योरपि 'आनकुलात्' इति पक्षे साम्यम् । पातञ्जले महाभाष्येऽपि तदेवान्ते स्थिरीकृतम्, 40 तथा हि–"क्षुद्रजन्तवः" [ २. ४. ८. ] इति पाणिनीयसूत्रे महाभाष्यम्–"क्षुद्रजन्तव उच्यन्ते, के क्षुद्रजन्तवः ? क्षोत्तव्या जन्तवः क्षुद्रजन्तवः" इति, ये क्षुद्यमाना अपि हस्तपादादितले पतिता अपि न म्रियन्ते ते क्षुद्रजन्तव इत्यर्थः, अर्हार्थे कृत्यविधानात् । ततः शङ्कितम्–"यद्येवं यूकालिक्षं कीटपिपीलिकं 45 दंशमशकमिति न सिध्यति" इति, एषां क्षुद्यमाणत्वे सति म्रियमाणत्वादिति भावः । ततः समाहितम्–"एवं तर्ह्यनस्थिकाः क्षुद्रजन्तव इति । पक्षान्तरमुक्तम्–अथवा येषां स्वं शोणितं नास्ति ते क्षुद्रजन्तव इति, यथा जलौकःप्रभृतीनां स्वं शोणितं न भवति ते परकीयशोणितमादायैव जीवन्ति, ते क्षुद्रजन्तवः । 50 तृतीयं लक्षणमुक्तम्–"अथवा येषामासहस्रादञ्जलिर्न पूर्यते ते क्षुद्रजन्तवः" इति । एषु त्रिष्वपि गृहगोधामूषकादीनां क्षुद्रजन्तुत्वं न भवतीति चतुर्थलक्षणमास्थितम्–"अथवा नकुलपर्यन्ताः क्षुद्रजन्तवः" इति । तथा चैतदेव लक्षणं सर्वलक्षणव्यापकत्वादार्तव्यमिति स्थिरीभवति । उदाहरति–**यूकालिक्ष-** 55 **मि**त्यादिना, यूका मनुजशरीरस्वेदजातास्तच्छोणितजीविन्यः, लिक्षाश्च केशाश्रिताः स्वल्पपरिमाणाः कीटाः । मत्कुणः खट्वादिमलभूतः कीटः । दंशो वृषमक्षिकेति ख्यातो मक्षिकाजातीयस्ततोऽधिकपरिमाणो जीवः । शतग्नुः स्वभावप्राप्तपरिमाणाच्छतगुणपरिमाणपर्यन्तं शोणितपानेन वर्धनशीलो जीवविशेषः । 60 उत्पादका ऊर्ध्वपादविशिष्टा लूताजातीयाः कीटाः । बहुत्व इत्यनुवर्तत एवेत्येकवचनान्तेन द्विवचनान्तेन वा विग्रहे नैकत्वमित्याह–**बहुत्व इत्येव ? सादिनिषादिनावि**ति–सादी च निषादी चेति विग्रहः, सादी–अश्वारोहो गजारोहो रथारोहश्च, निषादी–हस्तिपकः । स्वैरित्यस्याप्यनुवृत्तिरावश्यिकेत्याह– 65 **स्वैरित्येवे**ति–सेनाङ्गानां सेनाङ्गैरेव, क्षुद्रजन्तूनां क्षुद्रजन्तुभिरेवेति भावः । तथा च सेनाङ्गानां क्षुद्रजन्तूनां च परस्परं द्वन्द्वे न भवत्येकत्वमित्याह–**हस्तिमशकाः** इति ॥ ३. १. १३४. ॥

## फलस्य जातौ । ३ । १ । १३५ ॥

**त० प्र०—फलवाचिनां शब्दानां बहुत्वे वर्तमानानां जातौ** 70 **विवक्षितायां स्वैर्द्वन्द्व एकः–एकार्थो भवति । बदराणि चामलकानि च–बदरा-ऽऽमलकम्, कुवला-ऽऽमलकम्, फलस्येति किम् ? ब्राह्मण-क्षत्रियाः । जातावीति किम् ? व्यक्तिपरचोदनायां मा भूत्–एतानि बदरा–ऽऽमलकानि तिष्ठन्ति । बहुत्वे इत्येव ? बदरा-ऽऽमलके, बदरा-ऽऽमलकम् ।** 75 **स्वैरित्येव ? बदर-शृगालाः ॥ १३५ ॥**

**श० म० न्यासानुसन्धानम्-फलस्य०** । फलस्येति जातिविवक्षयैकवचनेन प्रयोगः, तदाह-**फलवाचिनां शब्दानामिति** । **जातौ विवक्षायामिति**-यद्यपि जातिविवक्षायामेकवचनमेव युक्तं जातेरेकत्वात्, एकेनैव बहूनां बोधायैव च जातिर्विवक्ष्यत इति जातौ विवक्षायां बहुत्वे वर्तमानत्वमनुपपन्नमिति प्रतिभाति, तथापि जातिप्राधान्ये सति जातौ व्यक्तिद्वारकबहुत्वसंख्यान्वयविवक्षायामिति तात्पर्यात् । अयमाशयः-जातौ साक्षात् संख्यान्वयविवक्षायामेकवचनमेव प्रयुज्यते 'देवः पूज्यः' इत्यादिवत्; तस्यामेव व्यक्तिद्वारकसंख्यान्वयविवक्षायां व्यक्तीनां बहुत्वेन बहुवचनमपि भवति, यथा तत्रैव 'देवाः पूज्याः' इति । तथा च यदा जातौ व्यक्तिद्वारकबहुत्वसंख्या विवक्षिता स्यात् तदानेनैकवद्भावः, यदा च जातिगता संख्यैव विवक्षिता तदा 'बदरामलके' इत्येव, एकवचनेन विग्रहादिति फलति । विग्रहोदाहरति-**बदराणि चामलकानि चेति** विग्रहः, बदर्या विकारः फलं-बदरम्, 'हेमादि' [ ६. २. ४५. ] इत्यञ्, आमलक्या विकारः फलम्-आमलकम्, "दोरप्राणिनः" [ ६. २. ४९. ] इति मयट्-द्वयोरपि "फले" [ ६. २. ५८. ] इति लुप्, अत्र हि तज्जातौ, यान्येव बहुत्वविशिष्टानि बदराणि चामलकानि चेति भवत्येकवद्भावः-**बदरामलकमिति** । एवं-कुवलानि उत्पलानि चामलकानि चेति विग्रहे-**कुवलामलकमिति** ।

पदकृत्यं पृच्छति-**फलस्येति किमिति**-"जातौ" इत्येव सूत्रमस्तु, व्यक्तिद्वारकबहुत्वविशिष्टायां जातौ विवक्षितायामेकवद्भावो भवतीत्यर्थाश्रयणाद् 'बदरामलकम्' इत्यादिसिद्धेरिति प्रश्नाशयः, प्रत्युदाहरणेनोत्तरयति-**ब्राह्मणक्षत्रियाः** इति-ब्राह्मणाश्च क्षत्रियाश्चेति विग्रहः, अत्रापि चैकत्वं स्यात् तन्निवारणाय 'फलस्य' इति वक्तव्यमित्युत्तराशयः । पुनः पृच्छति-**जाताविति किमिति**-व्यक्तिद्वारकमेव जातौ बहुत्वं विवक्षितं चेद् व्यक्तिबहुत्वतः फलतः प्रवृत्तिनिमित्तं लभ्यते, तथा च 'जातौ' इति व्यर्थमिति प्रष्टुराकूतम्; व्यक्तिद्वारके बहुत्वे सत्यपि जातिप्राधान्य एवैकवद्भावो यथा स्यान्न व्यक्तिप्राधान्य इत्येतदर्थं जातिग्रहणस्यावश्यकत्वमित्याशयेनोत्तरयति-**व्यक्तिपरचोदनायां मा भूदिति**-यत्र व्यक्तय एव प्राधान्येन विवक्षितास्तत्र मा भूदित्यर्थः, व्यक्तिपरा-व्यक्तिप्रधाना, चोदना-उक्तिरित्यर्थः । **एतानि बदरामलकानि तिष्ठन्तीति**-अत्र स्थितिक्रिया-कर्तृत्वेनाङ्गुल्या निर्दिश्यमाना बदरामलकव्यक्तय एव, न तु जातिः, तस्याः स्वातन्त्र्येण कर्तृत्वाद्यभावात् । **बहुत्व इत्येवेति**-जातिप्रधानव्यक्तिमूलकबहुत्वे इत्येवेति भावः । अन्यत्र च जातिगतैकत्वविवक्षायां प्रकृतसूत्रव्यापाराभावाद् वैकल्पिकः समाहारो न्यायादेवेत्याह-**बदरामलकं, बदरामलके** इति । **स्वैरित्येवेति**-फलजातीयानां फलजातीयैरेवेति भावः, । तथा च फलजातीयस्य प्राणिजातीयेन सह जातिविवक्षया बहुत्वयोगेऽपि न भवति समासः समाहार इत्याह-**बदरशृगालाः** इति-तथा चेतरेतरयोग एवेति ॥ ३. १. १३५. ॥

## अप्राणिपश्वादेः । ३ । १ । १३६ ॥

**त० प्र०**—बहुत्व इति निवृत्तं पूर्वयोगारम्भात्, प्राणिभ्यः पश्वादिसूत्रोक्तेभ्यश्च येऽन्ये द्रव्यभूताः पदार्थास्तेषां जातौ वर्तमानानां शब्दानां स्वैर्द्वन्द्व एकः-एकार्थो भवति । आरा च शस्त्री च-आराशस्त्रि, धाना च शष्कुलि च-धानाशष्कुलि, एवं-युगवरत्रम्, कुण्डबदरम्, तरुशैलम् । जातावित्येव ? विन्ध्य-हिमालयौ, नन्दक-पाञ्चजन्यौ, जातिविवक्षायामयं विधिः; व्यक्तिविवक्षायां तु यथाप्राप्तम्-आरा-शस्त्रि, आरा-शस्त्र्याविमे । प्राणिपश्वादिजातिवर्जनं किम् ? ब्राह्मण-क्षत्रिय-विट्-शूद्राः, ब्राह्मण-क्षत्रिय-विट्-शूद्रम्; गो-महिषौ, गो-महिषम्, दधि-घृते, दधि-घृतम्; प्लक्ष-न्यग्रोधौ २, कुश-काशौ २, व्रीहि-यवौ २, रुरु-पृषतौ २, हंस-चक्रवाकौ २ अश्वरथौ २ । अप्राणीति प्राणिनो द्रव्यस्य पर्युदासेनाप्राणिनो द्रव्यस्य ग्रहणादिह न भवति-रूप-रस-गन्ध-स्पर्शाः, उत्क्षेपणा-ऽपक्षेपणा-ऽऽकुञ्चन-प्रसरण-गमनानि । स्वैरित्येव ? बदरशृगालौ ॥ १३६ ॥

**श० म० न्यासानुसन्धानम्-अप्राणि०** । "तरुतृण०" [ ३. १. १३३. ] इत्यतोऽनुवर्तमानं 'बहुत्वे' इतीह नेह सम्बध्यते, ततश्चैकवचनान्तेनापि विग्रहे सूत्रमिदं प्रवर्तत इत्याशयेनाह-**बहुत्व इति निवृत्तमिति** । तत्र हेतुमाह-**पूर्वयोगारम्भादिति**-पूर्वो योगः 'फलस्य जातौ' इति सूत्रम्, तदारम्भोऽस्य बहुत्वे प्रवृत्तौ सत्यां निष्प्रयोजन एव, फलानामप्राणित्वस्य जातीपरत्वस्य च सत्त्वेनानेनैव तल्लक्ष्याणां सिद्धेः । न च तद्योगाभावे "जातौ" इत्यपि कुतो लभ्य, तदभावे च व्यक्तिपरत्वविवक्षायामपि सूत्रप्रवृत्त्यापत्तिरिति वाच्यम्, 'जातौ' इत्यस्य प्रकृतसूत्र एव पाठः कार्य इत्याशयात् । तथा च तस्य योगस्येतः पूर्वमारम्भादस्मात् तस्य कोऽपि विशेष इष्ट आचार्यस्येति प्रतीयते, स चायमेव भवितुमर्हति यत् तत्र 'बहुत्वे' इत्यस्य सम्बन्धः, इह च नेति । 'अप्राणिपश्वादेः' इत्यत्र नञ्समासः, समस्तस्य नञश्च पर्युदासोऽर्थः, पर्युदासश्च सदृग्ग्राही, तद्भिन्नत्वे सति तत्सदृश इत्यर्थात्, तत्र च * नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः * इति न्यायः, * नञ्युक्तं तत्सदृशे * इति न्यायो वा मूलम् । एवं च प्राणिपश्वादिभिन्नास्तत्सदृशाश्च पदार्था एतत्सूत्रोद्देश्यानि, प्राणिनः पश्वादयश्च

गुणक्रियाश्रयत्वेन द्रव्याणि, तथा च द्रव्यत्वेनैव तद्भिन्नस्य सादृश्यं ग्राह्यमिति फलितमर्थमाह–**प्राणिभ्यः पश्वादिसूत्रोक्तेभ्यश्च येऽन्ये द्रव्यभूता** इति।

विगृह्योदाहरति–**आरा च शस्त्री चे**ति विग्रहः, आरा 5 चर्मप्रभेदिका, शस्त्री छुरिका, इमे उभे अपि द्रव्यभूते, जातिपरे चेह विवक्षिते इत्येकवद्भावात् समाहारेण नपुंसकतेति ह्रस्वे सति–**आराशस्त्रि** इति। एवं–**धाना च शष्कुली चे**ति विग्रहः, भ्रष्टा यवाः पुनर्धानाः, शष्कुली भक्ष्यविशेषः, एतावपि जातिवाचकौ द्रव्यवाचकौ शब्दाविलेकवद्भावे–**धानाशष्कुलि**। 10 युगो रथावयवः, वरत्रा नध्री, युगश्च वरत्रा चेति विग्रहे–**युगवरत्रमि**ति। कुण्डो जलाधारविशेषः, कुण्डश्च बदरं चेति विग्रहे–**कुण्डबदरमि**ति। तरुश्च शैलश्चेति विग्रहे–**तरुशैलमि**ति। **जातावित्येवे**ति, तथा चानेकद्रव्यव्यक्तिवाचकानामेवेह ग्रहणमिति नेह भवति–**विन्ध्यहिमालयावि**ति–विन्ध्यश्च 15 हिमालयश्चेति विग्रहः, कुलपर्वताविमौ, एकव्यक्तिरूपाविति विन्ध्यत्वहिमाचलत्वयोर्न जातित्वम्, व्यक्तेरभेदस्य जातिबाधकेषु परिगणनात्, अतोऽत्र नानेनैकत्वमिति पाक्षिक इतरेतरयोगोऽत्र भवत्येव। नन्दको विष्णुखड्गः, पाञ्चजन्यो विष्णुशङ्खः, नन्दकश्च पाञ्चजन्यश्चेति विग्रहे–**नन्दक-पाञ्चजन्यौ**, इमा- 20 वप्येकैकव्यक्तिवाचिनाविति जातित्वाभावान्नानेनैकवद्भावोऽत इतरेतरयोगः। प्रकृतसूत्रस्याप्राप्तप्रापणार्थत्वाद् विधित्वमेव सिद्धे सत्यारम्भ्यमाणत्वरूपं नियामकत्वप्रयोजकमत्र नेति यथोक्तलक्षणद्वन्द्वस्यैकत्वमात्रं विधत्ते, न तु तल्लक्षणाभावे एकत्वं वारयतीति प्रकृतलक्षणाक्रान्त्यभावे न्यायतः प्राप्तं पाक्षिक- 25 मेकत्वमितरेतरयोगश्च भवतीत्याह–**व्यक्तिविवक्षायां तु यथाप्राप्तमि**ति, तदेवाह–**आराशस्त्रि, आराशस्त्याविमे** इति। अत एव "रञ्जितानुविविधास्तरुशैलाः" इति कविप्रयोगेऽप्राणिवाचिनामपि तरुशैलानां द्वन्द्वो नैकवद् व्यक्तिविवक्षासत्त्वात्, यदि सकला इति पदसान्निध्याच्च व्यक्तिपरत्वमस्य 30 प्रयोगस्य, किन्तु जातिपरत्वमेव, जातौ चैकत्वे न्याय्येऽपि बहुवचनस्यापि प्रयोगो व्यक्तिद्वारा बहुत्वसंख्याविवक्षया पूर्वं समर्थित एव, तथा च जातिविवक्षास्वीकारे कथमत्रैकवत्त्वभाव इत्याशङ्क्यते तदा तरुसहिताः शैला इति मध्यमपदलोपी समास इह विज्ञेयः। पृच्छति–**प्राणिपश्वादिजातिवर्जनं किमि**ति– 35 तथा च पूर्वसूत्र एव फलस्येति विहाय "जातौ" इत्येतावन्मात्रं सूत्रं विधेयम्, अथवा पूर्वसूत्रं यथास्थितमेवास्तु, बहुत्वानुवृत्तिनिराकरणाय प्रकृतसूत्रस्थाने "द्रव्याणाम्" इत्येव सूत्रमस्तु, पर्युदासेन हि तेषामेव लाभोऽभिमत इति पूर्वं प्रतिपादितमेवेति प्रष्टुराशयः। **ब्राह्मण-क्षत्रिय-विट्-शूद्राः** इति–एते च 40 प्राणिजातिवाचिनो द्रव्यभूताः पदार्थास्तेषामपि द्वन्द्व एकवत्स्यादिति प्राणिवर्जनमावश्यकम्। **गोमहिषावि**त्यादि–अत्र "पशुव्यञ्जनानाम्" इत्यनेन भवति पाक्षिकमेकत्वम्, अत्र पश्वादिवर्जनाभावे च परत्वादनेन नित्यमेकत्वं स्यादिति पश्वादिवर्जनमावश्यकम्, एवं–**दधिघृते** इत्यादावपि व्यञ्जनत्वादिनिमित्तः पाक्षिक एकवद्भावो विज्ञेयः। वृत्तौ पर्युदासेन द्रव्यभूता 45 इत्यर्थः स्वीकृतस्तन्मूलं फलं चाह–**अप्राणीति प्राणिनो द्रव्यस्ये**ति–एतच्च पूर्वमेव व्याख्यातम्। तथा च तत्फलं गुणकर्मणां द्वन्द्वे जातिविवक्षासत्त्वेऽप्येकत्वाभाव इत्याह–**रूप-रस-गन्ध-स्पर्शाः** इति–एतच्च गुणद्वन्द्वोदाहरणम्, तथा चात्र पक्षे इतरेतरयोगो भवत्येव। कर्मोदाहरणमाह–**उत्क्षेपणाक्षेपणे**- 50 त्यादि, एतानि पञ्च कर्माणि न्यायदर्शनप्रसिद्धानि। स्वैरिति चेहापि सम्बध्यत एवेत्याह–**स्वैरित्येवे**ति–अत्र स्वत्वं च तत्तत्सूत्रोक्तेन तेन तेन रूपेण, तथा चाप्राणित्वेन बदरस्य शृगालः प्राणी स्वो नेति न भवत्येकत्वम्॥ ३. १. १२६.॥

## प्राणितूर्याङ्गाणाम्। ३। १। १३७॥ 55

**त० प्र०**—प्राण्यङ्गानां तूर्याङ्गानां च स्वैर्द्वन्द्व एकः–एकार्थो भवति। प्राण्यङ्ग–दन्ताश्च ओष्ठौ चेदं दन्तोष्ठम्, इदं शिरो-ग्रीवम्, इदं पाणि-पादम्, इदं कर्ण-नासिकम्। तूर्याङ्ग–शङ्खशाङ्खिकादिसमुदायस्तूर्यम्, अङ्गान्यवयवाः, इदं शङ्ख-पटहम्, इदं भेरी-मृदङ्गम्, शाङ्खिक-मौरजिकम्, 60 मार्दङ्गिक-पाणविकम्, वीणा-वादक-परिवादकम्। स्वैरित्येव–पाणि-गृध्रौ, पीठ-पटहौ; पाणि-पणवौ। प्राण्यङ्गानां तूर्याङ्गेषु च शङ्खपटहादीनामप्राणिजातित्वात् पूर्वेण सिद्धे व्यक्तिविवक्षायां विधानार्थं जातिविवक्षायां प्राण्यङ्गाप्राण्यङ्गादिसंभेद एकत्वनिराकरणार्थं च वचनम्, एतज्ज्ञापनार्थ- 65 मेव च बहुवचनम्॥ १३७॥

**श० म० न्यासानुसन्धानम्–प्राणि०**। प्राणिति प्राणान् धारयतीति प्राणी, प्राणाः प्राणाद्याः पञ्च वायवः, ते सन्त्यस्येति प्राणीति केचित्, तूर्यं वाद्यम्, प्राणी च तूर्यं चेति प्राणितूर्ये, तयोरङ्गानामुपकारकाणां द्वन्द्व एकवद् भवतीत्यर्थः। 70 अत्रेतरेतरयोगे कृते *द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसम्बध्यते* इति न्यायेनाङ्गशब्दस्यान्ते श्रूयमाणस्य प्रत्येकं सम्बन्धात्, प्राण्यङ्गानां तूर्याङ्गाणां च स्वैर्द्वन्द्व इत्यर्थो लभ्यते, समाहारे कृते तु तथा न स्यात्, तत्र समूहरूपेणोपस्थित्या प्रत्येकमङ्गशब्दसम्बन्धासम्भवात्। प्राण्यङ्गानां द्वन्द्वं विगृह्योदाहरति– 75 **दन्ताश्च ओष्ठौ चे**ति विग्रहः, जातिग्रहणमिह न सम्बध्यत इति स्वगत[ द्रव्यगत ]संख्यैवात्र विग्रहवाक्ये प्रयोक्तुमुचितेति दन्तानां प्रतिप्राणि बहुत्वादोष्ठयोश्च द्वित्वाद् बहुवचन-द्विवच-

नाभ्यां विग्रहः, **दन्तोष्ठमिति** एकार्थो द्वन्द्वः समाहारे, समाहारे च नपुंसकत्वमिति 'इदम्' इत्यनेनापि दर्शयति, "वोष्ठौतौ समासे" [ १. २. १७. ] इत्यकारलोपः । शिरश्च ग्रीवा चेति विग्रहे-**शिरोग्रीवमिति** । पाणी च पादौ चेति विग्रहे-**पाणिपादमिति** । कर्णौ च नासिका चेति विग्रहे-**कर्णनासिकमिति** । तूर्याङ्गोदाहरणावसरं दर्शयितुमाह-**तूर्याङ्गेति** । प्राणिनोऽङ्गाधिक्यात् प्राणिनः पृथगपि तेषां प्रयोगदर्शनाच्च तदङ्गानां द्वन्द्वसम्भावनेऽपि तूर्यस्य [ वाद्यस्य ] अङ्गानां न पृथगुल्लेखो दृश्यत इति मनसि कृत्वा **तूर्यशब्दो** न वाद्यपरोऽपि तु वाद्यसमुदायपर इति व्याख्याति-**शङ्ख-शाङ्खिकादिसमुदायस्तूर्यमिति**-शङ्खादयो वाद्यानि, शाङ्खिकादयो वादकास्तेषां समुदाय एव तूर्यमुच्यते, अङ्गशब्दः परार्थादावनेकस्मिन्नर्त्तीति जिघृक्षितमर्थमाह-**अङ्गानि-अवयवाः** इति, तत्र वाद्यानां वाद्यैरेव वादकानां च वादकैरेव द्वन्द्व एकवत्, एतद्रीत्या च तूर्यशब्दव्याख्याने भवन्ति तूर्याङ्गानि शङ्खादीनि तत्समुदायसमवेतत्वात् । प्रत्येकं वाद्यस्यैव तूर्याङ्गत्वं न तु तत्समुदायस्य, तेन च शङ्खश्च मृदङ्गपटहं चेति विग्रहे मृदङ्गपटहेति वाद्यसमुदायेन सह शङ्खस्य वाद्यस्य न भवति समाहारः । **शङ्खपटहमिति** वाद्यद्वन्द्वः, शङ्खश्च पटहश्चेति विग्रहः । एवं-भेरीमृदङ्गमिति, भेरी च मृदङ्गश्चेति विग्रहः । वादकद्वन्द्वमाह-**शाङ्खिकमौरजिकमिति**-शङ्खवादनं शिल्पमस्येति शाङ्खिकः, मुरजवादनं शिल्पमस्येति मौरजिकः, शाङ्खिकश्च मौरजिकश्चेति विग्रहः । **मार्दङ्गिकपाणविकमिति**-मृदङ्गवादनं शिल्पमस्येति मार्दङ्गिकः, पणववादनं शिल्पमस्येति पाणविकः, मार्दङ्गिकश्च पाणविकश्चेति विग्रहः । **वीणावादकपरिवादकमिति**-वीणाया वादको वीणावादकः "अकेन क्रीडाजीवे" [ ३. १. ८१. ] इति समासः, "वादेश्च णकः" [ ५. २. ६७. ] इति णौ णके परिवादनशीलः परिवादकः, परिवादनं च मृदङ्गादिताडनादिरूपो ध्वन्यनुकूलो व्यापारः, वीणावादकश्च परिवादकश्चेति विग्रहः । अनुवर्तमानस्य स्वैरेवेत्यस्य व्यावर्त्यमाह-**पाणिगृध्रौ** इति-अत्रैकः प्राण्यवयवोऽपरश्च प्राणी, **पीठपटहौ** इति-अत्र पीठ आसनविशेषः, पटहो वाद्याङ्गं च, **पाणिपणवौ** इति-अत्र पाणिरिति प्राण्यङ्गं पणव इति वाद्याङ्गं चेति स्वत्वाभावान्नैकवद्भावः । अत्र केषाञ्चित् पूर्वेणैवैकत्वासिद्धिरिति तेषामिह ग्रहणं व्यर्थमित्याशङ्कामुत्थाप्य समाधत्ते-**प्राण्यङ्गानामित्यादिना**, प्राण्यङ्गानि हि न प्राणित्वेन व्यवहारविषयाणि प्रत्येकमवयवस्य प्राणित्वे एकोऽपि प्राणिसमुदायः स्यादवयवानां च स्वातन्त्र्याच्छरीरमुन्मथ्येतेति प्राण्यङ्गानि न प्राणिनः, तथा चाप्राणित्वेन पूर्वसूत्रेणैव तेषामेकत्वं सिद्धम् । तूर्याङ्गेष्वपि वाद्यानां शङ्खपटहादीनामप्राणित्वं प्रसिद्धमिति पूर्वेण सिद्धिः स्पष्टैव । तथा च वादकमात्रांशे सूत्रप्रयोजनमिति सामान्यसूत्रं व्यर्थमेवेति चेत्? अत्राह-**व्यक्तिविवक्षायां विधानार्थमिति**-पूर्वसूत्रस्य जातिविवक्षायामेव प्रवृत्तेर्व्यक्तिविवक्षायां प्राण्यङ्गादीनामप्येकत्वद्भावविधानार्थं सूत्रस्यावश्यकत्वम्, एवं तर्हि किं जातिविवक्षायां नेदं इति चेत्? अत्राह-**जातिविवक्षायामपि प्राण्यङ्गाप्राण्यङ्गसम्भेद एकत्वनिराकरणार्थं वचनमिति** पूर्वसूत्रे ह्यप्राणित्वेनैव स्वत्वं ग्राह्यमिति प्राण्यङ्गाप्राण्यङ्गयोरुभयोरप्यप्राणित्वं समानमिति तयोरेकत्र समासे मिश्रणे पूर्वेणैकत्वं स्यादेव, एतत्सूत्रकरणे तु प्राण्यङ्गानां प्राण्यङ्गैरेव द्वन्द्व एकवदित्यर्थलाभान्न भवति तत्रैकत्वमिति भावः । तथा च जातिविवक्षायामपि सूत्रस्य सार्थक्यं प्रतिपादयितुं शक्यमिति तात्पर्यम् । उभयविवक्षायां सूत्रप्रवृत्तौ किं गमकमिति चेत्? अत्राह-**एतज्ज्ञापनार्थमेवेति**, अयमाशयः-प्रकृते प्राणितूर्ययोर्द्वित्वेन प्राणितूर्ययोरिति, अङ्गशब्दस्य विनापि द्विवचनं द्वन्द्वान्ते श्रूयमाणतया, उभयोरङ्गस्यैक्याभावेन च, एकवचनेनापि प्राणितूर्याङ्गस्येति रूपेण निर्देशे समुच्चितार्थलाभसम्भवे सति बहुवचनेन "प्राणितूर्याङ्गाणाम्" इति निर्देशो व्याप्तिसूचक एवेति जातिव्यक्तिपक्षयोरुभयोरपि सूत्रप्रवृत्तिः सिध्यतीति ॥ ३. १. १३७. ॥

## चरणस्य स्थेणोऽद्यतन्यामनुवादे । ३ । १ । १३८ ॥

**त० प्र०**—शाखाध्ययननिमित्तकव्यपदेशभाजो द्विजन्मानः-चरणाः कठादयः, प्रमाणान्तरप्रतिपन्नस्यार्थस्य शब्देन संकीर्तनम्-अनुवादः, यज्ञकर्मणि शंसितानुशंसनमित्येके, अनुकरणमित्यपरे; अद्यतन्यां परभूतायां यौ स्थेणौ तयोरनुकथने कर्तृत्वेन संबन्धिनो ये चरणास्तद्वाचिनां शब्दानां स्वैर्द्वन्द्वोऽनुवादविषय एकः-एकार्थो भवति । प्रत्यष्ठात् कठकालापम्, उदगात् कठ-कौथुमम्, प्रत्यष्ठात् मौदपैप्पलादम्, एषामुदय-प्रतिष्ठे कश्चिदनुवदति । चरणस्येति किम्? उदगुस्तार्किक-वैयाकरणाः । स्थेण इति किम्? अगमन् कठ-कालापाः । अद्यतन्यामिति किम्? अतिष्ठन् कठ-कालापाः । अनुवाद इति किम्? उदगुः कठ-कालापाः, अप्रसिद्धं कथयति । अन्ये तु स्थेणोऽद्यतनीप्रयोगाद् अनु-पश्चाद् वादेः-चरणद्वन्द्वस्येत्यनुवादस्तत्रेच्छन्ति, तन्मते इह न भवति-कठकालापाः प्रत्यष्ठुः, कठ-कौथुमा उदगुः ॥ १३८ ॥

**श० म० न्यासानुसन्धानम्**-चरणस्य० । वाक्यार्थं ग्राहयितुं पदार्थमाह-**शाखाध्ययननिमित्तकव्यपदेशभाजो द्विजन्मानश्चरणाः कठादयः** इति-चत्वारो

वेदाः, तेषां शतशः शाखाः, यां शाखां योऽधीते द्विजन्मा स तच्छाखाध्यायित्वेन तन्नाम्ना प्रसिध्यतीति प्राक्तनी परिपाटिः, तथा च यच्छाखाध्यायिनस्ते तच्छाखयैव विशिष्टमपदेशं मुख्यं व्यवहारं भजन्ते, तथा च ते व्यपदिश्यमानाश्चरणाः, व्यपदेशवचनं च चरणशब्देन व्यवह्रियत इत्यर्थः, तथा च व्याख्यास्यति-**तद्वाचिनां शब्दानामि**ति, सूत्रे च जातिविवक्षयैकवचनम् । चरणशब्दं **परि**चाय्यानुवादशब्दं परिचाययति-**प्रमाणान्तरप्रतिपन्नस्यार्थस्य शब्देन संकीर्तनमनुवादः** इति-अन्यत् प्रमाणं प्रमाणान्तरम्, अन्यत्वं च प्रकृतवाक्यापेक्षया, तदपेक्षया भिन्नं च वाक्यान्तररूपं शब्दप्रमाणमपि, शब्दभिन्नं प्रत्यक्षादिप्रमाणं च, तेनावगतमप्यर्थं कार्यान्तरार्थं यदा प्रयोक्ता प्रतिपत्त्रा प्रतिपाद्यते-तच्च संकीर्त्यते तदा तदेव संकीर्तनमनुवादशब्देनोच्यत इति भावः । मतान्तरमाह-**यज्ञकर्मणि शंसितानुशंसनमित्येके** इति-पूर्वमेको याज्ञिकः कमप्यर्थमेक एवोच्चारयति, पश्चादन्ये याज्ञिकाः सम्भूय तदनुवादं कुर्वन्ति स एवास्य सूत्रस्य विषय इत्येकेषां मतमिति भावः । पुनर्मतान्तरमाह-**अनुकरणमित्यपरे** इति-अपरे तु-अक्षरार्थानुगुण्येनानुकरणमेवानुवाद इति कथयन्ति, अनु-पश्चात्, वदनं-पूर्वमुच्चारणविषयीकृतस्य पश्चात् तथैव वदनमुच्चारणमनुवाद इत्यर्थाश्रयणेनेति भावः । दीक्षितादिभिस्तु-'सिद्धोपन्यासः' इत्यनुवादव्याख्या कृता, सा च स्वमतसमानैव । इत्थं यथा सूत्रार्थः सम्पन्नस्तथाह-**अद्यतन्यां परभूतायामि**त्यादि, स्थेणोरद्यतनीप्रयोगे सतीति भावः, **तयोः कर्तृत्वेने**ति-यद्यपि कर्तृत्वेन सम्बन्धस्तैर्भावप्रत्ययान्तस्यापि सम्भवति, तथापि भावप्रत्यये कर्ता न मुख्यतया भासतेऽपि तु भाव एव, तस्यैव प्रत्ययेनोक्तत्वादिति न तत्र मुख्यः कर्तेति तत्र न भवत्येकत्वं, किन्तु यत्र कर्तर्यद्यतनी तत्रैव, तथैवाचार्यैरुदाहृतमपीति भावप्रत्यये-प्रत्यष्ठायि कठकालापैरित्येव प्रयोगः । **कठकालापमि**ति-कठाश्च कालापाश्चेति विग्रहः, कठेन प्रोक्तो वेदः कठः "तेन प्रोक्ते" [ ६. ३. १८१. ] इत्यण्, तस्य "कठादिभ्यो वेदे लुप्" [ ६. ३. १८३ ] इति लुप्, कठं विदन्ति अधीयते वा "तद्वेत्त्यधीते" [ ६. २. ११७. ] इत्यण्, तस्य "प्रोक्तात्" [ ६. २. १२९. ] इति लोपे कठाः, एवं-कलापिना प्रोक्तं वेदं विदन्ति अधीयते वेति कालापाः, अत्र "कलापि-कुथुमि०" [ ७. ४. ६२. ] इति इनो लुप्, वृद्धिश्च । प्रतिपूर्वस्य स्थाधातोरद्यतन्यां-**प्रत्यष्ठादि**ति । **कठकौथुममि**ति- कठाश्च कौथुमाश्चेति विग्रहः, कुथुमिना प्रोक्तं वेदमधीयते इति कौथुमाः, उत्पूर्वस्य इण्धातोरद्यतन्याम्-**उदगादि**ति । **मौदपैप्पलादमि**ति-मौदाश्च पैप्पलादश्चेति विग्रहः, मौदेन पैप्पलादेन च प्रोक्तमिति ईयस्य बाधको "मौदादिभ्यः" [ ६. ३. १८२. ] इत्यण्, "तद् वेत्त्यधीते" [ ६. १. १२१. ] इत्यण्, तस्य "प्रोक्तात्" [ ६. २. १२९.] इति लोपः । अत्रानुवादः कथमित्याह-**एषामुदयप्रतिष्ठे कश्चिदनुवदती**ति- कठेषु कालापेषु चोदितेषु प्रतिष्ठितेषु वा किमपि कार्यं कैश्चित् संकेतितम्, स च संकेतस्तेषां मध्ये केनचिद् विस्मृतः, पश्चात् कश्चित् तेष्वेकः प्रमाणान्तरेण तेषामुदयप्रतिष्ठे अवगत्य स्वसार्थानां स्मारणायानुवदति, तत्रत्योऽयं प्रयोग इति भावः । पदकृत्यं पृच्छति- **चरणस्येति किमि**ति- शाख्याध्येतृवाचकानामेव शब्दानामिह विशिष्य किमर्थं ग्रहणमिति प्रश्नाशयः, अन्यत्राध्ययननिमित्तकानामपि शब्दानां न भवति समाहार इत्याशयेनोत्तरयति- **उदगुस्तार्किकवैयाकरणाः** इति- तर्कं विदन्ति अधीयते वेति नैयायिकाः, व्याकरणं विदन्ति अधीयते वेति वैयाकरणाः, नैयायिकाश्च वैयाकरणाश्चेति विग्रहः, अत्र शाखाध्ययननिमित्तकशब्दाभावान्न समाहारः, किन्त्वितरेतरयोग एवेति भावः । पुनः पृच्छति- **स्थेण इति किमि**ति- अद्यतनीप्रयोगमात्रं निमित्तत्वेन स्वीकार्यमिति प्रश्नाशयः; प्रत्युदाहरणेनोत्तरयति- **अगमत् कठकालापाः** इति-अत्रापि प्रमाणान्तरावगतमेव तेषां गमनमनूद्यत इत्यनुवादे सत्यपि गम्धातोरद्यतन्यां प्रयोगान्न भवति समाहारोऽनभिधानादिति तन्निवृत्तये धातुविशेषग्रहणमावश्यकमित्युत्तराशयः । अस्तु धातुविशेषग्रहणमेव प्रत्ययविशेषग्रहणं विफलमित्यारेकते-**अद्यतन्यामिति किमि**ति, अन्यत्र नेष्ट इत्युत्तरयति-**अतिष्ठन् कठकालापाः** इति-अत्र ह्यस्तन्यां प्रयोग इति न भवतीत्यर्थः । पुनः पृच्छति-**अनुवाद इति किमि**ति-प्रमाणान्तरप्रतिपत्त्यभावेऽपि भवत्विति प्रश्नाशयः, तत्र नेष्ट इत्युत्तरयति-**उदगुः कठकालापाः** इति, कुतो नेहानुवाद इत्याह-**अप्रसिद्धं कथयती**ति- यत्र प्रमाणान्तरेणाज्ञातं वस्तु स्वोहेन वदति तत्र समाहारो न भवतीति शब्दशक्तिस्वभावः पूर्वेषां च तथैव प्रयोग इति भावः । पराभिमतमनुवादपदार्थं सिंहावलोकनन्यायेन सूत्रशेषे प्रकाशयति-**परे त्वि**त्यादि-अनुवदनं पश्चात् कथनं, तच्च पूर्वसिद्धापेक्षया, प्रकृतसूत्रोपात्तनिमित्तभूतात् स्थेणोऽद्यतनीप्रयोगादेव प्राह्यमुपस्थितत्वादिति तन्मतम्, तथा च क्रियायाः पूर्वमुच्चारणे भवति, पश्चादुच्चारणे च न भवतीति तदाशयः, तथैवोदाहरति स्म, तथा प्रयोगाभावे च नेत्याह-**तन्मत इह न भवती**ति, तथा च प्रदर्शित उदाहरणे न तेषामपि विप्रतिपत्तिरिति भावः ॥ ३. १. १३८. ॥

## अक्लीबेऽध्वर्युक्रतोः । ३ । १ । १३९ ॥

**त प्र०**—अध्वर्यवः-यजुर्वेदविदः, तेषां वेदोऽप्यध्वर्युः, तत्र विहिताः क्रतवोऽश्वमेधादयोऽध्वर्युक्रतवः, ससोमको यागः-क्रतुः, अध्वर्युक्रतुवाचिनां शब्दानां स्वैर्द्वन्द्व एकः-एकार्थो भवति, अक्लीबे-क्लीबे चेदध्वर्युक्रतुवाची शब्दो न भवति । अर्कश्चाश्वमेधश्च-अर्का-ऽश्वमेधम्, साह्ना-ऽतिरात्रम्, पौण्डरीका-ऽतिरात्रम्; अर्कादयः पुंलिङ्गाः । अक्लीबग्रहणं किम् ? गवामयना-ऽऽदित्यानामयने । प्रसज्यप्रतिषेधः किम् ? राजसूयं च वाजपेयं च-राजसूयवाजपेये, इमौ क्रतू पुंलिङ्गावपि स्त इति पर्युदासाश्रयणेऽत्रापि स्यात् । अध्वर्युग्रहणं किम् ? इषु-वज्रौ, उद्भिद्बिलभिदौ, इष्वादयः सामवेदे विहिताः । क्रतुग्रहणं किम् ? दर्शपौर्णमासौ ॥ १३९ ॥

---

**श० म० न्यासानुसन्धानम्-अक्लीबे०** । वाक्यार्थं ग्राहयितुं पदार्थमाह-**अध्वर्यवो यजुर्वेदविदः** इति-अध्वरं यज्ञमिच्छन्तीत्यर्थे व्युत्पन्नोऽध्वर्युशब्दो यजुर्वेदानुसारिहोमकारिणि यजुर्वेदविदि ऋत्विजि रूढः; तैर्ज्ञेयत्वात् तद्रूपसम्बन्धं निमित्तीकृत्याध्वर्युशब्दो यजुर्वेदेऽपि निरूढलाक्षणिकः, तदाह-**तेषां वेदोऽपी**ति । **तत्र विहिताः क्रतवः** इति-तथा च मध्यमपदलोपी समासः, अध्वर्यौ विहिता अध्वर्युविहिताः, ते क्रतव इति विग्रहात् । क्रतुशब्दः सामान्यतो यागे संकल्पादौ च प्रसिद्धोऽपीह व्याख्यानाद् यागविशेषपर इत्याह-**ससोमको यागः क्रतुरि**ति-यजुर्वेदविहितेष्वपि यागेषु ससोमकासोमकभेदेन द्वैविध्यम्, सोमो लतौषधिर्यज्ञोपयोगिद्रव्यम्, सोमौषधेरसेन होमः क्रियते, हुतशेषश्च पीयते यस्मिन् यागे स ससोमको यागः कथ्यते, तथा च तादृशयागमात्रपरोऽत्र क्रतुशब्द इति भावः, तेन चाध्वर्युविहिता अपि असोमका यागा इह न गृह्यन्ते । तत्रापि विशेषमाह-**अक्लीबे** इति । तथैव विगृह्योदाहरति- **अर्कश्चाश्वमेधश्चे**ति विग्रहः, इमावुभावपि यज्ञौ यजुर्वेदविहितौ ससोमकौ पुंलिङ्गौ चेति भवत्यनेनैकत्वम्-**अर्काश्वमेधमि**ति । एवं-साह्नश्च अतिरात्रश्चेति-**साह्नातिरात्रमि**ति, पौण्डरीकश्चातिरात्रश्चेति-**पौण्डरीकातिरात्रमि**ति ।

पदकृत्यं पृच्छति-**अक्लीबग्रहणं किमि**ति, उत्तरयति-**गवामयनादित्यानामयने** इति-अत्र द्विधा व्याख्या-आमयस्य करणमामयनम्, गोरामयनं गवामयनम्, अदितेरपत्यानि आदित्या देवास्तेषामनामयनमिति षष्ठ्यन्तेन विग्रहे षष्ठीसमासः, सामासिको विभक्तिलोपश्च, तथा च येन यागेन गोरामय उत्पाद्यते [ शत्रुसम्बन्धिनि गवि तदीयाहितसम्पादनार्थमामयोत्पादनं व्याधिसम्पादनं क्रियते ] स यागो गवामयनशब्देनोच्यते, एवमादित्यानामयनेऽपि विज्ञेयम् । परं गवि रोगोत्पादनसम्भावनायामपि देवेषु तदुत्पादनसम्भावनाविरहादेषा व्युत्पत्तिर्न साध्वी । तथा च गवामयने गोष्ठे यो यागोऽनुष्ठीयते स उपचाराद् गवामयनशब्देन कथ्यते, संज्ञानिमित्तको विभक्तिलोपाभावः, एवं देवानां स्थाने देवकुलादौ यो यागोऽनुष्ठीयते स आदित्यानामयनशब्देन कथ्यते, षष्ठ्या अलुप् पूर्ववत् । तत्पुरुषे च परपदलिङ्गताया अनुशासनादिमौ शब्दौ नित्यक्लीबौ । **प्रसज्यप्रतिषेधः किमि**ति-'अक्लीबे' इति समस्तनञः पर्युदासपरतया व्याख्यानस्यैवौचित्यं "पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" इत्यभियुक्तोक्तेः; प्रसज्यप्रतिषेधे हि क्रियया सह नञर्थस्य सम्बन्धात् समस्यमानपदेन सह सामर्थ्याभावात् समासाप्राप्तेः, एवं च किमर्थमौचित्यपरित्याग इति प्रश्नाशयः । व्यावृत्तिद्वारोत्तरयति-**राजसूयं च वाजपेयं च-राजसूयवाजपेये** इति-सोमो राजा सूयते यत्रेति राजसूयम्, राजा सोतव्यमभिषवद्वारा सम्पादयितव्यं वा राजसूयं-ससोमको यागविशेषः, वाजमन्नं घृतं वा पेयमत्र स यागो वाजपेयम्, अयमपि ससोमकः । अनयोर्नपुंसकत्वात् पर्युदासेनापि व्यावृत्तिः स्यादेवेति चेत् ? अत्राह **इमौ क्रतू पुंलिङ्गावपि स्त** इति पर्युदासाश्रयणेऽत्रापि स्यादिति-तथा च पर्युदासेन । क्लीबभिन्नलिङ्गानामध्वर्युक्रतूनां द्वन्द्व एकवदित्यर्थे पुंलिङ्गत्वस्याप्यनयोः सत्त्वात् तद्भिन्नलिङ्गता [ क्लीबभिन्नलिङ्गता ]ऽप्यस्ति, अतो व्यावृत्तिर्न स्यात् । प्रसज्यप्रतिषेधे च क्लीबलिङ्गत्वे सति निषेधः पर्यवस्यतीति भवति व्यावृत्तिः, तयोः क्लीबतया अपि सत्त्वेन क्लीबत्वप्रयुक्तस्य निषेधस्य प्रवृत्तेरिति भावः । पृच्छति-**अध्वर्युग्रहणं किमि**ति-ससोमको यागो यजुर्वेद एव प्रसिद्ध इत्यभिमानेन प्रश्नः; न केवलं यजुर्वेद एव ससोमको यागोऽपि तु सामवेदेऽपि, सोऽपि च पुंलिङ्ग इति तत्र मा भूदित्याशयेनोत्तरयति-**इषुवज्रावि**ति एतौ शत्रुमारणाय सामवेदे विहितौ-तयोश्च द्वन्द्वो नैकार्थः प्रयुज्यत इति तद्व्यावृत्त्यर्थमध्वर्युग्रहण,-मावश्यकम् । एवम्-**उद्भिद्-बिलभिदावि**ति, अनयोरपि सामवेदमात्रप्रसिद्धत्वमित्याह-**इष्वादयः सामवेदे विहिताः** इति । पुनः पृच्छति-**क्रतुग्रहणं किमि**ति-ससोमके यागे निरूढस्य क्रतोर्ग्रहणं किमिति प्रश्नाशयः; उत्तरयति-**दर्शपौर्णमासावि**ति-दर्शोऽमा, पौर्णमासी च प्रसिद्धा, तत्र दर्शतिथौ विधेयो यागोऽप्युपचाराद् दर्शः, पौर्णमास्यां च विहितः पौर्णमासः, एतौ न ससोमकौ, तयोः सोमसाध्यत्वस्याभावेन सोमपानस्यापि तत्राविहितत्वेन सोमसम्बन्धाभावात्, उक्तरीत्या निरूढलाक्षणिकक्रतुशब्दानुपादाने चेहापि स्यादेव । यद्यपि क्वचिदेतयोरपि क्रतुशब्देन विशेषणं दृश्यते, यथा-"दर्शपौर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विजः" इत्यादौ, तथापि तयोरिह सूत्रे

न क्रतुशब्देन ग्रहणं पूर्वोक्तरीत्या निरूढलाक्षणिकत्वेन ससोमकयागमात्रपरत्वादिह तस्य, तत्र च क्रतुशब्दव्यवहार औपचारिको न तु ससोमकत्वनिबन्धन इति स्वीकारात् ॥ ३. १. १३९. ॥

## निकटपाठस्य । ३ । १ । १४० ॥

5 **त० प्र०**—निकटः पाठो येषामध्येतॄणां ते निकटपाठाः, तद्वाचिनां द्वन्द्व एकः—एकार्थो भवति स्वैः । पदमधीते पदकः, एवं—क्रमकः, पदकश्च क्रमकश्च—पदक-क्रमकम्, पदानन्तरं क्रमस्य पाठात् पाठयोर्निकटत्वम्, एवं—क्रममधीते क्रमकः, वृत्तिमधीते-वार्तिकः, क्रमकश्च वार्तिकश्च—क्रमक-10 वार्तिकम्, चर्चां पारयतीति—चर्चापारः स च खण्डिकश्च—चर्चापार-खण्डिकम् । निकटेति किम् ? याज्ञिक-वैयाकरणौ । पाठेति किम् ? पिता-पुत्रौ ॥ १४० ॥

**श० म० न्यासानुसन्धानम्**-निकट० । निकटपाठपदमस्पष्टार्थं पाठशब्दस्य भावकर्मोभयसाधनत्वात्, तत्र 15 कर्मसाधनत्वे पाठशब्देन पठ्यमानग्रन्थोऽभिधीयते, तथा च ग्रन्थयोर्नैकट्यमिह निमित्तं स्यात्, परं तु तदिह नेष्टमपि तु भावसाधनस्यैव पाठशब्दस्य ग्रहणमिष्टमिति तेन पाठक्रियाभिधीयते, तथा च तया क्रियया नैकट्यं प्रकृते एकार्थत्वनिमित्तमिति ग्राहयति-**निकटः पाठो येषामध्येतॄणामिति** । 20 अध्येतॄणामेव द्वन्द्व इत्यध्ययननिमित्तकशब्दं व्युत्पादयति-**पदमधीते पदकः**, अतिदिशति-**एवमिति, क्रमकः** इति-क्रममधीते इति क्रमकः, पदक्रमशब्दाभ्यामध्ययनार्थे "पद-क्रम-शिक्षा०" [ ६. २. १२६. ] इत्यकः । **पदकश्च क्रमकश्चेति** विग्रहः, **पदकक्रमकमित्येकार्थो** द्वन्द्वः, 25 कथमिह पाठयोर्नैकट्यं तदाह-**पदानन्तरं क्रमस्य पाठात् पाठयोर्निकटत्वमिति**-अयमाशयः-पदम्, क्रमः, संहिता चेति पाठत्रैविध्यम्, एक एव मन्त्रस्त्रिधा पठ्यते वैदिकैः, तत्र पूर्वं पदशः- पदानि पृथक्कृत्य मन्त्राः पठ्यन्ते, स च पदपाठः कथ्यते, पश्चाद् येन पदेन सह यस्य पदस्य सम्बन्धस्तेन 30 क्रमेण पठ्यतेऽर्थानुसन्धानार्थं स क्रमपाठः; ततः पश्चात् संहितया परिनिष्ठितरूपेण पठ्यते स संहितापाठः, एवं च क्रमपाठस्य संहितापाठापेक्षया पदपाठनिकटत्वं पूर्वकालभावित्वात्, तदेवोक्तं-पदानन्तरं क्रमस्य पाठादिति । क्वचित् क्रमपाठानन्तरं विवरणात्मको ब्राह्मणभागः पठ्यते, तदनुसार-35 मुदाहरति-**क्रमवार्तिकमिति, वृत्तिमधीते** इति न्याया-दित्वादिकणि वार्तिकः, **क्रमकश्च वार्तिकश्चेति** विग्रहः । **चर्चां पारयतीति**-चर्चा पदविभागः, तां पारयति पठित्वाऽवसाययति चर्चापाठं पूरयतीति यावत्, इति **चर्चापारः**, खण्डं खण्डमधीते इति खण्डिकः, पदानि विभज्य मन्त्रं खण्डशः पठतीति क्रमः, तत्र चर्चापारः 40 खण्डिकस्य सन्निहित इत्युभौ पाठेन निकटस्थितौ, **चर्चापारश्च खण्डिकश्चेति** विग्रहः, **चर्चापारखण्डिकमिति चैकार्थो** द्वन्द्वः । पदव्यावृत्तिं दर्शयितुमाह- **निकटेति किमिति**, यद्यपि तदभावे निकटे पाठो येषामित्येतादृशबहुव्रीहिसमासलाभो न स्यादिति सूत्रार्थानवबोध एव प्रसज्येत, तथापि निकटेति 45 किमित्यस्य 'पाठकानाम्' इत्येव सूत्रं विधेयमिति भावः, तथा च केवलं पाठनिमित्तकशब्दानां द्वन्द्वस्यैकार्थत्वमित्यर्थसम्पत्त्या, यज्ञमधीते याज्ञिकः, व्याकरणमधीते वैयाकरणः, याज्ञिकश्च वैयाकरणश्चेति विग्रहे समाहारः प्रसज्येतेति तद्व्यावर्तनाय निकटग्रहणं कर्तव्यम्, तस्मिंश्च कृतेऽनयोः पाठयोः पौर्वा- 50 पर्याभावान्न भवति सूत्रवृत्तिः । **पाठेति किमिति**- तथा च "निकट" इत्येव सूत्रमस्त्विति प्रश्नाशयः, एवं च केन निमित्तेन नैकट्यमित्यस्याकथनात् जन्मना निकटयोः पितापुत्रयोरपि द्वन्द्व एकार्थः स्यादित्याह- **पितापुत्रा-विति** ॥ ३. १ १४०. ॥

## नित्यवैरस्य । ३ । १ । १४१ ॥ 55

**त० प्र०**—नित्यम्-अनिमित्तं जातिनिबद्धं वैरं येषां तद्वाचिनां शब्दानां स्वैर्द्वन्द्व एकः-एकार्थो भवति । अहि-नकुलम्, मार्जार-मूषिकम्, ब्राह्मण-श्रमणम्, श्व-वराहम्, "शुनः" [ ३. २. ९०. ] इति दीर्घत्वम्, श्व-चण्डालम्; पशुविकल्पः पक्षिविकल्पश्च परत्वादनेन बाध्यते-अश्वमहि- 60 षम्, काकोलूकम् । नित्यवैरस्येति किम् ? कौरवपाण्डवाः, कौरव-पाण्डवम्, देवा-ऽसुराः, देवा-ऽसुरम्, नैषां निर्निमित्तं वैरमपि तु राज्यापहारादिकृतम् । अन्ये तु वैर एवाभिधेये समाहारमिच्छन्ति—श्वा-वराहं वैरम्, मार्जारमूषिकं वैरमिति वैरिषु तु यथाप्राप्तम् 'दक्षिणाद् वामगमनं प्रशस्तं श्व-शृगा- 65 लयोः, विद्यते लोक औत्पत्तिको विरोधः, यथा-मार्जार-मूषिकयोः ॥ १४१ ॥

**श० म० न्यासानुसन्धानम्**-नित्यस्य भावस्य निमित्तानपेक्षत्वं प्रसिद्धम्, निमित्तापेक्षत्वे हि निमित्तसन्निधानात् पूर्वं न तत्सत्ता स्यादिति नित्यत्वं व्याहन्येतेत्यभिप्रेत्याह- 70 **नित्यमनिमित्तमिति**, तर्हि सर्वैः सह तस्य विरोधोऽस्तु, निमित्तानपेक्षत्वेन जातिविशेषापेक्षाया अपि विरहादिति चेत् ? अत्राह-**जातिनिबद्धमिति**-तथा च निमित्तपदं जातीतर-निमित्तपरमेवं च जातिभिन्ननिमित्तानपेक्षं वैरं नित्यवैरमुच्यते-पारस्परिकवैररूपस्य भावस्य नास्ति निमित्तान्तरापेक्षा परस्परा- 75

धिकरणत्वं तु तस्य स्वरूपमेवेति न नित्यत्वव्याघात इति भावः। **अहिनकुलमिति**- अहिः सर्पः, नकुलस्तद्वैरी क्षुद्रजन्तुविशेषः प्रसिद्धः, अनयोर्विरोधो जन्मत एव भवति, स च यावज्जीवं तिष्ठतीति नित्यः, एवमन्यत्रापि विज्ञेयम्। **ब्राह्मणश्रमणमिति**- श्रमणो बौद्धभिक्षुः, यतिमात्रमित्यपरे, प्रसिद्धश्च बौद्धभिक्षूणां ब्राह्मणैः सह विरोधः। यद्यपि नायं जातिकृतोऽपि तु परस्पर-धार्मिकभेदकृत इति नास्य निमित्तानपेक्षत्वं, तथापि श्रमणत्वरूपा जातिरपि काचिदङ्गीक्रियते, दृष्टा च तज्जातीयानां ब्राह्मणैः सह विमतिरिति तयोर्नित्यवैरत्वरूढिः। **श्ववराहमिति**- श्वा वराहश्चोभावपि ग्राम्यपशू, तयोः क्वचिदेकत्रावस्थितिरपि निर्विरोधं दृष्टा, सा चैकस्वामिकत्वनिमित्तापेक्षेति न स्वाभाविक-वैरविसंवादिनी। नन्वत्र श्ववराहमित्येव भवितव्यमिति कथं दीर्घ इत्याह- **"शुनः" इति दीर्घत्वमिति**। **श्वचण्डालमिति**- चण्डालः श्वपचः, स च प्रकृत्यैव शुनो मारयति, तथा चान्यमनुष्यजातिव्यावर्तकाकृतिविशेषाभावेऽपि तदीयचेष्टादिभिरेव श्वा स्वविरोधिनमेनमवगच्छतीति सोऽपि तस्मादनिमित्तं वैरं धारयतीति मत्वेह श्वचण्डालमित्यस्योदाहृतत्वं विज्ञेयम्। यदि च चण्डालस्तन्मांसार्थितया तद्विरोधी, श्वा च स्वहिंसकतया तद्विरोधीति मन्यते तदाऽनयोर्वैरस्य सनिमित्तत्वेन नित्यत्वाभाव एवेति मते गवाश्वादिषु तत्पाठः क्रियत इति वक्ष्यत्यग्रे तत्सूत्र-वृत्तावेव। अश्वस्य महिषस्य च पशुत्वेन तयोः पशुनिमित्तकः, काकस्योलूकस्य च पक्षित्वेन तयोः पशुनिमित्तकश्च विकल्पः प्राप्तः, परं तस्य नित्यवैरातिरिक्तस्थले सावकाशत्वम्, अस्य च पशुपक्षिव्यतिरिक्ते नित्यवैरे ब्राह्मणश्रमणादौ सावकाशत्वमितीह द्वयोः स्पर्धे परत्वादिदमेव प्रवर्तत इत्याह- **पशुविकल्पः पक्षिविकल्पश्च परत्वादनेन बाध्यते** इति। **नित्य-वैरस्येति किमिति**- एवं च सति सूत्रमेव किमर्थमिति प्रश्नाकारः संजायते, स च नोचितः, अहिनकुलादीष्टप्रयोगाणा-मप्यसिद्ध्यापातात्, किन्तु वैरे नित्यत्वविशेषणं किमिति प्रश्ना-शयोऽवधारणीयः, केवलं "वैरस्य" इत्येतादृशसूत्रसत्त्वेऽपि वैरिणां बोधो न स्यात्। **कौरवपाण्डवाः** इति- यद्यपि पाण्डवा-नामपि कुरुवंशजातत्वमेवेति तेऽपि कौरवाः, तथापि पाण्डव-पदसान्निध्येन विरोधित्वरूपलिङ्गेन च कौरवपदमत्र धार्तराष्ट्र-दुर्योधनादिपरम्, तदुक्तम्-

> "संयोगो विप्रयोगश्च, साहचर्यं विरोधिता।
> अर्थः प्रकरणं लिङ्गं, शब्दस्यान्यस्य सन्निधिः॥
> सामर्थ्यमौचिती देशः, कालो व्यक्तिः स्वरादयः।
> शब्दार्थस्यानवच्छेदे, विशेषस्मृतिहेतवः॥" इति।

व्याख्याते चेमे कारिके पूर्वत्र, इत्थं च धार्तराष्ट्राणां पाण्ड-वानां च दुर्योधनादीनां युधिष्ठिरादीनां च राज्यलोभादिकृतो वैरभावो न त्वनिमित्त इति न नित्यवैरत्वमेषाम्, केवलं वैरिण द्वन्द्वस्यैकार्थत्वविधाने चेहापि तत् स्यादेव। **देवासुराः** इति- देवानामसुराणां च वैरं न निमित्तनिरपेक्षं, यथा जैनदृष्ट्या असुरराजश्चमरेन्द्रः स्वमस्तकोपरि देवाधिपशक्रपादस्थापनाव-लोकनतः क्रुद्धो वैरं दधानो, पश्चात् शशाम, कविजनप्रसिद्धिस्त्वि-त्थम्-अमृतादिप्राप्तिनिमित्तकमिह वैरम्, अमृतोत्पत्तेः पूर्वं च विरोधाभाव एव, अत एव तैः सम्भूय समुद्रमथनार्थं प्रयत्नः कृतः, अत एव च-"देवासुरैरमृतमम्बुनिधिर्ममन्थे" इत्यादिक-विप्रयोगेषु बहुवचनान्तः प्रयोगोऽपि श्रूयते, तथा चैषां स्वाभा-विक एव समाहारविकल्प इति भावः, तदाह-**नैषां निर्नि-मित्तं वैरमिति**। मतान्तरमाह-**अन्ये तु वैरं पदाभिधेये समाहारमिच्छन्तीति**-यद्यपि प्रत्ययोत्पत्तिं विना द्वन्द्वसमास-मात्रेण वैरमभिधातुं न शक्यते तत्र सम्बन्धाभावात्, तथापि लक्षणया यत्र नित्यवैराणां द्वन्द्वोऽपि वैराभिधायी तत्रैवैकार्थत्व-मिति तेषामाशयः। परे तु प्रत्येकं पदं स्वप्रतियोगिवैरिपरमिति श्वपदं श्ववैरपरं वराहपदं च वराहवैरपरमिति द्वन्द्वेनोभयवैरसमूह उच्यते। एवं च यत्र केवलं वैरिणां विवक्षा तत्र न नित्यमेकत्वमिति स्वाभाविकः समाहारविकल्प एव भवतीत्याह- **वैरिषु तु यथाप्राप्तमिति**, तत्र क्वाचित्कं प्रामाणिकं प्रयोगमुदाहरति-**"दक्षिणाद् वामगमनं प्रशस्तं श्व-शृगालयोः"** इति-मार्गे गच्छतोऽग्रतः श्वा शृगालो वा यदि दक्षिणपार्श्वाद् वामपार्श्वं गच्छन् पन्थानं लङ्घयति तच्छुभसूचक-मिति निमित्तविदां सम्प्रदायः, अत्र श्वा शृगालश्च परस्परं नित्यवैरौ, तयोरपि द्वन्द्वो नैकार्थः प्रयुक्त इति वैरिषु नेदं प्रवर्तत इति प्रतीयत इति भावः। उदाहरणान्तरमाह-**विद्यते लोके औत्पत्तिको विरोधो यथा मार्जारमूषिकयोरिति**- विरोधभेदप्रदर्शनपरोऽयं ग्रन्थः क्वाचित्कः, तत्र मार्जारमूषिकयो-र्नित्यवैरिणोरपि द्वन्द्वो नैकार्थः प्रयुक्त इति वैरमात्रेऽभिधेय एव प्रकृतसूत्रप्रवृत्तिरित्यत्र प्रमाणतां गच्छति॥ ३. १. १४१.॥

## नदी-देश-पुरां विलिङ्ग-नाम्। ३। १। १४२॥

**त० प्र०**—विविधं लिङ्गं येषां तेषां नदी-देश-पुराभि-धायिनां शब्दानां स्वैर्द्वन्द्व एकः-एकार्थो भवति। नदी-**उद्ध्यश्च इरावती च-उद्ध्येरावति, गङ्गा च शोणश्च-गङ्गा-शोणम्; विपाट् च स्त्री, चक्रभिद् नपुंसकं-विपाट्-चक्रभिदम्**। देश-**कुरवश्च कुरुक्षेत्रं च-कुरु-कुरुक्षेत्रम्, कुरु-कुरुजाङ्गलम्, वरेन्द्री-मगधम्; पुर-मथुरा-पाटलिपुत्रम्, काञ्ची-कन्य-कुब्जम्**। पुरां देशत्वात् तद्ग्रहणेनैव सिद्धे पृथग्ग्रहणं ग्राम-

निषेधार्थम्–जाम्बवश्च शालूकिनी च–जाम्बव-शालूकिन्यौ ग्रामौ। स्वैरित्येव–शौर्यं च नगरं केतवता च ग्रामः–शौर्य-केतवते, पूर्ग्रामसंभेदेऽपीच्छन्त्यन्यः–शौर्य-केतवतम्; पूर्देशसंभेदेऽपीत्यपरे–श्रावस्ती-मध्यदेशम्, मगध-श्रावस्ति। नदीदेशपुरामिति किम्? कुक्कुट-मयूर्यौ। देशग्रहणेन चेह जनपदानां ग्रहणं पृथग् नदीपूर्ग्रहणात् तेनेह न भवति–गौरी च कैलासश्च गौरीकैलासौ पर्वतौ, कैलासश्च गन्धमादनं च–कैलास-गन्धमादने पर्वतौ। विलिङ्गानामिति किम्? गङ्गा-यमुने, मद्र-केकयाः; मथुरा-तक्षशिले ॥ १४२ ॥

श० म० न्यासानुसन्धानम्–नदी-देश०। विशब्दः प्रायो विगतार्थको दृष्टः, विगतलिङ्गत्वं च नद्यादीनामसम्भवीति विशब्दस्य विविधार्थत्वं व्याख्याति–विविधं लिङ्गं येषामिति–विभिन्ना विधा प्रकारो यस्य तद् विविधं, तथा च विभिन्नलिङ्गानामिति फलितम्। अत्र च स्वैरिति प्रत्येकं सम्बध्यते, तथा च नदीवाचिनां स्वैर्द्वन्द्व एकवत्, देशवाचिनां स्वैर्द्वन्द्व एकवत्, पूर्वाचिनां च स्वैर्द्वन्द्व एकवदिति वाक्यत्रयं सम्पद्यते, अत्र च सर्वत्रावयवावयविभावसम्बन्धे षष्ठीति नदीवाचकोभयावयवो द्वन्द्व एकवदित्यादिक्रमेण बोधः। विगृह्योदाहरति–उध्यश्च इरावती चेति विग्रहः, इमौ नदीवाचिनौ, तत्राद्यः पुंलिङ्गः, द्वितीयो नारीलिङ्गः, उध्येरावति इति समाहारो द्वन्द्वः, समाहारात् नपुंसकतया ह्रस्वत्वम्, एवमग्रेऽपि। गङ्गा च शोणश्चेति विग्रहः, गङ्गाशोणमित्येकार्थो द्वन्द्वः। विपाट् च स्त्री चक्रभिच्च नपुंसकमिति–विपाशश्चक्रभिदश्च प्रथमैकवचने रूपसाम्याल्लिङ्गभेदो न ज्ञायेतेति सलिङ्गं विगृहीतम्, यद्यपि नदीपदेन साजात्याच्छदोऽपि गृह्यते, दृश्यते च तज्जातीये वस्तुनि स्त्रीपुंलिङ्गमात्रव्यवहारो न तु नपुंसकव्यवहारः, तथाप्याचार्यवचनप्रामाण्यात् सामान्यतो विभिन्नलिङ्गग्रहणाच्च क्लीबत्वमप्येतज्जातीयस्य [ नदीजातीयस्य ] विद्यत इति स्वीकार्यम्। विपाट्चक्रभिदमिति चैकार्थो द्वन्द्वः, दकारान्तत्वात् "चवर्गदषहः समाहारे" [ ७. ३. ९८. ] इति समासान्तोऽत् भवति। देशेति–अनेन देशोदाहरणावसर इत्यावेदयति, सविग्रहमुदाहरति–कुरवश्च कुरुक्षेत्रं चेति विग्रहः, कुरूणां निवासो जनपदः कुरवः,

"हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे।
पञ्चालपूर्वभागे तु कुरुदेशः प्रकीर्तितः॥"

कुरोरपत्यानि च कुरवः, तेषां क्षेत्रं कुरुक्षेत्रं प्रसिद्धं तीर्थम्,

"तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानां च सचक्रुकस्य।
एतत् कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तरवेदिरुच्यते॥"

इत्युक्ते देशे, तद्धि कुरुपाण्डवानां युद्धभूमिः, कुरुकुरुक्षेत्रमिति समाहारो द्वन्द्वः। कुरुकुरुजाङ्गलमिति समाहारो द्वन्द्वः, कुरवश्च कुरुजाङ्गलं चेति विग्रहः। वरेन्द्रीमगधमिति समाहारो द्वन्द्वः, वरेन्द्री च मगधाश्चेति विग्रहः। मथुरापाटलिपुत्रमिति समाहारो द्वन्द्वः, मथुरा च पाटलिपुत्रं चेति विग्रहः। काञ्चीकन्यकुब्जमिति समाहारो द्वन्द्वः, कन्याः कुब्जा अत्र कन्यकुब्जम्, तत्र हि जमदग्निना शापेन नरपतेः कन्याः कुब्जीकृता इति प्रसिद्धिः, "ङ्यापो बहुलं०" [ २. ४. ९९. ] इति ह्रस्वः, काञ्ची च कन्यकुब्जं–गाधिपुरं चेति विग्रहः। केचिदिह पूर्ग्रहणं न कुर्वते, देशेनैव तत्संग्रहमाहुः, ग्रामनिषेधार्थं च 'अग्रामाः' इति पर्युदासमाहुः, तथाहि–पाणिनिसूत्रं "विशिष्टलिङ्गो नदीदेशोऽग्रामाः" [ २. ४. ७. ] इति, तन्मतसंग्रहोपायमाह–पुरां देशत्वात् तद्ग्रहणेनैव सिद्धे पूर्ग्रहणं ग्रामनिषेधार्थमिति–प्रासादादिनिवेशविशेषविशिष्टो देशः पूः, क्षुद्रगृहादिनिवेशविशेषविशिष्टो देशो ग्रामः, इति पुरां ग्रामाणां च देशत्वेनैव ग्रहणं प्राप्नोति, तत्र पूर्ग्रहणस्य विशेषोक्तत्वात् तस्य च ग्रामनिषेधार्थत्वं विज्ञायत इति भावः। स्वैरित्यस्य पुरां पूर्भिरेवेत्याद्याशयकतया पुराणां ग्रामाणां च परस्परं द्वन्द्वेऽपि न सूत्रं प्रवर्तेत इत्याह–स्वैरित्येवेत्यादि। केचिच्च स्वैरितीह न सम्बन्धयन्ति, तन्मतमाह–पूर्ग्रामसंभेदेऽपीति–कथञ्चित् पूरवयवको द्वन्द्व एकवदिति तदभिप्रायः, अथवा केवलग्रामद्वन्द्व एव नैकवदित्यभिप्रायः। केचित् तु न केवलं पूर्ग्रामयोरेव पूर्देशयोरपि सम्भेदे [ एकत्रोपनिपाते ] एकत्वमिच्छन्ति, स्वैरित्यस्य सम्बन्धाभावे तत्रापि प्रवृत्तौ बाधकाभावात्, तदाह–पूर्देशसंभेदेऽपीत्यपरे, तन्मतेनोदाहरति–श्रावस्तीमध्यदेशमिति–श्रावस्ती च मध्यदेशश्चेति विग्रहः, श्रावस्ती नगरी, मध्यदेशश्च।

"हिमवद्-विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः॥"

इति देशविशेषो मनुनोक्तः; मगधाश्च श्रावस्ती चेति विग्रहे–मगधश्रावस्ति, मगधा जनपदविशेषः नदीदेशपुरामिति किमिति–येषां केषाञ्चिद् भिन्नलिङ्गानां द्वन्द्व एकार्थं इतीह विवक्षितव्यमित्याशयः; व्यावर्त्यमाह–कुक्कुट-मयूर्याविति–कुक्कुटश्च मयूरी चेति विग्रहः, नद्यादिभिन्नयोर्विलिङ्गयोरयं द्वन्द्व एकार्थः स्यात् तन्निवारणाय नदीदेशपुरामिति कथनीयमेवेति भावः। देशपदस्य कालातिरिक्ताधारवाचकत्वेन व्यापकार्थतया गिर्यादीनामपि देशत्वमिति तेषामपि द्वन्द्व एकवत् स्यादित्याशङ्कायामाह–देशपदेन चेह जनपदग्रहणं पृथग् नदीपूर्ग्रहणादिति-

अयमाशयः–पूःसाहचर्येण जनाध्युषितो देशः पूर्भिन्नो ग्राह्यः, स च जनपद एव, ग्रामाणां पूर्ग्रहणसामर्थ्यादेव व्यावर्तनात्, किञ्च नद्याः पुरश्च देशेनैव संग्रहे तयोर्ग्रहणसामर्थ्यादपि देशपदेन तद्भिन्नस्तत्सदृशो जनपद एव ग्राह्य इति जनपदभिन्नानां पर्वता-
5 दीनां न देशत्वेन ग्रहणम् । एवं च यत् फलं तदाह–**तेनेह न–गौरी च कैलासश्चेति**, गौरी–कैलाससमीपस्थः 'गौरी'-नामकः पर्वतः; कैलासस्यैव शिखरविशेषस्तत्संज्ञक इति नव्याः, भिन्नलिङ्गत्वं च स्पष्टमेव । गौरीति न पर्वतनाम किन्तु गौरीशिखरमिति कैलासदेशविशेष इति मते उदाहरणान्तरमाह–
10 **कैलासश्च गन्धमादनं चेति** । **विलिङ्गानामिति किमि**ति–तथा च सामान्यत एव सर्वेषां नद्यादीनां द्वन्द्व एकवदिति स्यादिति प्रष्टुराशयः; व्यावर्त्यमाह–**गङ्गा-यमुने** इति–उभे अपि स्त्रीलिङ्गे इति नानयोर्द्वन्द्व एकवद् भवति, साम्प्रतं स्यादिति विलिङ्गानामित्यावश्यकमिति भावः । एवं
15 देशपुरोरपि व्यावर्त्यमाह–**मद्रकेकयाः, मथुरातक्षशिले** इति मद्राश्च केकयाश्चेति, मथुरा च तक्षशिला चेति च विग्रहः ॥ ३. १. १४२. ॥

## पात्र्यशूद्रस्य । ३ । १ । १४३ ॥

**त० प्र०**—यैर्भुक्ते पात्रं संस्कारेण शुध्यति ते पात्र-
20 मर्हन्तीति पात्र्याः, पात्र्यशूद्रवाचिनां शब्दानां द्वन्द्व एकः–एकार्थो भवति स्वैः । तक्षा-ऽयस्कारम्, रजक-तन्तुवायम्, कुलाल-वरुटम्, किष्किन्ध-गन्धिकम्, शकयवनम् । पात्र्येति किम् ? जनंगम-बुक्कसाः । शूद्रग्रहणं किम् ? ब्राह्मण-क्षत्रिय-विशः ॥ १४३ ॥

25 **श० म० न्यासानुसन्धानम्**-पात्र्य० । पात्र्यश्चासौ शूद्रश्च तस्य तथा, जातिविवक्षयैकवचनम्, पात्रमर्हतीति पात्र्यः; अत्रार्हार्थनिष्पन्नपात्रशब्दस्य न स्पष्टार्थत्वं, यतः सर्वेषामपि स्वस्वपात्रयोग्यत्वादतः पात्र्यपदं विशिष्य व्याख्याति–**यैर्भुक्ते पात्रं संस्कारेण शुध्यतीति** यैः–शूद्रैः, भुक्ते–भोजने कृते
30 सति, पात्रं–कांस्यादि, संस्कारेण–भस्मोद्वर्तनादिना लोकप्रसिद्धेन, शुध्यति–लोके विशिष्टानां भोग्यं भवति ते पात्र्याः, कथमिमे पात्र्यशब्देनोच्यन्त इत्यत आह–**पात्रमर्हन्तीति** "तमर्हति" [६. ४. १७७.] इति यो विधीयते, अतः पात्र्य इति पात्रमर्ह-मुच्यते, अर्हन्ति चेमे पात्रं तेषां भुक्तपात्रस्य चण्डालादीनामिवा-
35 परित्यागात् त्रैवर्णिकवत् । पात्र्यशूद्राविप्रकाराः, केचिदार्यावर्ते भवन्ति, केचित् ततो बाह्याः, त उभयेऽपि तक्षायस्कारमित्या-दिनोदाह्रियन्ते, तक्षाणश्चायस्काराश्चेति **तक्षायस्कारमिति**, रजकाश्च तन्तुवायाश्चेति **रजकतन्तुवायमिति**, कुलालाश्च वरुटाश्चेति **कुलालवरुटमिति**, एते तक्षकादय आर्यावर्तजाः । किष्किन्धाश्च गन्धिकाश्चेति **किष्किन्धगन्धिकम्**, क्वचित्
40 गान्धिकस्थाने गन्धिकपाठः, शकाश्च यवनाश्चेति **शकयवन-मिति**, किष्किन्धादय आर्यावर्ताद् बाह्याः ।

केचिदेवमाहुः– पात्रसंस्कारश्च मन्वादिभिरित्थमुक्तः– भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ।" इत्यादिना, एष
45 च सामान्यतः पात्रशोधनप्रकारः, तेन प्रकारेणैव येन भुक्ते पात्रं शुध्यति स पात्र्यः शूद्र इति तात्पर्यम्, येन च भुक्ते सामान्यप्रकारेण पात्रं न शुध्यति, किन्त्वग्निसंस्काररूपं विशिष्ट-मुपायमपेक्षते सोऽपात्र्यः । तत्र तक्षायस्कारौ सामान्यतः पात्र्यौ, रजकतन्तुवायौ सम्प्रति पात्र्यत्वेन न प्रसिद्धौ, किन्तु
50 क्वचिदनयोः शाखाविशेषः पात्र्यत्वेन गण्यते, न तु सर्वा रजकजातिस्तन्तुवायजातिर्वा पात्र्या । कुलालः कुम्भकारः सर्वत्र पात्र्यत्वेन प्रसिद्धः, 'वरुटः, बुरुटः, वरुडः, बुरुडः, एते सर्वेऽ-प्येकस्यामेव जातौ व्यवह्रियमाणाः शब्दा अन्त्यजजातिविशेष-वाचिनः, तज्जातीयाश्च सम्प्रति न पात्र्यत्वेन गण्यन्ते परं पूर्वं
55 पात्र्या आसन्निति प्रतीयते । किष्किन्धगन्धिकशकयवनाश्चार्यावर्ते न पात्र्याः, ततो बहिः तेषां पात्र्यत्वेन व्यवहार इति प्रतीयते, पातञ्जलमहाभाष्येऽपि तेषां पात्र्यशूद्रत्वेनोदाहृतत्वात् । शूद्रत्वेनैवैषां संग्रहे सिद्धे पात्र्यविशेषणं व्यर्थमिति शङ्कते–**पात्र्येति किमिति**, अपात्र्यव्यावर्तनार्थमेव पात्र्यपद-
60 मुपात्तमिति तद्व्यावर्त्यमाह– **जनङ्गमबुक्कसाः** इति– न ह्येते-भ्यस्त्रैवर्णिकाः स्वं पात्रं प्रयच्छन्ति, तेषां भुक्तपात्रस्य संस्कारेणाप्यशुद्ध्या नैते पात्रमर्हन्तीति पात्र्यग्रहणादिह न भवति, पात्र्यस्यैवास्तु शूद्रग्रहणं व्यर्थमिति शङ्कते– शूद्रग्रहणं किमिति, तदभावे त्रैवर्णिकद्वन्द्वेऽप्येकत्वं स्यादिति तन्मा
65 भूदित्याह– **ब्राह्मणक्षत्रियविशः** इति– अत्र "मास-वर्ण-भ्रात्रनुपूर्वम्" [३. १. १६१. ] इति वर्णक्रमेण पूर्वप्रयोगः, एवमितरेतरयोग एव न समाहार इति नैकार्थत्व-मिष्टम् ॥ ३. १. १४३. ॥

## गवाश्वादिः । ३ । १ । १४४ ॥

**त० प्र०**—गवाश्वादिर्द्वन्द्व एकः–एकार्थो भवति ।
70 गौश्चाश्वश्च–गवाश्वम्, गवा-ऽविकम्, गवैडकम्, अजा-ऽवि-कम्, अजैडकम्, कुब्ज-वामनम् कुब्ज-कैरातम्, कुब्जकै-रातकम्, पुत्र-पौत्रम् । नित्यवैराभावपक्षे–श्व-चण्डालम्, स्त्री-कुमारम्, दासी-माणवकम्, शाटी-पच्छिकम्, मांसउष्ट्र-
75 खरम्, उष्ट्र-शशम्, मूत्र-शकृत्, मूत्र-पुरीषम्, यकृन्मेदः, शोणितम्, दर्भ-शरम्, दर्भ-पूतीकम्, अर्जुन-पुरुषम्,

तृणोलपम्; कुडी-कुडम्, दासी-दासम्, भागवती-भागवतम्, त्रिष्वेतेषु "पुरुषः स्त्रियाः" [ ३. १. १२६. ] इत्येकशेषो न भवति निपातनात्। गवाश्वादिषु यथोच्चारितरूपग्रहणादन्यत्र नायं विधिः-गो-ऽश्वौ, गो-ऽश्वम्; गो-अश्वौ, गो-अश्वम्; गो-ऽविकौ, गोऽविकम्; गवेलकौ, गवेलकम्; पशुविभाषैव भवति ॥ १४४ ॥

**श० म० न्यासानुसन्धानम्-गवा०।** विशिष्य जात्यादिभेदेन द्वन्द्वैकत्वमनुशिष्य साम्प्रतं संक्षेपेण गणेन वक्ति, तेन ये यथात्र पठितास्ते तथैव कृतैकत्वाः साधव इति फलति। **गवाश्वादिर्द्वन्द्वः** इति- 'गवाश्व' इत्येवमादिरूपो द्वन्द्व इत्यर्थः। **गौश्चाश्वश्चे**ति विग्रहः, **गवाश्वमि**त्येकार्थो द्वन्द्वः, "स्वरे वानक्षे" [ १. २. २९. ] इत्यवादेशः, एवमुत्तरत्रापि ज्ञेयम्। **गवाविकमि**ति- अविरेव अविकः, गौश्चाविकश्चेति विग्रहः। **गवैडकमि**ति- गौश्च एडकश्चेति विग्रहः। **अजाविकमि**ति- अजा चाविकश्चेति विग्रहः, एषु चतुर्षु "पशुव्यञ्जनानाम्" [ ३. १. ११३. ] इति विकल्पेन प्राप्तं पशुद्वन्द्वलक्षणमेकत्वमनेन नित्यं विधीयते। **कुब्जवामनमि**ति- कुब्जाश्च वामनाश्चेति विग्रहः। **कुब्जकैरातमि**ति- **कुब्जकिरातमि**तीह पाठः, केषाञ्चित्, किरन्ति शरानिति किराताः, औणादिक आतक्प्रत्ययः, तत्र कुब्जाश्च किराताश्चेति विग्रहः। कुब्जाश्च कैरातकाश्चेति विग्रहे **कुब्जकैरातकमि**ति "बहुविषयेभ्यः" [ ६. ३. ४५. ] इत्यकमि-कैरातकेति। किराता जनपदस्तत्र भवाः **पुत्रपौत्रमि**ति-पुत्रश्च पौत्रश्चेति विग्रहः, पुत्रस्यापत्यमिति "पुनर्भू-पुत्र०" [ ६. १. ३९. ] इत्यमि-पौत्रः एषु कुब्जवामनादिषु चतुर्षु स्वाभाविकावेव समाहारेतरयोगौ प्राप्ताविति समाहारस्यैव विधानार्थं गणे पाठः। **श्वचण्डालमि**ति- श्वा च चण्डालश्चेति विग्रहः, अत्र "नित्यवैरस्य" [ ३. १. १४३. ] इति पूर्वसूत्रेणैव सिद्धिरिति गणे पाठस्य वैयर्थ्याशङ्कानिराकरणार्थमुक्तम्- **नित्यवैराभावपक्षे** इति- नित्यवैराभावश्चेत्थम्- येऽत्र नित्यवैरं मन्यन्ते तन्मतेऽत्र न वैरविवक्षा, किन्तु सहोक्तिमात्रं- श्वचण्डालं सहास्त इति, तदर्थं श्वचण्डालपाठः, अत एव पक्षपदोपादानम्; स्वमतेन स्ववैराभावश्च पूर्वसूत्रे व्याख्यात एव, भवति च तत एव चण्डालगृहेऽपि शुनामुपलब्धिः, तथा च स्वस्वामिकेतरारक्षितशुनामेव ते भक्षयितार इति नित्यवैरमित्यर्थः। **स्त्रीकुमारमिति** स्त्रियश्च कुमाराश्चेति विग्रहः अन्ये तु स्त्रियश्च कुमार्यश्च स्त्रीकुमारमित्याहुः, तेषामुत्तरपदस्यात एव निपातनादीकारनिवृत्तिः। दास्यश्च माणवकाश्चेति विग्रहे- **दासीमाणवकमि**ति, माणवकशब्दनिरुक्तिश्चेत्थम्-

"अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः॥" इति॥

माणव एव माणवकः स्वार्थे कः, अन्ये तु दासीमाणवमित्येव पठन्ति, 'स्त्रीकुमार-दासीमाणव' इत्येतयोः स्वाभाविकविकल्पे प्राप्ते नित्यार्थं गणे पाठः। **शाटीपच्छिकमि**ति-शाटी च पच्छिका चेति विग्रहः, पच्छिका-स्त्रीणामूर्ध्ववस्त्रम्, अत्र जातित्वे "अप्राणिपश्वादेः" [ ३. १. १३६. ] इति सिध्यति, व्यक्तिपरचोदनायामपि यथा स्यादित्यस्यात्र पाठः; द्विवद्वं सुवद्वं भवतीत्येके; प्राण्यर्थमित्यपरे, 'पद्'धातोरौणादिके छे आपि इकारे-पच्छिका। **उष्ट्रखरमि**ति-उष्ट्रश्च खरश्चेति विग्रहः, पशुविकल्पोऽत्र बाध्यते। **उष्ट्रशशमि**ति-उष्ट्रश्च शशश्चेति विग्रहः, अत्र स्वाभाविको विकल्पो बाध्यते, पशुविकल्पस्तु न प्राप्नोति शशस्याग्राम्यत्वात्। **मूत्रशकृदि**ति-मूत्रं च शकृच्चेति विग्रहः; धर्मार्थादित्वात् शकृन्मूत्रमपि; **मूत्रपुरीषमि**ति-मूत्रं च पुरीषं चेति विग्रहः; **यकृन्मेदः** इति-यकृच्च मेदश्चेति विग्रहः; मांसं च शोणितं चेति विग्रहे **मांसशोणितमि**ति, मूत्रशकृदादिषु चतुर्षु जातिपरनोदनायाम् "अप्राणिपश्वादेः" [ ३. १. १३६. ] इति सिध्यति, व्यक्तिपरनोदनायां विधानार्थं पाठः। **दर्भशरमि**ति-दर्भाश्च शराश्चेति विग्रहः; **दर्भपूतीकमि**ति-दर्भाश्च पूतीकानि चेति विग्रहः, पूतीकशब्द औणादिकस्तृणजातौ वर्तते; **अर्जुनपुरुषमि**ति-अर्जुनाश्च पुरुषाश्चेति विग्रहः, पुरुषशब्दोऽत्र तृणविशेषे वर्तते, **तृणोलमि**ति तृणानि च उपलपानि चेति विग्रहः, उलपं पर्वततृणं पङ्कजं जलं च; दर्भादयस्तृणजातयः, तत्र तृणविकल्पोऽनेन बाध्यते, तृणोलपमित्यत्र तृणशब्दस्य सामान्यशब्दत्वेऽपि गोबलीवर्दवद् द्वन्द्वः। अत्र केचित्-"पूतीक इति वृक्षः, अजातिपरत्वार्थं दर्भपूतीकग्रहणम्, उलपमिति जले [ इति ] तृणोलपग्रहणम्, अर्जुनपुरुषस्याप्यतृणत्वे 'अर्जुन' इति पुरुषादिवृत्तिः, पुरुष इति गुणवचन इति "अप्राणिपश्वादेः" इति द्रव्यजातेरुच्यमानो विधिर्न प्राप्नोति" इति। **कुडीकुडमि**ति-कुडी च कुडश्चेति विग्रहः, "कुडत् बाल्ये च" चात् हसने, कुडतीति के कुडो बालः, ततः स्त्रियां "वयस्यनन्त्ये" [ २. ४. २१. ] इति ङ्यां कुडी बाला, कुटीकुटमिति केचित्; **दासीदासमिति**-दासी च दासाश्चेति विग्रहः; **भागवतीभागवतमिति**-भागवती च भागवतश्चेति विग्रहः, एषु त्रिषु एकशेषो बाध्यत इत्याह-**त्रिष्वेतेषु "पुरुषः स्त्रियाः" इत्येकशेषो न भवति निपातनादि**ति। 'गवाश्वम्, गवाविकम्, गवेडकम्' इत्यत्रावयवप्रधानोऽयं द्वन्द्वः, अवादेशो न विवक्षितः, गोशब्दस्याश्वाविकैडकशब्दे द्वन्द्वेऽयं विधिरवादेशा-

भावेऽपीति कश्चिन्मन्येतेत्याह–**गवाश्वादिषु यथोच्चारितरूपग्रहणादन्यत्र नायं विधिरि**ति–गणपाठे येन प्रकारेण स्वरूपमुच्चारितं तथैव स्वरूपस्य ग्रहणात् कृतावादेशमेवात्र रूपमुच्चारितमाश्रीयते, अतस्तत्रैवायं नित्यो विधिर्भवति, तदभावे गोऽश्वाविल्यादौ न भवति, तत्र पक्षुविकल्प एव भवति, **'गोऽश्वौ'** इत्यत्र "एदोतः पदान्तेऽस्य लुक्" [ १. २. २७. ] इत्यकारलोपः, **'गोऽश्वौ'** इत्यत्र "वात्यसन्धिः" [ १. २. ३१. ] इत्यसन्धिः, 'गवाश्वम्' इत्यत्र तु "स्वरे वानक्षे" [ १.२. २९. ] इत्यवादेशः, इति सन्धिप्रयुक्तं रूपत्रयं भवति, एवम्–गवाविकमित्यत्रापि, गणे 'गवैडक' इति पाठात् डस्य लत्वे कृतेऽप्यवादेशे नेदं सूत्रं प्रवर्तते उच्चारितरूपतो भिन्नत्वात् ॥ ३. १. १४४. ॥

## न दधिपय आदिः । ३ । १ । १४५ ॥

त० प्र०—दधिपयःप्रभृतिद्वन्द्व एकः–एकार्थो न भवति । दधि च पयश्च–दधि-पयसी, सर्पि-र्मधुनी, मधु-सर्पिषी, हरि-वासवौ, ब्रह्म-प्रजापती, शिव-वैश्रमणौ, स्कन्द-विशाखौ, परिजा-कौशिकौ, प्रवर्ग्या-ऽपसदौ, आद्यवसाने, सूर्या-चन्द्रमसौ, मित्रा-वरुणौ, अग्नी-षोमौ, सोमा-रुद्रौ, नारद-पर्वतौ, खण्डामर्कौ, नर-नारायणौ, राम-लक्ष्मणौ, भीमा-ऽर्जुनौ, कम्बला-ऽश्वतरौ, माता-पितरौ, पिता-पुत्रौ, श्रद्धा-मेधे, शुक्ल-कृष्णे, इध्मा-बर्हिषी पूर्वस्य दीर्घत्वं निपातनात्; ऋक्सामे वाङ्-मनसे, अत्र "ऋक्सामर्ग्यजुष०" [ ७. ३. ९७ ] इत्यादिनाऽकारान्तत्वम्, याज्या-ऽनुवाक्ये, दीक्षा-तपसी, श्रद्धा-तपसी, श्रुत-तपसी, मेधा-तपसी, अध्ययन-तपसी, उलूखल-मुशले, अत्राद्येषु त्रिषु व्यञ्जनविकल्पे, 'शुक्लकृष्णे' इत्यत्र "विरोधिनामद्रव्याणां नवा०" [ ३. १. १३०. ] इति विकल्पे, 'इध्माबर्हिषी, उलूखलमुशले' इत्यत्र 'अप्राणिपश्वादेः" [ ३. १. १३६ ] इति नित्यमेकत्वे, शेषेषु च "चार्थे द्वन्द्वः सहोक्तौ" [ ३. १. ११७. ] इत्युभयस्मिन् प्राप्ते प्रतिषेधोऽयम् । चण्डाल-मृतपादयश्चात्र द्रष्टव्याः ॥ १४५ ॥

**श० म० न्यासानुसन्धानम्–न दधि०** । एकार्थविधायकप्रकरणं समाप्य तत्प्रतिषेधप्रकरणं गणेनारभते, तत्र क्वचिद् विशेषविधिप्राप्तमेकार्थत्वं क्वचिच्च स्वाभाविकमेव समाहारविवक्षानिबन्धनं प्राप्तमिति तन्निषेधोऽनेन सूत्रेण विधीयते । **दधि च पयश्चे**ति विग्रहः, **दधिपयसी** इति–अत्र व्यञ्जनलक्षणे एकार्थत्वविकल्पे प्राप्ते प्रतिषेधः । सर्पिश्च मधु चेति विग्रहे–**सर्पिर्मधुनी** इति–अत्रापि व्यञ्जनविकल्प एव प्राप्तो निषिध्यते, धर्मार्थादित्वात् पर्यायेण पूर्वनिपाते मधुशब्दस्यापि पूर्वनिपाते–**मधुसर्पिषी** । नन्विह 'सर्पिर्मधुनी, मधुसर्पिषी' इति न पठनीयं, धर्मार्थादिष्वेवानेकवद्भावेन पठ्यतां, तत एवानेकवद्भावो विज्ञास्यत इति चेत् ? न–धर्मार्थादेर्वैकल्पिकत्वात् पाक्षिको व्यञ्जनलक्षणैकवद्भावो भवेत्, तत्रैकवद्भावाभावे स पाठः स्यात्, यद्येवमन्येनैव पूर्वनिपातविकल्पस्यापि सिद्धत्वात् स पाठो निरर्थकतां व्रजेदित्यपि न वाच्यम्, बहुवचनार्थः स स्यात्–सर्पिर्मधुनी, मधुसर्पींषीति । न च तत्रापि द्विवचनान्तावेव पठ्यतामिति वाच्यम्, एवं सति पूर्वनिपातः शब्दाश्रय इति तद् द्विवचनं शब्दाश्रयं स्यात्, अयं त्वेकवद्भावोऽर्थाश्रयं भवति, अतोऽत्र द्विवचन एकवद्भावप्रतिषेधः, पूर्वनिपातस्त्वविशेषेणेति प्रतीमः । हरिश्च वासवश्चेति विग्रहे–**हरिवासवा**विति । **ब्रह्मप्रजापती** इति–ब्रह्मा च प्रजापतिश्चेति विग्रहः, "प्रजापतिर्ब्रह्म चतुर्मुखो भवा०" इत्यादिकोशवचनादनयोरेकार्थत्वेन विरूपाभावात् कथं द्वन्द्वः ? एकशेषेणैव भवितव्यमिति चेत् ? न–चतुर्दशसंख्येषु ब्रह्मभिन्नेषु दक्षादिष्वपि प्रजापतिशब्दस्य प्रसिद्धतया तत्परत्वेनैकार्थत्वाभावात् शिवश्च वैश्रवणश्चेति विग्रहे–**शिववैश्रवणौ** । स्कन्दश्च विशाखश्चेति विग्रहे–**स्कन्द-विशाखौ** । हरिवासवादयश्चत्वारो देवताद्वन्द्वाः, तत्र हरिवासवयोः वेदे श्रुतत्वेऽपि सहश्रुतत्वाभावात्, ब्रह्मप्रजापत्योः शिववैश्रमणयोः स्कन्दविशाखयोश्च सहश्रुतत्वेऽपि वेदश्रुतत्वाभावात् "वेदसहश्रुतावायुदेवतानाम्" [ ३. २. ४१. ] इत्याकारो न भवति । **परिजाकौशिका**विति–परिजा च कौशिकश्चेति विग्रहः, परिजा–तन्नामा नदी, कौशिकः–पर्वतविशेषः, "कुशोऽस्यास्ति कुशिकस्यापत्यं विदाद्यञ्" इति लघुन्यासः, उणादौ कुशिक इक्प्रत्ययान्तो निपात्यते, तदर्थश्च मुनिविशेषः, कुशाक इति केषाञ्चित् पाठः, अज्ञातः कुत्सितोऽल्पो वा कुशः कुशक इति च साधनम्, "परिजाकौशकं यथा" इति केषाञ्चित् प्रयोगः; अत्र "नदीदेश०" इति स्वैरिति व्याख्यया नित्यसमाहारो निवार्यते, न्यायेन वैकल्पिकस्तु प्राप्त एव, स चानेन निषिध्यते" इति लघुन्यासः । पाणिनीये गणे 'परिव्राजककौशिकौ, परिव्राट्कौशिकौ' इत्येवंरूपेण पाठो दृश्यते, तत्र परिव्राट्शब्दस्यान्त्याश्रमिवाचकत्वेन कौशिकेति व्यक्तिवाचिशब्देन सह प्रयोगायोगात् 'परिजाकौशिकौ' इत्येव साधुरिति प्रतिभाति, परिजाया नद्या अप्रसिद्धत्वेनार्थानवगमात् प्रायः परिव्राजकौशिकाविति कल्पितं केनचित्, तत्र परिव्राजशब्दस्याकारान्तत्वमपि गणे निपात्यं स्यादिति शङ्कया च 'परिव्राट्कौशिकौ' इति कल्पितं भविष्यतीति प्रतीयते, तथ्यं लक्ष्यैकचक्षुष्क एव निर्धारयितुमलम् । **प्रवर्ग्यापसदा**विति–प्रवर्गो नामाग्निविशेषो यज्ञियः, तमर्हति तत्र कर्म कर्तुं योग्यः प्रवर्ग्यः, श्रेष्ठसामान्यवाचित्वेनाप्ययं प्रयुज्यते, अपसदो नीचः,

प्रवर्ग्यश्चापसदश्चेति विग्रहः, 'प्रवर्ग्योपसदौ' इति पाठो बहुषु दृश्यते, तत्रोपसीदतीति सद्नेः क्विपि-उपसद्-समीपोपवेशनकर्ता, प्रवर्ग्यश्चोपसच्चेति तत्र विग्रहः, सामान्येन विकल्पे प्राप्ते समाहारोऽनेन निषिध्यते । आदिश्चावसानं चेति विग्रहे- 5 **आद्यवसाने** इति- सामान्येन विकल्पे प्राप्ते समाहारो निषिध्यते । सूर्यश्च चन्द्रमाश्च मित्रश्च वरुणश्च सोमश्च रुद्रश्चेति विग्रहे- **सूर्याचन्द्रमसौ, मित्रावरुणौ, सोमावरुणौ** इति च देवताद्वन्द्वाः, तत्र "वेदसहश्रुतावायुदेवतानाम्" [ ३. २. ४१. ] इति पूर्वपदस्याकारः । अग्निश्च सोमश्चेति 10 विग्रहे- **अग्नीषोमौ** इति देवताद्वन्द्वः, "ईः षोमवरुणेऽग्नेः" [ ३. २. ४२. ] इति पूर्वपदस्य ईकारः सस्य षत्वं च । नारदश्च पर्वतश्चेति विग्रहे- **नारदपर्वतौ** इति, एतौ ऋषी । खण्डश्च मर्कश्चेति विग्रहे- **खण्डामर्कौ** इति, खण्डो मर्कश्चासुरावपि सुरविरोधित्वाभावेन न्यस्तशस्त्रावेकहविर्भागित्वेन 15 देवेषु परिगणिताविति देवताद्वन्द्वनिमित्तकं पूर्वदस्यात्वमिहापि भवति । नरश्च नारायणश्चेति विग्रहे-**नरनारायणौ** इति, एतौ देवर्षी, नारायणो यद्यपि विष्णुस्तथापि तन्नाम्ना न स हविर्भागिति न तस्य देवतावाचकत्वम्, एकहविर्भागित्वेन प्रसिद्धसाहचर्ययोरेवेह प्रकरणे देवतात्वेन ग्रहणात्, नरः 20 स्वनाम्नैव प्रसिद्धस्तपस्वी नारायणोऽपि तत्सहरितस्तपस्व्येव, एतौ बदरिकाश्रमे तपस्यत इति पुराणप्रसिद्धिः, स च नरस्यापत्यमिति विगृह्य नडादित्वादायनणि व्युत्पाद्यते । रामश्च लक्ष्मणश्चेति विग्रहे- **रामलक्ष्मणौ** इति, अनयोर्देवत्वेऽपीह न तत्त्वेन गृह्येते, मनुजत्वेन हविर्भागित्वायोगात् । भीमश्चार्जु- 25 नश्चेति- **भीमार्जुनौ** इति, अर्जुनस्य स्वराद्यदन्तत्वेऽपि भ्रातृद्वन्द्वपतितत्वेनानुपूर्व्यादेव भीमस्य पूर्वनिपातः, तस्य ततो ज्येष्ठत्वादर्जुनस्य चानुजत्वात् । कम्बलश्चाश्वतरश्चेति **कम्बलाश्वतरौ** इति, एतौ नागौ सहचारिणौ । माता च पिता चेति-**मातापितरौ** इति मातुः पित्रपेक्षया पूज्यत्वाधिक्यात् 30 पूर्वनिपातः, यद्यपि परशुरामचरिते पितृनिदेशेन मातृवधः कृतो दृश्यते, तथापि न तेन मातुरपकृष्टत्वसिद्धिः, मात्रा तद्विरोधकाज्ञाप्रदानस्याश्रवणात्, अग्रे च तस्या जीवयिष्यमाणत्वस्य विश्वासाच्च, अत एव स्मर्यते-

"यत् कृतं परशुरामेण पितुर्वचनगौरवात् ।
35 तदन्यैस्तु न कर्तव्यं न देवचरितं चरेत् ॥" इति ।

पिता च पुत्रश्चेति-**पितापुत्रौ** इति, "पुत्रे" [ ३. २. ४०. ] इतीद्दात्वम्, पितुश्च पुत्रापेक्षयार्च्यत्वस्य सत्त्वात् तस्यैव पूर्वनिपातः । श्रद्धा च मेधा चेति-**श्रद्धामेधे** इति, अर्थग्राहिणी श्रद्धा, शब्दग्राहिणी मेधा, श्रद्धामूलत्वादभि- 40 प्रेतार्थसिद्धेरर्च्यत्वं श्रद्धाया इति तदीयः पूर्वनिपातः, यद्यपीमाव-

द्रव्यशब्दौ तथाप्युपचाराद् यदा द्रव्ये वर्तेते तदा व्यक्तिविवक्षायां विकल्पेन प्राप्तः समाहारोऽनेन निवार्यते, गुणवाचकत्वे च जातिविवक्षया नित्यसमाहारे प्राप्ते सोऽनेन निवर्त्यते । शुक्लं च कृष्णं चेति-**शुक्लकृष्णे** इति, अत्रापि शुक्लकृष्णयोस्तद्गुण- [ रूप ]परत्वं बोध्यं, सामान्यविवक्षया वा नपुंसकलिङ्गप्रयोगः । 45 इध्मं च बर्हिश्चेति-**इध्माबर्हिषी** इति, इध्मं-समित्, अग्निसन्दीपनः काष्ठविशेष इति यावत्, बर्हिः-कुशः, अनयोर्द्वन्द्वेऽप्राणिजातिनिबन्धनमेकत्वं निषिध्यते । निपातनादेव पूर्वपदस्य दीर्घ इत्याह-**पूर्वस्य दीर्घत्वं निपातनादि**ति । ऋक् च साम चेति-**ऋक्सामे** इति, वाक् च मनश्चेति-**वाङ्मनसे** इति, 50 अनयोर्द्वन्द्वयोः कथमकारान्तत्वमित्याह-"**ऋक्सा०**" इत्यादि। याज्या चानुवाक्या चेति-**याज्यानुवाक्ये** इति, यजन्त्याभिरिति याज्या नाम ऋचः "याज्या दानर्चि" [५. १. २६.] इति करणे ध्यण्, "त्यजयजप्रवचः" [ ४. १. ११८. ] इति जस्य गत्वाभावः, अनूच्यत आभिरिति बाहुलकात् करणे 55 ध्यणि-अनुवाक्या न नाम ऋचः, अत्र "क्तेऽनिटः०" [ ४. १. १११. ] इति चस्य कत्वम्, याज्यानुवाक्यानाम ऋचो याज्यानुवाक्याकाण्डे प्रसिद्धाः, तत्र ऋग्द्वयेऽभिधेयेऽयं प्रयोगः, अत्रापि स्वाभाविकः समाहारो निषिध्यते, याज्याया अल्पस्वरत्वेन पूर्वप्रयोगः । दीक्षा च तपश्चेति-**दीक्षातपसी**, श्रद्धा च 60 तपश्चेति-**श्रद्धातपसी**, धर्मार्थादित्वात् तपः श्रुते इत्यपि, मेधा च तपश्चेति-**मेधातपसी**, अध्ययनं च तपश्चेति-**अध्ययनतपसी**, 'दीक्षातपसी' इत्यादिषु तपसो लघ्वक्षरत्वेऽपि दीक्षादीनां बहूपकारकत्वान्मूलभूतत्वाच्चार्च्यत्वात् परत्वात् पूर्वनिपातः । उलूखलं च मुसलं चेति-**उलूखलमुसले** 65 इति । अथ क्व विशिष्य समाहारः प्राप्तः क्व च स्वाभाविक इति स्वयमेव व्याकरोति-**अत्र** प्रकृतगणमध्ये, **आद्येषु त्रिषु** 'दधिपयसी, सर्पिर्मधुनी, मधुसर्पिषी' इत्येतेषु, **व्यञ्जनविकल्पे** एषां व्यञ्जनविशेषत्वात् "पशुव्यञ्जनानाम्" [ ३. १. १३२. ] इति व्यञ्जनप्रयुक्ते विकल्पे प्राप्ते, **शुक्लकृष्णे इत्यत्र** 70 **"विरोधिनामद्रव्याणां नवा०" इति विकल्पे** शुक्लकृष्णयोर्गुणपरत्वेनैकत्रावस्थानासम्भवेन सहानवस्थानलक्षणो विरोधोऽस्तीति "विरोधिनामद्रव्याणां०" इति विकल्पे प्राप्ते, **'इध्माबर्हिषी, उलूखलमुसले' इत्यत्र "अप्राणिपश्वादेः" इति नित्यमेकत्वे** एषां प्राणिपशुभिन्नद्रव्यजाति- 75 परत्वेन नित्यं समाहारे प्राप्ते, **शेषेषु च** हरिवासवादिषु अध्ययनतपसी पर्यन्तेषु पुनः, "**चार्थे द्वन्द्वः सहोक्तौ**" **इत्युभयस्मिन् प्राप्ते** चार्थे समाहारे समासे एकवद्भावः, चार्थे इतरेतरयोगे समासेऽनेकवद्भाव इत्युभयस्मिन् प्राप्ते, **प्रति-**

**षेधोऽयं** प्रकृतसूत्रेण समाहारप्रतिषेधः । आकृतिगणत्वमाह–**चण्डालमृतपादयश्चात्र द्रष्टव्या** इति ॥ ३. १. १४५. ॥

## संख्याने । ३ । १ । १४६ ॥

**त० प्र०**—इयत्तापरिच्छेदः–संख्यानम्, वर्तिपदार्थानां संख्याने गम्यमाने द्वन्द्व एकार्थो न भवति । दश गो-महिषाः। एतावन्ति दधि-घृतानि, बहवः प्लक्ष-न्यग्रोधाः, दश हस्त्यश्वाः, शतं यूका-लिक्षाः, तावन्ति बदरा-ऽऽमलकानि, बहवः पाणि-पादाः, कति मार्दङ्गिक-पाणविकाः, उदगुर्दशेमे कठ-कालापाः, द्वावर्का-ऽश्वमेधौ, द्वादश पदक-क्रमकाः, द्वौ गङ्गा-शोणौ, पञ्च तक्षा-ऽयस्काराः, इयन्तो गवा-ऽश्वाः ॥ १४६ ॥

**श० म० न्यासानुसन्धानम्–संख्याने** । संख्यायत इति संख्यानमिति सामान्यव्युत्पत्तौ संख्यायोगमात्रप्रतीत्या समाहारेऽपि संख्यायोगः प्रतीयत एवेति तन्निषेधोऽनेनानुचित इत्याशङ्कया संख्यानशब्दं व्याख्याति–**इयत्तापरिच्छेदः संख्यानमिति**–इदं शब्दतो निर्दिश्यमानमङ्गुल्यादिसंकेतेन वा बोध्यमानं परिमाणं येषां ते इयन्तः, तेषां भाव इयत्ता तस्याः परिच्छेदोऽवधारणमिह संख्यानपदबोध्यमित्यर्थः, सम्यग् निश्चितरूपेण दश द्वादश' इत्यादिना न्यूनातिरिक्तप्रसक्तिवारकशब्दादिना ख्यानं संख्यानमिति व्युत्पत्तेरिति भावः । केषामियत्ताऽवधार्यत इत्याकाङ्क्षायामाह–**वर्तिपदार्थानामिति**–वर्तनं वर्तः समासः, भावे घञ्, वर्तो येषामस्ति तानि वर्तीनि समासावयवभूतानि समासारम्भकानि समस्यमानानीति यावत्, तादृशानि यानि पदानि तेषां येऽर्था अभिधेयास्तेषामेव संख्यानमिह विवक्षितमिति भावः । **द्वन्द्व एकार्थो न भवतीति**– अनेन समाहारस्य निषिध्यमानत्वादितरेतरयोगे प्रत्येकं संख्यासम्बन्धः, यथा 'दश गोमहिषाः' इत्यत्र वर्तिपदार्था गावो महिषाश्च दशसंख्ययाऽवधार्यन्ते, समाहारे सति तदसम्भव इति निषिध्यते समाहारः। नन्वेकार्थो न भवतीत्युक्त्या विशिष्य विहित एव समाहारो निषिध्येत "चार्थे द्वन्द्वः" इति सामान्यतया विहितस्य कथं निषेधः, तथा च स स्यादेवेति चेत् ? न– *सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न *इति न्यायेन स्वाभाविकसमाहारद्वन्द्वस्य प्राप्त्यभावात् । अयमाशयः– दशेत्यादिविशेषणसम्बन्धविवक्षायां गोमहिषादीनां सविशेषणत्वेन सामान्यसूत्रेण "चार्थे द्वन्द्वः सहोक्तौ" इत्यनेन समाहारस्य प्राप्त्यभावः । न चैवमितरेतरयोगोऽपि कथं स्यात् सविशेषणत्वेन तस्याप्यप्रवृत्तेरिति वाच्यम्, इतरेतरयोगे वर्तिपदार्थस्य प्राधान्येन सविशेषत्वेऽपि सामार्थ्यानपायात् तत्र प्रकृतन्यायाप्रवृत्तेः । अयमाशयः–'सविशेषणानां वृत्तिर्न' इति नियमो हि *सापेक्षमसमर्थवत्* इति न्यायाश्रित एव, विशेषणापेक्षस्य समस्यमानपदस्य सामर्थ्याभावात्, समासस्य च पदविधित्वेन समर्थाश्रितत्वात्, प्रधानस्य च सापेक्षस्यापि नासामर्थ्यमिति राजपुरुषो दर्शनीयः इत्यादि भवति, इतरेतरयोगे चोभयपदार्थस्य प्राधान्यमक्षतमेवेति तत्र सापेक्षत्वेऽपि समासे क्षत्यभावात् । ननु तर्हि असामर्थ्यादेव विशिष्य विहितः समाहारोऽपि न भविष्यतीति व्यर्थ एव निषेध इति चेत् ? अत्राहुः–एकार्थत्वविधायकं प्रकरणं नियमार्थमित्युक्तम्, नियमानां क्वचिन्निषेधमुखेनैव प्रवृत्तिरिति तेषां यथाप्राप्तेतरेतरयोगनिषेधपरत्वमेव, एतेन च सूत्रेणेतरेतरयोगनिषेधस्य निषेध एव विधीयत इति सामान्यसूत्रेण भवतीतरेतरयोगे समास इति । केचित् तु "एकत्वसंख्यायाः स्वतः प्रतीयमानत्वेन तदर्थकपरिच्छेदवाचकशब्दप्रयोगायोगः, द्वित्वादिसंख्यानां प्रत्येकसम्बन्धविवक्षया समाहारे प्रयोगासम्भव एव, तत्र समुदायत्वेनैवोपस्थानात्, अत एवावयवसम्बन्धविवक्षयापि न प्रयोग इति पूर्वं सति संख्याप्रयोगे समाहाराप्राप्तिः, सति समाहारे संख्यासम्बन्धानुपपत्तिरित्युभयथापि निषेधो व्यर्थः" इति शङ्कन्ते, तेऽप्युक्तरीत्यैव समाहिताः, वाक्यसंस्कारपक्षे सर्वविवक्षितविशेषणयोगः पूर्वमेव निश्चित इति दशादिसंख्यासम्बन्धे सति स्वाभाविकसमाहाराप्राप्तिरिति विशिष्यविहितेतरेतरयोगनिषेधतात्पर्येकैकत्वप्राप्तौ सत्यां सोऽनेन वार्यत इति पूर्वमुक्तत्वात् ।

उदाहरति–**दश गोमहिषाः** इति–अत्र "पशुव्यञ्जनानाम्" [ ३. १. १३२. ] इति प्राप्तं पशुलक्षणमेकत्वं निषिध्यते, 'दश' इत्यनेन तेषामियत्ताया निश्चयस्य स्पष्टत्वात् । **एतावन्ति दधिघृतानीति**–'एतावन्ति' इत्यनेन सेटकादिपरिमितता कथ्यते, एतावत्पदस्य वक्तृप्रयुज्यमानमितपरत्वात्, अत्रापि पूर्वोक्तसूत्रेणैव प्राप्तं व्यञ्जनलक्षणमेकत्वमनेन वार्यते । **बहवः प्लक्षन्यग्रोधाः** इति–अत्र "तरु-तृण०" [ ३. १. १३३. ] इति प्राप्तं तरुलक्षणमेकत्वमनेन वार्यते, बहुपदं च त्रित्वादिना नियतसंख्यापरं, न त्वनियतबहुत्वपरं, तथा सति परिच्छेदस्य [ अवधारणस्य ] प्रतीतिर्न स्यात् । **दश हस्त्यश्वाः** इति–अत्र "सेनाङ्गक्षुद्र०" [ ३. १. १३४. ] इति सेनाङ्गलक्षणं प्राप्तमेकत्वमनेन वार्यते; **शतं यूका लिक्षाः** इति–अत्र क्षुद्रजन्तुलक्षणं प्राप्तमेकत्वं निवार्यते। **तावन्ति बदरामलकानीति**–'तावन्ति' इत्यनेन प्रक्रान्तशतसंख्यापरामर्शः, "फलस्य जातौ" [ ३. १. १३५. ] इति प्राप्तं फलनिबन्धनमेकत्वमनेन वार्यते । **बहवः पाणिपादाः** इति–अत्र "प्राणितूर्याङ्गाणाम्" [ ३. १. १३७. ] इति प्राण्यङ्गनिबन्धनमेकत्वं प्राप्तमनेन वार्यते, बहुशब्दोऽत्रापि त्रित्वादिपरः पूर्ववत्; **कति मार्दङ्गिकपाणविकाः** इति–इहापि तेनैव सूत्रेण तूर्याङ्गत्वादेकार्थत्वं प्राप्तमनेन वार्यते, यद्यपि कतीत्यनेन नैयत्ता

परिच्छिद्यतेऽपि तु सा पृच्छ्यते, तथापि परिच्छेदविषयताऽस्तीति निषेधो भवति। **उदगुर्देशेमे कठकालापाः** इति–अत्र "चरणस्य०" [ ३. १. १३८. ] इति प्राप्तम्, **द्वावश्वमेधौ** इति–"अक्लीबे०" [ ३. १. १३९. ] इति प्राप्तम्, 5 **द्वादश पदकक्रमकाः** इति–स "निकटपाठस्य" [ ३. १. १४०. ] इति प्राप्तम्, **द्वौ गङ्गाशोणौ** इति–अत्र "नदीदेश०" [ ३. १. १४२. ] इति प्राप्तम्, **पञ्च तक्षायस्काराः** इति–"पात्र्यशूद्रस्य" [ ३. १. १४३. ] इतीह प्राप्तं चैकत्वमनेन वार्यते। **इयन्तो गवाश्वाः** इति–इयत्पदेनात्र 10 सन्निहिता एव संख्याऽभिधीयते, अत्र "गवाश्वादिः" [ ३. १. १४४. ] इति प्राप्तमेकत्वमनेन वार्यते, तथा च सर्वत्र विशिष्य प्राप्तमेकत्वमनेन निषिध्यते इति स्पष्टम् ॥ ३. १. १४६ ॥

## वाऽन्तिके। ३। १। १४७॥

15 **त० प्र०**–वर्तिपदार्थानां संख्यानस्यान्तिके–समीपे गम्यमाने द्वन्द्व एकार्थो वा भवति। उपगतां दश यस्य येषां वा–उपदशं गो-महिषम्, उपदशा गो-महिषाः, उपदशाय गो-महिषाय, उपदशेभ्यो गो-महिषेभ्यः, द्वन्द्वार्थस्यैकत्वात् तदनुप्रयोगस्यापि बहुव्रीहेरेकवचनान्तत्वम्, यदा तु दशानां 20 समीपमुपदशमित्यव्ययीभावस्तदोपदशं गो-महिषायेति भवति ॥ १४७ ॥

**श० म० न्यासानुसन्धानम्–वान्तिके।** अन्तिकं समीपं, तद् यस्य तत्सामीप्यमपेक्ष्यते, तच्च प्रस्तुतत्वात् संख्यानमेव विज्ञायते, अर्थवशाद् विभक्तिविपरिणामः, अथवा 25 अन्तिके संख्याने इति सामानाधिकरण्येनाभिसम्बन्धेऽपि द्वन्द्वार्थस्य दशेत्यादि संख्यानमन्तिकं भवति, ततः संख्यानस्यापि द्वन्द्वार्थोऽन्तिके भवति, अतोऽयमेवार्थो जायत इत्याह–**संख्यानस्यान्तिके** इति, अन्तिकशब्दः समीपार्थकः साक्षेपः प्रस्तुतं संख्यानं समीपे आकर्षति, तदर्थश्च वक्तव्यः, अर्थो हि 30 कार्ये व्याप्रियते इत्याह–**समीपे गम्यमाने** इति–अयं च द्वन्द्वार्थस्य विषयो द्वन्द्वस्य पारम्पर्येण विषयतया विज्ञायते, केषां संख्यानस्यान्तिकमित्युक्तम्–**वर्तिपदार्थानाम्। द्वन्द्व एकार्थो वा भवती**ति–पूर्वेण नित्ये प्रतिषेधे प्राप्तेऽयं विकल्प आरभ्यत इत्यर्थः, अयं भावः–समस्यमानपदबोध्यानां परिच्छेदो 35 यत्र नेयत्तयाऽवधार्यतेऽपि तु सामीप्येन गम्यते तत्रैकार्थनियमो वा भवतीति स्वाभाविकः समाहार इतरेतरयोगश्चोभयं भवति, यत्र च नियमप्राप्तिस्तत्रापि तदभावपक्षे उभयमिति भवत्येकार्थविषयेऽपि द्वयमिति। अत्र सामीप्येन परिच्छेदके पदे द्वयी विधा प्राप्ता–बहुव्रीहिरव्ययीभावश्च, अव्ययस्य संख्यया सहो-

भयविधसमासदर्शनात्, तत्र पूर्वं बहुव्रीहिमुपपदे दर्शयति– 40 **उपगता दश यस्य येषां वा–उपदशं गोमहिषम्, उपदशा गोमहिषाः** इति–यस्येति समाहारापेक्षया, येषामिति चेतरेतरयोगापेक्षया सहोभयार्थं विग्रहः प्रदर्शितः। उपदशमुपदशा इति च दशार्थस्योपपदप्रयोगार्थं समीपे भवतीति विकल्पः, यद्यपि 'उपदशं गोमहिषम्' इत्येकवद्भावे समाहारस्य 45 द्वन्द्वाभिधेयस्यैकत्वात् साक्षात् संख्यानं नास्ति तथाप्यवयवद्वारेण तदवसेयम्, उपदशमुपदशा इति नवैकादश वा ज्ञेयाः, ते हि दशानां समीपे भवन्ति, अत्र "प्रमाणीसंख्याड्डः" [ ७. ३. १२८. ] इति डित् अत् समासान्तः ततः "डित्यन्त्यस्वरादेः" [ २. १. ११४. ] इत्यनो लोपे 'उपदश' इत्यकारान्ता प्रवृत्तिः, 50 तत्र सौ 'उपदशम्' इति, जसि 'उपदशा' इति। नन्विहोपदशमित्यनुप्रयोगस्य कथमेकत्वम्, यतोऽयं बहुव्रीहिः, एकत्वं च द्वन्द्वस्य विधीयते, अतो दशानां समीप इत्युपदशमित्यव्ययीभाव एवात्र स्वीकार्यः, तत्र द्वन्द्वस्यानेकत्वेऽप्यव्ययीभावः समीपप्रधान इति एकार्थो भवतीति चेत्? न–एवं सति 'उपदशाय' 55 इति प्रयोगानुपपत्तेः, अव्ययीभावसमाससम्बन्धिनः सर्वस्यादेरमादेशविधानेन चतुर्थ्यामप्यमादेशप्रवृत्त्या 'उपदशाम्' इत्येव प्रयोगसम्भवात्, तथा चोक्तोदाहरणानुप्रयोगे बहुव्रीहिरेव, न त्वव्ययीभाव इत्यर्थः, एतदेव सूचयितुमुदाहरति–**उपदशाय गोमहिषाये**ति, **उपदशेभ्यो गोमहिषेभ्य** इत्येतत् तु 60 पाक्षिकम्, तदुपदर्शयता तदभाव उदाहृतः, ननु 'उपदशम्' इत्यस्य बहुव्रीहित्वे कथमेकत्वमित्याशङ्कापनोदायाह–**द्वन्द्वार्थस्यैकत्वात् तदनुप्रयोगस्यापि बहुव्रीहेरेकवचनान्तत्वमि**ति–द्वन्द्व एको भवतीति द्वन्द्वार्थ एको भवतीत्यर्थः, द्वन्द्वार्थस्य चैकत्वे तत्रैव बहुव्रीहिरपि भिन्नप्रवृत्तिनिमित्तः, 65 प्रवर्तेत इति सोऽप्येकार्थो भवतीति ततोऽप्येकवचनं भवति। ननु यदि बहुव्रीहिरनुप्रयोगे तदा 'उपदशं गोमहिषाय' इति कथं प्रयोगः? 'उपदशाय गोमहिषाय' इति प्रयोगेणैव भवितव्यम्, दृश्यते च तादृशः प्रयोग इत्यत आह–**यदा तु 'दशानां समीपमुपदशम्' इत्यव्ययीभावस्तदा 'उपदशं गोमहिषाय' इति भवती**ति–नात्रानुप्रयोगे 70 बहुव्रीहिर्येन चतुर्थ्या सम्भवो न भवेत्, अपि तु अव्ययीभाव एवेति दशानां समीप इति विग्रहे "विभक्तिसमीप०" [ ३. १. ३९. ] इत्यव्ययीभावे "अनः" [ ७. ३. ८८. ] इति समासान्तेऽति "नोऽपदस्य तद्धिते" [ ७. ४. ६१. ] इत्यन्तो लुपि 'उपदश' इत्याकारान्तात्रापि प्रकृतिः, "ततश्चतुर्थ्यां तस्याः" 75 "अमव्ययीभावस्यातोऽपञ्चम्याः" [ ३. २. २. ] इत्यमादेशे 'उपदशम्' इति समीपप्रधानेऽव्ययीभावे समीपिनः समीपत्वाध्यारोपेऽव्ययीभावस्य द्वन्द्वार्थे प्रवृत्तिर्भवति, वैयधिकरण्येन वा

सम्बन्धो विज्ञायते-उपदशं दशानां समीपे नवत्वे एकादशत्वे वा गोमहिषा इति ॥ ३. १. १४७. ॥

## प्रथमोक्तं प्राक् । ३ । १ । १४८ ॥

**त० प्र०**-अत्र समासप्रकरणे प्रथमया-प्रथमान्तेन पदेन 5 यदुक्तं-निर्दिष्टं तत् प्राक्-पूर्वं निपतति । आसन्नदशाः, सप्तगङ्गम्, ऊरीकृत्य, कष्टश्रितः, शङ्कुलाखण्डः, यूपदारु, वृकभयम्, राजपुरुषः, अक्षशौण्डः, नीलोत्पलम्, पञ्चाम्राः । वाक्यवत् समासेऽप्यनियमः स्यादिति वचनम् ॥ १४८ ॥

**श० म० न्यासानुसन्धानम्**-प्रथमो० । समास- 10 प्रकरणं परिसमाप्य तदुपकारकविधीन् कथयितुमारभते- **प्रथमोक्तमिति** । अत्र समासे इति प्रकरणादेव लभ्यमिति तदिह सूत्रे नोपात्तं, तदाह-**अत्र समासप्रकरणे** इति, समासविधायकशास्त्रे इति पर्यवसितोऽर्थः । प्रथमाया विभक्तित्वात् प्रत्ययग्रहणे तदन्तविज्ञानादाह-**प्रथमान्तेन पदेनेति** । सूत्रे 15 क्रियाया अनिर्देशाद् 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति' इति नियमात् 'अस्ति' इति क्रियाया उपस्थितौ सामर्थ्यात् तस्य प्राग्विद्यमानता प्रतीयते, प्राग्विद्यमानत्वं च पूर्वनिपात एवेत्याशयेनाह- **पूर्वं निपततीति** । **आसन्नदशाः** इति-अत्र समासशास्त्रम् "आसन्नादूराधिक०" [३. १. २०.] 20 इत्यादि, तत्र प्रथमान्ततया निर्दिष्टा आसन्नादय इति तेषामेव पूर्वं प्रयोगः समासे भवति । **सप्तगङ्गमिति**-अत्र "संख्या- समाहारे०" [३. १. २८.] इति समासविधायकं शास्त्रं तत्र संख्या प्रथमया निर्दिष्टेति संख्यावाचकस्य सप्तेत्यस्य पूर्वनिपातः । **ऊरीकृत्येति**- अत्र समाविधायकं "गति- 25 कन्यस्तत्पुरुषः" [३. १. ४२.] इति, तत्र गत्यादयः प्रथमानिर्दिष्टा इति गतिसंज्ञकस्य 'ऊरी' इत्यस्य पूर्वनिपातः । **कष्टश्रितः** इति- अत्र समासविधायकं "श्रितादिभिः" [३. १. ६२.] इति, तत्र 'द्वितीया' इत्यनुवृत्तं, तदेव प्रथमानिर्दिष्टमिति विग्रहवाक्ये द्वितीयान्तस्यापि कष्टशब्दस्य 30 पूर्वप्रयोगः । **शङ्कुलाखण्डः** इति-अत्र समासविधायकं "तृतीया तत्कृतैः" [३. १. ६५.] इति, तत्र तृतीया प्रथमा- निर्दिष्टेति विग्रहे तृतीयान्तस्य शङ्कुलाशब्दस्य पूर्वनिपातः, एव- मुत्तरत्रापि ज्ञेयम् । **यूपदारु** इति-अत्र समासविधायकं "चतुर्थी प्रकृत्या" [३. १. ७०.] इति, तत्र प्रथमोक्तं 35 चतुर्थ्यन्तमिति यूपशब्दस्य पूर्वनिपातः । **वृकभयमिति**-अत्र समासविधायकं "पञ्चमी भयाद्यैः" [३. १. ७३.] इति, तत्र प्रथमोक्तं पञ्चम्यन्तमिति वृकशब्दस्य पूर्वनिपातः । **राजपुरुषः** इति-अत्र समासविधायकं "षष्ठ्ययत्नात्०" [३. १. ७६.] इति, तत्र प्रथमोक्तं षष्ठ्यन्तमिति राजन्शब्दस्य पूर्वनिपातः **अक्षशौण्डः** इति-अत्र समासविधायकं "सप्तमी शौण्डाद्यैः" 40 [३. १. ८८.] इति, तत्र प्रथमोक्तं सप्तम्यन्तमित्यक्ष- शब्दस्य पूर्वनिपातः । **नीलोत्पलमिति**- अत्र समासविधायकं "विशेषणं विशेष्येणै०" [३. १. ९६.] इति, तत्र प्रथमोक्तं विशेषणमिति नीलस्य पूर्वनिपातः । **पञ्चाम्राः** इति-अत्र समासविधायकं "संख्या समाहारे च०" [३. १. ९९.] 45 इति, तत्र प्रथमोक्ता संख्येति पञ्चन्शब्दस्य पूर्वनिपातः । ननु पूर्वपदस्य सर्वत्र विग्रहवाक्येऽपि पूर्वमेवोपादानं दृश्यते, किञ्च न व्याकरणेनापूर्वशब्दनिर्माणमभिप्रेतमपि तु प्रयुज्यमान- स्यैवार्थावबोधायानुशासनमिति सर्वत्र प्रथमानिर्दिष्टस्यैव पूर्वप्रयोग उपलभ्यत इति न तदर्थं यत्नस्यावश्यकत्वमिति सूत्रवैयर्थ्यमा- 50 शङ्कयाह- **वाक्यवत् समासेऽप्यनियमः स्यादिति वचनमिति**- अयमाशयः-यथा वाक्ये आसन्ना दश येषामिति दश आसन्ना येषामिति वा प्रयोक्तुः कामचारो दृश्यते तथैव समासेऽपि स्यात्, स मा भूदित्येतदर्थमेवेदं वचनमारभ्यत इति ॥ ३. १. १४८. ॥ 55

## राजदन्तादिषु । ३ । १ । १४९ ॥

**त० प्र०**-राजदन्त इत्यादिषु समासेष्वप्राप्तपूर्वनिपातं प्राक् निपतति । दन्तानां राजा-राजदन्तः "षष्ठ्य०" [३. १. ७६.] इति प्रथमोक्तत्वेन दन्तशब्दस्य पूर्वनिपाते प्राप्ते राजशब्दस्यानेन पूर्वनिपातः, पूर्वं वासितं पश्चाल्लिप्तं- 60 लिप्तवासितम्, अत्र "पूर्वकालैक०" [३. १. ९७.] इति प्रथमोक्तत्वेन वासितस्य पूर्वनिपाते प्राप्ते लिप्तस्य पूर्वनिपातः, एवं-सिक्तसंमृष्टम्, भृष्टलुञ्चितम्, नग्नमुषितम्, अवक्लिन्न- पक्वम्, अर्पितोतम्, उप्तगाढम्; ऋणेऽधमः-अधमर्णः, अत्र "सप्तमी०" [३. १. ८८.] इति प्रथमोक्तत्वेन ऋणस्य 65 पूर्वनिपाते प्राप्तेऽधमस्य पूर्वनिपातः, एवम्-उत्तमर्णः; उलूखलं च मुशलं च-उलूखल-मुशले, अत्र मुशलशब्दस्याल्प- स्वरत्वात् पूर्वनिपाते प्राप्ते उलूखलशब्दस्यानेन पूर्वनिपातः, एवं-तन्दुल-किण्वम्; चित्ररथबाह्लीकौ, स्नातक-राजानौ, उशीरबीज-शिञ्जास्थम्, आरट्यनि-चान्धनि, अधरोष्ठम्, 70 वैकारिमतगाजवाजम्, गोपालिधान-पूलासम्, कुरण्डस्थल- पूलासम्; दार-जरसौ, दारशब्द एकवचनान्तोऽप्यस्ति, अत्र नियमे; दारार्थम्, अत्र तु स्वराद्यदन्तत्वादर्थशब्दस्य पूर्व- निपाते प्राप्ते दारशब्दस्य पूर्वनिपातः; एवं-विष्वक्सेनाऽर्जुनौ, शूद्रा-ऽऽर्यौ, विषयेन्द्रियाणि, गवाश्वौ, अवन्त्यश्मकाः; 75 चित्रा-स्वाती माणविके, केशश्मश्रु,-अत्रेदुदन्तत्वेन स्वातिश्म- श्रुशब्दयोः पूर्वनिपाते प्राप्ते चित्राकेशयोः पूर्वनिपातः; एवं-

भार्या-पती, पुत्र-पती, स्वसृ-पती; जाया-पती, जम्पती, दम्पती, गणपाठाज्जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते; पुत्र-पशू, शिरो-जानु, शिरो-बिजु; नर-नारायणौ, अर्च्यत्वा-न्नारायणस्य पूर्वनिपाते प्राप्ते नरस्य पूर्वनिपातः; एवं-सोमरुद्रौ, 5 कुबेर-केशवौ, काक-मयूरौ, उमा-महेश्वरौ; पाण्डुधृतराष्ट्रौ, ज्येष्ठभ्रातृत्वेन धृतराष्ट्रस्य पूर्वनिपाते प्राप्ते पाण्डोः पूर्वनिपातः, एवं-विष्णुवासवौ। बहुवचनमाकृतिगणार्थम्, तेन क्वचिद् विकल्पः-पुरुषोत्तमः, उत्तमपुरुषः; मध्यगृहम्, गृहमध्यम्; अधरबिम्बम्, बिम्बाधरः; ओष्ठबिम्बम्, बिम्बोष्ठ 10 इत्यादि ॥ १४९ ॥

श० म० न्यासानुसन्धानम्-राजदन्ता०। अत्र सप्तम्यन्ततया गणमात्रं निर्दिश्यते, विधेयं किञ्चिन्नोच्यते, 'प्राक्' इति पूर्वसूत्रतोऽनुवर्तमानं स्वरूपतो नार्थबोधकं भवितुमर्हति उद्देश्यानिर्देशात्, प्रागिति हि विधेयसम्पर्कं पदमुद्देश्य-15 बोधकपदं विना केवलविधेयबोधकपदस्यार्थबोधासामर्थ्यात्। तथा चोद्देश्यं स्वत एवार्थगत्या कल्पनीयमिति तदेव कल्पयित्वा कथयति-अप्राप्तपूर्वनिपातमिति-यस्य समासशास्त्रीयप्रथमा-निर्दिष्टत्वादिकं नास्ति पूर्वप्रयोगश्च दृश्यते तदिह गणे विज्ञेयम्, गणनिर्दिष्टत्वाच्च पूर्वनिपातानर्हस्यापि तस्य पूर्वनिपातो विज्ञेय 20 इति तात्पर्यम्। न च केवलप्रथमोक्तभिन्नत्वेनैवोद्देश्यता स्वीकर्तुं शक्यते, बहुव्रीहौ द्वन्द्वे चोभयोः प्रथमोक्तत्वाविशेषात् तदर्थं पूर्वनिपातनियमान्तरारम्भात्, तथा च येन केनापि पूर्वनिपातविधायकेन सूत्रेण यस्य पूर्वप्रयोगो न प्राप्तस्तस्य पूर्वप्रयोगार्थं सूत्रमिदमिति सामान्येनैव 'अप्राप्तपूर्वनिपातम्' 25 इत्युद्देश्यनिर्देशः कृतः, अप्राप्तपूर्वनिपातत्वं च प्राय उदाहरणेषु प्रतिपादितमेव, यत्र न प्रतिपादितं तत्र स्वयमूह्यम्। दन्तानां राजा राजन्दन्त इति षष्ठीसमासः, तद्विधायकं "षष्ठ्ययत्ना०" [ ३. १. ७६. ] इति सूत्रं, तत्र प्रथमोक्ता षष्ठीति तदन्तस्य दन्तशब्दस्य पूर्वनिपातः प्राप्तो राजशब्दस्य चाप्राप्त इति 30 तस्यैवानेन पूर्वनिपातः क्रियते, तदाह-"षष्ठी०" इति प्रथमोक्तत्वेनेत्यादिना। एवमुत्तरत्रापि। पूर्वं वासितं पश्चाल्लिप्तमिति विग्रहः, लिप्तवासितमिति, समासः, वासितं सुरभीकृतम्, लिप्तमुपदिग्धम्, वासनार्थमेव लेपो विधीयत इत्यवासितस्य लेपो व्यर्थ इति वासनं पूर्वकाल एव 35 समुचितमिति भवति तस्य "पूर्वकाल०" इति सूत्रविषयत्वम्। अतिदिशति-एवमिति, सिक्तसंमृष्टमिति च समासः, मार्जन्यादिना सम्मार्जने जाते हि सेक उचित इति समृष्टत्वस्य पूर्वकालभवत्वमुचितम्, अतो विग्रहोऽपि पूर्वं सम्मृष्टं पश्चात् सिक्तमिति। भृष्टलुञ्चितमिति समासः, पूर्वं लुञ्चितं पश्चाद् भृष्टमिति विग्रहः, लुञ्चनेन त्वगपाकरणादन्ना-40 देर्भर्जनं सम्भाव्यत इति लुञ्चनस्य पूर्वकालभावित्वम्। नग्नमुषितमिति समासः, पूर्वं मुषितं पश्चान्नग्नमिति विग्रहः, चौरादिना मुषितो हि नग्नो दरिद्रो भवतीति मोषणस्य पूर्वकाल-भावित्वम्। अवक्लिन्नपक्वमिति समासः, पूर्वं पक्वं पश्चादव-क्लिन्नमिति च विग्रहः, पाकेनावक्लेदोत्पत्त्या पाकस्य पूर्वकालि-45 कत्वम्। अर्पितोतमिति समासः, पूर्वमुतं पश्चादर्पितमिति विग्रहः, पूर्वमुतं चेत् तदाऽर्प्यते पश्चात्, पूर्वं तस्य वस्त्रत्वादिना सत्त्वेव नेति तदर्पणमसम्भवि। उप्तगाढमिति समासः, पूर्व-गाढं पश्चादुप्तमिति च विग्रहः, पूर्वं हलादिना विलोडितस्यैव क्षेत्रादेरुप्तत्वं कृतबीजक्षेपत्वं सम्भवतीति गाहनस्य पूर्वकालि-50 कत्वम्। ऋणेऽधमः इति विग्रहः, अधमर्णः इति समासः एवम्- उत्तमर्णः इति समासः, ऋणे उत्तम इति विग्रहः, ऋणग्रहीतुर्दैन्यस्य प्रथितत्वेन तस्याधमत्वं सिद्धम्, ऋणदातुश्च लाभान्वितस्याथ तदनुग्राहकत्वाभिमानवतश्चोत्तमत्वमपि युक्त-मेव, उभयत्र सप्तमीसमासे सप्तम्यन्तस्यैव प्रथमोक्तत्वम्, 55 प्रथमोक्तत्वेन पूर्वनिपाते इत्यत्र 'प्राप्ते' इति शेषः, न तु 'सति' इति, तथा सति पुनरन्यस्य निपातसम्भवात्। उलूखलं च मुशलं चेति विग्रहः, उलूखलमुशले इति च समासः, अत्र यद्यपि मुशलस्याल्पस्वरत्वमुलूखलस्य च स्वराद्यन्तत्वमित्युभयोः पूर्वनिपातप्राप्तिः "लघ्वक्षरा०" [ ३. 60 १. १६०. ] इति समानसूत्रेणैव, तथापि तत्र सूत्रे स्वराद्यदन्ता-पेक्षयाऽल्पस्वरस्य परत्वेन स्पर्धे तस्यैव बलवत्त्वौचित्यमिति भवति मुशलस्य परनिपातप्राप्तिः। अतिदिशति-एवमिति, तन्दुलकिण्वमिति-किण्वं सुराबीजं तस्य तन्दुलेन सह समाहारे किण्वस्याल्पस्वरत्वादेव पूर्वनिपातः। चित्ररथ-65 वाल्हीकौ इति-चित्ररथो राजविशेष एव वाल्हीकपदसान्नि-ध्यात्, वाल्हीको नाम देशः, तस्य राजापि वाल्हीकः, यद्यपि चित्ररथो नाम गन्धर्वराजः पुराणादिषु प्रसिद्धः, परमिह स न ग्रहीतव्यस्तस्य राज्ञा सह सहचरितत्वस्याप्रसिद्धत्वात्, क्वचिद् तयोर्युद्धादौ सहोक्तिः सम्भाविताऽप्यप्रसिद्धत्वान्न तत्र दृढतेति 70 प्रतीयते। स्नातकराजानौ इति समासः, स्नातकश्च राजा चेति विग्रहः, स्नातेर्भावे क्तः, स्नातं वेदाध्ययनान्तरं समावर्त-नाङ्गस्नानं, तदस्यास्तीति के, कर्तरि क्ते स्वार्थे च के वा-स्नातकः, वेदाध्ययनानन्तरं गार्हस्थ्याय कृतसमावर्तनाङ्गस्नान इत्यर्थः। उशीरबीजशिञ्जास्थमिति समासः, उशीरबीजो नाम 75 पर्वतः, शिञ्जास्थोऽपि स एव, तयोः समाहार इति लघुन्यासः, पाणिनीये गणे च 'उशीरबीजमिति पृथगेव पठ्यते, तत्रोशीरं च बीजं चेति द्वन्द्वेऽल्पस्वरत्वाद् बीजस्य पूर्वनिपाते प्राप्ते उशीरस्य पूर्वनिपातः, शिञ्जास्थमिति तालव्यादेः स्थाने 'सिञ्जास्थम्,

सिञ्जाश्वत्थम्' इति द्वौ दन्त्यादी द्वन्द्वौ पठ्येते, सिञ्जा चास्थि चेति द्वन्द्वेऽस्थ्नः पूर्वनिपातप्राप्तिः, गणे निपातनसामर्थ्यादित् समासान्तः एवं सिञ्जास्थमिति पाठस्यावश्यकत्वेऽपि सिञ्जानाश्वत्थस्य पाठे न प्रयोजनं पश्यामः, सिञ्जायाः सिञ्जस्य वाऽल्पस्वरत्वेनैव, पूर्वनिपातस्य सिद्धत्वात्, षष्ठीतत्पुरुषादिस्तु विपरीतक्रमको न प्रतीयते, तथासौ पाठः सन्दिग्धप्रयोजनक एव लेखकप्रमादकृतो वा, एवमन्योऽपि गणपाठे भेदो दृश्यते, तदीययुक्तायुक्तविचारो न लक्षणैकचक्षुष्कविषयः । **आरद्वायनिचान्धनि** इति–आरद्वो नाम कश्चित् तस्यापत्यमारद्वायनिः, चान्धनो नाम कश्चित् तस्यापत्यं चान्धनिः, आरद्वायनिश्च चान्धनिश्चेति विग्रहः । **अधरोष्ठमिति** ओष्ठशब्दः सामान्यतो दन्तच्छदे वर्तते, अधरशब्दश्चाधस्तनोष्ठेऽपि, गोबलीवर्दवत् समासः, अधरश्च ओष्ठश्चेति विग्रहः । **वैकारिमतगाजवाजमिति**–वैकारिमतश्च गाजवाजश्चेति विग्रहः, कर एव कारः, विविधः कारो यस्य विकारयतीति वा विकारः, तस्यापत्यं वैकारिः, वैकारेर्मतो वैकारिमतः पुरुषविशेषः, गजतीति गजस्तस्यापत्यं गाजः, गाजयतीति वा गाजः, गाजं वाजयतीति गाजवाजः पुरुषविशेषः । अपरे वैकारिमतं गाजवाजं चोदाहरन्ति, त आहुः–वैकारिश्च मतश्च वैकारिमतम्, गाजश्च वाजश्च गाजवाजम्, अत्र वैकारिमते बहुस्वरस्य पूर्वनिपातः, गाजवाजेऽनियमप्रसङ्गे नियमः–गाजशब्दस्यैव पूर्वनिपातः । **गौपालिधानपूलासमिति**–गौपालिधानं च पूलासश्चेति विग्रहः, गोपालस्यापत्यं गौपालिः, स धीयतेऽस्मिन्निति गौपालिधानं ग्रामो वा अवस्थानं वा, पूलानस्यतीति पूलासः; **कुरण्डस्थलपूलासमिति**–कुरण्डस्थलं च पूलासश्चेति विग्रहः, कुरण्डानां स्थलं कुरण्डस्थलम् । अपरे गौपालिधानं पूलासकुरण्डं स्थलपूलासमित्युदाहरन्ति, त आहुः–धानः कश्चित्, गौपालिश्च धानश्चेति गौपालिधानम्, पूलासश्च कुरण्डश्च पूलासकुरण्डम्, स्थलं च पूलासश्च स्थलपूलासमिति, अत्र स्थलपूलासशब्दस्य पूर्वनिपातसिद्धिः, अत्राहुः पूलासस्यार्च्यत्वात् पूर्वनिपाते प्राप्ते पाठ इति । **दारजाराविति**–दारश्च जारश्चेति विग्रहः, दारशब्दस्य बहुवचनान्तत्वेन तस्य जारेण द्वन्द्वे दारजारा इति भवितव्यमित्याशङ्कायामाह–**दारशब्द एकवचनान्तोऽप्यस्त्यत्र नियमे** इति–तदुक्तं लिङ्गानुशासनपुंल्लिङ्गप्रकरणे "दारप्राणसुवल्वजाः" [का० ५] इति कारिकांशव्याख्यायाम्–क्वचिदेकवचनमपि दृश्यते, यथा "धर्मप्रजासम्पन्ने हारे नान्यं कुर्वीत" इति, एवमत्रापि नियमे इति भावः, अत्रोभयोः समस्वरत्वेनार्च्यत्वादिपूर्वनिपातनिमित्ताभावेन च पूर्वनिपातानियमे प्राप्ते गणे पाठसामर्थ्याद् दारशब्दस्यैव पूर्वनिपातः । **दारार्थमिति**–दारश्चार्थश्चेति विग्रहः, अत्र बहुवचनान्तेन दारशब्देन विग्रहेऽपि विशेषाभावः समाहार एकत्वस्यैव सत्त्वात् । अस्य गणपाठे प्रयोजनमाह–**अत्र तु स्वराद्यदन्तत्वादिति** । इदमेव प्रयोजनमग्रिमेषु पञ्चस्वित्याह–**एवं विश्वक्सेनार्जुनौ** इत्यादि, विश्वक्सेनश्चार्जुनश्चेति विग्रहः, विश्वक्सेनः कृष्णः, तस्यार्जुनार्च्यत्वेऽपि नात्रार्च्यत्वविवक्षा, अर्जुनस्य च स्वराद्यदन्तत्वम् । **शूद्रार्याविति**–शूद्रश्चार्यश्चेति विग्रहः अत्रार्यस्यार्च्यत्वमपि । **विषयेन्द्रियाणीति**–विषयाश्चेन्द्रियाणि चेति विग्रहः, अत्रेन्द्रियशब्दस्य स्वराद्यदन्तत्वम् । **गवाश्वमिति**–गौश्चाश्वश्चेति विग्रहः, यद्यपि तत्सूत्रे स्वराद्यदन्तापेक्षयाऽल्पस्वरत्वस्य परत्वाद् गोरेव पूर्वनिपातः सिद्ध एव, न चाश्वशब्दे परे "स्वरे वाऽनक्षे" [१. २. २९.] इत्यवादेशे गोशब्दस्यापि द्विस्वरत्वं भवतीति साम्यमेवोभयोरपीति स्वराद्यदन्तत्वनिमित्तक एव पूर्वनिपातोऽश्वशब्दस्य प्राप्त इति तद्वारणायात्र गणे पाठ आवश्यक इति वाच्यम्, अश्वशब्दस्य परप्रयोगे सत्यवादेशप्राप्तिरिति तत्परप्रयोगानिर्णयदशायां गोशब्दस्याल्पस्वरत्वानपायात्, इत्थं च प्रकृतगणे पाठं विनापि गोशब्दस्यैव पूर्वनिपातः स्यादिति गणे पाठो व्यर्थः, तथापि प्रयुक्तानामिदमन्वाख्यानमिति सिद्धान्तेन गोरश्वस्य च द्वन्द्वेऽश्वस्यैव परप्रयुक्तत्वस्य पूर्वसिद्धतया तस्मिन् परतोऽवादेशावश्यम्भावेनोभयोः समस्वरत्वमित्यल्पस्वरकृतो गोशब्दस्य पूर्वनिपातो न प्राप्त इति तस्य पूर्वनिपातार्थं गणे पाठस्यावश्यकत्वमिति । **अवन्त्यश्मकाः** इति–अवन्तयश्च अश्मकाश्चेति विग्रहः, आभ्यां जनपदो राजा वोच्यते, अत्रेदन्तलक्षणं पूर्वनिपातं शब्दपर्धे परत्वाद् बाधित्वा स्वराद्यदन्तलक्षणः पूर्वनिपातः प्राप्तस्तमपि गणपाठाद् बाधित्वावन्तेः पूर्वनिपातः । **चित्रास्वाती माणविके** इति–चित्रा च स्वातिश्चेति विग्रहः, चित्रायां जाता चित्रा, स्वात्यां जाता स्वातिः, ते च माणविके इति चित्रास्वाती, अत्रेदन्तलक्षणः पूर्वनिपातो बाध्यते, नक्षत्रद्वन्द्वे तु "भर्तुतुल्यस्वरम्" [३. १. १६२.] इति सिद्धमेव, अत एव 'माणविके' इत्यनुप्रयोगः । **केशश्मश्रु** इति–केशाश्च श्मश्रूणि चेति विग्रहः, यद्यपि श्मश्रूण्यपि केशा एव तथापि गोबलीवर्दन्यायात् पृथगुक्तिः, केशास्तु स्त्रीपुरुषसर्वाङ्गसाधारणानि, श्मश्रूणि च पुरुषमुखमात्रस्थाः केशा इति गोबलीवर्दवत सामान्यविशेषभावावगतेः स्पष्टत्वम् । 'चित्रास्वाती केशश्मश्रु' इत्येतयोर्गणपाठे प्रयोजनमाह–**अत्रेदुदन्तत्वेन स्वातिश्मश्रुशब्दयोरिति**–स्वातिर्नात्र नक्षत्रवाचक इति पूर्वमुक्तमेव, तेन "भर्तुतुल्यस्वरम्" [३. १. १६२.] इत्यस्यानुपूर्व्येण पूर्वनिपातविधायकस्य प्राप्त्यभावादिदन्तत्वप्रयुक्तः स्वातिशब्दस्य पूर्वनिपातः प्राप्तः, श्मश्रुशब्दस्य चोदन्तत्वप्रयुक्तः "लघ्वक्षरासखीदुत्-स्वराद्यदल्पस्वरार्च्यमेकम्" [३. १. १६०.] इति

सूत्रेण, गणे पाठाच्च चित्राकेशयोः क्रमेणोभयत्र पूर्वनिपात इति भावः। इदुदन्तत्वप्रयुक्त एव 'भार्यापती' इत्यारभ्य 'शिरोविजु' इति पर्यन्तेषु पूर्वनिपातप्राप्तिमतिदिशति-**एवं भार्यापती** इत्यादि। भार्या च पतिश्चेति भार्या पती, जम्-दमादेशाभावपक्षे रूपम्। पुत्रश्च पतिश्चेति विग्रहे-**पुत्रपती** इति। स्वसा च पतिश्चेति विग्रहे-**स्वसृपती** इति। **जम्पती दम्पती** इति-ननु दमुजमोरल्पस्वरत्वादेव पूर्वनिपातसिद्धिरित्याशङ्कयाह-**गणपाठाज्जायाशब्दस्य जम्भावो दम्भावश्च निपात्यत** इति-नेमौ स्वतन्त्रशब्दावपि तु जायाशब्दस्य आदेशरूपावेव, जायाशब्दस्य च नाल्पस्वरत्वमित्यर्थः, एषु सर्वत्रेदन्तत्वेनार्च्यत्वेन च पत्युः पूर्वप्रयोगप्राप्तिः, अत एव च जम्-दमादेशपक्षेऽपि तस्याल्पस्वरत्वप्रयुक्तस्य पूर्वनिपातस्य न प्राप्तिः, अर्च्यत्वस्याल्पस्वरापेक्षयापि परत्वात, इदुदन्तत्वप्रयुक्तपूर्वनिपातप्राप्तेः 'एवं भार्यापती' इत्यादिरूपेणातिदेशस्तु तयोः परस्परमर्च्यत्वाविवक्षायामपि निमित्तान्तरेणापि पूर्वनिपातप्राप्तिरस्त्येवेति सूचनार्थम्। न चैवं जम्-दमादेशपक्षे पत्युरर्च्यत्वाविवक्षायामल्पस्वरत्वनिमित्तक एव जम्-दमोः पूर्वनिपातः सिद्ध एवेति तयोर्गणे पाठो व्यर्थ इति वाच्यम्, जम्-दमादेशार्थमेव गणे पाठस्य सार्थक्यात्, सति च पाठसार्थक्ये गणपाठात् भार्याशब्दमेव पूर्वं निपात्य 'भार्यापती' इत्यवस्थायामेव जम्-दमादेशाविति पूर्वनिपातकरणेऽपि गणपाठव्यापारस्य स्वीकारे क्षत्यभाव एव, अत एव [पूर्वनिपातस्यान्यथा सिद्धत्वादेव] वा गणपाठप्रयोजनदर्शनावसरे जम्भाव-दम्भावयोरेवोपादानं कृतम्, अन्यथा जम्भावो दम्भावश्चापि निपात्यत इति कथितं स्यात्। **पुत्रपशू** इति-पुत्रश्च पशुश्चेति विग्रहः। **शिरोजानु** इति-शिरश्च जानु चेति विग्रहः। **शिरोविजु** इति-शिरश्च विजुश्चेति विग्रहः, विजायते विशिष्य यौवनोद्भेदसमये जायते इति विजुः, गलाग्रभागजायमानः कृकाटिकाग्रन्थिरित्यर्थः। **नरनारायणा**विति-नरश्च नारायणश्चेति विग्रहः, अत्राल्पस्वरत्वेनैव नरस्य पूर्वनिपातसिद्ध इत्याशङ्कापनोदायाह-**अर्च्यत्वान्नाराणस्ये**त्यादि-नारायणो विष्णुः, न तु नरस्यापत्यं नारायण इत्यर्थः। अर्च्यत्वप्रयुक्तस्य पूर्वनिपातस्यान्यान्यपि स्थलानि दर्शयति-**एवं सोमरुद्रा**वित्यादिना। **सोमरुद्रा**विति-सोमश्च रुद्रश्चेति विग्रहः, सोमश्चन्द्रः, रुद्रः शिवः, शिवस्य चन्द्रापेक्षयाऽर्च्यत्वस्य प्रसिद्धिः। **कुबेरकेशवा**विति-कुबेरश्च केशवश्चेति विग्रहः, कुबेर-केशवयोरपि मध्ये केशवस्यार्च्यत्वम्। **काकमयूरा**विति-काकश्च मयूरश्चेति विग्रहः, काकमयूरयोर्जात्यैव लोकादरविशेषाच्च श्रेष्ठत्वम्। **उमामहेश्वरा**विति-उमा च महेश्वरश्चेति विग्रहः, उमा-महेश्वरयोरपि महेश्वरस्य तदपेक्षयाऽर्च्यत्वम्। **पाण्डुधृतराष्ट्रा**विति-पाण्डुश्च धृतराष्ट्रश्चेति विग्रहः, अत्र पाण्डोरल्पस्वरत्वेनैव पूर्वनिपातः सिद्ध इति न गणपाठे प्रयोजनमित्याशङ्कापनोदायाह-**ज्येष्ठभ्रातृत्वेन धृतराष्ट्रस्ये**त्यादि, अयमाशयः-पाण्डोर्ज्येष्ठो भ्राता धृतराष्ट्र इति तदपेक्षयाऽर्च्योऽपि, अथ च "मासवर्णभ्रात्रनुपूर्वम्" [ ३. १. १६१. ] इति सूत्रेणापि परत्वात् धृतराष्ट्रस्यैव पूर्वनिपातो युक्त इति पाण्डोः पूर्वनिपातार्थं स गणे पाठः। ज्येष्ठभ्रातृत्वनिमित्तकामेव पूर्वनिपातप्राप्तिमतिदिशति-**एवं विष्णुवासवा**विति-विष्णुश्च वासवश्चेति विग्रहः, वामनावतारो विष्णुरिन्द्रस्यानुज इति प्रसिद्धिः, "उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः" इति कोषप्रसिद्ध्यापि वासवस्य विष्णुज्येष्ठत्वमिति। लाघवादेकवचनेन "राजदन्तादौ" इति निर्देशे कर्तव्ये बहुवचनेन "राजदन्तादिषु" इति निर्देशस्य वैयर्थ्यमाशङ्क्याह-**बहुवचनमाकृतिगणार्थमि**ति-आकृत्या लक्ष्यस्वरूपेणैव गणपाठस्यावधारणार्थमिति भावः, तेन क्वचिदुभयथा लक्ष्यस्वरूपे स्थिते तदप्यत्र गणे द्रष्टव्यमिति फलतीत्याह-**तेन क्वचिद् विकल्पः** इति। **पुरुषोत्तमः, उत्तमपुरुषः** इति-यद्यपि पुरुषेषु उत्तम इति विगृह्य सप्तमीसमासे पुरुषोत्तम इति, उत्तमश्चासौ पुरुषश्चेति विगृह्य विशेषणसमासे उत्तमपुरुष इति विग्रहभेदेन रूपद्वयसिद्धिः सम्भाव्यते, न च यथा षष्ठ्यन्तस्य समासे यत्नकृतायाः षष्ठ्याः समासः पर्युदस्तः, गवां कृष्णा बहुक्षीरा इत्यादौ निर्धारणषष्ठ्याः समासो न भवति, तथैव यत्नकृतायाः सप्तम्या अपि समासो नोचितः, अन्यथा गोषु कृष्णा बहुक्षीरा इति सप्तमीपक्षे समासापत्तौ षष्ठीसमाससप्तमीसमासयो रूपे भेदाभावेन निर्धारणषष्ठ्याः समासवारणार्थत्वांशे तस्य वैयर्थ्यमेव स्यादिति वाच्यम्, यतो निर्धार्यते, यश्च निर्धार्यः, यश्च निर्धारणहेतुः, एतत्त्रितयसन्निधान एव निर्धारणार्थषष्ठ्याः सप्तम्या वा समासो नेष्टः, सिद्धान्तितं चैतत् कैयटादिभिः, यथा गवां कृष्णा बहुक्षीरा इत्यत्र गोभ्यो निर्धार्यत इति सा निर्धारणावधिः, बहुक्षीरात्वं निर्धार्यत इति सा निर्धार्यमाणा, कृष्णात्वं च निर्धारणहेतुः, इति त्रयाणां सन्निधानम्, इह च [ पुरुषेषूत्तम इति वाक्ये ] निर्धारणहेतोरनुपादानेन समासनिषेधप्राह्यभावात्। इत्थं चार्थभेदेन समासभेदकृत एव रूपभेद इसि नेदमाकृतिगणत्वफलम्, तथापि-एकार्थकमेव रूपद्वयमित्याशयेनोदाहरणमिति बोध्यम्। सप्तमीसमास एव विशेषणसमास एव वोभयत्रेति तात्पर्यात्। अत एवावारुचेः फलान्तरमाह-**मध्यगृहम्, गृहमध्यमि**ति-गृहस्य मध्यमिति विग्रहः, "पारे मध्येऽग्रेऽन्तः षष्ठ्या वा" [ ३. १. ३०. ] इति समासाभावपक्षे रूपद्वयमेतद्गणपाठानुमानादेव भवतीति भावः, अन्यथा षष्ठ्यन्तस्य पूर्वप्रयोगे गृहमध्यमित्येकमेव रूपं स्यात्। **अधरबिम्बम्, बिम्बाधरः** इति-अधरो बिम्बमिवेति विग्रहे "उपमेयं व्याघ्राद्यैः"

[३. १. १०२] इति समासः, तत्रोपमेयस्याधरस्यैव प्रथमोक्तत्वेन तस्यैव नित्यं पूर्वनिपाते प्राप्ते प्रकृतगणे पाठस्यानुमानादुभयोः पर्यायेण पूर्वनिपातो भवति । एवम्–**ओष्ठविम्बमि**त्यत्रापि बोध्यम्, ओष्ठो बिम्बमिवेति च विग्रहः ॥ ३. १. १४९ ॥

## विशेषण-सर्वादि-संख्यं बहुव्रीहौ । ३ । १ । १५० ॥

**त० प्र०**–विशेषणवाचि सर्वादि संख्यावाचि च नाम बहुव्रीहौ पूर्वं निपतति । विशेषण–चित्रगुः, शबलगुः, कण्ठेकालः, उरसिलोमा, उदरेमणिः; सर्वादि–सर्वं शुक्लमस्य–सर्वशुक्लः, सर्वकृष्णः, सर्वसारः, सर्वगुरुः, सर्वलघुः, विश्वदेवः, विश्वामित्रः, उभयचेतनः, संख्या–द्वौ कृष्णौ गुणावस्य–द्विकृष्णः, द्विशुक्लः, चतुर्ह्रस्वः, पञ्चदीर्घः; षड्नतः, सप्तरक्तः, उन्नत-रक्तशब्दौ न क्तान्तावपि तु गुणशब्दौ तेन स्पर्धे क्तलक्षणः पूर्वनिपातो न भवति । शब्दस्पर्धे परत्वात् सर्वादिसंख्ययोः संख्याया एव पूर्वनिपातः–त्र्यन्यः, द्वियुष्मत्कः, द्व्यस्मत्कः; उभयोस्तु सर्वादित्वे स्पर्धे परस्य पूर्वनिपातः–द्व्यन्यः । बहुव्रीहाविति किम्? उपसर्वम् । "प्रथमोक्तं प्राक्" [ ३. १. १४८. ] इत्यनियमे प्राप्ते नियमार्थं वचनम्, सर्वादि-संख्ययोर्विशेषणत्वेऽपि पृथग्वचनं शब्दपरस्पर्धार्थम् ॥ १५० ॥

**श० म० न्यासानुसन्धानम्**–**विशेषण०** । सर्वसमाससाधारणं पूर्वनिपातविधायकं सूत्रद्वयमुक्त्वा प्रतिस्विकरूपेण तत्तत्समासे पूर्वनिपातविधायकमिदं सूत्रमाह–**विशेषणे**त्यादि–अत्र विशेषणं च सर्वादिश्च संख्या चेत्येतेषां समाहार इति द्वन्द्वसमासेऽल्पस्वरसंख्याशब्दस्य पूर्वनिपातयोग्यतायामपि परनिपातकरणं शब्दपरस्पर्धेन विशेषणसर्वाद्योरपेक्षया संख्याया एव पूर्वनिपातार्थमिति बोध्यम् । यथोद्देशन्यायेन क्रमेणोदाहरति विशेषणमित्यादिविभागप्रदर्शनपूर्वकम् । **चित्रगुरि**ति–चित्रा गावोऽस्येति "एकार्थं चानेकं च" [ ३. १. २२. ] इति बहुव्रीहिः, अत्र चित्रा इति विशेषणम्, गाव इति च विशेष्यम्, चित्रत्वेन हि गावो गवान्तराद् विशेष्यमाणाः प्रतीयन्ते, ततस्तद्विशेषणं पूर्वं भवति, एवं–**शबलगुरि**ति–शबलाश्चित्रा गावोऽस्येति विग्रहः, उभयत्र "गोश्चान्ते०" [ २. ४. ९६. ] इति गोर्ह्रस्वः । **कण्ठेकालः** इति–कण्ठे कालोऽस्येति विग्रहः, उष्ट्रमुखादित्वाद् बहुव्रीहिः, अत्रापि कण्ठे इति सप्तम्यन्तेन काल इति विशेष्यत इति सप्तम्यन्तस्य पूर्वनिपातः, नहि काल इत्यनेन कण्ठे इति सप्तम्यन्तं विशेष्यते, सप्तम्यन्तस्य ह्याधारस्याधेयं प्रति सदा विशेषणभावः प्रतीयते, न विपर्ययः । यद्वा कण्ठे स्थित इति सप्तमीसमासः, सप्तम्या चालुक्, कण्ठे स्थितः कालोऽस्येति विग्रहे उष्ट्रमुखादित्वान्मध्यमपदलोपी बहुव्रीहिः, अत्र समानाधिकरणं विशेषणं पूर्वत्र च व्यधिकरणम् । केचित्तु सप्तम्यन्तस्य बहुव्रीहौ पूर्वनिपातवचनमारभन्ते, तत्सामर्थ्यादेव च तदन्तस्य समासोऽपीति ज्ञापयन्ति, तच्च ज्ञापनं खमतेऽपि "न सप्तमीन्द्वादिभ्यः" [ ३. १. १५५. ] इति सूत्रेण कर्तुं शक्यत एवेत्यग्रे वक्ष्यते । एवम्–उरसि लोमानि अस्येति विग्रहे–**उरसिलोमा** इति, उदरे मणिरस्येति–**उदरेमणिः**, "अमूर्धमस्तकात् स्वाङ्गादकामे" [ ३. २. २२. ] इति सर्वत्र सप्तम्या लुपोऽभावः ।

**सर्वादी**ति–अनेन सर्वाद्युदाहरणावसरं ज्ञापयति । **सर्वं शुक्लमस्ये**ति विग्रहः, **सर्वशुक्लः** इति च समासः । अत्र केचित्–'अत्र यदि सर्वमित्यनेन शुक्लमिति विशेष्येत तदा 'विशेषण' इत्येव पूर्वनिपातः सिद्धः, यदा तु सर्वं किम्? 'शुक्लमिति शुक्लेन सर्वं विशेष्येत तदैवमुदाहरणम्' इति व्याचक्षते, लघुन्यासकृतोऽप्याहुः–"अत्र शुक्लशब्देन सर्वार्थस्य विशेष्यमाणत्वाद् विशेषणत्वाभावेऽपि सर्वादित्वात् सर्वशब्दस्य प्राग्निपातः" इति । शुक्लशब्दोऽत्र गुणिनि वर्तते, अन्यथा गुणे वर्तमानस्य पुंस्त्वं स्यात्, "गुणे शुक्लादयः पुंसि, गुणिलिङ्गास्तु तद्वति ।" इति वचनात् विग्रहवाक्ये सर्वः शुक्लो यस्येति पुंसा निर्देशः कर्तव्यः स्यात्, सर्वशब्दः साकल्यकलितानां प्रकृतवस्तूनां स्त्रीपुंनपुंसकसाधारणानां बोधक इति सामान्ये नपुंसकमिति सर्वशब्दस्य विशेष्यस्य नपुंसकतया तद्विशेषणस्य शुक्लशब्दस्य गुणिपरस्यापि क्लीबत्वं ज्ञेयम्, एवं–**सर्वकृष्णः** इति–सर्वं कृष्णमस्येति विग्रहः, अत्रापि सर्वस्य विशेष्यत्वे सर्वादित्वाच्च पूर्वनिपातः । **सर्वसारः** इति–सर्वं सारमस्येति विग्रहः, "सारो बले स्थिरांशे च, न्याय्ये सारं वरं तथा ।" शाश्वतः । **सर्वगुरुः** इति–सर्वं गुरु अस्येति विग्रहः, "गुरुर्महति विख्यातो दुर्धरालघुनो गुरु । गुरुर्निषेकादिकरे पित्रादिसुरमन्त्रिणोः ॥" इति शाश्वतः । **सर्वलघुः** इति–सर्वं लघु अस्येति विग्रहः, "शीघ्रे मनोज्ञे निःसारे, लघुः स्यादगुरुद्रुमे । लघु स्यादगुरुण्यपि ।" इति शाश्वतः, एषु सर्वत्र सर्वशब्दस्य विशेष्यत्वविवक्षा ज्ञेया । अथ सर्वादिगणपठितं विश्वशब्दमुदाहरति–**विश्वदेवः** इति–विश्वशब्दः सर्वार्थकोऽत्र, विश्वे देवा अस्येति विग्रहः, भवति हि द्रव्यशब्दत्वेऽपि देवा इति विश्वेषां विशेषणं–विश्वे के? देवा इति, नायं नियमोऽस्ति–द्रव्यशब्देन सदा विशेष्येणैव भवितव्यमिति, प्रतीतिरत्र नियामिका, सर्वादिगणपठितत्वात् विशेष्यस्यापि विश्वशब्दस्य प्राग्निपातः । **विश्वामित्रः** इति–विश्वं सकलं जीवजातं मित्रमस्येति विग्रहः, "ऋषौ विश्वस्य मित्रे" [ ३. २. ७९. ]

इति पूर्वपदान्तस्य दीर्घः, अत्रापि विश्वशब्दस्य विशेष्यत्वम् । अथ सर्वादिगणगतमुभयशब्दमुदाहरति-**उभयचेतनः** इति- उभयशब्दो ह्यवयवकसमुदायपरः, उभयश्चेतनोऽस्येति विग्रहः, अत्र विशेष्यत्वविवक्षा उभयस्य । संख्याशब्दमुदाहर्तुमवता- रयति-**संख्येति** । **द्वौ कृष्णौ गुणावस्येति** विग्रहः- **द्विकृष्णः** इति समासः, अत्र द्वौ काविति प्रश्नोपक्रमे कृष्णौ इति कृष्णशब्देन द्वौ विशेष्येते इति द्विशब्दस्य विशेष्यत्वेऽपि संख्याशब्दत्वात् प्राग्निपातः, कृष्णशब्दोऽत्र गुणपरो न तु गुणिपर इत्यावेदयितुं गुणाविति, द्विगुणकृष्णवर्णयुक्त इत्यर्थः, विवक्षितवस्तुनो यावती कृष्णगुणमात्रा ततो द्विगुणा प्रकृत- पदार्थस्येति यावत्, यथा-एकगुणकृष्णस्कन्धो द्विगुणकृष्णस्कन्ध इत्यादि, एवमुत्तरत्रापि, द्विशुक्लः इति-द्वौ शुक्लौ गुणावस्येति विग्रहः अत्रापि द्विशब्दस्य विशेष्यत्वम् । **चतुर्ह्रस्वः** इति- चत्वारि ह्रस्वान्यस्येति विग्रहः, "ह्रस्वानि चत्वारि तु लिङ्गपृष्ठं, ग्रीवा च जङ्घे च हितप्रदानि ।" इति, अत्र चत्वारि कानीति प्रश्नोपक्रमे ह्रस्वानीति ह्रस्वशब्देन चत्वारि विशेष्यन्त इति चतुःशब्दस्य विशेष्यत्वम्, एवमुत्तरत्रापि । **पञ्चदीर्घः** इति- पञ्च दीर्घाणि अस्येति विग्रहः, "हनुलोचनबाहुनासिकास्तन- योरन्तरमत्र पञ्चमम्" इति । **षडुन्नतः** इति-षड् उन्नतानि अस्येति विग्रहः, "वक्षोऽथ कक्षा नखनासिकास्यं कृकाटिका चेति षडुन्नतानि ।" इति । **सप्तरक्तः** इति सप्त रक्तानि अस्येति विग्रहः, "नेत्रान्तपादकरताल्वधरोष्ठजिह्वा रक्ताः नखाः सप्त सुखप्रदानि" । उन्नतरक्तशब्दयोः क्तान्तत्वप्रतीतेः संख्यापूर्व- निपातविधायकप्रकृतसूत्रापेक्षया क्तान्तपूर्वनिपातविधायकस्य "क्तः" [ ३. १. १४९. ] इत्यग्रिमसूत्रस्यैव परत्वेन प्रवृत्ते- स्तयोरेव पूर्वनिपातो युक्त इत्याशङ्कापनोदायाह-**उन्नतरक्त- शब्दौ न क्तान्तावपि तु गुणशब्दौ** इति-यदि क्तान्तौ स्यातां तदा क्रियावचनौ भवेतां न गुणवचनौ, अस्ति च गुणवचनत्वप्रतीतिरिति न क्तान्तावपि त्वव्युत्पन्नौ गुणवचनौ, उत्पूर्वनमतेरञ्जेश्च "पुतपित्त०" [ उणा० ] इति निपात- नात् सिद्धाविमौ, उणादयोऽव्युत्पन्नाश्च । उन्नतशब्द औन्नत्यगुणं रक्तशब्दोऽरुणतागुणमाह । तत्फलमाह-**तेन स्पर्धे क्तलक्षणः पूर्वनिपातो न भवतीति** । यत्र प्रकृतसूत्रोपात्तयोरेव पूर्वोत्तर- पदता तत्र का व्यवस्थेति चेत् ? अत्राह-**शब्दस्पर्धे परत्वात् सर्वादि-संख्ययोः संख्याया एव पूर्वनिपातः** इति- 'स्पर्धे परः' इत्यत्र परशब्देन केवलं शास्त्रमेव गृह्यते, अपि तु शास्त्रैक्येऽपि तत्पठितशब्दयोः पूर्वापरभावमादायापि पूर्वपरत्व- व्यवहार इति प्रकृतसूत्रे सर्वाद्यपेक्षया संख्यायाः परपठिततया सैव परशब्देन गृह्यते इति सर्वादिसंख्ययोरेकत्र बहुव्रीहौ समुप- निपाते संख्यैव पूर्वं निपतीति भावः, त्रयोऽन्येऽस्येति-**त्र्यन्यः**, अत्र त्रिशब्दः संख्यावाचकोऽन्यशब्दः सर्वादिश्च, तत्र सूत्रे सर्वा- दिग्रहणात् । त्रिशब्दस्य विशेष्यत्वे विशेषणत्वे वा न पूर्वनिपातः सिद्ध इति संख्याया ग्रहणात् तत्प्रयुक्तः संख्यायाः पूर्वनिपातः । **द्वियुष्मत्कः** इति-द्वौ युवामस्येति विग्रहः, समासान्तः कच्, स्यादिपरत्वाभावान्न युवादेशः, अत्र द्वावपि सर्वादिगणपठितौ, तत्र द्विशब्दस्य पूर्वं पाठो युष्मदश्च परस्तथापि गणपाठापेक्षया सूत्रपाठस्य बलीयस्त्वात् संख्यावाचकद्विशब्दस्यैव पूर्वनिपातः, एवमुत्तरत्र, **द्व्यस्मत्कः** इति-द्वौ आवामस्येति विग्रहः । समयुक्तिसिद्धमर्थमाह-**उभयोस्तु सर्वादित्वे स्पर्धे परस्य पूर्वनिपातः** इति-पदद्वयस्य सर्वादिगणपठितत्वे, तत्रैकस्य संख्यावाचकत्वेऽपि चेति भावः, सर्वादित्वे गणपाठे यः परः पठितः स एव शब्दः पूर्वं निपतति, तत्र यदि संख्यावाचकः सर्वादिगणे परपठितस्तदोभयथा तस्य पूर्वनिपातः, यथा- **द्व्यन्यः** इति द्वावन्यावस्येति विग्रहः, अत्र द्विशब्दस्य सर्वादि- पठितत्वं तत्रान्यशब्दापेक्षया पदपठितत्वं च, यदि च संख्या- वाचकस्य सर्वादिगणे पूर्वपठितत्वं तदापि तस्यैव पूर्वनिपातो गण- पाठपरत्वापेक्षया सूत्रपाठपरत्वस्य बलीयस्त्वात्, यथा द्वियुष्मत्क इत्यादौ, केवलसर्वादेस्तु स्पर्धो दक्षिणपूर्वा दिगित्यादिप्रयोगे उदाहार्यः, दक्षिणस्याः पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा दिग्, अयं सर्वादिगणपाठः-सर्व, विश्व, उभ, उभयट्, अन्य, अन्यतर, इतर, डतर, डतम, त्व, त्वत्, नेम, सम-सिमौ सर्वार्थौ, पूर्व-परा-ऽवर-दक्षिणोत्तरा-ऽपरा-ऽधराणि व्यवस्था- याम्, स्वमज्ञातिधनाख्यायाम्, अन्तरं बहिर्योगोपसंव्यानयोर- पुरि, त्यद्, तद्, अदस्, इदम्, एतद्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्, इत्यसंज्ञायां सर्वादिः । **बहुव्रीहाविति किमिति**-सामान्येन सर्वेषु समासेषु विशेषण-सर्वादि-संख्यानां पूर्वनिपात एष्टव्य इति प्रश्नाशयः । उत्तरयति-**उपसर्वमिति**- सर्वेषां समीपमिति विग्रहेऽव्ययीभावः, तत्र चाव्ययस्य प्रथमोक्त- त्वात् तस्यैव पूर्वनिपातो न तु सर्वशब्दस्य, बहुव्रीहावित्यस्याभावे च तत्राप्यस्य सूत्रस्य प्रवृत्तिः स्यादिति भावः । अथ किमर्थ- मिदमारभ्यते, किं विशेषणसर्वादिसंख्यस्य "प्रथमोक्तं प्राक्' [ ३. १. १४८. ] इति पूर्वनिपातो न सिध्यति, भवति हि एकार्थम् "एकार्थं चानेकं च" [ ३. १. २२. ] इति प्रथमोक्त- मित्यत आह-**"प्रथमोक्तम्" इत्यनियमे प्राप्ते नियमार्थं वचनमिति**-बहुव्रीहौ समासे एकार्थमिति विशेषणसर्वादि- संख्यमितरदपि च प्रथमोक्तं भवति, तत्र "प्रथमोक्तम्०" इति पूर्वनिपाते 'विशेषणसर्वादिसंख्यस्यैव पूर्वनिपातो भवति, नेत- रस्य' इति नियमो न लभ्यते, अनियम एव स्यात्, अतो विशेषणसर्वादिसंख्यस्यैव पूर्वनिपातो यथा स्यात्, नेतरस्येति नियमार्थमिदं वचनमारभ्यते । उक्तव्याख्यायां सर्वाद्युदाहरणे

सर्वं शुक्रमस्येति सर्वशुक्र इत्यादौ सर्वादिः, संख्योदाहरणे च द्वौ कृष्णौ गुणावस्य द्विकृष्ण इत्यादौ संख्याया विशेष्यत्वविवक्षां दर्शयित्वा सर्वादिसंख्याग्रहणस्य साफल्यमुपपादितम् । अथात्र कश्चिन्मन्येत–विशेष्यविशेषणभावे कामचारात् सर्वादि-संख्ययोर्विशेषणत्वं विवक्ष्यताम्, तावतापि तयोर्विशेषणविधया प्राग् निपातः सेत्स्यतीति सर्वादिसंख्याग्रहणं विफलमिति, तं शिक्षयितुमाह–**सर्वादिसंख्ययोर्विशेषणत्वेऽपि पृथग्वचनं शब्दपरस्पर्धार्थमि**ति–सर्वादिसंख्ययोर्विशेष्यत्वविवक्षायां तु प्रकृतसूत्रे ग्रहणं सफलमेव, किन्तु विशेषणत्वविवक्षायामपि सफलमेवेत्यपिना सूच्यते, पृथग्वचनं विशेषणतः पृथगुपादानम्, शब्दपरस्पर्धार्थं सूत्रपठितशब्दमध्ये यः परस्तस्य स्पर्धार्थं स्पर्धे पूर्वनिपातार्थमित्यर्थः, तथा च सर्वादिसंख्ययोरेकत्र बहुव्रीहावुपनिपाते परो यः संख्याशब्दः स पूर्वं निपतति, न तु सर्वादिः, यथा–त्र्यन्य इति । लघुन्यासकृतस्त्वेवमाहुः–"**सर्वादिसंख्ययोरि**ति, ननु सर्वादि-संख्याभ्यामारब्धे बहुव्रीहावन्यपदार्थस्यैव प्राधान्यात् तस्य विशेष्यत्वादितरयोर्विशेषणत्वाद् विशेषणग्रहणेनैव भविष्यति, किमर्थं पृथगुपादानमित्याशङ्का" इति । अत्रायमाशयः–प्रकृतसूत्रे विशेषणमुपात्तं, तस्य विशेषणत्वं किं समस्यमानापरपदार्थव्यावर्तकत्वाद् वा, अन्यपदार्थव्यावर्तकत्वाद् वा ? तत्राद्ये–समस्यमानस्यैकस्य विशेष्यत्वे सत्यैवापरस्य विशेषणत्वं संभवति, तथा च सर्वादिसंख्याभिन्नविशेषण–सर्वादि-संख्यानां मध्ये द्वयोरुपनिपाते एकस्य विशेषणत्वमपरस्य च विशेष्यत्वमिति स्वीकार्यम्, एवं च यस्य विशेषणत्वविवक्षा तस्यैव पूर्वनिपातो नेतरस्य, विशेषणविशेष्यभावे च कामचाराद् द्वयोरपि पर्यायेण विशेषणत्वसम्भवात् पर्यायेण पूर्वनिपाते प्राप्ते न पूर्वनिपातनियमार्थं सूत्रं स्यात्, सर्वादिसंख्योपादाने च कृते सति [ यथास्थितसूत्रे सति ] तु सूत्रपाठापेक्षया यः परः स एव पूर्वं निपततीति नियमो भवति, तथाहि–यत्रैकं सामान्यविशेषणमपरं सर्वादि तत्र सर्वादिः, यत्रैकं सामान्यविशेषणमपरं च संख्या तत्र संख्या, यत्र चैकं सर्वादिपरं च संख्या तत्र हि संख्या पूर्वं निपतति स्पर्धबलात्, अत्र समस्यमानयोः परस्परमन्वयार्थं विशेषणविशेष्यभावावश्यकत्वे सर्वादिसंख्ययोर्विशेषणत्वं विशेष्यत्वं वाऽन्यतरद् भवतु, पूर्वनिपातस्तु दर्शितदिशैव, तत्र विशेषणत्वे स्पर्धार्थं विशेष्यत्वे चाप्राप्तपूर्वनिपातस्य पूर्वनिपातार्थं सर्वादिसंख्ययोरुपादानमित्याभाति । द्वितीयपक्षे [ अन्यपदार्थव्यावर्तकत्वाद् वा इति द्वितीयपक्षे ] अन्यपदार्थव्यावर्तकत्वादुभयोरपि समस्यमानयोर्विशेषणत्वसम्भवेऽपि परस्परमन्वयार्थं विशेषणविशेष्यभावोऽवश्यमभ्युपगन्तव्यः, तत्र कामचारेण विशेषणविशेष्यभावाङ्गीकारे पूर्वनिपातनियम इति स्पर्धे परत्वार्थं सर्वादि-संख्ययोः पृथगुपादानमिति भावः ।

अत्र सर्वाद्युदाहरणे सर्वादेर्विशेषणत्वमेव, एवं संख्योदाहरणे संख्याया अपि विशेषणत्वमेवेति विशेषणविधया सिद्धिरस्त्येव, केवलं स्पर्धार्थं सर्वादिसंख्ययोः पृथगुपादानमिति केषाञ्चिन्मान्यता, तदनुसारं व्याख्यायते–अथ सर्वादिपूर्वप्रयोगमुदाहरति–**सर्वादी**ति निर्देशेन । **सर्वं शुक्रमस्ये**ति–अत्र शुक्रशब्दो गुणिपरो न तु गुणपरः, तथा सति तस्य पुल्लिङ्गत्वेन सर्वः शुक्रोऽस्येति विग्रह उचितः स्यात्, अपि च गुणवाचकत्वेन सर्वनामापेक्षया तस्यैव विशेषणत्वमपि स्यात्, इह च विशेष्यत्वेन पश्चान्निर्दिश्यते । एवं च शुक्रशब्दस्य विशेषणत्वेन व्याख्यानं लघुन्यासकृतां किंमूलकमिति न प्रतीमः, अग्रे 'सर्वादि-संख्ययोर्विशेषणत्वेऽपि' इत्यादिवृत्तिग्रन्थेन सर्वादेर्विशेषणत्वेनैव पूर्वप्रयोगे सिद्धे तद्ग्रहणस्य वैयर्थ्यशङ्का, परस्पर्धार्थत्वरूपं समाधानं च तत्प्रतिकूलमिति विभावनीयं सूरिभिः, एवं सर्वकृष्णादिष्वपि विज्ञेयम् । एवं विश्वे देवा अस्येति विग्रहे विश्वशब्दोऽपि विशेषणमेवेष्टमाचार्यस्येति प्रतीयते, लघुन्यासकृतां व्याख्यानानुसारं च तस्य विशेष्यत्वं, द्रव्यशब्दस्य विशेष्यत्वमेवेति नियमानङ्गीकारात् । कैयटेनापीह देवशब्दस्य विशेषणत्वमेवोक्तम्, तथाहि–"सप्तमीविशेषणे बहुव्रीहौ" [ पाणि० सू० २. २. ३५. ] इति सूत्रे "बहुव्रीहौ सर्वनाम-संख्ययोरुपसंख्यानम्" इति वार्तिकोदाहरणे 'विश्वदेवः' इत्युदाहृतं भाष्यकृता, तद्व्याख्याने कैयट आह–'यदा विश्वस्य विशेष्यत्वं तदेदमुदाहरणं, विशेषणत्वे तु सूत्रेणैव सिद्धम्' इति । नागेशेन च विश्वशब्दस्य विशेष्यत्वासम्भवमाशङ्क्योक्तम्–'देव इत्युपक्रमे च तत्सम्भवः, विश्वं देवो यस्येति विग्रहः' इति, तस्यायमाशयः–यद्यपि देवशब्दस्य द्रव्यशब्दत्वेन तस्यैव विशेष्यत्वमुचितमिति विश्वशब्दस्य विशेष्यत्वं न सम्भवति, तथापि देवप्रश्नोपक्रमे विश्वं देवोऽस्येत्युत्तरे विश्वशब्दस्य विशेष्यत्वसम्भव इति । परं त्वग्रे 'सर्वादि-संख्ययोर्विशेषणत्वेऽपि' इति वृत्तिग्रन्थेनाचार्यस्य सर्वादेः सर्वत्रात्र प्रकरणे विशेषणत्वस्य स्पष्टप्रतिज्ञानात् तस्य [ विश्वशब्दस्य ] विशेषणत्वमेवेति स्वीकरणीयमुचितं प्रतिभाति । कैयटग्रन्थस्तु तत्रत्यप्रक्रियानुकूल इति नेहोदाहरणमर्हति, तत्र शास्त्रे सर्वनामसंख्ययोः सूत्रकृता पूर्वप्रयोगस्यानुक्ततया वार्तिकेन तत्पूरणवैयर्थ्यशङ्कापनोदाय तथा व्याख्यानस्यावश्यकत्वात् । स्वमतेन च विशेषणत्वेन सिद्धावपि सूत्रे तद्ग्रहणस्य शब्दपरविप्रतिषेधाश्रयणाच्च तथा स्वीकार उचितः । लघुन्यासग्रन्थस्तु कैयटानुसारी । सर्वं शुक्रमस्येत्यादौ नपुंसकत्वेन शुक्रशब्दमुच्चारयता, अग्रे द्वौ कृष्णौ गुणावस्येति विग्रहं प्रदर्शयता चाचार्येण सर्वादेर्विशेषणत्वस्य स्पष्टमभिलष्यमाणत्वात्, एवं विश्वामित्र इत्यत्रापि तथैवोन्नितम् । **उभयचेतनः** इति–उभयश्चेतनोऽस्येति बहु-

श्रीहिः । **द्वौ कृष्णौ गुणावस्येति** द्वयोः पदयोर्गुणवाचित्वेऽपि गुणगतसंख्याव्यवच्छेदकत्वाद् द्विशब्दस्य विशेषणत्वमेवेहापि । लघुन्यासकृतश्चेहापि द्विशब्दस्य विशेष्यत्वमाहुः, तच्च यद्यपि विवक्षावशात् सम्भवति तथापि परवृत्तिग्रन्थविरोधान्न प्रतीतिपदमारोहति । कैयटेनाप्यत्र द्विशब्दस्य विशेषणत्वानियमादेव पूर्वनिपाताप्राप्तिः कथिता, तथाहि-पूर्वोक्तवार्तिकोदाहरणे 'द्विपुत्रः, द्विभार्यः' इति भाष्यकृदाह, तत्र 'द्विपुत्र' इति, प्रतीकमादाय "दिक्प्रदर्शनमेतत्' अत्र हि विशेषणत्वादेव संख्यायाः सिद्धः पूर्वनिपातः, तस्माद् द्विशुक्ल इत्याद्युदाहरणम् ।" इति कैयट आह । तत्र नागेशो द्विशुक्ल इति प्रतीकमादाय 'अत्र हि द्वयोर्गुणवाचित्वादनियमो विशेषणत्वस्य' इत्याह । इत्थं च कथमपि विशेषणत्वानिर्णयः संख्यावाचके कैयटेन साध्यः, सूत्रेणासिद्ध्या वार्तिकसार्थक्याय तदनुकूलमिदं व्याख्यानं, स्वमते तु सूत्र एव सर्वमुपात्तम्, तस्य च स्पर्धे परविधिरूपं फलं मुख्यत एव वक्ष्यमाणमिति प्रक्रिययोर्भेदान्न सा रीतिरिह युक्ता । यद्यपि वृत्तौ 'द्वौ कृष्णौ गुणौ' इति विशिष्य कृष्णशब्दस्य गुणवाचकत्वख्यापनेन तदपेक्षया कदाचिद् द्विशब्दस्य विशेष्यवाचकत्वमपि सम्भवतीति तदभिप्रायं सम्भावयति, तथापि पूर्वापरग्रन्थाविरोधाय तस्य पूर्वोक्त एवाशयोऽवधारणीयः, द्विशब्दस्य गुणगतसंख्याव्यवच्छेदकत्वाद् विशेषणपरत्वम् । एवं चतुर्हस्तादावपि संख्यावाचकस्य विशेषणत्वमेव व्याख्येयम् । यद्यपि विशेषणविशेष्यभावस्य कामचारत्वमस्ति तथाप्याचार्यवचोऽनुकूलैव विवक्षोचिता । सर्वादिसंख्याग्रहणप्रयोजनमाह-**सर्वादिसंख्ययोर्विशेषणत्वेऽपीति**-पूर्वोक्तलक्ष्येषु सर्वत्र सर्वादेः संख्यायाश्चोत्तरपदव्यावर्तकतयैव प्रयोगाद् विशेषणत्वेनैव तयोरपि पूर्वनिपाते सिद्धेऽपि तयोः पृथगुपादानं सर्वादिसंख्ययोरुभयोरुपनिपाते संख्यायाः शब्दपरस्पर्धेन [ पूर्वोदाहृतरीत्या ] पूर्वनिपातविधानार्थं पृथक् तयोर्वचनम्, अन्यथा द्वयोर्विशेषणत्वाविशेषान्नियमो न स्यात् । यद्यपि सर्वाद्यपेक्षया संख्याया एव विशेषणसम्भवस्तथापि क्वचित् तन्निर्णयस्य कर्तुमशक्यत्वेन सर्वाद्यपेक्षयापि संख्याया एव पूर्वनिपातो यथा स्यादित्येतदर्थमेव पृथग्वचनमिति भावः । लघुन्यासकृतस्तु-"ननु सर्वादि-संख्याभ्यामारब्धेऽपि बहुव्रीहावन्यपदार्थस्यैव प्राधान्यात् तस्य च विशेष्यत्वादेतयोर्विशेषणत्वाद् विशेषणग्रहणेनैव भविष्यति, किमर्थं पृथगुपादानमित्याशङ्का" इति रीत्याऽस्य वृत्तिग्रन्थस्य सङ्गतिं कथयन्ति, तत् तु न चेतसि पदमादधाति, यतोऽन्यपदार्थं प्रति न सर्वादिसंख्ययोरेवापि तूभयपदस्यापि विशेषणत्वमक्षतमेव, तेन च कथं सर्वादेः संख्याया वा पूर्वनिपातव्यवस्था स्यात्, किन्तु समस्यमानपदयोर्मध्ये एव विशेषणविशेष्यभावमादाय विशेषणपूर्वनिपातोऽयं भवति, नान्यपदार्थनिरूपितविशेषणविशेष्यभावमादाय, अन्यपदार्थं प्रति समुदायस्यैव विशेषणत्वात् । तथा चास्मदुक्त एव प्रकृतवृत्तिग्रन्थाशय इति प्रतीयते । ईदृशं स्वोद्भाविताशयमवधार्य तैः सर्वशुक्ल इत्यादौ सर्वादीनां विशेष्यत्वं कथमुक्तमित्यपि विचारविषय एव । तथा च परस्परग्रन्थविरोधोऽपि तेषामिति विभावनीयं सूरिभिरिति ॥ ३. १. १५०. ॥

## क्तः । ३ । १ । १५१ ॥

**त० प्र०**-क्तप्रत्ययान्तं सर्वं बहुव्रीहौ पूर्वं निपतति । कृतः कटोऽनेन-कृतकटः, भिक्षितभिक्षः । क्तान्तस्य विशेषणत्वात् पूर्वेण सिद्ध्यति, विशेष्यार्थं तु वचनम्-कटे कृतमनेन-कृतकटः, स्पर्धे परत्वार्थं च-कृतभव्यकटः, कृतविश्वः । केचित् तु सर्वादिभ्यः क्तान्तस्य पूर्वं निपातं नेच्छन्ति-कृतचत्वारः । बहुवचनं व्याप्त्यर्थम्, तेन कृतप्रिय इत्यत्र परेणापि स्पर्धे क्तान्तस्यैव पूर्वनिपातः ॥ १५१ ॥

**श० म० न्यासानुसन्धानम्-क्तः** । बहुव्रीहौ पूर्वं निपततीति पूरणीयमनुवृत्त्या । क्तस्येह प्रत्ययस्यैव ग्रहणं प्रसिद्ध्या *प्रत्ययाप्रत्ययोः प्रत्ययस्यैव ग्रहणम् *इति न्यायेन च, प्रत्ययग्रहणे च तदन्तविज्ञानमित्याह-**क्तप्रत्ययान्तमिति** । 'असति बाधके उद्देश्यतावच्छेदकधर्मव्यापकत्वं विधेये भासते' इति स्वाभाविकनियममाश्रित्याह-**सर्वमिति** । **कृतः कटोऽनेनेति** विग्रहः, **कृतकटः** इति च समासः, कृत इति करोतेः क्तः, अत्र यदा कटस्य विशेष्यत्वं कृतस्य च विशेषणत्वं तदा "विशेषण०" इति पूर्वसूत्रेणैव पूर्वनिपातः सिध्यति, यदा तु कृतः कट इति कृतस्य विशेष्यत्वं कटस्य च विशेषणत्वं तदेदमुदाहरणम्, आकृतिपूर्वनिपातो जातिपरत्वे । अथैवं मन्येत गुणक्रियाशब्दयोर्द्रव्यापेक्षया विशेषणत्वमेव न विशेष्यत्वम्, कृतशब्दः क्रियाशब्दः कटशब्दश्च द्रव्यशब्द इति, यद्येवं नियमस्तदेदमुदाहरणम्-**भिक्षितभिक्षः** इति-भिक्षिता भिक्षाऽनेनेति विग्रहः, अत्र हि द्वावपि क्रियाशब्दौ, अथात्रापि क्तान्तार्थो विशेषणत्वेनैवावतिष्ठते भिक्षार्थश्च विशेष्यत्वेनेति विभाव्यते तदोदाहरणान्तरमवतारयन्नाह-**क्तान्तस्य विशेषणत्वात् पूर्वेण सिध्यति, विशेष्यार्थं तु वचनमिति**-असति बाधके कृत्तद्धितान्तयोर्विशेषणत्वमेव दृष्टमिति पूर्वोक्तोदाहरणयोर्विशेषणत्वेनैव पूर्वनिपातो यद्यपि सिध्यति, तथापि यत्र क्तान्तस्य विशेष्यत्वमेव तत्रापि तस्यैव पूर्वनिपातो यथा स्यादित्येतदर्थं सूत्रमावश्यकमिति परत्वाद् विशेषणत्ववति क्तान्तेऽपि प्रवर्तेत एवेत्याशयेन पूर्वोदाहरण-

द्वयमसाधारणमुदाहरणं चाग्रे वक्ष्यत इति भावः। तदेवाह–**कटे कृतमनेन कृतकटः** इति–अत्र च यद्यपि न केनापि सूत्रेण विशिष्य बहुव्रीहिसमासप्राप्तिः "एकार्थं चानेकं च" [३. १. २२.] इति सूत्रस्य समानाधिकरणेष्वेव प्रवृत्तेः, तथापि "न सप्तमीन्द्वादिभ्यः" [३. १. १५५.] इति सूत्रेण सप्तम्यन्तस्येन्द्वादिभ्यः पूर्वनिपातनिषेधकेन व्यधिकरणानामपि बहुव्रीहिरिति ज्ञापनेन समासो विधेयः, उष्ट्रमुखादिकल्पनाद् वा, एवमादिषु समासो बोध्यः, तथाहि–सप्तम्यन्तस्य व्यधिकरणत्वेन तस्य बहुव्रीहिसमासे प्रवेशासम्भवेन 'इन्दुमौलिः' इत्यादिप्रयोगाणामेवासिद्धिरिति तदर्थं सप्तम्यन्तस्य पूर्वनिपातनिषेधकं सूत्रमिदं व्यर्थमेव, ज्ञापिते च व्यधिकरणसमासे इन्दुर्मौलावस्येति विग्रहे मौलिपदस्य विशेषणत्वेन तस्य पूर्वनिपाते प्राप्ते निषेधस्य सार्थक्यं भवति। तथा "विशेषणसर्वादिसंख्यं बहुव्रीहौ" [३. १. १५०.] इति सूत्रे विशेषणपदं समानाधिकरणव्यधिकरणोभयविधव्यावर्तकपरमित्यपि सप्तम्यन्तस्य पूर्वनिपातनिषेधकात् "न सप्तमीन्द्वादिभ्यः" [३. १. १५५.] इति सूत्रादेव विज्ञायते। उक्तविग्रहे 'कटे' इति विशेषणं 'कृतम्' इति क्तान्तं च विशेष्यमेव, सप्तम्यर्थो हि सर्वदा स्वाधारस्य विशेषणत्वेनैव प्रतीयते। फलान्तरमप्याह–**स्पर्धे परत्वार्थं चेति**–त्रिपदसमासे पूर्वोत्तरपदार्थे विशेषणद्वयं, क्तान्तं तदतिरिक्तं च, तत्र कस्य पूर्वनिपात इत्यनियमे प्राप्ते परत्वात् क्तान्तस्य पूर्वनिपातार्थमपि सूत्रमिदमावश्यकमिति भावः। तथोदाहरति–**कृतभव्यकटः** इति–कृतो भव्यः कटोऽनेनेति विग्रहः, अत्र कटे विशेषणद्वयं–कृत इति क्तान्तं भव्येति तदतिरिक्तं च, तत्रोभयोर्विशेषणत्वेनाविशेषेऽपि कृतशब्दस्य क्तान्तत्वेनानेन परत्वात् तस्य पूर्वनिपातो भवति। किञ्च यत्र विशेषण-सर्वाद्योरेकत्रोपनिपातस्तत्र पूर्वसूत्रेण शब्दपरस्पर्धेन सर्वादेः पूर्वनिपातप्रसक्त्याऽनेन परत्वात् क्तान्तस्य पूर्वनिपातो विधीयते, यथा–**कृतविश्वः** इति–कृतं विश्वमनेनेति विग्रहः। अत्र क्तान्तस्य विशेषणत्वे विश्वस्य च विशेष्यत्वेऽपि पृथक् सर्वादिग्रहणेन पूर्वसूत्रेण तस्य पूर्वनिपातप्राप्तौ कृतशब्दस्य क्तान्तस्यानेन परत्वात् पूर्वनिपातः क्रियत इति भावः। यदि च पूर्वत्र भव्य-कटयोः कर्मधारयं विधाय पश्चात् कृतशब्देन सह बहुव्रीहिर्विधीयेत तदा पूर्वस्य [कृतभव्यकट इत्यस्य] एतत्सूत्रोदाहरणत्वं न सम्भवति पूर्वसूत्रेणापि निर्वाहात्, कृतविश्व इत्येव स्पर्धोदाहरणं बोध्यम्। अत्र मतान्तरमाह–**केचित् त्वित्या**दिना। संख्यापेक्षयापि क्तान्तस्य पूर्वनिपातमुदाहरति–**कृतचत्वारः** इति–कृताश्चत्वारोऽनेनेति विग्रहः, इदमपि स्पर्धे परत्वार्थमित्यस्यैवोदाहरणम्, प्रकृतसूत्राभावे तु पूर्वसूत्रेण विशेष्यस्यापि संख्यावाचकस्य पूर्वनिपातापत्तेः। 'क्ताः' इत्येकवचननिर्देशेनैव क्तान्तस्य पूर्वप्रयोगे सिद्धे 'क्ताः' इति बहुवचनं व्यर्थमिति चेत्? अत्राह–**बहुवचनं व्याप्त्यर्थमिति**–व्याप्तिरविषयेऽपि–अपवादविषये प्रवृत्तिः, तदर्थमित्यर्थः, तथा च परसूत्रविषयेऽप्यस्य क्वचित् प्रवृत्तिरिति भावः। अयमाशयः–अनेन सूत्रेण सर्वस्य क्तान्तस्य पूर्वनिपातो विहितः, परेण च जातिकालसुखादेः क्तान्तस्य वैकल्पिकः पूर्वप्रयोगो विधीयते, तथा च तस्य पक्षे प्रकृतसूत्रबाधकत्वं पर्यवस्यति, अनवकाशेन तेनात्र सूत्रे स्वविषयातिरिक्तत्वेन संकोचात्, किन्तु बहुवचनसामर्थ्याल्लक्ष्यानुरोधाच्च प्रियादीतरसुखादेरेव पूर्वं क्तान्तस्य वैकल्पिको निपात इति विज्ञायते इति कृतप्रिय इत्येव भवति, न तु प्रियकृत इति। अयमाशयः–"स्पर्धे" [७. ४. ११९.] इति सूत्रेऽनुवृत्तं परपदं परपठितशास्त्रबोधकमपि क्वचिल्लक्ष्यानुरोधाद् विनिगमकवशाच्च इष्टार्थबोधकमपि स्वीक्रियते, प्रकृतसूत्रे 'क्ताः' इति बहुवचननिर्देशेनास्य व्यापकत्वे लब्धेऽपवादविषयेऽपि क्वचित् प्रवृत्तिरिष्टेति विज्ञायते, तथा च प्रियशब्दात् पूर्वमेव कृतशब्दस्य प्रयोग इष्ट इति परसूत्रं प्रबाध्य तदेव भवतीति ॥ ३. १. १५१. ॥

## जाति-काल-सुखादेर्नवा। ३। १। १५२॥

**त० प्र०**–जातिवाचिभ्यः कालवाचिभ्यश्च सुखादिभ्यश्च शब्दरूपेभ्यो बहुव्रीहौ समासे क्तान्तं वा पूर्वं निपतति। जाति–**शार्ङ्गरजग्धी, जग्धशार्ङ्गरा; पलाण्डुभक्षिती, भक्षितपलाण्डुः; पाणिगृहीती, गृहीतपाणिः; कटकृतः, कृतकटः।** व्यक्तिविवक्षायां तु "क्ताः" [३. १. १५१.] इत्यनेन कृतकट इत्यादेव भवति। अन्ये तु–आकृतिव्यङ्ग्यजातिवाचिन एव क्तान्तस्य पूर्वनिपातमिच्छन्ति, तेनेह न भवति–**आहूतब्राह्मणः, सेवितक्षत्रियः, तर्पितदाक्षिः, प्रीणितकठः;** काल–**मासयाता, यातमासा; संवत्सरयाता, यातसंवत्सरा; मासगतः, गतमासः।** सुखादयो दश क्यन्विधौ निर्दिष्टाः–**सुखयाता, यातसुखा; हीनदुःखा, दुःखहीना; तृप्तोत्पन्ना, उत्पन्नतृप्ता।** 'सुख दुःख तृप्र कृच्छ्र अस्र अलीक करुण कृपण सोढ प्रतीप' इति सुखादिः॥ १५२॥

**श० म० न्यासानुसन्धानम्**–जाति०। जातिशब्दः कालशब्दश्चार्थपरः, तत्रार्थे कार्यासम्भवात् तद्वाचिनि प्रतिपत्तिर्भवतीति आह–**जातिवाचिभ्यः** इति–जातिपुरस्कारेण तज्जातीयव्यक्तिवाचिभ्य इति भावः, **कालवाचिभ्यः** इति–कालशब्दोऽत्र कालविशेषपरः, तथा च कालविशेषवाचिभ्य इत्यर्थः, सुखादिशब्दः स्वरूपपर इत्याह–**सुखादिभ्यश्च शब्दस्वरूपेभ्यः** इति। **शार्ङ्गरजग्धी, जग्धशार्ङ्गरा**

इति–शाङ्गरो जग्धोऽनयेति विग्रहः, "शाङ्गरस्य वृक्षस्य विकारः फलं "दोरप्राणिनः" [ ६. २. ४९. ] इति मयट्, "फले" [ ६. २. ५८. ] लुक्, शाङ्गरं जग्धमनया" इति लघुन्यासकृतः । अत्तेः क्ते "यपि चादो जग्ध्" [ ४. ४. १६. ] इति जग्धादेशः, अत्र क्तान्तस्य परनिपाते "अनाच्छादजात्या०" [ २. ४. ४७. ] इति स्त्रियां ङ्यां–शाङ्गरजग्धी, यदा तु पूर्वनिपातस्तदा स्त्रियामापि–जग्धशाङ्गरा, फलवाचकत्वादत्र शाङ्गरशब्दस्य जातिवाचित्वम् । **पलाण्डुभक्षिती, भक्षितपलाण्डुः** इति–पलाण्डु भक्षितमनयेति विग्रहः, भक्षयतेः क्ते–'भक्षित' इति, शेषं प्राग्वज्ज्ञेयम् । **पाणिगृहीती, गृहीतपाणिः** इति–पाणिर्गृहीतोऽस्या इति विग्रहः, भार्याया हि विवाहाय पाणिरग्निसाक्षिको गृह्यते, गृह्णातेः क्ते "गृह्णोऽपरोक्षायाम्०" [ ४. ४. ३४. ] इतीटो दीर्घत्वे 'गृहीत' इति, अत्र क्तान्तस्य परप्रयोगे "पाणिगृहीति" [ २. ४. ५२. ] इति ङ्यन्तनिपातने–पाणिगृहीती, यदा क्तान्तस्य पूर्वनिपातस्तदा–गृहीतपाणिरिति; अत्र केचित्–"यद्यपि भार्यार्थे ऊढायां स्त्रियां "पाणिगृहीतीति" [ २. ४. ५२. ] इति पाणिगृहीतीति निपातित इति संज्ञाशब्दोऽयमित्यत्र वैकल्पिकप्रयोगो नोचितः, तथा च भार्यायां पाणिगृहीतीत्येकमेव, अन्यत्र पाणिगृहीता गृहीतपाणिरिति विकल्प्य प्रयोग उदाहार्य इति प्रतिभाति, तथाप्याचार्यलेखप्रामाण्येन भार्यायामपि प्रयोगद्वयमिति प्रतीयते" इत्याहुः । अपरे त्वेवमाहुः–"पाणिगृहीतीति" [ २. ४. ५२. ] इति सूत्रेण "पाणिगृहीत' इति दशायां भार्यार्थे ङीरेव निपात्यते, न समासो न वा पाणिशब्दस्य पूर्वप्रयोगः, अत एव तदीयबृहन्न्यासे प्रकृतसूत्रेण प्राग् निपातो दर्शितः–"जाति-काल०" इति 'जातेः पूर्वनिपातः' इति; तथा च क्तान्तपूर्वनिपाते 'गृहीतपाणि' इति जाते सति 'पाणिगृहीत' इति दशैव नास्तीति तद्विषयत्वाभावान्नित्यचर्चैव नोद्भवतीति प्रतीतिपथमायातीति । **कटकृतः कृतकटः** इति–कृतः कटोऽनेनेति विग्रहः । पूर्वसूत्रे कृतकट इत्युदाहृतत्वेन तत्र नित्यमेव क्तान्तस्य पूर्वप्रयोगः कृत इति कथमिह विकल्पेनोदाह्रियत इत्याशङ्कायामाह–**व्यक्तिविवक्षायां तु "क्तः" इत्यनेन कृतकट इत्याद्येव भवतीति**–यदा कटशब्दो न जातिपरोऽपि तु व्यक्तित्वेन विवक्षितस्तदा पूर्वसूत्रस्यैव प्रवृत्तिरिति भावः । मतान्तरमाह–**आकृतिव्यङ्ग्यजातिवाचिन एव क्तान्तपूर्वनिपातमिच्छन्तीति**–ते हि जातिस्थाने आकृतिशब्दं पठन्ति–"कालाकृतिसुखादिभ्यो वा" इति, अत्र केचित्–आकृतिशब्द इह न संस्थानपरः, अपि तु आक्रियन्ते एकरूपा इव क्रियन्ते समानप्रत्ययाभिधानविषयाः क्रियन्तेऽनयेत्याकृतिः, जातिरुच्यते । अत्रैवापरे एवमाहुः–लघुजातिग्रहणमकृत्वा आकृतिग्रहणमाकृतिः संस्थानमुपचारात्, तया व्यङ्ग्या जातिर्गोत्वादिस्तस्या इह परिग्रहो यथा स्यादिति । अयमाशयः–व्याकरणे जातेस्त्रिधा विभागः कृतः, तदुक्तं "जातेरयान्त०" [२. ४. ५४.] इति सूत्रे–"यदाहुः–

"आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥" इति ।

व्याख्याता चेयं कारिका तत्रैव बृहद्वृत्तौ संक्षेपेण, तथाहि–"तत्र जातिः काचित् संस्थानव्यङ्ग्या, यथा गोत्वादि; सकृदुपदेशव्यङ्ग्यत्वे सति अत्रिलिङ्गाऽन्या, यथा ब्राह्मणत्वादिः; गोत्र-चरणलक्षणा च तृतीया" इति । तत्रानुगतसंस्थानरूपाकृतिव्यङ्ग्याया एव जातेरिह सूत्रे तन्मतेन ग्रहणं, न तु द्वितीय-तृतीयप्रकारायाः । एवं च ब्राह्मणादीनां सकृदाख्यातनिर्ग्राह्याणां, दाक्ष्यादीनां गोत्राणां, कठादीनां शाखावाचिनां च नात्र ग्रहणमिति नित्यमेव पूर्वसूत्रेण क्तान्तस्य पूर्वनिपातो भवतीति सिध्यति । तदाह–**तेनेह न भवति–आहूतब्राह्मणः** इत्यादि–आहूतो ब्राह्मणोऽनेनेति विग्रहः, आङ्पूर्वस्य ह्वयतेः क्ते आहूत इति, सेवितः क्षत्रियोऽनेनेति–सेवितक्षत्रियः, सेव्धातोः क्ते सेवित इति, ब्राह्मणादिजातिश्चोपदेशादिगम्या, न तु संस्थानव्यङ्ग्या । एवं-तर्पितो दाक्षिरनेनेति–**तर्पितदाक्षिः,** दक्षस्यापत्यं दाक्षिः, अत्र गोत्रलक्षणा जातिर्न संस्थानव्यङ्ग्या, तृप्यतेः क्ते तर्पित इति । प्रीणितः कठो येन सः–**प्रीणितकठः,** प्रीधातोः क्ते प्रीणित इति, कठेन प्रोक्तमधीत इति कठः, अत्र चरणलक्षणा जातिर्न संस्थानव्यङ्ग्या । अथ कालप्रयोगमुदाहर्तुमवतारयति–**कालेति,** मासो यातोऽस्या इति–**मासयाता, पक्षे यातमासा** । अत्र कालो न जातिः, अत एव "अनाच्छादजात्यादेर्नवा" [ २. ४. ४७. ] इति न ङीः, महाभाष्ये तु मासजातेति पठ्यते, तत्र "कालो द्विगौ च मेयैः" [ ३. १. ५७. ] इत्यनेनापि सिद्धिरिति यातशब्दस्यैवेह समासो विहितः, अर्थे तु न कश्चिद् विशेषः, मासो जातोऽस्येति विग्रहेऽपि यस्य जातस्य मासो व्यतिक्रान्त इत्यर्थो बुध्यते, मासो यातोऽस्येत्यर्थे च यस्य मासोऽतिक्रान्त इति जन्मनो न तत्र शब्दगत्या भानम्, अर्थतस्तु भानमस्त्येव । यातः संवत्सरोऽस्या इति–**यातसंवत्सरा,** गतो मासोऽस्येति–**गतमासः,** पक्षे–**यातसंवत्सरा, गतमासः** । सुखादिरिह गणो निर्दिश्यते, अन्यत्रापि तन्निर्देशो दृश्यते, तत्रैक्यं भेदो वेति शङ्कामपाकुर्वन्नाह–**सुखादयो दश क्यङ्विधौ निर्दिष्टाः** इति–"सुखादेरनुभवे" [ ३. ४. ३५. ] इति सूत्रे इति भावः । सुखं यातमस्याः–**सुखयाता, यातसुखा** । दुःखं हीनमस्याः–

**हीनदुःखा, दुःखहीना** । उत्पन्नं तृप्रं दुःखमस्या इति–**तृप्रोत्पन्ना, उत्पन्नतृप्रा** । सुखादीन् नामग्राहमाह–**सुखदुःखे**त्यादि ॥ ३. १. १५२. ॥

## आहिताग्न्यादिषु । ३ । १ । १५३ ॥

**त० प्र०–आहिताग्न्यादिषु बहुव्रीहिसमासेषु क्तान्तं वा पूर्वं निपतति । आहितोऽग्निर्येन स–आहिताग्निः, अग्न्याहितः; जातपुत्रः, पुत्रजातः, जातदन्तः, दन्तजातः; जातश्मश्रुः, श्मश्रुजातः; पीततैलः, तैलपीतः; पीतघृतः, घृतपीतः; पीतमद्यः, मद्यपीतः; पीतविषः, विषपीतः; ऊढभार्यः, भार्योढः; गतार्थः, अर्थगतः; छिन्नशीर्षः, शीर्षच्छिन्नः । बहुवचनमाकृतिगणार्थम्, तेन पीतदधिः, दधिपीत इत्यादयोऽपि भवन्ति ॥ १५३ ॥**

**श० म० न्यासानुसन्धानम्–आहिता०** । यद्यप्याहिताग्न्यादिषु बहवो जातिवाचकैकपदकबहुव्रीहयः पठ्यन्ते, तत्र च पूर्वसूत्रेणैव विकल्पः सिद्धस्तथापि व्यक्तिपरत्वविवक्षायां क्तान्तस्य नित्यं पूर्वनिपातं वारयितुं तेषां पाठ इति ज्ञेयम् । **आहितोऽग्निर्येन स** इति विग्रहः, आहितः–आधानसंस्कारेण संस्कृतोऽग्निर्येनेत्यर्थः, तथा च नाग्नित्वेनाग्नेराधानं भवति किन्त्वाहवनीयादितत्तद्व्यक्तित्वेनेति नात्र पूर्वसूत्रेण सिद्धिरिति विज्ञेयम् । **आहिताग्नि**रिति समासः, पक्षे च–**अग्न्याहितः** । जातः पुत्रोऽस्य–**जातपुत्रः, पुत्रजातः** । जाता दन्ता अस्य–**जातदन्तः, दन्तजातः** । जातं श्मश्रु अस्य–**जातश्मश्रुः, श्मश्रुजातः** । पीतं तैलमनेन–**पीततैलः, तैलपीतः** । पीतं घृतमनेन–**पीतघृतः, घृतपीतः** । पीतं मद्यमनेन–**पीतमद्यः, मद्यपीतः** । पीतं विषमनेन–**पीतविषः, विषपीतः** । ऊढा भार्याऽनेन–**ऊढभार्यः, भार्योढः** । गतोऽर्थोऽस्य–**गतार्थः, अर्थगतः** । छिन्नं शीर्षं यस्य–**छिन्नशीर्षः, शीर्षच्छिन्नः** । लाघवादेकवचनेन निर्देश उचित इति बहुवचननिर्देशः सूत्रे व्यर्थ इति चेत्? अत्राह–**बहुवचनमाकृतिगणार्थ**मिति–ये शब्दा अत्र पठितास्तदाकृतयोऽन्येऽपि सति शिष्टप्रयोगेऽत्रैव गणनीया इति बोधयितुमित्यर्थः । तेन संग्राह्यानाह–**तेन पीतदधिः, दधिपीत इत्यादयोऽपि भवन्तीति**–पीतं दधि येनेति विग्रहः, 'इत्यादयोऽपि' इत्यत्रादिशब्देन चारुस्मित–चारुहसितादयोऽप्यत्र द्रष्टव्या इति सूचयति । वस्तुतस्तु चारुस्मित इत्यादौ न विकल्पः स्मितचारुरित्यादिप्रयोगानुपलब्धेः, तथा च तत्र नपुंसके भावे क्तः, कर्म-कर्तृविहितस्यैव क्तान्तस्य "क्तः" [ ३. १. १५१. ] इति सूत्रे ग्रहणं व्याख्यानादिति विभावनीयम्, प्रतिपादितं चैतत् तत्त्वबोधिनीकृता बहुव्रीहिप्रकरणशेषे; अत एव च प्रसिद्धा अपि तादृशाः प्रयोगा नेहोदाहृता इति बोध्यम् ॥ ३. १. १५३. ॥

## प्रहरणात् । ३ । १ । १५४ ॥

**त० प्र०–प्रहरणवाचिनः शब्दात् क्तान्तं बहुव्रीहौ वा पूर्वं निपतति । उद्यतोऽसिरनेन–उद्यतासिः, अस्युद्यतः; कलितप्रहरणः, प्रहरणकलितः; उत्खातखड्गः, खड्गोत्खातः; आकृष्टधन्वा, धनुराकृष्टः; उद्यतमुशलः, मुशलोद्यतः ॥ १५४ ॥**

**श० म० न्यासानुसन्धानम्–प्रहरणात्** । सूत्रे प्रहरणशब्दो न स्वरूपपरोऽपि त्वर्थपरः, अर्थे च कार्यासम्भवात् तद्वाचिनि प्रत्यय इत्याह–**प्रहरणवाचिनः** इति–प्रहरणशब्दः करणसाधनो भावसाधनश्च, प्रह्रियतेऽनेनेति प्रहरणम्, प्रहारो वा प्रहरणमिति, तत्र भावसाधनस्य न ग्रहणमपि तु करणसाधनस्यैव लक्ष्यानुरोधात्, तत्र येन प्रहारः क्रियते तादृशोऽस्यादिरपि प्रहरणार्थः, प्रहरणशब्दोऽपि प्रहरणसामान्यार्थ इति सामान्य-विशेषयोरुभयोर्ग्रहणमिहाभिप्रेतं तथैवोदाहरणात् । **उद्यतोऽसिरनेने**ति विग्रहः, **उद्यतासिः, अस्युद्यतः** इति समासस्वरूपद्वयं विकल्पेन पूर्वनिपातकरणात् अत्र "क्तः" [ ३. १. १५१. ] इत्युद्यतस्य पूर्वनिपाते प्राप्तेऽसेः प्रहरणस्य वा पूर्वनिपातः । एवं–कलितं प्रहरणमस्येति–**कलितप्रहरणः, प्रहरणकलितः** । उत्खातः खड्गोऽनेनेति–**उत्खातखड्गः, खड्गोत्खातः** । आकृष्टं धनुर्येन स–**आकृष्टधन्वा, धनुराकृष्टः,** पूर्वत्र "धनुषो धन्वन्" [ ७. ३. १५८. ] इति 'धन्वन्' इत्यादेशः । उद्यतं मुशलमनेनेति–**उद्यतमुशलः, मुशलोद्यतः** । ननु प्रहरणशब्दा एतेऽसिप्रमुखा जातिशब्दा भवन्ति, तत्र किं "जातिकालसुखादेर्नवा" [ ३. १. १५२. ] इति जाति-ग्रहणान्न भवति, कथमिदमुदाहरणमस्युद्यत इत्यादि, उच्यते–जातिशब्दाः कदाचिज्जातिमाहुः, यथा गौर्न पदा स्प्रष्टव्येति, कदाचिच्च व्यक्तिम्, यथा महति गोमण्डले कश्चित् कश्चिदाह–दृष्टा गौरिति, तत्र यदाऽस्यादयो व्यक्तिमाहुस्तदा तेन न सिध्यति, जातिपरत्वे तद् विज्ञायते, तदेदमुदाहरणम्, यदा ते जातिमाहुस्तदा तेनैव सिध्यतीति नोदाहरणम् । तथा च व्यक्तिविवक्षायां क्तान्तस्य वैकल्पिकपूर्वनिपातार्थमिति भावः । ननु तथापि "जातिकाल०" [ ३. १. १५२. ] इति सूत्र एव प्रहरणशब्दोऽपि पठनीयः, किमिति पृथक् सूत्रमारभ्यत इति चेत्? सत्यम्–उत्तरसूत्रे चकारेणानुकर्षणार्थमेव पृथग्योगारम्भ इति जानीहि । अत्र पदमञ्जरीकारो व्यवस्थितविकल्पमाह, तथा च क्वचित् प्रहरणार्थात् क्तान्तस्य नित्यमेव पूर्वनिपातः, यथा

विवृतासिरिति, अत्रासिविवृत इति प्रयोगो न भवति, अत एव सिद्धान्तकौमुद्यां दीक्षितेन 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति वार्तिकव्याख्यायां 'क्वचिन्न विवृतासिः' इत्युक्तम्, तत्त्वबोधिनीकृता च 'आहिताग्न्यादित्वकल्पनादनभिधानाद् वा' 5 इति तदुपपत्तिरुक्ता, तथा च पदमञ्जरीकारस्यापि स एवाभिप्राय इति गम्यते ॥ ३. १. १५४. ॥

## न सप्तमीन्द्वादिभ्यश्च । ३ । १ । १५५ ॥

**त० प्र०**–नञुपादानाद् 'वा' इति न संबध्यते, इन्द्वादेः प्रहरणवाचिनश्च शब्दात् पूर्वं सप्तम्यन्तं न निपतति बहु- 10 व्रीहौ । इन्दुर्मौलौ यस्य–इन्दुमौलिः, चन्द्रमौलिः, शशिशेखरः, पद्मनाभः, ऊर्णनाभः, पद्महस्तः, शङ्खपाणिः, दर्भपवित्रपाणिः, पद्मपाणिः, इत्यादि । प्रहरणात्–असिः पाणावस्य–असिपाणिः, दण्डपाणिः, चक्रपाणिः, शूलपाणिः शार्ङ्गपाणिः, धनुष्पाणिः, धनुर्हस्तः, पाशहस्तः, खड्गहस्तः, वज्रहस्तः, वज्रपाणिः । बहु- 15 लाधिकारात् 'पाणिवज्रः, हस्तवज्रः' इत्यत्र पूर्वनिपातोऽपि । बहुवचनं प्रयोगाऽनुसरणार्थम्, एवमुत्तरत्रापि ॥ १५५ ॥

**श० म० न्यासानुसन्धानम्–न सप्तमी०** । पूर्वोक्तविकल्पस्यानुवृत्त्या तस्यैव निषेधे नित्यमेव सप्तम्यन्तस्य पूर्वनिपात इत्यर्थो गम्येतेति तद्वारणायाह–**नञुपादानाद् वेति न** 20 **सम्बध्यते** इति, अयमाशयः–नवाशब्देन पूर्वत्र विकल्प उक्तः, तेन च पूर्वं वेधिं निषिध्य विकल्पो विधीयते, इह च निषेधमात्रं नशब्देन विधीयत इति निषेधरूपविषयभेदात् प्रकरणभेदावगतौ पूर्वसूत्रसम्बन्धाभावबोधनाद् 'वा' इत्यस्य न सम्बन्ध इति । "प्रहरणात्" इति पूर्वसूत्रमिहानुवर्तते चानुकृष्ट- 25 त्वात्, ततश्च योऽर्थः सम्पन्नस्तमाह–**इन्द्वादेः प्रहरणवाचिनश्चेति**–इन्द्वादयोऽत्र न गणे पठ्यन्ते, ते चोदाहियमाणप्रयोगानुसारं बहुवचनेनाकृतिगणत्वाच्च प्रत्येयाः । **इन्दुर्मौलौ यस्येति** विग्रहः, **इन्दुमौलिरिति** चोष्ट्रमुखादित्वादस्मादेव ज्ञापकाद् वा समासः, अत्र सप्तम्यन्तस्य विशेषणत्वात् 30 "विशेषण-सर्वादि-संख्यं बहुव्रीहौ" [ ३. १. १५०. ] इति पूर्वनिपातप्राप्तिर्निषिध्यते इति परिशेषात् प्रथमान्तस्य पूर्वनिपातः, एवं समास-पूर्वनिपातरीतिरुत्तरत्रापि विज्ञेया । चन्द्रो मौलौ यस्येति–**चन्द्रमौलिः** । शशी शेखरे यस्येति–**शशिशेखरः** । पद्मं नाभौ यस्येति–**पद्मनाभः**, अत्र "नाभेर्नाम्नि" 35 [ ७. ३. १३४. ] इति समासान्तोऽत्, "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इतीकारलोपश्च । ऊर्णा नाभौ यस्येति–**ऊर्णनाभः**, अत्र "ङ्यापो बहुलम्०" [ २. ४. ९९. ] इति पूर्वपदस्य ह्रस्वः, प्राग्वदत् समासान्त इलोपश्च । पद्मं हस्तेऽस्येति–**पद्महस्तः** । शङ्खः पाणावस्येति–**शङ्खपाणिः** । दर्भेण पवित्रं दर्भपवित्रं, दर्भपवित्रं पाणावस्येति–**दर्भपवित्रपाणिः** । पद्मं 40 पाणावस्येति–**पद्मपाणिः** । अथ प्रहरणात् पूर्वं सप्तम्यन्तस्य निपाताभावं दर्शयितुमाह–**प्रहरणादिति** । **असिः पाणावस्येति** विग्रहः, **असिपाणिरिति** समासः, अत्रापि सप्तम्यन्तस्य विशेषणतया प्राप्तः पूर्वनिपातो निषिध्यते, एवमुत्तरत्रापि विज्ञेयम्, दण्डः पाणावस्येति–**दण्डपाणिः** । चक्रं पाणा- 45 वस्येति–**चक्रपाणिः** । शूलं पाणावस्येति–**शूलपाणिः** । शार्ङ्गं चापं पाणावस्येति–**शार्ङ्गपाणिः** । धनुः पाणावस्येति–**धनुष्पाणिः** । धनुर्हस्तेऽस्येति–**धनुर्हस्तः** । पाशो हस्तेऽस्येति **पाशहस्तः** । खड्गो हस्तेऽस्येति–**खड्गहस्तः** । वज्रं हस्तेऽस्येति–**वज्रहस्तः** । वज्रं पाणावस्येति–**वज्रपाणिः** । 50 क्वचिदेतादृशस्थले सप्तम्यन्तस्यापि पूर्वनिपातो दृश्यते, तत्र कथं न निषेध इत्याशङ्कामपाकुर्वन्नाह–**बहुलाधिकारात् 'पाणिवज्रः, हस्तवज्रः' इत्यत्र पूर्वनिपातोऽपीति**–बहुलमिति समासप्रकरणादावेव "नाम नाम्नैकार्थ्ये समासो बहुलम्" [ ३. १. १८. ] इति सूत्रे पठितं सर्वत्र सम्बध्यते, बाहुलकं 55 च चतुर्विधमुक्तमभियुक्तैः–

> "क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः
> क्वचिद् विभाषा क्वचिदन्यदेव ।
> विधेर्विधानं बहुधा समीक्ष्य
> चतुर्विधं बाहुलकं वदन्ति ॥" इति । 60

तथा च पाणिवज्र इत्येवमादिषु प्रकृतसूत्रं न प्रवर्तते, ततश्च पूर्वसूत्रेण विकल्पेन पूर्वप्रयोगः सिध्यतीति वज्रपाणिः पाणिवज्र इत्युभयविधोऽपि प्रयोगः साधुः, बहूनर्थान् लाति आददातीति व्युत्पत्त्या बहुलशब्दस्य तादृशानेकार्थप्रत्यायकत्वसामर्थ्यात् । "न सप्तमीन्द्वादेः" इत्येकवचनान्त एव निर्देशो लाघवादस्तु, 65 बहुवचनान्तप्रयोगोऽत्र व्यर्थ इति चेत्? अत्राह–**बहुवचनं प्रयोगानुसरणार्थमिति**–शिष्टप्रयोगाननुसृत्य तत्र दृष्टस्य विधेयस्य विधानार्थमिति भावः । तथा चापठिता अपि प्रयोगा एतत्सूत्रलक्ष्यतायोग्याश्चेदत्र गणे कल्पनीयस्तेषां पाठ इति भावः । न केवलमिहैवैतदर्थं बहुवचनमपि तूत्तरसूत्रेऽप्यपठित- 70 संग्रहार्थमित्याह–**एवमुत्तरत्रापीति** । अन्ये वैयाकरणा ईदृशं सूत्रं नारभन्ते, ते हि आहिताग्निप्रभृतिष्वेवैवमादीनपि शब्दानाकृतिगणत्वेन संगृह्णन्ति, तदपेक्षया यावदेव सूत्रसम्बद्धमुपपादितं तावदेव बहु, ततोऽवशिष्टं बहुवचनबलसाध्यमिति तत्त्वम् ॥ ३. १. १५५. ॥ 75

## गड्वादिभ्यः । ३ । १ । १५६ ॥

**त० प्र०**–'वा'इत्यनुवर्तते, गड्वादिभ्यः शब्देभ्यो बहुव्रीहौ सप्तम्यन्तं वा पूर्वं निपतति । गडुः कण्ठे यस्य-गडु-

**कण्ठः, कण्ठे गड्डुः; एवं-शिरसिगड्डुः, गड्डुशिराः; शिरस्यरुः, अरुःशिराः; मध्येगुरुः, गुरुमध्यः; अन्तेगुरुः, गुर्वन्तः । व्यवस्थितविभाषया वहेगड्डुरित्येव भवति ॥ १५६ ॥**

**श० म० न्यासानुसन्धानम्-गड्वा० । वेत्यनुवर्तते** इति-पृथग्योगारम्भादिति भावः, अन्यथा पूर्वसूत्र एव गड्वादि-ग्रहणे कृते सप्तम्याः पूर्वप्रयोगनिषेधः कृतः स्यात्, पृथग्योगा-न्निषेधसम्बन्धाभावः सूचितः, निषेधसामर्थ्यादेव च पूर्वसूत्रे वेत्यनुवृत्तेरभावः साधितः, निषेधसम्बन्धाभावे चेह तदनुवृत्तिः सिद्धा भवति, तथा च निषेधविकल्प-विधिविकल्पयोः फले भेदाभावेऽपि विधिविकल्प एव स्वीकृतः, तदाह-**पूर्वं वा निपततीति** । गड्वादयः प्रयोगगम्याः, येषां शिष्टप्रयोगे बहुव्रीहौ सप्तम्याः पूर्वनिपातो दृश्यते ते गड्वादयः । गड्डुर्मांसग्रन्थिः, **गड्डुः कण्ठे यस्येति** विग्रहेण कण्ठ इति सप्तमीं दर्शयति, **कण्ठेगड्डुः, गड्डुकण्ठः** इति वैकल्पिकपूर्वनिपातप्रयुक्तं समासस्वरूपद्वयम् । अतिदिशति-**एवमिति**, गड्डुः शिरसि यस्येति-**शिरसिगड्डुः, गड्डुशिराः** । अरुर्मर्मस्थानं, तत् शिरसि यस्येति-**शिरस्यरुः, अरुःशिराः** । गुरुर्मध्ये यस्येति-**मध्येगुरुः, गुरुमध्यः** । गुरुरन्ते यस्येति-**अन्तेगुरुः, गुर्वन्तः** । एषु सर्वत्रोष्ट्रमुखादित्वात् समासः, एवं सप्तम्यन्तमितरस्य विशेषणमिति तस्य "विशेषणसर्वादिसंख्यं०" [ ३. १. १५०. ] इति नित्यं पूर्वनिपाते प्राप्ते गड्डुप्रभृतेर्विकल्पेन पूर्वनिपातोऽनेन भवति, तथा 'कण्ठेगड्डुः, शिरसिगड्डुः, शिरस्यरुः' इत्यत्र "अमूर्धमस्तकात् स्वाङ्गादकामे" [ ३. २. २२. ] इति सूत्रेण, 'मध्येगुरुः, अन्ते गुरुः' इत्यत्र च "मध्यान्ताद् गुरौ" [ ३. २. २१. ] इति सूत्रेण सप्तम्या अलुप् । **व्यवस्थितविभाषया वहेगड्डुरित्येव भवतीति**-विगता अवस्था पाक्षिकविधिरूपा यस्याः सा व्यवस्थितविभाषा, अथवा व्यवस्थिता लक्ष्यानुसारं मर्यादिता चासौ विभाषा व्यवस्थितविभाषा, सा च प्रयोगानुसारिणीति पूर्वसूत्रवृत्तावेव सूचितमिति तया क्वचिन्नित्यमेव सप्तम्याः पूर्वनिपातो भवति, यथा वहेगड्डुरिति, वहत्यनेनेति वहः स्कन्धस्तत्र गड्डुर्यस्य स वहेगड्डुर्बलीवर्दः, भारोद्वमनाधिक्याद् बलीवर्दस्य स्कन्धे मांसग्रन्थिरुच्छ्रितो दृश्यतेऽस्य स वहेगड्डुरित्यभिधीयते, अत्र च नित्यमेव सप्तमी पूर्वमेव निपतति । ननु चेदं वहेगड्डुरिति वैयाकरणहरिस्वामिप्रमुखा नेच्छन्ति, तत् कथमिदमुच्यते-वहेगड्डुरिति, केचिदिदं नेच्छन्ति, इच्छन्तस्तु बहवः शिरःस्वामिप्रमुखाः, अत इदमुच्यते-वहेगड्डुरिति ॥ ३. १. १५६. ॥

## प्रियः । ३ । १ । १५७ ॥

**त० प्र०-प्रियशब्दो बहुव्रीहौ समासे पूर्वं वा निपतति । प्रियगुडः, गुडप्रियः; प्रियविश्वः, विश्वप्रियः; प्रियचत्वाः, चतुष्प्रियः ॥ १५७ ॥**

**श० म० न्यासानुसन्धानम्-प्रियः** । सप्तमीति पदं निवृत्तं प्रथमान्तनिर्देशात्, तस्य हि प्रथमान्तेन सम्बन्धो न सम्भवति, ततश्चास्यैव (प्रियशब्दस्यैव) 'प्राक्' इत्यनेन सम्बन्ध इत्याह-**प्रियशब्दो बहुव्रीहौ समासे पूर्वं वा निपततीति** । प्रियो गुडोऽस्येति विग्रहे-**प्रियगुडः, गुडप्रियः** इति वैकल्पिकपूर्वनिपातप्रयुक्तं समासस्वरूपद्वयम् । अत्र केचित्-'प्रियः कः? गुड इति प्रियस्य विशेष्यत्वे गुडो विशेषणमिति गुडस्यैव पूर्वनिपातः प्राप्तः, प्रियो गुड इति गुडस्य विशेष्यत्वे प्रियस्यैव पूर्वनिपातः प्राप्तः, उभयत्रापि प्रियस्य पाक्षिकोऽनेन पूर्वनिपातः' इत्याहुः, एतदनुसारं लघुन्यासकृतोऽप्याहुः-अत्र प्रियशब्दस्य गुडादेर्वा विशेषणत्वेन नित्यमेकस्य पूर्वनिपातप्राप्तावुभयत्र प्रियशब्दस्य पाक्षिको निपात इति । अपरे तु-'अत्र प्रियशब्दस्य विशेषणत्वेन नित्यमेव पूर्वनिपातः प्राप्त इति विकल्पेनानेन विधीयते' इति वदन्ति, अस्मिन् मते प्रियशब्दस्य विशेषणत्वमेव, न विशेष्यत्वमिति भावः? एतादृशी चर्चा प्राक् "विशेषण-सर्वादि-संख्यं०" [ ३. १. १५०. ] इति सूत्रे विहितैव । प्रियं विश्वमस्येति-**प्रियविश्वः, विश्वप्रियः** इति, अत्र च विश्वशब्दस्य सर्वादित्वात् नित्यं पूर्वनिपातः प्राप्तोऽनेन विकल्प्यते । प्रियाश्चत्वारोऽस्येति-**प्रियचत्वाः, चतुष्प्रियः** इति, अत्रापि चतुःशब्दस्य संख्यावाचित्वात् नित्यं पूर्वनिपातः प्राप्तः परत्वादनेन विकल्प्यते ॥ ३. १. १५७. ॥

## कडारादयः कर्मधारये । ३ । १ । १५८ ॥

**त० प्र०-कडारादयः शब्दाः कर्मधारये समासे वा पूर्वं निपतन्ति । कडारजैमिनिः, जैमिनिकडारः; गड्डुलगालवः, गालवगड्डुलः; काणद्रोणः; द्रोणकाणः; खञ्जमौञ्जायनः, मौञ्जायनखञ्जः; कुण्टवात्स्यः, वात्स्यकुण्टः; खेलदाक्षिः, दाक्षिखेलः; खोडकहोडः, कहोडखोडः, खलतिखारपायणः, खारपायणखलतिः; गौरगौतमः; गौतमगौरः; पिङ्गलमाण्डव्यः; माण्डव्यपिङ्गलः; वृद्धमनुः; मनुवृद्धः; भिक्षुकदाक्षिः; दाक्षिभिक्षुकः; बठरच्छान्दसः, छान्दसबठरः; तनुतृणबिन्दुः, तृणबिन्दुतनुः; कूटप्लाक्षिः, प्लाक्षिकूटः । कडारादीनां गुणवचनत्वाद् द्रव्यशब्दान्नित्यं पूर्वनिपाते प्राप्ते पक्षे परनिपातार्थं वचनम् । यदा तु द्वावपि गुणशब्दौ तत्र निर्ज्ञातानिर्ज्ञाताभ्यां विशेषणविशेष्यत्वे पर्यायेण पूर्वनिपात इत्युक्तमेव, गड्डुलकाणः, काण-**

गड्डुलः; खञ्जकुण्टः, कुण्टखञ्जः; खोडखलतिः, खलतिखोडः; गौरवृद्धः, वृद्धगौरः; पिङ्गलभिक्षुकः, भिक्षुकपिङ्गलः; वठरतनुः, तनुवठरः । बहुवचनमाकृतिगणार्थम् तेन–नटबधिरादयोऽपि द्रष्टव्याः ॥ १५८ ॥

**श० म० न्यासानुसन्धानम्–कडारा०** । कडारशब्दो वर्णविशेषवाची, जैमिनिश्च ऋषिविशेषः, कडारश्चासौ जैमिनिश्चेति "विशेषणं विशेष्येण०" [ ३. १. ९६. ] इति कर्मधारये–**कडारजैमिनिः, जैमिनिकडारः** इति समासस्वरूपद्वयं कडारशब्दस्य वैकल्पिकपूर्वनिपातात् । गड्डुः पृष्ठग्रन्थिरस्यास्तीति गड्डुलः कुब्जः सिध्मादित्वाल्लः, गालवः शाबरवृक्षः, गड्डुलश्चासौ गालवश्चेति–**गड्डुलगालवः, गालवगड्डुलः** । काण एकाक्षः, द्रोणः स्वनाम्ना प्रसिद्धः, काको वा । काणश्चासौ द्रोणश्चेति–**काणद्रोणः, द्रोणकाणः** । खञ्जः पादवैकल्यवान्, मुञ्जस्यापत्यं युवा मौञ्जायनः, खञ्जश्चासौ मौञ्जायनश्चेति–**खञ्जमौञ्जायनः मौञ्जायनखञ्जः** । कुण्टो हस्तवैकल्यवान्, वत्सस्य वृद्धापत्यं वात्स्यः, कुण्टश्चासौ वात्स्यश्चेति–**कुण्टवात्स्यः, वात्स्यकुण्टः** । खेलयति विनोदयतीति खेलः, स कश्चित् कृत्रिमदोषमात्मनि प्रकाश्य लोकविनोदकः, दक्षस्यापत्यं दाक्षिः, खेलश्चासौ दाक्षिश्चेति–**खेलदाक्षिः, दाक्षिखेलः** । खोडो गतिविकलः, कहोड ऋषिविशेषः, खोडश्चासौ कहोडश्चेति–**खोडकहोडः, कहोडखोडः** । खलतिः केशरहितशिराः, खारपायणः खरपस्य युवापत्यम् । खलतिश्चासौ खारपायणश्चेति–**खलतिखारपायणः, खारपायणखलतिः** । गौरो गौरवर्णः, गौतमः स्वनाम्ना प्रसिद्धः, गौरश्चासौ गौतमश्चेति–**गौरगौतमः, गौतमगौरः** । पिङ्गलः पिङ्गलवर्णो यो माण्डव्यो मण्डोरपत्यमिति–**पिङ्गलमाण्डव्यः, माण्डव्यपिङ्गलः** । वृद्धश्चासौ मनुश्चेति–**वृद्धमनुः, मनुवृद्धः** । भिक्षुकश्चासौ दाक्षिश्चेति–**भिक्षुकदाक्षिः, दाक्षिभिक्षुकः** । वठरो मूर्खो बृहद् देहश्च, छन्दोऽधीत इति छान्दसः श्रोत्रियः, वठरश्चासौ छान्दसश्चेति–**वठरछान्दसः, छान्दसवठरः** । तनुर्लघुः, तृणबिन्दुर्नाम कश्चित्, तनुश्चासौ तृणबिन्दुश्चेति–**तनुतृणबिन्दुः, तृणबिन्दुतनुः** । कूटः–"मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयोधने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ॥" इत्यमरः, "पुरद्वारतुच्छयोरपि" इति गौडः, प्लक्षो नाम कश्चित्, तस्यापत्यं प्लाक्षिः, कूटश्चासौ प्लाक्षिश्चेति–**कूटप्लाक्षिः, प्लाक्षिकूटः** । इत्थं कडारादीनां गुणवचनत्वेन विशेषणत्वे नित्यं पूर्वनिपातः प्राप्तः, तत्र विकल्पार्थं प्रकृतसूत्रमित्याह–**कडारादीनां गुणवचनत्वाद् द्रव्यशब्दान्नित्यं पूर्वनिपाते प्राप्ते पक्षे परनिपातार्थं वचनमिति**–कडारादयो गुणस्य द्रव्याश्रितधर्मस्य वाचकाः, जैमिन्यादयश्च द्रव्यस्य गुणाश्रयस्य वाचका इति द्रव्यवाचकं प्रति गुणवाचकस्य विशेषणत्वनिर्णयात् तस्यैव "विशेषणं विशेष्ये०" [ ३. १. ९७. ] इत्यत्र प्रथमोक्तत्वात् पूर्वनिपातः प्राप्त इति पक्षे पर्यायेण परनिपातार्थं सूत्रमिदमित्यर्थः । ननु यत्र कडारादिगतौ द्वावपि गुणशब्दौ तत्र का व्यवस्थेत्याह–**यदा त्वि**त्यादिना, **यदा तु** यत्र लक्ष्ये पुनः, **द्वावपि गुणशब्दौ** पूर्वोत्तरपदस्थितौ गुणवचनौ, **तत्र** तस्मिन् लक्ष्ये, **निर्ज्ञातानिर्ज्ञाताभ्यां** आभ्यां प्रकाराभ्याम्, **विशेषणविशेष्यत्वे** विशेषणविशेष्यभावनिर्णये, पर्यायेण पूर्वनिपातः, अयमर्थः–तत्र कस्य विशेषणत्वमित्यनिश्चये निर्ज्ञातत्वमनिर्ज्ञातत्वं च विशेषणत्वविशेष्यत्वनिर्णायकं भवति, तथा च यन्निर्ज्ञातं विशेष्यते विशिष्यज्ञानार्थमेव विशेषणप्रयोगात् । एवं च तत्र वक्तुरिच्छाधीनैव व्यवस्था भवति, यमसौ निर्ज्ञातं जानाति तेनानिर्ज्ञातं ज्ञापयति । एवच विचारितं पूर्वमपि "विशेषणं विशेष्ये०" [ ३. १. ९७. ] इति सूत्रे तदाह–**इत्युक्तमेवे**ति । तादृशानेव प्रयोगानाह–**गड्डुलकाण** इत्यादिना । 'कडारादिः' इत्येकवचनेनापि निर्वाहे "कडारादयः" इति बहुवचनेन यो निर्देशस्तत्प्रयोजनमाह–**बहुवचनमाकृतिगणार्थमि**ति, तत्फलमाह–**तेन नटबधिरादयोऽपि द्रष्टव्याः** इति, बधिरनट इत्यस्य स्वतः सिद्धत्वेन नटबधिरस्यैवाकृतिगणफलत्वमुक्तम्, आदिशब्दादेवंप्रकारा अन्येऽपीह गणे द्रष्टव्या इत्यर्थः ॥ ३. १. १५८. ॥

## धर्मार्थादिषु द्वन्द्वे । ३ । १ । १५९ ॥

**त० प्र०—धर्मार्थादौ द्वन्द्वे समासे प्राप्तपूर्वनिपातं वा पूर्वं निपतति 'धर्मार्थौ, अर्थधर्मौ; कामार्थौ, अर्थकामौ; शब्दार्थौ, अर्थशब्दौ; आद्यन्तौ, अन्तादी; अग्नीन्द्रौ, इन्द्राग्नी; चन्द्रार्कौ, अर्कचन्द्रौ; अश्वत्थकपित्थौ, कपित्थाश्वत्थौ' इत्यादिषु स्वराद्यदन्तत्वान्नित्यं पूर्वनिपाते प्राप्ते 'सर्पिर्मधुनी, मधुसर्पिषी; गुणवृद्धी, वृद्धिगुणौ; दीर्घलघू, लघुदीर्घौ; चन्द्रराहू, राहुचन्द्रौ' इत्यादिष्विदुदन्तत्वान्नित्यं पूर्वनिपाते प्राप्ते 'तपःश्रुते, श्रुततपसी; द्रोणभीष्मौ, भीष्मद्रोणौ' इत्यादिष्वर्च्यत्वान्नित्यं पूर्वनिपाते प्राप्ते 'शकृन्मूत्रम्, मूत्रशकृत्; कुशकाशम्, काशकुशम्; करभरासभौ; रासभकरभौ' इत्यादिषु लघ्वक्षरत्वात् पूर्वनिपाते प्राप्ते 'समीरणाग्नी, अग्निसमीरणौ; आदित्यचन्द्रौ, चन्द्रादित्यौ; पाणिनीयरौढीयाः, रौढीयपाणिनीयाः; जिह्वाविपूयविनीयाः, विपूयविनीयजिह्वाः' इत्यादिष्वल्पस्वरत्वान्नित्यं पूर्वनिपाते प्राप्ते 'ब्राह्मणक्षत्रियविट्शूद्राः, शूद्रविट्क्षत्रियविप्राः; भीमसेनार्जुनौ, अर्जुन-**

भीमसेनौ; देवापिशन्तनू, शन्तनुदेवापी' इति वर्णभ्रातृलक्षणेऽनुपूर्वं निपाते प्राप्ते विकल्पार्थं वचनम्। बहुवचनमाकृतिगणार्थम्, तेन-वसन्तग्रीष्मौ, ग्रीष्मवसन्तौ; **शुक्रशुची, शुचिशुक्रौ** इत्यादयोऽपि द्रष्टव्याः ॥ १५९ ॥

---

**श० म० न्यासानुसन्धानम्-धर्मा०।** अत्र 'वा प्राक्' इत्येतत् समनुवृत्तम्, तावता च न वाक्यार्थबोधसम्भव उद्देश्यानिर्देशात्, तथा च वाक्यार्थाबोधे प्रसक्ते वृत्तिकृदाह-**प्राप्तपूर्वनिपातमिति**-अग्रेतनेन "लघ्वक्षर०" [ ३. १. १६०. ] इत्यादिसूत्रेण यस्य नित्यं पूर्वनिपातः प्राप्तः स विकल्पेन पूर्वं निपतति, अन्यथा राजदन्तादिषु विज्ञायेतेति भावः, सर्वेषां पूर्वोक्तानां प्राप्तविभाषात्वेन तत्साहचर्यादस्यापि प्राप्तविभाषत्वमेव युक्तम्, द्वन्द्वे च पूर्वनिपातविधायकं सूत्रमितः पूर्वं नोक्तं तथापि वक्ष्यमाणप्राप्तिमभिसमीक्ष्यैव पुरस्तादपवादोऽयं विकल्पविधिः प्रकरणपरिशुद्ध्यर्थं प्रागेव पठितः, लक्ष्यैकचक्षुष्काणां सकललक्ष्यलक्षणसंघातपूर्वदर्शित्वात्। अथवा विकल्पेन पाक्षिकोऽभावो विधेयः, अभावश्च प्राप्तस्य स्यान्नाप्राप्तस्याप्रसिद्धप्रतियोगिकाभावासंभवादिति न्यायसिद्धार्थानुवाद एव-**प्राप्तपूर्वनिपातमिति**। धर्मश्चार्थश्चेति-**धर्मार्थौ, अर्थधर्मौ,** अत्र स्वराद्यदन्तत्वादर्थशब्दस्य नित्यं पूर्वनिपातः प्राप्तः, अथ 'धर्मादर्थः कामः स्वर्गश्च' इति खलु सर्वशास्त्रेषु सिद्धं यस्मात् तस्माद् योनिः कामार्थयोर्धर्म इति धर्मस्यार्च्यत्वं तदा धर्मस्यैव पूर्वनिपातः प्राप्तः, सोऽनेन विकल्प्यते। अर्थश्च कामश्चेति-**कामार्थौ, अर्थकामौ**। शब्दश्चार्थश्चेति-**शब्दार्थौ, अर्थशब्दौ**। आदिश्चान्तश्चेति-**आद्यन्तौ, अन्तादी**। अग्निश्च इन्द्रश्चेति-**अग्नेन्द्रौ, इन्द्राग्नी,** पूर्वत्राग्निशब्देकारस्य "वेदसहश्रुतावायुदेवतानाम्" [ ३. २. ४१. ] इत्याकारो भवति। चन्द्रश्चार्कश्चेति-**चन्द्रार्कौ, अर्कचन्द्रौ**। अश्वत्थश्च कपित्थश्चेति-**अश्वत्थकपित्थौ कपित्थाश्वत्थौ। इत्यादिषु** धर्मार्थप्रभृतिषु, **स्वराद्यदन्तत्वात्** स्वर आदिर्यस्य अकारोऽन्तो यस्य तत्त्वात्, **नित्यं पूर्वनिपाते प्राप्ते** "लघ्वक्षरा०" [ ३. १. १६०. ] इति नित्यं पूर्वनिपाते प्राप्ते, 'विकल्पार्थं वचनम्' इत्यग्रेतनमायोज्यम्, अर्थ-अन्त-इन्द्र-अर्क-अश्वत्थशब्दाः क्रमेणोक्तेषु स्वराद्यदन्ताः, तेषां लघ्वक्षरासखीदन्ताद्यपेक्षया परत्वान्नित्यं पूर्वनिपातः प्राप्त इति प्रकृतसूत्रेण विकल्पो विधीयत इति भावः। सर्पिश्च मधु चेति-**सर्पिर्मधुनी, मधुसर्पिषी,** अत्र "न दधिपय०" [ ३. १. १४५. ] इति न समाहारः। गुणश्च वृद्धिश्चेति-**गुणवृद्धी, वृद्धिगुणौ**। दीर्घश्च लघुश्चेति-**दीर्घलघू, लघुदीर्घौ**। चन्द्रश्च राहुश्चेति-**चन्द्रराहू, राहुचन्द्रौ। इत्यादिषु** दर्शितेषु सर्पिर्मधुप्रभृतिषु, **इदुदन्तत्वात्** वृद्धिशब्दस्य इकारान्तत्वात्, मधु-लघु-राहुशब्दानामुकारान्तत्वाच्च, तेषां नित्यं पूर्वनिपाते प्राप्ते विकल्पार्थं वचनमिति। तपश्च श्रुतं चेति-**तपःश्रुते, श्रुततपसी** दधिपय आदित्वान्नित्यमत्रैकार्थत्वाभावः। द्रोणश्च भीष्मश्चेति-**द्रोणभीष्मौ भीष्मद्रोणौ। इत्यादिषु** तपःश्रुतादिषु, **अर्च्यत्वादिति**-अत्र श्रुतापेक्षया तपसोऽर्च्यत्वं भीष्मापेक्षया द्रोणस्येति तयोः पूर्वनिपातो नित्यं प्राप्तः; तपोभीष्मयोरर्च्यत्वमिति न्यासकारमतमनूद्य लघुन्यासकारेण, 'तत्र द्रोणापेक्षया भीष्मस्यार्च्यत्वे हेतुरन्वेषणीयः, यद्यपि द्रोणस्य ब्राह्मणत्वेऽप्यायुधधारित्वाद् ब्राह्मण्यकृतमर्च्यत्वं नास्तीत्यखण्डब्रह्मचर्यप्रतिज्ञापालनात्स्वाधीनमृत्युत्वादिगुणैर्भीष्मस्यार्च्यत्वमिति कथयितुं शक्यते, तथापि तस्याचार्यत्वेनैवायुधधारित्वं न तु जीविकारूपेण, युद्धे चायुधप्रयोगो दुर्योधनान्ननिष्क्रयरूपेण, न तु स्वजीविकाबुद्ध्येति वक्तुं शक्यत्वाद् ब्राह्मण्यकृतं तदर्च्यत्वमक्षतमेवेति भीष्मस्य तदपेक्षयाऽर्च्यत्वे हेतुरन्वेषणीय एव' इति केचित्। वस्तुतस्तु ब्रह्मचारिणां देवैरपि पूजनीयत्वाद् तद्विवक्षया भीष्मस्य पूजनीयत्वादरः, यदुक्तमाचार्येणैव स्वोपज्ञयोगशास्त्रे—

"प्राणभूतं चरित्रस्य परब्रह्मैककारणम्।
समाचरन् ब्रह्मचर्यं पूजितैरपि पूज्यते ॥" इति।

तथा च प्रकृते तयो भीष्मयोरर्च्यत्वात् तयोर्नित्यं पूर्वनिपाते प्राप्ते विकल्पार्थं प्रकृतं वचनमिति। शकृच्च मूत्रं चेति-**शकृन्मूत्रम्, मूत्रशकृत्,** अत्रैकवद्भावो "गवाश्वादिः" [ ३. १. १४४. ] इत्यनेन। कुशाश्च काशाश्चेति-**कुशकाशम्, काशकुशम्,** अत्र तृणजातित्वात् "तरुतृण०" [ ३. १. १३३. ] इत्येकवद्भावः। करभश्च रासभश्चेति-**करभरासभौ रासभकरभौ। इत्यादिषु** कुशकाशादिषु, **लघ्वक्षरत्वात्,** शकृत्-कुश-करभशब्दानां लघ्वक्षरत्वाद् नित्यं पूर्वनिपाते प्राप्ते विकल्पार्थं प्रकृतं वचनम्। समीरश्चाग्निश्चेति-**समीराग्नी, अग्निसमीरौ**। आदित्यश्च चन्द्रश्चेति-**आदित्यचन्द्रौ, चन्द्रादित्यौ**। पाणिनीयाश्च रौढीयाश्चेति-**पाणिनीयरौढीयाः रौढीयपाणिनीयाः,** रूढस्यापत्यं रौढिः, तस्य छात्रा इति "दोरीयः" [ ६. ३. ३२. ] इतीये-रौढीया इति। "जिविपूभ्यो हलि-मुञ्ज-कल्के" [ ५. १. ४२. ] इति जेर्विपूर्वाभ्यां यथासंख्यं हलि-मुञ्ज कल्केषु कर्मसु क्यप् स्यात्-जित्या हलिः, विपूयो मुञ्जः, विनीयः कल्कः, जित्या च विपूयश्च विनीयश्चेति-**जित्याविपूयविनीयाः, विपूयविनीयजित्याः,** यादृश एव गणे दृष्टस्तादृश एव प्रयोगः, न तु विनीयविपूयजित्यादयो जित्याशब्दस्यैव पूर्वापरभावः। **इत्यादिषु** समीरणाग्निप्रमुखेषु, **अल्पस्वरत्वात्** अग्नि-चन्द्र-रौढीय-जित्याशब्दानामल्पस्वर-

त्वात् तेषामेव नित्यं पूर्वनिपाते प्राप्ते विकल्पार्थं प्रकृतं वचनम् । पूर्वोक्तेषु सर्वेषूदाहरणेषु "लघ्वक्षरा०" [ ३. १. १६०. ] इति नित्यं पूर्वनिपाते प्राप्ते प्रकृतसूत्रेण विकल्पेन विधीयत इति भावः । ब्राह्मणश्च क्षत्रियश्च विट् च शूद्रश्चेति-**ब्राह्मणक्षत्रियविट्शूद्राः, शूद्रविट्क्षत्रियविप्राः**, अत्र वर्णलक्षणेऽनुपूर्वं निपाते प्राप्ते, भीमसेनश्चार्जुनश्चेति-**भीमसेनार्जुनौ, अर्जुनभीमसेनौ**, अत्र भ्रातृलक्षणेऽनुपूर्वं निपाते प्राप्ते, देवापिश्च शन्तनुश्चेति-**देवापिशन्तनू, शन्तनुदेवापी**, अत्रापि भ्रातृलक्षणेऽनुपूर्वं निपाते "मासवर्णभ्रात्रनुपूर्वं" [३. १. १६१.] इति सूत्रेण प्राप्ते विकल्पार्थं प्रकृतं वचनम् । बहुवचननिर्देशस्य फलमाह-**आकृतिगणार्थमिति**, आकृतिगणत्वेनात्रापठितानामपि संग्रह इत्याह-**तेन वसन्तग्रीष्मावि**त्यादि, वसन्तश्च ग्रीष्मश्चेति-**वसन्तग्रीष्मौ, ग्रीष्मवसन्तौ**, यद्यपीह वसन्तग्रीष्मशब्दौ ऋतुवाचिनौ तथापि "भर्तुतुल्यस्वरम्" [ ३. १. १६२.] इत्यनेन नानुपूर्वं निपातः प्राप्नोति, तुल्यस्वरमित्युक्तत्वात्, अतोऽल्पस्वरनिमित्तक एव पूर्वनिपातो ग्रीष्मशब्दस्य प्राप्तोऽनेन विकल्प्यते । शुक्रो ज्येष्ठमासः, शुचिराषाढमासः, शुक्रश्च शुचिश्चेति-**शुक्रशुची, शुचिशुक्रौ**, अत्र मासवाचित्वात् "मासवर्णभ्रात्रनुपूर्वम्" [ ३. १. १६१. ] इति नित्यमनुपूर्वं निपाते प्राप्तेऽनेन विकल्प्यत इति इत्येवमादयोऽपि प्रयोगाः शिष्टसम्मता धर्मार्थादिष्वेव गणनीया इति भावः ॥ ३. १. १५९. ॥

## लघ्वक्षरा-ऽसखीदुत्-स्वराद्यदल्पस्वरा-ऽर्च्यमेकम् । ३ । १ । १६० ॥

**त० प्र०**—पृथग्योगाद् 'वा' इति निवृत्तम्, लघ्वक्षरं सखिवर्जितेकारोकारान्तं स्वराद्यकारान्तमल्पस्वरमर्च्यवाचि च शब्दरूपं द्वन्द्वे समासे पूर्वं निपतति, यत्र चानेकसंभवस्तत्रैकमेव लघ्वक्षर-शर-सीर्यम्, तृण-काष्ठम्, तिल-माषम्, शैलौ मलय-दर्दुरौ । असखीदुत् अग्नी-षोमौ, अग्नि-धूमम्, पति-सुतौ, वायु-तोयम्, स्वादु-तिक्तौ । सखिवर्जनं किम् ? सुतसखायौ, सखिसुतौ; *ग्रहणवता नाम्ना न तदन्तविधिः* इति तदन्तस्य प्रतिषेधो न भवति-बहुसखि-बहुधनौ; स्पर्धे परमेव-व्रीहि-यवौ, असखीदुदित्यैकपद्यादिदुतोः स्पर्धे कामचारः-पतिवसू, वसुपती । स्वराद्यत्-अश्व-शस्त्रम् इन्द्र-चन्द्रौ, उष्ट्र-मेषम्, अश्व-रथम्, ऋश्य-रोहितौ; स्पर्धे परमेव-उष्ट्र-खरम्, उष्ट्र-शशम्, इन्द्र-वायू, इन्द्रा-विष्णू, अर्केन्दू । अल्पस्वर-प्लक्ष-न्यग्रोधौ, स्पर्धे परमेव-धव-खदिरौ, वागग्नी, वाग्वायू, वागर्थौ, धवा-ऽश्वकर्णौ । अर्च्य-श्रद्धा-मेधे, स्पर्धे परम्-दीक्षा-तपसी, श्रद्धा-तपसी, मेधा-तपसी, माता-पितरौ, वधू-वरौ, रुद्रा-ऽग्नी, रुद्रेन्द्रौ, वासुदेवा-ऽर्जुनौ । लघ्वादिग्रहणं किम् ? कुक्कुट-मयूरौ, मयूरकुक्कुटौ, अध्येतृवेदितारौ, वेदित्रध्येतारौ अश्वा-वृक्षौ, वृक्षाश्वे । एकमिति किम् ? युगपदनेकस्य पूर्वनिपाते प्राप्ते एकस्यैव यथाप्राप्तं पूर्वं निपातः, शेषाणां तु कामचार इति प्रदर्शनार्थम्-शङ्खदुन्दुभिवीणाः, वीणादुन्दुभिशङ्खाः, शङ्खवीणादुन्दुभयः; अश्वरथेन्द्राः, इन्द्राश्वरथाः; इन्द्ररथाश्वाः; दुन्दुभिशङ्खवीणा इति रथेन्द्राश्वा इति च न भवति । कथं धनपतिरामकेशवाः, मृदङ्गशङ्खपणवाः ? रामशङ्खशब्दयोरुत्तराभ्यां समासे सति पूर्वेण समासः । द्वन्द्व इत्येव-विस्पष्टं पटुः-विस्पष्टपटुः ॥ १६० ॥

**श० म० न्यासानुसन्धानम्**-लघ्वक्षर० । अस्य नित्यविधित्वमित्याह-**पृथग्योगाद् वेति निवृत्तमिति**-यदि विकल्पसम्बन्ध इहापीष्टो भवेत् तर्हि पूर्वसूत्रेण सहैवास्यापि सूत्रस्य पाठः कृतः स्यादिति, तथा पाठाभावादिह विकल्पसम्बन्धाभावः सूचितः । किंचापेक्षाकृत एवाधिकार इति *अपेक्षातोऽधिकारः* इति न्यायेन सूचितमिति पृथग्योगाद् विकल्पापेक्षाभावसूचनादिह वेति नाधिक्रियत इति व्याख्येयम् । लाघवेन शब्दानुशासने प्रवराः सूत्रकृतः सूत्रं संक्षिप्तमारभन्ते, ततश्च समाहारेण निर्देशे कृतेऽपि नानाविधोद्देश्यघटितत्वेन प्रागिति विधेयबोधकपदस्य प्रत्येकमेव सम्बन्धो न तु समुदाये, यद्यपि प्राथमिको बोधः समुदायसम्बन्धेनैव स्यात्-लघ्वक्षरादिसमुदायः पूर्वं निपततीति, किन्तु तादृशसमुदायस्य क्वापि लक्ष्ये प्रयोगाभावात् प्रत्येकमवयवेषु विधेयान्वयेन लक्ष्यसंस्कारको वाक्यार्थबोधः क्रियते, तथा च विभज्य प्रदर्शयति वृत्तिकृत्-**लघ्वक्षरमिति**-अत्राक्षरशब्देन स्वरो बोध्यते, तत्रैव लघुत्वदीर्घत्वसम्भवात्, तथा च लघुस्वरमित्यर्थः । 'असखि' इत्यस्य सखिवर्जितार्थकस्य, 'इकारान्त' इत्यस्यैव विशेषणत्वं न तूकारान्तस्य, 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इति न्यायात् । इदुदिति वर्णबोधके पदे, तत्र केवलेदुद्रूपस्य वर्णस्य नामत्वासम्भवात्, एकाक्षरस्य इकारस्य उकारस्य वाऽर्थविशेषे रूढत्वेऽपि तावतेष्टः संग्रहाभावात्, वर्णग्रहणे तदन्तग्रहणस्य न्यायसिद्धत्वादित्याह-**इकारान्तोकारान्तमिति**, एवं स्वराद्यदिति पदमपि तदन्तबोधकं "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषया चेत्याह-**स्वराद्यदन्तमिति** । सूत्रस्थमेकपदं विवृणोति-**यत्र चानेकसम्भवस्तत्रैकमेवेति**-द्वन्द्वे बहूनामपि समस्यमानत्वेन यत्रानेकं पदमुक्तपञ्चप्रकारान्तर्गतं तत्रैकस्यैव पूर्वनिपातो न त्वनेकस्यासम्भवात्, किंचावशिष्टपदेषु कामचार एवेत्युदाहरणे स्पष्टीभविष्यति । क्रमश उदाहर्तुमाह-**लघ्वक्षरेति** । शराश्च सीर्याश्चेति-**शरसीर्यम्**,

सीर्यस्य दीर्घस्वरत्वेन लघुस्वरस्य शरस्य पूर्वनिपातः, शरस्तृणविशेषः, सीर्योऽपि स एवेति प्रतीयते समाहारनिर्देशात्, तथा चात्र तृणलक्षणमेकत्वम्। तिलाश्च माषाश्चेति–**तिलमाषमि**ति–अत्र माषापेक्षया तिलस्य लघ्वक्षरत्वं, धान्यलक्षण-5मेकत्वं च। **"शैलौ मलयदर्दुरौ"** इति–दर्दुरशब्दे पूर्वस्याकारस्य संयुक्ताक्षरपूर्वत्वनिमित्तं गुरुत्वमिति मलयशब्दस्य पूर्वनिपातः। रघुवंशे चतुर्थसर्गे कालिदासेन प्रयुक्तस्य पद्यस्य चतुर्थचरणतत्त्वख्यापनार्थं शैलाविति पदं सह प्रयुक्तं प्रसिद्धप्रयोगख्यापनाय, तथाहि तदीयः श्लोकः–

10 स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ॥" इति।

रघोर्दिग्विजयप्रस्तावे दक्षिणदिग्विजयसमये तस्य मलयदर्दुरनिवासोऽनेन सूचितः, स्तनाविवेत्युत्प्रेक्षया दिशो नायिकात्वं प्रतीयते। इत्थं लघ्वक्षरपूर्वनिपातोदाहरणं संक्षिप्योक्त्वाऽसखीदु-15दन्तस्योदाहरणार्थं प्राह–**असखीदुदि**ति, **अग्नीषोमौ** इति–अग्निश्च सोमश्चेति विग्रहः, अग्निशब्द इदन्तः, षोमशब्दे परे च तस्य "ईः षोमवरुणेऽग्नेः" [३. २. ४२.] इतीकारस्य ईकारः, एवं सूत्रे षोमेति निर्देशादीकारसन्नियोगे षत्वं निपात्यते। अग्निश्च धूमश्चेति–**अग्निधूममि**ति–20 अप्राणिजातित्वादेकत्वम्, पतिश्च सुतश्चेति–**पतिसुतौ** वायुश्च तोयं चेति **वायुतोयमि**ति–अत्राप्यप्राणिजातित्वादेकत्वम्। स्वादुश्च तिक्तश्चेति–**स्वादुतिक्तौ,** इहोभयोरप्राणित्वेऽपि गुणप्रवृत्तिनिमित्तत्वान्न जातित्वम्, अथवा व्यक्तिविवक्षा बोध्या स्वादुतिक्तपदयोस्तद्गुणविशिष्टे निरूढलक्षणाश्रयणात्। इन्मात्र-25सम्बद्धत्वेऽप्यसखीति पर्युदासस्य इदुतोः सह निर्देशात् तदुदाहरणानन्तरमेव तत्पद(असखीति पद)कृत्यमाह–**सखिवर्जनं किमि**ति, सुतश्च सखा चेति–**सुतसखायौ, सखिसुतौ,** तथा चेह नियामकाभावात् कामचार एव पूर्वप्रयोगे भवति, सखिवर्जनाभावे च नित्यमेव तस्यैव पूर्वप्रयोगः स्यादिदन्तत्वात्। 30 सख्यन्तसमुदायस्य न सखिरूपत्वम्, न च "विशेषणमन्तः" [७. ४. ११३.] इति परिभाषया सख्यन्तस्यापि सखिशब्देन ग्रहणमिति वाच्यम्, ग्रहणवता नाम्ना न तदन्तविधिरिति निषेधात्, तथा च सख्यन्तसमुदायस्य द्वन्द्वप्रवेशे तस्येदन्तत्वनिमित्तः पूर्वनिपातो भवत्येवेत्याह–**ग्रहणवता नाम्ने**त्यादि, 35 **प्रतिषेधो न भवती**ति–प्रतिषेधपदं पर्युदासपरं पर्युदासेनापि प्रतिषेधस्यैव फलनात्। **बहुसखिबहुधनावि**ति–बहवः सखायो यस्य स बहुसखा, बहु धनमस्य बहुधनः, बहुसखा च बहुधनश्चेति–बहुसखिबहुधनौ, अत्रासखीति पर्युदासाप्रवृत्तेरिदन्तत्वाद् बहुसखिशब्दस्य पूर्वनिपात इति भावः। **स्पर्धे परमेवे**ति–सूत्रोक्तेष्वपि पूर्वनिपातनिमित्तेषु परस्परमन्यत्र 40 लब्धलक्ष्येष्वेकत्र लक्ष्ये समुपनिपाते सूत्रपाठापेक्षमेव परत्वमादाय व्यवस्था भवतीति परनिमित्तनिमित्तक एव विधिर्भवतीति भावः। उदाहरति–**व्रीहियवावि**ति–व्रीहिश्च यवश्चेति विग्रहः, अत्र यवशब्दो लघ्वक्षरः, व्रीहिशब्द इदन्तः, लघ्वक्षरापेक्षयेदन्तस्य सूत्रे परत्वेन तस्यैव पूर्वनिपातो भवति, एकवचनान्तेन विग्रहा-45 च्चात्र धान्यलक्षणमेकत्वं तत्र 'बहुत्वे' इत्युक्तत्वात्। यदि च सूत्रपाठापेक्षया परत्वं गृह्यते तर्हि इदन्तापेक्षयोदन्तस्य पूर्वनिपातः स्पर्धे युक्तः परत्वादिति शङ्कायामाह–**'असखीदुत्'** इत्येकपद्याद् इदुतोः स्पर्धे कामचारः इति–'असखीदुत्' इत्येकमेव पदं न तु 'असखीत्' इत्येकम् 'उत्' इति भिन्नम्, तथा च 50 सूत्रपाठे परत्वव्यवस्था पदपाठनिबन्धनैवेति पदपूर्वापरीभावविरहान्न परत्वनिमित्तक उदन्तस्य पूर्वनिपातनियम इति कामचार एव तत्र भवति यत्रेदुदन्तयोरेकत्र समुपनिपातः। क्वेत्याह–**पतिवसू, वसुपती,** इति–पतिश्च वसुश्चेति विग्रहः। इत्थं द्वितीयं निमित्तमसखीदुदित्युदाहृत्य तृतीयमुदाहर्तुमाह–**स्वराद्य-55 दि**ति–स्वर आदिर्यस्य तत् स्वरादि, तच्च तद् अत् अदन्तमिति स्वराद्यदिति व्युत्पत्तिः, यद्यपि 'स्वरादि' इति 'अत्' इत्यस्यैव विशेषणं प्रतीयते न तु तदन्तस्य समासकाले तदन्तोपस्थित्यभावात्, समस्तस्य हि स्वरादिपदस्य अता सहैव समासो न त्वदन्तेन, तथा च 'स्वराद्यत्' इति शब्दनिष्पत्तौ सत्यां तस्य 60 नामविशेषणत्वेन तदन्तविधिर्भवति, तथा च स्वरादिरत् अन्तोऽन्ते वा यस्येत्यर्थो लभ्यते, न च सोऽर्थः समुचितः, अतोऽकारस्य स्वतः स्वररूपत्वेन स्वरादित्वासम्भवात्, समुदायस्यादन्तस्यैव स्वरादित्वस्य विवक्षितत्वात्, तथापि अत्पदस्य पूर्वमेवादन्तसमुदायपरत्वं लक्षणयाश्रित्य तस्यैव स्वरादिपदेन 65 समानाधिकरणसमासे कृतेऽभीष्टार्थत्वलाभसम्भव इति ध्येयम्। यद्यपीदृशे विषये सामर्थ्याभावान्न समास उचितः, यतोऽत्पदस्यादन्तपरत्वे समुदायसापेक्षत्वमिति सापेक्षस्य न सामर्थ्यमिति *सापेक्षमसमर्थवद्* इति न्यायेन सिद्धं, युक्त्या च विवेचितपूर्वम्, तथाप्याचार्यवचसाऽत्र सामर्थ्यमाश्रयणीयम्, सति हि 70 गमकत्वे सापेक्षस्यापि देवदत्तस्य गुरुकुलमित्यादौ समासदर्शनात्। **अस्त्रशस्त्रमि**ति–अस्त्रं च शस्त्रं चेति विग्रहः, अस्त्रपदेनासन[क्षेपण]साधनं धनुरादि सामान्येनोच्यते, शस्त्रशब्देन च शसन[हिंसन]साधनमायुधमात्रमभिधीयत इत्यनयोः समानार्थत्वाभावात् "समानामर्थेनैकः शेषः" [३. १. ११८.] 75 इत्येकशेषो न भवति, ततः "अप्राणिपश्वादेः" [३. १. १३६.] इत्येकत्वम्, अत्र चास्त्रशब्द एव स्वरादिरदन्तश्चेति तस्यैव पूर्वनिपातः, एवमुत्तरत्रापि ज्ञेयम्। इन्द्रश्च चन्द्रश्चेति–**इन्द्रचन्द्रौ,** दधिपय आदित्वान्नैकत्वम्। अश्वाश्च रथाश्चेति–**अश्वरथम्,**

सेनाङ्गत्वादेकत्वम् । ऋश्यश्च रोहितश्चेति **ऋश्यरोहितौ**; अत्र बहुत्वाभावान्मृगलक्षणमेकत्वम् । एषु इन्द्र-उष्ट्र-अश्व-ऋश्य-शब्दानामेव स्वराद्यकारान्तत्वात् तेषामेव पूर्वनिपातः । अत्रापि लघ्वक्षरेण स्पर्धे परत्वात् स्वराद्यन्तस्यैव पूर्वनिपात इत्याह-**स्पर्धे परमेवे**ति । उष्ट्रश्च खरश्चेति-**उष्ट्रखरमि**ति-अत्रोष्ट्र-शब्दस्य स्वराद्यदन्तत्वं, खरशब्दस्य लघ्वक्षरत्वमिति लघ्वक्षरापेक्षया स्वराद्यदन्तस्य सूत्रे परपठितत्वात् तस्यैव पूर्वनिपातः गवाश्वादित्वादेकार्थत्वम् । इन्द्रश्च वायुश्चेति-**इन्द्रवायू**, अत्र वायुशब्द उकारान्तः, इन्द्रशब्दश्च स्वराद्यदन्त इत्युकारान्तापेक्षया सूत्रे स्वराद्यदन्तस्य परपठितत्वात् तस्यैव पूर्वनिपातः, दधिपय आदित्वान्नैकवद्भावः । एवम्-इन्द्रश्च विष्णुश्चेति-**इन्द्राविष्णू** इत्यत्रापि, अत्र देवताद्वन्द्वनिमित्तकमात्वं विशेषः । एवम्-अर्कश्च इन्दुश्चेति-**अर्केन्दू** इत्यत्रापि परस्पर्ध एकवद्भावाभावश्च । अथाल्पस्वरमुदाहर्तुमाह-**अल्पस्वरे**ति, प्लक्षश्च न्यग्रोधश्चेति-**प्लक्षन्यग्रोधौ**, अत्र प्लक्षस्य द्विस्वरत्वं न्यग्रोधस्य च त्रिस्वरत्वमिति प्लक्षस्याल्पस्वरनिमित्तकः पूर्वनिपातः, एवं बहुत्वाभावात् तरुलक्षण एकवद्भावो न भवति, एवं-धवश्च खदिरश्चेति-**धवखदिरौ**, इत्यत्रापि ज्ञेयम् । अत्रापि पाठकृतपरत्वस्य बलवत्त्वमित्याह-स्पर्धे परमेवेति, वाक् चाग्निश्चेति-**वागग्नी**, अत्र वाच एकस्वरत्वमग्नेश्च द्विस्वरत्वमिति वाचोऽल्पस्वरनिमित्तकः पूर्वनिपातः, दधिपय आदित्वाच्च नैकार्थत्वम् । धवश्चाश्वकर्णश्चेति-**धवाश्वकर्णौ**, पूर्वत्रेकारान्तेन स्पर्धः, अत्र स्वराद्यदन्तेन स्पर्धः तत्राल्पस्वरस्य सूत्रपाठे परत्वादल्पस्वरनिमित्तकः पूर्वनिपातो धवस्य, अत्र बहुत्वाभावात् तरुलक्षणमेकत्वं न भवति । अर्च्यनिमित्तं पूर्वनिपातमुदाहर्तुमाह-**अर्च्ये**ति, श्रद्धा च मेधा चेति-**श्रद्धामेधे**, अत्र श्रद्धामूलकत्वादभिप्रेतार्थसिद्धेः श्रद्धाऽभ्यर्हिता मेधायाः पूर्वं निपतति, "श्रद्धावान् लभते ज्ञानम्" इति गीता, "अर्थग्राहिणी श्रद्धाशब्दग्राहिणी मेधा" इति लघुन्यासः, "प्रत्ययो धर्मकार्येषु सा श्रद्धेत्यभिधीयते ।" इति स्मृतिः, आचार्यास्तु योगशास्त्रे एवमाहुः—

"रुचिर्जिनोक्ततत्त्वेषु सम्यक् श्रद्धानमुच्यते ।
जायते तन्निसर्गेण गुरोरधिगमेन वा ॥ १७१ ॥" इति ।

तद्वृत्तिश्च-जिनोक्तेषु तत्त्वेषु जीवादिभूतस्वरूपेषु या रुचिस्तत् श्रद्धानम्, नहि ज्ञानमित्येव रुचिं विना फलसिद्धिः । शाकान्नपानादिस्वरूपवेदिनापि रुचिरहितेन न सौहित्यलक्षणं फलमवाप्यते । श्रुतज्ञानवतोऽप्यङ्गारमर्दकादेरभव्यस्य दूरभव्यस्य वा जिनोक्ततत्त्वेषु रुचिरहितस्य न विवक्षितं फलमुपश्रूयते । तस्य चोत्पादे द्वयी गतिः-निसर्गोऽधिगमश्च, निसर्गः स्वभावो गुरूपदेशनिरपेक्षः सम्यक् श्रद्धानकारणमिति ॥

अत्र दधिपय आदित्वाच्च नैकवद्भावः । लघ्वक्षरापेक्षयाऽर्च्यस्यैव पूर्वनिपातः स्पर्धे परत्वेनेत्याह-**स्पर्धे परमि**ति, दीक्षा च तपश्चेति-**दीक्षातपसी**, श्रद्धा च तपश्चेति-**श्रद्धातपसी**, मेधा च तपश्चेति-**मेधातपसी**, एषु तपसो लघ्वक्षरत्वेऽपि दीक्षाश्रद्धामेधानां बहूपकारकत्वान्मूलभूतत्वाच्चार्चितत्वात् परत्वात् पूर्वनिपातः, एवं दधिपय आदित्वाच्च नैकवद्भावः । माता च पिता चेति-**मातापितरौ**, बहूपकारकत्वादसाधारणत्वाच्च पितृतो माताऽभ्यर्हिता, "पितुर्दशगुणा माता गौरवेणातिरिच्यते ।" इत्यादिस्मृतिः; वधूश्च वरश्चेति-**वधूवरौ**, वैवाहिकप्रकरणस्थोऽयं प्रयोगः, स्त्रीप्रधानो विवाह इति तत्र वध्वा एव प्राधान्यादर्च्यत्वम्, अस्ति च तत्र विवाहकाले दक्षिणोपवेशनादिना तस्याः प्राधान्यबोधकः स्मृतिमूलक आचारोऽपि । केचित् त्वेवमाहुः— स्त्रियः पूर्वप्रयोग आचार एव समाविष्टोऽस्ति, सर्वत्र तथादर्शनात्, यथा-गौरीशिवौ, राधाकृष्णौ, सीतारामौ, इत्यादि, तस्याः शक्तित्वेन सर्वत्रादरणीयत्वादिति । रुद्रश्चाग्निश्चेति-**रुद्राग्नी**, रुद्रस्य त्रिनेत्रमध्येऽग्नेरेव तृतीयनेत्रत्वमिति रुद्राङ्गत्वेन तस्य रुद्रापेक्षयाऽप्राधान्यं रुद्रस्य च प्राधान्यमिति रुद्रस्यार्च्यत्वम् । रुद्रश्चेन्द्रश्चेति-**रुन्द्रेद्रौ**, अत्रेन्द्रापेक्षया रुद्रस्यार्च्यत्वम् । वासुदेवश्चार्जुनश्चेति-**वासुदेवार्जुनौ**, अर्जुनापेक्षया वासुदेवस्यार्च्यत्वं "कृष्णस्तु भगवान् स्वयम्" इत्यादिना सिद्धम्, शब्दानुशासनस्य सर्वपार्षदत्वात् परसमयापेक्षयापि प्रयोगाः साध्यन्ते । एषु क्रमेण लघ्वक्षरापेक्षया इदन्तापेक्षया स्वराद्यदन्तापेक्षयाऽल्पस्वरापेक्षया चार्च्यस्य पूर्वनिपातः, एवं दधिपय आदित्वान्नैकवद्भावः । सूत्रवैयर्थ्यं शङ्कते-**लघ्वक्षरादिग्रहणं किमि**ति-विनापि सूत्रं विनिगमकाभावेन स्वभावत एवैकस्य पूर्वप्रयोगो भविष्यत्येवेति व्यर्थं सूत्रमिति भावः । व्यावृत्त्योत्तरयति-कुक्कुटश्च मयूरश्चेति-**कुक्कुटमयूरौ**, **मयूरकुक्कुटौ**-एतत्सूत्रलक्ष्यातिरिक्तस्थले कामचारेणोभयोः पर्यायेण पूर्वप्रयोगो दृश्यते, सूत्राभावे सर्वत्र तथा स्यात्, सूत्रसत्त्वे च प्रकृतप्रयोगे लघ्वक्षरादीनां निमित्तानामभावात् कामचारो भवति, अन्यत्र [ प्रकृतसूत्रलक्ष्ये ] च व्यवस्थितः प्रयोग इति भावः, प्रकृतोदाहरणेऽदन्तत्वेऽपि न स्वरादित्वम् । अध्येता च वेदिता चेति-**अध्येतृवेदितारौ**, **वेदित्रध्येतारौ**, अत्राध्येतृशब्दस्य स्वरादित्वेऽपि नादन्तत्वम् । अश्वा च वृक्षश्चेति-**अश्वावृक्षौ**, **वृक्षाश्वे**, अत्राप्यश्वाशब्दस्य स्वरादित्वेऽपि नादन्तत्वमिति द्वयोः साम्येन कामचारेण पूर्वनिपातः । पृच्छति-**एकमिति किमि**ति-स्वभावत एकस्यैव पूर्वनिपातो भविष्यतीत्येकमिति व्यर्थमिति प्रश्नाशयः, उत्तरयति-**युगपदनेकस्य पूर्वनिपाते प्राप्ते एकस्यैव यथाप्राप्तं पूर्वं निपातः, शेषाणां तु कामचार इति प्रदर्शनार्थ-**

मिति-एकग्रहणस्यानेकपदपूर्वनिपातप्राप्तिप्रसङ्गे एकस्यैव पर्यायेण पूर्वनिपातार्थत्वम्, तथा चावशिष्टे नियमाभावात् कामचारो भवति । शङ्खश्च दुन्दुभिश्च वीणा चेति-**शङ्खदुन्दुभिवीणाः, वीणादुन्दुभिशङ्खाः, शङ्खवीणादुन्दुभयः** इति-अत्र 5 शङ्खवीणाशब्दयोरल्पस्वरत्वं, दुन्दुभेरसखीदन्तत्वमिति तदपेक्षयाऽल्पस्वरयोः शङ्खवीणाशब्दयोरुभयोः पूर्वनिपातः स्पर्धे परत्वात् प्राप्तः, तत्र यदा शङ्खशब्देऽयं नियमः प्रवर्तते तदा वीणाशब्दे कामचार इति 'शङ्खदुन्दुभिवीणाः, शङ्खवीणादुन्दुभयः' इति प्रयोगद्वयं भवति, यदि च वीणायाः पूर्व- 10 निपातस्तर्हि 'वीणाशङ्खदुन्दुभयः, वीणादुन्दुभिशङ्खाः' इति प्रयोगद्वयं भवतीति वृत्तौ प्रयोगत्रयदर्शनं दिङ्मात्रं न त्वियत्तापरिच्छेदार्थं तुल्यन्यायात् प्रयोगचतुष्टये बाधकाभावात्, एवमश्वरथेन्द्रा इत्यत्रापि शेषे कामचारनिमित्तकं रूपचतुष्टयं बोध्यम् । अश्वश्च रथश्च इन्द्रश्चेति-**अश्वरथेन्द्राः, इन्द्रा-** 15 **श्वरथाः, इन्द्ररथाश्वाः**, इति-अत्राश्वेन्द्रशब्दौ स्वराद्यदन्तौ रथशब्दश्च लघ्वक्षरः, तत्र शब्दपरस्पर्धात् रथशब्दापेक्षयाऽश्वेन्द्रशब्दयोर्युगपत् पूर्वनिपातः प्राप्तः स पर्यायेण भवति 'एकम्' इत्युक्तत्वात्, शिष्टयोश्च न स्पर्धकृतः परप्रवृत्तिनियम इति कामचारो भवतीति पूर्वनिपतितं विहायान्यत्र लघ्वक्षरस्यापि 20 प्रयोगो द्वितीयस्थाने भवति, तथा च 'अश्वरथेन्द्राः, अश्वेन्द्ररथाः, इन्द्ररथाश्वाः, इन्द्राश्वरथाः' इति रूपचतुष्टयम् । अनेकप्राप्तावनियम एवास्त्विति चेत्? अत्राह-**दुन्दुभिशङ्खवीणा इति रथेन्द्राश्वा इति च न भवतीति**-एकग्रहणसामर्थ्यादेवेति भावः । क्वचिच्छिष्टप्रयोगेऽसखीदन्तस्याल्पस्वरा- 25 पेक्षया, अधिकस्वरस्य चाल्पस्वरापेक्षया पूर्वनिपातः समुपलभ्यमानः कथमुपपद्यत इति शङ्कते-**कथं 'धनपतिरामकेशवाः' 'मृदङ्गशङ्खपणवाः'** इति-अत्र धनपतिरिदन्तः, रामकेशवौ तदपेक्षयाऽल्पस्वराविति स्पर्धे परत्वात् तयोरेव, रामशब्दस्यैव वा पूर्वनिपातो युक्तः, एवं 'मृदङ्गशङ्खप(तू)णवाः' इत्यत्र 30 शङ्खशब्दस्यैव पूर्वनिपातो युक्त इति प्रश्नाशयः । उत्तरयति-**रामशङ्खशब्दयोरुत्तराभ्यां समासे सति पूर्वेण समासः** इति, अयमाशयः-नात्रैको द्वन्द्वोऽपि तु द्वन्द्वद्वयम्, तथा च रामश्च केशवश्चेति विगृह्य रामकेशवाविति साधनीयं, केशवापेक्षया रामस्याल्पस्वरत्वात्, ततश्च धनपतिश्च रामकेशवौ 35 चेति विगृह्यासखीदन्तत्वेन धनपतिशब्दस्य पूर्वनिपातः कार्यः, एवं शङ्खश्च पणवश्चेति विगृह्य शङ्खपणवावित्यल्पस्वरत्वेन शङ्खस्य पूर्वनिपातं विधाय साध्यम्, पश्चान्मृदङ्गेन सह समासे तस्यैवाल्पस्वरत्वमिति तत्पूर्वनिपातः सिध्यति ।

अत्र प्रभाचन्द्र एवमाह-'शङ्खदुन्दुभिवीणाः, मृदङ्गशङ्ख- 40 प(तू)णवाः' इत्यत्र "अप्राणिपश्वादेः" [ ३. १. १३६. ] इति, "प्राणितूर्याङ्गाणाम्" [ ३. १. १३७. ] इत्येकवद्भावः कस्मान्न भवति?, तत्र केचिदाहुः-शङ्खो न तूर्याङ्गमिति, "अप्राणिपश्वादेः" [ ३. १. १३६. ] इति जातिपरत्वे, व्यक्तिपरश्चायं निर्देशः । तत्रान्ये मन्यन्ते-न शङ्खस्य तूर्याङ्गिता नास्ति, तूर्याङ्गमेव शङ्खः, किन्तु तूर्याङ्गसमुदायो न तूर्याङ्गग्रहणेन गृह्यते, 45 जातिसमुदायश्च जातिग्रहणेन, यथा राष्ट्रसमुदायो राष्ट्रग्रहणेनेत्युत्तरद्वन्द्वेन मृदङ्गस्य समासः, एकवद्भावो न भवतीति, तेषां शङ्खदुन्दुभिवीणाः शङ्खपणवाविति न स्यात् "अप्राणि०" [ ३. १. १३६. ] इत्यादिना ह्यत्रैकवद्भावः स्यात्, तेन च मृदङ्गस्य समासे सति मृदङ्गशङ्खपणवे इति द्विवचने नपुंसक- 50 लिङ्गता च स्यात्, न तु मृदङ्गशङ्खपणवा इति बहुवचनं पुलिङ्गं च । अन्य आहुः-"प्राणितूर्याङ्गाणाम्" [ ३. १. १३७. ] इति प्राणिभूतं तूर्याङ्गं गृह्यते शाङ्खिकादि, न शङ्खादि, उपचाराच्चेह शङ्खसमुदायः शङ्खो दुन्दुभिसमुदायश्च दुन्दुभिरिति शङ्खादीनामवयवशब्दानामपि सतां समुदायोपादानात् समु- 55 दायस्य चाजातित्वादेकवद्भावादिति ।

लघुन्यासकृतस्त्वेवमाहुः-**शङ्खदुन्दुभिवीणा** इति-"प्राणितूर्याङ्गाणाम्" इति बहुवचनं क्वचिदेकत्वविधेरनित्यत्वार्थम्, तेनात्रैकत्वाभावः । माङ्गल्यवाचकत्वेन शङ्खशब्दस्य विवक्षितत्वात् स्वैरिसभावाद् वा, यतस्तूर्याङ्गस्य तूर्याङ्गेण 60 स्वत्वं भवतीति, एवं **मृदङ्गशङ्खपणवा** इति । अथवा 'शङ्खदुन्दुभिवीणाः, मृदङ्गशङ्खपणवाः' इति शङ्खादीनां तूर्याङ्गत्वादेकवद्भावः कुतो न भवतीति, उच्यते-अत्र शङ्खादिशब्देन शङ्खादिसमुदायस्याभिधानात् तस्य चातूर्याङ्गत्वादजातित्वाच्च नैकवद्भावः । उत्पलस्त्वाह-तूर्याङ्गता शङ्खादिवादकानां न तु 65 शङ्खादीनामिति तूर्याङ्गत्वादत्रैकवद्भावो यः प्राप्नोति स नाशङ्कनीयः, अत एव "प्राणितूर्याङ्गाणाम्" इत्यत्र पूर्वमार्दङ्गिकपाणविकं वीणावादकपरिवादकमित्येवोदाह्रियते, न तु भेरीमृदङ्गमित्यादि, तदा तु प्राणिरूपं तूर्याङ्गमिति विग्रहः ।

परे त्वेवमाहुः-अत्र मृदङ्गशङ्खपणवा इत्यत्र "प्राणितूर्याङ्गा- 70 णाम्" इत्येकत्वं कुतो नेत्याशङ्कायां केचिदाहुः-"तत्र सूत्रे बहुवचनमेकत्वविधेरनित्यत्वार्थमिति नैकत्वं भवति" इति, परं तु तन्न युक्तम्, तत्र सूत्रे बहुवचनस्य व्यक्तिविवक्षायामपि विधानार्थत्वस्य प्राण्यङ्गाप्राण्यङ्गादिसम्भेदे एकत्वनिराकरणार्थत्वस्य च वृत्तावुक्तत्वात् फलान्तरे तदुपयोगस्य कर्तुमयुक्तत्वात् । 75 स्वत एवोत्तरेणातुष्यन्त आहुः-शङ्खशब्दोऽत्र माङ्गल्यवाची विवक्षितो न तूर्याङ्गवाचीति स्वैः सह तूर्याङ्गाणां द्वन्द्वाभावेन नैकत्वमिति । तदपि न शोभनम्, यतस्तूर्याङ्गभूत एव शङ्खः स्वरूपेण माङ्गल्यसूचकोऽन्यार्थमानीयमानोदककुम्भवत्, इति

न तस्य माङ्गल्यार्थत्वेन तूर्याङ्गत्वहानिरिति स्वैरेवायं द्वन्द्व इति निर्विवादमेव । अत एव पुनः पक्षान्तरमाहुस्त एव– "शङ्खादिशब्देन शङ्खादिसमुदायस्याभिधानात् तस्य चातुर्याङ्गत्वादजातित्वाच्च नैकवद्भावः" इति । अत्रोच्यते–क एष शङ्खादिसमुदायः ? यदि च शङ्खत्वजात्याश्रयः सकलशङ्खव्यक्तिसमुदायः कथ्यते तदा कथं न जातिपरत्वम्, यदि च शङ्ख आदौ यस्य तादृशः समुदायोऽभिधीयत इत्युच्यते तर्हि तादृशसमुदायाभिधायित्वं तस्य कुतः शक्त्या लक्षणया वा ? नाद्यः पक्षः–तादृशसमुदाये तस्य [ शङ्खशब्दस्य ] संकेतानवधारणात्; न द्वितीयः–शङ्खभिन्नेन तत्समुदायस्थितेनान्येन सह तस्य सम्बन्धानवधारणात्, शक्यार्थसम्बन्धे सत्येव लक्षणास्वीकारात् । किञ्च तादृशसमुदायस्य न तूर्याङ्गत्वमित्यत्रापि किं मानमिति मृग्यम् । अत एव तैरेवोत्पलाचार्यस्य मतमुपन्यस्तं, 'तूर्याङ्गता शङ्खादिवादकानां न तु शङ्खादीनामिति तूर्याङ्गत्वादवैकवद्भावो यः प्राप्नोति स नाशङ्कनीयः' इति । एतच्च प्राचीनवैयाकरणमतेनापि प्रमाणितम्–अत एव "प्राणितूर्याङ्गाणाम्" इत्यत्र पूर्वैर्मार्दङ्गिकपाणविकम्, 'वीणावादकपरिवादकमित्येवोदाह्रियते, न तु भेरीमृदङ्गमित्यादि' इति पाणिनीयानामप्येतदभिमतम्, अत एव "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" [ पा. सू. २. ४. २. ] इति सूत्रे दीक्षितेनापि मार्दङ्गिकपाणविकम्, रथिकाश्वारोहम्, इति रूपेण वादका आरोहकाश्चोदाहृताः, अत एव च "अल्पाच्तरम्" [ पा. सू. २. २. ३४. ] इति सूत्रे महाभाष्येऽपि 'मृदङ्गशङ्खतूणवाः' 'शङ्खदुन्दुभिवीणानाम्' इत्यादयः प्रयोगाः प्रयुक्ताः । आचार्यैरपि "प्राणितूर्याङ्गाणाम्" इति सूत्रे 'मार्दङ्गिकपाणविकम्' इत्यप्युदाहृतम् । "द्वन्द्वश्च प्राणि०" [ पा. सू. २. ४. २. ] इति सूत्रशेषे नागेशेनापि उद्द्योते 'अत्र तूर्याङ्गशब्देन वादका एव गृह्यन्ते 'मृदङ्गशङ्खतूणवाः' इति "अल्पाच्तरम्" [ पा० सू० २. २. ३४. ] इति सूत्रे भाष्यप्रयोगात्, तत्साहचर्याच्च सेनाङ्गशब्देन रथारूढानामेव ग्रहणम्, 'संग्रामं हस्त्यश्वपदातिभिः' इति "येन विधि०" [ पा० सू० १. १. ७२. ] इति सूत्रस्य भाष्यस्वारस्याच्च' इति प्रतिपादितम् । प्रकृतमनुसरामः–पाणिनीये महाभाष्येऽप्यल्पस्वरमात्रस्य पूर्वनिपाते स्वीकृते "अल्पाच्तरम्" इति सूत्रे आक्षिप्तम्–"मृदङ्गशङ्खतूणवाः पृथग् नन्दन्ति संसदि" "प्रासादे धनपतिरामकेशवानाम्" इत्येतन्न सिध्यति" इति । तत्र समाहितम्–'अतन्त्रेतरनिर्देशे शङ्खतूणवयोर्मृदङ्गेन सह समासः' इति वार्तिकेन, व्याख्यातं च वार्तिकम्–अतन्त्रेतरनिर्देशे शङ्खतूणवयोर्मृदङ्गेन समासः करिष्यते, शङ्खश्च तूणवश्च शङ्खतूणवौ, शङ्खतूणवौ च मृदङ्गश्च मृदङ्गशङ्खतूणवाः । रामश्च केशवश्च रामकेशवौ, रामकेशवौ च धनपतिश्च धनपतिरामकेशवाः, धनपतिरामकेशवानामिति । अत्र शङ्खतूणवाविति प्रतीकमादाय कैयटेनोक्तम्– "नियतद्रव्यविवक्षायां जातिपरत्वाभावादेकवद्भावाभावः, तूर्याङ्गाणामित्यपि न भवति, शङ्खस्यातूर्याङ्गत्वादित्येके तूर्यशिल्पोपजीविन एव तूर्याङ्गत्वेन गृह्यन्ते, तेषां हि मुख्यं तूर्याङ्गत्वमित्यपरे" इत्युक्तम् । अयमाशयः–अप्राणिजातित्वेन नैकवद्भावो व्यक्तिपरत्वात्, तूर्याङ्गत्वेनापि नैकवद्भावः शङ्खस्यातूर्याङ्गत्वात्, शङ्खो हि न वाद्यतयोपयुज्यतेऽपि तु पृथगेव तस्य युद्धादिषु शत्रुसम्बोधनाय, पूजादिषु पवित्रशब्दैर्दिशां पूरणाय, यात्रादिष्वशुभशब्दतिरस्करणाय च तदीयशब्दस्योपयोगः, तथा च स्वैः सह नायं द्वन्द्व इत्येकवद्भावाप्राप्तिरित्येकेषां मतम् । अपरे च तूर्याङ्गत्वेन तद्वादकानामेव ग्रहणमिति न शङ्खस्य वीणादीनां वा तूर्याङ्गत्वेन ग्रहणमिति । यद्यप्येतदन्तर्गत एवाशयोऽन्यरूपेण कैश्चिदुपस्थापितः, तथाप्युपस्थापितरूपेणासावयुक्त इति तत्रैव निराकृतः एतदाशयकत्वे तु समुचित एवेति विवेचनीय इति ।

ननु च जातिर्व्यक्तिश्च पदार्थः, तत्र व्यक्तिपदार्थे प्रतिव्यक्ति शास्त्रप्रवृत्तेः सर्वेषामसखीदन्तादीनां नियमः स्यात्, जातौ तु पदार्थे एकस्य पूर्वनिपातेन जातिः संस्कृतेति शेषस्यानियमः, तत्र यथा लक्ष्यसिद्धिस्तथा पदार्थाश्रयणमितीह जातिः पदार्थ आश्रीयते, किमेकग्रहणेनेति चेत् ? एवं प्रतिपत्तिर्दुष्करेत्येकग्रहणं विभावय । प्रकृतसूत्रमपि द्वन्द्व एव प्रवर्तते नान्यत्रेत्याह–**द्वन्द्व इत्येवेति**, अवधारणफलमाह–**विस्पष्टं पटुः–विस्पष्टपटुरिति**–विस्पष्टं पटुरिति विग्रहेण द्वन्द्वाभावं दर्शयति, द्वन्द्वे हि द्वयोरपि सहोच्यमानयोस्तुल्यकक्ष्यता भवति, अत्र "नाम नाम्नैकार्थे०" [ ३. १. १८. ] इति सामान्यतः समासः, "मयूरव्यंसकादयः" [ ३. १. ११६. ] इति तत्पुरुषसमासो वा ज्ञेयः, तेन द्वन्द्वाभावादिहोकारान्तस्य पटुशब्दस्य पूर्वप्रयोगो न भवति ॥ ३. १. १६०. ॥

## मास-वर्ण-भ्रात्रनुपूर्वम् । ३ । १ । १६१ ॥

**त० प्र०—मासवाचि वर्णवाचि भ्रातृवाचि च शब्दरूपं द्वन्द्वे समासे अनुपूर्वं–यद् यत् पूर्वं तत् तत् पूर्वं निपतति, अनुग्रहणादेकमिति निवृत्तम् । मास–फाल्गुन-चैत्रौ, वैशाख-ज्येष्ठौ; वर्ण–ब्राह्मण-क्षत्रियौ, क्षत्रिय-वैश्यौ, वैश्य-शूद्रौ, ब्राह्मण-क्षत्रिय-विशः, ब्राह्मण-क्षत्रिय-विट्-शूद्राः; भ्रातृ-बलदेव-वासुदेवौ, युधिष्ठिर-भीमाऽर्जुनाः ॥ १६१ ॥**

**श० म० न्यासानुसन्धानम्–मासवर्ण०** । मासाश्च वर्णाश्च भ्रातरश्चेति समाहृतं–**मासवर्णभ्रातृ, अनुपूर्वमिति**–पूर्वं पूर्वमनुसृत्यानुपूर्वम्, पूर्वमनतिक्रम्येति वाऽव्ययीभावानां स्वपदविग्रहाभावात्, अनतिक्रमश्चानुसरणमेव । तथा च सूत्रं विभज्य व्याख्याति–**मासवाचीत्यादि** । मासस्वरूपं

ज्योतिःशास्त्रादाविदं प्रसिद्धम्–मासः प्रसिद्धस्त्रिंशद्दिनसमुदायरूपः, स च चतुर्विधः उभयोश्चान्द्रयोरेकत्रान्तर्भावात्–सौर-कृष्णचान्द्र-शुक्लचान्द्र-नाक्षत्र-सावनभेदात्, एकराशौ रविसंक्रमणादिकालमारभ्य द्वितीयराशौ रविसंक्रमणादिकालपर्यन्तः सौरो मासः । शुक्लप्रतिपदादिबिन्दुतोऽमान्त्यबिन्दुपर्यन्तः कृष्णचान्द्रः । कृष्णप्रतिपदादितः पौर्णमास्यन्तबिन्दुपर्यन्तं शुक्लचान्द्रः । अश्विन्यादितो रेवत्यन्तं [ अभिजिदन्तमित्यपरे ] नाक्षत्रो मासः । त्रिंशद्दिनात्मकः सावन इत्यादि । वर्णास्तत्क्रमश्च लोकव्यवहारप्रसिद्ध्या ज्ञेयाः, तथा हि–वर्णा ब्राह्मण-क्षत्रियविट्शूद्राः, संकीर्णजातेः शूद्रेष्वन्तर्भावः 'शूद्रवद् वर्णसङ्कराः' इति स्मृतेः । अत्र सङ्करपदं विलोमसङ्करपरम्, तच्च क्षेत्रादपकृष्टवीर्यजातस्वरूपम्, अनुलोमसंकरेषु मातृजातत्वस्य स्मृतिष्वभिधानात् । आनुपूर्व्यं पूर्वपश्चाद्भावस्वरूपकमवैशिष्ट्येन ज्ञानम्, मासानां च तल्लोकप्रसिद्धमेव, भ्रात्रोर्भ्रातॄणां वा क्रमवैशिष्ट्यं तु प्रादुर्भावकालकृतं बोध्यम्, वर्णानां चानुपूर्व्यं लोकप्रसिद्धितो ज्ञेयम्, लोकप्रसिद्धिश्चेत्थम्–वर्णानां चानुपूर्व्यं तत्तज्जन्मस्थानकृतम्, अथवा तत्रापि येन क्रमेणोत्पत्तिर्लौकिकैः कथिता तादृशक्रमकृतमेव, तथाहि–" ब्राह्मणोऽस्य मुखमासीत्" इत्यादि, तदनुगामिनी स्मृतिश्च–

" मुखतो ब्राह्मणा जाता बाहुभ्यां क्षत्रियाः स्मृताः ।
ऊरुभ्यां तु विशः प्रोक्ताः पद्भ्यां शूद्रो व्यजायत ॥ इति ।

'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिरूपेणाभेदोपचारस्तु 'आयुर्घृतम्' इत्यादिवल्लक्षणया जन्य-जनकयोरभेदोपचाराद् बोध्यः । शब्दानुशासनस्य सर्वपार्षदत्वात् परसमयापेक्षयापि साध्यत इत्युक्तमेव । अयं भावः–ब्राह्मणक्षत्रियविट्शूद्रेषु पूर्वः पूर्व इति प्रसिद्धिरिति, न च पूर्वपूर्वस्योत्तरोत्तरं प्रत्यर्च्यत्वात् 'अर्च्य' इत्यनेनैव व्यवस्था भविष्यतीति वाच्यम्, निन्दितस्यापि ब्राह्मणादेर्भावात् । तथा च मासेषु यो मासो यस्मात् पूर्वभावित्वेन प्रसिद्धस्तस्य पूर्वप्रयोगः, वर्णानामपि तथैव, भ्रातॄणामपि तथैवेति फलत एकरूपैवानुपूर्वी तदाह–**यद् यत्पूर्वं तत् पूर्वं निपततीति** । पूर्वसूत्रादेकमित्यस्यानुवृत्तावेकस्यैवानुपूर्वीनियमः स्यात्, शिष्टेषु कामचार इति शङ्कायामाह–**अनुग्रहणादेकमिति निवृत्तमिति** । द्वन्द्व इत्यन्वर्थसंज्ञया द्वयोरेव तत्र समासः प्राप्तः, तत्र पूर्वप्रयोगेणैकस्य पूर्वनिपाते निश्चितेऽपरस्य ततः परं प्रयोगः स्यादेवेत्येकमिति व्यर्थं सद् बहूनां द्वन्द्वो भवतीति ज्ञापयति, तत्रैकस्य पूर्वनिपाते पूर्वनिपातविधायकतत्तत्सूत्रेणानुशासिते सकृत्प्रवृत्त्या च तस्य सूत्रस्य चारितार्थ्ये वृत्ते *लक्ष्ये लक्षणं*न्यायेन पुनस्तत्र तत्सूत्रप्रवृत्तौ मानाभावात्, अपरपूर्वनिपातार्हशब्दे प्रयोक्तुः कामचारः, अतो यथा 'हरिहरगुरवः, गुरुहरिहराः, हरिगुरुहराः, गुरुहरहरयः, इत्यादिप्रयोगा भवन्ति, तथेहापि मासादिविषये स्यात्, ततश्चानुपूर्वग्रहणं व्यर्थं स्यात्, अतोऽनुपूर्वग्रहणसार्थक्याय 'एकम्' इति निवर्तते, ततश्च *लक्ष्ये लक्षणं*न्यायं प्रबाध्यैकस्य प्रयोगे सत्यपि शिष्टेऽपि पूर्वप्रयोगक्रमेणैव पूर्वनिपात इति सिध्यतीति भावः । अतश्च फाल्गुनज्येष्ठवैशाखचैत्राः ब्राह्मणविट्शूद्रक्षत्रियाः, युधिष्ठिरनकुलभीमसहदेवा इत्येवमादयः प्रयोगा न भवन्ति ।

क्रमेणोदाहर्तुमाह–**मासे**ति, **फाल्गुनचैत्रौ** इति–फाल्गुनश्च चैत्रश्चेति विग्रहः; **वैशाखज्येष्ठौ** इति– वैशाखश्च ज्येष्ठश्चेति विग्रहः, यद्यपि चैत्रतो गणनया फाल्गुन एव परः, परं तु अनुपूर्वमिति पदस्वारस्यादव्यवहितपूर्वापरीभाव एव गृह्यते, स च फाल्गुनचैत्रयोरेव न तु चैत्रफाल्गुनयोः, एवं वैशाखज्येष्ठयोरपि, फाल्गुनादिशब्दाश्च फाल्गुन्यादिनक्षत्राच्चन्द्रयुक्तात् "चन्द्रयुक्तात् काले०" [ ६. २. ६. ] इत्यणि फाल्गुनीशब्दं पौर्णमास्यर्थकं "चैत्रीकार्तिकीफाल्गुनीश्रवणाद्वा" [ ६. २. १००. ] इति निर्देशसहकारेण संसाध्य ततः "साऽस्य पौर्णमासी" [ ६. २. ९८. ] इत्यणि सिध्यन्ति । वर्णानामानुपूर्व्यमुदाहर्तुमाह–**वर्णे**ति, **ब्राह्मणक्षत्रियौ** इति ब्राह्मणश्च क्षत्रियश्चेति विग्रहः, अत्रोभयोः समस्वरत्वेनार्च्यत्वानिश्चयाच्चानिर्णये प्राप्तेऽनेनानुपूर्वं पूर्वनिपातो भवति, **क्षत्रियवैश्यौ** इति–क्षत्रियश्च वैश्यश्चेति विग्रहः, अत्राल्पस्वरत्वेन वैश्यस्य पूर्वनिपातः प्राप्तोऽनेनानुपूर्व्यात् क्षत्रियस्य पूर्वनिपातो विधीयते । **वैश्यशूद्रौ** इति–वैश्यश्च शूद्रश्चेति विग्रहः, इहानियमे आनुपूर्व्यान्नियमः, एवं त्रयाणां चतुर्णामपि समासे एष एव क्रमोऽनुपूर्वग्रहणादिति पूर्वमुक्तमेव, तदेवोदाहरति–**ब्राह्मणक्षत्रियविशः** इति–ब्राह्मणश्च क्षत्रियश्च विट् चेति विग्रहः; **ब्राह्मणक्षत्रियविट्शूद्राः** इति–ब्राह्मणश्च क्षत्रियश्च विट् च शूद्रश्चेति विग्रहः । भ्रातॄणामानुपूर्व्येणोदाहर्तुमाह–**भ्रातृ** इति, **बलदेववासुदेवौ** इति–बलदेवश्च वासुदेवश्चेति विग्रहः, इह लघ्वक्षरत्वेन बलदेवस्य पूर्वप्रयोगः प्राप्तः, अर्च्यत्वं तु विवादास्पदमर्चकरुच्यधीनमिति न तदनुसारिणी व्यवस्थेति प्रकृतसूत्रप्रवृत्त्यैवेष्टसिद्धिः । **युधिष्ठिरभीमार्जुनाः** इति–युधिष्ठिरश्च भीमश्चार्जुनश्चेति विग्रहः, अत्र भीमस्याल्पस्वरत्वेनार्जुनस्य च स्वराद्यदन्तत्वेन युधिष्ठिरापेक्षया पूर्वप्रयोगः प्राप्त इत्यनेनानुपूर्व्यान्नियमः, अर्च्यत्वं तु प्रकृतेऽपि तत्तद्रुचिलोकाश्रितमिति न व्यवस्थितम्, सत्यादिभिर्युधिष्ठिरोऽर्च्यः, शारीरिकबलेनानेकत्र सर्वेषां रक्षणाच्च भीमस्य तत्त्वं भाति, अर्जुनश्च धान्विष्वग्रगण्यो देवैरपि प्रशस्तास्त्रविद्य इति तस्यापि स्वविषये तत्त्वमेवेति नान्येन निमित्तेन व्यवस्था सम्भवतीति प्रकृतसूत्रप्रयोजनमक्षतमेवेति ॥ ३. १. १६१. ॥

## भर्तुतुल्यस्वरम् । ३ । १ । १६२ ॥

**प्र० त०**—भं नक्षत्रम्, तद्वाचि ऋतुवाचि च तुल्यसंख्यस्वरं द्वन्द्वे समासेऽनुपूर्वं पूर्वं निपतति । भ-कृत्तिकारोहिण्यः, अश्विनी-भरणी-कृत्तिकाः, मृगशिरः-पुनर्वसुः, ऋतु-हेमन्त-शिशिर-वसन्तौ, हेमन्त-शिशिर-वसन्ताः । तुल्यस्वरमिति किम् ? आर्द्रा-मृगशिरसी; पुष्य-पुनर्वसू, तिष्य-पुनर्वसू, ग्रीष्म-वसन्तौ ॥ १६२ ॥

**श० म० न्यासानुसन्धानम्-भर्तु०** । भं च ऋतुश्चेति-**भर्तु**, अप्राणिजातिजातित्वादेकत्वम्, तद्विशेषणत्वाच्च तुल्यस्वरमित्यत्राप्येकवचनम्, भशब्दार्थमाह-**भं नक्षत्रमिति**, तुल्याः स्वरा यत्र तत् तुल्यस्वरम्, तुल्यत्वं च मात्रासंख्यया अक्षरसंख्यया चोभयथा सम्भाव्यते, तथापि सामान्यतस्तुल्यस्वरयुतमिति कथनादक्षरसंख्यैव गण्यते, व्याख्यानालक्ष्यानुरोधाच्च, अन्यथाश्विनीभरणीशब्दयोः कृत्तिकाभरणीशब्दयोश्चानुपूर्व्ये प्रयोगो न स्यान्मात्राभेदात् । अनुपूर्वमिति पूर्वसूत्रादनुवर्तते, अत्रापि नक्षत्राणामृतूनां चानुपूर्व्यं लोकप्रसिद्ध्यपेक्षयैव विज्ञेयं जन्मादिलक्षणनियामकाभावात् ।

'अश्विनी-भरणी-कृत्तिका-रोहिणी-मृगशिर-आर्द्रा-पुनर्वसु०' इत्यादिर्नक्षत्रक्रमः, **प्रभाचन्द्र**स्त्वेवमाह-अश्विन्यौ भरण्यौ इत्यादिर्नक्षत्रक्रमः । द्वौ द्वौ मासौ मार्गादिकौ ऋतुः, मार्गपौषौ हेमन्तः, माघफाल्गुनौ शिशिरः, चैत्रवैशाखौ वसन्तः । ज्येष्ठाषाढौ ग्रीष्मः, श्रावणभाद्रपदौ प्रावृट्, आश्विनकार्तिकौ शरद् इति, तदाह **कात्यः**-"आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतुर्मतः ।" हेमन्ताद्धि वत्सरारम्भः, तथा च 'हेमन्तशिशिरवसन्तग्रीष्मप्रावृट्शरद्' इति ऋतूनां क्रमः । तत्र पूर्वं नक्षत्रमुदाहर्तुमाह-**भेति, कृत्तिकारोहिण्यः** इति-कृत्तिकाश्च रोहिणी चेति विग्रहः, "मघाऽप् कृत्तिकाबहौ" इति लिङ्गानुशासनवचनात् कृत्तिकाशब्दो नित्यं बहुवचनान्तः, **प्रभाचन्द्र**स्तु कृत्तिकाश्च रोहिण्यश्चेति विग्रहमाह; अत्र द्वयोः समस्वरत्वेन नियामकान्तराभावात् एवानुपूर्वं निपातो विधीयते । **अश्विनीभरणीकृत्तिकाः** इति-अश्विनी च भरणी च कृत्तिकाश्चेति विग्रहः, अत्र भरणीशब्दस्य लघ्वक्षरत्वेन पूर्वनिपातः प्राप्तः, अनेन त्वानुपूर्व्याद् भवतीति **केचित्**; **परे** तु भरणीशब्दे इकारसद्भावान्न लघ्वक्षरत्वमित्यनियमप्राप्तौ कृत्तिकादीनामनुपूर्वं पूर्वनिपात इत्याहुः; यदा तु 'भरणि' इति ह्रस्वः स्यात् तदा पूर्वमतं युज्येत, अन्यथाऽश्विन्यादावपि लघ्वक्षरसद्भावात् लघ्वक्षरत्वं स्यादिति विशेषाभावः; **प्रभाचन्द्र**स्तु अश्विन्यश्च भरण्यश्च कृत्तिकाश्चेति विगृह्णाति, अत्र स्वस्वतारकाणां बहुत्वाद् बहुवचनमिति प्रतीयते, अश्विनीतारकास्तिस्रः, तथैव भरणीतारका रोहिणीतारकाः, कृत्तिकातारकास्तु षट् । **मृगशिरःपुनर्वसु** इति-मृगशिरश्च पुनर्वसू चेति विग्रहः, पुनर्वसुशब्दो द्विवचनान्तो युग्मभवात्, "पुनर्वसू तु यामकौ आदित्यौ च" इत्यभिधानचिन्तामणिः; अत्र समाहारविवक्षया चैकत्वम्, भवति नक्षत्रवाचिनां समाहारविवक्षा, अत एव "पुष्यार्थाद् भे पुनर्वसुः" [ ३. १. १२९. ] इति सूत्रवृत्तौ-'समाहारे तु पुष्यपुनर्वसु' इति पठितम् । ऋतुमुदाहर्तुमाह-**ऋतु** इति, **हेमन्तशिशिरौ** इति-हेमन्तश्च शिशिरश्चेति विग्रहः, शिशिरो लघ्वक्षरस्तस्य पूर्वनिपातः पूर्वेण प्राप्तो हेमन्तस्यानेन विधीयते । **शिशिरवसन्तौ** इति-शिशिरश्च वसन्तश्चेति विग्रहः, अत्र पूर्वेण शिशिरस्य पूर्वनिपाते सिद्धेऽपि परत्वादनेनैव विधीयते, यद्वा वसन्तस्यार्च्यत्वविवक्षायामपि शिशिरस्यैव पूर्वनिपातार्थमुदाह्रियते । त्रयाणामप्यनुपूर्वमेव भवतीत्युदाहरति-**हेमन्तशिशिरवसन्ताः** इति-हेमन्तश्च शिशिरश्च वसन्तश्चेति विग्रहः । **तुल्यस्वरमिति किमिति**-सामान्येन सर्वेषामेवानुपूर्वं पूर्वनिपातो विधीयतां पूर्वसूत्रेण मासादीनामिवेत्याशयः, व्यावर्त्यं प्रदर्शयति-**आर्द्रामृगशिरसी** इति-आर्द्रा च मृगशिरश्चेति विग्रहः; **पुष्यपुनर्वसू, तिष्यपुनर्वसू** इति-पुष्यश्च पुनर्वसू चेति, तिष्यश्च पुनर्वसू चेति च विग्रहः, अत्र "पुष्यार्थाद् भे पुनर्वसुः" [ ३. १. १२९. ] इति पुनर्वसुशब्दो द्व्यर्थः सन् एकार्थो भवतीति समासतो द्विवचनम्; नक्षत्रे प्रत्युदाहृत्य-ऋतौ प्रत्युदाहरति-**ग्रीष्मवसन्तौ** इति-ग्रीष्मश्च वसन्तश्चेति विग्रहः, एषु आर्द्रा-पुष्य-तिष्य-ग्रीष्मशब्दानामल्पस्वरत्वेन पूर्वसूत्रेण पूर्वनिपातः, तुल्यस्वरग्रहणाभावे प्रकृतसूत्रप्रवृत्त्यानुपूर्व्येण परनिपातः स्यादिति तुल्यस्वरग्रहणमावश्यकमिति भावः ॥ ३. १. १६२. ॥

## संख्या समासे । ३ । १ । १६३ ॥

**त० प्र०**—'सर्वा संख्या' प्रथमोक्तेत्यनियमे आनुपूर्व्यार्थं संख्यायाः पूर्वनिपातार्थं वचनम्, समासमात्रे संख्यावाचिनामनुपूर्वं पूर्वं निपतति । बहुव्रीहौ-द्वौ वा त्रयो वा-द्वित्राः, एवं-त्रि-चतुराः पञ्च-षाः; द्विर्दश-द्विदशाः । एवं त्रिदशाः द्विगौ-द्वे शते समाहृते-द्विशती, त्रिशती । द्वन्द्वे-एकश्च दश च-एकादश, एवं-द्वादश, त्रयोदश, सप्ततिशतम्, अशीतिशतम्, नवतिशतम् ॥ १६३ ॥

**इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ [ तत्त्वप्रकाशिकायां ] तृतीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥ ३।१॥**

**श० म० न्यासानुसन्धानम्-संख्या०।** संख्यावाचिनां प्रायो बहुव्रीहिः। समाहारद्विगुर्द्वन्द्वो वा भवति, तत्र च सर्वा संख्या प्रथमोक्तैवेति "प्रथमोक्तं प्राक्" [३. १ १४८.] इति सामान्यसूत्रेण नियमो न प्राप्नोति, विशेषसूत्राण्यपि विशेषणत्वादिना पूर्वनिपातविधायकानि नेष्टप्रयोगसाधनक्षमाणीति समासप्रकरणत्वेऽपि पुनः समास इत्युक्त्या समाससामान्ये सूत्रप्रवृत्त्यर्थं प्रकृतं सूत्रमारभ्यते तदाह-**सर्वा संख्या प्रथमोक्तेत्यनियमे आनुपूर्व्याः संख्यायाः पूर्वनिपातार्थं वचनमि**ति-आनुपूर्व्याः-पूर्वपश्चाद्भावेन लोके प्रसिद्धायाः, अल्पीयस्या इति भावः, **समासमात्रे** इति-समासप्रकरणादेव समासे लब्धे पूर्वोक्तसूत्राणां बहुव्रीह्यादिसमासविशेषे पूर्वनिपातविधायकतयाऽस्य समाससामान्ये एव प्रवृत्त्यर्थं समासग्रहणमिति तस्मात् समासमात्रे इति लभ्यते।

क्रमशः सर्वसमासानुदाहरति-**बहुव्रीहा**वित्यादिना। **द्वौ वा त्रयो वे**ति विग्रहः, **द्वित्राः** इति च "सुज्वार्थे संख्या०" [३. १. १९.] इति विकल्पार्थे समासः, "प्रमाणीसंख्याड्डः" [७. ३. १२८.] इति समासान्ते डे इकारलोपः, अत्रोभयोर्विशेष्यविशेषणभावाभावान्नियमो न प्राप्तः, संख्यात्वमपि द्वयोरेवेति "विशेषणसर्वादिसंख्यं बहुव्रीहौ" [३. १. १५०.] इति न प्रवर्तत इत्यानुपूर्व्यादेव पूर्वनिपातः, द्वौ अथवा त्रय इति विकल्पघटितः समासार्थः। अतिदिशति-**एवमि**ति, त्रयो वा चत्वारो वेति विग्रहे "सुज्वार्थे०" [३. १. १९.] इति विकल्पार्थे समासः-**त्रिचतुराः** "नञ् सुव्युपत्रेश्चतुरः" [७. ३. १३१.] इत्यप् समासान्तः। पञ्च वा षड् वेति विग्रहे "सुज्वार्थे०" [३. १. १९.] इति विकल्पार्थे समासे समासान्तेऽऽन्त्यस्वरादिलोपे च-**पञ्चषाः** इति, **द्विर्दशे**ति-विग्रहः, वारद्वयं दशेत्यर्थः **द्विदशाः** इति "सुज्वार्थे" इति वारार्थे समासः, डः समासान्तोऽन्त्यस्वरादिलोपश्च प्राग्वत्, अतिदिशति-**एवमिति, त्रिदशाः** इति-त्रिवारं दशेत्यर्थः, त्रिर्दशेति विग्रहः शेषं पूर्ववत्, अत्र च यद्यपि सुजर्थे वारे वर्तमानत्वं पूर्वस्या एव संख्याया इति सा प्रथमोक्तेति "प्रथमोक्तं प्राक्" [३. १. १४८.] इति सामान्यसूत्रेणापि नियमः सम्भवति-तथापि यत्र दशशब्द एव वारार्थकक्त्वसुच्प्रत्ययान्तो विग्रहवाक्ये प्रयुज्यते तत्र तस्यैव पूर्वनिपातः स्यादिति तद्वारणार्थं सूत्रमिदमेव तत्रापि प्रवर्तते। द्विगुमुदाहर्तुमाह-**द्विगा**विति, **द्वे शते समाहृते** इति विग्रहः, **द्विशती**ति च "संख्या समाहारे०" [३. १. ९९.] इति समाहारे द्विगुसमासः, अत्र पात्रादिवर्जिताद्न्तोत्तरपदत्वात् स्त्रीत्वं ङीश्च। द्वन्द्वमुदाहर्तुमाह-**द्वन्द्वे** इति, **एकश्च दश चे**ति विग्रहः, "चार्थे द्वन्द्वः" [३. १. ११७.] इति समासे "एकादश०" [३. २. ९१.] इति पूर्वपदान्तस्य दीर्घत्वे 'एकादशन्' शब्दस्य प्रथमाबहुवचने-**एकादशे**ति। अतिदिशति-**एवमि**ति, द्वौ च दश चेति-**द्वादशे**ति, त्रयश्च दश चेति-**त्रयोदशेति**-"द्वित्र्यष्टानां द्वात्रयोऽष्टाः" [३. २. ९२.] इति क्रमेण 'द्वा, त्रयस्' इत्यादेशौ, सप्ततिश्च शतं चेति **सप्ततिशतम्,** अशीतिश्च शतं चेति-**अशीतिशतम्,** नवतिश्च शतं चेति-**नवतिशतमि**ति त्रयोऽपि समाहारद्वन्द्वाः। इह संख्यात्वेन लोकप्रसिद्धैव संख्या गृह्यते, न तु संख्यासमुदायः, संख्यासमासो वा, यथा द्वौ वा त्रयो वेत्यर्थे द्वित्रा इति संसाध्य चत्वारश्च द्वित्राश्चेति विग्रहे चतुर्द्वित्रा इति, अत्र द्विशब्दस्य न पूर्वप्रयोगस्तादृशस्य शब्दस्य संख्यावाचकत्वेनाप्रसिद्धत्वात्; एवं-द्वौ चैकादश चेति विग्रहे द्व्येकादशेति भवति, तत्रैकादशेति समुदायस्यापि संख्यात्वेन प्रसिद्धत्वात्; किन्तु एका चासौ विंशतिश्चेत्येकविंशतिः, तस्याः संख्यावाचिनाऽन्येन समासेनास्य प्रवृत्तिः, तादृश्या एकविंशत्याः संख्यात्वेना प्रसिद्धत्वात्। तथा च तत्र लघ्वक्षरत्वादिनैव नियम इति शम्॥ ३. १. १६३.॥

इति कलिकालसर्वज्ञ-**श्रीहेमचन्द्रसूरि**भगवद्विरचिते
स्वोपज्ञतत्त्वप्रकाशिकाप्रकाशे **शब्दमहार्णवन्यासे**
त्रुटितस्थले तपोगच्छाधिपति-सूरिसम्राट्-**श्रीवि-**
**जयनेमि**सूरीश्वरपट्टालङ्कार-कविरत्न-शास्त्र-
विशारद-व्याकरण-वाचस्पति-श्रीविजय-
**लावण्यसूरि**निर्मितानुसन्धानेन
पूर्णतां नीते तृतीयाध्यायस्य
प्रथमपादः समाप्तः॥

**असंरब्धा अपि चिरं,**
**दुःसहा वैरिभूभृताम्।**
**चण्डाश्चामुण्डराजस्य,**
**प्रतापशिखिनः कणाः॥ ९॥**

अनुसन्धानकृतो व्याख्या-**चामुण्डराजस्य** तन्नाम्ना ख्यातस्य नृपस्य, **चण्डाः** क्रोधनाः, **प्रतापशिखिनः,** प्रतापः प्रभाव एव शिखी अग्निस्तस्य, **कणाः** स्फुलिङ्गाः **असंरब्धा अपि** संरम्भेणौद्धत्येन रहिता अपि, **वैरिभूभृतां** शत्रुभूतनृपाणाम्, **चिरं** बहुकालपर्यन्तं, **दुःसहाः** सोढुमशक्या इत्यन्वयः। असंरब्धा अपि दुःसहाः किमु वक्तव्यं तेषां संरब्धानां दुःसहत्व इति कैमुतिकन्यायध्वनिः। किञ्च वैरिभूपा भूभृत इव पर्वता इवेत्युपमितसमासोऽपि गम्यते। तथा च यस्य प्रतापशिखिनः कणा एव भूभृतां पर्वतानामिव वैरिभूभृतां शत्रुपक्षनृपाणां दुःसहास्तेषां कृतसमप्रतापाग्नेरतिदुःसहत्वमिति ध्वन्यते, भवति चैवं प्रकृतवर्णनीयस्य राज्ञोऽतिशयप्रबलप्रतापवत्त्वव्यक्तिः॥

श्री सं